पूर्णप्रज्ञसंशोधनमन्दिरग्रन्थमाला -६

श्रीपेजावरमठीय-श्रीसुब्रह्मण्यमठीयहस्तलिखितपुस्तकानुसारेण
संशोधितश्रीविजयध्वजीयपाठानुगुणम्

# श्रीमद्भागवतम्

वैष्णवपाठः

# ŚRĪMADBHĀGAVATAM

The Vaiṣṇava Recension

सम्पादकः - पि.एस्. शेषगिरि आचार्यः

प्रकाशनम्
**श्रीपेजावराधोक्षजमठः, उडुपि**
**Sri Pejavara Adhokshaja Mutt, Udupi**
**पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूरु**
**Poornaprajna Samshodhana Mandiram, Bangalore**

श्रीमद्विजयध्वजतीर्थैर्दशावतारहरिगाथादिना समर्चितो
रूप्यपीठाधिष्ठितः श्रीकृष्णः

श्रीमद्विजयध्वजतीर्थैर्भागवतटीकालेखनवेलायामाकस्मिकझङ्झानिलेन
पुरोवर्तिमहाश्वत्थविटपिन्यतीव पटपटायमाने सति विघ्नः समजनि ।
झटिति महातपस्विविजयध्वजतीर्थाः करप्रसारणसूचनमात्रेण
झङ्झानिलमश्वत्थवृक्षं च स्तब्धीकृतवन्तः ।

# अनुग्रहसन्देशः

श्रीमद्भागवतमहापुराणं भगवतः श्रीकृष्णस्य प्रतिमास्थानीयम् । पुराणमिदं कलिकालाख्य-व्यालदष्टानां जाङ्गुलिक इव विषत्रासं विनाशयति । महाभारतं पुराणान्तराणि च विरचय्य स्वाश्रमे अतृप्तवदासीनः भगवान् व्यासः नारदप्रार्थनया पुराणमिदं रचयामासेति अत्रैव श्रूयते । तेनेदं विज्ञायते पुराणान्तरेभ्योऽपि भागवतस्य महत्त्वं ग्रन्थकर्तुः अभिमतमिति । एवं द्वैतसिद्धान्तप्रतिष्ठापनाचार्यः श्रीमन्मध्वाचार्योऽपि भागवतार्थनिर्णयाय 'भागवततात्पर्यम्' अचीक्लृपत् । न केवलं एतावत् । किन्तु भगवान् आचार्याः तत्र तत्र सभासु इमां भागवतीं कथां संश्रावयामासेति च श्रूयते । तस्मात् श्रीमदाचार्याणां च बहुमतमिदं पुराणरत्नम् ।

श्रीमद्भागवतस्य प्रतिपदं व्याख्यां निर्ममे श्रीविजयध्वजतीर्थश्रीमच्चरणः योऽयं श्रीपेजावराधो-क्षजपीठे विरराज । पदरत्नावल्याख्यया प्रथितमिदं विवरणं भागवताध्येतॄणामसाधारणार्थावधारण-साधनम् । परन्तु तद्व्याख्यानुसारी मूलग्रन्थः पाठान्तरैः तिरोहितः व्याख्याननुगुणः अशुद्धश्चाधुनोप-लभ्यते । अस्मत्प्रियशिष्यः भागवते कृतभूरिपरिश्रमः पण्डितशेषिगिरि आचार्यः बहूनि प्राचीनहस्त-लिखितभागवतपुस्तकानि संशोध्य विजयध्वजीयानुसारिणं मूलपाठं सङ्गृहीतवान् । तदिदं भागवता-ध्येतॄणां बहूपकारं करोतीत्यत्र नास्ति संशीतिः ।

ग्रन्थस्यास्य प्रकाशने आर्थिकं साहाय्यं ताराप्रकाशनस्य संस्थापकः डा. पि.आर्. मुकुन्द महाभागः अकरोत् । तस्मै भगवतः श्रीकृष्णस्यानुग्रहं कामयामहे । ये चात्रान्ये स्वशक्त्यनुसारेण धन-साहाय्यं चक्रुः तेभ्योऽपि श्रीकृष्णस्यानुग्रहं प्रार्थयामहे ।

सर्वेऽपि अपूर्वस्यास्य ग्रन्थरत्नस्य प्रयोजनं लभन्तामिति आशास्महे ।

फाल्गुनशुद्धदशमी
२००१

**श्रीविश्वेशतीर्थश्रीपादाः**
श्रीपेजावराधोक्षजमठः
उडुपि

## अनुग्रहसन्देशः

### (द्वितीयमुद्रणस्य)

श्रीमद्भागवतग्रन्थरत्नमिदमिदानीं पुनर्मुद्रणं प्राप्नोतीति सन्तोषास्पदमिदम्। प्रथममुद्रण आपतिता दोषा अस्मदादेशेनात्र प्रायः शोधिता वर्तन्त इति विश्वसिमः। द्वितीयमुद्रणार्थं धनसाहाय्यं दत्तवतः पेरियापट्टणसुब्बरायसुपुत्रान् श्रीमतः सत्यनारायणरायान् विशेषतोऽभिनन्द्य अन्यान्यप्रकारेण सहकृतवतां सर्वेषां भगवदनुग्रहमाशास्महे।

दिनाङ्कः - १.१२.२००४ **श्रीविश्वेशतीर्थश्रीपादाः**

श्रीपेजावराधोक्षजमठः, उडुपि

## अनुग्रहसन्देशः

### (तृतीयमुद्रणस्य)

विद्वत्प्रवरैः पिरियापट्टणं शेषगिरि आचार्यैः सम्पादितं श्रीमद्भागवतं विदुषां विद्यार्थिनां चातीवोपकारकमिति श्रुत्वा हृष्टा वयम्। इदानीं पुनरस्य मुद्रणं क्रियमाणं सर्वेषां सुजनानाम् उपकाराय कल्पत इति विश्वसिमः। ग्रन्थस्यास्य प्रकाशकान् पूर्णप्रज्ञसंशोधनमन्दिराधिकारिप्रवरान् सश्रद्धमभिनन्दामः। एतादृशापूर्वग्रन्थसंशोधनकर्मणि शेषगिरि आचार्याः बद्धादरा भवन्त्विति आशास्महे।

दिनाङ्कः - १७.६.२००९ **श्रीविश्वेशतीर्थश्रीपादाः**

## अनुग्रहसन्देशः

### (चतुर्थमुद्रणस्य)

विद्वत्प्रवरैः पि.एस्. शेषगिरि आचार्यैः मातृकाद्वयाधारेण संशोधितस्य श्रीमद्भागवतस्य चतुर्थमुद्रणम् अस्मदीयसंशोधनमन्दिरेण विधीयत इति श्रुत्वा नितान्तं प्रमुदिता वयम्। ग्रन्थस्यास्य संशोधकानां श्रीशेषगिर्याचार्याणां, प्रकाशकानां संशोधनमन्दिराधिकारिणां समेषामपि अस्मादाराध्यः श्रीकृष्णः शं तनोत्विति प्रार्थयामहे।

दिनाङ्कः - ३१.७.२०१२ **श्रीविश्वेशतीर्थश्रीपादाः**

# चतुर्थमुद्रणमधिकृत्य निदेशकवचांसि

विद्वद्वरेण्यैः पि.एस्. शेषगिरि आचार्यैः श्रीसुब्रह्मण्यमठस्थमातृकाद्वयमवलम्ब्य संशोधितः भागवतमूलग्रन्थः चतुर्थमुद्रणमभजदिति ज्ञापयितुं मोमुद्यते नश्चेतः । अत्र प्रदत्तः संशोधितमूलपाठः विदुषामत्यन्तमुपकारक इत्यत्र न सन्देहगन्धः ।

शुद्धपाठलाभ एव समीचीनः भगवद्व्याससम्मतोऽर्थः ज्ञातुं शक्यत इति विदां नातीव प्रतिपादनीयम् । तदेतस्य ग्रन्थस्य संशोधकानां श्री पि.एस्. शेषिगिरि आचार्याणां कार्तज्ञ्यं व्याहरामि । विद्वज्जनाः सज्जनाश्चास्य ग्रन्थस्य पारायणार्थानुसन्धानादिना पुण्यभाजो भवेयुरित्याशास्महे ।

क्रैस्तचतुर्दशशतकादपि प्राचीनतमकोश(मातृका)मवलम्ब्य संशोधितेऽस्मिन् मूलभागवतग्रन्थे अर्वाचीनव्याख्यानसंवादिनोऽपि क्वचन मातृकासूपलभ्यमाना श्लोका विजयध्वजीयेऽव्याख्यातत्वात् मूलकोशेऽभावाच्च परित्यक्ताः । यथा-

तापत्रयेणाभिहितस्य ...... ११.१९.९
दुष्टं जनं ............ ११.१९.१०

महाभारततात्पर्य-भागवततात्पर्यसंवादिन एवमपूर्वाः केचन श्लोकाः मुद्रितभागवतपुस्तकान्तरेष्वनुपलभ्यमाना अपि मूलकोशानुसारेण संयोजिताश्चेति सश्रद्धं निवेदयामः ।

**डा. ए.वि. नागसम्पिगे**
निदेशकः,
पूर्णप्रज्ञसंशोधनमन्दिरम्

# सम्पादकस्य निवेदनम्

पुराणराजस्य श्रीमद्भागवतस्य व्याख्यानस्य श्रीमद्विजयध्वजतीर्थैर्विरचितस्य पदरत्नावळ्याख्यस्य शोधने श्रीपेजावराधोक्षजमठाध्यक्षैः श्रीविश्वेशतीर्थश्रीमच्चरणैरस्मद्गुरुपादैर्नियुक्तेन मया यथामति संशोधितम्। तच्च व्याख्यानं हैदराबाद्नगरे लिङ्गम्पल्लीस्थया श्रीराघवेन्द्रसेवासमित्या प्राकाश्यमनायि। तत्संशोधनसमये एतावता कालेन मुद्रितं व्याख्यानं मूलश्लोकगतपदैः सह न संवदत इत्यपि बहुशो व्यज्ञायि। अतः श्रीमद्भागवतमूलमेव संशोध्योपलभ्यमानपाठान्तराणि तत्रैवाधस्तान्निवेशनीयमित्यपि निरधारि। तदर्थमस्मदीयव्याख्यासु श्रीमद्यदुपत्याचार्यप्रभृतिभिर्विरचितासु लभ्यमानानि पाठान्तराणि समचिन्वतापि। स्थिते चैवं श्रीसुब्रह्मण्यमठे पुस्तकागारस्य सामीचीन्यसम्पादनार्थं प्रयतमानेन मया आकस्मिकेन विधिना ताळपत्रात्मकं पुस्तकत्रयमुपलब्धम्। तत्रैकतमं तु प्राचीनतममिति लिपेः ताळपत्रावस्थायाश्च परिशीलनेन स्फुटमवगतम्। त्रीण्यपि तानि पुस्तकानि तौळवलिप्यामेव लिखितानि। तदनु श्रीपेजावरमठस्य पुस्तकागारात् तौळवलिप्यां लिखितं पुस्तकद्वयं समपादि। एतेषां परिशीलने कृते अद्यत्वे मुद्रितामुद्रितपुस्तकेषूपलभ्यमानस्य पाठस्य, एतेषां पाठस्य च महदन्तरमदर्शि। बहुषु स्थलेषु श्रीविजयध्वजव्याख्यानुगुणो मूलपाठो मुद्रितपुस्तकेष्वनुपलभ्यमान एषु पुस्तकेषु दृश्यते। श्रीविजयध्वजव्याख्याया गम्भीरतया तत्रागृहीतानि पदानि श्रीयदुपत्याचार्यैः श्रीसत्यधर्मतीर्थैश्च गृहीत्वा व्याख्यातानि बहुशो दृश्यन्ते। तानि च पदानि मुद्रितादिपुस्तकेष्वनुपलभ्यमानानि एतेषु ताळपत्रेषु वर्तन्त इति एषु विश्वासः समजनि। तत्रापि श्रीसुब्रह्मण्यमठीयमेकं पुस्तकं प्राचीनतमं श्रीविजयध्वजतीर्थकालसमीपकालवर्तीति ज्ञायते। तच्च दैवाद् रक्षितमुपलब्धं चेति महान् प्रमोदः।

यद्यपि श्रीमदाचार्याणां सर्वथा सम्मतः पाठ इदानीं दुर्लभतरः। तथापि तेषां सम्मतस्य पाठस्यायं पाठो नेदीयानिति विश्वस्यते। संशोधनकाले प्रसङ्गात् महाभारतपुस्तकान्यपि तौळवलिप्यां लिखितानि तत्रैवोपलब्धानि। तेषामपीषत्परिशीलने कृते मुद्रितपुस्तकेष्वविद्यमाना अन्यथापठिताश्च श्लोका आचार्यैर्महाभारततात्पर्यनिर्णये द्वितीयाद्यध्यायेषूदाहृतश्लोकानुसारिण एषु ताळपत्रेषूपलब्धा इति हेतोरपि एषु प्राचीनकोशेषु विश्वासः समवर्धत।

तदनु गुरुपादैः श्रीविश्वेशतीर्थश्रीमच्चरणैस्तथा परमगुरुभिश्च प्रातःस्मरणीयैः श्रीविद्यामान्यतीर्थश्रीमच्चरणैश्चाज्ञप्तेन मया प्रथमं पाठान्तराणि सङ्कलितानि। तानि च पाठान्तराणि पञ्चसहस्राधिकानीति महान् विस्मयः समजनि। ततो यथामति विमृश्य पाठान्तराणि निवेशितानि।

लिपिकाराणां प्राय इयं पद्धतिर्वर्तते। ये मूलग्रन्थान् लिखन्ति ते प्रायः तत्र पुस्तके व्याख्यानं नान्तर्भाव-यन्ति। ये तु व्याख्यानं लिखन्ति ते प्रायो मूलग्रन्थं तत्र न निवेशयन्ति। अतो मूलानुसारिव्याख्यानं व्याख्यानुसारि मूलं वा निश्चेतुं महान् क्लेशो वर्तते।

अत्रायं सम्पादनप्रकारोऽन्वसारि। उपलभ्यमानेषु श्रीमद्भागवतस्य समग्रस्य व्याख्यानेषु विजयध्वजीयमेव प्राचीनतमम्। अतो विजयध्वजसम्मतस्यैव मूलस्यान्वेषणे प्रयतितम्। अतस्तत्र यानि पदानि सन्ति तान्येव पदानि यदि प्राचीनकोशेष्वप्युपलभ्यन्ते तदा तान्येव मूले निवेशितानि। यत्र विजयध्वजधृतानि पदानि प्राचीनकोशस्थानि पदानि च विसंवादीनि तत्रापि विजयध्वजपाठ एवादृत्य निवेशितः। अन्यानि पाठान्तराणि अधस्तात् सूचितानि सन्ति। परमिदमत्रावश्यं वक्तव्यं यद् विजयध्वजव्याख्यानमपि बहुश आवापोद्वापपात्रं सदिदानीं न शुद्धं वर्तत इति। अतो यत्र विजयध्वजीये प्रक्षेपनिश्चयस्तत्र विसंवादेऽपि प्राचीनकोशस्थपाठ एवादृतः। क्वचिद् विजयध्वजतीर्थैरगृहीतो यदुपत्याचार्यादिभिर्गृहीतः पाठ इदानीन्तनपुस्तके व्यत्यस्तोऽपि यदि प्राचीनकोशेषूपलब्धस्तत्र यदुपत्याचार्यादिगृहीत पाठ एव स्वीकृतः। तादृशान्यपि स्थलानि बहूनि सन्तीति प्रागेवावेदितम्। एवं पाठनिर्धारणे सुधीन्द्रतीर्थादिभिः कृतान्यपि व्याख्यानानि परिशीलितानि।

प्राचीनकोशेषु क्वचित्पदेषु ळकारप्रयोगो दृश्यते। आधुनिककोशेषु तत्स्थाने ळकारं परित्यज्य नियमेन लकारः पठ्यते। परं भगवत्पादैः मातृकामन्त्रोद्धारप्रस्तावे ळकारस्यापि सङ्ग्रहात् तद्वाच्यळाळुक-नामकभगवद्रूपस्यापि कीर्तनात् ळकारस्य बहिष्कारोऽवैदिको निर्निमित्तश्चेति कृत्वा प्राचीनकोशस्था ळकारघटितपाठास्तथैवादृत्य सङ्गृहीताः। ळकारपाठान्तराणि विहायान्यान्येव प्राचीनकोशस्थानि पाठान्तराणि परं पञ्चसहस्रेभ्य इत्यनेन मूलग्रन्थविदूषणपरिमाणमनुमेयं भवति। 'ग्रन्थोऽप्येवं विळुळितः किम्वर्थो देवदुर्गमः' इत्याचार्यभणितिरत्रापि समस्तीति नाश्चर्यमिदम्।

भूयांसि पाठान्तराणि सन्तीत्यावेदितम्। तत्र प्राचीनपाठान्तराणि बहुषु स्थलेषु श्रीधरीयपाठसंवा-दीनि। तथाप्ययं श्रीधरीय एव पाठ इति न भ्रमितव्यम्। यतः श्रुतिगीतायाः स्कन्धेष्वध्यायक्रमस्य वैष्णवपाठ-जीवातुभूतश्लोकानां भगवत्पादगृहीतपदानां च परिशीलनेनायं श्रीधरादिपाठादन्य एवेति निश्चप्रचं ज्ञायते। अतोऽयं वैष्णव एव पाठः।

प्राचीनकोशेष्वध्यायान्त एवामुकोऽध्यायः समाप्त इति लेखनं दृश्यते नत्वध्यायारम्भे कुत्राप्यमुकोऽध्यायः प्रारभ्यत इति। प्राचीनकोशेषु प्रत्यध्यायं श्लोकानां सङ्ख्या न निर्दिष्टा। सोऽयं श्लोकसङ्ख्यालेखनक्रमोऽर्वाचीन

एव। बहुषु स्थलेषु श्लोकान्वय एकस्मिन्नेव श्लोके न पूर्तिं गच्छति अपित्वागामिश्लोकस्थेन पदेन पदसमुदायेन वाऽन्वितः सन् पूर्तिमाप्नोति। अत एव प्राचीनकोशेषु श्लोकसङ्ख्या न निर्दिष्टेति भाति।

प्राचीनाधुनिककोशयोः पाठव्यत्यासः प्रतिपुटमत्र सूचिताः। राज्ञां मुनीनां च नाम्नि महान् व्यत्यासो दृश्यते। तं विहाय सौकर्याय पुनःपुनरनुवर्तमानानि कानिचित्पदानि आधुनिकप्राचीनपाठक्रमेणात्र निर्दिश्यन्ते-

अपसदः - अपशदः
अलिः - अळिः
अलकः - अळकः
उल्बणः - उल्वणः
ओषधिः - औषधिः
कलेवरम् - कळेबरम्
कल्पः - कल्यः
कल्पते - कल्प्यते
कश्यपः - काश्यपः
कुटुम्बः - कुडुम्बः
खड्गः - खळ्गः
खट्वा - घट्वा
गाथा - गाधा
ग्रन्थिः - ग्रन्धिः
ग्रहीतुम् - गृहीतुम्
जरठः - जरढः
तलम् - तळम्
तन्ती - तन्त्री

दयालु - दयाळुः
दावः - दवः
दम्भः - डम्भः
दंशितः - दंसितः
द्रविडः - द्रमिळः
नलिनी - नळिनी
नीडम् - नीळम्
पट्टिशम् - पट्टिसम्
पाखण्डः - पाषण्डः
पुलकः - पुळकः
प्रलयः - प्रळयः
प्राङ्गणम् - प्राङ्कणम्
बन्दिनः - वन्दिनः
भर्त्सनम् - भत्सनम्
भल्लः - फल्लः
भुशुण्डिः - मृसृण्ठिः
मरकतम् - मरतकम्
मङ्गलम् - मङ्गळम्/मङ्गलम्

म्लेञ्छः - म्लेच्छः
ललिता - लळिता
लालनम् - लाळनम्
लुलिता - ळुळिता
विक्लवः - विक्लबः
विश्रम्भः - विस्रम्भः
व्रीडा - व्रीळा
शावः - शाबः
सिञ्जन् - शिञ्जन्
सीधु - शीधु/शीथु
सङ्कचम् - सङ्कम्
स्यमन्तपञ्चकम् - समन्तपञ्चकम्
स्वयंवरः - स्वयम्बरः
हेलनम् - हेळनम्/हेडनम्

इमे प्राचीनकोशा मया परमगुरूणां श्रीमद्विद्यामान्यतीर्थश्रीमच्चरणानां करकमलाद् गृहीताः। अचिरेण कालेन संशोध्य मुद्राप्यास्माकं हस्ते दातव्यमित्यादिष्टं च तैः। तथापि मन्दभाग्योऽहं तथा कर्तुं नापारयम्। इदानीं ते हरिपदं प्राप्ताः। नन एव मामनुगृह्णीयुरित्याशासे।

जीर्णप्रायताळपत्रेषु स्थितानां वाक्यानां बोधो दुस्साध्य एवासीत्। अतः सर्वाणि पाठान्तराणि मया सङ्गृहीतानीति न विश्वसिमि। मयाऽनवधानेन तत्रतत्र पाठान्तराण्यनवेक्षितानि अत एवात्रानिवेशितानि च स्युः। क्षन्तव्योऽयं ममापराध इति भवतः सप्रश्रयमभ्यर्थये।

ग्रन्थस्यास्य शोधनादिकार्येषु यथोचितं सह चक्रतुः श्रीमती जानकी तथा मम शिष्यो मित्रं च विद्वान् श्रीमान् अनन्ततन्त्री च। तयोः कार्तज्ञ्यं निवेदयामि।

मम गुरुपादाः श्रीपेजावराधोक्षजमठाधीशाः सुगृहीतनामधेयाः श्रीविश्वेशतीर्थपूज्यचरणा मामस्मिन् कार्ये न्ययोजयन्। श्रीविजयध्वजपीठाधिष्ठितैराबाल्यं श्रीमद्भागवतनिष्ठैस्तैरेवायं ग्रन्थः प्राकाश्यं नेय इति महदाशा ममासीत्। त एव ग्रन्थस्यास्य मुद्रणादिकार्यार्थमावश्यकं धनं संयोज्य कार्यमिदमपूरयन्। तेषां श्रीमच्चरण-कल्पवृक्षच्छायानिविष्टेष्वन्यतमोऽल्पोऽहं तेषां हृत्पद्मवासिने श्रीभारतीरमणमुख्यप्राणान्तर्यामिणे निखिल-गुणपूर्णाय निरस्तसमस्तदोषाय श्रीमदधोक्षजविट्ठलाय बहून् प्रणामान् समर्प्य धन्यतामनुसन्दधामि।

विक्रमसंवत्सरस्य श्रीमध्वनवमी<br>मैसूरुनगरम्

*श्रीमच्चरणानामन्तेवासी*<br>**शेषगिरि आचार्यः**

# PREFACE

Bhagavata is considered as the King of Puranas. Sri Madhvacharya has extensively used it to propound the tenets of his philosophy of Tattvavada in addition to writing a gloss on Bhagavata. In the light of this work Bhagavata Tatparya, many saints and scholars have written commentaries on Bhagavata from before the time of Vijayadhvaja Tirtha till date. At the behest of my preceptor H.H. Sri Vishvesha Tirtha Swamiji of Sri Pejavara Matha, I was engaged in editing the commentary of Sri Vijayadhvaja Tirtha on Bhagavata. The entire volume has since been published by Sri Raghavendra Mutt, Lingampally, Hyderabad. While editing that work I observed that the words in the original text do not confirm with the commentary of Vijayadhvaja Tirtha at many places. So it was my cherished desire to edit the Bhagavata text itself giving all the different readings acceptable to the Vaishnava commentators. So I collected all the different readings suggested by Sri Yadupati Acharya, Satyadharma Tirtha, Sudhindra Tirtha and others.

Accidentally enough, I chanced to come across a rare palmleaf manuscript of Bhagavata in Subrahmanya Mutt at Subrahmanya. A cursory reading of the book ensured me that there were so many readings which differed from the printed and normally accepted readings. Thereupon I collected two more palmleaf manuscripts of Bhagavata from Subrahmanya Mutt and two others from Pejavara Mutt. I tried to collate all the different readings during which process I found out that many times the correct reading acceptable to Vijayadhvaja was available in the palm leaf manuscripts only and not in the hitherto printed texts or paper manuscripts. So I engaged myself in great earnestness in the editing of this work.

The script employed in all these palmleaf manuscripts is 'Tulu'. It could be a primitive form of modern Malayalam script. Though scholars still debate whether Tulu has a script of its own or not, the fact remains that the majority of Dvaita Vedanta works in addition to Puranas, Ramayana and Mahabharata is written on palmleaves using the same script and hence its importance to us.

Special mention must be made of one particular manuscript used here. That is the one which belongs to Subrahmanya Mutt. The script employed here is older and has many variations when compared to other manuscripts. Also the palmleaves themselves are very old and resemble in hue and texture the Sarvamula manuscripts of Sri Palimaru Mutt, believed to be written by Sri Hrishikesha Tirtha a direct disciple of Sri

Madhvacharya. Since the manuscript is very old an attempt is made by one of the previous heads of the Mutt to rewrite the 12th Skandha as the original book was fast decaying. The rewritten palmleaves are placed along with the original palmleaves of the 12th skandha and this presents a very interesting and useful study of the material which enables us to determine the date of the manuscripts. Unfourtunately the copyist has not given any details either about himself or about the date on which the writing was completed, a practice mostly followed by later copyists. All that he has said about himself is this :

आढकग्रामवासेन व्यासकारुण्यमिच्छता।
जनार्दनेन लिखितं श्रीमद्भागवतं शुभम्॥

His name is Janardana living in Adhaka village. There is no village of that name in South Kanara today. But His Holiness opines that it should be the name of a village near Kunjaru and Pajaka wherefrom many of the previous pontiffs of Subrahmanya Mutt came. Janardana should have been a disciple of Subrahmanya Mutt and hence the mention of Narasimha and Vedavyasa at many places in the manuscript. Had the later practice of mentioning the name of his guru been followed we could have arrived at a near definite conclusion about his date, since the lineage of gurus has been kept intact in every Mutt. But even otherwise we can safely say that it is one of the oldest palmleaf manuscripts preserved anywhere and it should be at least six hundred years old. So it is a manuscript which very nearly goes back to the period of Vijayadhvaja Tirtha who entered Vrindavanam around 1426 A.D. So this is a priceless manuscript and by the grace of God it has come down to us.

There is a striking concordance in the readings of all these palmleaf manuscripts. While we get a particular reading in the printed and paper manuscripts, where it differs, the reading in all the palmleaf manuscripts is identical. In rare cases there is a very minimal variation amongst them. It was astonishing to find out that there are more than five thousand different readings in the palmleaves as compared to the text which has been printed claiming to be acceptable to Vijayadhvaja Tirtha. And this too, excluding the ळकार variations. There is no reason to boycott the ळकार from the texts as it occurs in the Vedas and also in the मातृकामन्त्र and so the palmleaves rightly retain the ळकार wherever it is used. Post Panini Sanskrit literature has abandoned the ळकार altogether and uses the लकार instead.

It has already been stated that there are more than five thousand different readings in these palmleaf books. Many of these readings found in the palmleaves agree with Sridhara's readings. But the palmleaves should not be mistaken to be a version of Sridhara's recension of Bhagavata. For we have two recensions of Bhagavata, the one Vaishnavite recension acceptable to Acharya and commented upon by Vijayadhvaja and others and the other Sridhara's recension. The latter is actually Chitsukha's recension of Bhagavata. Sridhara belongs to a later date. All other schools of philosophy have followed the Sridhara recension while only Madhvas have carefully preserved the Vaishnava recension. Mere agreement of a few readings of the palm-leaves does not establish its identity with the Sridhara recension. Certain words, phrases and Shlokas are exclusively preserved in the Vaishnava recension. All such words, phrases and Shlokas have been recorded and explained by Sri Madhvacharya in his Bhagavata Tatparya. The contents of the individual adhyaya, the number of adhyayas in a particular Skandha and above all the text of Sruti Geeta which is so vital to the Vaishnava recension should be examined before arriving at a conclusion. And the examination of all these vital aspects unmistakably points to the fact that this is the Vaishnava recension only.

Padaratnavali of Vijayadhvaja happens to be the oldest among the commentaries which cover the entire text. The other commentaries are either later works or cover only a few Skandhas. So my endeavour has been to arrive at a reading which would be acceptable to Vijayadhvaja Tirtha. To arrive at a text completely acceptable to Sri Madhvacharya will be impossible now. We learn from Madhva Vijaya that the original text was mutilated even during the boyhood of Acharya. So by trying to arrive at a text acceptable to Vijayadhvaja Tirtha we will be trying to arrive at a text which will be nearer to the Acharya's text.

In view of this the following procedure has been adopted here. Where the palmleaf readings and Vijayadhvaja readings agree with each other there is no problem at all. Where they differ, if Vijayadhvaja has recorded the word and rendered its meaning his reading is included in the text and the palmleaf reading is given in the foot-notes. If Vijayadhvaja has not recorded the particular reading in his commentary and if there is nothing to the contrary in his commentary, then the palmleaf reading only is incorporated in the text. Many times it has so happened that even though there is no mention of the word in Padaratnavali, the word will appear in later commentaries or very rarely in a single paper manuscript. In such cases also the palmleaf reading

only is incorporated in the text and the other readings are given in the footnotes. We know Vijayadhvaja's commentary is replete with interpolations and when there is certainty about it attempt is made to retain the palmleaf reading in the original text.

While editing Padaratnavali I had indicated at many places in the footnotes that either the commentary is not clear or the words recorded by Vijayadhwaja are not to be found in the original text. But astonishingly the palmleaf readings render the commentary clear and the particular words are to be found in these palmleaf manuscripts, strengthening our belief that this text is more acceptable to Vijaya- dhwaja than the other printed and paper manuscript texts.

The copyists who wrote on the palmleaves have a unique way of writing. Some copyists write only the original text. Those who write the commentaries do not include the original text in their writing. Very rarely we find both the original text and the commentary written by the same copyist together. But often the original text and the commentary have to be corrected using different writers' writings. So we will not be in a position to ascertain the particular text with respect to a commentary written by a particular copyist. As these works are further copied by later copyists whatever has been written in the margins in the process of understanding the work by way of personal notes has also found its way into the commentaries themselves and this has complicated the matter to a very great extent. So I have tried to edit the work within my own parameters.

I received these palmleaf manuscripts from the hands of the reverred His Holiness Sri Vidyamanya Tirtha Swamiji of Sri Palimar and Bhandarakeri Mutts with an express injunction that the work should be completed and the printed work handed to His Holiness in a short time. But unfortunately I was not able to keep my promise and His Holiness left us for his heavenly abode on 14.5.2000. I feel very sad now and only invoke his blessings from his heavenly abode.

The palmleaves were very wornout and it was very difficult to go through them. So I do not claim that all the relevant readings have been recorded and scrutinised. There may be a few more readings which have not been noticed by me due to my shortcomings. I pray your forgiveness for the same.

I place on record my gratitude to Smt. Janaki Nagaraj and Sri A. Ananta Tantry for the valuable help they have rendered in recording the readings and proof-reading.

My preceptor H.H. Sri Vishvesha Tirtha Swamiji of Sri Pejavara Mutt has been the guiding force behind this work all along. But for his encouragement this work would not have found the light of the day. It was my ardent desire that the book should be published under his aegis only, occupies as he does the seat sanctified by Sri Madhvacharya and Sri Vijayadhvaja Tirtha whose (the latters) name has become synonymous with Bhagavata in Madhva circles. His Holiness's commitment to Bhagavata right from his childhood is extraordinary and I deem it a great honour to be initiated into this work by his refulgent personality.

With humble pranamas at his lotus feet I conclude this write-up invoking the choicest blessings of Sri Adhokshaja Vitthala enshrined in his heart.

*A humble servant of His Holiness*

**P.S. Seshagiri Acharya**

# द्वितीयमुद्रणमधिकृत्य किञ्चित्

पुस्तकमिदमचिरादेव समयाद् द्वितीयमुद्रणमलभतेति सन्तोषस्थानमिदम् । प्रथममुद्रणे ये दोषा अस्मदनवधानादुर्वरितास्तेषां शोधनायात्र प्रयतितम् । पञ्चमेऽपि स्कन्धे श्रीविजयध्वजतीर्थसम्मतिमालक्ष्याधो-निर्दिष्टाः केचन पाठा उपर्येव निवेशिताः ।

दशमस्कन्धे बाणभुजकृन्तनभागः सम्प्रति मातृकासु नोपलभ्यते न व्याख्यातश्च श्रीविजयध्वजतीर्थैः । तथापि श्रीसत्यधर्मतीर्थैरुररीकृतमिति परिशिष्टेऽध्यायद्वयं न्यवेशि । तथाहि तेषां वचनं ८८तमाध्याय-व्याख्यानस्यादौ-

''अतोऽनिरुद्धं सह भार्यया स्थितम्' इत्येतदुत्तरं 'बाणस्य तनयामूषामुपयेमे यदुत्तमः' इति श्लोकमारभ्य 'एवं कृष्णस्य विजयं शङ्करेण च संयुगम् । संस्मरन् प्रातरुत्थाय तस्य न स्यात् पराजयः' इत्यन्तमध्यायद्वयं क्वचित् पुस्तकसम्पुटयां नास्तीति प्राचीना न व्यचीचरन् विवृतिम् । बहुपुस्तकेषु वर्तते । अपि चानुक्रमणिकायां 'बाणस्य भुजकृन्तनम्' (१२.१२.३६) इत्युक्तेस्तथा तृतीये च 'शम्बरं विविदं बाणं मुरं वल्कलमेव च । अन्यांश्च दन्तवक्रादीनवधीत् कांश्च धातयत्' (३.३.११) इत्युक्तेश्च तद् व्याक्रियते'' इति ।

विजयध्वजतीर्थैरपि पुरञ्जनोपाख्यानव्याख्यावसरे (४.१७.३०) 'प्रज्वारः शैववैष्णवोभयलक्षणः' इत्युक्तम् । तदेतत्प्रकरणगतमेव शैववैष्णवज्वरं मनसि निधायोक्तमिति भाति । अतः प्रायस्तैर्व्याख्यातमप्यध्याय-द्वयमिदं कालमहिम्ना लेखकप्रमादेन च सव्याख्यानं लुप्तमिति सम्भाव्यते ।

सत्यधर्मतीर्थैरध्यायद्वयमिदं ७३तमाध्यायात् परं योजनीयमित्यभाणि । परमनुक्रमणिकाक्रमपरि-शीलने ६२तमाध्यायात् परं योज्यमिति भाति । सर्वथा कृष्णकथायामवश्यमनुसन्धेयमित्यन्ते परिशिष्टे निवेशित-मस्माभिः ।

द्वादशस्कन्धे प्राचीनकोशेषु द्वादशाध्याया एव सन्ति । 'उपचितनवशक्तिभिः स्व आत्मन्' इति श्लोक एव ग्रन्थः पर्यवस्यति । एतच्छ्लोकानन्तरं प्राचीनकोशेषु 'समाप्तः द्वादशस्कन्धः । समाप्तश्चायं ग्रन्थः' इति लेखो दृश्यते । प्राचीनतमः कोशः तत्रत्यसमाप्तिश्च श्रीमदुत्तरादिमठाधीशानां परस्सहस्रश्रीयुक्तश्रीसत्यात्मतीर्थ-श्रीमच्चरणानां प्रादर्शि । यद्यपि मुद्रितविजयध्वजटीकायुतपुस्तकेषु क्वचित् हस्तलिखितपुस्तकेषु च 'यं ब्रह्मा वरुणेन्द्ररुद्रमरुतः' इत्यादि त्रयोदशाध्यायोऽपि दृश्यते । तथापि विजयध्वजतीर्थैः कृतं 'व्याख्या भागवतस्य

कृष्ण रचिता' इत्यादि समर्पणं द्वादशाध्यायान्त एव दृश्यते। त्रयोदशाध्यायान्तेऽवश्यम्भावि तादृशं किमपि नास्ति। अपि च श्रीवादिराजतीर्थैः भागवतानुक्रमणिकायां स्वरचितायां 'स्कन्धेऽस्मिन् द्वादशाध्याया द्वादशे च प्रकीर्तिताः' इत्युक्त्वाऽध्यायसङ्ख्या निरणायि। अतस्त्रयोदशाध्यायः स्फुटं प्रक्षिप्त इति नात्र ग्रन्थे निवेशितः।

यद्यपि प्रतिपाठभेदं चर्चनीयो विषयो वर्तते तथाप्यनवसराद् ग्रन्थगौरवभयाच्च न तत्र पराक्रान्तम्।

प्रथममुद्रणे प्राचीनकोशमनुरुध्य खळ्गशब्द एवादृतः। अच्संवलनाभावे डस्य ळादेशो दुर्मिल इत्यभियुक्तवचनमनुसृत्यात्र द्वितीयमुद्रणे खड्गशब्द एव निवेशितः। एवं प्राचीनकोशेषु सेवार्थे प्रायः शिश्रूषाशब्द एव वर्तते। स चायं शब्दः कोशेषु न लभ्यत इति हेतोः लेखकप्रमादापतित इति कल्पयित्वा तत्स्थाने शुश्रूषा-शब्द एव प्रथममुद्रण आदृतः। परं शिश्रूषाशब्दो मुद्रितामुद्रितसर्वकोशेषु तथा अन्यान्यव्याख्यानेषु बहुत्र लभ्यत इति द्वितीयमुद्रणे शिश्रूषाशब्दोऽपि क्वचित् निवेशितः। श्रवणेच्छार्थकशुश्रूषाशब्दस्त्वन्य एव।

अत्रापि द्वितीयमुद्रणे केचन दोषा अनुद्धृता एव स्युः। अध्येतारो विद्वांसस्तान् संशोध्यास्मानपि प्रतिबोधयन्त्विति प्राथ्यते। तेन तेषामुद्धारस्तृतीये मुद्रणे सुशको भविष्यति।

मैसूरुनगरम्
२००४

*सुजनविनेयः*
**शेषगिरि आचार्यः**

---

## तृतीयमुद्रणमधिकृत्य किञ्चित्

पूर्णप्रज्ञसंशोधनमन्दिरद्वारा श्रीमद्भागवतमिदं शुद्धपाठसमलङ्कृतं विदुषां विद्यार्थिनां पारायणरतानां सुजनानां च महते उपकाराय कल्पत इति सुजनानामाशयविशेषं विज्ञाय 'क्लेशः फलेन हि पुनर्नवतां विधत्ते' इति कविवचनानुसारेण मदीययत्नस्य सार्थक्यमनुभवामि। श्रीहरिवायुगुरूणां कृपास्पदेऽस्मिन् कर्मणि अनुग्राहकाणां श्रीमद्विश्वेशतीर्थश्रीमच्चरणानां वात्सल्यातिशयं संस्मरन् तेभ्यः प्रणतिततीः समर्पयामि। समभिनन्दामि च ग्रन्थस्यास्य प्रकाशकान् पूर्णप्रज्ञसंशोधनमन्दिराधिकारिप्रवरान्। महान्तः ग्रन्थस्यास्य अध्ययन-अध्यापनादिना श्रीकृष्णानुग्रहभाजो भवन्त्विति प्रार्थये।

मैसूरुनगरम्
२००९

*सुजनविधेयः*
**शेषगिरि आचार्यः**

## Director's Note

The luscious fruit of the Kalpavrksha called Veda is the Srimad Bhagavatam. There is no other work which presents the greatness of the highest God in such a simple and charming language. Sriman Madhwacharya has written his unique commentary on this great work. In spite of the availability of many editions, the original Bhagavata is not available in its fully correct form. Many editions of North India have taken liberty in changing the text of this original work. Bringing out an edition with correct text was a desideratum. Only a few scholars could understand the complications and present the correct text. Sri Madhwacharya and his followers have suggested the correct reading in their commentaries. The reputed scholar Sri P.S. Sheshagiri Acharya has meticulously studied the palm-leaf manuscripts of Bhagavata available in Sri Subrahmanya Matha and Sri Pejavara Matha. These manuscripts are about seven centuries old and written in the Tulu script. Sri Sheshagiri Acharya a few years ago learnt this ancient script and collected all the readings available in these manuscripts. He has come up with the correct text which is in consonance with the early commentaries. His devotion and dedication are worthy of emulation. The book is being printed for the third time and in spite of the escelation in the printing cost this book is made available to the interested public for a very reasonable price. We hope that the public will benefit by making use of this book which contains more than a thousand pages.

The source of inspiration for this venture is our founder H.H. Sri Sri Vishveshatirtha Swamiji. We express our heartfelt gratitude to H.H. Sri Swamiji with Pranamas.

We also express our thanks to Prof. Radhavallabha Tripathi, Vice-chancellor, Rashtriya Sanskrit Sansthan, New Delhi and Sri C.S. Kaniyal, Finance Officer, Rashtriya Sanskrit Sansthan, New Delhi, for giving all support in our academic activities.

Prof. D. Prahlada Char, Chairman of Poornaprajna Samshodhana Mandiram, is the guiding force of our academic activities and I express my gratefulness for his valuable guidance.

*Sujanavidheya*

**Dr. A.V. Nagasampige**
**Director**
**Poornaprajna Samshodhana Mandiram**

# विषयानुक्रमणिका

## चतुर्थस्कन्धः

| अध्यायः | पुटम् | विषयाः |
|---|---|---|

**पञ्चमस्कन्धः**

| अध्यायः पुटम् | विषयाः |
|---|---|

## षष्ठस्कन्धः

| अध्यायः | पुटम् | विषयाः |
|---|---|---|
| | | **सप्तमस्कन्धः** |
| १. | ३६९ | भगवतो वैषम्याद्यभावविवेचनम्। नारदधर्मराजसंवादे चैद्यविषये प्रश्नः। नारदस्योत्तरम्। जयविजययोर्जन्मत्रयोल्लेखः। |
| २. | ३७१ | हिरण्याक्षवधेन हिरण्यकशिपोरमर्षः। मन्त्रणम्। कपोतकथोल्लेखेन रुशद्भान्वादीनां सान्त्वनं च। |
| ३. | ३७५ | हिरण्यकशिपोस्तपश्चरणम्। देवानां विरिञ्चप्रार्थना। तस्यागमनं वरदानं च। |
| ४. | ३७७ | हिरण्यकशिपोर्दर्पः। दिक्पालान् विजित्य महेन्द्रभवनवासः। देवैर्भगवदुपसर्पणम्। हरेरभयदानं च। |
| ५. | ३८० | शण्डामर्काध्यापनम्। पितुः पुरतः प्रह्लादस्योक्तिः। निर्बन्धेन त्रिवर्गोपदेशः। द्वितीयवारं प्रह्लादस्योक्तिः। हिरण्यकशिपो रोषश्च। |
| ६. | ३८३ | प्रह्लादेन दैत्यबालकानां विष्णुधर्मोपदेशः। |
| ७. | ३८६ | स्वस्य नारदात् तत्वज्ञानप्राप्तिप्रकारवचनम्। पुनरुपदेशः। |
| ८. | ३८९ | सुतं स्वयमेव हन्तुं हिरण्यकस्य निर्धारः। तथोद्यमः। नृसिंहावतारः। तन्महिमा दैत्यवधो ब्रह्मादीनां तत्स्तवनं च। |
| ९. | ३९४ | प्रह्लादकृता नृसिंहस्तुतिः। वरस्वीकारप्रेरणा च। |
| १०. | ३९९ | कामासंरोहपितृपूतत्वयोर्वरणम्। हिरण्यकवरदानविषये हरिब्रह्मसंवादः। प्रह्लादस्याभि-षेचनम्। देवानां स्वस्वधामगमनं च। |
| ११. | ४०२ | त्रिपुरवधेऽशक्तस्य हरस्य हर्यनुग्रहो त्रिपुरदाहश्च। |
| १२. | ४०३ | नारदेन युधिष्ठिरस्य नृणां स्त्रीणां च साधारणधर्माणां ब्राह्मणादिवर्णधर्माणां च निरूपणम्। |
| १३. | ४०५ | ब्रह्मचारिवनस्थधर्मयोर्निरूपणम्। सर्वाश्रमसाधारणधर्मनिरूपणं च। |
| १४. | ४०६ | सह्यसानुनि प्रह्लादेनावधूतस्य दर्शनम्। पृष्टेनावधूतेन स्ववृत्तेर्वर्णनं च। |
| १५. | ४०८ | धर्मराजप्रश्नोत्तरतया नारदेन विशिष्य गृहस्थधर्माणामुपदेशः। |
| १६. | ४१० | कर्मज्ञानयोगयोः प्रपञ्चस्वरूपस्य लयादीनां च वर्णनम्। नारदस्य पूर्वजन्मवृत्तान्तः। युधिष्ठिरस्य श्रीकृष्णपूजा च। |

**नवमस्कन्धः**

OOO

# भागवतशोधनपत्रिका

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २७ | ११ | मूढा | मूढाः |
| ३५ | १६ | सविमुक्तः | स विमुक्तः |
| ४१ | २३ | धर्मपादस्ते | धर्म पादस्ते |
| ४३ | १६ | कर्माश्रिया | कर्माश्रियाः |
| ४७ | १७ | यायामुप | यां यामुप |
| ६२ | १३ | ॠषयो | ऋषयो |
| ६४ | ५ | सनोभूत् | सनोऽभूत् |
| ६५ | १२ | प्रणयं | प्रथयं |
| ६७ | १२ | ॠभु | ऋभु |
| ६७ | १३ | रध्वम्ब... | रध्वम्ब... |
| ७४ | १२ | विविधा चतु | विविधाश्चतु |
| ७७ | १५ | ...ऽघः | ...ऽधः |
| ७९ | ४ | ...णाभिहता | ...णोपहता |
| ९६ | १९ | परार्ध्य | परार्घ्य |
| ९८ | २१ | योनिष्पात्मे | योनिष्वात्मे |
| ११५ | २० | परार्ध्य | परार्घ्य |
| १२५ | ८ | बहुधारिणा | बहुधाऽरिणा |
| १३४ | ९ | वासःपरि... | वासपरि... |
| १४२ | १९ | श्राविक... | श्रविक... |
| १४३ | ५ | मत्परा | मत्पराः |
| १४४ | ११ | प्रकृतेगुण | प्रकृतेर्गुण |
| १४७ | ११ | बुद्ध्यवस्थानो | बुद्ध्यवाक्स्थानो |
| १४९ | १० | च्यवने | च्यवते |
| १६५ | ९ | उशना | उशनाः |
| २१० | ४ | निशम्योदा... | निशाम्योदा... |
| २१२ | ११ | विद्यां ये च | विद्यां च ये च |
| २१८ | १९ | ब्रह्मणकुला | ब्राह्मणकुला |
| २२६ | २ | स्वान्याकाशे | खान्याकाशे |
| २४४ | १० | मृगयुलुब्धक | मृगय लुब्धक |
| २४४ | ११ | सुमनसां | सुमनसः |
| २४४ | १२ | क्षुद्रतमं | क्षुद्रतरं |
| २४४ | १३ | वनितादिजना | वनिताजना |
| २४४ | १३ | अहोरात्रान्तान् | अहोरात्रादि |
| २४४ | १४ | काललवविशे.. | कालविशेषान् |
| २४४ | १५ | परिविध्यति | पराविध्यति |
| २४४ | १५ | द्रष्टुमर्हसीति | द्रष्टुमर्हसि यथा मृगयुहतं मृगमिति |
| २४४ | २० | संशयोऽत्र न मे | संशयोऽत्र तु मे |
| २४६ | १८ | दिव्यवर्ष | दशवर्ष |
| ३४७ | १३ | गोध्रो | गोध्रो |
| ३६५ | १३ | शरीरेन्द्रयाशया | शरीरेन्द्रियाशया |
| ३७२ | १२ | यावाल्लिङ्गा... | यावल्लिङ्गा... |
| ३७७ | १२ | अधमात्मजे | अघमात्मने |
| ४०२ | १४ | अप्रत्तमा | अप्रमत्ता |
| ४२९ | ७ | (अस्पष्टम्) | वीरुधस्ते |
| ४४२ | १९ | बिलज्जन्त्यां | विलज्जन्त्यां |
| ४४६ | ७ | प्रचोदिता | प्रचोदिताः |
| ४४७ | १० | रथमारुढो | रथमारूढो |
| ४५५ | १९ | अद्यग्रयो | अद्याग्रयो |
| ४५७ | २१ | विभोः | विभो |
| ४५८ | ७ | शफार्याः | शफर्याः |
| ४६९ | १२ | समीहिते | समीहते |

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४७२ | ८ | परमधर्मवित् | परमधर्मवित् |
| ४७३ | १९ | वृषघ्रः | वृषध्रः |
| ४७५ | २० | प्रावोच | प्रोवाच |
| ४८१ | ६ | विघात | विधात |
| ४८४ | ५ | वाप्युक्त | वाप्युक्तः |
| ५०१ | ५ | मत्क्षेत्रतादाहितं | मत्क्षेत्रादहितं |
| ५०५ | २३ | वद्धेषुभि | बद्धेषुभि |
| ५०७ | १७ | पूर्वोत्तरार्धययोर्विपरिवृत्तिः | |
| ५२२ | ४ | श्चैद्यदयो | श्चैद्यादयो |
| ५२८ | ७ | यथैवेकेन | यथैवैकेन |
| ५३२ | ८ | प्रकाशैनुमीयते | प्रकाशैरनुमीयते |
| ५३२ | ११ | संरस्मरयंश्च | संस्मरयंश्च |
| ५३३ | १२ | कुण्डळ | कुण्डल |
| ५३५ | १३ | आदित्यमय | अदित्यामथ |
| ५३६ | ६ | शृङ्गलैः | शृङ्खलैः |
| ५३७ | ११ | शिशून् | श्वसन् |
| ५४३ | ६ | मवघ्राय | मवघ्राय |
| ५४४ | ४ | स रुदन् | सा रुदन् |
| ५४४ | ९ | रार्तनत् | रार्तवत् |
| ५४७ | १४ | लीलाववन्तर्व्रजे | लीलावन्तर्व्रजे |
| ५५४ | २० | भवथ | भवत |
| ५५८ | १७ | सताळग्रै | सताळाग्रै |
| ५५८ | २३ | सारध | सारघ |
| ५५८ | २४ | यदपाङ्गामोक्षः | यदपाङ्गमोक्षः |
| ५६२ | ६ | तदीशनाथाय | तदीशनाथाप |
| ५६२ | २२ | त्वामजनातः | त्वामजानतः |
| ५६२ | २४ | भर्ता | भर्तः |
| ५७२ | १४ | कुसुमाबलीभिः | कुसुमावलीभिः |
| ५७२ | १४ | नयतरो | नयतो |
| ५७६ | १८ | किडम्बनम् | विडम्बनम् |
| ५७६ | २० | क्रतुधर्मश्च | क्रतुर्धर्मश्च |
| ५८४ | १४ | पितृवत्सलः | पितृवत्सल |
| ५८५ | १० | मण्डनम् | मण्डलम् |
| ५८६ | १४ | वालाश्च | बालाश्च |
| ५८९ | ५ | र्विभासि | विभासि |
| ५९२ | २० | मात्मपबन्धवे | मात्मबन्धवे |
| ६०३ | १ | दुर्जनात् | दुर्जनान् |
| ६०६ | ४ | गियिदर्या | गिरिदर्या |
| ६०८ | १० | तेष्वचेष्टत | तेष्ववेष्टत |
| ६१० | १८ | बिभ्रंशित | विभ्रंशित |
| ६१३ | १३ | कारणमस्त्याय | कारणमत्स्याय |
| ६१६ | ७ | प्रसाद | प्रासाद |
| ६१६ | १२ | सृक्ताम्बूल | स्रक्ताम्बूल |
| ६१८ | ११ | चेरतुर्हृष्टौ | चेरतुर्हृष्टौ |
| ६२५ | १९ | धुनुर्वेदं | धनुर्वेदं |
| ६२९ | ९ | कुङ्कुमानताः | कुङ्कुमाननाः |
| ६३३ | १३ | तभ्दागवत | तद्भागवत |
| ६३६ | ५ | दुष्ध्रुत्र | दुष्पुत्र |
| ६६० | २० | सन्तुष्ठमनसः | सन्तुष्टमनसः |
| ६६४ | ३ | सखिभिः | सखीभिः |
| ६६६ | ७ | हतशेषा | हतशेषाः |
| ६७० | २१ | स विदुरं | सविदुरं |
| ६७१ | १९ | उच्छिलीन्द्र | उच्छिलीन्ध्र |
| ६७२ | २ | मन्वेष | मन्वेषन् |

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६८० | २३ | पाण्डुराभान् | पाण्डराभान् |
| ६८९ | १ | सकीरीटं | सकिरीटं |
| ६९४ | १४ | मिनुव्रताः | मनुव्रताः |
| ७०२ | ११ | पराध्या | पराघ्र्या |
| ७०५ | १९ | निर्गमन् | निर्गमम् |
| ७०९ | २१ | प्रस्तापितो | प्रस्थापितो |
| ७१५ | १४ | शोडश | षोडश |
| ७१७ | ११ | विभ्रद् | बिभ्रद् |
| ७१८ | १६ | भीमं समबलं | भीमसेनबलं |
| ७२२ | ३ | भ्रदं ते | भद्रं ते |
| ७२९ | ४ | महार्ध्य | महार्घ्य |
| ७४१ | ६ | चारिजिधांसया | चारिजिघांसया |
| ७४१ | २४ | वनस्पीतः | वनस्पतिः |
| ७४२ | १९ | गामर्ध्यं | गामर्घ्यं |
| ७४४ | ५ | भैष्टत्यभयं | भैष्टेत्यभयं |
| ७५२ | २ | यजन्त | भजन्त |
| ७५३ | १६ | तदनुजहासि | तदनु त्वमुत जहासि |
| ७६३ | ९ | विभ्रतोरसि | बिभ्रतोरसि |
| ७६४ | ३ | ममैतन्मम | बतैतन्मम |
| ७६४ | २३ | उपानित्यु | उपानिन्यु |
| ७६९ | २५ | अताडयन् | अताडयन् |
| ७९४ | १५ | मर्त्यस्तु | मत्स्यस्तु |
| ७९४ | १६ | हि वर्धते | च वर्धते |
| ७९९ | ११ | लाकपालानां | लोकपालानां |
| ८१३ | १५ | मश्रामाणां | माश्रमाणां |
| ८१८ | १२ | मुखाच्छूतात् | मुखाच्छूतात् |
| ८२५ | १२ | सिध्यसिद्धिः | सिद्ध्यसिद्धिः |
| ८३६ | ६ | स्थाण्डिले | स्थण्डिले |
| ८४० | ११ | चित्रज्ञान | चित्रमज्ञान |
| ८४७ | १० | धरणा | धारणा |
| ८४८ | २ | तच्छूत्वो | तच्छूत्वो |
| ८४८ | १५ | परमंहस | परमहंस |
| ८५४ | १७ | युगधर्माश्च | युगधर्मांश्च |
| ८५७ | १२ | महादादयो | महदादयो |
| ८६५ | १८ | आराधयत् | आराधयन् |
| ८६६ | १२ | अनुकन्दकम् | अनुकन्दुकम् |
| ८७२ | ३ | वरदर्शभाम् | वरदर्षभात् |
| ८७५ | १३ | यत्तद्भुतम् | यत्तदद्भुतम् |
| ८७६ | १२ | नारसिहं | नारसिंहं |
| ८७७ | ९ | शाल्वानां | साल्वानाम् |

# ॥ श्रीमद्भागवतम् ॥

## ॥ अथ प्रथमस्कन्धः ॥

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञःस्वराट् तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यं सूरयः ।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ १ ॥

धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां वेद्यं वास्तवमत्र वस्तु शिवदं[१] तापत्रयोन्मूलनम् ।
श्रीमद्भागवते महामुनिकृते किं वाऽपरैरीश्वरः सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ॥२॥

निगमकल्पतरोर्गळितं[२] फलं शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ॥ ३ ॥

नैमिशेऽनिमिषक्षेत्रे ऋषयः शौनकादयः । सत्रं स्वर्गाय लोकाय सहस्रसममासत ॥ ४ ॥

त एकदा तु मुनयः प्रातर्हुतहुताशनाः । सत्कृतं सूतमासीनं पप्रच्छुरिदमादृताः ॥ ५ ॥

**ऋषय ऊचुः**

त्वया खलु पुराणानि सेतिहासानि चानघ । आख्यातान्यप्यधीतानि धर्मशास्त्राणि तान्युत ॥ ६ ॥

यानि वेद विदां श्रेष्ठो भगवान् बादरायणः । अन्ये च मुनयः सूत परापरविदो विदुः ॥ ७ ॥

वेत्थ त्वं सौम्य तत् सर्वं तत्वतस्तदनुग्रहात् । ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत ॥ ८ ॥

तत्रतत्राञ्जसाऽऽयुष्मन् भवता यद् विनिश्चितम् । पुंसामेकान्ततः श्रेयस्तन्नः शंसितुमर्हसि ॥ ९ ॥

प्रायेणाल्पायुषो मर्त्याः कलावस्मिन् युगे जनाः । मन्दाः सुमन्दमतयो मन्दभाग्या ह्युपद्रुताः ॥१०॥

भूरीणि भूरिकर्माणि श्रोतव्यानि विभागशः । अतः साधोऽत्र यत् सारं समुद्धृत्य[३] मनीषया ।
ब्रूहि भद्राय भूतानां येनात्माऽऽशु प्रसीदति ॥ ११ ॥

सूत जानासि भद्रं ते भगवान् सात्वतां पतिः । देवक्यां वसुदेवस्य जातो यस्य चिकीर्षया ॥ १२ ॥

---

१. शुभदम् (इति प्राचीनकोशस्थः पाठः । अयं पाठ इतःपरं पुष्पचिह्नेन ❋ एतेन सूच्यते ।) ३. समुद्धृत्य
२. गलितम् । प्राचीनकोशस्थळकारोऽर्वाचीनेषु कोशेषु लकारतया पठ्यत इत्यासमाप्ति ध्येयम् ।

तन्नः शुश्रूषमाणानामर्हस्यङ्गानुवर्णितुम् । यस्यावतारो भूतानां क्षेमाय विभवाय च ॥ १३ ॥
आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन् । ततः[१] सद्यो विमुच्येत यं बिभेति स्वयं भवः॥ १४ ॥
यत्पादसंश्रयाः सूत मुनयः प्रशमायनाः । सद्यः पुनन्त्युपस्पृष्टाः स्वर्धुनीवानुसेवया ॥ १५ ॥
को वा भगवतस्तस्य पुण्यश्लोकेड्यकर्मणः । शुद्धिकामो न शृणुयाद् यशः कलिमलापहम् ॥ १६ ॥
तस्य कर्माण्युदाराणि परिगीतानि सूरिभिः । ब्रूहि नः श्रद्दधानानां लीलया दधतः कलाः॥ १७ ॥
अथाख्याहि हरेर्धीमन्नवतारकथाः शुभाः । लीला विदधतः स्वैरमीश्वरस्यात्ममायया ॥ १८ ॥
वयं तु न वितृप्याम उत्तमश्लोकविक्रमैः । यच्छृण्वतां रसज्ञानां स्वादुस्वादु पदेपदे ॥ १९ ॥
कृतवान् किल वीर्याणि सह रामेण केशवः । अतिमर्त्यानि भगवान् गूढः कपटमानुषः ॥ २० ॥
कलिमागतमाज्ञाय क्षेत्रेऽस्मिन् वैष्णवे वयम् । आसीना दीर्घसत्रेण कथायां सक्षणा हरेः ॥ २१ ॥
त्वं नः सन्दर्शितो धात्रा दुस्तरं निस्तितीर्षताम् । कलिं सत्वहरं पुंसां कर्णधार इवार्णवम् ॥ २२ ॥
ब्रूहि योगेश्वरे कृष्णे ब्रह्मण्ये धर्मकर्मणि । स्वां काष्ठामधुनोपेते धर्मः कं शरणं गतः ॥ २३ ॥

**॥ इति श्रीमद्भागवते प्रथमस्कन्धे प्रथमोऽध्यायः ॥**

---

इति सम्प्रश्नसम्पृष्टो विप्राणां रौमहर्षणिः । प्रतिपूज्य वचस्तेषां प्रवक्तुमुपचक्रमे ॥ १ ॥

**सूत उवाच**

यं प्रव्रजन्तमनुपेतमपेतकृत्यं द्वैपायनो विरहकातर आजुहाव ।
पुत्रेति तन्मयतया तरवोऽपि नेदुस्तं सर्वभूतहृदयं मुनिमानतोऽस्मि ॥ २ ॥
यः स्वानुभावमखिलश्रुतिसारमेकमध्यात्मदीपमतितितीर्षतां तमोऽन्धम् ।
संसारिणां करुणयाऽऽह पुराणगुह्यं तं व्याससूनुमुपयामि गुरुं मुनीनाम् ॥ ३ ॥
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् । देवीं सरस्वतीं व्यासं ततो ग्रन्थमुदीरये ॥ ४ ॥
मुनयः साधु पृष्टोऽहं भवद्भिर्लोकमङ्गळम् । यत् कृतः कृष्णसम्प्रश्नो येनात्माऽऽशु प्रसीदति ॥ ५ ॥
स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे । अहैतुक्यव्यवहिता ययाऽऽत्माऽऽशु प्रसीदति ॥ ६ ॥
वासुदेवे भगवति भक्तियोगः प्रयोजितः । जनयत्याशु वैराग्यं ज्ञानं च यदहैतुकम् ॥ ७ ॥

---

१. नरः

धर्मः स्वनुष्ठितः पुंसां विश्वक्सेनकथाश्रयाम् । नोत्पादयेद् यदि रतिं श्रम एव हि केवलम् ॥ ८ ॥

धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायेह कल्पते । नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः ॥ ९ ॥

कामस्य नेन्द्रियप्रीतिर्लाभो जीवति यावता । जीवस्यातत्त्वजिज्ञासोनर्थार्थो यश्चेह कर्मभिः ॥ १० ॥

वदन्ति तत् तत्वविदस्तत्वं यज्ज्ञानमद्वयम् । ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥ ११ ॥

सत्तामात्रं तु यत्किञ्चित् सदसच्चाविशेषणम् । उभाभ्यां भाष्यते साक्षाद् भगवान् केवलः स्मृतः॥१२॥

तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया । पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतिगृहीतया ॥ १३ ॥

अतः पुम्भिर्द्विजश्रेष्ठा वर्णाश्रमविभागशः । स्वनिष्ठितस्य[१] धर्मस्य संसिद्धिर्हरितोषणम् ॥ १४ ॥

तस्मादेकेन मनसा भगवान् सात्वतां पतिः। श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यदा ॥ १५ ॥

यदनुध्यायिनो युक्ताः [२]कर्मग्रन्थिनिबन्धनम् । छिन्दन्ति कोविदास्तस्य को न कुर्यात्कथारतिम् ॥

शुश्रूषोः श्रद्दधानस्य वासुदेवकथारतिः । स्यान्महत्सेवया विप्राः पुण्यतीर्थनिषेवणात् ॥ १७ ॥

शृण्वतां स्वकथां कृष्णः पुण्यश्रवणकीर्तनः । हृद्यन्तःस्थो ह्यभद्राणि विधुनोति सुहृत् सताम् ॥ १८ ॥

नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया । भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकी ॥ १९ ॥

तदा रजस्तमोभावाः कामलोभादयश्च ये । चेत एतैरनाविद्धं स्थितं सत्वे प्रसीदति ॥ २० ॥

एवं प्रसन्नमनसो भगवद्भक्तियोगतः । भगवत्तत्वविज्ञानं मुक्तसङ्गस्य जायते ॥ २१ ॥

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे ॥ २२ ॥

अतो वै कवयो नित्यं भक्तिं परमया मुदा । वासुदेवे भगवति कुर्वन्त्यात्मप्रसादनीम् ॥ २३ ॥

सत्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते ।
स्थित्यादये हरिविरिञ्चिहरेति सञ्ज्ञाः श्रेयांसि तत्र खलु सत्वतनौ नृणां स्युः ॥ २४ ॥

पार्थिवाद् दारुणो धूमस्तस्मादग्निस्त्रयीमयः । तमसस्तु रजस्तस्मात् सत्वं यद् ब्रह्मदर्शनम् ॥ २५ ॥

भेजिरे मुनयोऽथाग्रे भगवन्तमधोक्षजम् । सत्वं विशुद्धं क्षेमाय कल्पते नेतराविह ॥ २६ ॥

मुमुक्षवो घोरमूढान् हित्वा भूतपतीनथ । नारायणकलाः शान्ता भजन्ति ह्यनसूयवः ॥ २७ ॥

रजस्तमःप्रकृतयः समशीलान् भजन्ति वै । पितृभूतप्रजेशादीन् श्रियैश्वर्यप्रजेप्सवः ॥ २८ ॥

वासुदेवपरा वेदा वासुदेवपरा मखाः। वासुदेवपरा योगा वासुदेवपराः क्रियाः ॥ २९ ॥

---

१. स्वनुष्ठितस्य

२. ग्रन्धिरिति प्राचीनतमकोशपाठः । अन्यत्र सर्वत्र ग्रन्थिरिति । एवमग्रेऽपि । ग्रन्थ इत्यत्राप्येवमेव ।

वासुदेवपरं ज्ञानं वासुदेवपरं तपः । वासुदेवपरो धर्मो वासुदेवपरा गतिः ॥ ३० ॥
स एवेदं ससर्जाग्रे भगवानात्ममायया । सदसद्रूपया चासौ गुणमय्याऽगुणो विभुः ॥ ३१ ॥
तया विलसितेष्वेषु गुणेषु गुणवानिव । अन्तःप्रविष्ट आभाति विज्ञानेन विजृम्भितः ॥ ३२ ॥
यथा व्यवहितो वह्निर्दारुष्वेकः स्वयोनिषु । नानेव भाति विश्वात्मा भूतेषु च तथा पुमान् ॥ ३३ ॥
असौ गुणमयैर्भावैर्भूतसूक्ष्मेन्द्रियादिभिः ।स्वनिर्मितेषु निर्विष्टो भुङ्क्ते भूतेषु तद्गुणान् ॥ ३४ ॥
भावयन्नेष सत्वेन लोकान् वै लोकभावनः । लीलावतारानुगतस्तिर्यङ्नरसुरादिषु ॥ ३५ ॥

**॥ इति श्रीमद्भागवते प्रथमस्कन्धे द्वितीयोऽध्यायः ॥**

---

**सूत उवाच**

जगृहे पौरुषं रूपं भगवान् महदादिभिः। सम्भूतं षोडशकलमादौ लोकसिसृक्षया ॥ १ ॥
यस्याम्भसि शयानस्य योगनिद्रां वितन्वतः। नाभिह्रदाम्बुजादासीद् ब्रह्मा विश्वसृजां पतिः ॥ २ ॥
यस्यावयवसंस्थानैः कल्पितो लोकविस्तरः । तद्वै भगवतो रूपं विशुद्धं सत्वमूर्जितम् ॥ ३ ॥
पश्यन्त्यदो रूपमदभ्रचक्षुषः सहस्रपादोरुभुजाननाद्भुतम् ।
सहस्रमूर्धश्रवणाक्षिनासिकं सहस्रमौळ्यम्बरकुण्डलोल्लसत् ॥ ४ ॥
एतन्नानावताराणां निधानं बीजमव्ययम् । यस्यांशांशेन सृज्यन्ते देवतिर्यङ्नरादयः ॥ ५ ॥
स एव प्रथमं देवः कौमारं सर्गमास्थितः। चचार दुश्चरं ब्रह्मा[1] ब्रह्मचर्यमखण्डितम् ॥ ६ ॥
द्वितीयं तु भवायास्य रसातळगतां महीम् । उद्धरिष्यन्नुपादत्त यज्ञेशः सौकरं वपुः ॥ ७ ॥
तृतीयमृषिसर्गं वै देवर्षित्वमुपेत्य सः। तत्र[2] सात्वतमाचष्ट नैष्कर्म्यं कर्मणां यतः ॥ ८ ॥
तुर्यं धर्मकलासर्गे नरनारायणावृषी । भूत्वाऽऽत्मोपशमोपेतमकरोद् दुश्चरं तपः ॥ ९ ॥
पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम् । प्रोवाचासुरये साङ्ख्यं तत्वग्रामविनिर्णयम् ॥ १० ॥
षष्ठमत्रेरपत्यत्वं वृतः प्राप्तोऽनसूयया । आन्वीक्षिकीमळर्काय प्रह्लादादिभ्य ऊचिवान् ॥ ११ ॥
ततः सप्तम आकूत्यां रुचेर्यज्ञोऽभ्यजायत । स यामाद्यैः सुरगणैरपात् स्वायम्भुवान्तरम् ॥ १२ ॥
अष्टमो मेरुदेव्यां तु नाभेर्जात उरुक्रमः । दर्शयन् वर्त्म धीराणां सर्वाश्रमनमस्कृतम् ॥ १३ ॥

---

१. ब्रह्म ❋ २. तन्त्रम्

ऋषिभिर्याचितो भेजे नवमं पार्थिवं वपुः। दुग्धवांश्चौषधीर्विप्रास्तेनायं स उशत्तमः ॥ १४ ॥
रूपं स जगृहे मात्स्यं चाक्षुषान्तरसम्प्लवे। नाव्यारोप्य महीमय्यामपाद् वैवस्वतं मनुम् ॥ १५ ॥
सुरासुराणामुदधिं मथ्नतां मन्दराचलम्। दध्रे कमठरूपेण पृष्ठ एकादशं विदुः ॥ १६ ॥
धान्वन्तरं द्वादशमं त्रयोदशममेव च। अपाययत् सुधामन्यान् मोहिन्या मोहयन् स्त्रिया ॥ १७ ॥
चतुर्दशं नारसिंहं बिभ्रद् दैत्येन्द्रमूर्जितम्। ददार करजैरूरावेरकान् कटकृद् यथा ॥ १८ ॥
पञ्चदशं वामनकं कृत्वाऽगादध्वरं बलेः। पदत्रयं याचमानः प्रत्यादित्सुस्त्रिविष्टपम् ॥ १९ ॥
अवतारे षोडशमे यच्छन् ब्रह्मद्रुहो नृपान्। त्रिःसप्तकृत्वः कुपितो निःक्षत्रामकरोन्महीम् ॥ २० ॥
ततः सप्तदशे जातः सत्यवत्यां पराशरात्। चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः ॥ २१ ॥
नरदेवत्वमापन्नः सुरकार्यचिकीर्षया। समुद्रनिग्रहादीनि चक्रे वीर्याण्यतः परम् ॥ २२ ॥
एकोनविंशे विंशतिमे वृष्णिषु प्राप्य जन्मनी। रामकृष्णाविति भुवो भगवानहरद् भरम् ॥ २३ ॥
ततः कलौ सम्प्रवृत्ते सम्मोहाय सुरद्विषाम्। बुद्धो नाम्ना जिनसुतः कीकटेषु भविष्यति ॥ २४ ॥
अथासौ युगसन्ध्यायां दस्युप्रायेषु राजसु। जनिता विष्णुयशसो नाम्ना कल्की जगत्पतिः ॥ २५ ॥
अवतारा ह्यसङ्ख्येया हरेः सत्वनिधेर्द्विजाः। यथा विदासिनः कुल्याः सरसः स्युः सहस्रशः॥ २६ ॥
ऋषयो मनवो देवा मनुपुत्रा महौजसः। कलाः सर्वे हरेरेव सप्रजापतयः स्मृताः ॥ २७ ॥
एते स्वांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्। इन्द्रारिव्याकुलं लोकं मृडयन्ति युगेयुगे ॥ २८ ॥
जन्म गुह्यं भगवतो य एवं प्रयतो नरः। सायम्प्रातर्गृणन् भक्त्या दुःखग्रामाद् विमुच्यते ॥ २९ ॥
एतद् रूपं भगवतो ह्यरूपस्य चिदात्मनः। मायागुणैर्विरचितं महदादिभिरात्मनि ॥ ३० ॥
यथा नभसि मेघौघा रेणुर्वा पार्थिवोऽनिले। एवं द्रष्टरि दृश्यत्वमारोपितमबुद्धिभिः ॥ ३१ ॥
अतः परं यदव्यक्तमव्यूढगुणबृंहितम्। अदृष्टाश्रुतवस्तुत्वात् स जीवो यः पुनर्भवः ॥ ३२ ॥
यत्रेमे सदसद्रूपे प्रतिषिद्धे स्वसंविदा। अविद्ययाऽऽत्मनि कृते इति तद् ब्रह्मदर्शनम् ॥ ३३ ॥
यद्येषोपरता देवी माया वैशारदी मतिः। सम्पन्न एवेति विदुर्महिम्नि स्वे महीयते ॥ ३४ ॥
एवं जन्मानि कर्माणि ह्यकर्तुरजनस्य च। वर्णयन्ति स्म कवयो वेदगुह्यानि हृत्पतेः ॥ ३५ ॥

स वा इदं विश्वममोघलीलः सृजत्यवत्यत्ति न सज्जतेऽस्मिन्।
भूतेषु चान्तर्हित आत्मतन्त्रः षाड्वर्गिकं जिघ्रति षड्गुणेशः ॥ ३६ ॥
न चास्य कश्चिन्निपुणं विधातुरवैति जन्तुः कुमनीष ऊतिम्।
नामानि रूपाणि मनोवचोभिः सन्तन्वतो नटचर्यामिवाज्ञः ॥ ३७ ॥

स वेद धातुः पदवीं परस्य दुरन्तवीर्यस्य रथाङ्गपाणेः ।
योऽमायया सन्ततयाऽनुवृत्त्या भजेत तत्पादसरोजगन्धम् ॥ ३८ ॥
अथेह धन्या भगवन्त इत्थं यद् वासुदेवेऽखिललोकनाथे ।
कुर्वन्ति सर्वात्मक आत्मभावं न यत्र भूयः परिवर्त उग्रः ॥ ३९ ॥
इदं भागवतं नाम पुराणं ब्रह्मसम्मितम् । उत्तमश्लोकचरितं चकार भगवानृषिः ॥ ४० ॥
निश्रेयसाय लोकस्य धन्यं स्वस्त्ययनं महत् । तदिदं ग्राहयामास सुतमात्मवतां वरम् ॥ ४१ ॥
सर्ववेदेतिहासानां सारंसारं समुद्धृतम् । स तु संश्रावयामास महाराजं परीक्षितम् ॥ ४२ ॥
प्रायोपविष्टं गङ्गायां परीतं परमर्षिभिः । तस्य कीर्तयतो विप्रा राजर्षेर्भूरितेजसः ॥ ४३ ॥
अहं चाध्यगमं तत्र निविष्टस्तदनुग्रहात् । सोऽहं वः श्रावयिष्यामि यथाधीतं यथामति ॥ ४४ ॥
कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह । कलौ नष्टदृशां पुंसां पुराणार्कोऽमुनोदितः ॥ ४५ ॥

**॥ इति श्रीमद्भागवते प्रथमस्कन्धे तृतीयोऽध्यायः ॥**

---

इति ब्रुवाणं संस्तूय मुनीनां दीर्घसत्रिणाम् । वृद्धः कुलपतिः सूतं बह्वृचः शौनकोऽब्रवीत् ॥ १ ॥

**शौनक उवाच**

सूतसूत महाभाग वद नो वदतां वर । कथां भागवतीं पुण्यां यामाह भगवान् शुकः ॥ २ ॥
कस्मिन् युगे प्रवृत्तेयं स्थाने वा केन हेतुना । कुतः सञ्चोदितः कृष्णः कृतवान् संहितां मुनिः ॥ ३ ॥
तस्य पुत्रो महायोगी समदृङ् निर्विकल्पकः । एकान्तगतिरुन्निद्रो गूढो मूढ इवेयते ॥ ४ ॥
कथमालक्षितः पौरैः सम्प्राप्तः कुरुजाङ्गलम् । उन्मत्तमूकजडवद् विचरन् गजसाह्वये ॥ ५ ॥
कथं वा पाण्डवेयस्य राजर्षेर्मुनिना सह । संवादः समभूत् तात यत्रैषा सात्वती श्रुतिः ॥ ६ ॥
स गोदोहनमात्रं हि गृहेषु गृहमेधिनाम् । अवेक्षते महाभागस्तीर्थीकुर्वंस्तदाश्रमम् ॥ ७ ॥
अभिमन्युसुतं सूत प्राहुर्भागवतोत्तमम् । तस्य जन्म महाश्चर्यं कर्माणि च गृणीहि नः ॥ ८ ॥
स सम्राट् कस्य वा हेतोः पाण्डूनां मानवर्धनः। प्रायोपविष्टो गङ्गायामनादृत्याधिराट्श्रियम् ॥ ९ ॥
नमन्ति यत्पादनिकेतमात्मनः शिवाय चानीय धनानि शत्रवः ।
कथं स धीरः श्रियमङ्ग दुस्त्यजामियेष चोत्स्रष्टुमहो सहासुभिः ॥ १० ॥

शिवाय लोकस्य भवाय भूतये य उत्तमश्लोकपरायणा जनाः ।
जीवन्ति नात्मार्थमसौ परां श्रियं मुमोच निर्विद्य कुतः कळेबरम्[1] ॥११॥

तत्सर्वं नः समाचक्ष्व पृष्टो यदिह किञ्चन । मन्ये त्वां विषये वाचां स्नातमन्यत्र छान्दसात् ॥ १२ ॥

**सूत उवाच**

द्वापरे समनुप्राप्ते तृतीये युगपर्यये । जातः पराशराद् योगी वासव्यां कलया हरेः ॥ १३ ॥
स कदाचित् सरस्वत्या उपस्पृश्य जलं शुचिः । विविक्त एक आसीन उदिते रविमण्डले ॥ १४ ॥
परावरज्ञः स ऋषिः कालेनाव्यक्तरंहसा । युगधर्मव्यतिकरं प्राप्तं भुवि युगेयुगे ॥ १५ ॥
भौतिकानां च भावानां शक्तिह्रासं च तत्कृतम् । अश्रद्दधानान् निःसत्वान् दुर्मेधान् ह्रसितायुषः ॥१६॥
दुर्भगांश्च जनान् वीक्ष्य मुनिर्दिव्येन चक्षुषा । सर्ववर्णाश्रमाणां यद्दध्यौ चिरममोघदृक् ॥ १७ ॥
चातुर्होत्रं कर्म शुद्धं प्रजानां वीक्ष्य वैदिकम् । व्यदधाद् यज्ञसन्तत्यै वेदमेकं चतुर्विधम् ॥ १८ ॥
ऋग्यजुःसामाथर्वाख्या वेदाश्चत्वार उद्धृताः। इतिहासपुराणं च पञ्चमो वेद उच्यते ॥ १९ ॥
तत्रर्ग्वेदधरः पैलःसामगो जैमिनिः कविः । वैशम्पायन एवैको निष्णातो यजुषां ततः ॥ २० ॥
अथर्वाङ्गिरसामासीत् सुमन्तुर्वारुणो मुनिः । इतिहासपुराणानां पिता मे रोमहर्षणः ॥ २१ ॥
त एव ऋषयो वेदं स्वंस्वं व्यस्यन्ननेकधा[2] । शिष्यैःप्रशिष्यैस्तच्छिष्यैर्वेदास्ते शाखिनोऽभवन् ॥२२॥
त एव वेदा दुर्मेधैर्धार्यन्ते पुरुषैर्यथा । एवं चकार भगवान् व्यासः कृपणवत्सलः ॥ २३ ॥
स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा । कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह ।
इति भारतमाख्यानं कृपया मुनिना कृतम् ॥ २४ ॥
एवं प्रवृत्तस्य सदा भूतानां श्रेयसि द्विजाः । सर्वात्मकेनापि यदा नातुष्यद् हृदयं ततः ॥ २५ ॥
नातिप्रसन्नहृदयः सरस्वत्यास्तटे शुचौ । वितर्कयन् विविक्तस्थ इदं चोवाच धर्मवित् ॥ २६ ॥
धृतव्रतेन हि मया छन्दांसि गुरवोऽग्नयः । मानिता निर्व्यळीकेन गृहीतं चानुशासनम् ॥ २७ ॥
भारतव्यपदेशेन ह्याम्नायार्थः प्रदर्शितः । दृश्यते यत्र धर्मो हि स्त्रीशूद्रादिभिरप्युत ॥ २८ ॥
अथापि बत मे देह्यो ह्यात्मा चैवात्मना विभुः । असम्पन्न इवाभाति ब्रह्मवर्चस्विसत्तमः[3] ॥ २९ ॥
किं वा भागवता धर्मा न प्रायेण निरूपिताः । प्रियाः परमहंसानां त एव ह्यच्युतप्रियाः ॥ ३० ॥

---

१. कलेवरमित्यर्वाचीनः पाठः । एवमग्रेऽपि । २. व्यंस्यन्ननेकधा ❋ ३. ब्रह्मवर्चस्यसत्तमः ❋

### सूत उवाच

एवं कृष्णसखः कृष्णो भ्रात्रा राज्ञा विकल्पितः । नानाशङ्कास्पदं रूपं कृष्णविश्लेषकर्शितः ॥ १ ॥

शोकाग्निशुष्यद्वदनहृत्सरोजं हतप्रभम्[1] । विभुं तमेवानुध्यायन् नाशक्नोत् प्रतिभाषितुम् ॥ २ ॥

कृच्छ्रेण संस्तभ्य शुचः पाणिनाऽऽमृज्य नेत्रजम् । पारोक्ष्येण समुन्नद्धप्रणयौत्कण्ठ्यकातरः॥ ३ ॥

सख्यं मैत्रीं[2] सौहृदं च सारथ्यादिषु संस्मरन् । नृपमग्रजमित्याह बाष्पगद्गदया गिरा ॥ ४ ॥

### अर्जुन उवाच

वञ्चितोऽहं महाराज हरिणा बन्धुरूपिणा । येन मेऽपहृतं तेजो देवविस्मापनं महत् ॥ ५ ॥

यस्य क्षणवियोगेन लोको ह्यप्रियदर्शनः । उक्थेन रहितो ह्येष मृतकः प्रोच्यते यथा ॥ ६ ॥

यत्संश्रयाद् द्रुपदगेह उपागतानां राज्ञां स्वयंवरमुखे स्मरदुर्मदानाम् ।
तेजो हृतं खलु मया विहतश्च मत्स्यः सज्जीकृतेन धनुषाऽधिगता च कृष्णा ॥ ७ ॥

यत्सन्निधावहमु खाण्डवमग्नयेऽदामिन्द्रं च सामरगणं तरसा विजित्य ।
लब्धा सभा मयकृताऽद्भुतशिल्पमाया दिग्भ्योऽहरन् नृपतयो बलिमध्वरे ते ॥ ८ ॥

यत्सन्निधौ नृपशिरोङ्घ्रिमहन् मखार्थ आर्योऽनुजस्तव गदायुधसत्ववीर्यः।
तेनाहृताः प्रमथनाथमखाय भूपा यन्मोचिता भ्युदनयन् बलिमध्वरे ते ॥ ९ ॥

पत्न्यास्तवापि मखक्लृप्तमहाभिषेकश्लाघिष्ठचारुकबरं कितवैः सभायाम् ।
स्पृष्टं विकीर्य पदयोः पतिताश्रुमुख्यो यैस्तत्स्त्रियो न्यकृत तत् स विमुक्तकेश्यः॥ १० ॥

यत्तेजसाऽथ भगवान् युधि शूलपाणिर्विस्मापितः स गिरिशोऽस्त्रमदान्निजं मे ।
अन्येऽपि चाहममुनैव कळेबरेण प्राप्तो महेन्द्रभवने महदासनार्धम् ॥ ११ ॥

तत्रैव मे विहरतो भुजदण्डयुग्मं गाण्डीवलक्षणमरातिवधाय देवाः ।
सेन्द्राःश्रिता यदनुभावितमाजमीढ तेनाहमद्य मुषितः पुरुषेण भूम्ना ॥ १२ ॥

यद्बान्धवः कुरुबलाब्धिमनन्तपारमेको रथेन तरसाऽतरमार्यसत्वः ।
प्रत्याहृतं पुरधनं च[3] मया परेषां तेजः परं मणिमयं च हृतं शिरोभ्यः ॥ १३ ॥

---

१. शोकेन शुष्यद्वदनहृत्सरोजो हतप्रभः ❋ २. मैत्रम् ❋ ३. पुरुधनं च ❋

यो भीष्मकर्णगुरुशल्यचमूष्वदभ्रराजन्यवर्यरथमण्डलमण्डितासु ।
अग्रेचरो मम रथे रथयूथपानामायुर्मनांसि च दृशा सहसा यदार्च्छत्[1] ॥ १४ ॥
यद्दोष्षु मां प्रणिहितं गुरुभीष्मकर्णद्रौणित्रिगर्तशलसैन्धवबाह्लिकाद्यैः ।
अस्त्राण्यमेयमहिमानि निरूपितानि नो पस्पृशुर्नृहरिदासमिवासुराणि ॥ १५ ॥
यन्मे नृपेन्द्र तदतर्क्यविहार ईशो योऽलब्धरूपमवदद् रणमूर्ध्नि दर्शी ।
यन्माययाऽऽवृतदृशो न विदुः परं तं सूत्रादयोऽहमहमस्मि ममेति भव्याः ॥ १६ ॥
सौत्ये वृतः कुमतिनाऽऽत्मद ईश्वरो मे यत्पादपद्ममभवाय भजन्ति भव्याः ।
संभ्रान्तवाहमरयो रथिनो भुविष्ठं न प्राहरन् यदनुभावनिरस्तचित्ताः ॥ १७ ॥
नर्माण्युदाररुचिरस्मितशोभनानि हे पार्थ हेऽर्जुन सखे कुरुनन्दनेति ।
सञ्जल्पितानि नरदेव हृदिस्पृशानि स्मर्तुर्लुठन्ति हृदयं मम माधवस्य ॥ १८ ॥
शय्यासनाटनविकत्थनभोजनादिष्वैक्याद् वयस्य ऋभुमानिति विप्रलब्धः ।
सख्युः सखेव पितृवत् तनुजस्य[2] सर्वं सेहे महामहितया कुमतेरघं मे ॥ १९ ॥
सोऽहं नृपेन्द्र रहितः पुरुषोत्तमेन सख्या प्रियेण सुहृदा हृदयेन शून्यः ।
अध्वन्युरुक्रमपरिग्रहमङ्ग रक्षन् गोपैरसद्भिरबलेव विनिर्जितोऽस्मि ॥ २० ॥
तद्वै धनुस्त इषवः स रथो हयास्ते सोऽहं रथी नृपतयो यत आमनन्ति ।
सर्वं क्षणेन तदभूदसदीशरिक्तं भस्मन् हुतं कुहकराद्धमिवोप्तमूषे ॥ २१ ॥
राजंस्त्वयाऽभिपृष्टानां सुहृदां नः सुहृत्पुरे । विप्रशापविमूढानां निघ्नतां मुष्टिभिर्मिथः ॥ २२ ॥
वारुणीं मदिरां पीत्वा मदोन्मथितचेतसाम् । अजानतामिवात्मानं चतुःपञ्चावशेषिताः ॥ २३ ॥
प्रायेणैतद् भगवत ईश्वरस्य विचेष्टितम् । मिथो निघ्नन्ति भूतानि भावयन्ति च यन्मिथः ॥ २४ ॥
जलौकसां जले यद्वन्महान्तोऽदन्त्यणीयसः । दुर्बलान् बलिनो राजन् महान्तो बलिनो मिथः ॥२५॥
एवं बलिष्ठैर्यदुभिर्महद्भिरितरान् विभुः । यदून् यदुभिरन्योन्यं भूभारं[3] सञ्जहार ह ।
कण्टकं कण्टकेनैव द्वयं चापीशितुः समम् ॥ २६ ॥
देशकालार्थयुक्तानि हृत्तापोपशमानि च । हरन्ति स्मरतश्चित्तं गोविन्दाभिहितानि मे ॥ २७ ॥

---

१. दृशा सह ओज आर्च्छत् २. तनयस्य ३. भूभारान् ❋

### सूत उवाच

एवं चिन्तयतो जिष्णोः कृष्णपादसरोरुहम् । सौहार्देनातिगाढेन शान्ताऽऽसीद् विमला मतिः ✚॥

॥ इति श्रीमद्भागवते प्रथमस्कन्धे चतुर्दशोऽध्यायः ॥

---

### सूत उवाच

वासुदेवाङ्घ्र्यभिध्यानपरिबृंहितरंहसा । भक्त्या निर्मथिताशेषकषायधिषणोऽर्जुनः ॥ १ ॥

गीतं भगवता ज्ञानं यत्तत् सङ्ग्राममूर्धनि । कालकर्मतमोरुद्धं पुनरध्यगमद् विभुः ॥ २ ॥

विशोको ब्रह्मसम्पत्त्या सञ्छिन्नद्वैतसंशयः । लीनप्रकृतिनैर्गुण्यादलिङ्गत्वादसम्भवः ॥ ३ ॥

निशम्य भगवन्मार्गं संस्थां यदुकुलस्य च । स्वःपथाय मतिं चक्रे निवृत्तात्मा युधिष्ठिरः ॥ ४ ॥

यदा मुकुन्दो भगवानिमां महीं जहौ स्वतन्वा श्रवणीयसत्कथः ।
तदा हरावप्रतिबुद्धचेतसामभद्रहेतुः[१] कलिरन्ववर्तत ॥ ५ ॥

युधिष्ठिरस्तत् परिसर्पणं बुधः पुरे च राष्ट्रे च गृहे तथात्मनि ।
विभाव्य लोभानृतजिह्महिंसनाद्यधर्मचक्रं गमनाय पर्यधात् ॥ ६ ॥

स्वराट् पौत्रं विनीतं तमात्मनोऽनवमं गुणैः । तोयनीव्याः पतिं भूमेरभ्यषिञ्चद् गजाह्वये ॥ ७ ॥

मथुरायां तथा वज्रं शूरसेनपतिं ततः । प्राजापत्यां निरूप्येष्टिमग्नीनपिबदीश्वरः ॥ ८ ॥

विसृज्य तत्र तत्सर्वं दुकूलवलयादिकम् । निर्ममो निरहङ्कारः सञ्छिन्नाशेषबन्धनः ॥ ९ ॥

वाचं जुहाव मनसि तत्प्राण इतरे परम् । धृत्या ह्यपानं सोत्सर्गं तत्परत्वे ह्यजोहवीत् ॥ १० ॥

त्रित्वे हुत्वाऽथ पञ्चत्वं तच्चैकत्वेऽजुहोन्मुनिः । सर्वमात्मन्यजुहवीद् ब्रह्मण्यात्मानमव्यये ॥ ११ ॥

चीरवासा निराहारो बद्धवाङ् मुक्तमूर्धजः । दर्शयन्नात्मनो रूपं जडोन्मत्तपिशाचवत् ।
अनपेक्षमाणो निरगादशृण्वन् बधिरो यथा ॥ १२ ॥

उदीचीं प्रविवेशाशां गतपूर्वां महात्मभिः । हृदि ब्रह्म परं ध्यायन् नावर्तेत गतो यतः ॥ १३ ॥

सर्वे तमनु निर्जग्मुर्भ्रातरः कृतनिश्चयाः । कलिनाऽधर्ममित्रेण दृष्ट्वा स्पृष्टाः प्रजा भुवि ॥ १४ ॥

ते साधुकृतसर्वार्था ज्ञात्वाऽऽत्यन्तिकमात्मनः । मनसा धारयामासुर्वैकुण्ठचरणाम्बुजम् ॥ १५ ॥

---

✚ प्राचीनकोशेषु नाध्यायसमाप्तिरत्र । अपि त्वनुवर्तते यावदुत्तराध्यायसमाप्तिः ।

१. अधर्मरूपः ❋

तद्ध्यानोद्रिक्तया भक्त्या विशुद्धधिषणाः परे । तस्मिन् नारायणपद एकान्तमतयोऽपतन्॥ १६ ॥
अवापुर्दुरवापं ते असद्भिर्विषयात्मभिः । विधूतकल्मषं स्थानं विरजेनात्मनैव हि ॥ १७ ॥
द्रौपदी च तदाज्ञाय पतीनामनपेक्षताम् । वासुदेवे भगवति एकान्तमतिरापतत् ॥ १८ ॥
यः श्रद्धयैतद् भगवत्प्रयाणं पाण्डोः सुतानामपि सम्प्रयाणम् ।
शृणोत्यलं स्वस्त्ययनं पवित्रं लब्ध्वा हरौ भक्तिमुपैति शान्तिम् ✦ ॥ १९ ॥

**॥ इति श्रीमद्भागवते प्रथमस्कन्धे पञ्चदशोऽध्यायः ॥**

---

**सूत उवाच**

ततः परीक्षिद् द्विजवर्यशिक्षया महीं महाभागवतः शशास ह ।
यथा हि सूत्यामभिजातकोविदाः समादिशन् विप्र महद्गुणांस्तथा[1] ॥ १ ॥
स उत्तरस्य तनयामुपयेम इरावतीम् । जनमेजयादींश्चतुरस्तस्यामुत्पादयत् सुतान् ॥ २ ॥
आजहाराश्वमेधांस्त्रीन् गङ्गायां भूरिदक्षिणान् । शारद्वतं गुरुं कृत्वा देवा यत्राक्षिगोचराः ॥ ३ ॥
निजग्राहौजसा धीरः कलिं दिग्विजये क्वचित् । नृपलिङ्गधरं शूद्रं घ्नन्तं गोमिथुनं पदा ॥ ४ ॥

**शौनक उवाच**

कस्य हेतोर्निजग्राह कलिं दिग्विजये नृपः । नृदेवचिह्नधृक् शूद्रः कोऽसौ गां यः पदाऽहनत् ॥ ५ ॥
तत् कथ्यतां महाभाग यदि विष्णुकथाश्रयम् । अथ वाऽस्य पदाम्भोजमकरन्दलिहां सताम् ॥ ६ ॥
किमन्यैरसदालापैरायुषो यदसद्व्ययः । क्षुद्रायुषां नृणामङ्ग मर्त्यानां मृतिमिच्छताम् ॥ ७ ॥
इहोपहूतो भगवान् मृत्युः शामित्रकर्मणि । न कश्चिन्म्रियते तावद् यावदास्त इहान्तकः ॥ ८ ॥
एतदर्थं हि भगवानाहूतः परमर्षिभिः । अहो नृलोके पीयेत हरिलीलामृतं वचः ॥ ९ ॥
मन्दस्य मन्दप्रज्ञस्य प्रायो मन्दायुषश्च वै । निद्रया ह्रियते नक्तं दिवा चाप्यर्थकर्मभिः ॥ १० ॥

**सूत उवाच**

यदा परीक्षित् कुरुजाङ्गले वसन् कलिं प्रविष्टं निजचक्रवर्तिते ।
निशम्य वार्तामनतिप्रियां ततः शरासनं संयुगशौण्डिराददे ॥ ११ ॥

---

✦प्राचीनकोशेष्वप्यत्र पञ्चदशाध्यायसमाप्तिः । १. महागुणांस्तथा ❋

स्वलङ्कृतं श्यामतुरङ्गयोजितं रथं मृगेन्द्रध्वजमास्थितः पुरात्।
वृतो रथाश्वद्विपपत्तियुक्तया स्वसेनया दिग्विजयाय निर्गतः ॥ १२ ॥

भद्राश्वं केतुमालं च भारतं चोत्तरान् कुरून्। किम्पुरुषादीनि सर्वाणि विजित्य जगृहे बलिम् ॥ १३ ॥

तत्रतत्रोपशृण्वानः स्वपूर्वेषां महात्मनाम्। प्रगीयमानं पुरतः कृष्णमाहात्म्यसूचनम्[1] ॥ १४ ॥

आत्मानं च परित्रातमश्वत्थाम्नोऽस्त्रतेजसः। स्नेहं च वृष्णिपार्थानां तेषां भक्तिं च केशवे ॥ १५ ॥

तेभ्यः परमसन्तुष्टः प्रीत्युज्जृम्भितलोचनः। महाधनानि वासांसि ददौ हारान् महामनाः ॥ १६ ॥

[2]सारथ्यपार्षदसेवनसख्यदौत्यवीरासनानुगमनस्तवनप्रणामैः।
स्निग्धेषु पाण्डुषु जगत्प्रणतस्य विष्णोः भक्तिं करोति नृपतिश्चरणारविन्दे ॥ १७ ॥

तस्यैवं वर्तमानस्य पूर्वेषां वृत्तमन्वहम्। नातिदूरे किलाश्चर्यं यदासीत् तन्निबोध मे ॥ १८ ॥

धर्मः पदैकेन चरन् विच्छायामुपलभ्य गाम्। पृच्छति स्माश्रुवदनां विवत्सामिव मातरम् ॥ १९ ॥

**धर्म उवाच**

कच्चिद् भद्रेऽनामयमात्मनस्ते विच्छायाऽसि म्लायता यन्मुखेन।
आलक्षये भवतीमन्तराधिं दूरेबन्धुं कञ्चन शोचसीव ॥ २० ॥

पादैर्न्यूनं शोचसि मैकपादमुतात्मानं वृषलैर्भोक्ष्यमाणम्।
अथो सुरादीन् हृतयज्ञभागान् प्रजा उत स्विन्मघवत्यवर्षति ॥ २१ ॥

अरक्ष्यमाणाः स्त्रिय उर्वि बालाञ्छोचस्यथो पुरुषादैरिवार्तान्।
वाचं देवीं ब्रह्मकुले कुकर्मण्यब्रह्मण्ये राजकुले कुलाग्र्याम् ॥ २२ ॥

किं क्षत्रबन्धून् कलिनोपसृष्टान् राष्ट्राणि वा तैरवरोपितानि।
इतस्ततो वाऽशनपानवासःस्नानव्यवायोत्सुकजीवलोकम् ॥ २३ ॥

यद्वाऽथ[3] ते भूरिभरावतारकृतावतारस्य हरेर्धरित्रि।
अन्तर्हितस्य स्मरती विसृष्टा कर्माणि निर्वाणविडम्बितानि[4] ॥ २४ ॥

इदं ममाचक्ष्व तवाधिमूलं वसुन्धरे येन विकर्शिताऽसि।
कालेन वा ते बलिनाऽवलीढं सुरार्चितं किं प्रभुणाऽद्य सौभगम् ॥ २५ ॥

---

१. ....सूचकम्/माहात्म्यमुत्तमम् ❋ २. सारथ्यपार्षदसुसेवन ......❋
३. यद्वाऽम्ब ४. निर्वाणविलम्बितानि

धरोवाच

भवान् हि वेद तत् सर्वं यन्मां धर्मानुपृच्छसि। चतुर्भिर्वर्तसे येन पादैर्लोकसुखावहैः ॥ २६ ॥
सत्यं शौचं दया दानं त्यागः सन्तोष आर्जवम्। शमो दमस्तपः साम्यं तितिक्षोपरतिः श्रुतम्॥ २७ ॥
ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजो धृतिः स्मृतिः। स्वातन्त्र्यं कौशलं कान्तिः सौभगं मार्दवं क्षमा॥ २८ ॥
प्रागल्भ्यं प्रश्रयः शीलं सह ओजो बलं भगः। गाम्भीर्यं स्थैर्यमास्तिक्यं कीर्तिर्मानोऽनहङ्कृतिः ॥२९॥
इमे चान्ये च भगवन् नित्या यत्र महागुणाः। प्रार्थ्या महत्त्वमिच्छद्भिः न च यान्ति स्म कर्हिचित् ॥
तेनाहं गुणपात्रेण श्रीनिवासेन साम्प्रतम्। शोचामि रहितं लोकं पाप्मना कलिनेक्षितम् ॥ ३१ ॥
आत्मानं चानुशोचामि भवन्तं चामरोत्तम। देवान् ऋषीन् पितॄन् साधून् सर्वान् वर्णांस्तथाश्रमान् ॥

ब्रह्मादयो बहुतिथं यदपाङ्गमोक्षकामा यथोक्तविधिना भगवत्प्रपन्नाः।
सा श्रीः स्ववासमरविन्दवनं विहाय यत्पादसौभगमलं भजतेऽनुरक्ता ॥ ३३ ॥
तस्याहमब्जकुलिशाङ्कुशकेतुकेतैः श्रीमत्पदैर्भगवतः समलङ्कृताङ्गी।
त्रीनत्यरोचमुपलब्धतपोविभूतिर्लोकान् स मां व्यसृजदुत्स्मयतीं तदन्ते ॥ ३४ ॥
यो वै ममातिभरमासुरवंशराज्ञामक्षोहिणीशतमपानुददात्मतन्त्रः।
त्वां दुःस्थमूनपदमात्मनि पौरुषेण सम्पादयन् यदुषु रम्यमबिभ्रदङ्गम् ॥ ३५ ॥
का वा सहेत विरहं पुरुषोत्तमस्य प्रेमावलोकरुचिरस्मितवल्गुजल्पैः।
स्थैर्यं समानमहरन्मधुमानिनीनां रोमोत्सवो मम यदङ्घ्रिविटङ्कितायाः ॥ ३६ ॥

सूत उवाच

तयोरेवं कथयतोः पृथिवीधर्मयोस्तदा। परीक्षिन्नाम राजर्षिः प्राप्तः प्राचीं सरस्वतीम् ॥ ३७ ॥

**॥ इति श्रीमद्भागवते प्रथमस्कन्धे षोडशोऽध्यायः॥**

---

सूत उवाच

तत्र गोमिथुनं राजा हन्यमानमनाथवत्। दण्डहस्तं च वृषळं ददृशे नृपलाञ्छनम् ॥ १ ॥
वृषं मृणालधवळं मेहन्तमिव बिभ्यतम्। वेपमानं पदैकेन सीदन्तं शूद्रपीडितम् ॥ २ ॥
गां च धर्मदुघां[१] दीनां भृशं शूद्रपदा हताम्। विवत्सामश्रुवदनां कृशां यवसमिच्छतीम् ॥ ३ ॥

१. धर्मदुघाम् ❋

पप्रच्छ रथमारूढः कार्तस्वरपरिच्छदम् । मेघगम्भीरया वाचा समारोपितकार्मुकः ॥ ४ ॥
कस्त्वं मच्छरणे लोके बलाद् हंस्यबलौ बली । नरदेवोऽसि वेषेण नटवत् कर्मणाऽद्विजः ॥ ५ ॥
स त्वं कृष्णे गते दूरं सह गाण्डीवधन्वना । शोच्योऽस्यशोच्यान् रहसि प्रहरन् वधमर्हसि ॥ ६ ॥
त्वं वा मृणालधवळः पादैर्न्यूनः पदा चरन् । वृषरूपेण किं कश्चिद् देवो नः परिखेदयन् ॥ ७ ॥
न जातु कौरवेन्द्राणां दोर्दण्डपरिरम्भिते । भूतळे निपतन्त्यस्मिन्[1] विना त्वां प्राणिनां शुचः ॥८॥
मा सौरभेयानुशुचो व्येतु ते वृषळाद् भयम् । मा रोदीरम्ब भद्रं ते खलानां मयि शास्तरि ॥ ९ ॥
यस्य राष्ट्रे प्रजा मातर्हिंस्यन्ते साध्व्यसाधुभिः[2] । तस्य मत्तस्य नश्यन्ति कीर्तिरायुर्भगो गतिः ॥ १० ॥
एष राज्ञः परो धर्मो ह्यार्तानामार्तिनिग्रहः । अत एनं वधिष्यामि भूतद्रुहमसत्तमम् ॥ ११ ॥
कोऽवृश्चत्तव पादांस्त्रीन् सौरभेय चतुष्पदः । मा भूवंस्त्वादृशा राष्ट्रे राज्ञां कृष्णानुवर्तिनाम् ॥ १२॥
आख्याहि वृष भद्रं वः साधूनामकृतागसाम् । आत्मवैरूप्यकर्तारं पार्थानां कीर्तिदूषणम् ।
गलेऽनागस्यघं युञ्जन् सर्वतोऽस्य च तद् भयम् ॥ १३ ॥
अनागस्स्विह भूतेषु य आगस्कृन्निरङ्कुशः । आहर्तास्मि भुजं साक्षादमर्त्यस्यापि साङ्गदम् ॥ १४ ॥
राज्ञो हि परमो धर्मः स्वधर्मस्थानुपालनम् । शासतोऽन्यान् यथाशास्त्रमनापद्युत्पथानिह ॥ १५ ॥

**धर्म उवाच**

एतद्वः पाण्डवेयानां युक्तमार्ताभयं वचः । येषां गुणगणैः कृष्णो दौत्यादौ भगवान् वृतः ॥ १६ ॥
न वयं क्लेशबीजानि यतः स्युः पुरुषर्षभ । पुरुषं तं विजानीमो वाक्यभेदविमोहिताः ॥ १७ ॥
केचिद् वैकल्पवचस[3] आहुरात्मानमात्मनः । दैवमन्ये परे कर्म स्वभावमपरे प्रभुम् ॥ १८ ॥
अप्रतर्क्यादनिर्वाच्यादिति केष्वपि निश्चयः । अत्रानुरूपं राजर्षे विमृश स्वमनीषया ॥ १९ ॥
एवं धर्मे प्रवदति स सम्राट् द्विजसत्तमाः । समाहितेन मनसा विदित्वा प्रत्यचष्ट तम् ॥ २० ॥

**राजोवाच**

धर्मं ब्रवीषि धर्मज्ञ धर्मोऽसि वृषरूपधृक् । यदधर्मकृतः स्थानं सूचकस्यापि तद् भवेत् ॥ २१ ॥
अथवा देवमायाया नूनं गतिरगोचरा । चेतसो वचसश्चापि भूतानामिति निश्चयः ॥ २२ ॥
तपः शौचं दया सत्यमिति पादाः कृते कृताः । अधर्माङ्गैस्त्रयो भग्नाः स्मयसङ्गमदैस्तव ॥ २३ ॥
इदानीं धर्म पादस्ते सत्यं निर्वर्तते यतः । [4]तं जिघृक्षत्यधर्मोऽयमनृतेनैधितः कलिः ॥ २४ ॥

१. निपतन्ति स्म ❋ २. साध्वसाधुभिः ३. वैकल्प्यवचसः ❋ ४. तत् ❋

इयं च भूर्भगवता न्यासितोरुभरा सती । श्रीमद्भिस्तत्पदन्यासैः सर्वतः कृतकौतुका ॥ २५ ॥
शोचन्त्यश्रुकळा साध्वी दुर्भगेवोज्झिताऽधुना । अब्रह्मण्या नृपव्याजाः शूद्रा भोक्ष्यन्ति मामिति ॥

सूत उवाच

इति धर्मं महीं चैव सान्त्वयित्वा महारथः। निशातमाददे खड्गं[1] कलयेऽधर्महेतवे ॥ २७ ॥
तं जिघांसुमभिप्रेक्ष्य विहाय नृपलाञ्छनम् । तत्पादमूलं शिरसा समगाद् भयविह्वलः ॥ २८ ॥
पतितं पादयोर्वीरः कृपया दीनवत्सलः । शरण्यो[2] नावधीच्छ्लोक्य आह चेदं हसन्निव ॥ २९ ॥

राजोवाच

न ते गुडाकेशयशोधराणां बद्धाञ्जलेर्वै भयमस्ति किञ्चित् ।
न वर्तितव्यं भवता कथञ्चित् क्षेत्रे मदीये त्वमधर्मबन्धुः ॥ ३० ॥
त्वां वर्तमानं नरदेवदेहेष्वनुप्रवृत्तोऽयमधर्मयूथः ।
लोभोऽनृतं चौर्यमनार्यमंहो[3] ज्येष्ठा च माया कलहश्च डम्भः[4] ॥ ३१ ॥
न वर्तितव्यं तदधर्मबन्धो धर्मेण सत्येन च वर्तितव्ये ।
ब्रह्मावर्ते यत्र यजन्ति यज्ञैः यज्ञेश्वरं ब्रह्मवितानयज्ञाः ॥ ३२ ॥
यस्मिन् हरिर्भगवानिज्यमान इष्टात्ममूर्तिर्यजतां शं तनोति ।
कामानमोघान् स्थिरजङ्गमानामन्तर्बहिर्वायुरिवेश आत्मा ॥ ३३ ॥

परीक्षितैवमादिष्टः स कलिर्जातवेपथुः । तमुद्यतासिमाहेदं दण्डपाणिमिवोद्यतम् ॥ ३४ ॥
यत्र क्व वाऽथ वत्स्यामि सार्वभौम तवाज्ञया । लक्षये तत्रतत्रापि त्वामात्तेषुशरासनम् ॥ ३५ ॥
तन्मे धर्मभृतां श्रेष्ठ स्थानं निर्देष्टुमर्हसि । यत्रैव नियतो वत्स्य आतिष्ठंस्तेऽनुशासनम् ॥ ३६ ॥

सूत उवाच

अभ्यर्थितस्तदा तस्मै स्थानानि कलयेऽकरोत्[5] । द्यूतं पानं स्त्रियः सूना यत्राधर्मश्चतुर्विधः ॥ ३७ ॥
पुनश्च याचमानाय जातरूपमदात् प्रभुः । ततोऽनृतं मदः कामो रजो वैरं च पञ्चमम् ॥ ३८ ॥
अमूनि पञ्च स्थानानि ह्यधर्मप्रभवः कलिः । औत्तरेयेण दत्तानि न्यवसत् तन्निदेशकृत् ॥ ३९ ॥
अथैतानि न सेवेत बुभूषुः पुरुषः क्वचित् । विशेषतो धर्मशीलो राजा लोकपतिर्गुरुः ॥ ४० ॥

---

१. खड्गमिति प्राचीनकोशेषु । एवमासमाप्ति ध्येयम् । २. शरण्यम् ३. अवार्यमंहः ❋
४. दम्भ इत्यर्वाचीनकोशेषु । आसमाप्ति चेदं ध्येयम् । ५. कलये ददौ

वृषस्य नष्टांस्त्रीन् पादांस्तपः शौचं दयामिति । प्रतिसन्दध आश्वास्य[१] महीं च समवर्धयत् ॥ ४१ ॥
स एष एतर्ह्यध्यास्त आसनं पार्थिवोचितम् । पितामहेनोपन्यस्तं राज्ञाऽरण्यं विविक्षता ॥ ४२ ॥
आस्तेऽधुना स राजर्षिः कौरवेन्द्रश्रियोल्लसन् । गजाह्वये महाभागश्चक्रवर्ती बृहच्छ्रवाः ॥ ४३ ॥
इत्थम्भूतानुभावोऽयमभिमन्युसुतो नृपः । यस्य पालयतः क्षोणीं यूयं सत्राय दीक्षिताः ॥ ४४ ॥

**॥ इति श्रीमद्भागवते प्रथमस्कन्धे सप्तदशोऽध्यायः ॥**

---

**सूत उवाच**

यो वै द्रौण्यस्त्रविप्लुष्टो न मातुरुदरे मृतः । अनुग्रहाद् भगवतः कृष्णस्याद्भुतकर्मणः ॥ १ ॥
ब्रह्मकोपोत्थिताद्[२] यस्तु तक्षकात् प्राणविप्लवे । न सम्मुमोहोरुभयाद् भगवत्यर्पिताशयः ॥ २ ॥
उत्सृज्य सर्वतः सङ्गं विज्ञानार्जितसंस्थितिः । वैयासकेर्जहौ शिष्यो गङ्गायां स्वकळेबरम् ॥ ३ ॥
नोत्तमश्लोकवार्तानां जुषतां तत्कथामृतम् । स्यात् सम्भ्रमोऽन्तकालेऽपि स्मरतां तत्पदाम्बुजम् ॥ ४ ॥
तावत् कलिर्न प्रभवेत् प्रविष्टोऽपीह सर्वतः । यावदीशो महानुर्व्यामाभिमन्यव एकराट् ॥ ५ ॥
यस्मिन्नहनि यर्ह्येव भगवानुत्ससर्ज गाम् । तदैवेहानुप्रवृत्तोऽसावधर्मप्रभवः कलिः ॥ ६ ॥
नानुद्वेष्टि कलिं सम्राट् सारङ्ग इव सारभुक् । कुशलान्याशु सिद्ध्यन्ति नेतराणि कृतानि यत्॥ ७ ॥
किन्नु बालेषु शूरेण कलिना शूरभीरुणा । अप्रमत्तः प्रमत्तेषु यो वृको नृषु वर्तते ॥ ८ ॥
उपवर्णितमेतद् वः पुण्यं पारीक्षितं मया । वासुदेवकथोपेतमाख्यानं यदपृच्छथ ॥ ९ ॥
यायाः कथा भगवतः कथनीयोरुकर्मणः । गुणकर्माश्रयाः पुम्भिः सेव्यास्तास्ता बुभूषुभिः॥ १० ॥

**ऋषय ऊचुः**

सूत जीव समाः सौम्य शाश्वतीर्विशदं यशः । यस्त्वं शंससि कृष्णस्य मर्त्यानाममृतं हि नः॥ ११ ॥
कर्मण्यस्मिन्ननाश्वास्ये धूमधूम्रात्मनां भवान् । आपाययति गोविन्दपादपद्मासवं मधु ॥ १२ ॥
तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् । भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥ १३ ॥

को नाम तृप्येद् रसवित् कथायां महत्तमैकान्तपरायणस्य ।
नान्तं गुणानामगुणस्य जग्मुर्योगेश्वरा ये भवपाद्ममुख्याः ॥ १४ ॥

---

१. आज्ञाय ❀ २. ब्रह्मशापोत्थितात्

ततो भवान् वै भगवत्प्रधानो महत्तमैकान्तपरायणस्य ।
हरेरुदारं चरितं विशुद्धं शुश्रूषतां नो वितनोतु विद्वान् ॥ १५ ॥
स वै महाभागवतः परीक्षिद् येनापवर्गाख्यमदभ्रबुद्धिः ।
ज्ञानेन वैयासकिशब्दितेन भेजे खगेन्द्रध्वजपादमूलम् ॥ १६ ॥
तन्नः परं पुण्यमसंवृतार्थमाख्यानमत्यद्भुतयोगनिष्ठम् ।
आख्याह्यनन्ताचरितोपपन्नं पारीक्षितं भागवताभिरामम् ॥ १७ ॥

**सूत उवाच**

अहो वयं जन्मभृतो महात्मन् वृद्धानुवृत्त्याऽपि विलोमजाताः ।
दौष्कुल्यमाधिं विधुनोति शीघ्रं महत्तमानामभिधानयोगः ॥ १८ ॥
कुतः पुनर्गृणतो नाम तस्य महत्तमैकान्तपरायणस्य ।
योऽनन्तशक्तिर्भगवाननन्तो महद्गुणत्वाद् यमनन्तमाहुः ॥ १९ ॥
एतावताऽलं ननु सूचितेन गुणैरसाम्येऽनतिशायनेऽस्य ।
हित्वेतरान् प्रार्थयतो विभूतिर्यस्याङ्घ्रिरेणुं जुषतेऽनभीप्सोः ॥ २० ॥
अथापि यत्पादनखावसृष्टं जगद् विरिञ्चोपहृतार्हणाम्भः ।
सेशं पुनात्यन्यतमो मुकुन्दात् को नाम लोके भगवत्पदार्थः ॥ २१ ॥
यत्रानुरक्ताः सहसैव धीरा व्यपोह्य देहादिषु सङ्गमूढम्[1] ।
व्रजन्ति तत् पारमहंस्यसत्यं यस्मिन्नहिंसोपरमश्च धर्मः ॥ २२ ॥
अहं हि पृष्टोऽस्य गुणान् भवद्भिराचक्ष[2] आत्मावगमोऽत्र यावान् ।
नभः पतन्त्यात्मसमं पतत्रिणस्तथा समं विष्णुगतिं विपश्चितः ॥ २३ ॥
एकदा धनुरुद्यम्य विचरन् मृगयां वने । मृगाननुगतः श्रान्तः क्षुधितस्तृषितो भृशम् ॥ २४ ॥
जलाशयमचक्षाणः प्रविवेश स आश्रमम् । ददृशे[3] मुनिमासीनं शान्तं मीलितलोचनम् ॥ २५ ॥
प्रतिरुद्धेन्द्रियप्राणमनोबुद्धिमुपारतम् । स्थानत्रयात् परं प्राप्तं ब्रह्मभूतमविक्रियम् ॥ २६ ॥
विप्रकीर्णजटाच्छन्नं रौरवेणाजिनेन च । विशुष्यत्तालुरुदकं तथाभूतमयाचत ॥ २७ ॥
अलब्धतृणभूम्यादिरसम्प्राप्तार्घ्यसूनृतः । अवज्ञातमिवात्मानं मन्यमानश्चुकोप ह ॥ २८ ॥

---

१. रूढसङ्गम् ❋ २. व्याचक्षे ❋ ३. ददर्श

अभूतपूर्वः सहसा क्षुत्तृड्भ्यामर्दितात्मनः । ब्राह्मणं प्रत्यभूद् ब्रह्मन् मत्सरो मन्युरेव च ॥ २९ ॥
स तस्य ब्रह्मर्षेरंसे[१] गतासुमुरगं रुषा । विनिर्गच्छन् धनुष्कोट्या निधाय पुरमागतः[२] ॥ ३० ॥
एष किं निभृताशेषकरणो मीलितेक्षणः । मुधासमाधिराहोस्वित् किन्नः स्यात् क्षत्रबन्धुभिः ॥ ३१ ॥
तस्य पुत्रोऽतितेजस्वी विहरन् बालकोऽर्भकैः । राज्ञाऽघं प्रापितं तातं श्रुत्वा तत्रेदमब्रवीत् ॥ ३२ ॥
अहो अधर्मः पालानां पृथ्व्या बलिभुजामिव । स्वामिन्यघं यद् दासानां द्वारपानां शुनामिव ॥ ३३ ॥
ब्राह्मणैः क्षत्रबन्धुर्हि द्वारपालो निरूपितः । स कथं तद्गृहे द्वाःस्थः सभाण्डं भोक्तुमर्हति ॥ ३४ ॥
कृष्णे गते भगवति शास्तर्युत्पथगामिनाम् । तान् भिन्नसेतूनद्याहं शास्मि पश्यत मे बलम् ॥ ३५ ॥
इत्युक्त्वा रोषताम्राक्षो वयस्यानृषिबालकान् । कौशिक्यप उपस्पृश्य वाग्वज्रं विससर्ज ह ॥ ३६ ॥
इतो लङ्घितमर्यादं तक्षकः सप्तमेऽहनि । धक्ष्यति स्म कुलाङ्गारं चोदितो मे पितृद्रुहम् ॥ ३७ ॥
ततोऽभ्येत्याश्रमं बालो गळेसर्पकळेबरम् । पितरं वीक्ष्य दुःखार्तो मुक्तकण्ठो रुरोद ह ॥ ३८ ॥
स वा आङ्गिरसो ब्रह्मन् श्रुत्वा सुतविलापितम् । उन्मील्य शनकैर्नेत्रे दृष्ट्वा चांसे मृतोरगम्॥ ३९ ॥
विसृज्य पुत्रं पप्रच्छ वत्स कस्माद् विरोदिषि । केन वा ते विप्रकृतमित्युक्तः स निवेदयत्[३] ॥४०॥

निशम्य शप्तमतदर्हं नरेन्द्रं स ब्राह्मणो नात्मजमभ्यनन्दत् ।
अहो बतांहो महदद्य ते कृतमल्पीयसि द्रोह उरुश्रमो धृतः ॥ ४१ ॥
न वै नृभिर्नरदेवोऽपराध्यः तं शप्तुमर्हस्यविपक्वबुद्धे ।
यत्तेजसा दुर्विषहेण गुप्ता विन्दन्ति भद्राण्यकुतोभयाः प्रजाः ॥ ४२ ॥
अरक्षमाणे नरदेवनाम्नि रथाङ्गपाणावयमङ्ग लोकः ।
तदैव चोरप्रचुरो विनङ्क्ष्यत्यरक्ष्यमाणो विवरूथवत् क्षणात् ॥ ४३ ॥
तदद्य नः पापमुपैत्यनन्वयं यन्नष्टनाथस्य पशोर्विलुम्पकाः ।
परस्परं घ्नन्ति शपन्ति वृञ्जते पशून् स्त्रियोऽर्थान् पुरुदस्यवो जनाः ॥ ४४ ॥
तदाऽऽर्यधर्मश्च विलीयते नृणां वर्णाश्रमाचारयुतस्त्रयीमयः ।
ततोऽर्थकामाभिनिवेशितात्मनां शुनां कपीनामिव वर्णसङ्करः ॥ ४५ ॥

धर्मपालो नरपतिः स तु सम्राट् बृहच्छ्रवाः । साक्षान्महाभागवतो राजर्षिर्हयमेधयाट् ।
क्षुत्तृट्च्छ्रमान्वितो दीनो नैवास्मच्छापमर्हति ॥ ४६ ॥

---

१. तत्र ब्रह्मऋषेरंसे ❋ २. पुरमागमत् ३. न्यवेदयत्

अपापेषु स्वभृत्येषु बालेनापक्वबुद्धिना । पापं कृतं तद् भगवान् सर्वात्मा क्षन्तुमर्हति ॥ ४७ ॥

तिरस्कृता विप्रलब्धाः शप्ताः क्षिप्ता हता अपि । नास्य तत् प्रतिकुर्वन्ति तद्भक्ताः प्रभवोऽपि हि ॥४८॥

इति पुत्रकृताघेन सोऽनुतप्तो महामुनिः । स्वयं विप्रकृतो राज्ञा नैवाघं तदचिन्तयत् ॥ ४९ ॥

साधवः प्रायशो लोके परैर्द्वन्द्वेषु योजिताः । न व्यथन्ति[1] न हृष्यन्ति यत आत्माऽगुणाश्रयः ॥ ५० ॥

**॥ इति श्रीमद्भागवते प्रथमस्कन्धे अष्टादशोऽध्यायः ॥**

---

**सूत उवाच**

महीपतिस्त्वथ तत्कर्म गर्ह्यं विचिन्तयन्नात्मकृतं सुदुर्मनाः ।
अहो मया नीचमनार्यवत् कृतं निरागसि ब्रह्मणि गूढतेजसि ॥ १ ॥

ध्रुवं ततो मे कृतदेवहेळनाद्[2] दुरत्ययं व्यसनं नातिदीर्घात् ।
तदस्तु काममघनिष्कृताय मे यथा न कुर्यां पुनरेवमद्धा ॥ २ ॥

अद्यैव राज्यं बलमृद्धकोशं प्रकोपितब्रह्मकुलानलो मे ।
दहत्वभद्रस्य पुनर्न मेऽभूत् पापीयसी धीर्द्विजदेवतासु ॥ ३ ॥

स चिन्तयन्नित्थमथाशृणोद् यथा मुनेः सुतोक्तान्निकृतिं तक्षकाख्यात् ।
स साधु मेने नचिरेण तक्षकादलम्प्रसक्तस्य विरक्तिकारणम् ॥ ४ ॥

अथो विहायेममुं च लोकं विमृश्य तौ हेयतया पुरस्तात् ।
कृष्णाङ्घ्रिसेवामभिमन्यमान उपाविशत् प्रायममर्त्यनद्याम् ॥ ५ ॥

या वै लसच्छ्रीतुळसीविमिश्रकृष्णाङ्घ्रिरेण्वभ्यधिकाम्बुनेत्री ।
पुनात्यशेषानुभयत्र लोकान् कस्तां न सेवेत मरिष्यमाणः ॥ ६ ॥

इति व्यवस्थाय च पाण्डवेयः प्रायोपवेशं प्रति विष्णुपद्याम् ।
दध्यौ मुकुन्दाङ्घ्रिमनन्यभावो मुनिव्रतो मुक्तसमस्तसङ्गः ॥ ७ ॥

तत्रोपजग्मुर्भुवनं पुनाना महानुभावा मुनयः सशिष्याः ।
प्रायेण तीर्थाभिगमापदेशैः स्वयं हि तीर्थानि पुनन्ति सन्तः ॥ ८ ॥

---

१. न व्यथन्ते ❋ २. कृतदेवहेडनात् ❋

अत्रिर्वसिष्ठश्च्यवनः शरद्वानरिष्टनेमिर्भृगुरङ्गिराश्च ।
पराशरो गाधिसुतोऽथ राम उचथ्य इन्द्रप्रमतीध्मवाहौ[१] ॥ ९ ॥
मेधातिथिर्देवल आर्ष्टिषेणो भरद्वाजो मुद्गलो गौतमश्च[२] ।
मैत्रेय और्वः कवषः कुम्भयोनिर्द्वैपायनो भगवान् नारदश्च ॥ १० ॥
अन्ये च देवर्षिब्रह्मर्षिवर्या राजर्षिवर्या अरुणादयश्च[३] ।
नानार्षेयप्रवरान् समेतानभ्यर्च्य राजा शिरसा ववन्दे ॥ ११ ॥
सुखोपविष्टेष्वथ तेषु भूयः कृतप्रणामः स्वचिकीर्षितं यत् ।
विज्ञापयामास निवृत्तचेता[४] उपस्थितोऽग्रेऽर्घ्यगृहीतपाणिः ॥ १२ ॥

राजोवाच

अहो वयं धन्यतमा नृपाणां महत्तमानुग्रहणीयशीलाः ।
राज्ञां कुलं ब्राह्मणपादशौचमाराद् विसृष्टं बत गर्ह्यकर्म ॥ १३ ॥
तस्यैव मेऽस्त्वद्य परावरेशो व्यासक्तचित्तस्य गृहेष्वभीक्ष्णम् ।
निर्वेदमूलो द्विजशापरूपो यत्र प्रसक्तो(ऽ)भयमेव धत्ते ॥ १४ ॥
तं मोपविष्टं प्रतियान्तु विप्रा गङ्गा च देवी धृतचित्तमीशे ।
द्विजोपसृष्टः कुहकस्तक्षको वा दशत्वलं गायत विष्णुगाथाः[५] ॥ १५ ॥
पुनश्च भूयाद् भगवत्यनन्ते रतिः प्रसङ्गश्च तदाश्रयेषु ।
महत्सु यॉंयामुपयामि सृष्टिं मैत्र्यस्तु सर्वत्र नमो द्विजेभ्यः ॥ १६ ॥
इति स्म राजा व्यवसाययुक्तः प्राचीनकाग्रेषु कुशेषु धीरः ।
उदङ्मुखो दक्षिणकूल आस्ते समुद्रपत्न्याः स्वसुतन्यस्तभारः ॥ १७ ॥
विहाय सर्वं नरदेवचिह्नं केयूरहाराङ्गदमौळिरत्नान् ।
रत्नाङ्गुलीयान् विमलान् निरस्य पवित्रपाणिर्मुनिवेष आस्ते ॥ १८ ॥
एवं तु तस्मिन् नरदेवदेवे प्रायोपविष्टे दिवि देवसङ्घाः ।
प्रशस्य भूमौ व्यकिरन् प्रसूनैर्मुदा मुहुर्दुन्दुभयश्च नेदुः ॥ १९ ॥

---

१. इन्द्रप्रमतीध्मबाहू २. भरद्वाजो गौतमः पिप्पलादः ३. राजर्षिवर्यास्त्वरुणादयश्च
४. विविक्तचेताः ५. विष्णुगाथाः *

महर्षयो वै समुपागता[1] ये प्रशस्य साध्वित्यनुमोदमानाः ।
ऊचुः प्रजानुग्रहशीलसारा यदुत्तमश्लोकगुणानुरूपम् ॥ २० ॥
न वा इदं राजर्षिवर्य चित्रं भवत्सु कृष्णं समनुव्रतेषु ।
येऽध्यासनं राजकिरीटजुष्टं सद्यो जहुर्भगवत्पार्श्वकामाः ॥ २१ ॥
सर्वे वयं तावदिहास्महेऽथ कळेबरं यावदसौ विहाय ।
अजं परं विरजस्कं विशोकं यास्यत्ययं भागवतप्रधानः ॥ २२ ॥

**सूत उवाच**

आश्रुत्य तद् ऋषिगणवचः परीक्षित् समं मधुश्रुत्[2] गुरुशापव्यळीकम् ।
आभाषतैनानभिवन्द्य युक्तः शुश्रूषमाणश्चरितानि विष्णोः ॥ २३ ॥

**राजोवाच**

समागताः सर्वत एव सर्वे वेदा यथा मूर्तिधरास्त्रिपृष्ठे ।
नेहाथवाऽमुत्र च कश्चनार्थ ऋते परानुग्रहमात्मशीलाः ॥ २४ ॥
ततश्च वः प्रश्नमिमं विपृच्छे विस्रभ्य विप्रा इतिकृत्यतायाम् ।
सर्वात्मना म्रियमाणैस्तु कृत्यं शुद्धं च तत्रामृशताभियुक्ताः ॥ २५ ॥

**॥ इति श्रीमद्भागवते प्रथमस्कन्धे एकोनविंशोऽध्यायः ॥**

---

तत्राभवद् भगवान् व्यासपुत्रो यदृच्छया गामटमानोऽनपेक्षः ।
अलक्ष्यलिङ्गो निजलाभतुष्टो वृतश्च बालैरवधूतवेषः ॥ १ ॥
तं द्व्यष्टवर्षं सुकुमारपादकरोरुबाहुंसकपोलगात्रम् ।
चार्वायताक्षोन्नसतुल्यकर्णं सुभ्र्वाननं कम्बुसुजातकण्ठम् ॥ २ ॥
निगूढजत्रुं पृथुतुङ्गवक्षसमावर्तनाभिं वलिवल्गूदरं च ।
दिगम्बरं वक्त्रविकीर्णकेशं[3] प्रलम्बबाहुं स्वमरोत्तमाभम् ॥ ३ ॥
श्यामं सदाऽऽवीच्यवयोऽङ्गलक्ष्म्या स्त्रीणां मनोज्ञं रुचिरस्मितेन ।
प्रत्युत्थिता मुनयश्चासनेभ्यस्तल्लक्षणज्ञा अपि गूढवर्चसम् ॥ ४ ॥

---

१. महर्षय एनं समुपागताः ❋ २. आश्रुत्य ऋषिगणवचः परीक्षित् मधुश्च्युतम् ❋
३. वक्रविकीर्णकेशम्

स विष्णुरातोऽतिथय आगताय तस्मै सपर्यां शिरसाऽऽजहार ।
ततो निवृत्ता ह्यबुधाः स्त्रियोऽर्भका महासने चोपविवेश[1] पूजितः ॥ ५ ॥
स संवृतस्तत्र महान् महीयसां ब्रह्मर्षिराजर्षिदेवर्षिसङ्घैः ।
व्यरोचतालं भगवान् यथेन्दुर्ग्रहर्क्षतारानिकरैः परीतः ॥ ६ ॥
प्रशान्तमासीनमकुण्ठमेधसं मुनिं नृपो भागवतोऽभ्युपेत्य ।
प्रणम्य मूर्ध्नाऽवहितः कृताञ्जलिर्नत्वा गिरा सूनृतयाऽन्वपृच्छत् ॥ ७ ॥

**राजोवाच**

अहो अद्य वयं ब्रह्मन् सत्सेव्याः क्षत्रबन्धवः । कृपयाऽतिथिरूपेण भवद्भिस्तीर्थकाः कृताः ॥ ८ ॥
येषां संस्मरणात् पुंसः सद्यः शुद्ध्यन्ति वै गृहाः । किं पुनर्दर्शनस्पर्शपादशौचासनादिभिः ॥ ९ ॥
सान्निध्यात् ते महायोगिन्पातकानि महान्त्यपि । सद्यो नश्यन्ति वै पुंसां विष्णोरिव सुरेतराः ॥१०॥
अपि मे भगवान् प्रीतः कृष्णः पाण्डुसुतप्रियः । पैतृष्वसेयप्रीत्यर्थं तद्गोत्रस्याप्तबान्धवः ॥ ११ ॥
अन्यथा तेऽव्यक्तगतेर्दर्शनं नः कथं नृणाम् । नितरां म्रियमाणानां संसिद्धस्य वरीयसः ॥ १२ ॥
अतः पृच्छामि संसिद्धं योगिनां परमं गुरुम् । पुरुषस्येह यत् कार्यं म्रियमाणस्य सर्वदा ॥ १३ ॥
यच्छ्रोतव्यमथो जप्यं यत् कर्तव्यं नृभिः सदा । स्मर्तव्यं भजनीयं व ब्रूहि यद्वा विपर्ययम् ॥ १४ ॥
नूनं भगवतो ब्रह्मन् गृहेषु गृहमेधिनाम् । न लक्ष्यते ह्यवस्थानमपि गोदोहनं क्वचित् ॥ १५ ॥

**सूत उवाच**

एवमाभाषितः पृष्टः स राज्ञा श्लक्ष्णया गिरा । प्रत्यभाषत धर्मज्ञो भगवान् बादरायणिः ॥ १६ ॥

**॥ इति श्रीमद्भागवते महापुराणे पारमहंस्यामष्टादशसाहस्र्यां संहितायां प्रथमस्कन्धे विंशोऽध्यायः ॥**

## ॥ समाप्तश्च प्रथमस्कन्धः ॥

१. सोपविवेश ❋

## ॥ अथ द्वितीयस्कन्धः ॥

### श्रीशुक उवाच

वरीयानेष ते प्रश्नः कृतो लोकहितं नृप । आत्मवित्सम्मतः पुंसां श्रोतव्यादिषु यः परः ॥ १ ॥
श्रोतव्यानीह राजेन्द्र नृणां सन्ति सहस्रशः । अपश्यतामात्मतत्वं गृहेषु गृहमेधिनाम् ॥ २ ॥
निद्रया ह्रियते नक्तं व्यवायेन नवं वयः । दिवा चार्थेहया राजन् कुडुम्बभरणेन वा ॥ ३ ॥
देहापत्यकळत्रादिष्वात्मदैन्येष्वसत्स्वपि । तेषु प्रसक्तो निधनं पश्यन्नपि न पश्यति ॥ ४ ॥
तस्माद् भारत सर्वात्मा भगवान् हरिरीश्वरः । श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयम् ॥ ५ ॥
एतावान् साङ्ख्ययोगाभ्यां स्वधर्मपरिनिष्ठया । जन्मलाभः परः पुंसामन्ते नारायणस्मृतिः ॥ ६ ॥
प्रायेण मुनयो राजन् निवृत्ता विधिनिषेधतः । नैर्गुण्यस्था रमन्ते स्म गुणानुकथने हरेः ॥ ७ ॥
इदं भागवतं नाम पुराणं ब्रह्मसम्मितम् । अधीतवान् द्वापरादौ पितुर्द्वैपायनादहम् ॥ ८ ॥
परिनिष्ठितोऽपि नैर्गुण्य उत्तमश्लोकलीलया । गृहीतचेता राजर्षे आख्यानं यदधीतवान् ॥ ९ ॥
तदहं तेऽभिधास्यामि महापूरुषिको भवान् । यत्र श्रद्दधतामाशु स्यान्मुकुन्दे मतिः सती ॥ १० ॥
एतन्निर्विद्यमानानामिच्छतामकुतोभयम् । योगिनां नृप निर्णीतं हरेर्नामानुकीर्तनम् ॥ ११ ॥
किं प्रमत्तस्य बहुभिः परोक्षैर्हायनैरिह । परं मुहूर्तं विदितं घटते श्रेयसे यतः ॥ १२ ॥
खट्वाङ्गो नाम[१] राजर्षिः ज्ञात्वेयत्तामिहायुषः । मुहूर्तात् सङ्गमुत्सृज्य गतवानभयं हरिम् ॥ १३ ॥
तवाप्येतर्हि कौरव्य सप्ताहं जीवितावधिः । उपकल्पय तत्सर्वं यत्तावत् साम्परायिकम् ॥ १४ ॥
अन्तकाले तु पुरुष आगते गतसाध्वसः । छिन्द्यादसङ्गशस्त्रेण स्पृहां देहेऽनु ये च तम्[२] ॥ १५ ॥
गृहात् प्रव्रजितो धीरः पुण्यतीर्थजलाप्लुतः । शुचौ विविक्त आसीनो विधिवत् कल्पितासने ॥ १६ ॥
अभ्यसेन्मनसा शुद्धं त्रिवृद् ब्रह्माक्षरं परम् । मनो यच्छेज्जितश्वासो ब्रह्मबीजमनुस्मरन् ॥ १७ ॥
नियच्छेद् विषयेभ्योऽक्षान् मनसा बुद्धिसारथिः । मनः कर्मभिराक्षिप्तं शुभार्थे धारयेद् धिया ॥ १८ ॥
तत्रैकावयवं ध्यायेदव्युच्छिन्नेन चेतसा । मनो निर्विषयं युङ्क्त्वा ततः किञ्चिन्न संस्मरेत् ।
पदं तत् परमं विष्णोर्मनो यत्र प्रसीदति ॥ १९ ॥
रजस्तमोभ्यामाक्षिप्तं विमूढं मन आत्मनः । यच्छेद् धारणया धीरो हन्ति या तत्कृतं मलम् ॥ २० ॥

---

१. घट्वाङ्गो नाम ❋ २.देहे च येऽनु तम् ❋

यस्यां सन्धार्यमाणायां योगिनो भक्तिलक्षणः । आशु सम्पद्यते योग आश्रयं भद्रमीक्षतः ॥ २१ ॥

राजोवाच

यथा सन्धार्यते ब्रह्मन् धारणा यत्र सम्मता । यादृशी वा हरेदाशु पुरुषस्य मनोमलम् ॥ २२ ॥

श्रीशुक उवाच

जितासनो जितश्वासो जितसङ्गो जितेन्द्रियः । स्थूले भगवतो रूपे मनः सन्धारयेद् धिया ॥ २३ ॥

विशेषस्तस्य देहोऽयं स्थविष्ठश्च स्थवीयसाम् । यत्रेदं दृश्यते विश्वं भूतं भव्यं भवच्च यत् ॥ २४ ॥

आण्डकोशे शरीरेऽस्मिन् सप्तावरणसंयुते । वैराजः पुरुषो योऽसौ भगवान् धारणाश्रयः ॥ २५ ॥

पाताळमेतस्य हि पादमूलं पठन्ति पार्ष्णिप्रपदे रसातळम् ।
महातळं विश्वसृजः सुगुल्फौ तळातळं वै पुरुषस्य जङ्घे ॥ २६ ॥
द्वे जानुनी सुतळं विश्वमूर्तेरूरुद्वयं वितळं चातळं च ।
महीतळं तज्जघनं महीपते नभस्तळं नाभिसरो गृणन्ति ॥ २७ ॥
उरःस्थलं ज्योतिरनीकमस्य ग्रीवा महर्वदनं वै जनोऽस्य ।
तपो रराटिं विदुरादिपुंसः सत्यं तु शीर्षाणि सहस्रशीर्ष्णः ॥ २८ ॥
इन्द्रादयो बाहव आहुरस्य कर्णौ दिशः श्रोत्रममुष्य शब्दः ।
नासत्यदस्रौ परमस्य नासे घ्राणं च गन्धो मुखमग्निरिद्धः ॥ २९ ॥
द्यौरक्षिणी चक्षुरभूत् पतङ्गः पक्ष्माणि विष्णोरहनी उभे च ।
तद्भ्रूविजृम्भः परमेष्ठिधिष्ण्यमापोऽस्य तालू रस एव जिह्वा ॥ ३० ॥
छन्दांस्यनन्तस्य गिरो गृणन्ति दंष्ट्राऽर्यमेन्दूडुगणा द्विजानि ।
हासो जनोन्मादकरी च माया दुरन्तसर्गो यदपाङ्गमोक्षः ॥ ३१ ॥
[१]व्रीळोत्तरोष्ठोऽधर एव लोभो धर्मःस्तनोऽधर्मपथश्च पृष्ठः ।
कस्तस्य मेढ्रं वृषणौ च मित्रः कुक्षिः समुद्रा गिरयोऽस्थिसङ्घाः ॥ ३२ ॥
नद्योऽस्य नाड्योऽथ तनूरुहाणि महीरुहा विश्वतनोर्नृपेन्द्र ।
अनन्तं च वीर्यं श्वसितं मातरिश्वा गतिर्वयः कर्म गुणप्रवाहः ॥ ३३ ॥

---

१. व्रीडोत्तरोष्ठः । व्रीळेति शब्दोऽर्वाचीनैः व्रीडेति पठ्यते । एवमग्रेऽपि ।

ईशस्य केशान् विदुरम्बुवाहान् वासस्तु सन्ध्ये कुरवर्य भूम्नः ।
अव्यक्तमाहुर्हृदयं मनश्च[१] स चन्द्रमाः सर्वविकारकोशः ॥ ३४ ॥
विज्ञानशक्तिं मतिमामनन्ति सर्वात्मनोऽन्तःकरणं गिरित्रः ।
अश्वाश्वतर्युष्ट्रगजा नखानि सर्वे मृगाः पशवः श्रोणिदेशे ॥ ३५ ॥
वचांसि तद्व्याहरणं विचित्रं मनुर्मनीषा मनुजो निवासः ।
गन्धर्वविद्याधरचारणाप्सरःस्वरस्मृतिर्ह्यसुरानीकवीर्यः ॥ ३६ ॥
ब्रह्माननः क्षत्रभुजो महात्मा विड्रूरुरङ्घ्रिश्रितकृष्णवर्णः ।
स्वाहास्वधावीर्यगुणोपपन्नो हव्यात्मकः कर्मवितानयोगः ॥ ३७ ॥
इयानसावीश्वरविग्रहस्य यः सन्निवेशः कथितो मया ते ।
सन्धार्यतेऽस्मिन् वपुषि स्थविष्ठे मनः स्वबुद्ध्या न यतोऽस्ति किञ्चित् ॥३८॥

**॥ इति श्रीमद्भागवते द्वितीयस्कन्धे प्रथमोऽध्यायः ॥**

---

**श्रीशुक उवाच**

एवं पुरा धारणयाऽऽत्मयोनिर्नष्टां स्मृतिं प्रत्यवरुह्य तुष्यन् ।
तथा ससर्जेदममोघदृष्टिर्यथाऽप्ययात् प्राग् व्यवसायबुद्धिः ॥ १ ॥
शब्दस्य हि ब्रह्मण एष पन्था यन्नामभिर्ध्यायति धीरपार्थैः ।
परिभ्रमंस्तत्र न विन्दतेऽर्थान् मायामये वासनया शयानः ॥ २ ॥
अतः कविर्नामसु यावदर्थः स्यादप्रमत्तो व्यवसायबुद्धिः ।
सिद्धेऽन्यथार्थे न यतेत तत्तत्परिश्रमं तत्र समीक्षमाणः ॥ ३ ॥
सत्यां क्षितौ किं कशिपोः प्रयासैर्बाहौ स्वसिद्धे ह्युपबर्हणैः किम् ।
सत्यञ्जलौ किं पुरुपर्णपात्रैर्दिग्वस्त्रलाभे सति किं दुकूलैः ॥ ४ ॥
चीराणि किं पथि न सन्ति दिशन्ति भिक्षां नो वाऽङ्घ्रिपाः परभृतः सरितोऽप्यशुष्यन् ।
रुद्धा गुहाः किमवधूतसुहृन्न कृष्णः कस्माद् भजन्ति कवयो धनदुर्मदान्धान् ॥ ५ ॥

---

१. मनस्तु

एवं स्वचित्ते स्वत एव सिद्ध आत्मा प्रियोऽर्थो भगवाननन्तः ।
तं निर्वृतो नियतार्थो भजेत संसारहेतूपरमश्च यत्र ॥ ६ ॥
स सर्वविद् हृद्यनुभूश्च सर्व आत्मा यथा सुप्तजनेक्षितैकः ।
तं सत्यमानन्दनिधिं भजेत सर्वात्मनाऽतोन्यत आत्मघातः ॥ ७ ॥
कस्तं त्वनादृत्य परानुचिन्तामृते पशुत्वमसतीं नाम युञ्ज्यात् ।
पश्यन् जनं पतितं वैतरण्यां स्वकर्मजान् परितापान् जुषाणम् ॥ ८ ॥
केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम् ।
चतुर्भुजं कञ्जरथाङ्गशङ्खगदाधरं धारणया स्मरन्ति ॥ ९ ॥
प्रसन्नवक्त्रं नळिनायतेक्षणं कदम्बकिञ्जल्कपिशङ्गवाससम् ।
लसन्महाहारहिरण्मयाङ्गदं स्फुरन्महारत्नकिरीटकुण्डलम् ॥ १० ॥
उन्निद्रहृत्पङ्कजकर्णिकालये योगेश्वरास्थापितपादपल्लवम् ।
श्रीलक्षणं कौस्तुभरत्नकन्धरमम्लानलक्ष्म्या वनमालयाऽञ्चितम् ॥ ११ ॥
विभूषितं मेखलयाऽङ्गुलीयकैर्महाधनैर्नूपुरकङ्कणादिभिः ।
स्निग्धामलैः कुञ्चितनीलकुन्तळैर्विरोचमानाननहासपेशलम् ॥ १२ ॥
अदीनलीलाहसितेक्षणोल्लसद्भ्रूभङ्गसंसूचितभूर्यनुग्रहम् ।
ईक्षेत चिन्तामयमेनमीश्वरं यावन्मनो धारणयाऽवतिष्ठते ॥ १३ ॥
एकैकशोऽङ्गानि धियाऽनुभावयेत्[1] पादादि यावद् हसितं गदाभृतः ।
जितंजितं स्थानमपोह्य धारयेत् परंपरं शुध्यति धीर्यथायथा ॥ १४ ॥
यावन्न जायेत परावरेऽस्मिन् विश्वेश्वरे द्रष्टरि भक्तियोगः ।
तावत् स्थवीयः पुरुषस्य रूपं क्रियावसाने प्रयतः स्मरेत ॥ १५ ॥
स्थिरं सुखं चासनमास्थितो यतिर्यदा जिहासुरिममङ्ग लोकम् ।
काले च देशे च मनो न सज्जेत् प्राणान् नियच्छेन्मनसा जितासुः ॥ १६ ॥
मनश्च बुद्ध्याऽमलया नियम्य क्षेत्रज्ञ एतां निनयेत् तमात्मनि ।
आत्मानमात्मन्यवरुध्य धीरो लब्धोपशान्तिर्विरमेत कृत्यात् ॥ १७ ॥

---

१. धिया विभावयेत् ❋

न यत्र कालोऽनिमिषप्रभुः प्रभुः कुतो नु देवा जगतां य ईशिरे ।
न यत्र सत्वं न रजस्तमश्च न वै विकारो न महान् प्रधानम् ॥ १८ ॥
परं पदं वैष्णवमामनन्ति तद् यन्नेतिनेतीत्यतदुत्सिसृक्षवः ।
विसृज्य दौरात्म्यमनन्यसौहृदा हृदोपगुह्यापुरमुं पदेपदे ॥ १९ ॥
इत्थं मुनिस्तूपरमेद् व्यवस्थितो विज्ञानदृग्वीर्यसुरन्धिताशयः ।
स्वपार्ष्णिनाऽऽपीड्य गुदं ततोऽनिलं स्थानेषु षट्सून्नमयेज्जितक्लमः ॥ २० ॥
नाभ्यां स्थितं हृद्यवरोप्य तस्मादुदानगत्योरसि तं नयेन्मुनिः ।
ततोऽनुसन्धाय धिया मनस्वी स्वतालुमूलं शनकैर्नयेत ॥ २१ ॥
तस्माद् भ्रुवोरन्तरमुन्नयेत निरुद्धसप्ताश्वपथोऽनपेक्षः ।
स्थित्वा मुहूर्तार्धमकुण्ठदृष्टिर्निर्भिद्य मूर्धन् विसृजेत् परं गतः ॥ २२ ॥
यदि प्रयास्यत्यथ पारमेष्ठ्यं वैहायसानामुत यद् विहारम् ।
अष्टाधिपत्यं गुणसन्निवापे सहैव गच्छेन्मनसेन्द्रियैश्च ॥ २३ ॥
योगेश्वराणां गतिमामनन्ति बहिस्त्रिलोक्याः पवनान्तरात्मा ।
न कर्मभिस्तां गतिमाप्नुवन्ति विद्यातपोयोगसमाधिभाजाम् ॥ २४ ॥
वैश्वानरं याति विहायसा गतः सुषुम्नया ब्रह्मपथेन शोचिषा ।
विधूतकल्कोऽथ हरेरुदस्तात् प्रयाति चक्रं नृप शैंशुमारम् ॥ २५ ॥
योऽन्तः पचति भूतानां यस्तपत्यण्डमध्यगः । सोऽग्निर्वैश्वानरो मार्गो देवानां पितृणां मुनेः ॥ २६ ॥
देवयानं पिङ्गळाभिरहान्येति शतायुषा । रात्रीरिडाभिः पितृणां विषुवत्तां सुषुम्नया ॥ २७ ॥
तद् विश्वनाभिं त्वभिपद्य विष्णोरणीयसा विरजेनात्मनैकम् ।
नमस्कृतं ब्रह्मविदामुपैति कल्पायुषो विबुधा यद् रमन्ते ॥ २८ ॥
अथो अनन्तस्य मुखानलेन दन्दह्यमानं स निरीक्ष्य विश्वम् ।
निर्याति सिद्धेश्वरजुष्टधिष्ण्यं यद् वै परार्ध्यं तदु पारमेष्ठ्यम् ॥ २९ ॥
न यत्र शोको न जरा न मृत्युर्नाधिर्न चोद्वेग ऋते कुतश्चित् ।
यच्चित्ततोदः क्रिययाऽनिदंविदां दुरन्तदुःखप्रभवानुदर्शनात् ॥ ३० ॥
ततो विशेषं प्रतिपद्य निर्भयस्तेनात्मनाऽपोऽनलमूर्ध्नि च त्वरन् ।
ज्योतिर्मयो वायुमुपेत्य काले वाय्वात्मना खं बृहदात्मलिङ्गम् ॥ ३१ ॥

घ्राणेन गन्धं रसनेन वै रसं रूपं तु दृष्ट्या स्पर्शं त्वचैव ।
श्रोत्रेण चोपेत्य नभोगुणं तत् प्रायेण नावृत्तिमुपैति योगी ॥ ३२ ॥
स भूतसूक्ष्मेन्द्रियसन्निकर्षात् सनातनोऽसौ भगवाननादिः ।
मनोमयं देवमयं विकार्यं संसाद्य मत्या सह तेन याति ॥ ३३ ॥
विज्ञानतत्वं गुणसन्निरोधं तेनात्मनाऽऽत्मानमुपैति शान्तिम् ।
आनन्दमानन्दमयोऽवसाने सर्वात्मके ब्रह्मणि वासुदेवे ॥ ३४ ॥
एतां गतिं भागवतो गतो यः स वै पुनर्नेह विषज्जतेऽङ्ग ।
एते सृती ते नृप वेदगीते त्वयाऽभिपृष्टेऽथ सनातने च ॥
ये द्वे पुरा ब्रह्मण आह पृष्ट आराधितो भगवान् वासुदेवः ॥ ३५ ॥
नह्यतोऽन्यः शिवःपन्था विश्रुतःसंसृताविह । वासुदेवे भगवति भक्तियोगो यतो भवेत् ॥ ३६ ॥
भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया । तद्धि ह्यपश्यत्[1] कूटस्थे रतिरात्मन् यतो भवेत् ॥३७॥
भगवान् सर्वभूतेषु लक्षितश्चात्मना हरिः । दृश्यैर्बुद्ध्यादिभिर्द्रष्टा लक्षणैरनुमापकैः ॥ ३८ ॥
तस्मात्सर्वात्मना राजन् हरिःसर्वत्र सर्वदा । श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यो भगवान् नृणाम् ॥ ३९ ॥
पिबन्ति ये भगवत आत्मनः सतां कथामृतं श्रवणपुटेषु सम्भृतम् ।
पुनन्ति ते विषयविदूषिताशयं व्रजन्ति तच्चरणसरोरुहान्तिकम् ॥ ४० ॥

**॥ इति श्रीमद्भागवते द्वितीयस्कन्धे द्वितीयोऽध्यायः ॥**

---

**श्रीशुक उवाच**

एवमेतन्निगदितं पृष्टवान् यद् भवान् मम । नृणां यन्म्रियमाणानां मनुष्येषु मनीषिणाम् ॥ १ ॥
ब्रह्मवर्चसकामस्तु यजेत ब्रह्मणस्पतिम् । इन्द्रमिन्द्रियकामस्तु प्रजाकामः प्रजापतीन् ॥ २ ॥
देवीं मायां तु श्रीकामः तेजस्कामो विभावसुम् । वसुकामो वसून् रुद्रान् वीर्यकामस्तु वीर्यदान्॥ ३ ॥
अन्नाद्यकामस्त्वदितिं स्वर्गकामोऽदितेः सुतान् । विश्वान् देवान् राष्ट्रकामः[2] साध्यान् संसाधको विशाम्॥
आयुष्कामोऽश्विनौ देवौ पुष्टिकाम इळां यजेत् । प्रतिष्ठाकामः पुरुषो रोदसी लोकमातरौ ॥ ५ ॥

---

१. तदध्यपश्यत् ❋ २. राज्यकामः

रूपाभिकामो गन्धर्वान् स्त्रीकामोऽप्सर उर्वशीम्। आधिपत्यकामः सर्वेषां यजेत परमेष्ठिनम्॥ ६ ॥
यज्ञं यजेद् यशस्कामः कोशकामः प्रचेतसम्। विद्याकामस्तु गिरिशं दाम्पत्यार्थ उमां सतीम्॥ ७ ॥
धर्मार्थमुत्तमश्लोकं तन्तुं तन्वन् पितॄन् यजेत्। रक्षाकामः पुण्यजनानोजस्कामो मरुद्गणान् ॥ ८ ॥
राज्यकामो मनून्देव[1] निर्ऋतिं त्वभिचरन् नरः[2]। ग्रामकामो यजेत् सोममकामः पुरुषं पुमान्॥ ९ ॥
अकामः सर्वकामो वा मोक्षकाम उदारधीः। तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥ १० ॥
एतावानेव यजतामिह निश्रेयसोदयः। भगवत्यचलो भावो यद् भागवतसङ्गतः ॥११ ॥

ज्ञानं यदा प्रतिनिवृत्तगुणोर्मिचक्रमात्मप्रसाद उभयत्र गुणेष्वसङ्गः।
कैवल्यसम्भृतपथस्त्वथ भक्तियोगः को निर्वृतो हरिकथासु रतिं न कुर्यात् ॥ १२ ॥

**शौनक उवाच**

इत्यभिव्याहृतं राजा निशम्य भरतर्षभः। किमन्यत् पृष्टवान् भूयो वैयासकिमृषिं कविम् ॥ १३ ॥
एतच्छुश्रूषतां विद्वन् सूत नोऽर्हसि भाषितुम्। कथा हरिगुणोदाराः सतां स्युः सदसि ध्रुवम्॥ १४ ॥
स वै भागवतो राजा पाण्डवेयो महारथः। बालः क्रीडनकैः क्रीडन् कृष्णक्रीडां य आददे ॥ १५ ॥
वैयासकिश्च भगवान् वासुदेवपरायणः। उरुगायगुणोदाराः सतां स्युर्हि समागमे ॥ १६ ॥
आयुर्हरति वै पुंसां उद्यन्नस्तं च यन्नसौ। तस्यर्ते यः क्षणो नीत उत्तमश्लोकवार्तया ॥ १७ ॥
तरवः किंन जीवन्ति भस्त्राः किं न श्वसन्त्युत। न खादन्ति न मेहन्ति किं ग्रामपशवोऽपरे ॥ १८ ॥
श्वविड्वराहोष्ट्रखरैः स तुल्यः पुरुषः पशुः। न यत्कर्णपथोपेतो जातु नाम गदाग्रजः[3] ॥ १९ ॥

बिले बतोरुक्रमविक्रमान् ये न शृण्वतः कर्णपुटे नरस्य।
जिह्वाऽसती दार्दुरिकेव याऽसौ[4] न चेत् प्रागायत्युरुगायगाथाम् ॥ २० ॥
भारः परं पट्टकिरीटजुष्टमप्युत्तमाङ्गं न नमेन्मुकुन्दम्।
शावौ करौ नो कुरुतः सपर्यां हरेर्लसत्काञ्चनकङ्कणौ वा ॥ २१ ॥
बर्हायिते ते नयने नराणां लिङ्गानि विष्णोर्न निरीक्षतो ये।
पादौ नृणां तौ द्रुमजन्मभाजौ क्षेत्राणि नानुव्रजतो हरेर्यौ ॥ २२ ॥
जीवच्छवो भागवताङ्घ्रिरेणुं न जातु मर्त्योऽभिलषेत यस्तु।
श्रीविष्णुपद्या मनुजस्तुळस्याः श्वसच्छवो यस्तु न वेद गन्धम् ॥ २३ ॥

---

१. मनून् देवान् २. अभिचरन् यजेत् ३. गदाभृतः * ४. सूत

तदश्मसारं हृदयं बतेदं यद् गृह्यमाणैर्हरिनामधेयैः ।
न विक्रियेताथ मुखे विकासो नेत्रे जलं गात्ररुहेषु हर्षः ॥ २४ ॥
अथाभिधेह्यङ्ग मनोनुकूलं प्रभाषसे भागवतप्रधानः ।
यदाह वैयासकिरात्मविद्याविशारदो नृपतिं साधु पृष्टः ॥ २५ ॥

**॥ इति श्रीमद्भागवते द्वितीयस्कन्धे तृतीयोध्यायः ॥**

---

**सूत उवाच**

वैयासकेरिति वचस्तत्वनिश्चयमात्मनः । उपधार्य मतिं कृष्णे औत्तरेयः सतीं व्यधात् ॥ १ ॥
आत्मजायासुतागार[1]पशुद्रविणबन्धुषु । राज्ये चाविकले नित्यनिरूढां[2] ममतां जहौ ॥ २ ॥
पप्रच्छ चेममेवार्थं यन्मां पृच्छथ सत्तमाः । कृष्णानुभावश्रवणे श्रद्दधानो महायशाः ॥ ३ ॥
संस्थां विज्ञाय सन्न्यस्य कर्म त्रैवर्गिकं च यत् । वासुदेवे भगवति स्वात्मभावं दृढं गतः ॥ ४ ॥

**राजोवाच**

समीचीनं वचो ब्रह्मन् सर्वज्ञस्य तवानघ । तमो विशीर्यते मह्यं हरेः कथयतः कथाः ॥ ५ ॥
भूय एव विवित्सामि भगवानात्ममायया । यथेदं सृजते विश्वं दुर्विभाव्यमधीश्वरैः ।
यथा गोपायति विभुर्यथा संयच्छते पुनः ॥ ६ ॥
यॉंयां शक्तिमुपाश्रित्य पुरुशक्तिः परः पुमान् । आत्मानं क्रीडयन् क्रीडन् करोति विकरोति च ॥
नूनं भगवतो ब्रह्मन् हरेरद्भुतकर्मणः । दुर्विभाव्यमिवाभाति कविभिश्च विचेष्टितम् ॥ ८ ॥
यथा गुणांस्तु[3] प्रकृतेर्युगपत् क्रमशोऽपि वा । बिभर्ति भूरिशस्त्वेकः कुर्वन् कर्माणि जन्मभिः॥ ९ ॥
विचिकित्सितमेतन्मे ब्रवीतु भगवान् यथा । शब्दब्रह्मणि निष्णातः परस्मिंश्च भवान् खलु॥ १० ॥

**सूत उवाच**

इत्युपामन्त्रितो राज्ञा गुणानुकथने विभोः । हृषीकेशमनुस्मृत्य प्रतिवक्तुं प्रचक्रमे[4] ॥ ११ ॥

**श्रीशुक उवाच**

नमः परस्मै पुरुषाय भूयसे सदुद्भवस्थाननिरोधलीलया ।
गृहीतशक्तित्रितयाय देहिनामन्तर्ध्रुवायानुपलभ्यवर्त्मने ॥ १२ ॥

---

१. आत्मजायात्मजागार ❋ २. नित्यं निरूढाम् ❋ ३. गुणांश्च ❋ ४. प्रवक्तुमुपचक्रमे ❋

भूयो नमः सद्व्रजिनच्छिदे[1]ऽसतामसम्भवायाखिलसत्वमूर्तये ।
पुंसां पुनः पारमहंस्य आश्रमे व्यवस्थितानामनुमृग्य दाशुषे ॥ १३ ॥
नमोनमस्तेऽस्त्वृषभाय सात्वतां विदूरकाष्ठाय मुहुः कुयोगिनाम् ।
निरस्तसाम्यातिशयेन राधसा स्वधामनि ब्रह्मणि रंस्यते नमः ॥ १४ ॥
यत्कीर्तनं यच्छ्रवणं यदीक्षणं यद्वन्दनं यत्स्मरणं यदर्हणम् ।
लोकस्य सद्यो विधुनोति कल्मषं तस्मै सुभद्रश्रवसे नमोनमः ॥ १५ ॥
तपस्विनो दानपरा यशस्विनो मनस्विनो मन्त्रविदः सुमङ्गळाः ।
क्षेमं न विन्दन्ति विना यदर्पणं तस्मै सुभद्रश्रवसे नमोनमः ॥ १६ ॥
विचक्षणा यच्चरणोपसादनात् सङ्गं व्युदस्योभयतोऽन्तरात्मनः ।
विन्दन्ति हि ब्रह्मगतिं गतक्लमास्तस्मै सुभद्रश्रवसे नमोनमः ॥ १७ ॥
किरातहूणान्ध्रपुळिन्दपुल्कसा आभीरकङ्का यवनाः शकादयः ।
येऽन्ये च पापा यदपाश्रयाश्रयाच्छुध्यन्ति तस्मै प्रभविष्णवे नमः ॥ १८ ॥
स एष आत्माऽऽत्मवतामधीश्वरस्त्रयीमयो धर्ममयस्तपोमयः ।
गतव्यळीकैरजशङ्करादिभिर्वितर्क्यलिङ्गो भगवान् प्रसीदताम् ॥ १९ ॥
श्रियः पतिर्यज्ञपतिः प्रजापतिर्गिरां पतिर्लोकपतिर्धरापतिः ।
पतिर्गतिश्चान्धकवृष्णिसात्वतां प्रसीदतां मे भगवान् सतां पतिः ॥ २० ॥
यदङ्घ्र्यभिध्यानसमाधिधौतया धियाऽनुपश्यन्ति हि तत्वमात्मनः ।
वदन्ति चैतत् कवयो यथारुचं स मे मुकुन्दो भगवान् प्रसीदताम् ॥ २१ ॥
प्रचोदिता येन पुरा सरस्वती वितन्वताऽजस्य सतीं स्थितिं हृदि ।
स्वलक्षणा प्रादुरभूत् किलास्यतः स मे ऋषीणामृषभः प्रसीदताम् ॥ २२ ॥
भूतैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते यदमूषु पूरुषः ।
भुङ्क्ते गुणान् षोडश षोडशात्मकः सोऽलङ्कृषीष्ट भगवान् वचांसि मे ॥ २३ ॥
नमस्तस्मै भगवते वासुदेवाय वेधसे । पपुर्ज्ञानमयं सौम्या[2] यन्मुखाम्बुरुहासवम् ॥ २४ ॥

---

१. सद्वृजिनच्छिदे । वृजिनशब्दः प्राचीनकाशेषु व्रजिन इति पठ्यते । आसमाप्ति चेत्थं ज्ञेयम् । २. सोम्याः

एतदेवात्मभू राजन् नारदायेति पृच्छते । वेदगर्भोऽभ्यधात् सर्वं यदाह हरिरात्मनः ॥ २५ ॥

**॥ इति श्रीमद्भागवते द्वितीयस्कन्धे चतुर्थोऽध्यायः ॥**

---

**श्रीनारद उवाच**

देवदेव नमस्तेस्तु भूतभावन पूर्वज । तद् विजानीहि यज्ज्ञानमात्मतत्वनिदर्शनम् ॥ १ ॥

यद्रूपं यदधिष्ठानं यतः सृष्टमिदं विभो । यत्संस्थं यत्परं यच्च तत् तत्वं वद तत्वतः ॥ २ ॥

सर्वं ह्येतद् भवान् वेद भूतभव्यभवत्प्रभुः । करामलकवद् विश्वं विज्ञानावसितं तव ॥ ३ ॥

यद्विज्ञानो यदाधारो यत्परस्त्वं यदात्मकः । एकः सृजसि भूतानि भूतैरेवात्ममायया ॥ ४ ॥

आत्मन् भावयसे तानि न पराग् भावयेः स्वयम् । आत्मशक्तिमवष्टभ्य सूत्रनाभिरिवाक्लमः ॥ ५ ॥

नाहं वेद परं त्वस्मान्नावरं न समं विभो । नामरूपगुणैर्भाव्यं सदसत् किञ्चिदन्यतः ॥ ६ ॥

स भवानचरद् घोरं यत् तपः सुसमाहितः । तेन खेदयसे नस्त्वं परां शङ्कां च यच्छसि ॥ ७ ॥

एतन्मे पृच्छतः सर्वं सर्वज्ञ सकलेश्वर । विजानीहि यथैवेदमहं बुध्येऽनुशासितः ॥ ८ ॥

**ब्रह्मोवाच**

सम्यक् कारुणिकस्येदं वत्स ते विचिकित्सितम् । यदहं चोदितः सौम्य भगवद्वीर्यदर्शने ॥ ९ ॥

नानृतं बत तच्चापि यथा मां प्रब्रवीषि भो[1] । अविज्ञाय परं मत्त एतावत्त्वं यतो हि मे ॥ १० ॥

येन स्वरोचिषा विश्वं रोचितं रोचयाम्यहम् । यथार्कोऽग्निर्यथा सोमो यथर्क्षग्रहतारकाः ॥ ११ ॥

नमस्तस्मै भगवते वासुदेवाय धीमहि । यन्मायया दुर्जयया मां वदन्ति[2] जगद्गुरुम् ॥ १२ ॥

विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया । विमोहिता विकत्थन्ते ममाहमिति दुर्धियः ॥ १३ ॥

द्रव्यं कर्म च कालश्च स्वभावो जीव एव च । वासुदेवात् परो ब्रह्मन् न चान्योर्थोऽस्ति तात्त्वतः ॥

नारायणपरा वेदा देवा नारायणाङ्गजाः। नारायणपरा लोका नारायणपरा मखाः ॥ १५ ॥

नारायणपरो योगो नारायणपरं तपः । नारायणपरं ज्ञानं नारायणपरा गतिः ॥ १६ ॥

तस्यापि द्रष्टुरीशस्य कूटस्थस्याखिलात्मनः । सृज्यं सृजामि सृष्टोऽहमीक्षयैवाभिचोदितः ॥ १७ ॥

सत्वं रजस्तम इति निर्गुणस्य गुणास्त्रयः । स्थितिसर्गनिरोधेषु गृहीता मायया विभोः ॥ १८ ॥

---

१. भोः २. ब्रुवन्ति *

कार्यकारणकर्तृत्वे द्रव्यज्ञानक्रियाश्रयाः । बध्नन्ति नित्यदा मुक्तं मायिनं पुरुषं गुणाः ॥ १९ ॥
स एष भगवाँल्लिङ्गैस्त्रिभिरेतैरधोक्षजः । स्वलक्षितगतिर्ब्रह्मन् सर्वेषां मम चेश्वरः ॥ २० ॥
कालं कर्म स्वभावं च मायेशो मायया स्वया । आत्मन् यदृच्छया प्राप्तं विबुभूषुरुपाददे ॥ २१ ॥
कालाद् गुणव्यतिकरात् परिणामस्वभावतः । कर्मणो जन्म महतः पुरुषाधिष्ठितादभूत् ॥ २२ ॥
महतस्तु विकुर्वाणाद् रजस्सत्वोपबृंहितात् । तमःप्रधानस्त्वभवद् द्रव्यज्ञानक्रियात्मकः ॥ २३॥
सोऽहङ्कार इति प्रोक्तो विकुर्वन् समभूत् त्रिधा । वैकारिकस्तैजसश्च तामसश्चेति यद्भिदा ।
द्रव्यशक्तिः क्रियाशक्तिर्ज्ञानशक्तिरिति प्रभोः ॥ २४ ॥
तामसादपि भूतादेर्विकुर्वाणादभून्नभः ।तस्य मात्रागुणः शब्दो लिङ्गं यद् द्रष्टृदृश्ययोः ॥ २५ ॥
नभसोऽथ विकुर्वाणादभूत् स्पर्शगुणोऽनिलः । परान्वयाच्छब्दवांश्च प्राण ओजः सहो बलम् ॥२ ६ ॥
वायोरपि विकुर्वाणात् कालकर्मस्वभावतः । उदपद्यत तेजो वै रूपवत् स्पर्शशब्दवत् ॥ २७ ॥
तेजसस्तु विकुर्वाणादासीदम्भो रसात्मकम् । रूपवत् स्पर्शवच्चाम्भो घोषवच्च तदन्वयात्[१] ॥ २८ ॥
विशेषस्तु विकुर्वाणादम्भसो गन्धवानभूत् । परान्वयाद् रसस्पर्शरूपशब्दगुणान्वितः ॥ २९ ॥
वैकारिकान्मनो जज्ञे देवा वैकारिका दश । दिग्वातार्कप्रचेतोश्विवह्नीन्द्रोपेन्द्रमित्रकाः ॥ ३० ॥
तैजसात्तु विकुर्वाणादिन्द्रियाणि दशाभवन् । ज्ञानशक्तिः क्रियाशक्तिर्बुद्धिः प्राणस्तु तैजसः[२] ॥
श्रोत्रत्वग्घ्राणदृग्जिह्वावाग्दोर्मेढ्राङ्घ्रिपायवः । य एतेऽसङ्गता भावा भूतेन्द्रियमनोगुणाः ।
यदायतननिर्माणे न शेकुर्ब्रह्मवित्तम ॥ ३२ ॥
तदा संहत्य चान्योन्यं भगवच्छक्तिचोदिताः । सदसत्वमुपादाय नो भयं ससृजुर्ह्यदः ॥ ३३ ॥
वर्षपूगसहस्रान्ते तदण्डमुदकेशयम् । कालकर्मस्वभावस्थो(ऽ)जीवो(ऽ)जीवमजीजनत् ॥ ३४ ॥
स एष पुरुषस्तस्मादण्डं निर्भिद्य निर्गतः । सहस्रोर्वङ्घ्रिबाह्वक्षिः सहस्राननशीर्षवान् ॥ ३५ ॥
यस्येहावयवैर्लोकान् कल्पयन्ति मनीषिणः । ऊर्वादिभिरधः सप्त सप्तोर्ध्वं जघनादिभिः ॥ ३६ ॥
पुरुषस्य मुखं ब्रह्म क्षत्रमेतस्य बाहवः । ऊर्वोर्वैश्यो भगवतः पद्भ्यां शूद्रो व्यजायत ॥ ३७ ॥
भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः । हृदा स्वर्लोक उरसा महर्लोको महात्मनः ॥
ग्रीवायां जनलोकश्च[३] तपोलोकोऽस्य[४] नेत्रयोः । मूर्धभिः सत्यलोकस्तु ब्रह्मलोकः सनातनः ॥ ३९ ॥

---

१. परान्वयात् ❋　　२. प्राणश्च तैजसात् ❋　　३. जनलोकस्तु ❋　　४. तपोलोकश्च ❋

कटिभ्यामतळं[1] क्लृप्तमूरुभ्यां वितळं विभोः । जानुभ्यां सुतळं क्लृप्तं जङ्घाभ्यां तु तळातळम् ॥ ४० ॥
महातळं तु गुल्फाभ्यां प्रपदाभ्यां रसातळम् । पाताळं पादतळत इति लोकमयः पुमान् ॥ ४१ ॥
भूर्लोकः कल्पितः[2] पद्भ्यां भुवर्लोकस्तु नाभितः । स्वर्लोकः कल्पितो मूर्ध्नि इति वा लोककल्पना ॥

**॥ इति श्रीमद्भागवते द्वितीयस्कन्धे पञ्चमोऽध्यायः ॥**

---

**ब्रह्मोवाच**

वाचो वह्नेर्मुखं क्षेत्रं छन्दसां सप्तधातवः । हव्यकव्यामृतान्नानां जिह्वा सर्वरसस्य च ॥ १ ॥
सर्वासूनां च वायोश्च तन्नासे परमायने । अश्विनोरोषधीनां च घ्राणो गन्धस्य चैव हि ॥ २ ॥
रूपाणां तेजसां चक्षुर्दिवः सूर्यस्य चाक्षिणी । कर्णौ दिशां च तीर्थानां श्रोत्रमाकाशशब्दयोः ॥ ३ ॥
तद्गात्रं वस्तुसाराणां सौभाग्यस्य च भाजनम् । त्वगस्य स्पर्शवाय्वोश्च सर्वमेधस्य चैव हि ॥ ४ ॥
रोमाण्युद्भिजजातीनां यैर्वा यज्ञस्तु सम्भृतः । केशश्मश्रुनखान्यस्य शिलालोहाभ्रविद्युताम् ॥ ५॥
बाहवो लोकपालानां प्रायशः क्षेमकर्मणाम् । विक्रमो भूर्भुवःस्वश्च क्षेमस्य शरणस्य च ।
सर्वकामवरस्यापि हरेश्चरण आस्पदम् ॥ ६ ॥
अपां वीर्यस्य सर्गस्य पर्जन्यस्य प्रजापतेः । पुंसः शिश्न उपस्थस्तु[3] प्रजात्यानन्दनिर्वृतेः ॥ ७ ॥
पायुर्यमस्य मित्रस्य परिमोक्षस्य नारद । हिंसाया निर्ऋतेर्मृत्योर्निरयस्य गुदः स्मृतः ॥ ८ ॥
पराभूतेरधर्मस्य तमसश्चापि पश्चिमः । नाड्यो नदनदीनां तु गोत्राणामस्थिसंहतिः ॥ ९ ॥
अव्यक्तरससिन्धूनां भूतानां निधनस्य च । उदरं विदितं पुंसो हृदयं मनसः पदम् ॥ १० ॥
धर्मस्य मम तुभ्यं च कुमाराणां भवस्य च । विज्ञानस्य च तत्वस्य परस्यात्मा परायणम् ॥ ११ ॥
अहं भवान् भवश्चैव य इमे मुनयोऽग्रजाः । सुरासुरनरा नागा गावो[4] मृगसरीसृपाः ॥ १२ ॥
गन्धर्वाप्सरसो यक्षा रक्षोभूतगणोरगाः । पशवः पितरः सिद्धा विद्याध्राश्चारणा द्रुमाः ॥ १३ ॥
अन्ये च विविधा जीवा जलस्थलनभौकसः । ग्रहर्क्षकेतवस्तारास्तडितः स्तनयित्नवः ॥ १४ ॥
सर्वं पुरुष एवेदं भूतं भव्यं भवच्च यत् । तेनेदमावृतं विश्वं वितस्तिमधितिष्ठता ॥ १५ ॥
स्वधिष्ण्यं प्रतपन् प्राणो बहिश्च प्रतपत्यसौ । एवं विराजं प्रतपंस्तपत्यन्तर्बहिः पुमान् ॥ १६ ॥

---

१. तत्कट्यामतळम् ❋ २. भूर्लोको विहितः ❋ ३. उपस्थं तु ❋ ४. खगाः

सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात् । महिमैष ततो ब्रह्मन् पुरुषस्य दुरत्ययः ॥ १७ ॥
पादोऽस्य सर्वभूतानि पुंसः स्थितिविदो विदुः । अमृतं क्षेममभयं त्रिमूर्ध्नोऽधायि मूर्धसु ॥ १८ ॥
पादास्त्रयो बहिस्त्वासन्नप्रजानां य आश्रयाः । अन्तस्त्रिलोक्यास्त्वपरो गृहमेधैर्बृहद् हुतः[1] ॥ १९ ॥
सृती विचक्रमे विश्वक् साशनानशने उभे । यदविद्या च विद्या च पुरुषस्तूभयाश्रयः ॥ २० ॥
तस्मादण्डाद् विराड् जज्ञे भूतेन्द्रियगुणाश्रयः । तद् द्रव्यमत्यगाद् विश्वं गोभिः सूर्य इवाश्रयम् ॥
यदाऽस्य नाभ्यां नळिनादहमासं महात्मनः । नाविन्दं[2] यज्ञसम्भारान् पुरुषावयवानृते[3] ॥ २२ ॥
तेषु यज्ञाश्च पशवः सवनस्पतयः कुशाः । इदं च देवयजनं कालश्चोरुगुणान्वितः ॥ २३ ॥
वसून्योषधयः[4] स्नेहा रसलोहमृदो जलम् । ऋचो यजूंषि सामानि चातुर्होत्रं च सत्तम ॥ २४ ॥
नामधेयानि मन्त्राश्च दक्षिणाश्च व्रतानि च । देवतानुक्रमः कल्पः सङ्कल्पः सूत्रमेव च ॥ २५ ॥
गतयो मतयः श्रद्धा प्रायश्चित्तं समर्पणम् । पुरुषावयवैरेतैः सम्भाराः सम्भृता मया ॥ २६ ॥
इति सम्भृतसम्भारः पुरुषावयवैरहम् । तमेव पुरुषं यज्ञं तेनैवायजमीश्वरम् ॥ २७ ॥
ततस्ते भ्रातर इमे प्रजानां पतयो नव । अयजन् व्यक्तमव्यक्तं पुरुषं सुसमाहिताः ॥ २८ ॥
ततश्च मनवः काल ईजिरे ऋषयोऽपरे । पितरो विबुधा दैत्या मनुष्याः क्रतुभिर्विभुम् ॥ २९ ॥
नारायणे भगवति तदिदं विश्वमाहितम् । गृहीतमायोरुगुणे सर्गादावगुणे स्वतः ॥ ३० ॥
सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः । विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक् ॥ ३१ ॥
इति तेऽभिहितं तात यथेदमनुपृच्छसि । नान्यद् भगवतः किञ्चिद् भाव्यं सदसदात्मकम् ॥ ३२ ॥

न भारती मेऽङ्ग मृषोपलक्ष्यते न कर्हिचिन्मे मनसो मृषा गतिः ।
न मे हृषीकाणि पतन्त्यसत्पथे यन्मे हृदौत्कण्ठ्यवता धृतो हरिः ॥ ३३ ॥
सोऽहं समाम्नायमयस्तपोमयः प्रजापतीनामभिवन्दितः पतिः ।
आस्थाय योगं निपुणं समाहितस्तं नाध्यगच्छं यत आत्मसम्भवः ॥ ३४ ॥
नतोऽस्म्यहं तच्चरणं समीयुषां भवच्छिदं स्वस्त्ययनं सुमङ्गळम् ।
यः स्वात्ममायाविभवं स्वयं गतो नाहं नभस्वांस्तमथापरे कुतः ॥ ३५ ॥

---

१. बृहद्वृतः/बृहद्धृतः * २. नाविदम् * ३. पुरुषावयवाद् ऋते *
४. वसून्यौषधयः * प्राचीनकोशेषु औषधिरित्येव सर्वत्र पठ्यते । अर्वाचीनेषु ओषधिरिति । एवमग्रेऽपि ।

नाहं न यूयं बत तद्गतिं विदुर्न वामदेवः किमुतापरे सुराः ।
यन्मायया मोहितबुद्धयस्त्विदं विनिर्मितं स्वात्मसमं विचक्ष्महे ॥ ३६ ॥
यस्यावतारकर्माणि गायन्ति ह्यस्मदादयः । न यं विदन्ति तत्वेन तस्मै भगवते नमः ॥ ३७ ॥
स एष आद्यः पुरुषः कल्पेकल्पे सृजत्यजः । आत्माऽऽत्मन्यात्मनाऽऽत्मानं स संयच्छति पाति च ॥
विशुद्धं केवलं ज्ञानं प्रत्यक् सम्यगवस्थितम् । सत्यं पूर्णमनाद्यन्तं निर्गुणं नित्यमद्वयम् ॥ ३९ ॥
ऋतं विन्दन्ति मुनयः प्रशान्तात्मेन्द्रियाशयाः । यदा तदैवासत्तर्कैस्तिरोधीयेत विप्लुतम् ॥ ४० ॥
आद्योऽवतारः पुरुषः परस्य कालः स्वभावः सदसन्मनश्च ।
द्रव्यं विकारो गुण इन्द्रियाणि विराट् स्वराट् स्थास्नु चरिष्णु भूम्नः ॥ ४१ ॥
अहं भवो यज्ञ इमे प्रजेशा दक्षादयो ये भवदादयश्च ।
स्वर्लोकपालाः खगलोकपाला नृलोकपालास्तळलोकपालाः ॥ ४२ ॥
गन्धर्वविद्याधरचारणेशा ये यक्षरक्षोरगनागनाथाः ।
ये वा ऋषीणां ऋषभाः पितॄणां दैत्येन्द्रसिद्धेश्वरदानवेन्द्राः ॥ ४३ ॥
अन्ये च ये प्रेतपिशाचभूतकूष्माण्डयादोमृगपक्ष्यधीशाः ।
यत् किं च लोके भगवन्महस्वदोजःसहस्वद् वलवत् क्षमावत् ।
ह्रीश्रीविभूत्यात्मवदद्भुतार्णं तत् तत्पदं रूपवदस्वरूपम् ॥ ४४ ॥
प्राधान्यतो यानृषय आमनन्ति लीलावतारान् पुरुषस्य भूम्नः ।
आपीयतां कर्मकषायशोषाननुक्रमिष्ये त इमान् सुपेशलान् ॥ ४५ ॥

**॥ इति श्रीमद्भागवते द्वितीयस्कन्धे षष्ठोऽध्यायः ॥**

---

**ब्रह्मोवाच**

यत्रोद्यतः[१] क्षितितळोद्धरणाय बिभ्रत् क्रौडीं तनुं सकलयज्ञमयीमनन्तः ।
अन्तर्महार्णव उपागतमादिदैत्यं तं दंष्ट्रयाऽद्रिमिव वज्रधरो ददार ॥ १ ॥
जातो रुचेरजनयत् सुयशाः सुयज्ञ आकूतिसूनुरमरानथ दक्षिणायाम् ।
लोकत्रयस्य महतीमहरद् य आर्तिं स्वायम्भुवेन मनुना हरिरित्यनूक्तः ॥ २ ॥

---

१. यत्रोद्गतः

जज्ञे च कर्दमगृहे द्विज देवहूत्यां स्त्रीभिः समं नवभिरात्मगतिं स्वमात्रे ।
ऊचे य आत्मशमलं गुणसङ्गपङ्कमस्मिन् विधूय कपिलः स्वगतिं प्रपेदे ॥ ३ ॥
अत्रेरपत्यमभिकाङ्क्षत आह तुष्टो दत्तो मयाऽहमिति यद् भगवान् स दत्तः ।
यत्पादपङ्कजपरागपवित्रदेहा योगर्धिमापुरमयीं यदुहैहयाद्याः ॥ ४ ॥
तप्तं तपो विविधलोकसिसृक्षया म आदौ सनात् सुतपसस्तपतः स नोऽभूत् ।
प्राक्कल्पसम्प्लवविनष्टमिहात्मतत्वं सम्यग् जगाद मुनयो यदचक्षतात्मन् ॥ ५ ॥
धर्मस्य दक्षदुहितर्यजनि स्वमूर्त्या नारायणो नर इति स्वतपःप्रभावः ।
दृष्टात्मनो[1] भगवतो नियमावलोपं देव्यस्त्वनङ्गपृतना घटितुं न शेकुः ॥ ६ ॥
कामं दहन्ति कृतिनो ननु रोषदृष्ट्या रोषं दहन्तमुत ते न दहन्त्यसँह्यम् ।
सोऽयं यदन्तरमलं निविशन् बिभेति कामः कथं नु पुनरस्य मनः श्रयेत ॥ ७ ॥
विद्धः सपत्न्युदितपत्रिभिरन्ति राज्ञो बालोऽपि सन्नपगतस्तपसे वनाय ।
तस्मा अदाद् ध्रुवगतिं गृणते प्रसन्नो दिव्याः स्तुवन्ति मुनयो यदुपर्यधस्तात् ॥ ८ ॥
यद् वेनमुत्पथगतं द्विजवाक्यवज्रनिष्पिष्टपौरुषभगं निरये पतन्तम् ।
ज्ञात्वाऽर्थितो जगति पुत्रपदं च लेभे दुग्धा वसूनि वसुधा सकलानि येन ॥ ९ ॥
नाभेरसावृषभ आस सुदेविसूनुर्यो वै चचार समदृग् हृदि योगचर्याम् ।
यत् पारमहंस्यमृषयः[2] पदमामनन्ति स्वस्थः प्रशान्तकरणः परिमुक्तसङ्गः ॥ १० ॥
सत्रे ममास भगवान् हयशीर्ष एषः साक्षात् स यज्ञपुरुषस्तपनीयवर्णः ।
छन्दोमयो मखमयोऽखिलदेवतात्मा वाचो बभूवुरुशतीः श्वसतोऽस्य नस्तः ॥ ११ ॥
मत्स्यो युगान्तसमये मनुनोपलब्धः क्षोणीमयो निखिलजीवनिकायकेतः ।
विस्रंसितानुरुभये सलिले मुखान्म आदाय तत्र विजहार ह वेदमार्गान् ॥ १२ ॥
क्षीरोदधावमरदानवयूथपानामुन्मथ्नताममृतलब्धय आदिदेवः ।
पृष्ठेन कच्छपवपुर्विदधार गोत्रं निद्रेक्षणोऽद्रिपरिवर्तकषाणकण्डुः ॥ १३ ॥
त्रैविष्टपोरुभयहारि नृसिंहरूपं कृत्वा भ्रमद्भ्रुकुटिदंष्ट्रकराळवक्त्रम् ।
दैत्येन्द्रमाशु गदयाऽभिपतन्तमारादूरौ निपात्य विददार नखैः स्फुरन्तम् ॥ १४ ॥

---

१. दृष्ट्वाऽऽत्मनः * २. यत् पारमहंस्यमृषयः *

अन्तःसरस्युरुबलेन पदे गृहीतो ग्राहेण यूथपतिरम्बुजहस्त आर्तः ।
आहेदमादिपुरुषाखिललोकनाथ तीर्थश्रवः श्रवणमङ्गळनामधेय ॥ १५ ॥
स्मृत्वा हरिस्तमरणार्थिनमप्रमेयश्चक्रायुधः पतगराजभुजाधिरूढः ।
चक्रेण नक्रवदनं विनिपाट्य तस्माद् हस्ते प्रगृह्य भगवान् कृपयोज्जहार ॥ १६ ॥
ज्यायान् गुणैरवरजोऽप्यदितेः सुतानां लोकान् विचक्रम इमान् यदथोऽधियज्ञः ।
क्ष्मां वामनेन जगृहे त्रिपदच्छलेन याच्ञामृते पथि चरन् प्रभुभिर्न चाल्यः ॥ १७ ॥
नार्थो बलेरयमुरुक्रमपादशौचमम्भः शिवं धृतवतो विबुधाधिपत्यम् ।
यौ वै प्रतिश्रुतमृतेऽपि च शीर्षमाणमात्मन्यमङ्ग मनसा हरयेऽभिमेने ॥ १८ ॥
तुभ्यं च नारद भृशं भगवान् विवृद्धभावेन साधु परितुष्ट उवाच योगम् ।
ज्ञानं च भागवतमात्मसुतत्वदीपं यद् वासुदेवशरणा विदुरञ्जसैव ॥ १९ ॥
चक्रं च दिक्ष्वविहतं दशसु स्वतेजो मन्वन्तरेषु मनुवंशधरो बिभर्ति ।
दुष्टेषु राजसु दमं विदधत् स्वकीर्तिं सत्ये निविष्ट उशतीं प्रथयंश्चरित्रैः ॥ २० ॥
धन्वन्तरिश्च भगवान् स्वयमास देवो नाम्ना नृणां पुरुरुजां रुज आशु हन्ति ।
यज्ञे च भागममृतायुरवाप चाद्धा आयुश्च वेदमनुशास्त्यवतीर्य लोके ॥ २१ ॥
क्षत्रं क्षयाय विधिनोपहृतं महात्मा ब्रह्मध्रुगुज्झितपथं नरकार्तिलिप्सु ।
उद्धन्त्यसाववनिकण्टकमुग्रवीर्य[1]स्त्रिःसप्तकृत्व उरुधारपरश्वधेन ॥ २२ ॥
कृत्स्नप्रसादसुमुखः कलया कलेश इक्ष्वाकुवंश अवतीर्य गुरोर्निदेशे ।
तिष्ठन् वनं सदयितानुज आविवेश यस्मिन् विरुध्य दशकन्धर आर्तिमार्च्छत् ॥ २३ ॥
यस्मा अदादुदधिरूढभयाङ्गवेपो मार्गं सपद्यरिपुरं हरवद् दिधक्षोः ।
दूरेसुहृन्मथितरोषसुशोषदृष्ट्या तातप्यमानमकरोरगनक्रचक्रः ॥ २४ ॥
वक्षःस्थलस्पर्शरुग्णमहेन्द्रवाहदन्तैर्विळम्बितककुब्जयरूढहासः ।
सद्योऽसुभिः सह विनेष्यति दारहर्तुर्विष्फूर्जितैर्धनुष[2] उच्चरितैः ससैन्यः ॥ २५ ॥
भूमेः सुरेतरवरूथविमर्दितायाः क्लेशव्ययाय कलया सितकृष्णकेशः ।
जातः करिष्यति जनानुपलक्ष्यमार्गः कर्माणि चात्ममहिमोपनिबन्धनानि ॥ २६ ॥

---

१. अग्र्यवीर्यः ❋ २. विस्फूर्जितेत्यर्वाचीनपाठः । विष्फूर्जितेति प्राचीनः । आसमाप्ति चेदं बोध्यम् ।

तोकेन जीवहरणं यदुलूपिकायास्त्रैमासिकस्य च पदा शकटोऽपवृत्तः ।
यद् [१]रिङ्गताऽन्तरगतेन दिविस्पृशोर्वा उन्मूलनं त्वितरथाऽर्जुनयोर्न भाव्यम्॥ २७ ॥
यद्वै व्रजे व्रजपशून् विषतोयपीतान् गोपांस्तु जीवयदनुग्रहदृष्टिवृष्ट्या ।
तच्छुद्धयेऽतिविषवीर्यविलोलजिह्वमुच्चाटयिष्यदुरगं विहरद् ह्रदिन्याम् ॥ २८ ॥
तत् कर्म दिव्यमिव यन्निशि निःशयानं दावाग्निनाऽऽशु विपिने परिदह्यमाने ।
उन्नेष्यति व्रजमितोऽवसितान्तकालं नेत्रे पिधाय[२] सबलोऽनधिगम्यवीर्यः ॥ २९ ॥
गृह्णीत यद्यदुपबद्धुममुष्य माता शुल्बं सुतस्य नतु तत्तदमुष्य माति ।
यज्जृम्भतोऽस्य वदने भुवनानि गोपी संवीक्ष्य शङ्कितमनाः प्रतिबोधितस्य ॥ ३० ॥
नन्दं च मोक्ष्यति भयाद् वरुणस्य पाशाद् गोपान् बिलेषु पिहितान् मयसूनुना च ।
जल्प्यावृतं निशि शयानमतिश्रमेण लोके विकुण्ठ उपधास्यति गोकुलं सः[३] ॥ ३१ ॥
गोपैर्मखे प्रतिहते व्रजविप्लवाय देवेऽभिवर्षति पशून् कृपया रिरक्षुः ।
धर्तोच्छिलीन्ध्रमिव सप्तदिनानि सप्तवर्षो महीध्रमनघैककरे सलीलम् ॥ ३२ ॥
क्रीडन् वने निशि निशाकररश्मिगौर्यां रासोन्मुखः कळपदायतमूर्च्छितेन ।
उद्दीपितस्मररुजां व्रजसद्वधूनां हर्तुर्हरिष्यति शिरो धनदानुगस्य ॥ ३३ ॥
ये च प्रलम्बखरदर्दुरकेश्यरिष्टमल्लेभकंसयवनाः कुजपौण्ड्रकाद्याः ।
अन्येऽपि साल्वकपिवल्कल[४]दन्तवक्रसप्तोक्षशम्बरविदूरथरुग्मिमुख्याः ॥ ३४ ॥
ये वा मृधे समितिशालिन आत्तचापाः काम्बोजमत्स्यकुरुसृञ्जयकैकयार्णाः ।
यास्यन्त्यदर्शनमिता बलपार्थभीमव्याजाह्वयेन हरिणा निलयं तदीयम् ॥ ३५ ॥
कालेन मीलितदृशामवमृश्य नृणां स्तोकायुषां[५] स्वनिगमो बत दूरपारः ।
आविर्हितस्त्वनुयुगं स हि सत्यवत्यां वेदद्रुमं विटपशो विभजिष्यति स्म ॥ ३६ ॥
देवद्विषां निगमवर्त्मनि निष्ठितानां पूर्भिर्मयेन विहिताभिरदृश्यमूर्तिः ।
लोकान् घ्नतां मतिविमोहमतिप्रलोभं वेषं विधाय यदभाषत औपधर्म्यम् ॥ ३७ ॥

---

१. रङ्गता ❋ २. पिधाय्य/पिधाप्य ३. गोकुलं स्म ४. कपिबल्वल....
५. तोकायुषाम् ❋

यर्ह्यालयेष्वपि सतां न कथा हरेः स्युः पाषण्डिनो द्विजजना वृषळा नृदेवाः ।
स्वाहा स्वधा वषडिति स्म गिरो न यत्र शास्ता भविष्यति कलेर्भगवान् युगान्ते ॥
सर्गे तु योऽहमृषयो नव ये प्रजेशाः स्थानेऽथ धर्ममखमन्वमरावनीशाः ।
अन्ते त्वधर्महरमन्युवशासुराद्या मायाविभूतय इमाः पुरुशक्तिभाजः ॥ ३९ ॥
विष्णोर्नु वीर्यगणनां कतमोऽर्हतीह यः पार्थिवान्यपि कविर्विममे रजांसि ।
चस्कम्भ यः स्वरभसा स्खलितं त्रिपृष्ठं यन्मां निशाम्य सदनादुरुकम्पमानम् ॥ ४० ॥
नान्तं विदाम्यहममी मुनयः प्रजेशा मायाबलस्य पुरुषस्य कुतोऽपरे ये ।
गायन् गुणान् दशशतानन आदिदेवः शेषोऽधुनाऽपि समवस्यति नास्य पारम् ॥
येषां स एव भगवान् दययेदनन्तः सर्वात्मनाऽऽश्रितपदो यदि निर्व्यळीकम् ।
ते वै विदन्त्यतितरन्ति च देवमायां नैषां ममाहमिति धीः श्वसृगालभक्ष्ये[1] ॥ ४२ ॥
वेदाहमङ्ग परमस्य हि योगमायां यूयं भवश्च भगवानथ दैत्यवर्यः ।
पत्नी मनोः स च मनुस्तदपत्यभूताः[2] प्राचीनबर्हि ऋभुरङ्ग उत ध्रुवश्च ॥ ४३ ॥
इक्ष्वाकुरैळमुचुकुन्दविदेहगाधिरघ्वम्बरीषसगरा गयनाहुषाद्याः ।
मान्धात्रळर्कशतधन्वनरन्तिदेवदेवव्रता बलिरमूर्तरयो[3] दिलीपः ॥ ४४ ॥
सौभर्युदङ्कशिबिदेवलपिप्पलादाः सारस्वतोद्धवपराशरभूरिषेणाः ।
येऽन्ये विभीषणहनूमदुपेन्द्रदत्तपार्थार्ष्टिषेणविदुरश्रुतदेवमुख्याः[4] ॥ ४५ ॥
ते वै विदन्त्यतितरन्ति च देवमायां स्त्रीशूद्रहूणशबरा अपि पापजीवाः ।
यद्यद्भुतक्रमपरायणशीलशिक्षास्तिर्यग्जना अपि किमु श्रुतधारणा ये ॥ ४६ ॥
शश्वत् प्रशान्तमभयं प्रतिबोधमात्रं शुद्धं समं सदसतः परमात्मतत्वम् ।
शब्दो न यत्र पुरुकारकवान् क्रियार्थो माया परैत्यभिमुखे च विलज्जमाना ॥ ४७ ॥
तद्वै पदं भगवतः परमस्य पुंसो ब्रह्मेति यद् विदुरजस्रसुखं विशोकम् ।
सम्यङ् निशाम्य यतयो यमलोकहेतुं जह्युः सुधामिव निपानखनित्रमिन्द्रः ॥ ४८ ॥
स श्रेयसामपि विभुर्भगवान् यतोऽस्य भावस्वभावविहितस्य सतः प्रसिद्धः ।
देहे स्वधातुविगमे तु विशीर्यमाणे व्योमेव तत्र पुरुषो न विशीर्यतेऽजः ॥ ४९ ॥

१. एषां ममाहमिति न श्वसृगालभक्ष्ये
२. स च मनुश्च तदात्मजाश्च ❋
३. असूर्तरयः ❋
४. श्रुतसेनभूपाः ❋

सोऽयं तेऽभिहितस्तात भगवान् विश्वभावनः । समासेन हरेर्नान्यदन्यस्मात् सदसच्च यत् ॥ ५० ॥
इदं भागवतं नाम यन्मे भगवतोदितम् । सङ्ग्रहोऽयं विभूतीनां तदेतद् विपुळीकुरु ॥ ५१ ॥
यथा हरौ भगवति नृणां भक्तिर्भविष्यति । सर्वात्मन्यखिलाधार इति सङ्कल्प्य वर्णय ॥ ५२ ॥
नृजन्मनि न तुष्येत किं फलं यमनश्वरे । कृष्णे यद्यपवर्गेशे भक्तिः स्यान्नानपायिनी ॥ ५३ ॥
किं स्याद् वर्णाश्रमाचारैः किं दानैः किं तपःश्रुतैः । सर्वाघघ्नोत्तमश्लोके न चेद् भक्तिरधोक्षजे ॥५४॥
मायां वर्णयतोऽमुष्य ईश्वरस्यानुमोदतः । शृण्वतः श्रद्धया नित्यं माययाऽऽत्मा न मुह्यति ॥ ५५ ॥

**॥ इति श्रीमद्भागवते द्वितीयस्कन्धे सप्तमोऽध्यायः ॥**

---

**राजोवाच**

ब्रह्मणा चोदितो ब्रह्मन् गुणाख्यानेऽगुणस्य च । यस्मैयस्मै यथा प्राह नारदो देवदर्शनः ॥ १ ॥
एतद् वेदितुमिच्छामि तत्वं वेदविदां वर । हरेरद्भुतवीर्यस्य कथा लोकसुमङ्गळाः ॥ २ ॥
प्रथयस्व महाभाग यथाऽहमखिलात्मनि । कृष्णे निवेश्य निःसङ्गं मनस्त्यक्ष्ये कळेबरम् ॥ ३ ॥
शृण्वतः श्रद्धया नित्यं गृणतश्च स्वचेष्टितम् । कालेनानतिदीर्घेण भगवान् विशते हृदि ॥ ४ ॥
प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम् । धुनोति शमलं कृष्णः सलिलस्य[१] यथा शरत् ॥ ५ ॥
धौतात्मा पुरुषः कृष्णपादमूलं न मुञ्चति । मुक्तसर्वपरिक्लेशः पान्थः स्वशरणं यथा ॥ ६ ॥
यदधातुमतो ब्रह्मन् देहारम्भोऽस्य धातुभिः । यदृच्छया हेतुना वा भवन्तो जानते यथा ॥ ७ ॥
आसीद् यदुदरात् पद्मं लोकसंस्थानलक्षणम् । यावानयं वै पुरुष इयत्तावयवैः पृथक् ।
तावानसाविति प्रोक्तस्तथाऽवयववानिव ॥ ८ ॥
अजः सृजति भूतानि भूतात्मा यदनुग्रहात् । ददृशे येन तद्रूपं नाभिपद्मसमुद्भवः ॥ ९ ॥
स चापि यत्र पुरुषो विश्वस्थित्युद्भवाप्ययः। मुक्त्वाऽऽत्ममायां मायेशः शेते सर्वगुणाश्रयः ॥ १० ॥
पुरुषावयवैर्लोकाः सपालाः पूर्वकल्पिताः । लोकैरमुष्यावयवाः सपालैरिति शुश्रुमः ॥ ११ ॥
यावान् कल्पो विकल्पो वा यथा कालोऽनुमीयते । भूतभव्यभवच्छब्द आयुर्मानं च यत्कृतम्॥ १२ ॥
कालस्यानुगतिर्या तु लक्ष्यतेऽण्वी महत्यपि । यावतीः कर्मगतयो यादृशीर्द्विजसत्तम ॥ १३ ॥

---

१. सलिलस्थम्

यस्मिन् कर्मसमावापो यथा येनोपगृह्यते । गुणानां गुणिनां चैव परिमाणं सुविस्तरम् ॥ १४ ॥
भूपाताळककुब्व्योमग्रहनक्षत्रभूभृताम् । सरित्समुद्रद्वीपानां सम्भवं चैतदोकसाम् ॥ १५ ॥
प्रमाणमण्डकोशस्य बाह्याभ्यन्तरवस्तुनः । महतां चानुचरितं वर्णाश्रमविनिर्णयम्[1] ॥ १६ ॥
अवतारानुचरितं यदाश्चर्यतमं हरेः । युगानि युगमानं च धर्मो यश्च युगेयुगे ॥ १७ ॥
नृणां साधारणो धर्मः सविशेषश्च यादृशः । श्रेणीनां राजर्षीणां च धर्मः कृच्छ्रेषु जीवताम् ॥ १८ ॥
तत्वानां परिसङ्ख्यानं लक्षणं हेतुलक्षणम् । पुरुषाराधनविधिर्योगस्याध्यात्मिकस्य च ॥ १९ ॥
योगेश्वरैश्वर्यगतिं लिङ्गभङ्गं च योगिनाम् । वेदोपवेदधर्माणामितिहासपुराणयोः ॥ २० ॥
सम्भवः सर्वभूतानां विक्रमः प्रतिसङ्क्रमः । इष्टापूर्तस्य काम्यानां त्रिवर्गस्य च यो विधिः ॥ २१ ॥
यो वाऽनुशयिनां सर्गः पाषण्डस्य[2] च सम्भवः । आत्मनो बन्धमोक्षौ च व्यवस्थानं स्वरूपतः ॥
यथात्मतन्त्रो भगवान् विक्रीडत्यात्ममायया । विसृज्य च यथा मायामुदास्ते साक्षिवद् विभुः ॥ २३ ॥
सर्वमेतच्च भगवान् पृच्छतो मेऽनुपूर्वशः । तत्वतोऽर्हस्युदाहर्तुं प्रपन्नाय महामुने ॥ २४ ॥
अत्र प्रमाणं हि भवान् परमेष्ठी यथाऽऽत्मभूः । अपरे ह्यनुतिष्ठन्ति पूर्वेषां पूर्वजैः कृतम् ॥ २५ ॥
न मेऽसवः परायन्ति ब्रह्मन्ननशनादमी । पिबतोऽच्युतपीयूषं त्वद्वाक्याब्धि विनिःसृतम् ॥ २६ ॥

**सूत उवाच**

स उपामन्त्रितो राज्ञा कथायामिति सत्पतेः । ब्रह्मरातो भृशं प्रीतो विष्णुरातेन संसदि ॥ २७ ॥
आह भागवतं नाम पुराणं ब्रह्मसम्मितम् । ब्रह्मणे भगवत्प्रोक्तं ब्रह्मकल्प उपागते ॥ २८ ॥
यद्यत् परीक्षिद् ऋषभः पाण्डूनामनुपृच्छति । आनुपूर्व्येण तत् सर्वमाख्यातुमुपचक्रमे ॥ २९ ॥

**॥ इति श्रीमद्भागवते द्वितीयस्कन्धे अष्टमोऽध्यायः ॥**

---

**श्रीशुक उवाच**

आत्ममायामृते राजन् परस्यानुभवात्मनः। न घटेतार्थसम्बन्धः स्वप्ने द्रष्टुरिवाञ्जसा ॥ १ ॥
बहुरूप इवाभाति मायया बहुरूपया । रममाणो गुणेष्वस्या ममाहमिति मन्यते ॥ २ ॥
यर्हि चायं महित्वे स्वे परस्मिन् कालमाययोः। रमते गतसम्मोहस्त्यक्त्वोदास्ते तदोभयम् ॥ ३ ॥

---

१. विनिश्चयम् ❋

२. प्राचीनकोषस्थपाषण्डशब्दोऽर्वाचीनकोशेषु नियमेन पाखण्ड इति पठ्यत इत्यासमाप्ति ध्येयम् ।

आत्मतत्वविशुद्ध्यर्थं यदाह भगवानृतम् । ब्रह्मणेऽदर्शयद् रूपमव्यळीकव्रतादृतः ॥ ४ ॥

स आदिदेवो भजतां परो गुरुः स्वधिष्ण्यमास्थाय सिसृक्षयैक्षत ।
तां नाध्यगच्छद् दृशमत्र सम्मतां प्रपञ्चनिर्माणविधिर्यया भवेत् ॥ ५॥

सञ्चिन्तयन् द्व्यक्षरमेकदाम्भस्युपाशृणोद् द्विर्गदितं[१] वचो विभुः ।
स्पर्शेषु यच्छोडशमेकविंशं निष्किञ्चनानां नृप यद् धनं विदुः ॥ ६ ॥

निशम्य तद्वक्तृदिदृक्षया दिशो विलोक्य तत्रान्यदपश्यमानः ।
स्वधिष्ण्यमास्थाय[२] विमृश्य तद्धितं तपस्युपादिष्ट इवादधे मनः ॥ ७ ॥

दिव्यं सहस्राब्दममोघदर्शनो जितानिलात्मा विजितोभयेन्द्रियः ।
अतप्यत स्माखिललोकतापनं तपस्तपीयांस्तपतां समाहितः ॥ ८ ॥

तस्मै स्वलोकं[३] भगवान् सभाजितः सन्दर्शयामास परं न यत् पदम् ।
व्यपेतसङ्क्लेशविमोहसाध्वसं सन्दृष्टवद्भिर्विबुधैरभिष्टुतम् ॥ ९ ॥

न वर्तते यत्र रजस्तमस्तयोः सत्वं च मिश्रं न च कालविक्रमः ।
न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः ॥ १० ॥

श्यामावदाताः शतपत्रलोचनाः पिशङ्गवस्त्राः सुरुचः सुपेशसः ।
सर्वे चतुर्बाहव उन्मिषन्मणिप्रवेकनिष्काभरणाः सुवर्चसः ॥ ११ ॥

प्रवाळवैडूर्यमृणालवर्चसां परिस्फुरत्कुण्डलमौळिमालिनाम् ।
भ्राजिष्णुभिर्यः परितो विराजते लसद्विमानावळिभिर्महात्मनाम् ।
विद्योतमानप्रमदोत्तमाभिः सविद्युदभ्रावळिभिर्यथा नभः ॥ १२ ॥

श्रीर्यत्र रूपिण्युरुगायपादयोः करोति मानं बहुधा विभूतिभिः ।
प्रेङ्खश्रिता या कुसुमाकरानुगैर्विगीयमाना प्रियकर्म गायती ॥ १३ ॥

ददर्श तत्राखिलसात्वतां पतिं श्रियःपतिं यज्ञपतिं जगत्पतिम् ।
सुनन्दनन्दप्रबलार्हणादिभिः स्वपार्षदमुख्यैः परिसेवितं विभुम् ॥१४॥

भृत्यप्रसादाभिमुखं दृगासवैः प्रसन्नहासारुणलोचनाननम् ।
किरीटिनं कुण्डलिनं चतुर्भुजं पीतांशुकं वक्षसि लक्षितं श्रिया ॥ १५ ॥

---

१. उपाशृणोद् वै गदितम् ❋   २. स्वधिष्ण्यमाविश्य ❋   ३. स लोकम् ❋

अध्यर्हणीयासनमास्थितं परं वृतं चतुष्षोडशपञ्चशक्तिभिः ।
युक्तं भगैः स्वैरितरत्र चाध्रुवैः स्व एव धामन् रममाणमीश्वरम् ॥ १६ ॥
तद्दर्शनाह्लादपरिप्लुतान्तरो हृष्यत्तनुः प्रेमभराश्रुलोचनः ।
ननाम पादाम्बुजमस्य विश्वसृग् यत् पारमहंस्येन[१] पथाऽधिगम्यते ॥ १७ ॥
तं प्रीयमाणं समुपस्थितं कविं प्रजाविसर्गे निजशासनार्हणम् ।
बभाष ईषत्स्मितशोचिषा गिरा प्रियः प्रियं प्रीतमनाः करे स्पृशन् ॥ १८ ॥

**श्रीभगवानुवाच**

त्वयाऽहं[२] तोषितः सम्यग् वेदगर्भ सिसृक्षया । चिरं भृतेन तपसा दुस्तोषः कूटयोगिनाम् ॥ १९ ॥
वरं वरय भद्रं ते वरेशं माऽभिवाञ्छितम् । सर्वश्रेयःपरिश्रामः पुंसां मद्दर्शनावधिः ॥ २० ॥
मनीषितानुभावोऽयं मम लोकावलोकनम् । यदुपश्रुत्य रहसि चकर्थ[३] परमं तपः ॥ २१ ॥
प्रत्यादिष्टं मया तत्र त्वयि कर्मविमोहिते । तपो मे हृदयं साक्षादात्माऽहं तपसोऽनघ ॥ २२ ॥
सृजामि तपसैवेदं ग्रसामि तपसा पुनः । बिभर्मि तपसा विश्वं वीर्यं मे दुस्तरं तपः ॥ २३ ॥

**ब्रह्मोवाच**

भगवन् सर्वभूतानामध्यक्षोऽवस्थितो गुहाम् । वेद ह्यप्रतिरुद्धेन प्रज्ञानेन चिकीर्षितम् ॥ २४ ॥
अथापि नाथमानाय[४] नाथ नाथय नाथितम् । परावरे यथा रूपे जानीयां ते त्वरूपिणः ॥ २५ ॥
यथाऽऽत्ममायायोगेन नानाशक्त्युपबृंहितः । विलुम्पन् विसृजन् गृह्णन् बिभ्रदात्मानमात्मना ॥ २६ ॥
क्रीडस्यमोघसङ्कल्प ऊर्णनाभिर्यथोर्णुते । तथा तद्विषयां धेहि मनीषां मयि माधव ॥ २७ ॥
भगवच्छिक्षितमहं करवाणि ह्यतन्द्रितः । नेहमानः प्रजासर्गं बध्येयं यदनुग्रहात् ॥ २८ ॥
यावत्सखा सख्युरिवेश ते कृतः प्रजाविसर्गे विभजामि भोजनम् ।
अविक्लबस्ते परिकर्मणि स्थितो मा मे समुन्नद्धमदोऽजमानिनः ॥ २९ ॥

**श्रीभगवानुवाच**

ज्ञानं परमगुह्यं मे यद् विज्ञानसमन्वितम् । सरहस्यं तदङ्गं च गृहाण गदितं मया ॥ ३० ॥
यावानहं यथाभावो यद्रूपगुणकर्मकः । तथैव तत्वविज्ञानमस्तु ते मदनुग्रहात् ॥ ३१ ॥

---

१. पारहंस्येन  २. तवाहम् *  ३. चचर्थ *  ४. नाथमानस्य *

अहमेवासमग्रे च नान्यद् यत् सदसत् परम् । पश्चादहं त्वमेतच्च योऽवशिष्येत सोऽस्म्यहम् ।। ३२ ।।
ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि । तद् विद्यादात्मनो मायां यथाभासो यथातमः ।। ३३ ।।
यथा महान्ति भूतानि भूतेषूच्चावचेषु तु[१] । प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम् ।। ३४ ।।
एतावदेव जिज्ञास्यं तत्वजिज्ञासुनाऽऽत्मनः । अन्वयव्यतिरेकाभ्यां यत् स्यात् सर्वत्र सर्वदा।। ३५ ।।
एतन्मतं म आतिष्ठ[२] परमेण समाधिना । भवान् कल्पविकल्पेषु न विमुह्यति कर्हिचित् ।। ३६ ।।

**श्रीशुक उवाच**

सम्प्रदश्यैवमजनो जनानां परमेष्ठिनः । पश्यतस्तस्य तद्रूपमात्मनो न्यरुणद् हरिः ।। ३७ ।।
अन्तर्हितेन्द्रियार्थाय हरयेऽवहिताञ्जलिः । सर्वभूतमयो विश्वं ससर्जेदं स पूर्ववत् ।। ३८ ।।
प्रजापतिर्धर्मपतिरेकदा नियमान् यमान् । भद्रं प्रजानामन्विच्छन्नाचरत्[३] स्वार्थकाम्यया ।। ३९ ।।
तं नारदः प्रियतमो रिक्थादानामनुव्रतः । शुश्रूषमाणः शीलेन प्रश्रयेण दमेन च ।। ४० ।।
मायां विविदिषुर्विष्णोर्मायेशस्य महामुनिः । महाभागवतो राजन् पितरं पर्यतोषयत् ।। ४१ ।।
तुष्टं निशाम्य पितरं लोकानां प्रपितामहम् । देवर्षिः परिपप्रच्छ भवान् यन्माऽनुपृच्छति ।। ४२ ।।
तस्मा इदं भागवतं पुराणं दशलक्षणम् । प्रोक्तं भगवता प्राह प्रीतः पुत्राय भूतकृत् ।। ४३ ।।
नारदः प्राह मुनये सरस्वत्यास्तटे नृप । ध्यायते ब्रह्म परमं व्यासायामिततेजसे ।। ४४ ।।
यदुताहं त्वया पृष्टो वैराजात् पुरुषादिदम् । यथाऽऽसीत् तदुपाख्यास्ये प्रश्नानन्यांश्च कृत्स्नशः ।।४५।।

**।। इति श्रीमद्भागवते द्वितीयस्कन्धे नवमोऽध्यायः ।।**

---

**श्रीशुक उवाच**

अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः । मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः ।। १ ।।
दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम् । वर्णयन्ति महात्मानः श्रुतेनार्थेन चाञ्जसा ।। २ ।।
भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः । ब्रह्मणो गुणवैषम्याद् विसर्गः पौरुषः स्मृतः ।। ३ ।।
स्थितिर्वैकुण्ठविजयः पोषणं तदनुग्रहः । मन्वन्तराणि सद्धर्मा ऊतयः कर्मवासनाः ।। ४ ।।
अवतारानुचरितं हरेश्चास्यानुवर्तिनाम् । पुंसामीशकथा प्रोक्ता नानाख्यानोपबृंहिता ।। ५ ।।

---

१. च    २. ममातिष्ठ    ३. अतिष्ठत्

निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः । मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः ॥ ६ ॥
आभासश्च निरोधश्च यतस्तद् यत्र मीयते[1] । स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते ॥ ७ ॥
आध्यात्मिको यः पुरुषः सोऽसावेवाधिदैविकः । यस्तत्रोभयविच्छेदः स स्मृतो ह्याधिभौतिकः ॥ ८ ॥
एतदेकतमाभावे यदा नोपलभामहे । त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः ॥ ९ ॥
पुरुषोऽण्डं विनिर्भिद्य यदासौ स विनिर्गतः । आत्मनोऽयनमन्विच्छन्नपोऽस्राक्षीच्छुचिः शुचीः ॥१०॥
तास्ववात्सीत् स्वसृष्टासु सहस्रपरिवत्सरान् । तेन नारायणो नाम यदापः पुरुषोद्भवाः ॥ ११ ॥
द्रव्यं कर्म च कालश्च स्वभावो जीव एव च । यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया ॥ १२ ॥
एको नानात्वमन्विच्छन् योगतल्पात् समुत्थितः । वीर्यं हिरण्मयं देवो मायया व्यसृजत् त्रिधा॥१३॥
अधिदैवमथाध्यात्ममधिभूतमिति प्रभुः । पुनस्तत् पौरुषं वीर्यं त्रिधाऽभिद्यत तच्छृणु ॥ १४ ॥
अन्तःशरीर आकाशे पुरुषस्य विचेष्टतः । ओजः सहो बलं जज्ञे ततः प्राणो महानभूत् ॥ १५ ॥
अनुप्राणन्ति यं प्राणाः प्राणन्तं सर्वजन्तुषु । अपानन्तमपानन्ति नरदेवमिवानुगाः ॥ १६ ॥
प्राणेन क्षिपता क्षुत्तृडन्तरा जायते विभोः[2] । पिपासतो जक्षतश्च प्राङ् मुखं निरभिद्यत ॥ १७ ॥
मुखतस्तालु निर्भिण्णं जिह्वा तत्रोपजायते । ततो नानारसो जज्ञे जिह्वया योऽधिगम्यते ॥ १८ ॥
विवक्षोर्मुखतो भूम्नो वह्निर्वाग् व्याहृतं तयोः । जले वै तस्य सुचिरं निरोधः समजायत ॥ १९ ॥
नासिके निरभिद्येतां दोधूयति नभस्वति । तत्र वायुर्गन्धवहो घ्राणो नसि जिघृक्षतः ॥ २० ॥
यदात्मनि निरालोक आत्मानं च दिदृक्षतः । निर्भिण्णे अक्षिणी तस्य ज्योतिश्चक्षुर्गुणग्रहः ॥ २१ ॥
बोध्यमानस्य ऋषिभिरात्मनस्तज्जिघृक्षतः । कर्णौ च निरभिद्येतां दिशः श्रोत्रं गुणग्रहः ॥ २२॥
वस्तुनो मृदुकाठिन्यलघुगुर्वुष्णशीतताम् । जिघृक्षतस्त्वङ् निर्भिण्णा तस्यां रोममहीरुहाः ।
तत्र चान्तर्बहिर्वातस्त्वचा लब्धगुणावृतः ॥ २३ ॥
हस्तौ रुरुहतुस्तस्य नानाकर्मचिकीर्षया । तयोस्तु बलवानिन्द्र आदानमुभयाश्रयम् ॥ २४ ॥
गतिं चिकीर्षतः पादौ रुरुहातेऽभिकामतः । पद्भ्यां यज्ञः स्वयं हव्यं कर्म यत् क्रियते नृभिः ॥ २५ ॥
निरभिद्यत शिश्नो वै प्रजानन्दामृतार्थिनः । उपस्थ आसीत् कामानां प्रियं तदुभयाश्रयम् ॥ २६ ॥
उत्सिसृक्षोर्धातुमलं निरभिद्यत वै गुदम् । ततः पायुस्ततो मित्र उत्सर्ग उभयाश्रयः ॥ २७ ॥
आसिसृक्षोः पुरः पुर्यां नाभिद्वारमपावृतम् । ततोऽपानस्ततो मृत्युः पृथक्त्वमुभयाश्रयम् ॥ २८ ॥

---

१. यतस्तत् त्रयमीयते २. प्रभोः *

आदित्सोरन्नपानानां असृक् कुक्ष्यन्त्रनाडिके[१] । नद्यः समुद्राश्च तयोस्तृप्तिः पुष्टिस्तदाश्रये॥ २९ ॥
निदिध्यासोरात्ममायां हृदयं निरभिद्यत । ततो मनश्चन्द्र इति सङ्कल्पः काम एव च ॥ ३० ॥
त्वक्चर्ममांसरुधिरमेदोमज्जास्थिधातवः । भूम्यप्तेजोमयाः सप्त प्राणो व्योमाम्बुवायुभिः ॥ ३१ ॥
गुणात्मकानीन्द्रियाणि भूतादिप्रभवा गुणाः । मनः सर्वविकारात्मा बुद्धिर्विज्ञानरूपिणी ॥ ३२ ॥
एतद् भगवतो रूपं स्थूलं ते व्याहृतं मया । मह्यादिभिश्चावरणैरष्टभिर्बहिरावृतम् ॥ ३३ ॥
अतः परं सूक्ष्मतममव्यक्तं निर्विशेषणम् । अनादिमध्यनिधनं नित्यं वाङ्मनसोः परम् ॥ ३४ ॥
अमुनी भगवद्रूपे मया ते ह्यनुवर्णिते । उभे अपि न गृह्णन्ति मायासृष्टेऽविपश्चितः ॥ ३५ ॥
स वाच्यवाचकतया भगवान् ब्रह्मरूपधृक् । नामरूपक्रिया धत्ते सकर्माकर्मकः परः ॥ ३६ ॥
प्रजापतीन् मनून् देवानृषीन् पितृगणान् पृथक् । सिद्धचारणगन्धर्वान् विद्याध्रासुरगुह्यकान् ॥ ३७ ॥
किन्नराप्सरसो नागान् सर्पान् किम्पुरुषानपि । मातृरक्षःपिशाचांश्च प्रेतभूतविनायकान् ॥ ३८ ॥
कूष्माण्डोन्मादवेताळान् यातुधानान् ग्रहानपि । खगान् मृगान् पशून् वृक्षान् गिरीन् नृप सरीसृपान् ॥
विविधाश्चतुर्विधा येऽन्ये जलस्थलनभौकसः । कुशलाकुशलमिश्राणां कर्मणां गतयस्त्विमाः ॥ ४० ॥
सत्वं रजस्तम इति तिस्रः सुरनृनारकाः । तत्राप्येकैकशो राजन् भिद्यन्ते गतयस्त्रिधा ॥ ४१ ॥
यदैवैकतमोऽन्याभ्यां स्वभाव उपहन्यते । तदैवेदं जगद् धाता भगवान् धर्मरूपधृक् ।
पुष्णाति स्थापयन् विश्वं तिर्यङ्नरसुरात्मभिः ॥ ४२ ॥
ततः कालाग्निरुद्रात्मा यत् सृष्टमिदमात्मनः । सन्नियच्छति तत् काले घनानीकमिवानिलः ॥ ४३ ॥
इत्थम्भावेन कथितो भगवान् भगवत्तमः । नेत्थम्भावेन हि परं द्रष्टुमर्हन्ति सूरयः ॥ ४४ ॥
न चास्य[२] जन्मकर्माणि परस्य न विधीयते । कर्तृत्वं प्रतिषेधार्थं माययाऽरोपितं हि तत् ॥ ४५ ॥
अयं ते ब्रह्मणः कल्पः सविकल्प उदाहृतः । विधिः साधारणो यत्र सर्गाः प्राकृतवैकृताः ॥ ४६ ॥
परिमाणं च कालस्य कल्पलक्षणविग्रहम् । यथा परस्ताद् व्याख्यास्ये पाद्मं कल्पमिमं शृणु॥ ४७ ॥

**शौनक उवाच**

यदाह नो भवान् सूत क्षत्ता भागवतोत्तमः । चचार तीर्थानि भुवस्त्यक्त्वा बन्धून् सुदुस्त्यजान् ॥ ४८ ॥
कुत्र कौषारवेस्तस्य संवादोऽध्यात्मसम्भवः । यद्वा स भगवांस्तस्मै पृष्टस्तत्वमुवाच ह ॥ ४९ ॥

---

१. असृक्कुक्ष्यान्त्रनाडयः *   २. न ह्यस्य *

ब्रूहि नस्तदिदं सौम्य विदुरस्य विचेष्टितम् । बन्धुत्यागनिमित्तं च यथैवागतवान् पुनः ॥ ५० ॥

**सूत उवाच**

राज्ञा परीक्षिता पृष्टो यदवादीन्महामुनिः । तद्वोऽभिधास्ये शृणुत राज्ञः प्रश्नानुसारतः ॥ ५१ ॥

**॥ इति श्रीमद्भागवते महापुराणे पारमहंस्यामष्टादशसाहस्र्यां संहितायां वैयासक्यां द्वितीयस्कन्धे दशमोऽध्यायः ॥**

## ॥ समाप्तश्च द्वितीयस्कन्धः ॥

# ।। अथ तृतीयस्कन्धः ।।

**श्रीशुक उवाच**

एवमेतत् पुरा पृष्टो मैत्रेयो भगवान् किल । क्षत्त्रा वनं प्रविष्टेन त्यक्त्वा स्वगृहमृद्धिमत् ।। १ ।।

यदा त्वयं मन्त्रकृद् वो भगवानखिलेश्वरः । पौरवेन्द्रपुरं हित्वा प्रविवेशात्मसात्कृतम् ।। २ ।।

**परीक्षिदुवाच**

कुत्र क्षत्तुर्भगवता मैत्रेयेणास सङ्गमः[१] । कदा वा सह संवाद एतद् वर्णय नः प्रभो ।। ३ ।।

न ह्यल्पार्थोदयस्तस्य विदुरस्यामलात्मनः । तस्मिन् वरीयसि प्रश्नः साधुवादोपबृंहितः ।। ४ ।।

**सूत उवाच**

स एवमृषिवर्योऽथ पृष्टो राज्ञा परीक्षिता । प्रत्याह तं सुबहुवित् प्रीतात्मा श्रूयतामिति ।। ५ ।।

**श्रीशुक उवाच**

यदा तु राजा स्वसुतानसाधून् पुष्णन्नधर्मेण विनष्टदृष्टिः ।
भ्रातुर्यविष्ठस्य सुतान् विबन्धून् प्रवेश्य लाक्षाभवने ददाह ।। ६ ।।

यदा सभायां कुरुदेवदेव्याः केशाभिमर्शं सुतकर्म गर्ह्यम् ।
न वारयामास नृपः स्नुषाया आस्रैर्हरन्त्याः[२] कुचकुङ्कुमानि ।। ७ ।।

द्यूते त्वधर्मेण जितस्य साधोः सत्यावलम्बस्य वनागतस्य ।
न याचतोऽदात्[३] समयेन दायं तमो जुषाणो यदजातशत्रोः ।। ८ ।।

यदा तु पार्थप्रहितः सभायां जगद्गुरुर्यानि जगाद कृष्णः ।
न तानि पुंसाममृतायनानि राजाऽनुमेने हतपुण्यलेशः ।। ९ ।।

यदोपहूतो भवनं प्रविष्टो मन्त्राय पृष्टः किल पूर्वजेन ।
अथाह तं मन्त्रदृशां वरीयान् यन्मन्त्रिणो वैदुरिकं वदन्ति ।। १० ।।

अजातशत्रोः प्रतियच्छ दायं तितिक्षतो दुर्विषहं तवागः ।
सहानुजो यत्र वृकोदरो हि स्वशत्रुहा यं त्वमलं बिभेषि ।। ११ ।।

---

१. मैत्रेयेण समागमः ❋ २. अस्रैः (एवमर्वाचीनपाठ आसमाप्ति विज्ञेयः)

३. न याचितोऽदात् ❋

यदा तु पार्थान् भगवान् मुकुन्दो गृहीतवान् स[1] क्षितिदेवदेवः ।
आस्ते स्वपुर्यां यदुदेवदेवो विनिर्जिताशेषनृदेवदेवः ॥ १२ ॥
स एष दोषः पुरुषद्विडास्ते गृहं प्रविष्टो यमपत्यमत्या ।
पुष्णासि कृष्णाद् विमुखो गतश्रीस्त्यजाश्वथैनं कुलकौशलाय ॥ १३ ॥
इत्यूचिवांस्तत्र सुयोधनेन प्रवृद्धकोपस्फुरिताधरेण ।
असत्कृतः संस्पृहणीयशीलः[2] क्षत्ता सकर्णानुजसौबलेन ॥ १४ ॥
क एनमत्रोपजुहाव जिह्मं दास्याः सुतं यद्बलिनैव पुष्टः ।
तस्मिन् प्रतीपः परकृत्य आस्ते निर्वास्यतामाशु पुराच्छ्वसानः ॥ १५ ॥
स इत्थमत्युद्बणकर्णबाणैर्भ्रातुः पुरो मर्मसु ताडितोऽपि ।
स्मयन् धनुर्द्वारि निधाय मायां गतव्यथोऽयादुरु मानयानः ॥ १६ ॥
स निर्गतः कौरवपुण्यलब्धगजाह्वयात् तीर्थपदः पदानि ।
अन्वाक्रमत्[3] पुण्यचिकीर्षयोर्व्यामधिष्ठितो यानि सहस्रमूर्तिः ॥ १७ ॥
वनेषु पुण्योपवनाद्रिकुञ्जेष्वपङ्कतोयेषु सरित्सरस्सु ।
अनन्तलिङ्गैः समलङ्कृतेषु चचार तीर्थायतनेष्वनन्यः ॥ १८ ॥
गां पर्यटन् मेध्यविविक्तवृत्तिः सदाऽऽप्लुतोऽधःशयनावधूतः ।
अलक्षितः स्वैरवधूतवेषो[4] व्रतानि चेरे हरितोषणानि ॥ १९ ॥
इत्थं व्रजन् भारतमेव वर्षं कालेन यावद् गतवान् प्रभासम् ।
तावच्छशास क्षितिमेकचक्रामेकातपत्रामजितेन पार्थः ॥ २० ॥
तत्राथ शुश्राव सुहृद्विनष्टिं वनं यथा वेणुजवह्निनाऽऽश्रयम् ।
संस्पर्धया दग्धमथानुशोचन् सरस्वतीं प्रत्यगियाय तूष्णीम् ॥ २१ ॥
तस्यां त्रितस्योशनसो मनोश्च पृथोरथाग्नेरसितस्य वायोः ।
तीर्थं सुदासस्य गवां गुहस्य यच्छ्राद्धदेवस्य स आसिषेवे ॥ २२ ॥
अन्यानि चेह द्विजदेवदेवैः कृतानि नानायतनानि विष्णोः ।
प्रत्यङ्गमुख्याङ्कितमन्दिराणि यद्दर्शनात् कृष्णमनुस्मरन्ति ॥ २३ ॥

---

१. सः ❋ २. सत्स्पृहणीयशीलः ३. अध्याक्रमत् ❋ ४. अवधूतकेशः

ततस्त्वतिव्रज्य सुराष्ट्रमृद्धं सौवीरमत्स्यान् कुरुजाङ्गलांश्च ।
कालेन तावद् यमुनामुपेत्य तत्रोद्धवं भागवतं ददर्श ॥ २४ ॥
स वासुदेवानुचरं प्रशान्तं बृहस्पतेः प्राक्तनयं प्रतीतम् ।
आलिङ्ग्य गाढं प्रणयेन भद्रं स्वानामपृच्छद् भगवत्प्रजानाम् ॥ २५ ॥
कच्चित् पुराणौ पुरुषौ स्वनाभ्यपद्मानुवृत्त्येह कलावतीर्णौ[1] ।
आसात उर्व्याः कुशलं विधाय कृतक्षणौ कुशलं शूरगेहे ॥ २६ ॥
कच्चित् कुरूणां परमः सुहृन्नो भामः स आस्ते सुखमङ्ग शौरिः ।
यो वै स्वसॄणां पितृवद् ददाति वरान् वदान्यो वरतर्पणेन ॥ २७ ॥
कच्चिद् वरूथाधिपतिर्यदूनां प्रद्युम्न आस्ते सुखमङ्ग वीरः ।
यं रुग्मिणी भगवतोऽभिलेभे आराध्य विप्रान् स्मरमादिसर्गे ॥ २८ ॥
कच्चित् सुखं सात्वतवृष्णिभोजदाशार्हकाणामधिपः स आस्ते ।
यमभ्यषिञ्चच्छतपत्रनेत्रो नृपासनाधिं परिहृत्य दूरात् ॥ २९ ॥
कच्चिद्धरेः सौम्य सुतः सदृक्ष[2] आस्तेऽग्रणी रथिनां साधु साम्बः ।
असूत यं जाम्बवती व्रताढ्या देवं गुहं योऽम्बिकया धृतोऽग्रे ॥ ३०॥
क्षेमं स कच्चिद् युयुधान आस्ते यः फल्गुनाल्लब्धधनूरहस्यः ।
लेभेऽञ्जसाऽधोक्षजसेवयैव गतिं तदीयां यतिभिर्दुरापाम् ॥ ३१ ॥
कच्चिद् बुधः स्वस्त्यनमीव आस्ते श्वफल्कपुत्रो भगवत्प्रपन्नः ।
यः कृष्णपादाङ्कितमार्गपांसुष्ववेष्टयत्[3] प्रेमविभिन्नधैर्यः ॥ ३२ ॥
कच्चिच्छिवं देवकभोजपुत्र्या विष्णुप्रजाया इव देवमातुः ।
या वै स्वगर्भेण बभार देवं त्रयी यथा यज्ञवितानमर्थम् ॥ ३३ ॥
अपिस्विदास्ते भगवान् सुखं वा यः सात्वतां कामदुघोऽनिरुद्धः ।
यमामनन्ति स्म हि शब्दयोनिं मनोमयं सत्वतुरीयमर्थम् ॥ ३४ ॥
अपिस्विदन्ये च निजात्मदैवमनन्यवृत्त्या समनुव्रता ये ।
[4]हृदीकसत्यात्मजचारुदेष्णगदादयः स्वस्ति चरन्ति सौम्य ॥ ३५ ॥

---

१. किलावतीर्णौ ❋ २. स दक्षः ३. अचेष्टत ४. हार्दिक्यसत्यात्मज...

अपि स्वदोर्भ्यां विजयाच्युताभ्यां धर्मेण धार्मः परिपाति सेतुम् ।
दुर्योधनोऽतप्यत यत्सभायां साम्राज्यलक्ष्म्या विजयानुवृत्त्या ॥ ३६ ॥
किं वा कृताघेष्वघमत्यमर्षी भीमो गदी[१] दीर्घतमं व्यमुञ्चत् ।
यस्याङ्घ्रिपातं रणभूर्न सेहे मार्गं गदायाश्चरतो विचित्रम् ॥ ३७ ॥
कच्चिद् यशोधा रथयूथपानां गाण्डीवधन्वोपरतारिरास्ते ।
अलक्षितो यच्छरकूटगूढो मायाकिरातो गिरिशस्तुतोष ॥ ३८ ॥
यमावुतस्वित् तनयौ च माद्र्याः पार्थैर्वृतौ पक्ष्मभिरक्षिणीव ।
रेमात उद्धृत्य मृधे स्वरिक्थं सुधां सुपर्णाविव वज्रिवक्त्रात् ॥ ३९ ॥
अहो पृथापि ध्रियतेऽर्भकार्थे राजर्षिवर्येण विनापि तेन ।
यस्त्वेकवीरोऽतिरथो विजिग्ये धनुर्द्वितीयः ककुभश्चतस्रः ॥ ४० ॥
सौम्यानुशोचे तमधः पतन्तं भ्रात्रे परेताय च दुद्रुहे[२] यः ।
निर्यापितो येन सुहृत् स्वपुर्या अहं स्वपुत्रान् समनुव्रतेन ॥ ४१ ॥
सोऽहं हरेर्मर्त्यविडम्बनेन दृशो नृणां भ्रामयतो[३] विधातुः ।
नान्योपलक्ष्यः पदवीं प्रसादाच्चरामि पश्यन् गतविस्मयोऽत्र ॥ ४२ ॥
नूनं नृपाणां त्रिमदोत्पथानां महीं मुहुश्चालयतां चमूभिः ।
वधात् प्रपन्नार्तिजिहीर्षयेशो ह्युपैक्षताघं[४] भगवान् कुरूणाम् ॥ ४३ ॥
अजस्य जन्मोत्पथनाशनाय कर्माण्यकर्तुर्ग्रहणाय पुंसाम् ।
न त्वन्यथा कोऽर्हति देहयोगं परो गुणानामुत कर्मतन्त्रम् ॥ ४४ ॥
तस्य प्रपन्नाखिललोकपानामवस्थितानामनुशासने स्वे ।
अर्थाय जातस्य यदुष्वजस्य वार्तां सखे कीर्तय तीर्थकीर्तेः ॥ ४५ ॥

**॥ इति श्रीमद्भागवते तृतीयस्कन्धे प्रथमोऽध्यायः ॥**

---

१. भीमोऽहिवत्   २. परेताय विदुद्रुहे   ३. भावयतः   ४. ह्युपेक्षिताऽघम् ❋

श्रीशुक उवाच

इति भागवतः पृष्टः क्षत्त्रा वार्तां प्रियाश्रयाम्। प्रतिवक्तुं न चोत्सेहे औत्कण्ठ्यात् स्मारितेश्वरः ॥१॥
यः पञ्चहायनो मात्रा प्रातराशाय याचितः। नैच्छत् तद् रचयन् यस्य सपर्यां बाललीलया ॥ २ ॥
स कथं सेवया तस्य कालेन जरसं गतः। पृष्टो वार्तां प्रतिब्रूयाद् भर्तुः पादावनुस्मरन् ॥ ३ ॥
स मुहूर्तमभूत् तूष्णीं कृष्णाङ्घ्रिसुधया भृशम्। तीव्रेण भक्तियोगेन निमग्नः साधुनिर्वृतः ॥ ४ ॥
पुळकोद्भिन्नसर्वाङ्गो मुञ्चन् मीलद्दृशाऽश्रु सः। पूर्णार्थो लक्षितस्तेन स्नेहप्रसरसम्प्लुतः ॥ ५ ॥
शनकैर्भगवल्लोकान्नृलोकं पुनरागतः। विमृज्य नेत्रे विदुरं प्रत्याहोद्धव उत्स्मयन् ॥ ६ ॥

उद्धव उवाच

कृष्णद्युमणिनिम्लोचे गीर्णेष्वजगरेण ह[1]। किं नु नः कुशलं ब्रूयां गतश्रीषु यदुष्वहम्[2] ॥ ७ ॥
दुर्भगो बत लोकोऽयं यदवो नितरामपि। ये संवसन्तो न विदुर्हरिं मीना इवोडुपम्[3] ॥ ८ ॥
इङ्गितज्ञाः पुरुप्रौढा एकारामाश्च सात्वताः। सात्वतामृषभं सर्वे भूतावासममंसत ॥ ९ ॥
देवस्य मायया स्पृष्टा ये चान्ये असदाश्रयाः। भ्राम्यते धीर्न तद्वाक्यैरात्मन्युप्तामलात्मनाम्[4] ॥ १० ॥
प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम्। आदायान्तरधाद् यस्तु स्वबिम्बं लोकलोचनम् ॥ ११ ॥

यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीतम्।
विस्मापनं स्वस्य च सौभगर्द्धेः परं पदं भूषणभूषणाङ्गम् ॥ १२ ॥
यद्धर्मसूनोर्बत राजसूये निरीक्ष्य दृक्स्वस्त्ययनं त्रिलोकः।
कात्स्न्र्येन चात्रोपगतं विधातुरर्वाक्सृतौ कौशलमित्यमन्यत ॥ १३ ॥
यस्यानुरागप्लुतहासरासलीलावलोकप्रतिलब्धमानाः।
व्रजस्त्रियो दृग्भिरनुप्रवृत्तधियोऽवतस्थुः किल कृत्यशेषाः ॥ १४ ॥
स्वशान्तरूपेष्वितरैः स्व[5] रूपैरभ्यर्द्यमानेष्वनुकम्पितात्मा।
परावरेशो महदंशयुक्तो ह्यजोऽपि जातो भगवान् यथाऽग्निः ॥ १५ ॥
मां खेदयत्येतदजस्य जन्मविडम्बनं यद् वसुदेवगेहे।
व्रजे च वासोऽरिभयादिव स्वयं पुराद् व्यवात्सीद् यदनन्तवीर्यः ॥ १६ ॥

---

१. हि ❋ २. गतश्रीषु गतेष्वसत् ❋ ३. इवाम्भसि ❋ ४. आत्मन्युप्तात्मनां हरौ
५. इतरस्वरूपैरभ्यर्द्यमानेषु ❋

दुनोति चेतः स्मरतो ममैतद्[1] यदाह पादावभिवन्द्य पित्रोः ।
ताताम्ब कंसादुरुकम्पितानां प्रसीदतं[2] नोऽकृतनिष्कृतीनाम् ॥ १७ ॥
को वा अमुष्याङ्घ्रिसरोजरेणुं विस्मर्तुमीशेत पुमान् विजिघ्रन् ।
यो विष्फुरद्भ्रूविटपेन भूमेर्भारं कृतान्तेन तिरश्चकार ॥ १८ ॥
दृष्टा भवद्भिर्ननु राजसूये चैद्यस्य कृष्णं द्विषतोऽपि सिद्धिः ।
यां योगिनः संस्पृहयन्ति सम्यग्योगेन कस्तद्विरहं सहेत ॥ १९ ॥
तथैव चान्ये नरलोकवीरा य आहवे कृष्णमुखारविन्दम् ।
नेत्रैः पिबन्तो नयनाभिरामं पार्थास्त्रपूताः पदमापुरस्य ॥ २० ॥
स्वयं त्वसाम्यातिशयस्त्र्यधीशः स्वाराज्यलक्ष्म्याप्तसमस्तकामः[3] ।
बलिं हरद्भिः सुरलोकपालैः किरीटकोट्याहतपादपीठः ॥ २१ ॥
तत् तस्य कैङ्कर्यमुपागतान् नो[4] विग्लापयत्यङ्ग यदुग्रसेनम् ।
तिष्ठन् निषण्णं परमेष्ठिधिष्ण्ये न्यबोधयद् देव निधारयेति ॥ २२ ॥
अहो बकीयं स्तनकाळकूटं जिघांसयाऽपाययदप्यसाध्वी ।
लेभे गतिं धात्र्युचितां ततोऽन्यं कं वा दयाळुं शरणं व्रजेम ॥ २३ ॥
मन्येऽसुरान् भागवतांस्त्र्यधीशे संरम्भमार्गाभिनिविष्टचित्तान् ।
ये संयुगेऽचक्षत तार्क्ष्यपुत्रस्यांसे सुनाभायुधमापतन्तम् ॥ २४ ॥

वसुदेवस्य देवक्यां जातो भोजेन्द्रबन्धने । चिकीर्षुर्भगवान् शर्म अब्जजेनाभियाचितः[5] ॥ २५ ॥
ततो नन्दव्रजमितः पित्रा कंसाद् विबिभ्यता[6] । एकादशसमास्तत्र गूढार्चिः सबलोऽवसत् ॥ २६ ॥
परीतो वत्सपैर्वत्सांश्चारयन् व्यचरद्धरिः । यमुनोपवने कूजद्द्विजसङ्कुलिताङ्घ्रिपे ॥ २७ ॥
कौमारा दर्शयंश्चेष्टाः प्रेक्षणीया व्रजौकसाम् । रुदन्निव हसन् मुग्धो बालसिंहावलोकनः ॥ २८ ॥
स एव गोधनं लक्ष्म्या निकेतं सितगोवृषम् । चारयन्ननुगान् गोपान् रणद्वेणुररीरमत् ॥ २९ ॥
प्रयुक्तान् भोजराजेन मायिनः कामरूपिणः । लीलया व्यनुदत् तांस्तान् बालः क्रीडनकानिव ॥ ३० ॥

---

१. म एतद् ❋ २. प्रसीदताम् ❋ ३. स्वराज्यलक्ष्म्या......
४. कैङ्कर्यमलं भृतान् नः ❋ ५. शमजेनाभियाचितः ६. कंसाद्धि बिभ्यता ❋

विपन्नान् विषपानेन निगृह्य भुजगाधिपम् । उत्थाप्यापाययद् गावस्तत्तोयं प्रकृतिस्थितम् ॥ ३१ ॥
अयाजयद् गोसवेन गोपराजं द्विजोत्तमैः । वित्तस्य चोरुभारस्य चिकीर्षन् सद्व्ययं विभुः ॥ ३२ ॥
वर्षतीन्द्रे व्रजः कोपाद् भग्नमानेऽतिविह्वले । गोत्रलीलातपत्रेण त्रातो भद्रानुगृह्णता ॥ ३३ ॥
शरच्छशिकरैर्मृष्टं मानयन् रजनीमुखम् । गायन् कळपदं रेमे स्त्रीणां मण्डलमण्डनः ॥ ३४ ॥

**॥ इति श्रीमद्भागवते तृतीयस्कन्धे द्वितीयोऽध्यायः ॥**

---

**उद्धव उवाच**

ततःस आगत्य पुरं स्वपित्रोश्चिकीर्षयाऽऽशां बलदेवसंयुतः ।
निपात्य तुङ्गाद् रिपुयूथनाथं हतं व्यकर्षद् व्यसुमोजसोर्व्याम्[१] ॥ १ ॥
सान्दीपनेःसकृत् प्रोक्तं ब्रह्माधीत्य सविस्तरम् । तस्मै प्रादाद् वरं पुत्रं मृतं पञ्चजनोदरात् ॥ २ ॥
समाहुता भीष्मककन्यया ये श्रियः सवर्णेन जिहीर्षयैषाम् ।
गान्धर्ववृत्त्या मिषतां स्वभागं जह्रे पदं मूर्ध्नि दधत् सुपर्णः ॥ ३ ॥
ककुद्मतोऽविद्धनसो दमित्वा स्वयंबरे[२] नाग्नजितीमुवाह ।
तान् भग्नमानानभिगृध्यतोऽज्ञान् जघ्नेऽक्षतः शस्त्रभृतश्च शस्त्रैः ॥ ४ ॥
प्रियं प्रभुर्ग्राम्य इव प्रियाया विधित्सुरार्च्छद् द्युतरुं यदर्थे ।
वज्र्याद्रवत् तं सगणो रुषाऽन्धः स्वार्थे पुरा तैर्यमयाचतानतः ॥ ५ ॥
सुतं मृधे खं[३] वपुषा ग्रसन्तं दृष्ट्वा सुनाभोन्मथितं धरित्र्याः ।
आमन्त्रितस्तत्तनयाय शेषं दत्वा तदन्तःपुरमाविवेश ॥ ६ ॥
तत्राहृतास्ता नरदेवकन्याः[४] कुजेन दृष्ट्वा हरिमात्मबन्धुम्[५] ।
उत्थाय सद्यो जगृहुः प्रहर्षव्रीळानुरागप्रहितावलोकैः ॥ ७ ॥
आसां मुहूर्त एकस्मिन् नानागारेषु योषिताम् । सविधिं जगृहे पाणीन् पुरुरूपः स्वमायया ॥ ८ ॥
तास्वपत्यान्यजनयदात्मतुल्यानि सर्वतः । एकैकस्यां दशदश प्रकृतेर्विबुभूषया ॥ ९ ॥

---

१. व्यसुं व्यकर्षद् रिपुमोजसोर्व्याम् ❋
२. स्वयंवरशब्दः प्राचीनकोशेषु स्वयंबर इति पठ्यते । आसमाप्ति चेदं बोध्यम् । ३. स्वम्
४. नरदेवकन्यकाः ❋ ५. आर्त्तबन्धुम्

कालमागधसाल्वादीननीकै रुन्धतः पुरम्। अजीघनत् स्वयं कांश्चित् स्वपुंसां तेज आदिशन् ॥ १० ॥
शम्बरं विविदं बाणं मुरं बल्वलमेव च[१]। अन्यांश्च दन्तवक्रादीनवधीत् कांश्च घातयत् ॥ ११ ॥
अथ ते भ्रातृपुत्राणां पक्षयोः पतितान् नृपान्। चचाल भूः कुरुक्षेत्रं येषामापततां बलैः ॥ १२ ॥

सकर्णदुःशासनसौबलानां कुमन्त्रपाकेन हतश्रियायुषम्।
सुयोधनं सानुचरं शयानं भग्नोरुमुर्व्यां स ननन्द पश्यन् ॥ १३ ॥
कियान् भुवोऽयं क्षपितोरुभारो यद् द्रोणभीष्मार्जुनभीमशल्यैः।
अष्टादशाक्षौहिणिको मदंशैरास्ते बलं दुर्विषहं यदूनाम् ॥ १४ ॥
मिथो यदैषां भविता विवादो माध्व्या मदात् ताम्रविलोचनानाम्।
नैषां वधोपाय इयानतोऽन्यो मय्युद्यतेऽन्तर्दधते स्वयं स्म ॥ १५ ॥

एवं सञ्चिन्त्य भगवान् स्वाराज्ये स्थाप्य धर्मजम्। नन्दयामास सुहृदः साधूनां वर्त्म दर्शयन् ॥ १६ ॥
उत्तरायां धृतः पूरोर्वंशः साध्वभिमन्युना। स वै द्रौण्यस्त्रसञ्छिन्नः पुनर्भगवता धृतः ॥ १७ ॥
अयाजयद् धर्मसुतमश्वमेधैस्त्रिभिर्विभुः। सोऽपि क्ष्मामनुजै रक्षन् रेमे कृष्णमनुव्रतः ॥ १८ ॥
भगवानपि विश्वात्मा लोकवेदपथानुगः। कामान् सिषेवे द्वार्वत्यामसक्तः साङ्ख्यमास्थितः ॥ १९ ॥
स्निग्धस्मितावलोकेन वाचा पीयूषतुल्यया[२]। चारित्रेणानवद्येन श्रीनिकेतेन चात्मना ॥ २० ॥
इमं लोकममुं चैव रमयन् सुतरां यदून्। रेमे क्षणदया दत्तक्षणः स्त्रीक्षणसौहृदः ॥ २१ ॥
तस्येत्थं रममाणस्य संवत्सरगणान् बहून्। गृहमेधेषु योगेषु विरागः समजायत ॥ २२ ॥
दैवाधीनेषु कामेषु दैवाधीनः स्वयं पुमान्। को विस्रम्भेत योगेन योगेश्वरमनुव्रतः ॥ २३ ॥
पुर्यां कदाचित् क्रीडद्भिर्यदुभोजकुमारकैः। कोपिता मुनयः शेपुर्भगवन्मतकोविदाः ॥ २४ ॥
ततः कतिपयैर्मासैर्वृष्णिभोजान्धकादयः। ययुः प्रभासं संहृष्टा रथैर्दैवविमोहिताः ॥ २५ ॥
तत्र स्नात्वा पितॄन् देवान् ऋषींश्चैव तदम्भसा। तर्पयित्वाऽथ विप्रेभ्यो गावो बहुगुणा ददुः ॥ २६ ॥
हिरण्यं रजतं शय्यां वासांस्यजिनकम्बळान्। हयान् रथानिभान् कन्यां धरां वृत्तिकरीमपि ॥ २७ ॥
अन्नं चोरुरसं तेभ्यो दत्वा भगवदर्पणम्। गोविप्रार्थासवः शूराः प्रणेमुर्भुवि मूर्धभिः ॥ २८ ॥

**॥ इति श्रीमद्भागवते तृतीयस्कन्धे तृतीयोऽध्यायः ॥**

---

१. वल्कलमेव च ❋ २. पीयूषकल्पया ❋

**उद्धव उवाच**

अथ ते तदनुज्ञाता भुक्त्वा पीत्वा च वारुणीम् । तया विभ्रंशितज्ञाना दुरुक्तैर्मर्म पस्पृशुः ॥ १ ॥
तेषां मैरेयदोषेण विषमीकृतचेतसाम् । निम्लोचति रवावासीद् वेणूनामिव मर्दनम् ॥ २ ॥
भगवानात्ममायाया गतिं तामवलोक्य सः । सरस्वतीमुपस्पृश्य वृक्षमूल उपाविशत् ॥ ३ ॥
अहं चोक्तो भगवता प्रपन्नार्तिहरेण ह[१] । बदरीं त्वं प्रयाहीति स्वकुलं सञ्जिहीर्षुणा ॥ ४ ॥
अथापि तदभिप्रेतं जानन्नहमरिन्दम । पृष्ठतोऽन्वगमं भर्तुः पादविश्लेषणाक्षमः ॥ ५ ॥
अद्राक्षमेकमासीनं विचिन्वन् दयितं पतिम् । श्रीनिकेतं सरस्वत्यां कृतकेतमकेतनम् ॥ ६ ॥
श्यामावदातं विरजं प्रशान्तारुणलोचनम् । दोर्भिश्चतुर्भिर्विदितं पीतकौशाम्बरेण च ॥ ७ ॥
वाम ऊरावधिश्रित्य दक्षिणाङ्घ्रिसरोरुहम् । अपाश्रितार्भकावस्थमकृशं त्यक्तपिप्पलम् ॥ ८ ॥
तस्मिन् महाभागवतो द्वैपायनसुहृत् सखा । लोकाननुचरन् सिद्ध आससाद यदृच्छया ॥ ९ ॥

तस्यानुरक्तस्य मुनेर्मुकुन्दः प्रमोदभारानतकन्धरस्य ।
आशृण्वतो मामनुरागहाससमीक्षया विश्रमयन्नुवाच ॥ १० ॥

**श्रीभगवानुवाच**

वेदाहमन्तर्मनसीप्सितं[२] ते ददानि[३] यत् तद् दुरवापमन्यैः ।
सत्रे पुरा विश्वसृजां मुनीनां[४] मत्सिद्धिकामेन वसो त्वयेष्टः ॥ ११ ॥
स एष साधो चरमो भवानामासादितस्ते मदनुग्रहोऽयम् ।
यन्मां नृलोकं रह उत्सृजन्तं दिष्ट्या ददृश्वान् विशदानुवृत्त्या ॥१२॥
पुरा मया प्रोक्तमजाय नाभ्ये पद्मे निषण्णाय ममादिसर्गे ।
ज्ञानं परं मन्महिमावभासं यत् सूरयो भागवतं वदन्ति ॥ १३ ॥
इत्यादरोक्तः परमस्य पुंसः प्रतीक्षणानुग्रहभाजनोऽहम् ।
स्नेहोत्थरोमा स्खलिताक्षरस्तं मुञ्चन् शुचः प्राञ्जलिराबभाषे ॥ १४ ॥
को न्वीश ते पादसरोजभाजां सुदुर्लभोऽर्थेषु चतुर्ष्वपीह ।
तथापि नाहं प्रवृणोमि भूमन् भवत्पदाम्भोजनिषेवणोत्सुकः ॥ १५ ॥

---

१. च ❋ २. मनसेप्सितम् ❋ ३. ददामि ❋ ४. मनूनाम्

कर्माण्यनीहस्य भवोऽभवस्य ते दुर्गाश्रयोऽथारिभयात् पलायनम् ।
कालात्मनो यत् प्रमदायुताश्रयः स्वात्मन् रतेः खिद्यति धीर्विदामपि ॥ १६ ॥
मन्त्रेषु मां वा उपहूय यत् त्वमकुण्ठिताखण्डसदात्मबोधः।
पृच्छेः प्रभो [१]मुग्धवदप्रमत्तस्तन्नो मनो मोहयतीव देव ॥ १७ ॥
ज्ञानं परं स्वात्मरहःप्रकाशं प्रोवाच कस्मै भगवान् समग्रम् ।
अपि क्षमं नो ग्रहणाय भर्तर्वदाञ्जसा यद् व्रजिनं तरेम ॥ १८ ॥
इत्यावेदितहार्दाय मह्यं स भगवान् परः । आदिदेशारविन्दाक्ष आत्मनः परमां स्थितिम् ॥ १९ ॥
स एवमाराधितपादतीर्थादधीततत्त्वात्मविबोधमार्गः ।
प्रणम्य पादौ परिवृत्य देवमिहागतोऽहं विरहातुरात्मा ॥ २० ॥
सोऽहं त्वद्दर्शनाह्लादवियोगार्तियुतः प्रभोः । गमिष्ये दयितं तस्य बदर्याश्रममण्डलम् ॥ २१ ॥
यत्र नारायणो देवो नरश्च भगवान् ऋषिः । मृदु तीव्रं तपो दीर्घं तेपाते लोकभावनौ ॥ २२ ॥

**श्रीशुक उवाच**

इत्युद्धवादुपाकर्ण्य सुहृदां दुःसहं वधम् । ज्ञानेनाशमयत् क्षत्ता शोकमुत्पतितं बुधः ॥ २३ ॥
स तं महाभागवतं व्रजन्तं कौरवर्षभ । विस्रम्भादभ्यधत्तेदं मुख्यं कृष्णपरिग्रहे ॥ २४ ॥

**विदुर उवाच**

ज्ञानं परं स्वात्मरहःप्रकाशं यदाह योगेश्वर ईश्वरस्ते ।
वक्तुं भवान् नोऽर्हति यद्धि विष्णोर्भृत्याः स्वभृत्यार्थकृतश्चरन्ति ॥ २५ ॥

**उद्धव उवाच**

ननु ते तत्त्वसंराद्ध ऋषिः कौषारवोऽन्ति मे । साक्षाद् भगवताऽऽदिष्टो मर्त्यलोकं जिहासता॥ २६ ॥

**सूत उवाच**

इति सह विदुरेण विश्वमूर्तेर्गुणकथया सुधया प्लुतोरुतापः ।
क्षणमिव पुळिने यमस्वसुस्तां समुषित औपगविर्निशां ततोऽगात् ॥ २७ ॥

**राजोवाच**

निधनमुपगतेषु वृष्णिभोजेष्वधिरथयूथपयूथपेषु मुख्यः ।
स तु कथमवशिष्ट उद्धवो यद्धरिरपि तत्यज आकृतिं त्र्यधीशः ॥ २८ ॥

---

१. मुग्ध इवाप्रमत्तः ❋

**श्रीशुक उवाच**

ब्रह्मशापापदेशेन कालेनामोघवाञ्छितः । संहृत्य स्वकुलं स्फीतं[१] त्यक्ष्यन् देहमचिन्तयत् ॥ २९ ॥

अस्माल्लोकादुपरते मयि ज्ञानं मदाश्रयम् । अर्हत्युद्धव एवाद्धा सम्प्रत्यात्मवतां वरः[२] ॥ ३० ॥

नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्निर्जितः प्रभुः । अतो मद्वत् पुनर्लोकं ग्राहयन्निह तिष्ठतु ॥ ३१ ॥

एवं त्रिलोकगुरुणा सन्दिष्टः शब्दयोनिना । बदर्याश्रममासाद्य हरिमीजे समाधिना ॥ ३२ ॥

विदुरोऽप्युद्धवाच्छ्रुत्वा कृष्णस्य परमात्मनः । क्रीडयोपात्तदेहस्य कर्माणि श्लाघितानि च ॥ ३३ ॥

देहन्यासं च तस्यैवं[३] धीराणां धैर्यवर्धनम् । अन्येषां दुष्करतरं पशूनां विक्लबात्मनाम् ॥ ३४ ॥

आत्मानं च कुरुश्रेष्ठ कृष्णेन मनसेक्षितम् । ध्यायन् गते भागवते रुरोद प्रेमविह्वलः ॥ ३५ ॥

कालिन्द्याः कतिभिर्विद्वानहोभिर्भरतर्षभः । प्रापद्यत द्युसरितं यत्र मित्रासुतो मुनिः ॥ ३६ ॥

**॥ इति श्रीमद्भागवते तृतीयस्कन्धे चतुर्थोऽध्यायः ॥**

---

**श्रीशुक उवाच**

द्वारि द्युनद्या ऋषभः कुरूणां मैत्रेयमासीनमगाधबोधम् ।
[४]क्षत्तोपसृत्याच्युतभावशुद्धः पप्रच्छ सौशील्यगुणाभितृप्तम् ॥ १ ॥

**विदुर उवाच**

सुखाय कर्माणि करोति लोको न तैः सुखं चान्यदुपारमं वा ।
विन्देत भूयस्तत एव दुःखं यदत्र युक्तं भगवान् वदेन्नः ॥ २ ॥

जनस्य कृष्णाद् विमुखस्य दैवादधर्मशीलस्य सुदुःखितस्य ।
अनुग्रहायेह चरन्ति नूनं भूतानि भव्यानि जनार्दनस्य ॥ ३ ॥

तत् साधुवर्यादिश शर्मवर्त्म संराधितो भगवान् येन पुंसाम् ।
हृदि स्थितो यच्छति भक्तिपूते ज्ञानं स्वसत्ताधिगमं पुराणम् ॥ ४ ॥

करोति कर्माणि कृतावतारो यान्यात्मतन्त्रो भगवांस्त्र्यधीशः ।
यथा ससर्जाग्र इदं निरीहः संस्थाप्य वृत्तिं जगतो विधत्ते ॥ ५ ॥

---

१. नूनम् २. परः ३. तस्यैव ❋ ४. क्षत्ताऽभिसृत्य

यथा पुनः स्वे ख इदं निवेश्य शेते गुहायां स निवृत्तवृत्तिः ।
योगेश्वराधीश्वर एक एतदनुप्रविष्टो बहुधा यथाऽऽसीत् ॥ ६ ॥
क्रीडन् विधत्ते द्विजगोसुराणां क्षेमाय कर्माण्यवतारभेदैः ।
मनो न तृप्यत्यपि शृण्वतां नः सुश्लोकमौळेश्चरितामृतानि ॥ ७ ॥
यैस्तत्त्वभेदैरधिलोकनाथो लोकानलोकान् सहलोकपालान् ।
अचीक्लृपद् यत्र हि सर्वसत्वनिकायभेदोऽधिकृतः प्रतीतः ॥ ८ ॥
येन प्रजानामुत वाऽऽत्मकर्मरूपाभिधानेन भिदां व्यधत्त ।
नारायणो विश्वसृगात्मयोनिरेतच्च नो वर्णय विप्रवर्य ॥ ९ ॥
परावरेषां भगवन् कृतानि श्रुतानि मे व्यासमुखादभीक्ष्णम् ।
न तृप्नुमः कर्णसुखावहानां तेषामृते कृष्णकथामृतौघात् ॥ १० ॥
कस्तृप्नुयात् तीर्थपदोऽभिधानात् सत्रेषु वः सूरिभिरीड्यमानात् ।
यः कर्णनाडीं पुरुषस्य यातो भयप्रदां गेहरतिं च्छिनत्ति ॥ ११ ॥
मुनिर्विवक्षुर्भगवद्गुणानां सखाऽपि ते भारतमाह कृष्णः ।
यस्मिन् नृणां ग्राम्यसुखानुवादैर्मतिर्गृहीता न हरेः कथायाम् ॥ १२ ॥
सा श्रद्दधानस्य विवर्धमाना विरक्तिमन्यत्र करोति पुंसः ।
हरेः सदानुस्मृतिनिर्वृतस्य समस्तदुःखाप्ययमाशु धत्ते ॥ १३ ॥
तान् शोच्यशोच्यानविदोऽनुशोचे हरेः कथायां विमुखानघेन ।
क्षिणोति देवोऽनिमिषस्तु तेषामायुर्वृथावादगतिस्मृतीनाम् ॥ १४ ॥
तदस्य कौषारव शर्मदातुर्हरेः कथामेव कथासु सारम् ।
उद्धृत्य पुष्पेभ्य इवार्तबन्धो शिवाय नः कीर्तय तीर्थकीर्तेः ॥ १५ ॥
स विश्वजन्मस्थितिसंयमार्थे कृतावतारः प्रगृहीतशक्तिः ।
चकार कर्माण्यतिपूरुषाणि यानीश्वरः कीर्तय तानि मह्यम् ॥ १६ ॥

**श्रीशुक उवाच**

स एवं भगवान् पृष्टः क्षत्त्रा कौषारविर्मुनिः । पुंसां निश्रेयसार्थाय तमाह बहुमानयन् ॥ १७ ॥

**मैत्रेय उवाच**

साधु पृष्टं त्वया साधो लोकान् साध्वनुगृह्णता । कीर्तिं वितन्वता लोके आत्मनोऽधोक्षजात्मनः ॥

नैतच्चित्रं त्वयि क्षत्तर्बादरायणवीर्यजे । गृहीतोऽनन्यभावेन यत् त्वया हरिरीश्वरः ॥ १९ ॥
माण्डव्यशापाद् भगवान् प्रजासंयमनो यमः । भ्रातुःक्षेत्रे भुजिष्यायां जातः सत्यवतीसुतात् ॥ २० ॥
भवान् भगवतो नित्यं सम्मतः सानुगस्य हि । ज्ञानोपदेशाय च मामादिशद् भगवान् व्रजन् ॥ २१ ॥
अथ ते भगवल्लीला योगमायोपबृंहिताः । विश्वस्थित्युद्भवान्तार्था वर्णयाम्यनुपूर्वशः ॥ २२ ॥

**॥ इति श्रीमद्भागवते तृतीयस्कन्धे पञ्चमोऽध्यायः ॥**

---

**मैत्रेय उवाच**

भगवानेक आसेदमग्र आत्माऽऽत्मनां विभुः । आत्मेच्छानुगतो ह्यात्मा नानाशक्त्युपलक्षितः ॥ १ ॥
स वा एष तदा द्रष्टा नापश्यद् विश्वमेकराट् । मेनेऽसन्तमिवात्मानं सुप्तशक्तिरसुप्तदृक् ॥ २ ॥
सा वा एतस्य सन्द्रष्टुः शक्तिः सदसदात्मिका । माया नाम महाभाग ययेदं निर्ममे विभुः ॥ ३ ॥
कालवृत्त्यां तु मायायां गुणमय्यामधोक्षजः । पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान् ॥ ४ ॥
ततोऽभवन्महत्तत्त्वमव्यक्तात् कालचोदितात् । विज्ञानात्माऽऽत्मदेहस्थं विश्वं व्यञ्जंस्तमो नुदन् ॥
सोऽप्यंशगुणकालात्मा भगवद्दृष्टिगोचरः । आत्मानं व्यकरोदात्मा विश्वस्यास्य सिसृक्षया ॥ ६ ॥
महत्तत्त्वाद् विकुर्वाणादहंतत्त्वमजायत । कार्यकारणकर्त्रात्मा भूतेन्द्रियमनोभवः ॥ ७ ॥
वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा । अहंतत्त्वाद् विकुर्वाणान्मनो वैकारिकादभूत् ॥ ८ ॥
वैकारिकाश्च ये देवा अर्थाभिव्यञ्जनं यतः । तैजसानीन्द्रियाण्येव ज्ञानकर्ममयानि च ॥ ९ ॥
तामसो भूतसूक्ष्मादिर्यतः खं लिङ्गमात्मनः ॥ १० ॥
कालमायांशयोगेन भगवद्वीक्षितं नभः । तामसानुसृतं स्पर्शं विकुर्वन्निर्ममेऽनिलम् ॥ ११ ॥
अनिलोऽपि विकुर्वाणो नभसोरुबलान्वितः । ससर्ज रूपतन्मात्रां ज्योतिर्लोकस्य लोचनम् ॥ १२ ॥
अनिलेनान्वितं ज्योतिर्विकुर्वत् परवीक्षितम् । आधत्ताम्भो रसमयं कालमायांशयोगतः ॥ १३ ॥
ज्योतिषाऽम्भोऽनुसंसृष्टं विकुर्वत् परवीक्षितम् । महीं गन्धगुणामाधात् कालमायांशयोगतः ॥ १४ ॥
भूतानां नभआदीनां यद्यद् भाव्यं परात् परम् । तेषां परानुसंसर्गाद् यथासङ्ख्यं गुणान् विदुः ॥ १५॥
एते देवाः कला विष्णोः कालमायांशलिङ्गिनः । नानात्वात् स्वक्रियानीशाः प्रोचुः प्राञ्जलयो विभुम् ॥

**देवा ऊचुः**

नताः स्म ते देव पदारविन्दं प्रपन्नतापोपशमातपत्रम् ।
यन्मूलकेता यतयोऽञ्जसोरुसंसारदुःखं बहिरुत्क्षिपन्ति ॥ १७ ॥
ऋते यदस्मिन् भव ईश जीवास्तापत्रयेणोपहता न शर्म ।
आत्मन् लभन्ते भगवंस्तवाङ्घ्रिच्छायांशविद्यामत आश्रयेम ॥ १८ ॥
मार्गन्ति यत् ते मुखपद्मनीडैश्छन्दःसुपर्णैर्ऋषयो विविक्ते ।
यच्चाघमर्षो द्युसरिद्वरायाः परं पदं तीर्थपदः प्रपन्नाः ॥ १९ ॥
यच्छ्रद्धया श्रुतवत्या च भक्त्या सम्मृज्यमाने हृदयेऽवधाय[1] ।
ज्ञानेन वैराग्यबलेन धीरा व्रजन्ति तत्[2] तेऽङ्घ्रिसरोजपीठम् ॥ २० ॥
विश्वस्य जन्मस्थितिसंयमार्थे कृतावतारस्य पदाम्बुजं ते ।
व्रजेम सर्वे शरणं यदीश स्मृतं प्रयच्छत्यभयं स्वपुंसाम् ॥ २१ ॥
यत् सानुबन्धेऽसति देहगेहे ममाहमित्यूढदुराग्रहाणाम् ।
पुंसां सुदूरं वसतोऽपि पुर्यां भजेम तत् ते भगवन् पदाब्जम् ॥ २२ ॥
तं त्वामसद्वृत्तिभिरक्षिभिर्ये पराहृतान्तर्मनसः परेश ।
अथो न पश्यन्त्युरुगाय नूनमेते पदन्यासविलासलक्ष्म्याः ॥ २३ ॥
पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये ।
वैराग्यसारं प्रतिलभ्य बोधं यथाऽञ्जसा त्वेयुरकुण्ठधिष्ण्यम्[3] ॥ २४ ॥
तथाऽपरे त्वात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम् ।
त्वामेव धीराः पुरुषं विशन्ति तेषां श्रमः स्यान्नतु सेवया ते ॥ २५ ॥
तत् ते वयं लोकसिसृक्षयाऽद्य त्वया विसृष्टास्त्रिभिरात्मभिर्ये[4] ।
सर्वे वियुक्ताः स्वविहारतन्त्रं न शक्नुमस्तत् प्रतिकर्तवे ते ॥ २६ ॥
यावद् बलिं तेऽज हराम काले यथा वयं चान्नमदाम यत्र ।
तथोभयेषां त इमे हि लोका बलिं हरन्तोऽन्नमदन्त्यनीशाः ॥ २७ ॥

---

१. अवधार्य २. यत् ३. त्वाऽऽपुरकुण्ठधिष्ण्यम् * ४. आत्मभिः स्म *

त्वं नः सुराणामसि सान्वयानां कूटस्थ आद्यः पुरुषः पुराणः ।
त्वं देव शक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविरादधेऽजः ॥ २८ ॥
ततो वयं सत्प्रमुखा यदर्थे बभूविमात्मन् करवाम किं ते ।
त्वं नः स चक्षुः परिदेहि शक्ता देव क्रियार्थे यदनुग्रहेण ॥ २९ ॥

**॥ इति श्रीमद्भागवते तृतीयस्कन्धे षष्ठोऽध्यायः ॥**

---

**ऋषिरुवाच**

इति तासां स्वशक्तीनामसतीनां समेत्य सः । प्रसुप्तलोकतन्त्राणां निशम्य गिरमीश्वरः ॥ १ ॥
कालसञ्ज्ञां तदा देवीं[1] बिभ्रच्छक्तिमुरुक्रमः । त्रयोविंशतितत्त्वानां गणं युगपदाविशत् ॥ २ ॥
सोऽनुप्रविष्टो भगवान् चेष्टारूपेण तं गणम् । भिन्नं संयोजयामास सुप्तं कर्म प्रबोधयन् ॥ ३ ॥
प्रबुद्धकर्मा दैवेन त्रयोविंशतिको गणः । प्रेरितोऽजनयत् स्वाभिर्मात्राभिरधिपूरुषम्[2] ॥ ४ ॥
परेणाविशता स्वस्मिन् मात्रया विश्वसृग् गणः । चुक्षोभान्योन्यमासाद्य यस्मिन् लोकाश्चराचराः ॥
हिरण्मयः स पुरुषः सहस्रपरिवत्सरान् । आण्डकोश उवासाप्सु सर्वसत्वोपबृंहितः ॥ ६ ॥
स वै विश्वसृजां गर्भो दैवकर्मात्मशक्तिमान् । विबभाजात्मनाऽऽत्मानमेकधा दशधा त्रिधा ॥ ७ ॥
एष ह्यशेषसत्वानामात्मांशः परमात्मनः । आद्योऽवतारो यत्रासौ भूतग्रामो विभाव्यते ॥ ८ ॥
साध्यात्मं साधिदैवं च साधिभूतमिति त्रिधा । विराट्प्राणो दशविध एकधा हृदयेन च ॥ ९ ॥
स्मरन् विश्वसृजामीशो विज्ञापितमधोक्षजः । विराजमतपत् स्वेन तेजसैषां विवृद्धये ॥ १० ॥
अथ तस्याभितप्तस्य कति चायतनानि ह । निरभिद्यन्त देवानां तानि मे गदतः शृणु ॥ ११ ॥
तस्याग्निरास्यं निर्भिण्णं लोकपालोऽविशत् पदम् । वाचा स्वांशेन वक्तव्यं ययाऽसौ प्रतिपद्यते ॥१२॥
निर्भिण्णं तालु वरुणो लोकपालोऽविशद्धरेः । जिह्वयांऽशेन च रसान् ययाऽसौ प्रतिपद्यते ॥ १३ ॥
निर्भिण्णे अश्विनौ नासे विष्णोराविशतां पदम् । घ्राणेनांशेन गन्धस्य प्रतिपत्तिर्यतो भवेत् ॥ १४ ॥
निर्भिण्णे अक्षिणी त्वष्टा लोकपालोऽविशत् प्रभोः । चक्षुषांशेन रूपाणां प्रतिपत्तिर्यतो भवेत् ॥ १५ ॥
निर्भिण्णान्यस्य[3] चर्माणि लोकपालोऽनिलोऽविशत् । प्राणेनांशेन संस्पर्शं येनासौ प्रतिपद्यते ॥

---

१. ततो मायाम् ❋ २. अभिपूरुषम् ❋ ३. निर्भिण्णान्यथ ❋

कर्णावस्य विनिर्भिण्णौ धिष्ण्यं स्वं विविशुर्दिशः । श्रोत्रेणांशेन शब्दस्य सिद्धिं येन प्रपद्यते ॥ १७ ॥
त्वचमस्य विनिर्भिण्णां विविशुर्धिष्ण्यमोषधीः । अंशेन लोमभिः कण्डूं यैरसौ प्रतिपद्यते ॥ १८ ॥
मेढ्रं तस्य विनिर्भिण्णं स्वधिष्ण्यं क उपाविशत् । रेतसांऽशेन येनासावानन्दं प्रतिपद्यते ॥ १९ ॥
गुदं पुंसो विनिर्भिण्णं मित्रो लोकेश आविशत् । पायुनांऽशेन येनासौ विसर्गं प्रतिपद्यते ॥ २० ॥
हस्तावस्य विनिर्भिण्णाविन्द्रः स्वर्पतिराविशत् । वार्तयांऽशेन पुरुषो यया वृत्तिं प्रपद्यते ॥ २१ ॥
पादावस्य विनिर्भिण्णौ लोकेशो विष्णुराविशत् । गत्या स्वांशेन गन्तव्यं ययाऽसौ प्रतिपद्यते [१] ॥
हृदयं चास्य निर्भिण्णं चन्द्रमा धिष्ण्यमाविशत् । मनसांऽशेन येनासौ विक्रियां प्रतिपद्यते ॥ २३ ॥
आत्मानं चास्य निर्भिण्णं वाचस्पतिरथाविशत् । बुद्ध्या स्वांशेन येनासौ निश्चयं प्रतिपद्यते ॥ २४ ॥
अहं चास्य विनिर्भिण्णमभिमानोऽविशत् पदम् । कर्त्रा स्वांशेन येनासौ कर्तव्यं प्रतिपद्यते ॥ २५ ॥
सत्त्वं चास्य विनिर्भिण्णं महान् धिष्ण्यमुपाविशत् । चित्तेनांशेन येनासौ[२] विज्ञानं प्रतिपद्यते ॥ २६ ॥
शीर्ष्णोऽस्य द्यौर्धरा[३] पद्भ्यां खं नाभेरुदपद्यत । गुणानां वृत्तयो येषु प्रतीयन्ते सुरादयः ॥ २७ ॥
औत्पत्तिकेन सत्त्वेन दिवं देवाः प्रपेदिरे । धरां रजःस्वभावेन पणयो ये चताननु ॥ २८ ॥
तार्तीयेन स्वभावेन भगवन्नाभिमाश्रिताः । उभयोरन्तरं व्योम ये रुद्रपार्षदा गणाः ॥ २९ ॥
मुखतोऽवर्तत ब्रह्म पुरुषस्य कुरूद्वह । यत्रोन्मुखत्वाद् वर्णानां मुख्योऽभूद् ब्राह्मणो गुरुः ॥ ३० ॥
बाहुभ्योऽवर्तत क्षत्रं क्षत्रियस्तदनुव्रतः । यो जातस्त्रायते वर्णान् पुरुषान् कण्टकक्षतात्[४] ॥ ३१ ॥
विशोऽवर्तन्त तस्योर्वोर्लोकवृत्तिकरीर्विभोः। वैश्यस्तदुद्भवो वार्तां नृणां यः समवर्तयत् ॥ ३२ ॥
पद्भ्यां भगवतो जज्ञे शुश्रूषाधर्मसिद्धये[५] । तस्यां जातः पुरा शूद्रो यद्वृत्त्या तुष्यते हरिः ॥ ३३ ॥
एते वर्णाः स्वधर्मेण यजन्ते स्वगुरुं हरिम् । श्रद्धयाऽऽत्मविशुद्ध्यर्थं यज्जाताः सह वृत्तिभिः॥ ३४ ॥
एतत् क्षत्तर्भगवतो दैवकर्मात्मरूपिणः । कः श्रद्दध्यादुदाहर्तुं योगमायाबलोदयम् ॥ ३५ ॥
अथापि कीर्तयाम्यङ्ग यथामति यथाश्रुतम् । कीर्तिं हरेः स्वां संस्कर्तुं गिरमन्याभिधां सतीम् ॥ ३६ ॥

एकान्तलाभं वचसो नु पुंसः सुश्लोकमौळेर्गुणवादमाहुः ।
श्रुतेश्च विद्वद्भिरुपाकृतायाः कथासुधाया उत सम्प्रयोगः ॥ ३७ ॥

आत्मनोऽवसितो वत्स महिमा कविनाऽऽदिना । संवत्सरसहस्रान्ते धिया योगविपक्कया ॥ ३८ ॥

---

१. गत्या स्वांशेन पुरुषो यया प्राप्यं प्रपद्यते २. कर्त्रांशेन च येनासौ ❋
३. शीर्ष्णो द्यौश्च धरा ❋ ४. कण्टकक्षतान् ५. शुश्रूषाकर्मसिद्धये

अहो[1] भगवतो माया मायिनामपि मोहिनी । यत् स्वयं चात्मवर्त्माऽऽत्मा न वेद किमुतापरे ।।३९।।
यतोऽप्राप्य निवर्तन्ते वाचश्च मनसा सह । अहं चान्य इमे देवास्तस्मै भगवते नमः ।। ४० ।।

**।। इति श्रीमद्भागवते तृतीयस्कन्धे सप्तमोऽध्यायः ।।**

---

एवं[2] ब्रुवाणं मैत्रेयं द्वैपायनसुतो बुधः । प्रीणयन्निव भारत्या विदुरः प्रत्यभाषत ।। १ ।।

**विदुर उवाच**

ब्रह्मन् कथं भगवतश्चिन्मात्रस्याविकारिणः । लीलया चापि युज्येरन् निर्गुणस्य गुणाः क्रियाः ।। २ ।।
क्रीडाया मुद् यतोऽर्हस्य कामं चिक्रीडिषाऽन्यतः । स्वतस्तृप्तस्य तु कथं निर्वृतस्य सदात्मनः।। ३ ।।
अस्राक्षीत् भगवान् विश्वं गुणमय्याऽऽत्ममायया । तथा संस्थापयत्येतद् भूयः प्रत्यभिधास्यति ।। ४ ।।
देशतः कालतो योऽसाववस्थातः स्वतोऽन्यतः । अविलुप्तावबोधात्मा स युज्येताजया[3] कथम् ।।५।।
भगवानेष एवैकः सर्वक्षेत्रेष्ववस्थितः । अमुष्य दुर्भगत्वं वा क्लेशो वा कर्मभिः कुतः ।। ६ ।।
एतस्मिन् मे मनो विद्वन् खिद्यते ज्ञानसङ्कटे । तन्नः पराणुद विभो कश्मलं मानसं महत् ।। ७ ।।

**श्रीशुक उवाच**

स इत्थं चोदितः क्षत्त्रा तत्त्वजिज्ञासुना मुनिः । प्रत्याह भगवच्चित्तः स्मयन्निव गतस्मयः ।। ८ ।।

**मैत्रेय उवाच**

सेयं भगवतो माया न्याय्यं येन विरुध्यते । ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनम् ।। ९ ।।
यथाऽर्थेन विनाऽमुष्य पुंस आत्मविपर्ययः । प्रतीयत उपद्रष्टुः स्वशिरश्छेदनादिकः ।। १० ।।
यथा जले चन्द्रमसः कम्पादिस्तत्कृतो गुणः । दृश्यतेऽसन्नपि द्रष्टुरात्मनोऽनात्मनो गुणः ।। ११ ।।
स वै निवृत्तिधर्मेण वासुदेवानुकम्पया । भगवद्भक्तियोगेन तिरोधत्ते शनैरिह ।। १२ ।।
यदेन्द्रियोपरामार्थो द्रष्टात्मनि परे हरौ । विलीयन्ते तदा क्लेशाः संसुप्तस्येव कृत्स्नशः ।। १३ ।।

अशेषसङ्क्लेशशमं विधत्ते गुणानुवादश्रवणं मुरारेः ।
किं वा पुनस्तच्चरणारविन्दपरागसेवारतिरात्मलब्धा ।। १४ ।।

**विदुर उवाच**

सञ्छिन्नः संशयो मह्यं तव सूक्तासिना विभो । उभयत्रापि भगवन् मनो मे सम्प्रधावति ।। १५ ।।

---

१. अतः २. इति * ३. संयुज्येताजया *

साधु तद् व्याहृतं [1]विद्वन्नात्ममायायनं हरेः । आभात्यपार्थं निर्मूलं विश्वमूलं न यद् बहिः ॥ १६ ॥
यश्च मूढतमो लोके यश्च बुद्धेः परं गतः । तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः ॥ १७ ॥
अर्थाभावं विनिश्चित्य प्रतीतस्याप्यनात्मनः । तां चापि युष्मच्चरणसेवयाऽहं पराणुदे ॥ १८ ॥
यत्सेवया भगवतः कूटस्थस्य मधुद्विषः । रतिरासो भवेत् तीव्रः पादयोर्व्यसनार्दनः ॥ १९॥
दुरापा ह्यल्पतपसां सेवा वैकुण्ठवर्त्मसु । यत्रोपगीयते नित्यं देवदेवो जनार्दनः ॥ २० ॥
सृष्ट्वाऽग्रे महदादीनि सविकाराण्यनुक्रमात् । तेभ्यो विराजमुद्धृत्य तमनु प्राविशद् विभुः[2] ॥ २१ ॥
यमाहुराद्यं पुरुषं सहस्राङ्घ्र्यूरुबाहुकम् । यत्र विश्व इमे लोकाः सविकासं समासते ॥ २२ ॥
यस्मिन् दशविधः प्राणः सेन्द्रियार्थेन्द्रियस्त्रिवृत् । त्वयेरिता यतो वर्णास्तद्विभूतीर्वदस्व नः॥ २३ ॥
यत्र पुत्रैश्च पौत्रैश्च नप्तृभिः सह गोत्रजैः । प्रजा विचित्राकृतय आसन् याभिरिदं ततम् ॥ २४ ॥
प्रजापतीनां स पतिश्चक्लृपे कान् प्रजापतीन् । सर्गांश्चैवानुसर्गांश्च मनून् मन्वन्तराधिपान् ॥ २५॥
एतेषामपि वंशाश्च वंशानुचरितानि च । उपर्यधश्च ये लोका भूमेर्मित्रात्मजासते ।
तेषां संस्थां प्रमाणं च भूर्लोकस्य च वर्णय ॥ २६ ॥
तिर्यङ्मनुष्यदेवानां सरीसृपपतत्रिणाम् । वद नो सर्गसंव्यूहं गर्भस्वेदद्विजोद्भिदाम् ॥ २७ ॥
गुणावतारैर्विश्वस्य सर्गस्थित्यप्ययात्मनः । सृजतः श्रीनिवासस्य व्याचक्ष्वोदारविक्रमम् ॥२८॥
वर्णाश्रमविभागांश्च रूपशीलस्वभावतः । ऋषीणां जन्मकर्माणि वेदस्य च विकर्षणम् ।
यज्ञस्य च वितानानि योगस्य च पथः प्रभो ॥ २९ ॥
नैष्कर्म्यस्य च साङ्ख्यस्य तन्त्रं वा भगवत्स्मृतम् । पाषण्डपथवैषम्यं[3] प्रतिलोमनिवेशनम् ॥ ३० ॥
जीवस्य गतयो याश्च यावतीर्गुणकर्मजाः । धर्मार्थकाममोक्षाणां निमित्तान्यविरोधतः ॥ ३१ ॥
वार्ताया दण्डनीतेश्च श्रुतस्य च विधिं पृथक् । श्राद्धस्य च विधिं ब्रह्मन् पितॄणां सर्गमेव च ॥ ३२ ॥
ग्रहनक्षत्रताराणां कालावयवसंस्थितिम् । दानस्य तपसो वापि यच्चेष्टापूर्तयोः फलम् ॥ ३३ ॥
वानप्रस्थस्य यो धर्मो यश्च पुंस उतापदि । येन वा भगवांस्तुष्येद् धर्मयोनिर्जनार्दनः ॥ ३४ ॥
सम्प्रसीदति वा येषामेतदाख्याहि मेऽनघ । अनुव्रतानां शिष्याणां पुत्राणां च द्विजोत्तम ॥ ३५ ॥
अनापृष्टमपि ब्रूयुर्गुरवो दीनवत्सलाः । तत्त्वानां भगवंस्तेषां कतिधा प्रतिसङ्क्रमः ॥ ३६ ॥

---

१. ब्रह्मन् ❋ २. प्रभुः ❋ ३. पाषण्डस्य च वैषम्यम् ❋

तत्रेमं क उपासीरन् क उ स्विदनुशेरते। पुरुषस्य च संस्थानं स्वरूपं वा परस्य च ॥ ३७ ॥
ज्ञानं च नैगमं यत् तद् गुरुशिष्यप्रयोजनम्। निमित्तानि च तस्येह प्रोक्तान्यनघ सूरिभिः ॥ ३८ ॥
स्वतो ज्ञानं कुतः पुंसां भक्तिर्वैराग्यमेव वा ॥ ३९ ॥
एतान् मे पृच्छतः प्रश्नान् हरेः कर्मविवित्सया। ब्रूहि मेऽन्धस्य मित्रत्वादजया नष्टचक्षुषः ॥ ४० ॥
सर्वे वेदाश्च यज्ञाश्च तपो दानानि चानघ। जीवाभयप्रदानस्य न कुर्वीरन् कलामपि ॥ ४१ ॥

**श्रीशुक उवाच**

स इत्थमापृष्टपुराणकल्पः कुरुप्रधानेन मुनिप्रधानः।
प्रवृद्धहर्षो भगवत्कथायां सञ्चोदितस्तं प्रहसन्निवाह ॥ ४२ ॥

**॥ इति श्रीमद्भागवते तृतीयस्कन्धे अष्टमोऽध्यायः ॥**

---

**मैत्रेय उवाच**

सत्सेवनीयो बत पूरुवंशो यल्लोकपालो भगवत्प्रधानः।
बभूविथेहाजितकीर्तिमालां पदेपदे नूतनयस्यभीक्ष्णम् ॥ १ ॥
सोऽहं नृणां क्षुल्लसुखाय दुःखं महद् गतानां विरमाय तुभ्यम्।
प्रवर्तये भागवतं पुराणं यदाह साक्षाद् भगवान् ऋषिभ्यः ॥ २ ॥
आसीनमुर्व्यां भगवन्तमाद्यं सङ्कर्षणं देवमकुण्ठसत्वम्।
विवित्सवस्तत्त्वमतः परस्य कुमारमुख्या मुनयोऽन्वपृच्छन् ॥ ३ ॥
स्वमेव धिष्ण्यं बहुमानयन्तं यं वासुदेवाभिधमामनन्ति।
प्रत्यग्धृताक्षाम्बुजकोशमीषदुन्मीलयन्तं विबुधोदयाय ॥ ४ ॥
स्वर्धुन्युदारैः स्वजटाकलापैरुपस्पृशन्त[१]श्चरणोपधानम्।
पद्मं यदर्चन्त्यहिराजकन्याः सप्रेम नानाबलिभिर्वरार्हाः ॥ ५ ॥
मुहुर्गृणन्तो वचसाऽनुरागस्खलत्पदेनास्य कृतानि तज्ज्ञाः।
किरीटसाहस्रमणिप्रवेकप्रद्योतितोद्दामफणासहस्रम् ॥ ६ ॥
प्रोक्तं किलैतद् भगवत्तमेन निवृत्तिधर्माभिरताय तेन।
सनत्कुमाराय स चाह पृष्टः साङ्ख्यायनायाङ्ग धृतव्रताय ॥ ७ ॥

---

१. उपस्पृशन्त्यः

भृत्यानुकम्पितधियेह गृहीतमूर्तेः सञ्चिन्तयेद् भगवतो वदनारविन्दम् ।
यद् विष्फुरन्मकरकुण्डलवल्गितेन विद्योतितामलकपोलमुदारहासम् ॥ २८ ॥
यच्छ्रीनिकेतमळिभिः परिसेव्यमानं भूत्या स्वया कुटिलकुन्तळवृन्दजुष्टम् ।
मीनद्वयश्रियमधिक्षिपदब्जनेत्रं ध्यायेन्मनोमयमतन्द्रित उल्लसद्भ्रु ॥ २९ ॥
तस्यावलोकमधिकं कृपयाऽतिघोरतापत्रयोपशमनाय निसृष्टमक्ष्णोः ।
स्निग्धस्मितानुगुणितं विपुलप्रसादं ध्यायेच्चिरं विततभावनया गुहायाम् ॥ ३० ॥
हासं हरेरवनताखिललोकतीव्रशोकाश्रुसागरविशोषणमत्युदारम् ।
सम्मोहनाय रचितं निजमाययाऽस्य भ्रूमण्डलं मनुसुते मकरध्वजस्य ॥ ३१ ॥
ध्यानायनं रहसि तद् बहळाधरोष्ठभासाऽरुणायिततनुद्विजकुन्दपङ्क्ति ।
ध्यायेत् स्वहृत्कुहरकेऽवसितस्य विष्णोर्भक्त्याऽऽर्द्रयाऽर्पितमना न पृथग् दिदृक्षेत् ॥ ३२ ॥
एवं हरौ भगवति प्रतिलब्धभावो भक्त्या द्रवद्धृदय उत्पुळकप्रमोदः ।
औत्कण्ठ्यबाष्पकळया मुहुरर्द्यमानस्तच्चापि चित्तबळिशं[१] शनकैर्वियुङ्क्ते ॥ ३३ ॥
मुक्ताश्रयं यर्हि निर्विषयं स्वचित्तं निर्वाणमृच्छति मनः सहसा यथाऽर्चिः ।
आत्मानमत्र पुरुषोऽव्यवधानमेकमन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः ॥ ३४ ॥
सोऽप्येतया चरमया मनसो निवृत्त्या तस्मिन् महिम्न्यवसितः सुखदुःखबाह्ये ।
हेतुत्वमप्यसति कर्तरि दुःखयोर्न स्वात्मन् विधत्त उपलब्धपरात्मकाष्ठः ॥ ३५ ॥
देहं तु तं न चरमं स्थितमुज्झितं वा सिद्धो विपश्यति यतोऽध्यगमत् स्वरूपम् ।
दैवादुपेतमथ दैववशादपेतं वासो यथा परिकृतं मदिरामदान्धः ॥ ३६ ॥
देहोऽपि दैववशगः खलु कर्म यावत् स्वारम्भकं प्रतिसमीक्षत एव सासुः ।
तं सप्रपञ्चमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवत् सः ॥ ३७ ॥
यथा पुत्राच्च वित्ताच्च पृथङ् मर्त्यः प्रतीयते । अप्यात्मत्वेनाभिमताद् देहादेः पुरुषस्तथा ॥ ३८ ॥
यथोल्मुकाद् विष्फुलिङ्गाद् धूमाद् वाऽपि स्वसम्भवात् ।
अप्यात्मत्वेनाभिमताद् दाहकोऽग्निः पृथङ् मतः ॥ ३९ ॥
भूतेन्द्रियान्तःकरणात् प्रधानाज्जीवसञ्ज्ञितात् । आत्मा तथा पृथग् द्रष्टा भगवान् ब्रह्मसञ्ज्ञितः ॥४०॥

---
१. चित्तबडिशम्

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि । ईक्षेतानन्यभावेन भूतेष्वपि तदात्मताम् ॥ ४१॥
स्वयोनिषु यथा ज्योतिरेकं नाना प्रतीयते । योनीनां गुणवैषम्यात् तथाऽऽत्मा प्रकृतौ स्थितः ॥ ४२ ॥
तस्मादिमां स्वां प्रकृतिं देवीं[१] सदसदात्मिकाम् । दुर्विभाव्यां पराभाव्य स्वरूपेणावतिष्ठते ॥ ४३ ॥
अन्वयव्यतिरेकाच्च साक्ष्यात्मा व्यभिचारिणः । वैतथ्यं व्यभिचारं च निद्रान्तेऽस्यानुचिन्तयेत् ॥ ४४ ॥

**॥ इति श्रीमद्भागवते तृतीयस्कन्धे एकोनत्रिंशोऽध्यायः ॥**

---

**देवहूतिरुवाच**

लक्षणं महदादीनां प्रकृतेः पुरुषस्य च । स्वरूपं लक्ष्यतेऽमीषां येन तत् पारमार्थिकम् ॥ १ ॥
यथा साङ्ख्येषु कथितं यन्मूलं तत् प्रचक्षते । भक्तियोगस्य मे मार्गं ब्रूहि विस्तरशः प्रभो ॥ २ ॥
विरागो येन पुरुषो भगवन् सर्वतो भवेत् । आचक्ष्व जीवलोकस्य विविधाः कर्मसंसृतीः[२] ॥ ३ ॥
कालस्येश्वररूपस्य परेषां च परस्य ते । स्वरूपं बत कुर्वन्ति यद्धेतोः कुशलं जनाः ॥ ४ ॥
लोकस्य मिथ्याभिमतेरचक्षुषश्चिरं प्रसुप्तस्य तमस्यनाश्रये ।
श्रान्तस्य कर्मण्यनुविद्धया धिया त्वमाविरासीः किल योगभास्करः ॥ ५ ॥

**मैत्रेय उवाच**

इति मातुर्वचः श्लक्ष्णं प्रतिनन्द्य महामुनिः । आबभाषे कुरुश्रेष्ठ प्रीतस्तां करुणार्दितः ॥ ६ ॥

**श्रीभगवानुवाच**

भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते । स्वभावगुणमार्गेण पुंसां भावो विभिद्यते ॥ ७ ॥
अभिसन्धाय यो हिंसां दम्भं मात्सर्यमेव वा । संरम्भी भिन्नदृग् भावं मयि कुर्यात् स तामसः ॥ ८ ॥
विषयानभिसन्धाय यश ऐश्वर्यमेव वा । अर्चादावर्चयेद् यो मां पृथग्भावः स राजसः ॥ ९ ॥
कर्मनिर्हारमुद्दिश्य परस्मिन् वा तदर्पणम् । यजेद् यष्टव्यमिति वाऽपृथग्भावः स सात्त्विकः ॥ १० ॥
मद्गुणश्रुतमात्रेण मयि सर्वगुणाश्रये । मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥ ११ ॥
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् । अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥ १२ ॥
सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमित्युत[३] । दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥ १३ ॥

---

१. दैवीम् ❋ २. मम संसृतीः ❋ ३. .... एकत्वमप्युत

स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः । येनातिव्रज्य त्रिगुणान् मद्भावायोपपद्यते ॥ १४ ॥
निषेवितेनानिमित्तेन स्वधर्मेण महीयसा । क्रियायोगेन शक्तेन[1] नातिहिंस्रेण नित्यशः ॥ १५ ॥
मद्धिष्ण्यदर्शनस्पर्शपूजास्तुत्यभिवन्दनैः । भूतेषु मद्भावनया सत्येनासङ्गमेन च ॥ १६ ॥
महतां बहुमानेन हीनानामनुकम्पया । मैत्र्या चैवात्मतुल्येषु यमेन नियमेन च ॥ १७ ॥
आध्यात्मिकानुश्रवणान्नामसङ्कीर्तनाच्च मे । आर्जवेनार्यसङ्गेन निरहङ्क्रियया तथा ॥ १८ ॥
मद्धर्मेण च यद्धैतैः परिसंशुद्ध आशयः । पुरुषस्याञ्जसाऽभ्येति श्रुतमात्रगुणं हि माम् ॥ १९ ॥
यथा वातरथो घ्राणमावृङ्क्ते गन्ध आशयात्[2] । एवं योगरतं चेत आत्मानमविकारि यत् ॥ २० ॥
अहं सर्वेषु भूतेषु भूतात्माऽवस्थितः सदा । तमवज्ञाय मां मर्त्यः कुरुतेऽर्चाविडम्बनम् ॥ २१ ॥
यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम् । हित्वाऽर्चां भजते मौढ्याद् भस्मन्येव जुहोति सः ॥ २२ ॥
द्विषतः परकाये मां मानिनो भिन्नदर्शिनः । भूतेषु बद्धवैरस्य न मनः शान्तिमृच्छति ॥ २३ ॥
अहमुच्चावचैर्द्रव्यैः क्रिययोत्पन्नयाऽनघे । नैव तुष्येऽर्चितोऽर्चायां भूतग्रामावमानिनः ॥ २४ ॥
अर्चादावर्चयेत् तावदीश्वरं मां स्वकर्मकृत् । यावन्न वेद स्वहृदि सर्वभूतेष्ववस्थितम् ॥ २५ ॥
आत्मनश्च परस्यापि यः करोत्यन्तरोदरम् । तस्य भिन्नदृशो मृत्युर्विधत्ते भयमुद्बणम् ॥ २६ ॥
अथ मां सर्वभूतेषु भूतात्मानं कृतालयम् । अर्हयेद् दानमानाभ्यां मैत्र्या भिन्नेन चक्षुषा ॥ २७ ॥
जीवाः श्रेष्ठा ह्यजीवानां ततः प्राणभृतः शुभे । ततः सचित्ताः प्रवरास्ततश्चेन्द्रियवृत्तयः ॥ २८ ॥
अत्रापि[3] स्पर्शवेदिभ्यः प्रवरा रसवेदिनः । तेभ्यो गन्धविदः श्रेष्ठास्ततः शब्दविदो वराः ॥ २९ ॥
रूपभेदविदस्तत्र ततश्चोभयतोदतः । तेषां बहुपदः श्रेष्ठाश्चतुष्पादस्ततो द्विपात् ॥ ३० ॥
ततो वर्णाश्च चत्वारस्तेषां ब्राह्मण उत्तमः । ब्राह्मणेष्वपि वेदज्ञो ह्यर्थज्ञोऽभ्यधिकस्ततः ॥ ३१ ॥
अर्थज्ञात् संशयच्छेत्ता ततः श्रेयान् स्वधर्मकृत् । मुक्तसङ्गस्ततो भूयान् न दोग्धा धर्ममात्मनः ॥३२॥
तस्मान्मय्यर्पिताशेषक्रियार्थात्मरतिर्नरः । मय्यर्पितात्मनः पुंसो मयि सन्न्यस्तकर्मणः
न पश्यामि परं भूतमकर्तुः समदर्शिनः ॥ ३३ ॥
मनसैतानि भूतानि प्रणमेद् बहुमानयन् । ईश्वरो जीवकलया प्रविष्टो भगवानिति ॥ ३४ ॥
भक्तियोगश्च योगश्च मया मानव्युदाहृतः[4] । ययोरेकतरेणैव पुरुषः पुरुषं व्रजेत् ॥ ३५ ॥
यत् तद् भगवतो रूपं ब्रह्मणः परमात्मनः । परं प्रधानात् पुरुषाद्[5] दैवं कर्मविचेष्टितम् ॥ ३६ ॥

---

१. शस्तेन २. आश्रयात् ३. तत्रापि ❋ ४. उदीरितः ५. प्रधानपुरुषात् ❋

रूपभेदास्पदं दिव्यं काल इत्यभिधीयते। भूतानां महदादीनां यतो भिन्नदृशां भयम् ॥ ३७ ॥
योऽन्तः प्रविश्य भूतानि भूतैरत्त्यखिलाश्रयः। स विष्ण्वाख्यो धिया ज्ञेयः कालः कलयतां प्रभुः॥
न चास्य कश्चिद् दयितो न द्वेष्यो न च बान्धवः। आविशत्यप्रमत्तोऽसौ प्रमत्तं जनमन्तकृत् ॥ ३९ ॥
यद्भयाद् वाति वातोऽयं सूर्यस्तपति यद्भयात्। यद्भयाद् वर्षते देवो भगणो भाति यद्भयात्॥ ४० ॥
यद् वनस्पतयो भीता लताश्चौषधिभिः सह। स्वेस्वे काले हि गृह्णन्ति पुष्पाणि च फलानि च ॥४१॥
स्रवन्ति सरितो भीता नोत्सर्पत्युदधिर्यतः। अग्निरिन्धे सगिरिभिर्भूर्न मज्जति यद्भयात् ॥ ४२ ॥
नभो ददाति श्वसतां मार्गं यन्नियमाददः। लोकस्य देहं तनुते महान् सप्तभिरावृतः ॥ ४३ ॥
गुणाभिमानिनो देवाः सर्गादिष्वस्य यद्भयात्। वर्तन्तेऽनुयुगं येषां वश एतच्चराचरम्[१] ॥ ४४ ॥
सोऽनन्तोऽन्तकरः कालोऽनादिरादिकृदव्ययः। जनं जनेन जनयन् मारयन् मृत्युनाऽऽत्मना॥ ४५ ॥

**॥ इति श्रीमद्भागवते तृतीयस्कन्धे त्रिंशोऽध्यायः ॥**

---

**श्रीभगवानुवाच**

तस्यैतस्य जनो नूनं नायं वेदोरुविक्रमम्। काल्यमानोऽपि बलिना वायोरिव घनावळिः ॥ १ ॥
यँयमर्थमुपादत्ते दुःखेन सुखहेतवे। तंतं धुनोति भगवान् पुमाञ्छोचति यत्कृते ॥ २ ॥
यदध्रुवस्य देहस्य सानुबन्धस्य दुर्मतिः। ध्रुवाणि मन्यते मोहाद् गृहक्षेत्रवसूनि च ॥ ३ ॥
जन्तुर्वै भव एतस्मिन् याँयां योनिमुपव्रजेत्। तस्यां तस्यां स लभते निर्वृतिं न विरज्यते ॥ ४ ॥
नरकस्थोऽपि देहं वै न पुमांस्त्यक्तुमिच्छति। नारक्यां निर्वृतौ सत्यां देवमायाविमोहितः ॥ ५ ॥
आत्मजायासुतागारपशुद्रविणबन्धुषु। निरूढमूलहृदय आत्मानं बहुमन्यते ॥ ६ ॥
सन्दह्यमानसर्वाङ्ग एषामुद्वहनाधिना[२]। करोत्यविरतं मूढो दुरितानि दुराशयः ॥ ७ ॥
आक्षिप्तात्मेन्द्रियः स्त्रीणामसतीनां च मायया। रहोरचितसँल्लापैः शिशूनां कळभाषणैः ॥ ८ ॥
गृहेषु कूटधर्मेषु दुःखतन्त्रेष्वतन्द्रितः। कुर्वन् दुःखप्रतीकारं सुखवन्मन्यते गृही ॥ ९ ॥
अर्थैरापादितैर्गुर्व्या हिंसयेतस्ततश्च तान्[३]। पुष्णाति येषां पोषेण शेषभुग् यात्यधः स्वयम्॥ १० ॥
वार्तायां लुप्यमानायामारब्धायां पुनःपुनः। लोभाभिभूतो निःसत्वः परार्थे कुरुते स्पृहाम्॥ ११ ॥

---

१.वशमेतच्चराचरम् ❋ २. उद्वहनादिना ३. इतस्ततः स्वकान् ❋

कुडुम्बभरणाकल्यो मन्दभाग्यो वृथोद्यमः । श्रिया विहीनः कृपणो ध्यायञ्छ्वसति मूढधीः ॥ १२ ॥
तं च स्वभरणाकल्यं तत्कळत्रादयस्तदा । नाद्रियन्ते यथापूर्वं कीनाश इव गोजरम् ॥ १३ ॥
तत्राप्यजातनिर्वेदो भ्रियमाणः स्वयं भृतैः । जरयोपात्तवैरूप्यो मरणाभिमुखो गृहे ॥ १४ ॥
आस्तेऽवमत्याऽपत्याद्यैर्गृहपाल इवाहरन् । आमयेनाप्रदीप्ताग्निरल्पाहारोऽल्पचेष्टितः ॥ १५ ॥
वायुनोत्क्रमतोत्तारकफसंरुद्धनासिकः । कासश्वासकृतायासः कण्ठो घुरुघुरायते ॥ १६ ॥
शयानः परिशोचद्भिः परिवीतः स्वबन्धुभिः । वाच्यमानोऽपि न ब्रूते कालपाशवशं गतः ॥ १७ ॥
एवं कुडुम्बभरणे व्यापृतात्माऽजितेन्द्रियः । म्रियते क्रन्दतां[१] स्वानामुरुवेदनयाऽस्तधीः ॥ १८ ॥
यमदूतौ तदा प्राप्तौ भीमौ सरभसेक्षणौ । स दृष्ट्वा त्रस्तहृदयः शकृन्मूत्रं विमुञ्चति ॥ १९ ॥
यातनादेह आवृत्य पाशैर्बद्ध्वा गळे बलात् । नयतो दीर्घमध्वानं दण्ड्यं राजभटा यथा ॥ २० ॥
तयोर्निर्भिण्णहृदयस्तर्जनैर्जातवेपथुः । पथि श्वभिर्भक्ष्यमाण आर्तोऽघं स्वमनुस्मरन् ॥ २१ ॥

क्षुत्तृट्परीतोऽर्कदवानलानिलैः सन्तप्यमानः पथि तप्तवालुके ।
कृच्छ्रेण पृष्ठे कशया च ताडितश्चलत्यशक्तोऽपि निराश्रयोदके ॥ २२ ॥

तत्रतत्र पतञ्छ्रान्तो मूर्च्छितः पुनरुत्थितः । पथा पापीयसा नीतस्तमसा यमसादनम् ॥ २३ ॥
योजनानां सहस्राणि नवतिर्नव चाध्वनः । त्रिभिर्मुहूर्तैर्द्वाभ्यां वा नीतः प्राप्नोति यातनाम् ॥ २४ ॥
आदीपनं स्वगात्राणां वेष्टयित्वोल्मुकादिभिः । आत्ममांसादनं क्वापि स्वकृतं परतोऽपि वा॥ २५ ॥
जीवतश्चान्त्राभ्युद्धारः[२] श्वगृध्रैर्यमसादने । सर्पवृश्चिकदंशाद्यैः स्मरद्भिश्चात्मवैशसम् ॥ २६ ॥
कृन्तनं चावयवशो गजादिभ्योऽभिधावनम् । पातनं गिरिशृङ्गेभ्यो रोधनं बन्धगर्तयोः ॥ २७ ॥
यास्तामिस्रान्धतामिस्ररौरवाद्याश्च यातनाः । भुङ्क्ते नरो वा नारी वा मिथः सङ्गेन निर्मिताः ॥ २८ ॥
अत्रैव नरकः स्वर्ग इति मातः प्रचक्षते । या यातना वै नारक्यस्ता इहाप्युपलक्षिताः ॥ २९ ॥
एवं कुडुम्बं बिभ्राण[३] उदरम्भर एव वा । विसृज्येहोभयं प्रेत्य भुङ्क्ते तत्फलमीदृशम् ॥ ३० ॥
एकः प्रपद्यतेऽध्वानं हित्वेह स्वकळेबरम्[४] । कुशलेतरपाथेयो भूतद्रोहेण यद् भृतम् ॥ ३१ ॥
दैवेनासादितं तस्य शमलं निरये पुमान् । भुङ्क्ते कुडुम्बपोषस्य हृतचित्त इवातुरः ॥ ३२ ॥
केवलेन ह्यधर्मेण कुडुम्बभरणोन्मुखः । याति जीवोऽन्धतामिस्रं चरमं तमसः पदम् ॥ ३३ ॥

---

१. रुदताम् २. जीवतः स्वान्त्राभ्युद्धारः * ३. कुडुम्बभरणः * ४. हित्वैतच्च कळेबरम् *

अधस्तान्नरलोकस्य यावतीर्यातनास्तु ताः । क्रमशः समनुक्रम्य पुनरत्राव्रजेच्छुचिः ॥ ३४ ॥

**॥ इति श्रीमद्भागवते तृतीयस्कन्धे एकत्रिंशोऽध्यायः ॥**

---

**श्रीभगवानुवाच**

कर्मणा दैवतन्त्रेण जन्तुर्देहोपपत्तये । स्त्रियाः प्रविष्ट उदरं पुंसो रेतःकणाश्रयः ॥ १ ॥

कलिलं[1] त्वेकरात्रेण पञ्चरात्रेण बुद्बुदम् । दशाहेन तु कर्कन्धुः पेश्यण्डं वा ततः परम् ॥ २ ॥

मासेन तु शिरो द्वाभ्यां बाह्वङ्घ्र्याद्यङ्गविग्रहः । नखलोमास्थिचर्माणि लिङ्गच्छिद्रोद्भवस्त्रिभिः॥ ३ ॥

चतुर्भिर्धातवः सप्त पञ्चभिः क्षुत्तृडुद्भवः । षड्भिर्जरायुणा वीतः कुक्षौ भ्राम्यति दक्षिणे ॥ ४ ॥

सप्तमे जन्मकर्माणि गतानि स्मरते ऋषिः । जगत्यां यानि देवस्य मायया बन्धमात्मनः ॥ ५ ॥

मातुर्जग्धान्नपानाद्यैरेधत्यातुरसम्मतः[2] । आस्ते विण्मूत्रयोर्गर्ते सजन्तुर्जन्तुसम्भवे ॥ ६ ॥

कृमिभिः क्षतकण्डूवङ्गः सौकुमार्यात् प्रतिक्षणम् । मूर्च्छामाप्नोत्युरुक्लेशस्तत्रत्यैः क्षुधितैर्मुहुः ॥ ७ ॥

कटुतीक्ष्णोष्णलवणक्षाराम्लादिभिरुद्बणैः । मातृभुक्तैरुपस्पृष्टः सर्वाङ्गोत्थितवेदनः ॥ ८ ॥

उल्बेन संवृतस्तस्मिन्नान्त्रैश्च बहिरावृतः । आस्ते कृत्वा शिरः कुक्षौ भुग्नपृष्ठशिरोधरः ॥ ९ ॥

अकल्पः स्वाङ्गचेष्टायां शकुन्त इव पञ्जरे । तत्र लब्धस्मृतिर्दैवात् कर्म जन्मशतोद्भवम् ।
स्मरन् दीर्घमनुच्छ्वासं गर्भे किं नाम विन्दते ॥ १० ॥

आरभ्य सप्तमान्मासाल्लब्धबोधोऽतिवेपितः । नैकत्रास्ते सूतिवातैर्विष्ठाभूरिव सोदरः ॥ ११ ॥

नाथमानो ऋषिर्भीतः सप्तवध्रिः कृताञ्जलिः । स्तवीति तं विक्लबया वाचा येनोदरेऽर्पितः ॥ १२ ॥

**जीव उवाच**

तस्योपसन्नमवितुर्जगदिच्छयाऽऽत्तलीलातनोर्भुवि[3] लसच्चरणारविन्दम् ।
सोऽहं व्रजामि शरणं नकुतोभयं मे येनेदृशी गतिरदर्श्यसतोऽनुरूपा ॥ १३ ॥

यस्त्वत्र बद्ध इव कर्मभिरावृतात्मा भूतेन्द्रियाशयमयीमवलम्ब्य मायाम् ।
आस्ते विशुद्धमविकारमखण्डबोधमातप्यमानहृदयेऽवसितं तमेमि ॥ १४ ॥

यः पञ्चभूतरचिते रहितः[4] शरीरे छन्नो यथेन्द्रियगुणार्थविदात्मकोऽहम् ।
तेनाविकुण्ठमहिमानमृषिं तमेनं वन्दे परं प्रकृतिपूरुषयोः पुमांसम् ॥ १५ ॥

---

१. कललम् ❃ २. अन्नपानाभ्यामेधेतातुरसम्मतः ❃ ३. आत्तनानातनोर्भुवि ❃ ४. अवहितः ❃

यन्माययोरुगुणकर्मनिबन्धनेऽस्मिन् सांसारिके पथि चरंस्तदतिश्रमेण[१] ।
नष्टस्मृतिः पुनरयं प्रवृणीत लोको युक्त्या कया महदनुग्रहमन्तरेण ॥ १६ ॥
ज्ञानं यदेतददधात्[२] कतमः स देवस्त्रैकालिकं स्थिरचरेष्वनुवर्तितांशः।
तं जीवकर्मपदवीमनुवर्तमानास्तापत्रयोपशमनाय वयं भजेम ॥ १७ ॥
देह्यन्यदेहविवरे जठराग्निनाऽसृग्विण्मूत्रकूपपतितो भृशतप्तदेहः ।
इच्छन्नितो विवसितुं गणयन् स्वमासान् निर्वास्यते कृपणधीर्भवता[३] कदा नु ॥ १८ ॥
येनेदृशीं मतिमसौ दशमास्य ईश[४] सङ्ग्राहितः पुरुदयेन भवादृशेन ।
स्वेनैव तुष्यतु कृतेन स दीननाथः को नाम तत्प्रति विनाऽञ्जलिमस्य कुर्यात्॥ १९ ॥
पश्यत्ययं धिषणया ननु सप्तवध्रिः शारीरभेदमशरीरवदस्य देहे ।
यद्दत्तया स तमहं पुरुषं पुराणं पश्ये बहिर्हृदि च चैत्त्यमिव प्रतीतम् ॥ २० ॥
सोऽहं वसन्नपि विभो बहुदुःखवासं गर्भान्न निर्जिगमिषे बहिरन्धकूपे ।
यत्रोपयातमुपसर्पति देवमाया मिथ्यामतिर्यदनु संसृतिचक्रमेतत् ॥ २१ ॥
तस्मादहं विगतविक्लब उद्धरिष्य आत्मानमाशु तमसः सुहृदात्मनैव ।
भूयो यथा व्यसनमेतदनेकरन्ध्रं मा मे भविष्यदुपसादितविष्णुपादः ॥ २२ ॥

**श्रीभगवानुवाच**

एवं कृतमतिं गर्भे दशमास्यं सपद्यृषिम् । सद्यः क्षिपत्यवाचीनं प्रसूत्यै सूतिमारुतः ॥ २३ ॥
तेनोपसृष्टः सहसा कृत्वाऽवाक्शिर आतुरः । विनिष्क्रामति कृच्छ्रेण निरुच्छ्वासो गतस्मृतिः ॥ २४ ॥
पतितो भुव्यसृङ्मूत्रे विष्ठाभूरिव चेष्टते । रोरूयति गतज्ञानो विपरीतां गतिं गतः ॥ २५ ॥
परच्छन्दं नविदुषा पुष्यमाणो[५] जनेन सः । अनभिप्रेतमापन्नः प्रत्याख्यातुमनीश्वरः ॥ २६ ॥
शायितोऽशुचिपर्यङ्के जन्तुः स्वेदजदूषिते । नेशः कण्डूयनेऽङ्गानामासनोत्थानचेष्टने ॥ २७ ॥
तुदन्त्यामत्वचं दंशा मशका मत्कुणादयः । रुदन्तं विगतज्ञानं कृमयः कृमिकं यथा ॥ २८ ॥
इत्येवं शैशवं भुक्त्वा दुःखं पौगण्डमेव च । अलब्धाभीप्सितोऽज्ञानादिद्धमन्युः शुचाऽर्पितः ॥ २९ ॥
सह देहेन मानेन वर्धमानेन मन्युना । करोति विग्रहं कामी कामिष्वन्ताय चात्मनः ॥ ३० ॥

---

१. तदभिश्रमेण ❋ २. य एतददधात् ❋ ३. भगवन् ४. ईशे ❋ ४. कृष्यमाणः ❋

भूतैः पञ्चभिरारब्धे देहे देह्यबुधोऽसकृत् । अहम्ममेत्यसद्ग्राहां करोति कुमतिर्मतिम् ॥ ३१ ॥
तदर्थं कुरुते कर्म यद्बद्धो याति संसृतिम् । येन यातीदृशं क्लेशमविद्याकर्मबन्धनम् ॥ ३२ ॥
यद्यसद्भिः पथि पुनः शिश्नोदरकृतोद्यमैः । आस्थितो रमते जन्तुस्तमो विशति पूर्ववत् ॥ ३३ ॥
सत्यं शौचं दया[1] मौनं बुद्धिः श्रीर्ह्रीर्यशः क्षमा । शमो दमो भगश्चेति यत्सङ्गाद् याति सङ्क्षयम् ॥
तेष्वशान्तेषु मूढेषु खण्डितात्मावसायिषु । सङ्गं न कुर्याच्छोच्येषु योषित्क्रीडामृगेषु च ॥ ३५ ॥
न तथाऽस्य भवेन्मोहो बन्धश्चान्यप्रसङ्गतः । योषित्सङ्गाद् यथा पुंसां यथा तत्सङ्गिसङ्गतः ॥ ३६ ॥
प्रजापतिः स्वां दुहितरं दृष्ट्वा तद्रूपधर्षितः । रोहिद्भूतां सोऽन्वधावद् ऋष्यरूपी हतत्रपः ॥ ३७ ॥
तत्सृष्टिसृष्टसृष्टेषु कोन्वखण्डितधीः पुमान् । ऋषिं नारायणमृते योषिन्मय्येह मायया ॥ ३८ ॥
बलं मे पश्य मायायाः स्त्रीमय्या जयिनो दिशाम् । या करोति निजायत्तान् भ्रूविजृम्भेण केवलम् ॥३९॥

सङ्गं न कुर्यात् प्रमदासु जातु योगस्य पारं परमारुरुक्षुः ।
मत्सेवया प्रतिलब्धात्मलाभो[2] वदन्ति यां निरयद्वारमस्य ॥ ४० ॥

योपयाति शनैर्माया योषिद् देवविनिर्मिता । तामीक्षेतात्मनो मृत्युं तृणैः कूपमिवावृतम् ॥ ४१ ॥
यां मन्यते पतिर्मोहान्मन्मायामृषभायतीम् । स्त्रीत्वं स्त्रीसङ्गतः प्राप्तां वित्तापत्यगृहप्रदाम् ॥ ४२ ॥
तामात्मनो विजानीयाद् भृत्यापत्यगृहात्मकम् । दैवोपसादितं मृत्युं मृगयोर्गायनं यथा ॥ ४३ ॥
देहेन जीवभूतेन लोकाल्लोकमनुव्रजन् । भुञ्जान एव कर्माणि करोत्यविरतं[3] पुमान् ॥ ४४ ॥
जीवो यस्यानुगो देहो भूतेन्द्रियमनोमयः । तन्निरोधोऽस्य मरणमाविर्भावस्तु सम्भवः ॥ ४५ ॥
द्रव्योपलब्धिस्थानस्य द्रव्येक्षाऽयोग्यता यदा । तत् पञ्चत्वमहम्मानादुत्पत्तिर्द्रव्यदर्शनम् ॥ ४६ ॥
यथाऽक्ष्णोर्द्रव्यावयवदर्शनायोग्यता यदा । तदैव चक्षुषो द्रष्टुर्द्रष्टृत्वं योग्यताऽनयोः ॥ ४७ ॥
पुंसो यथैवेन्द्रियाणि विन्दन्ति स्वगतं परम् । सुखं दुःखं नान्यगतं तथेशांशाः पृथक्कलाः ॥ ४८ ॥
आत्मनः केवलं ज्ञानमर्थो देहाद्यसङ्गिनः[4] । सुखदुःखादयो भावा न देहस्य न चात्मनः ॥ ४९ ॥
तस्मान्न कार्यः सन्त्रासो न कार्पण्यं न सम्भ्रमः । बुद्ध्वा जीवगतिं धीरो मुक्तसङ्गश्चरेदिह॥ ५० ॥
सम्यग्दर्शनया बुद्ध्या योगवैराग्ययुक्तया । मायाविरचिते लोके चरेद् यस्य कळेबरम् ॥ ५१ ॥

**॥ इति श्रीमद्भागवते तृतीयस्कन्धे द्वात्रिंशोऽध्यायः ॥**

---

१. तपः ❋ २. आत्मभावः ३. अविरतः ❋ ४. देहाद्यसज्जतः ❋

**श्रीभगवानुवाच**

अथ यो गृहमेधीयान् धर्मानेवावसन् गृहे। धर्ममर्थं च कामं च दोग्धि भूयः पिपर्ति तान् ॥ १ ॥
स चापि भगवद्धर्मात् काममूढः पराङ्मुखः। यजते क्रतुभिर्देवान् पितॄंश्च श्रद्धयाऽन्वितः ॥ २ ॥
तच्छ्रद्धयाऽऽक्रान्तमतिः पितृदेवव्रतः पुमान्। गत्वा चान्द्रमसं लोकं सोमपाः पुनरेष्यति ॥ ३ ॥
यदा चाहीन्द्रशय्यायां शेतेऽनन्तासनो हरिः। तदा लोका लयं[1] यान्ति त एते गृहमेधिनाम्॥ ४ ॥
ये च धर्मं न दुह्यन्ति धीराः कामार्थहेतवे। निस्सङ्गा न्यस्तकर्माणः प्रशान्ताः शुद्धचेतसः ॥ ५ ॥
निवृत्तिधर्मनिरता निर्ममा निरहङ्कृताः। स्वधर्माख्येन सत्त्वेन परिशुद्धेन चेतसा ॥ ६ ॥
सूर्यद्वारेण ते यान्ति पुरुषं विश्वतोमुखम्। परावरेशं प्रकृतिमस्योत्पत्त्यन्तभावनम् ॥ ७ ॥
द्विपरार्धावसाने यः प्रळयो ब्रह्मणस्तु ते। तावदध्यासते लोके परस्य परिचिन्तकाः ॥ ८ ॥

क्ष्माम्भोनलानिलवियन्मनइन्द्रियार्थभूतादिभिः परिवृतः प्रतिसञ्जिघृक्षुः।
अव्याकृतं विशति यर्हि गुणत्रयात्मा कालं परं स्वमनुभूय परः स्वयम्भूः ॥ ९ ॥
एवं परेत्य भगवन्तमनुप्रविष्टा ये योगिनो जितमरुन्मनसो विरागाः।
तेनैव साकममृतं पुरुषं पुराणं ब्रह्म प्रधानमुपयान्त्यगताभिमानाः ॥ १० ॥

आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिः। योगेश्वरैः कुमाराद्यैः सिद्धैर्योगप्रवर्तकैः ॥ ११ ॥
भेददृष्ट्याऽभिमानेन निःसङ्गेनापि कर्मणा। कर्तृत्वात् सगुणं ब्रह्म पुरुषं पुरुषर्षभम् ॥ १२ ॥
स सङ्गत्य पुनः काले कालेनेश्वरमूर्तिना। जातेऽगुणव्यतिकरे यथापूर्वं प्रजायते ॥ १३ ॥
ऐश्वर्यं पारमेष्ठ्यं यत् तेऽपि धर्मविनिर्मितम्। निषेव्य पुनरायान्ति गुणव्यतिकरेऽसति ॥ १४ ॥
अथ तं सर्वभूतानां हृत्पद्मेषु कृतालयम्। श्रुतानुभावं शरणं व्रज भावेन भामिनि ॥ १५ ॥
ये त्विहासक्तमनसः कर्मसु श्रद्धयाऽन्विताः। कुर्वन्त्यप्रतिषिद्धानि नित्यान्यपि च कृत्स्नशः ॥ १६ ॥
रजसा कुण्ठमनसः कामात्मनोऽजितेन्द्रियाः। पितॄन् यजन्त्यनुदिनं गृहेष्वभिरताशयाः ॥ १७ ॥
त्रैवर्गिकास्ते पुरुषा विमुखा हरिमेधसः। कथायां कथनीयोरुविक्रमस्य मधुद्विषः ॥ १८ ॥
नूनं दैवेन विहता येत्वच्युतकथासुधाम्। हित्वा शृण्वन्त्यसद्गाथाः पुरीषमिव विड्भुजः ॥ १९ ॥
दक्षिणेन पथाऽर्यम्णः पितृलोकं व्रजन्ति ते। [2]प्रजायां तु प्रजायन्ते श्मशानान्तक्रियाकृतः॥ २० ॥
ततस्ते क्षीणसुकृताः पुनर्लोकमिमं सति। पतन्ति विवशा देवैः सद्यो विभ्रंशितोदयाः ॥ २१ ॥

---

१. क्षयम् ❋ २. प्रजयाऽनुप्रजायन्ते ❋

तस्मात् त्वं सर्वभावेन भजस्व परमेष्ठिनम् । तद्गुणाश्रयया भक्त्या भजनीयपदाम्बुजम् ।। २२ ।।
वासुदेवे भगवति भक्तियोगः प्रचोदितः । जनयत्याशु वैराग्यं ज्ञानं यद् ब्रह्मदर्शनम् ।। २३ ।।
यदाऽस्य चित्तमर्थेषु समेष्विन्द्रियवृत्तिभिः । न विगृह्णन्ति वैषम्यं प्रियमप्रियमप्युत ।। २४ ।।
स तदैवात्मनाऽऽत्मानं निःसङ्गं समदर्शिनम्[1] । हेयोपादेयरहितमारूढपदमीक्षते ।। २५ ।।
ज्ञानमात्रं परम्ब्रह्म परमात्मेश्वरः पुमान् । दृश्यादिभिः पृथग्भावैर्भगवानेक ईयते ।। २६ ।।
एतावानेव योगेन समग्रेणेह योगिनः । युज्यतेऽभिमतो ह्यर्थो यदसङ्गस्तु कृत्स्नशः ।। २७ ।।
ज्ञानमेकं पराचीनैरिन्द्रियैर्ब्रह्म निर्गुणम् । अवभात्यर्थरूपेण भ्रान्त्या शब्दादिधर्मिणाम् ।। २८ ।।
यथा महानहङ्कारस्त्रिवृत् पञ्चविधः स्वराट् । एकादशविधस्तस्य वपुरण्डं जगद् यतः ।। २९ ।।
एतद् वै श्रद्धया भक्त्या योगाभ्यासेन नित्यशः । समाहितात्मा निःसङ्गो विरक्तः परिपश्यति ।।३०।।
इत्येतत् कथितं गुह्यं ज्ञानं ते ब्रह्मदर्शनम् । येनैव बुध्यते तत्त्वं प्रकृतेः पुरुषस्य च ।। ३१ ।।
ज्ञानं योगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः । द्वयोरप्येक एवार्थो भगवच्छब्दलक्षणः ।। ३२ ।।
यथेन्द्रियैः पृथग्द्वारैरर्थो[2] बहुगुणाश्रयः । एको नानेयते तद्वद् भगवाञ्छास्त्रवर्त्मभिः ।। ३३ ।।
क्रियया क्रतुभिर्दानैस्तपःस्वाध्यायदर्शनैः। आत्मेन्द्रियजयेनापि सन्न्यासेन च कर्मणाम् ।। ३४ ।।
योगेन विविधांशेन भक्तियोगेन चैव हि । धर्मेणोभयचिह्नेन यः प्रवृत्तिनिवृत्तिमान् ।। ३५ ।।
आत्मतत्त्वावबोधेन वैराग्येण दृढेन च । ईयते भगवानेभिः सगुणो निर्गुणः स्वदृक् ।। ३६ ।।
प्रावोचं भक्तियोगस्य स्वरूपं ते चतुर्विधम् । कालस्य चाव्यक्तगतेर्योऽन्तर्धावति जन्तुषु ।। ३७ ।।
जीवस्य[3] संसृतीर्बह्वीरविद्याकर्मनिर्मिताः । याः स्वयं प्रविशन्नात्मा न वेद गतिमात्मनः ।। ३८ ।।
नैतत् खलायोपदिशेन्नाविनीताय कर्हिचित् । न स्तब्धाय न भिन्नाय नैव धर्मध्वजाय च ।। ३९ ।।
न लोलुपायोपदिशेन्न गृहारूढचेतसे । नाभक्ताय च मे जातु न मद्भक्तद्विषामपि ।। ४० ।।
श्रद्दधानाय भक्ताय विनीतायानसूयवे । भूतेषु कृतमैत्राय शुश्रूषाभिरताय च ।। ४१ ।।
बहिर्जातविरागाय शान्तचित्ताय दीयते । निर्मत्सराय शुचये यस्याहं प्रेयसां प्रियः ।। ४२ ।।
य इदं शृणुयादम्ब श्रद्धया पुरुषः सकृत् । यो वाऽभिधत्ते मच्चित्तः स ह्येति पदवीं मम ।। ४३ ।।

**।। इति श्रीमद्भागवते तृतीयस्कन्धे त्रयस्त्रिंशोऽध्यायः ।।**

---

१. समदर्शनम् ❋ २. पृथक्कारैः/पृथक्चारैः । ३. जीवस्य च सृतीर्बह्वीः ❋

**मैत्रेय उवाच**

एवं निशम्य कपिलस्य वचो जनित्री सा कर्दमस्य दयिता किल देवहूतिः।
विस्रस्तमोहपटला तमभिप्रणम्य तुष्टाव तत्त्वविषयाखिलसिद्धभूमिम् ॥ १ ॥

**देवहूतिरुवाच**

अथाप्ययान्ते सलिले शयानं भूतेन्द्रियार्थात्ममयं वपुस्ते ।
गुणप्रवाहं सदशेषबीजं दध्यौ स्वयं यज्जठराब्जजातः ॥ २ ॥
स एव विश्वस्य भवान् विधत्ते गुणप्रवाहेषु विभक्तवीर्यः ।
सर्गाद्यनीहोऽवितथाभिसन्धिरात्मेश्वरोऽतर्क्यसहस्रशक्तिः ॥ ३ ॥
स त्वं भृतो मे जठरेण नाथ कथं नु यस्योदर एतदासीत् ।
विश्वं युगान्ते वटपत्र एकः शेते स्म मायाशिशुरङ्घ्रिपानः ॥ ४ ॥
त्वं देहतन्त्रः प्रशमाय पाप्मनां निदेशभाजां च विभो विभूतये ।
यथावतारास्तव सूकरादयस्तथाऽयमप्यात्मपथोलब्धये ॥ ५ ॥
यन्नामधेयश्रवणानुकीर्तनाद् यत्प्रह्वणाद् यत्स्मरणादपि क्वचित् ।
श्वादोऽपि सद्यः सवनाय कल्पते कुतः पुनस्ते भगवन् नु[1] दर्शनात् ॥ ६ ॥
अहो बत श्वपचोऽतो गरीयान् यज्जिह्वाग्रे वर्तते नाम तुभ्यम् ।
तेपुस्तपस्ते जुहुवुः सुराद्यान् ब्रह्मानूचुर्नाम गृणन्ति ये ते ॥ ७ ॥
तं त्वाऽद्धाऽहं ब्रह्म परं पुमांसं प्रत्यक्स्रोतस्यात्मनि संविभाव्यम् ।
स्वतेजसा ध्वस्तगुणप्रवाहं वन्दे विष्णुं कपिलं वेदगर्भम् ॥ ८ ॥

**मैत्रेय उवाच[2]**

ईडितो भगवानेवं कपिलाख्यः परः पुमान् । वाचाऽविक्लबयेत्याह मातरं मातृवत्सलः ॥ ९ ॥

**श्रीभगवानुवाच**

मार्गेणानेन मातस्ते सुसेव्येनोदितेन मे । आस्थितेन परां काष्ठामचिरादवरोत्स्यसि ॥ १० ॥
श्रद्धत्स्वैतन्मतं मह्यं जुष्टं यद् ब्रह्मवादिभिः । येन मामभयं यायान्मृत्युमृच्छन्त्यतद्विदः[3] ॥ ११ ॥

---

१. भगवंस्तु ❋ २. श्रीशुक उवाच ❋ ३. यायाः...

**मैत्रेय उवाच**

इति प्रदर्श्य भगवानुशतीमात्मनो गतिम् । स्वमात्रा ब्रह्मवादिन्या कपिलोऽनुमतो ययौ ॥ १२ ॥
सा चापि तनयोक्तेन योगादेशेन योगयुक् । तस्मिन्नाश्रम आसीना सरस्वत्याः समाहिता ॥ १३ ॥
अभीक्ष्णावगाहकपिशान् जटिलान् कुटिलाळकान् । आत्मानं चोग्रतपसा बिभ्रती चीरिणं कृशम् ॥१४॥
प्रजापतेः कर्दमस्य तपोयोगविजृम्भितम् । स्वगार्हस्थ्यमनौपम्यं प्रार्थ्यं वैमानिकैरपि ॥ १५ ॥
पयःफेननिभाः शय्या दान्ता रुग्मपरिच्छदाः । आसनानि च हैमानि सुस्पर्शास्तरणानि च[1] ॥
स्वच्छस्फटिककुडयेषु महामारतकेषु च । रत्नदीपार्चिषो भान्ति ललनारत्नसंयुताः ॥ १७ ॥
गृहोद्यानं कुसुमितै रम्यं बह्वमरद्रुमैः । कूजद्विहङ्गमिथुनं गायन्मत्तमधुव्रतम् ॥ १८ ॥
यत्र प्रविष्टमात्मानं विबुधानुचरा जगुः । वाप्यामुत्पलगन्धिन्यां कर्दमेनोपलाळितम् ॥ १९ ॥
हित्वा तदीप्सिततमप्याखण्डलयोषिताम् । किञ्चिच्चकार वदनं पुत्रविश्लेषणातुरा[2] ॥ २० ॥
वनं प्रव्रजिते पत्यावपत्यविरहातुरा । ज्ञाततत्त्वाऽप्यभून्नष्टवत्सा गौरिव वत्सला ॥ २१ ॥
तमेव ध्यायती देवमपत्यं कपिलं हरिम् । बभूवाविरतोत्साहा निःस्पृहा तादृशे गृहे ॥ २२ ॥
ध्यायती भगवद्रूपं यदाह ध्यानगोचरम् । सुतं प्रसन्नवदनं समस्तव्यस्तचिन्तया ॥ २३ ॥
भक्तिप्रवाहयोगेन वैराग्येण बलीयसा । युक्तानुष्ठानजातेन ज्ञानेन ब्रह्महेतुना[3] ॥ २४ ॥
विशुद्धेन तदाऽत्मानमात्मना विश्वतोमुखम् । स्वानुभूत्या तिरोभूतमायागुणविशेषणम् ॥ २५ ॥
ब्रह्मण्यवस्थितमतिर्भगवत्यात्मसंश्रये । निवृत्तजीवभावत्वात् वीतक्लेशाऽऽप्तनिर्वृतिः ॥ २६ ॥
नित्यारूढसमाधित्वात् परावृत्तगुणभ्रमा । न सस्मार तदाऽऽत्मानं स्वप्नदृष्टमिवोत्थितः ॥ २७ ॥
तद्देहोपगतः पोषो[4]ऽप्यकृशश्चाध्यसम्भवात्[5] । बभौ मलैरवच्छन्नः सधूम इव पावकः ॥ २८ ॥
स्वाङ्गं तपोयोगमयं मुक्तकेशं गताम्बरम् । दैवगुप्तं न बुबुधे वासुदेवप्रविष्टधीः ॥ २९ ॥
एवं सा कपिलोक्तेन मार्गेणाविरहं परम्[6] । आत्मानं ब्रह्म निर्वाणं भगवन्तमवाप ह ॥ ३० ॥
तद् वीरासीत् पुण्यतमं क्षेत्रं त्रैलोक्यविश्रुतम् । नाम्ना सिद्धपदं यत्र सा संसिद्धिमुपेयुषी ॥ ३१ ॥
तस्यास्तद् योगविधुतमाशु मर्त्यमभूत् सरित् । स्रोतसां प्रवरा सौम्य सिद्धिदा सिद्धसेविता[7] ॥ ३२ ॥

---

१. सुस्पर्शावस्तराणि च ❋ २.पुत्रविश्लेषणातुरम् ३.ब्रह्महेतिना ❋
४. तद्देहः परतः पोषः/तद्देहः परतः पोष्यः ५. अकृतश्चाध्यसम्भवात्
६. अविरतं परम् ❋ ७. सौम्य सिद्धचारणसेविता ❋

कपिलोऽपि महायोगी भगवान् पितुराश्रमात् । मातरं समनुज्ञाप्य प्रागुदीचीं दिशं ययौ ॥ ३३ ॥

सिद्धचारणगन्धर्वैर्मुनिभिश्चाप्सरोगणैः । स्तूयमानः समुद्रेण दत्तार्हणनिकेतनः ॥ ३४ ॥

आस्ते योगं समास्थाय साङ्ख्याचार्यैरभिष्टुतः । त्रयाणामपि लोकानामुपशान्त्यै समाहितः ॥ ३५ ॥

**मैत्रेय उवाच**

एतन्निगदितं तात यत् पृष्टोऽहं त्वयाऽनघ । कपिलस्य च संवादो देवहूत्याश्च पावनः ॥ ३६ ॥

य इदमनुशृणोति योऽभिधत्ते कपिलमुनेर्मतमात्मयोगगुह्यम् ।
भगवति कृतधीः सुपर्णकेतावुपलभते भगवत्पदारविन्दम् ॥ ३७ ॥

**॥ इति श्रीमद्भागवते महापुराणे पारमहंस्यामष्टादशसाहस्र्यां संहितायां वैयासक्यां तृतीयस्कन्धे चतुस्त्रिंशोऽध्यायः ॥**

## ॥ समाप्तश्च तृतीयस्कन्धः ॥

# ॥ अथ चतुर्थस्कन्धः ॥

**मैत्रेय उवाच**

मनोस्तु शतरूपायां तिस्रः कन्याश्च जज्ञिरे । आकूतिर्देवहूतिश्च प्रसूतिरिति विश्रुताः ॥ १ ॥
आकूतिं रुचये प्रादादपि भ्रातृमतीं नृपः । पुत्रिकाधर्ममाश्रित्य शतरूपानुमोदितः ॥ २ ॥
प्रजापतिः स भगवान् रुचिस्तस्यामजीजनत् । मिथुनं ब्रह्मवर्चस्वी परमेण समाधिना ॥ ३ ॥
यस्तयोः पुरुषः साक्षाद् विष्णुर्यज्ञः स्वरूपधृक्[१] । या स्त्री सा दक्षिणा भूतेरंशभूताऽनपायिनी॥ ४ ॥
आनिन्ये स्वगृहं पुत्र्याः पुत्रं विततरोचिषम् । स्वायम्भुवो मुदा युक्तो रुचिर्जग्राह दक्षिणाम् ॥ ५ ॥
तां कामयानां भगवानुवाह यजुषां पतिः । तुष्टायां तोषमापन्नोऽजनयद् द्वादशात्मजान् ॥ ६ ॥
तोषः प्रतोषः सन्तोषो भद्रः शान्तिरिडस्पतिः । इन्द्रः कविर्भुवः स्वाहः[२] सुदेवो रोचनो द्विषट् ॥
तुषिता नाम ते देवा आसन् स्वायम्भुवान्तरे । मरीचिमिश्रा ऋषयो यज्ञः सुरगणेश्वरः ॥ ८ ॥
प्रियव्रतोत्तानपादौ मनुपुत्रौ महौजसौ । यत्पुत्रपौत्रनप्तॄणामनुवृत्तं तदन्तरम् ॥ ९ ॥
देवहूतिमदात् तात कर्दमायात्मजां मनुः । तत्सम्बन्धि श्रुतप्रायं भवता गदतो मम ॥ १० ॥
दक्षाय ब्रह्मपुत्राय प्रसूतिं भगवान् मनुः । प्रायच्छद् यत्कृतः सर्गस्त्रिलोक्यां विततो महान् ॥ ११ ॥
याः कर्दमसुताः प्रोक्ता नव ब्रह्मर्षिपत्नयः । तासां प्रसूतिप्रसरं प्रोच्यमानं निबोध मे ॥ १२ ॥
पत्नी मरीचेस्तु कला सुषुवे कर्दमात्मजा । कश्यपं[३] पूर्णिमानं च ययोरापूरितं जगत् ॥ १३ ॥
पूर्णिमाऽसूत विरजं विश्वगां च परन्तप । देवकुल्या[४] हरेः पादशौचाद् याऽभूत् सरिद् दिवः ॥ १४ ॥
अत्रेः पत्न्यनसूया त्रीन् जज्ञे सुयशसः सुतान् । दत्तं दुर्वाससं सोममात्मेशब्रह्मसम्भवान् ॥ १५ ॥

**विदुर उवाच**

अत्रेर्गृहे सुरश्रेष्ठाः स्थित्यन्तोत्पत्तिहेतवः । किंस्विच्चिकीर्षवो जाता एतदाख्याहि मे गुरो ॥ १६ ॥

**मैत्रेय उवाच**

ब्रह्मणा चोदितः सृष्टावत्रिर्ब्रह्मविदां वरः । सह पत्न्या ययौ ऋक्षं कुलाद्रिं तपसि स्थितः ॥ १७ ॥
तस्मिन् प्रसूनस्तबकपलाशाशोककानने । वार्भिः स्रवद्भिरुद्घुष्टे निर्विन्ध्यायाः समन्ततः ॥ १८ ॥

---

१. यज्ञस्वरूपधृक्    २.इध्मः कविर्विभुः स्वप्नः ❋

३. काश्यपम् ❋ प्राचीनकोशेषु सर्वत्र काश्यप इत्येव पाठ आसमाप्ति ।    ४. देवकुल्याम् ❋

प्राणायामेन संयम्य मनो वर्षशतं मुनिः । अतिष्ठदेकपादेन निर्द्वन्द्वोऽनिलभोजनः ॥ १९ ॥
शरणं तं प्रपद्येऽहं य एव जगदीश्वरः । प्रजामात्मसमां मह्यं प्रयच्छत्विति चिन्तयन् ॥ २० ॥
तप्यमानं त्रिभुवनं प्राणायामैधिताग्निना । निर्गतेन मुनेर्मूर्ध्नः समीक्ष्य प्रभवस्त्रयः ॥ २१ ॥
अप्सरोमुनिगन्धर्वसिद्धविद्याधरोरगैः। वितायमानयशसो मुदाऽऽश्रमपदं[१] ययुः ॥ २२ ॥
तत्प्रादुर्भावसंयोगविद्योतितमना मुनिः । उत्तिष्ठन्नेकपादेन ददृशे विबुधर्षभान् ॥ २३ ॥
प्रणम्य दण्डवद् भूमावुपतस्थेऽर्हणाञ्जलिः । वृषहंससुपर्णस्थान् स्वैःस्वैश्चिह्नैश्च चिह्नितान् ॥ २४ ॥
कृपावलोकेन लसद्वदनेनोपलम्भितान्[२] । तच्छोचिषा प्रतिहते निमील्य मुनिरक्षिणी ॥ २५ ॥
चेतस्तत्प्रवणं युञ्जन्नस्तावीत् संहताञ्जलिः । श्लक्ष्णया सूक्तया वाचा सर्वलोकगरीयसः ॥ २६ ॥

**अत्रिरुवाच**

विश्वोद्भवस्थितिलयेषु विभज्यमानैर्मायागुणैरनुगुणं प्रगृहीतदेहाः ।
हे ब्रह्मविष्णुगिरिशाः प्रणतोऽस्म्यहं वस्तेभ्यः क एव भवतां स्विदिहोपहूतः ॥ २७ ॥
एको मयेह भगवान् विबुधप्रधानश्चित्तीकृतः प्रजननाय कथं नु यूयम् ।
अत्रागतास्तनुभृतां मनसोऽपि दूरा ब्रूत प्रसीदत महानिह विस्मयो मे ॥ २८ ॥

**मैत्रेय उवाच**

इति तस्य वचः श्रुत्वा त्रयस्ते विबुधर्षभाः । प्रत्यूचुः श्लक्ष्णया वाचा प्रहस्य तमृषिं प्रभो ॥ २९ ॥
यथा कृतस्ते सङ्कल्पो भाव्यं तेनैव नान्यथा । तत्सङ्कल्पस्य ते[३] ब्रह्मन् यद् वै ध्यायसि ते वयम् ॥ ३० ॥
अथास्मदंशभूतास्ते आत्मजा लोकविश्रुताः । भवितारोऽङ्ग भद्रं ते वितरिष्यन्ति ते यशः ॥ ३१ ॥
एवं कामवरं दत्वा प्रतिजग्मुः सुरेश्वराः । सभाजितास्तयोः सम्यग् दम्पत्योर्मिषतोस्ततः ॥ ३२ ॥
सोमोऽभूद् ब्रह्मणोंऽशेन दत्तो विष्णोस्तु योगवित् । दुर्वासाः शङ्करस्यांशो निबोधाङ्गिरसः प्रजाः ॥
श्रद्धा त्वङ्गिरसः पत्नी चतस्रोऽसूत कन्यकाः । सिनीवाली कुहू राका चतुर्थ्यनुमतिस्तथा ॥ ३४ ॥
तत्पुत्रावपरावास्तां ख्यातौ स्वारोचिषान्तरे । उचथ्यो भगवान् साक्षाद् ब्रह्मिष्ठश्च बृहस्पतिः॥ ३५ ॥
पुलस्त्योऽजनयत् पत्न्यामगस्त्यं च हविर्भुजि[४] । सोऽन्यजन्मनि दभ्रोऽग्निर्विश्रवाश्च महातपाः ॥

---

१. ...यशसस्तदाश्रमपदम् ❋ २. कृपावलोकविलसद्.... ❋
३. सत्सङ्कल्पस्य वै ❋ ४. हविर्भुवि

तस्य यक्षपतिर्देवः कुबेरस्त्विळिबिळासुतः[१] । रावणः कुम्भकर्णश्च तथाऽन्यस्यां विभीषणः ॥ ३७ ॥
पुलहस्य गतिर्भार्या त्रीनसूत सती सुतान् । कर्मश्रेष्ठं वरीयांसं सहिष्णुं च महामते ॥ ३८ ॥
क्रतोरपि क्रिया भार्या बालखिल्यानसूयत[२] । ऋषीन् षष्टिसहस्राणि ज्वलतो ब्रह्मतेजसा ॥ ३९ ॥
ऊर्जायां जज्ञिरे पुत्रा वसिष्ठस्य परन्तप । चित्रकेतुप्रधानास्ते सप्त ब्रह्मर्षयोऽमलाः ॥ ४० ॥
चित्रकेतुः सुरोचिश्च विरजो मित्र एव च । उद्बणो[३] वसुभृत्यश्च द्युमान् शक्त्यादयोऽपरे ॥ ४१ ॥
शान्तिस्त्वथर्वणः पत्नी लेभे पुत्रं धृतव्रतम् । दध्यञ्चमश्वशिरसं भृगोर्वंशं निबोध मे ॥ ४२ ॥
भृगुः ख्यात्यां महाभागः पत्न्यां पुत्रानजीजनत् । धातारं च विधातारं श्रियं च भगवत्पराम्[४] ॥ ४३ ॥
आयतिं नियतिं चैव सुते मेरुस्तयोरदात् । ताभ्यां तयोरभवतां मृकण्डुः प्राण एव च ॥ ४४ ॥
मार्कण्डेयो मृकण्डोस्तु प्राणाद् वेदशिरा मुनिः । कविश्च भार्गवो यस्य भगवानुशना: सुतः ॥ ४५ ॥
नवैते[५] मुनयः क्षत्तर्लोकान् सर्गैरभावयन् । एष कर्दमदौहित्रसन्तानः कथितस्तव ॥ ४६ ॥
शृण्वतः श्रद्दधानस्य सद्यः पापहरः परः । प्रसूतिं मानवीं दक्ष उपयेमे ह्यजात्मजः ॥ ४७ ॥
तस्यां ससर्ज दुहितॄः षोडशामललोचनाः । त्रयोदशादाद् धर्माय तथैकामग्रये विभुः ॥ ४८ ॥
पितृभ्य एकां युक्तेभ्यो भवायैकां भवच्छिदे ॥ ४९ ॥
श्रद्धा मैत्री दया शान्तिस्तुष्टिः पुष्टिः क्रियोन्नतिः । बुद्धिर्मेधा तितिक्षा ह्रीर्मूर्तिर्धर्मस्य पत्नयः ।
श्रद्धाऽसूत शुभं मैत्री प्रसादमभयं दया ॥ ५० ॥
शान्तिः सुखं मुदं तुष्टिः स्मयं पुष्टिरसूयत । योगं क्रियोन्नतिर्दर्प्पमर्थं बुद्धिरसूयत ॥ ५१ ॥
मेधा स्मृतिं तितिक्षा च क्षेमं ह्रीः प्रश्रयं श्रुतम् । मूर्तिः सर्वगुणोत्पत्ती नरनारायणावृषी ॥ ५२ ॥
ययोर्जन्मन्यदो विश्वमभ्यनन्दत् सुनिर्वृतम् । मनांसि ककुभो वाताः प्रसेदुः सरितोऽब्धयः ॥ ५३ ॥
दिव्यवाद्यन्त तूर्याणि पेतुः कुसुमवृष्टयः । मुनयस्तुष्टुवुस्तुष्टा जगुर्गन्धर्वकिन्नराः ॥ ५४ ॥
नृत्यन्ति स्म स्त्रियो देव्य आसीत् परममङ्गळम् । देवा ब्रह्मादयः सर्वे उपतस्थुरभिष्टवैः ॥ ५५ ॥

**देवा ऊचुः**

यो मायया विरचितं निजयाऽऽत्मनीदं खे रूपभेदमिव तत्प्रतिचक्षणाय ।
एतेन धर्मसदने ऋषिमूर्तिनाऽद्य प्रादुश्चकार पुरुषाय नमः परस्मै ॥ ५६ ॥

---

१. इडिबिलासुतः २. वालखिल्यान्... ३. उल्बण इत्यर्वाचीन पाठ आसमाप्ति ध्येयः ।
४. भगवत्प्रियाम् ५. सर्वे ते

सोऽयं स्थितिव्यतिकरोपशमाय सृष्टान् सत्त्वेन नः सुरगणाननुमेयतत्त्वः ।
दृश्याददभ्रकरुणेन विलोकनेन यच्छ्रीनिकेतममलं क्षिपताऽरविन्दम् ॥ ५७ ॥

एवं सुरगणैस्तात भगवन्तावभिष्टुतौ । लब्धावलोकैर्ययतुरर्चितौ गन्धमादनम् ॥ ५८ ॥

ताविमौ वै भगवतो हरेरंशाविहागतौ । भारव्ययाय च भुवः कृष्णौ यदुकुरूद्वहौ ॥ ५९ ॥

स्वाहाऽभिमानिनश्चाग्नेरात्मजांस्त्रीनजीजनत् । पावकं पवमानं च शुचिं च हुतभोजनम्[१] ॥ ६० ॥

तेभ्योऽग्नयः समभवंश्चत्वारिंशच्च पञ्च च । त एवैकोनपञ्चाशत् साकं पितृपितामहैः ॥ ६१ ॥

वैतानिके कर्मणि यन्नामभिर्ब्रह्मवादिभिः । आग्नेय्या इष्टयो यत्र निरूप्यन्तेऽग्नयस्तु ते ॥ ६२ ॥

अग्निष्वात्ता बर्हिषदः सोम्याः पितर आज्यपाः । साग्नयोऽनग्नयस्तेषां पत्नी दाक्षायणी स्वधा ॥ ६३ ॥

तेभ्यो दधार कन्ये द्वे मेनां वैतरणीं स्वधा । उभे ते ब्रह्मवादिन्यौ ज्ञानविज्ञानपारगे ॥ ६४ ॥

भवस्य पत्नी तु सती भवं देवमनुव्रता । आत्मनः सदृशं पुत्रं न लेभे गुणशीलतः[२] ॥ ६५ ॥

पितर्यप्रतिरूपे स्वे भवायानागसे रुषा । अप्रोढेवात्मनाऽऽत्मानमजहाद्[३] योगसंयुता ॥ ६६ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे प्रथमोऽध्यायः ॥ १ ॥**

---

## विदुर उवाच

भवे शीलवतां श्रेष्ठे दक्षो दुहितृवत्सलः । विद्वेषमकरोत् कस्मादनादृत्यात्मजां सतीम् ॥ १ ॥

कस्तं[४] चराचरगुरुं निर्वैरं शान्तविग्रहम् । आत्मारामं कथं द्वेष्टि जगतो दैवतं महत् ॥ २ ॥

एतदाख्याहि मे ब्रह्मन् जामातुः श्वशुरस्य च । विद्वेषस्तु यतः प्राणानत्यजद् दुस्त्यजान् सती ॥ ३ ॥

## मैत्रेय उवाच

पुरा विश्वसृजां सत्रे समवेता महर्षयः । तथाऽमरगणाः सर्वे सानुगा मुनयोऽग्नयः ॥ ४ ॥

तत्र प्रविष्टं मुनयो[५] दृष्ट्वाऽर्कमिव रोचिषा । भ्राजमानं वितिमिरं कुर्वन्तं तन्महत् सदः ॥ ५ ॥

उदतिष्ठन् सदस्यास्ते स्वधिष्ण्येभ्यः सहाग्नयः । ऋते विरिञ्चं शर्वं च तद्भासा क्षिप्ततेजसः ॥ ६ ॥

सदसस्पतिभिर्दक्षो भगवान् साधु सत्कृतः । अजं लोकगुरुं नत्वा निषसाद तदाज्ञया ॥ ७ ॥

---

१. पावकः पवमानश्च शुचिरित्यग्नयस्त्रयः ❋ २. गुणशालिनम्

३. अप्रौढेनेति क्वचित् प्राचीनपाठः । स च तात्पर्याननुगुणः । ४. कष्टम् ❋ ५. प्रविष्टं दक्षं वै ❋

प्राङ् निषण्णं मृडं दृष्ट्वा नामृष्यत् तदनादृतः । उवाच वाचं चक्षुर्भ्यामभिवीक्ष्य दहन्निव ॥ ८ ॥

दक्ष उवाच

श्रूयतां ब्रह्मर्षयो मे सहसभ्याः सहाग्नयः । साधूनां ब्रुवतो वृत्तं नाज्ञानान्न च मत्सरात् ॥ ९ ॥

अयं तु लोकपालानां यशोघ्नो निरपत्रपः । सद्भिराचरितः पन्था येन स्तब्धेन दूषितः ॥ १० ॥

एष मे शिष्यतां प्राप्तो यन्मे दुहितुरग्रहीत् । पाणिं विप्राग्निमुखतः सावित्र्या इव साधुवत् ॥ ११ ॥

गृहीत्वा मृगशाबाक्ष्याः[१] पाणिं मर्कटलोचनः । प्रत्युत्थानाभिवादार्हे वाचाऽप्यकृत नोचितम् ॥ १२ ॥

लुप्तक्रियायाशुचये मानिने भिन्नसेतवे । अनिच्छन्नप्यदां बालां शूद्रायेवोशतीं गिरम् ॥ १३ ॥

प्रेतावासेषु यो घोरो[२] घोरैर्भूतगणैर्वृतः । अटत्युन्मत्तवन्नग्नो व्युप्तकेशो हसन् रुदन् ॥ १४ ॥

चिताभस्मकृतस्नानः प्रेतास्थिग्रन्धिभूषणः[३] । शिवापदेशो ह्यशिवो मत्तो मत्तजनप्रियः ॥ १५ ॥

पतिः प्रमथभूतानां तमोमात्रात्मिकात्मनाम् । तस्मा उन्मादनाथाय नष्टशौचाय दुर्हृदे ॥ १६ ॥

दत्ता बत मया साध्वी चोदिते परमेष्ठिना ॥ १७ ॥

मैत्रेय उवाच

विनिन्द्यैवं स गिरिशमप्रतीपमवस्थितम् । दक्षोऽथोऽप उपस्पृश्य क्रुद्धः शप्तुं प्रचक्रमे ॥ १८ ॥

अयं तु देवयजन इन्द्रोपेन्द्रादिभिर्भवः । यज्ञभागं न लभतां देवैर्देवगणाधमः ॥ १९ ॥

निषिध्यमानः स सदस्यमुख्यैर्दक्षो गिरीशाय विसृज्य शापम् ।
तस्माद् विनिष्क्रम्य विवृद्धमन्युर्जगाम कौरव्य निजं निकेतनम् ॥ २० ॥

विज्ञाय शापं गिरिशानुगाग्रणीर्नन्दीश्वरो रोषकषायदूषितः ।
दक्षाय शापं विससर्ज दारुणं ये चान्वमोदंस्तदवाच्यतां द्विजाः ॥ २१ ॥

नन्दिरुवाच

य एतन्मर्त्यमुद्दिश्य भगवत्यप्रतिद्रुहि । द्रुह्यत्यज्ञः पृथग्दृष्टिस्तत्त्वतो विमुखो भवेत् ॥ २२ ॥

गृहेषु कूटधर्मेषु सक्तो ग्राम्यसुखेच्छया । कर्मतन्त्रं वितनुतां[४] वेदवादविपन्नधीः ॥ २३ ॥

बुद्ध्या पराभिध्यायिन्या विस्मृतात्मगतिः पशुः । स्त्रीकामः सोऽस्त्वतितरां दक्षो बस्तमुखोऽचिरात् ॥

---

१. मृगशावाक्ष्याः २. घोरेषु ३. ग्रन्थिशब्दः प्राचीनकोशेषु ग्रन्धिरिति पठ्यत इत्यासमाप्ति ध्येयम् ।
४. वितनुतात्

विद्याबुद्धिरविद्यायां कर्ममय्यामसावजः । संसरन्त्विह ये चामुमनु शर्वावमानिनः[1] ॥ २५ ॥
गिरेः सुतायाः पुष्पिण्या मधुगन्धेन भूरिणा । मथ्ना चोन्मथितात्मानः सम्मुह्यन्तु हरद्विषः ॥ २६ ॥
सर्वभक्षा द्विजा वृत्त्यै धृतविद्यातपोव्रताः । वित्तदेहेन्द्रियारामा याचका विचरन्त्विह ॥ २७ ॥
तस्यैवं वदतः शापं श्रुत्वा ब्रह्मकुलाय वै । भृगुः प्रत्यसृजच्छापं ब्रह्मदण्डं दुरत्ययम् ॥ २८ ॥

**भृगुरुवाच**

भवव्रतधरा ये च य एतान् समनुव्रताः । पाषण्डिनस्ते[2] भवन्तु सच्छास्त्रपरिपन्थिनः ॥ २९ ॥
नष्टशौचा मूढधियो जटाभस्मास्थिधारिणः । विशन्तु शिवदीक्षायां यत्र दैवं सुरासवम् ॥ ३० ॥
ब्रह्म च ब्राह्मणांश्चैव यद् यूयं परिनिन्दथ । सेतुं विधारणं[3] पुंसामतः पाषण्डमाश्रिताः ॥ ३१ ॥
एष एव हि लोकानां शिवः पन्थाः सनातनः । यं पूर्वे चानुसन्तस्थुर्यत्प्रमाणं जनार्दनः ॥ ३२ ॥
तद् ब्रह्म परमं शुद्धं सतां वर्त्म सनातनम् । विगर्ह्य यात पाषण्डं दैवतं यत्र भूतराट्[4] ॥ ३३ ॥

**मैत्रेय उवाच**

तस्यैवं वदतः साधो[5] भृगोः स भगवान् भवः । जगामाशु[6] ततः किञ्चिद्विमना इव सानुगः ॥ ३४ ॥
तेऽपि विश्वसृजः सत्रं सहस्रपरिवत्सरान् । संविधाय महोत्साहा यत्रेज्यऋषभो हरिः ॥ ३५ ॥
आप्लुत्यावभृथं यत्र गङ्गा यमुनयाऽन्विता । विरजेनात्मना सर्वे स्वंस्वं धाम ययुस्ततः ॥ ३६ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे द्वितीयोऽध्यायः ॥**

---

**मैत्रेय उवाच**

सदा विद्विषतोरेवं[7] कालो विवदमानयोः । जामातुः श्वशुरस्यापि सुमहानतिचक्रमे ॥ १ ॥
यदाऽभिषिक्तो दक्षस्तु ब्रह्मणा परमेष्ठिना । प्रजापतीनां सर्वेषामाधिपत्ये स्मयोऽभवत् ॥ २ ॥
इष्ट्वा स वाजपेयेन ब्रह्मिष्ठो भूय एव च । बृहस्पतिसवं नाम समारेभे क्रतूत्तमम् ॥ ३ ॥
तस्मिन् ब्रह्मर्षयः सर्वे देवर्षिपितृदेवताः । आसन् कृतस्वस्त्ययनास्तत्पत्न्यश्च सभर्तृकाः ॥ ४ ॥
तदुपश्रुत्य नभसि खेचराणां प्रजल्पताम् । सती दाक्षायणी देवी पितृयज्ञमहोत्सवम् ॥ ५ ॥

---

१. शर्वावमानिनम् ❋ २. पाषण्डशब्दोऽर्वाचीनैः पाखण्ड इति पठ्यत इत्यासमाप्ति ध्येयम् ।
३. विधरणम् ❋ ४. दैवं वो भूतराट् सदा ५. शापम् ६. निश्चक्राम ७. सदाविद्वेषयोरेवम् ❋

व्रजन्तीः सर्वतो दिग्भ्य उपदेववरस्त्रियः । विमानयाना सप्रेष्ठा निष्ककण्ठ्यः सुवाससः ॥ ६ ॥

दृष्ट्वा स्वनिलयाभ्याशे लोलाक्षीर्मृष्टकुण्डलाः[१] । पतिं भूतपतिं देवमौत्कण्ठ्यादभ्यभाषत ॥ ७ ॥

**सत्युवाच**

प्रजापतेस्ते श्वशुरस्य साम्प्रतं निर्यापितो यज्ञमहोत्सवः किल ।

वयं च तत्रानुसराम[२] वाम ते यद्यर्थिताऽमी विबुधाः प्रयान्ति हि[३] ॥ ८ ॥

तस्मिन् भगिन्यो मम भर्तृभिः स्वकैर्ध्रुवं गमिष्यन्ति सुहृद्दिदृक्षवः ।

अहं च तस्मिन् भवताऽभिकामये सहोपनीतं परिबर्हमर्हितुम् ॥ ९ ॥

तत्र स्वसॄर्मे ननु भर्तृसम्मता मातृष्वसॄः क्लिन्नधियं च मातरम् ।

द्रक्ष्ये चिरोत्कण्ठमना महर्षिभिरुन्नीयमानं च मृडाध्वरध्वजम् ॥ १० ॥

त्वय्येतदाश्चर्यमनात्ममायया विनिर्मितं भाति गुणत्रयात्मकम् ।

अथाप्यहं योषिदतत्त्वविच्च ते दीना दिदृक्षे भव मे भवक्षितिम् ॥ ११ ॥

पश्य प्रयान्तीश्च भवान्ययोषितः स्वलङ्कृताः कान्तसखा वरूथशः ।

यासां व्रजद्भिः शितिकण्ठमण्डितं नभो विमानैः कळहंसपाण्डुभिः ॥ १२ ॥

कथं सुतायाः पितृगेहकौतुकं निशम्य देहः सुरवर्य नेङ्गते ।

अनाहुता अप्यभियान्ति सौहृदाद् भर्तुर्गुरोर्देहकृतश्च केतनम् ॥ १३ ॥

तन्मे प्रसीदेदममर्त्य वाञ्छितं कर्तुं भवान् कारुणिको बतार्हसि ।

त्वयाऽपि पूर्णोऽयमदभ्रचक्षुषा निरूपितोऽतोऽनुगृहाण याचितः[४] ॥ १४ ॥

**ऋषिरुवाच**

एवं गिरित्रः प्रिययाऽभिभाषितः प्रत्यभ्यधात् तां प्रहसन् सुरप्रियः ।

संस्मारितो मर्मभिदः कुवागिषून् यानाह को विश्वसृजां समक्षतः ॥ १५ ॥

**शम्भुरुवाच**

त्वयोदितं शोभनमेव शाभने अनाहुता अप्यभियान्ति बन्धुषु ।

ते यद्यनुत्पादितदोषदृष्टयो बलीयसाऽनात्ममदेन मन्युना ॥ १६ ॥

---

१. लोलाक्ष्यो मृष्टकुण्डलाः ❋ २. अभिसराम

३. व्रजन्ति हि ४. त्वया सहार्धोऽयमदभ्रचक्षुषा निरूपितांशोऽनुगृहाण याचितः ❋

विद्यातपोवित्तवपुर्वय:कुलैः सतां गुणैः षड्भिरसत्तमा मदैः ।
स्मृतौ हतायामभिमानदुर्दृशस्तप्ता[१] न पश्यन्ति हि धाम भूयसाम् ॥ १७ ॥
नैतादृशानां स्वजनव्यपेक्षया गृहान् प्रतीयादनवस्थितात्मनाम् ।
येऽभ्यागतान् वक्रधियाऽभिचक्षते आरोपितभ्रूभिरमर्षणाक्षिभिः ॥ १८ ॥
तथाऽरिभिर्न प्रधने शिलीमुखैः शेतेऽर्दिताङ्गो हृदयेन दूयता ।
स्वानां यथा वक्रधियां दुरुक्तिभिर्दिवानिशं तप्यति मर्मताडितः ॥ १९ ॥
व्यक्तं त्वमुत्कृष्टगतेः प्रजापतेः प्रियाऽऽत्मजानामसि सुभ्रु मे मता[२] ।
अथापि मानं न पितुः प्रपत्स्यसे मदाश्रयात् कः परितप्यते यतः ॥ २० ॥
तातप्यमानेन हृदाऽऽतुरेन्द्रियः समृद्धिभिः पूरुषबुद्धिसाक्षिणाम् ।
अकल्य[३] एषामधिरोढुमञ्जसा पदं परं द्वेष्टि यथाऽसुरा हरिम् ॥ २१ ॥
प्रत्युद्गमप्रश्रयणाभिवादनं विधीयते साधु मिथः सुमध्यमे ।
प्राज्ञैः परस्मै पुरुषाय चेतसा गुहाशयायैव न देहमानिने ॥ २२ ॥
सत्त्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृतः ।
सत्त्वं च यस्मिन् भगवान् वासुदेवो ह्यधोक्षजो मे मनसा विधीयते ॥ २३ ॥
त्वया निरीक्ष्यो न पिताऽपि देहकृद् दक्षो मम द्विट् तदनुव्रताश्च ये ।
यो विश्वसृग्यज्ञगतं वरोरु मामनागसं दुर्वचसाऽकरोत् तिरः ॥ २४ ॥
यदि व्रजिष्यस्यतिहाय मद्वचो भद्रं भवत्या न ततो भविष्यति ।
सम्भावितस्य स्वजनात् पराभवो यदा स सद्योमरणाय कल्पते ॥ २५ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे तृतीयोऽध्यायः ॥**

---

### मैत्रेय उवाच

एतावदुक्त्वा विरराम शङ्करः पत्न्यङ्गनाशं ह्युभयत्र चिन्तयन् ।
सुहृद्दिदृक्षुः परिशङ्किता भवान्निष्क्रामती निर्विशती स्वधाम सा ॥ १ ॥

---

१. स्मृतौ हतायां ह्यभिमान.... ❋ २. सुभ्रु सम्मता ३. अकल्पः

सुहृद्दिदृक्षाप्रतिघातदुर्मनाः स्नेहाद् रुदन्त्यश्रुकळाकुलेक्षणा[१] ।
भवं भवान्यप्रतिपूरुषं रुषा प्रधक्षतीवैक्षत जातवेपथुः ॥ २ ॥
ततो विनिःश्वस्य सती विहाय तं शोकेन रोषेण च दूयता हृदा ।
पित्रोरगात् स्त्रैणविमूढधीर्गृहान्[२] प्रेम्णाऽऽत्मनो योऽर्धमरासत प्रियः ॥ ३ ॥
तामन्वगच्छन् द्रुतविक्रमां सतीमेकां त्रिणेत्रानुचराः सहस्रशः ।
सपार्षदमुख्या मणिमन्मदादयः पुरोवृषेन्द्रास्तरसाऽऽगतव्यथाः ॥ ४ ॥
तां शारिकामड्डुकदर्पणाम्बुजैः श्वेतातपत्रव्यजनस्रगादिभिः[३] ।
गीतायनैर्दुन्दुभिशङ्खवेणुभिर्वृषेन्द्रमारोप्य विलम्बिता ययुः[४] ॥ ५ ॥
आब्रह्मघोषोर्जितयज्ञवैशसं विप्रर्षिजुष्टं विबुधैश्च सर्वतः ।
मृद्दार्वयःकाञ्चनदर्भचर्मभिर्निसृष्टभाण्डं यजनं समाविशत् ॥ ६ ॥
तामागतां तत्र न कश्चनाद्रियद् विमानितां यज्ञकृतो भयाज्जनः ।
ऋते स्वसारो जननीं च सादराः प्रेमाश्रुकण्ठ्यः[५] परिषस्वजुर्मुदा ॥ ७ ॥
सौन्दर्यसम्प्रश्नसमर्थवार्तया[६] मात्रा च मातृष्वसृभिश्च सादरम् ।
दत्तां सपर्यां परमासनं च सा नादत्त पित्राऽप्रतिनन्दिता सती ॥ ८ ॥
अरुद्रभागं तमवेक्ष्य चाध्वरं पित्रा च देवे कृतहेळनं विभौ ।
अनादृता यज्ञसदस्यधीश्वरी चुकोप लोकानिव धक्ष्यती रुषा ॥ ९ ॥
जगर्ह सामर्षविपन्नया गिरा शिवद्विषं धूमपथश्रमस्मयम् ।
स्वतेजसा भूतगणान् समुत्थितान् निगृह्य देवी जगतोऽभिशृण्वतः ॥ १० ॥

### देव्युवाच

न यस्य लोकेऽस्त्यतिशायनः प्रियस्तथाऽप्रियो[७] देहभृतां प्रियात्मनः ।
तस्मिन् समस्तात्मनि मुक्तवैरके ऋते भवन्तं कतमः प्रतीपकः ॥ ११ ॥

---

१. ....कलातिविह्वला
२. स्त्रैण्यविमूढधीः ❋
३. ....दर्पणाम्बुजश्वेतातपत्र..... ❋
४. विडम्बिता ययुः/विटङ्किता ययुः
५. सोदराः प्रेम्णाऽश्रुकण्ठ्यः ❋
६. सौदर्यसम्पृष्टसमस्तवार्तया ❋
७. अतिशायनं प्रियं तथाऽप्रियम् ❋

दोषान् परेषां हि गुणेष्वसाधवो गृह्णन्ति केचिन्न भवादृशा द्विजाः[१] ।
गुणांश्च फल्गून् बहुळीकरिष्णवो महत्तमास्तेष्वविदद् भवानघम् ॥ १२ ॥
नाश्चर्यमेतद् यदसत्सु सर्वदा महद्विनिन्दा कुणपात्मवादिषु ।
सेर्ष्या महापूरुषपादपांसुभिर्निरस्ततेजस्सु तदेव शोभनम् ॥ १३ ॥
यद् द्व्यक्षरं नाम गिरेरितं नृणां सकृत् प्रसङ्गादघमाशु हन्ति तत् ।
पवित्रकीर्तिं तमलङ्घ्यशासनं भवानहो द्वेष्टि शिवं शिवेतरः ॥ १४ ॥
यत्पादपद्मं महतां मनोळिभिर्निषेवितं ब्रह्मरसासवार्थिभिः ।
लोकस्य यद् वर्षति चाशिषोऽर्थिनः तस्मै भवान् द्रुह्यति विश्वबन्धवे ॥ १५ ॥
किं वा शिवाख्यमशिवं न विदुस्त्वदन्ये ब्रह्मादयस्तमवकीर्य जटाः श्मशाने ।
तन्माल्यभस्मनृकपाल्यवसत्पिशाचैर्ये मूर्धभिर्दधति तच्चरणावसृष्टम् ॥ १६ ॥
कर्णौ पिधाय निरियाद् यदकल्प[२] ईशे धर्मावितर्यघृणिभिर्नृभिरस्यमाने ।
छिन्द्यात् प्रसँह्य रुशतीमसतां प्रभुश्चेत् जिह्वामसूनपि ततो विसृजेत् स धर्मः ॥
अतस्तवोत्पन्नमिदं कळेबरं न धारयिष्ये शितिकण्ठगर्हिणः ।
जग्धस्य मोहाद्धि विशुद्धिमन्धसो जुगुप्सितस्योद्धरणं प्रचक्षते ॥ १८ ॥
न वेदवादाननुवर्तते मतिः स्व एव लोके रमतो महामुनेः ।
यथा गतिर्देवमनुष्ययोः पृथक् स्व एव धर्मे न परं क्षिपेत् स्थितः ॥ १९ ॥
कर्म प्रवृत्तं च निवृत्तमप्युत वेदे विविच्योभयलिङ्गमाश्रितम् ।
विरोधि तद् यौगपदेककर्तरि द्वयं तथाऽऽब्रह्मणि कर्म नर्च्छति ॥ २० ॥
मा वः पदव्यः पितरस्मदाश्रिता या यज्ञशालासनधूम्रवर्त्मनाम् ।
कदन्नतृप्तैरसुहृद्भिरीडिता अव्यक्तलिङ्गा अवधूतसेविताः ॥ २१ ॥
एतेन देहेन हरे कृतागसो देहोद्भवेनालमलं कुजन्मना ।
व्रीडा ममाभूत् कुजनप्रसङ्गतस्तज्जन्म धिग् यन्महतामवद्यकृत् ॥ २२ ॥

---

१. भवादृशो द्विजाः ❋ २. यदकल्पः

गोत्रं त्वदीयं भगवान् वृषध्वजो दाक्षायणीत्याह यदा सुदुर्मनाः ।
व्यपेतनर्मस्मितमाशु तात उत्स्रक्ष्य एतत्कुणपं त्वदङ्गजम्* ॥ २३ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे चतुर्थोऽध्यायः ॥४॥**

---

### मैत्रेय उवाच

इत्यध्वरे दक्षमनूद्य शत्रुहन् क्षितावुदीचीं निषसाद शान्तवाक् ।
स्पृष्ट्वा जलं पीतदुकूलसंवृता निमील्य दृग् योगपथं समाविशत् ॥ १ ॥
कृत्वा समानावनिलौ जितासना सोदानमुत्थाप्य च नाभिचक्रतः[१] ।
शनैर्हृदि स्थाप्य धियोरसि स्थितं कण्ठाद् भ्रुवोर्मध्यमनिन्दिताऽनयत् ॥ २ ॥
एवं स्वदेहं महतां महीयसा मुहुः समारोपितमङ्कमादरात् ।
जिहासती दक्षरुषा मनस्विनी दधार गात्रेष्वनिलाग्निधारणम् ॥ ३ ॥
ततः स्वभर्तुश्चरणाम्बुजासवं जगद्गुरोश्चिन्तयती न चापरम् ।
ददर्श देहे हतकल्मषा सती सद्यः प्रजज्वाल समाधिजाग्निना ॥ ४ ॥
तत् पश्यतां खे भुवि चाद्भुतं महत् हाहेति वादः सुमहानजायत ।
हन्त प्रिया दैवतमस्य देवी जहावसून् केन सती प्रकोपिता ॥ ५ ॥
अहो त्वनात्म्यं महदस्य पश्यत प्रजापतेर्यस्य चराचराः प्रजाः[२] ।
जहावसून् यद्विमताऽऽत्मजा सती मनस्विनी मानमभीक्ष्णमर्हती ॥ ६ ॥
सोऽयं दुर्मर्षहृदयो ब्रह्मबन्धुर्लोकेऽपकीर्तिं महतीमथाप्स्यति ।
यदङ्गजां स्वां पुरुषद्विडुद्यतां न प्रत्यषेधीन्मृतयेऽपराधतः ॥ ७ ॥
दक्षस्तु दृष्ट्वा दुहितुः स्वनिमित्तं विनाशनम् । बह्वन्वतप्यद् घोरेण मयाऽसाधु कृतं बत ॥ ८ ॥
धिङ् मामविजितात्मानं निर्गुणं निरपत्रपम् । योऽहं स्वीकृत्य मृतकं व्यधामेनो महीयसि ॥ ९ ॥
वदत्येवमजे सत्या दृष्ट्वाऽसुत्यागमद्भुतम् । दक्षं सुपार्षदा हन्तुमुदतिष्ठन्नुदायुधाः ॥ १० ॥

---

* प्राचीनकोशेषु नात्राध्यायसमाप्तिः किन्तूत्तराध्यायान्त एव । अतस्तत्राध्यायास्त्रिंशदस्मिन् स्कन्धे ।

१. उत्थाप्य स्वनाभिचक्रतः ❋ २. चराचरं प्रजाः ❋

तेषामापततां वेगं निशाम्य[1] भगवान् भृगुः । यज्ञघ्नघ्नेन यजुषा दक्षिणाग्नौ जुहाव ह ॥ ११ ॥
अध्वर्युणा हूयमाने देवा उत्पेतुरोजसा । ऋभवो नाम तपसा सोमं प्राप्ताः सहस्रशः ॥ १२ ॥
तैरलातायुधैः सर्वे प्रमथाः सहगुह्यकाः । हन्यमाना दिशो भेजुरुशद्भिर्ब्रह्मतेजसा ॥ १३ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे पञ्चमोऽध्यायः ॥**

---

**मैत्रेय उवाच**

भवो भवान्या निधनं प्रजापतेरसत्कृताया ह्यवगम्य नारदात् ।
स्वपार्षदसैन्यं च तदध्वरेभ्डिर्विद्रावितं क्रोधमपारमादधे ॥ १ ॥
क्रुद्धः सुदष्टोष्ठपुटः स धूर्जटिर्जटां तडिद्वह्निसटोग्ररोचिषम् ।
उत्कृत्य रौद्रः सहसोत्थितो हसन् गम्भीरनादो विससर्ज तां भुवि ॥ २ ॥
ततोऽतिकायस्तनुवा स्पृशन् दिवं सहस्रबाहुर्घनरक्तसूर्यदृक् ।
कराळदंष्ट्रो ज्वलदग्निमूर्धजः कपालमाली विविधोद्यतायुधः ॥ ३ ॥
तं किं करोमीति गृणन्तमाह बद्धाञ्जलिं भगवान् भूतनाथः ।
दक्षं सयज्ञं जहि मद्भटानां त्वमग्रणी रुद्र जटांशको मे ॥ ४ ॥
आज्ञप्त एवं कुपितेन मन्युना स देवदेवं परिचक्रमे विभुम् ।
मेने तदाऽऽत्मानमसङ्गरंहसं सहीयसां[2] तात सहःसहिष्णुम् ॥ ५ ॥
अन्वीयमानः स तु रुद्रपार्षदैर्भृशं नदद्भिर्व्यनदत् सुभैरवम् ।
उद्यम्य शूलं जगदन्तकान्तकं सम्प्राद्रवद् घोषणभूषणाङ्घ्रिः ॥ ६ ॥
अथर्त्विजो यजमानः सदस्याः ककुभ्युदीच्यां प्रसमीक्ष्य रेणुम् ।
तमः किमेतत् कुत एतद् रजोऽभूदिति द्विजा द्विजपत्न्यश्च दध्युः ॥ ७ ॥
वाता न वान्ति न हि सन्ति दस्यवः प्राचीनबर्हिर्जीवति होग्रदण्डः ।
गावो न काल्यन्त इदं कुतो रजो लोकोऽधुना किं प्रळयाय कल्पते ॥ ८ ॥
प्रसूतिमिश्राः स्त्रिय उद्विग्नचित्ता ऊचुर्विपाको व्रजिनस्यैव तस्य ।
प्रपश्यतीनां दुहितॄणां प्रजेशः सुतां सतीमवदध्यावनागसम्[3] ॥ ९ ॥

---

१. तेषामापततां घोषं निशाम्य ❋ २. असङ्गरंहसां महीयसाम् ❋ ३. अवदध्यावनागाम् ❋

यस्त्वन्तकाले व्युप्तजटाकलापः स्वशूलसूच्यर्पितदिग्गजेन्द्रः ।
वितत्य नृत्यत्युदितास्त्रदोर्ध्वजो[1] रूक्षाट्टहासः स्तनयित्नुभिन्नदिक् ॥ १० ॥
अमर्षयित्वा तमसँह्यतेजसं मन्युप्लुतं दुर्निरीक्ष्यं[2] भ्रुकुट्या ।
कराळदंष्ट्राभिरुदस्तभागणं स्यात् स्वस्ति किं कोपयतो विधातुः ॥ ११ ॥
बह्वेवमुद्विग्नधियोच्यमाने[3] जनेन दक्षस्य मखे महात्मनः[4] ।
उत्पेतुरुत्पाततमाः सहस्रशो भयावहा दिवि भूमौ च पर्यक् ॥ १२ ॥
तावत् स रुद्रानुचरैर्मखो महान् नानाविधैर्वामनकैरुदायुधैः ।
पिङ्गैः पिशङ्गैर्मकरोदराननैः पर्याद्रुवद्भिर्विदुरान्वरुध्यत ॥ १३ ॥
केचिद् बभञ्जुः प्राग्वंशं पत्नीशालां तथाऽपरे । सद आग्नीध्रशालां च तद्विहारं महानसम् ॥ १४ ॥
रुरुजुर्यज्ञपात्राणि तथैकेऽग्नीननाशयन् । कुण्डेष्वमूत्रयन् केचिद् बिभिदुर्वेदिमेखलाः ॥ १५ ॥
अन्वधावन्मुनीनेके एके पत्नीरतर्जयन् । अपरे जगृहुर्देवान् प्रत्यासन्नान् पलायितान् ॥ १६ ॥
भृगुं बबन्ध मणिमान् वीरभद्रः प्रजापतिम् । चण्डीशः पूषणं देवं भगं नन्दीश्वरोऽग्रहीत् ॥ १७ ॥
सर्व एवर्त्विजो दृष्ट्वा सदस्याः सदिवौकसः । तैरर्द्यमानाः सुभृशं ग्रावभिर्नैकधाऽद्रवन् ॥ १८ ॥
जुह्वतः स्रुवहस्तस्य श्मश्रूणि भगवान् भवः। भृगोर्लुलुञ्चे सदसि योऽहसत् श्मश्रु दर्शयन् ॥ १९ ॥
भगस्य नेत्रे भगवान् पतितस्य रुषा भुवि । उज्जहार सदस्यक्ष्णा यः शपन्तमसूचयत् ॥ २० ॥
पूष्णश्चापातयद् दन्तान् कळिङ्गस्य[5] यथा बलः । शप्यमाने गरिमणि योऽहसद् दर्शयन् दतः ॥ २१ ॥
आक्रम्योरसि दक्षस्य शितधारेण हेतिना । छिन्दन्नपि तदुद्धर्तुं नाशक्नोत् त्र्यम्बकस्तदा ॥ २२ ॥
शस्त्रैरस्त्रान्वितैरेनमनिर्भिण्णत्वचं हरः । विस्मयं परमापन्नो दध्यौ पशुपतिश्चिरम् ॥ २३ ॥
दृष्ट्वा सञ्ज्ञपने योगं पशूनां स पतिर्मखे । यजमानपशोस्तस्य कायात् तेनाहरच्छिरः ॥ २४ ॥
साधुवादस्तदा तेषां कर्म तत् तस्य शंसताम् । भूतप्रेतपिशाचानामन्येषां तद्विपर्ययः ॥ २५ ॥
जुहावैतच्छिरस्तस्मिन् दक्षिणाग्नावमर्षितः । तद् देवयजनं दग्ध्वा प्रातिष्ठद् गुह्यकालयम् ॥ २६ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे षष्ठोऽध्यायः ॥**

---

१. .....दोर्ध्वजान् ❋ २. दुर्विषहम् ३. उद्विग्नदशोच्यमाने ४. दक्षस्य मुहुर्महात्मनः ❋
५. काळिङ्गस्य ❋

**मैत्रेय उवाच**

अथ देवगणाः सर्वे रुद्रानीकैः पराजिताः । शूलपट्टसनिस्त्रिंशगदापरिघमुद्गरैः[१] ॥ १ ॥

सञ्छिन्नभिन्नसर्वाङ्गाः सर्त्विक्सभ्या भयाकुलाः । स्वयम्भुवे नमस्कृत्य कार्त्स्न्येनैतन्न्यवेदयन् ॥

उपलभ्य पुरैवैतद् भगवानब्जसम्भवः । नारायणश्च विश्वात्मा न कस्याध्वरमीयतुः[२] ॥ ३ ॥

तदाकर्ण्य विभुः प्राह तेजीयसि कृतागसाम् । क्षेमाय भूयसे भूयान्न प्रायेण बुभूषताम् ॥ ४ ॥

अथापि यूयं कृतकिल्बिषा भवं ये बर्हिषो भागभाजं परादुः ।
प्रसादयध्वं परिशुद्धचेतसा क्षिप्रप्रसादं प्रगृहीताङ्घ्रिपद्माः ॥ ५ ॥

आशासाना जीवितमध्वरस्य लोकः सपालः कुपिते न यस्मिन् ।
तमाशु देवं प्रियया विहीनं क्षमापयध्वं हृदि विद्धं दुरुक्तैः ॥ ६ ॥

नाहं न यज्ञो न च यूयमन्ये ये देहभाजो मुनयश्च तत्त्वम् ।
विदुः प्रमाणं बलवीर्ययोर्वा तस्यात्मतन्त्रस्य क उद्विधित्सेत् ॥ ७ ॥

स इत्थमादिश्य सुरानजस्तु तैरथान्वितः पितृभिः सप्रजेशैः ।
ययौ स्वधिष्ण्यान्निलयं पुरद्विषः कैलासमद्रिप्रवरं प्रियं प्रभोः ॥ ८ ॥

जन्मौषधतपोयोगमन्त्रसिद्धैर्नरेतरैः । जुष्टं किन्नरगन्धर्वैरप्सरोभिर्वृतं सदा ॥ ९ ॥

नानामणिमयैः शृङ्गैर्नानाधातुविचित्रितैः । नानाद्रुमलतागुल्मैर्नानामृगगणावृतैः ॥ १० ॥

नानाऽमलप्रस्रवणैर्नानाकन्दरसानुभिः । रमणं[३] विहरन्तीनां रमणैः सिद्धयोषिताम् ॥ ११ ॥

मयूरकेकाभिरुतं मदान्धालिविमूर्च्छितम् । प्लाविते रक्तकण्ठानां कूजितैश्च पतत्रिणाम् ॥ १२ ॥

आह्वयन्तमिवोद्धस्तैर्द्विजैः कामदुघैर्द्रुमैः । व्रजन्तमिव मातङ्गैर्गृणन्तमिव निर्झरैः ॥ १३ ॥

मन्दारैः पारिजातैश्च सरळैश्चोपशोभितम् । तमालैः सालताळैश्च कोविदारासनार्जुनैः[४] ॥ १४ ॥

चूतैः कदम्बनीपैश्च नागपुन्नागचम्पकैः । पाटलाशोकबकुळैः कुन्दैः कुरबकैरपि ॥ १५ ॥

सुवर्णशतपत्रैश्च वीररेणुकजातिभिः । कुब्जकैर्मल्लिकाभिश्च[५] माधवीभिश्च मण्डितम् ॥ १६ ॥

पनसोदुम्बराश्वत्थप्लक्षन्यग्रोधहिङ्गुभिः । भूर्जैरौषधिभिः[६] पूगै राजपूगैश्च जम्बुभिः ॥ १७ ॥

---

१. शूलपट्टिश..... ❋ २. तस्याध्वरमीयतुः ❋ ३. रामाणाम् ❋
४. कोविदारार्जुनासनैः ❋ ५. कुब्जैर्मल्लिकाभिश्च ❋
६. भूर्जैरोषधिभिः । ओषधिशब्दः प्राचीनकोशेषु नियमेन औषधिरिति पठ्यत इति ध्येयम् ।

खर्जूराम्रातकाम्राद्यैः प्रियालमधुकेङ्गुदैः । द्रुमजातिभिरन्यैश्च राजितं वेणुकीचकैः ॥ १८ ॥
कुमुदोत्पलकह्लारशतपत्रवनर्द्धिभिः । नळिनीषु कळं कूजत्खगवृन्दोपशोभितम् ॥ १९ ॥
मृगैः शाखामृगैः क्रोडैर्मृगेन्द्रैर्ऋक्षशल्यकैः । गवयैः शरभैर्व्याघ्रै रुरुभिर्महिषादिभिः ॥ २० ॥
कर्णान्त्रैकपदाश्वास्यैर्निर्जुष्टं मृगनाभिभिः[१] । कदळीखण्डसंरुद्धनळिनीपुळिनश्रियम् ॥ २१ ॥
पर्यस्तं नन्दया नद्या स्नानपुण्यतमोदया[२] । विलोक्य भूतेशगिरिं विबुधा विस्मयं गताः ॥ २२ ॥
ददृशुस्तत्र ते रम्यामळकां नाम वै पुरीम् । वनं सौगन्धिकं चापि तत्र तन्नाम पङ्कजम् ॥ २३ ॥
नन्दा चाळकनन्दा च सरितौ बाह्यतः पुरः । तीर्थपादपदाम्भोजरजसाऽतीव पावने ॥ २४ ॥
ययोः सुरस्त्रियः क्षत्तरवरुह्य स्वधिष्ण्यतः । क्रीडन्ति पुंसः सिञ्चन्त्यो विगाह्य रतिकर्शिताः ॥ २५ ॥
ययोस्तत्स्नानविभ्रष्टकुचकुङ्कुमपिञ्जरम्[३] । वितृषोऽपि पिबन्त्यम्भः पाययन्तो गजा गजीः ॥ २६ ॥
तारहेममहारत्नविमानशतसङ्कुलाम्[४] । जुष्टां[५] पुण्यजनस्त्रीभिर्यथा खं सतडिद्घनम् ॥ २७ ॥
हित्वा यक्षेश्वरपुरीं वनं सौगन्धिकं च तत् । द्रुमैः कामदुघैर्हृद्यं चित्रमाल्यफलच्छदैः ॥ २८ ॥
रक्तकण्ठखगानीकस्वरमण्डितषट्पदम् । कळहंसकुलप्रेष्ठखरदण्डजलाशयम् ॥ २९ ॥
वनकुञ्जरसङ्घृष्टहरिचन्दनवायुना । अधिपुण्यजनस्त्रीणां मुहुरुन्मथयन्मनः ॥ ३० ॥
वैडूर्यकृतसोपाना वाप्य उत्पलमालिनीः । व्याप्तं[६] किंपुरुषैर्दृष्ट्वा त आराद् ददृशुर्वटम् ॥ ३१ ॥
स योजनशतोत्सेधः पादोनविटपायतः । पर्यग्गतामलच्छायो[७] निर्नीडस्तापवर्जितः ॥ ३२ ॥
तस्मिन् महायोगमये मुमुक्षुशरणे सुराः । ददृशुः शिवमासीनं त्यक्तामर्षमिवान्तकम् ॥ ३३ ॥
सनन्दाद्यैर्महासिद्धैः शान्तैः संशान्तविग्रहम् । उपास्यमानं सख्या च भर्त्रा गुह्यकरक्षसाम् ॥ ३४ ॥
विद्यातपोयोगपथमास्थितं तदधीश्वरम् । ध्यायन्तं विश्वसुहृदं वात्सल्याल्लोकमङ्गलम् ॥ ३५ ॥
लिङ्गं च तापसाभीष्टं भस्मदण्डजटाजिनम् । अङ्गेन सन्ध्याभ्ररुचा चन्द्रलेखां च बिभ्रतम् ॥ ३६ ॥
उपविष्टं दर्भमय्यां बृस्यां ब्रह्म सनातनम् । नारदाय प्रवोचन्तं पृच्छते शृण्वतां सताम् ॥ ३७ ॥
कृत्वोरौ दक्षिणे सव्यं पादपद्मं च जानुनि । बाहुं प्रकोष्ठेऽक्षमालामासीनं तर्कमुद्रया ॥ ३८ ॥

---

१. निर्विष्टं वृकनाभिभिः ❋ २. पर्यस्तं नन्दया सत्याः स्नानपुण्यवरोदया
३. ....विभ्रष्टनवकुङ्कुमपिञ्जरम् ❋ ४. ....सङ्कुलम् ❋ ५. जुष्टम् ❋ ६. प्राप्तम् ❋
७. पर्यक्कृताचलच्छायः ❋

तं ब्रह्मनिर्वाणसमाधिमास्थितं व्यपाश्रितं गिरिशं योगकक्ष्याम् ।
सलोकपाला मुनयो मनूनामाद्यं मनुं प्राञ्जलयः प्रणेमुः ॥ ३९ ॥
स तूपलभ्यागतमात्मयोनिं सुरासुरेशैरभिवन्दिताङ्घ्रिम् ।
उत्थाय चक्रे शिरसाऽभिवन्दनं महत्तमोऽर्कस्य यथैव विष्णोः ॥ ४० ॥
तथाऽपरे[1] सिद्धगणा महर्षिभिर्ये वै समन्तादनु नीललोहितम् ।
नमस्कृतः प्राह शशाङ्कशेखरं कृतप्रणामं प्रहसन्निवात्मभूः ॥ ४१ ॥

**ब्रह्मोवाच**

जाने त्वामीश विश्वस्य जगतो योनिबीजयोः । शक्तेः शिवस्य च परं यत् तद् ब्रह्म निरन्तरम् ॥ ४२ ॥
त्वमेव भगवन्नेतच्छिवशक्त्योः स्वरूपयोः । विश्वं सृजसि पास्यत्सि क्रीडयोर्णपदो यथा ॥ ४३ ॥
त्वमेव धर्मार्थदुघाऽभिपत्तये दक्षेण सूत्रेण विसर्जिताध्वरः ।
त्वयैव लोकेऽवसिताश्च सेतवो यान् ब्राह्मणाः श्रद्दधते धृतव्रताः ॥ ४४ ॥
त्वं कर्मणां मङ्गल मङ्गलानां कर्तासि लोके तनुषे स्वयं फलम् ।
अमङ्गलानां च तमिस्रमुद्बणं विपर्ययः केनचिदेव कस्यचित् ॥ ४५ ॥
न वै सतां त्वच्चरणार्पितात्मनां भूतेषु सर्वेष्वभिपश्यतां तव ।
भूतानि चात्मन्यपृथग् दिदृक्षतां प्रायेण रोषोऽभिभवेद् यथा पशोः ॥ ४६ ॥
पृथग्दृशः कर्मधियो दुराशयाः परोदयेनार्पितहृद्रुजोऽनिशम् ।
परान् दुरुक्तैर्वितुदन्त्यरुन्तुदास्तान् मा वधीर्देव[2] भवान् पृथग्विधान् ॥ ४७ ॥
येऽस्मिन् यदा पुष्करनाभमायया दुर्लङ्घ्यया स्पृष्टधियः पृथग्दृशः ।
कुर्वन्ति तत्र ह्यनुकम्पया कृपां न साधवो दैवबलात्कृताः कथम् ॥ ४८ ॥
भवान् हि पुंसः परमस्य मायया दुर्लङ्घ्ययाऽस्पृष्टमतिः समस्तदृक् ।
तया हतात्मस्वनुकर्मचेतस्स्वनुग्रहं कर्तुमिहार्हति प्रभो ॥ ४९ ॥
कुर्वध्वरस्योद्धरणं हतस्य भो त्वयाऽसमाप्तस्य मनोः प्रजापतेः ।
न यत्र भागं तव भागिनो ददुः कुस्पर्धिनो येन मखो निनीयते ॥ ५० ॥

---

१. अथापरे ❋ २. तान् नावधीर्देव ❋

जीवताद् यजमानोऽयं प्रपद्येताक्षिणी भगः । भृगोः श्मश्रूणि रोहन्तु पूष्णो दन्ताश्च पूर्ववत् ॥ ५१ ॥
देवानां भग्नगात्राणामृत्विजां चायुधाश्मभिः । भवताऽनुगृहीतानामाशु मन्ये त्वनातुरम् ॥ ५२ ॥
एष ते रुद्र भागोऽस्तु यदुच्छिष्टोऽध्वरस्य वै । यज्ञस्ते रुद्रभागेन कल्पतामद्य यज्ञहन् ॥ ५३ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे सप्तमोऽध्यायः ॥**

---

**मैत्रेय उवाच**

इत्यजेनानुनीतेन भवेन परितुष्यता । अभ्यधायि महाबाहो प्रहस्य श्रूयतामिति ॥ १ ॥

**रुद्र उवाच**

नाघं प्रजेश[१] बालानां वर्णये नानुचिन्तये । देवमायाभिभूतानां दण्डस्तत्र धृतो मया ॥ २ ॥
प्रजापतेर्दग्धशीर्ष्णो भवत्वजमुखं शिरः । मित्रस्य चक्षुषेक्षेत भागं स्वं बर्हिषो भगः ॥ ३ ॥
पूषा तु यजमानस्य दद्भिर्जक्षतु पिष्टभुक् । देवाः प्रकृतसर्वाङ्गा ये म उच्छेषणं ददुः ॥ ४ ॥
बाहुभ्यामश्विनोः पूष्णो हस्ताभ्यां कृतबाहवः । भवन्त्वध्वर्यवश्चान्ये बस्तश्मश्रुर्भृगुर्भवेत् ॥ ५ ॥

**मैत्रेय उवाच**

तदा सर्वाणि भूतानि श्रुत्वा मीढुष्टमोदितम् । परितुष्टात्मभिस्तत्र साधुसाध्वित्यथाब्रुवन् ॥ ६ ॥
ततो मीढ्वांसमामन्त्र्य शुनासीराः सहर्षिभिः । भूयस्तद् देवयजनं समीढ्वद्वेधसो ययुः ॥ ७ ॥
विधाय कार्त्स्न्येन च तद् यथाऽऽह भगवान् भवः । सन्दधुः कस्य कायेन सवनीयपशोः शिरः ॥ ८ ॥
सन्धीयमाने शीर्षणि दक्षो रुद्राभिवीक्षितः। सद्यः सुप्त इवोत्तस्थौ ददृशे चाग्रतो मृडम् ॥ ९ ॥
तदा वृषध्वजद्वेषकलिलात्मा प्रजापतिः । शिवावलोकादभवच्छरदभ्र इवामलः ॥ १० ॥
भवस्तवाय कृतधीर्नाशक्नोदनुरागतः । औत्कण्ठ्यबाष्पकळया सम्परेतां सुतां स्मरन् ॥ ११ ॥
कृच्छ्रात् संस्तभ्य च मनः प्रेमविह्वलितः सुधीः । शशंस निर्व्यळीकेन भावेनेशं प्रजापतिः ॥ १२ ॥

**दक्ष उवाच**

भूयाननुग्रह अहो भवता कृतो मे दण्डस्त्वया मयि धृतो यदपि प्रलँब्ध ।
न ब्रह्मबन्धुषु च वां भगवन्नवज्ञा तुभ्यं हरेश्च कुत एव धृतव्रतेषु ॥ १३ ॥

---

१. परेश ❋

विद्यातपोव्रतधरान् मुखतः स्म विप्रान् ब्रह्मात्मतां प्रथयितुं प्रथमं त्वमस्राः ।
तान् ब्राह्मणान् परमशर्व विपत्सु[१] पासि पालः पशूनिव विभो प्रगृहीतदण्डः ॥ १४ ॥
योऽसौ मयाऽविदिततत्त्वदृशा सभायां क्षिप्तो दुरुक्तिविशिखैरगणय्य तन्माम् ।
अर्वाक् पतन्तमर्हत्तमनिन्दयैक्षद्[२] दृष्टयाऽऽर्द्रया स भगवान् स्वकृतेन तुष्येत् ॥ १५ ॥

**मैत्रेय उवाच**

क्षमाप्यैवं स मीढ्वांसं ब्रह्मणा चानुमन्त्रितः । कर्म सन्तानयामास सोपाध्यायर्त्विगग्निभिः ॥ १६ ॥
वैष्णवं यज्ञसन्तत्यै त्रिकपालं द्विजोत्तमाः । पुरोडाशं निरवपन् वीरसंसर्गशुद्धये ॥ १७ ॥
अध्वर्युणाऽऽत्तहविषा हूयमाने यजुष्पतिम्[३] । यथा विशुद्धया दध्यौ तथा प्रादुरभूद्धरिः ॥ १८ ॥
तदा स्वप्रभया तेषां द्योतयन्त्या दिशो दश । मुष्णंस्तेज उपानीतस्तार्क्ष्येण स्तोत्रनिर्जितः ॥ १९ ॥
श्यामो हिरण्यरशनोऽर्ककिरीटजुष्टो नीलाळकभ्रमरकुण्डलमण्डितास्यः ।
कम्ब्वब्जचक्रशरचापगदासिचर्मव्यग्रैर्हिरण्मयभुजैरिव कर्णिकारः ॥ २० ॥
वक्षस्यधिश्रितवधूर्वनमाल्युदारहासावलोककलया रमयंश्च विश्वम् ।
पार्श्वभ्रमद्व्यजनचामरराजहंसशुभ्रातपत्रशशिनोपरि[४] लक्ष्यमाणः ॥ २१ ॥
तमुपागतमालक्ष्य सर्वे सुरगणादयः । प्रणेमुः सहसोत्थाय ब्रह्मेन्द्रत्र्यक्षनायकाः ॥ २२ ॥
तत्तेजसा हतरुचः सन्नजिह्वाः ससाध्वसाः । मूर्ध्न्युर्द्धृताञ्जलिपुटा[५] उपतस्थुरधोक्षजम् ॥ २३ ॥
अप्यर्वाग्वृत्तयो यस्य महित्वे स्वभुवादयः । यथामति गृणन्ति स्म कृतानुग्रहविग्रहम् ॥ २४ ॥
दक्षो गृहीतार्हणसाधनोत्तमो यज्ञेश्वरं विश्वसृजं परं गुरुम् ।
सुनन्दनन्दाद्यनुगैर्वृतं मुदा गृणन् प्रपेदे प्रयतः कृताञ्जलिः ॥ २५ ॥

**दक्ष उवाच**

शुद्धं स्वधाम्न्युपरताखिलबुद्ध्यवस्थं चिन्मात्रमेकमभयं प्रतिषिध्य मायाम् ।
तिष्ठंस्तयैव पुरुषत्वमुपेत्य तस्यामास्ते भवानपरिशुद्धमिवामनन्ति[६] ॥ २६ ॥

---

१. परम सर्वविपत्सु    २. ....निन्दयाऽपात् ❋    ३. यजुष्पतिः ❋
४. ....राजहंसः शुभ्रातपत्र.....    ५. मूर्ध्नि कृताञ्जलिपुटाः    ६. अपरिशुद्ध इवामनन्ति ❋

**ऋत्विज ऊचुः**

तत्त्वं न ते वयमनञ्जन रुद्रशापात् कर्मण्यवग्रहधियो भगवन् विदामः ।
धर्मोपलक्षणमिदं त्रिवृदध्वराख्यं ज्ञातं यदर्थमधिदैवमदस्त्वमास्थाः[१] ॥ २७ ॥

**सदस्या ऊचुः**

उत्पत्त्यध्वन्यशरण उरुक्लेशदुर्गान्तकोग्रव्याळाकृष्टे विषयमृगतृष्णात्मगेहोरुभारः ।
द्वन्द्वश्वभ्रे खलमृगभये शोकदावेऽज्ञसार्थः पादौ शस्तौ शरणद कदा याति कामोपसृष्टः ॥

**रुद्र उवाच**

तव वरद वराङ्घ्रावाशिषा चानभिध्ये ह्यपि मुनिभिरसक्तैरादरेणार्हणीये ।
यदि रचितधियं मां विद्धि लोकापविद्धं जगति न गणयेयं त्वत्परानुग्रहेण ॥ २९ ॥

**भृगुरुवाच**

यन्मायया गहनयाऽपहृतात्मबोधा[२] ब्रह्मादयस्तनुभृतस्तमसि स्वपन्तः ।
नात्माश्रितं तव विदन्त्यधुनाऽपि तत्त्वं सोऽयं प्रसीदतु भवान् प्रणतात्मबन्धुः ॥ ३० ॥
नैतत् स्वरूपं भवतोऽसौ पदार्थभेदग्रहः पुरुषो यावदीक्षेत् ।
ज्ञानस्य चार्थस्य गुणस्य चाश्रयान्मायामयाद् व्यतिरिक्तो यतस्त्वम् ॥ ३१ ॥

**इन्द्र उवाच**

इदमच्युत विश्वभावनं वपुरानन्दकरं मनोदृशाम् ।
सुरविद्विट्क्षपणैरुदायुधैर्भुजदण्डैरुपपन्नमष्टभिः ॥ ३२ ॥

**पत्न्य ऊचुः**

यज्ञोऽयं तव यजनाय केन सृष्टो विध्वस्तः पशुपतिनाऽद्य दक्षकोपात् ।
तन्नस्त्वं शवशयनाभशान्तमेधं[३] यज्ञात्मन् निखिलरुचा[४] दृशा पुनीहि ॥ ३३ ॥

**ऋषय ऊचुः**

अनन्वितं तव भगवन् विचेष्टितं यदात्मना चरसि हि कर्म नाज्यसे ।
विभूतयो यत उपसेदुरीश्वरान्न मन्यते स्वयमनुवर्तिनीं भवान् ॥ ३४ ॥

---

१. त्वमात्थाः ❋? २. अपहतात्मबोधाः ❋
३. कुशशयनाभ शान्तमेधम् ❋ ४. नळिनरुचा ❋

**सिद्धा ऊचुः**

अयं ते कथामृष्टपीयूषनद्यां मनोवारणः क्लेशदावाग्निदग्धः ।
तृषार्तोऽवगाढो न सस्मार दावं न निष्क्रामति ब्रह्मसम्पन्न एव[१] ॥ ३५ ॥

**यजमान्युवाच**

स्वागतं ते प्रसीदेश तुभ्यं नमः श्रीनिवास श्रिया कान्तया त्राहि नः ।
त्वामृतेऽधीश नाङ्गैर्मखः शोभते शीर्षहीनः कबन्धो यथा पूरुषः ॥ ३६ ॥

**लोकपाला ऊचुः**

दृष्टः किं नो दृग्भिरसद्ग्रहैस्त्वं प्रत्यग्दृष्टया दृश्यते येन विश्वम्[२]।
माया ह्येषा भवदीया हि भूमन् यत्त्वं षष्ठः पञ्चभिर्भासि भूतैः ॥ ३७ ॥

**योगेश्वरा ऊचुः**

प्रेयान्न तेऽन्योऽस्त्यमृतप्रिय प्रभो विश्वात्मनीक्षेन्न पृथग् य आत्मनः ।
अथापि भृत्येश तयोपधावतामनन्यवृत्त्याऽनुगृहाण वत्सल ॥ ३८ ॥
जगदुद्भवस्थितिलयेषु लीलया प्रविभज्यमानगुणयाऽऽत्ममायया ।
रचितात्मभेदमतये स्वसंस्थया ह्यतिवर्तितभ्रमगुणात्मने नमः ॥ ३९ ॥

**ब्रह्मोवाच**

नमस्तेऽमिततत्त्वाय धर्मादीनां च सूतये। निर्गुणाय च यत्काष्ठां[३] नाहं वेदापरे कुतः ॥ ४० ॥

**अग्निरुवाच**

यत्तेजसाऽहं सुसमिद्धतेजा हव्यं वहाम्यध्वर आज्यसिक्तम् ।
तं यज्ञियं पञ्चविधं च पञ्चभिः स्विष्टं यजुर्भिः प्रणतोऽस्मि यज्ञम् ॥ ४१ ॥

**देवा ऊचुः**

पुरा कल्पापाये स्वकृतमुदरीकृत्य विकृतं त्वमेवाद्यस्तस्मिन् सलिल उरगेन्द्राधिशयने ।
पुमाञ्शेषे सिद्धैर्हृदि विमृशिताध्यात्मपदविः स एवाद्याक्ष्णोर्नः पथि चरसि भृत्यानवसि च ॥ ४२ ॥

---

१. ब्रह्मसम्पन्नवन्नः २. दृश्यम् ॐ ३. सत्काष्ठाम् ॐ

**गन्धर्वाप्सरस ऊचुः**

आशासाना देव मरीच्यादय एते ब्रह्मेन्द्राद्या देवगणा रुद्रपुरोगाः ।
क्रीडाभाण्डं विश्वमिदं यस्य विभूम्नस्तस्मै नित्यं नाथ नमस्ते करवाम: ॥ ४३ ॥

**विद्याधरा ऊचुः**

त्वन्मायायाऽर्थमभिपद्य कळेबरेऽस्मिन् कृत्वा ममाहमिति दुर्मतिरुत्पथैः स्वैः ।
क्षिप्तोऽप्यसद्विषयलालस आत्ममोहं युष्मत्कथामृतनिषेवक उद्व्युदस्येत् ॥ ४४ ॥

**ब्राह्मणा ऊचुः**

त्वं क्रतुस्त्वं हविस्त्वं हुताशस्त्वं यजुस्त्वं हि मन्त्राः समिद् दर्भपात्राणि च ।
त्वं सदस्यर्त्विजो दम्पती देवता अग्निहोत्रं स्वधा सोम आज्यं पशुः ॥ ४५ ॥
त्वं पुरा गां रसाया महासूकरो दंष्ट्रया पद्मिनीं वारणेन्द्रो यथा ।
स्तूयमानो नदँल्लीलया योगिभिर्व्युज्जहर्थ त्रयीगात्र यज्ञक्रतुः ॥ ४६ ॥

**सामगा ऊचुः**

सम्प्रसीद त्वमस्माकमाकाङ्क्षतां दर्शनं ते परिभ्रष्टसत्कर्मणाम् ।
कीर्त्यमाना नृभिः सामगीरीश ते[1] यज्ञविघ्नाः क्षयं यान्ति तस्मै नमः ॥ ४७ ॥

**मैत्रेय उवाच**

इति दक्षः कविर्यज्ञं भद्ररुद्रावमर्शितम् । कीर्त्यमाने हृषीकेशे उन्निन्ये यज्ञभावने ॥ ४८ ॥
भगवान् स्वेन भागेन सर्वात्मा सर्वभागभुक् । दक्षं बभाष आभाष्य प्रीयमाण इवानघ ॥ ४९ ॥

**श्रीभगवानुवाच**

अहं ब्रह्मा च शर्वश्च जगतः कारणं परम् । आत्मेश्वर उपद्रष्टा स्वयन्दृगविशेषणः ॥ ५० ॥
स आत्ममायामाविश्य योऽहं[2] गुणमयीं द्विज । सृजन् रक्षन् हरन् विश्वं दधे[3] सञ्ज्ञाः क्रियोचिताः ॥
तस्मिन् ब्रह्मण्यद्वितीये केवले परमात्मनि । देहात्मबुद्धिर्भूतानि भेदेनाज्ञोऽनुपश्यति ॥ ५२ ॥
यथा पुमान् न स्वाङ्गेषु शिरःपाण्यादिषु क्वचित् । पारक्यबुद्धिं कुरुत एवं भूतेषु मत्परः ॥ ५३ ॥
त्रयाणामेकभावानां यो न पश्यति वै भिदाम् । सर्वभूतात्मना ब्रह्मन् स शान्तिमधिगच्छति ॥ ५४ ॥

---

१. कीर्त्यमाने नृभिर्नाम्नि यज्ञेश्वरस्येश ते ❋ २. य आत्ममायामाविश्य ❋
३. दध्रे

**मैत्रेय उवाच**

एवं भगवताऽऽदिष्टः प्रजापतिपतिर्हरिम् । अर्चित्वा क्रतुना स्वेन देवानुभयतोऽयजत् ॥ ५५ ॥
रुद्रं च स्वेन भागेन ह्युपाधावत् समाहितः । कर्मणोदवसानेन सोमपानितरानपि ॥ ५६ ॥
तस्मा अप्यनुभावेन स्वेनैवावाप्तराधसे । धर्म एव मतिं दत्वा त्रिदशास्त्रिदिवं ययुः ॥ ५७ ॥
एवं दाक्षायणी हित्वा सती पूर्वकळेबरम् । जज्ञे हिमवतः क्षेत्रे मेनायामिति शुश्रुमः ॥ ५८ ॥
तमेव दयितं भूय आवृणोत्[1] पतिमम्बिका । अनन्यभावैकगतिः शक्तिः सुप्तेव पूरुषम् ॥ ५९ ॥
एतद् भगवतः शम्भोः कर्म दक्षाध्वरद्रुहः । श्रुतं भागवताच्छिष्यादुद्धवान्मे बृहस्पतेः ॥ ६० ॥

इदं पवित्रं परमीशचेष्टितं यशस्यमायुष्यमघौघमर्षणम् ।
यो नित्यदाऽऽकर्ण्य नरोऽनुकीर्तयेद् धुनोत्यघं कौरव भक्तिभावितः ॥ ६१ ॥

सतीं मेनात्मजां तात प्राप्य जायां भवः पुनः । तया मैथुनमारभ्य रेमे देवः समाः शतम् ॥ ६२ ॥
स्ववीर्यधारणेऽकल्यां ज्ञात्वा जायां स धूर्जटिः । उत्ससर्जाम्बरे रेतो गङ्गा जग्राह तन्नदी ॥ ६३ ॥
पीत्वाऽन्तरजरं बह्निश्चच्छर्द शरकानने । कुमारोऽभूत् ततस्तस्मै स्तनं षट् कृत्तिका ददुः ॥ ६४ ॥
षड्भिर्मुखैः स्तनं पीत्वा स बालः षण्मुखोऽभवत् । ततश्चक्रुः सैन्यपालं सर्वासुरभयङ्करम् ॥ ६५ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धेऽष्टमोऽध्यायः ॥**

---

**मैत्रेय उवाच**

सनकाद्या नारदश्च ऋभुर्हंसोऽरुणो यतिः । नैते गृहान् ब्रह्मसुता अवसन्नूर्ध्वरेतसः ॥ १ ॥
मृषाऽधर्मस्य भार्याऽऽसीद् डम्भं मायां च शत्रुहन् । असूत मिथुनं तत्तु निर्ऋतिर्जगृहेऽप्रजः ॥ २ ॥
तयोः समभवल्लोभो निकृतिश्च महामते । ताभ्यां क्रोधश्च हिंसा च दुरुक्तिश्च तयोः कलिः ॥ ३ ॥
दुरुक्तौ कलिराधत्त भयं मृत्युं च सत्तम । तयोश्च मिथुनं जज्ञे यातना निरयस्तथा ॥ ४ ॥
एते ह्यधर्मवृक्षस्य वंशाः संसृतिहेतवः । श्रेयस्कामो न सेवेत सुतरामाश्रमोत्तमी ॥ ५ ॥
सङ्ग्रहेण मया ख्यातः अनुसर्गस्तवानघ । त्रिः श्रुत्वैतत् पुमान् पुण्यं विधुनोत्यात्मनो मलम् ॥ ६ ॥
अथातः कीर्तये वंशं पुण्यकीर्तेः कुरूद्वह । स्वायम्भुवस्यापि मनोर्हरेरंशांशजन्मनः ॥ ७ ॥
प्रियव्रतोत्तानपादौ शतरूपाऽलभत् सुतौ[2] । वासुदेवस्य कलया रक्षायां जगति स्थितौ[3] ॥ ८ ॥

---

१. भूयस्त्ववाप २. शतरूपापतेः सुतौ * ३. जगतः स्थितौ

जाये उत्तानपादस्य सुनीतिः सुरुचिस्तयोः। सुरुचिः प्रेयसी पत्युर्नेतरा यत्सुतो ध्रुवः ॥ ९ ॥
एकदा सुरुचेः पुत्रमङ्कमारोप्य लाळयन्। उत्तमं नारुरुक्षन्तं ध्रुवं राजाऽभ्यनन्दत ॥ १० ॥
तथा चिकीर्षमाणं तं सपत्न्यास्तनयं ध्रुवम्। सुरुचिः शृण्वतो राज्ञः सेर्ष्यमाहातिगर्विता ॥ ११ ॥
न वत्स नृपतेर्धिष्ण्यं भवानारोढुमर्हति। न गृहीतो मया यत् त्वं कुक्षावपि नृपात्मज ॥ १२ ॥
बालोऽसि बत नात्मानमन्यस्त्रीगर्भसम्भृतम्। नूनं वेद भवान् यस्य दुर्लभेऽर्थे मनोरथः ॥ १३ ॥
तपसाऽऽराध्य पुरुषं तस्यैवानुग्रहेण मे। गर्भेऽस्मिन् साधयात्मानं यदीच्छसि नृपासनम् ॥ १४ ॥

**मैत्रेय उवाच**

मातुः सपत्न्याः सुदुरुक्तिविद्धः श्वसन् रुषा दण्डहतो यथाऽहिः।
हित्वा मिषन्तं पितरं सन्नवाचं जगाम मातुः प्ररुदन् सकाशम् ॥ १५ ॥
तं निःश्वसन्तं स्फुरिताधरोष्ठं सुनीतिरुत्सङ्ग उदूह्य बालम्।
निशम्य तत् पुत्रमुखान्निितान्तं सा विव्यथे यद् गदितं सपत्न्या ॥ १६ ॥
सोत्सृज्य धैर्यं विललाप शोकदवाग्निना दावलतेव बाला।
वाक्यं सपत्न्याः स्मरती सरोजश्रिया दृशा बाष्पकळामुवाह ॥ १७ ॥
दीर्घं श्वसन्ती व्रजिनस्य पारं न पश्यती बालकमाह बाला।
माऽमङ्गलं तात परेषु मंस्था भुङ्क्ते जनो यत्[1] परदुःखदस्तत् ॥ १८ ॥
सत्यं सुरुच्याऽभिहितं भवान् मे यद् दुर्भगाया उदरे गृहीतः।
स्तन्येन वृद्धश्च विलज्जते यां भार्येति वा वोढुमिडस्पतिर्माम्[2] ॥ १९ ॥
आतिष्ठ तत् तात विमत्सरस्त्वमुक्तं सुमात्राऽपि यदव्यळीकम्।
आराधयाधोक्षजपादपद्मं यदीच्छसेऽध्यासनमुत्तमो यथा ॥ २० ॥
यत्पादपद्मं परिचर्य विश्वविभावनायात्तगुणाभिपत्तेः।
अजोऽध्यतिष्ठत् खलु पारमेष्ठ्यं पदं जितात्मा श्वसनाभिवन्द्यम्[3] ॥ २१ ॥
तथा मनुर्वो भगवान् पितामहो यमेकभक्तिः पुरुदक्षिणैर्मखैः।
इष्ट्वाऽभिपेदे दुरवापमन्यतो भौमं सुखं दिव्यमथापवर्ग्यम् ॥ २२ ॥

---

१. जनोऽयम् ❋ २. इळस्पतिर्माम् ❋ ३. जितात्मश्वसनाभिवन्द्यम्

तमेव वत्साश्रय भृत्यवत्सलं मुमुक्षुभिर्मृग्यपदाब्जपद्धतिम् ।
अनन्यभावे निजधर्मभाविते मनस्यवस्थाप्य भजस्व पूरुषम् ॥ २३ ॥
नान्यं ततः पद्मपलाशलोचनाद् दुःखच्छिदं ते मृगयामि कञ्चन ।
यो मृग्यते हस्तगृहीतपद्मया श्रियेतरैरङ्ग विमृग्यमाणया ॥ २४ ॥

मैत्रेय उवाच

एवं सञ्जल्पितं मातुराकर्ण्यार्थागमं वचः । सन्नियम्यात्मनाऽऽत्मानं निश्चक्राम पितुः पुरात् ॥ २५ ॥
नारदस्तदुपाकर्ण्य ज्ञात्वा[1] चास्य चिकीर्षितम् । स्पृष्ट्वा मूर्धन्यघघ्नेन पाणिना प्राह विस्मितः॥ २६ ॥
अहो तेजः क्षत्रियाणां मानभङ्गममृष्यताम् । बालोऽप्ययं हृदा धत्ते यत् समातुरसद्वचः ॥ २७ ॥

नारद उवाच

क यात्येको भवान् वत्स हित्वा स्वगृहमृद्धिमत् । लक्षये त्वाऽवमत्याऽङ्ग सन्तप्तं स्वजनोत्थया ॥

ध्रुव उवाच

किं न ते ध्यानजातेन दृष्टं वा[2] योगराधसा । नोत्सहे सुरुचेर्वाचा समाधातुं मनःक्षतम् ॥ २९ ॥

नारद उवाच

नाधुनाऽप्यवमानं ते सन्मानं चापि पुत्रक । लक्षयामः कुमारस्य सक्तस्य क्रीडनादिषु ॥ ३० ॥
विकल्पे विद्यमानेऽपि न ह्यसन्तोषहेतवः । पुंसो मोहमृते भिन्ना यल्लोका निजकर्मभिः ॥ ३१ ॥
परितुष्येत् ततस्तात तावन्मात्रेण पूरुषः । दैवोपसादितं यावद् वीक्ष्येश्वरगतिं बुधः ॥ ३२ ॥
अथ मात्रोपदिष्टेन योगेनावरुरुत्ससि । यत्प्रसादात्[3] स वै पुंसां दुराराध्यो मतो मम ॥ ३३ ॥
मुनयः पदवीं यस्य निःसङ्गेनोरुजन्मभिः । न विदुर्मृगयन्तोऽपि तीव्रयोगसमाधिना ॥ ३४ ॥
अतो निवर्ततामेष निर्बन्धस्तव निष्फलः । यतिष्यति भवान् काले श्रेयसे समुपस्थिते ॥ ३५ ॥
यस्य यद् दैवविहितं स तेन सुखदुःखयोः । आत्मानं तोषयन् देही तमसः पारमृच्छति ॥ ३६ ॥
गुणाधिकान्मुदं लिप्सेदनुक्रोशं गुणाधमात् । मैत्रीं समानादन्विच्छेन्न तापैरभिभूयते ॥ ३७ ॥

ध्रुव उवाच

सोऽयं शमो भगवता सुखदुःखहतात्मनाम् । दर्शितः कृपया पुंसां दुर्दर्शोऽस्मद्विधैस्तु यः ॥ ३८ ॥
अथापि मेऽविनीतस्य क्षात्रं घोरमुपेयुषः । सुरुच्या दुर्वचोबाणैर्न भिन्ने श्रयते हृदि ॥ ३९ ॥

---

१. श्रुत्वा ❋ २. किं न ते भगवन् ध्यानदृष्टं वा ❋ ३. यत्प्रसादम् ❋

पदं त्रिभुवनोत्कृष्टं जिगीषोः साधुवर्त्म मे। ब्रूह्यस्मत्पितृभिर्ब्रह्मन्नन्यैरप्यनधिष्ठितम् ॥ ४० ॥

नूनं भवान् भगवतो योऽङ्गजः परमेष्ठिनः। वितुदन्नटते वीणां हितार्थं जगतोऽर्कवत् ॥ ४१ ॥

**मैत्रेय उवाच**

इत्युदीरितमाकर्ण्य भगवान् नारदस्तदा। प्रीतः प्रत्याह तं बालं सद्वाक्यमनुकम्पया ॥ ४२ ॥

**नारद उवाच**

जनन्याऽभिहितः पन्थाः स वै निश्रेयसस्य ते। भगवान् वासुदेवस्तु भज तं प्रवणात्मना ॥ ४३ ॥

धर्मार्थकाममोक्षाख्यं य इच्छेच्छ्रेय आत्मनः। एकं ह्येव हरेस्तत्र कारणं पादसेवनम् ॥ ४४ ॥

तत् तात गच्छ भद्रं ते यमुनायास्तटं शुचि। पुण्यं मधुवनं यत्र सान्निध्यं नित्यदा हरेः ॥ ४५ ॥

स्नात्वाऽनुसवनं तस्मिन् काळिन्द्याः सलिले शिवे। कृत्वोचितानि निवसन्नात्मनः कल्पितासनः[१] ॥

प्राणायामेन त्रिवृता प्राणेन्द्रियमनोमलम्। शनैर्व्युदस्याभिध्यायेन्मनसा गुरूणां[२] गुरुम् ॥ ४७ ॥

प्रसादाभिमुखं शश्वत्प्रसन्नवदनेक्षणम्। सुनासं सुभ्रुवं चारुकपोलं सुन्दरं हरिम् ॥ ४८ ॥

तरुणं रमणीयाङ्गमरुणाम्बुरुहेक्षणम्। प्रणताश्रयणं कृष्णं शरण्यं करुणार्णवम् ॥ ४९ ॥

श्रीवत्साङ्कं घनश्यामं पुरुषं वनमालिनम्। शङ्खचक्रगदापद्मैरभिव्यक्तचतुर्भुजम् ॥ ५० ॥

किरीटिनं कुण्डलिनं केयूरवलयान्वितम्। कौस्तुभाभरणग्रीवं पीतकौशेयवाससम् ॥ ५१ ॥

काञ्चीकलापपर्यस्तं लसत्काञ्चननूपुरम्। दर्शनीयतमं शान्तं मनोनयनवर्धनम् ॥ ५२ ॥

पद्भ्यां नखमणिश्रेण्या विलसद्भ्यां समर्चताम्। हृत्पद्मकर्णिकाधिष्ण्यमाक्रम्यात्मन्यवस्थितम् ॥

स्मयमानमभिध्यायेत् सानुरागावलोकनम्। नियतेनैकभूतेन मनसा वरदर्षभम् ॥ ५४ ॥

एवं भगवतो रूपं सुभद्रं ध्यायतो मनः। निर्वृत्या परया पूर्णं सम्पन्नं न निवर्तते ॥ ५५ ॥

जप्यस्तु परमो गुह्यः श्रूयतां मे नृपात्मज। यं सप्तरात्रं प्रपठन् पुमान् पश्यति खेचरान् ॥ ५६ ॥

ओं नमो भगवते वासुदेवायेति।

मन्त्रेणानेन देवस्य कुर्याद् द्रव्यमयीं बुधः। सपर्यां विविधैर्द्रव्यैर्देशकालविभागवित् ॥ ५७ ॥

सलिलैः शुचिभिर्माल्यैर्वन्यैर्मूलफलादिभिः। शस्ताङ्कुरांशुकैश्चार्चेत् तुळस्या प्रियया प्रभुम् ॥ ५८ ॥

लब्ध्वा द्रव्यमयीमर्चां क्षित्यम्ब्वादिषु चार्चयेत्। आहृतात्मा मुनिः शान्तो यतवाङ् मितवन्यभुक् ॥

---

१. कल्पितासने २. गुरुणाम्/गुरुणा

स्वेच्छावतारचरितैश्चरितं[1] निजमायया। करिष्यत्युत्तमश्लोकस्तान् ध्यायेद् हृदयङ्गमान्[2] ॥ ६० ॥
परिचर्या भगवतो यावतीः पूर्वसेविताः। ता मन्त्रहृदयेनैव प्रयुञ्ज्यान्मन्त्रमूर्तये ॥ ६१ ॥
एवं कायेन मनसा वचसा च मनोगतः। परिचर्यमाणो भगवान् भक्तिमत्परिचर्यया ॥ ६२ ॥
पुंसाममायिनां सम्यग् भजतां भाववर्धनः। श्रेयो दिशत्यभिमतं यद् धर्मादिषु देहिनाम् ॥ ६३ ॥
विरक्तश्चेन्द्रियरतौ भक्तियोगेन भूयसा। तन्निरन्तरभावेन भजेताद्धा विमुक्तये ॥ ६४ ॥

**मैत्रेय उवाच**

इत्युक्तस्तं परिक्रम्य प्रणिपत्य नृपार्भकः। ययौ मधुवनं पुण्यं हरेश्चरणमर्चितुम् ॥ ६५ ॥
तपोवनं गते तस्मिन् प्रविष्टोऽन्तःपुरं मुनिः। अर्हितोऽर्हणया राज्ञा सुखासीन उवाच तम् ॥ ६६ ॥

**नारद उवाच**

राजन् किं ध्यायसे दीर्घं मुखेन परिशुष्यता। किं वा न रिष्यते कामो धर्मो वाऽर्थेन संयुतः ॥ ६७ ॥

**राजोवाच**

सुतो मे बालको ब्रह्मन् स्त्रैणेनाकरुणात्मना। निर्वासितः पञ्चवर्षः सह मात्रा महान् कविः ॥ ६८ ॥
अप्यनाथं वने ब्रह्मन् न स्मादन्त्यर्भकं वृकाः। श्रान्तं शयानं क्षुधितं परिम्लानमुखाम्बुजम् ॥ ६९ ॥
अहो मे बत दौरात्म्यं स्त्रीजितस्यावधारय। योऽङ्कं प्रेम्णाऽऽरुरुक्षन्तं नाभ्यनन्दमसत्तमः ॥ ७० ॥

**नारद उवाच**

मामा शुचः स्वतनयं देवगुप्तं विशाम्पते। तत्प्रभावमविज्ञाय प्रावृङ्क्ते यद्यशो जगत् ॥ ७१ ॥
सुदुष्करं कर्म कृत्वा लोकपालैरपि प्रभुः। एष्यत्यचिरतो राजन् यशो विपुलयंस्तव ॥ ७२ ॥

**मैत्रेय उवाच**

इति देवर्षिणा प्रोक्तं विस्रभ्य[3] जगतीपतिः। राज्यलक्ष्मीमनादृत्य पुत्रमेवान्वचिन्तयत् ॥ ७३ ॥
तत्राभिषिक्तः प्रयतस्तामुपोष्य विभावरीम्। समाहितः पर्यचरद् दृष्ट्याऽऽदेशेन पूरुषम् ॥ ७४ ॥
त्रिरात्रान्तेत्रिरात्रान्ते कपित्थबदराशनः। आत्मवृत्त्यनुसारेण मासं निन्येऽर्चयन् हरिम् ॥ ७५ ॥
द्वितीयं च तथा मासं षष्ठेषष्ठेऽर्भको दिने। तृणपर्णादिभिः शीर्णैः कृतान्नोऽभ्यर्चयद् विभुम् ॥ ७६ ॥
तृतीयं चानयन्मासं नवमेनवमेऽहनि। अब्भक्ष उत्तमश्लोकमुपाधावत् समाधिना ॥ ७७ ॥
चतुर्थमपि वै मासं द्वादशेद्वादशेऽहनि। वायुभक्षो जितश्वासो ध्यायन् देवमपारयत् ॥ ७८ ॥

---

१. स्वेच्छावतारचरितै रचितम् ❋ २. तद् ध्यायेद् हृदयङ्गमम् ❋ ३. विस्रम्भ्य ❋

पञ्चमे मास्यनुप्राप्ते जितश्वासो नृपात्मजः। ध्यायन् ब्रह्म पदैकेन तस्थौ स्थाणुरिवाचलः ॥ ७९ ॥
देवाश्चक्रुस्तपोविघ्नं त्रासयन्तः स्वमायया। सर्पेभसिंहकूष्माण्डैस्तान् नापश्यत् परं गतः ॥ ८० ॥
सर्वतो मन आकृष्य हृदि भूतेन्द्रियाश्रयम्। ध्यायन् भगवतो रूपं नाद्राक्षीत् किञ्चनापरम् ॥ ८१ ॥
आधारं महदादीनां प्रधानपुरुषेश्वरम्। ब्रह्म धारयमाणस्य त्रयो लोकाश्चकम्पिरे ॥ ८२ ॥

यदैकपादेन स पार्थिवात्मजस्तस्थौ तदङ्गुष्ठनिपीडिता मही।
ननाम तत्रार्धमिभेन्द्रधिष्ठिता[१] तरीव सव्येतरतः पदेपदे ॥ ८३ ॥
तस्मिन्नभिध्यायति विश्वमात्मनो द्वारं निरुध्यासुमनन्यया धिया।
लोका निरुच्छ्वासनिपीडिता भृशं सलोकपालाः शरणं ययुर्हरिम् ॥ ८४ ॥

**देवा ऊचुः**

नैवं विदामो भगवन् प्राणरोधं चराचरस्याखिलसत्वधाम्नः।
विधेहि तन्नो व्रजिनाद् विमोक्षं प्राप्ता वयं त्वां शरणं शरण्यम् ॥ ८५ ॥

**श्रीभगवानुवाच**

मा भैष्ट बालं तपसो दुरत्ययान्निवर्तयिष्ये प्रतियात स्वधाम।
यतो हि वः प्राणनिरोध आसीदौत्तानपादिर्मयि सङ्गतात्मा ॥ ८६ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे नवमोऽध्यायः ॥**

---

**मैत्रेय उवाच-**

त एवमुत्सन्नभया[२] उरुक्रमे कृतप्रणामाः प्रययुस्त्रिविष्टपम्।
सहस्रशीर्षाऽपि ततो गरुत्मता मधोर्वनं भृत्यदिदृक्षया गतः ॥ १ ॥
स वै धिया योगविपाकतीव्रया हृत्पद्मकोशे स्फुरितं तडित्प्रभम्।
तिरोहितं सहसैवोपलक्ष्य बहिः स्थितं तदवस्थं ददर्श ॥ २ ॥
तद्दर्शनेनागतसाध्वसः क्षिताववन्दताङ्गं विनमय्य दण्डवत्।
दृग्भ्यां प्रपश्यन् प्रपिबन्निवार्भकश्चुम्बन्निवास्येन भुजेन चाश्लिषन् ॥ ३ ॥

---

१. तत्रार्धमहीन्द्रविष्ठिता ❋ २. एवं त उत्सन्नभयाः ❋

स तं विवक्षन्तमतद्विदं हरिर्ज्ञात्वाऽस्य सर्वस्य च हृद्यवस्थितः ।
कृताञ्जलिं ब्रह्ममयेन कम्बुना पस्पर्श बालं कृपया कपोले ॥ ४ ॥
स वै तदैव प्रतिपद्य तां गिरं दैवीं परिज्ञातपरात्मनिर्णयः ।
तद्भक्तिभावोऽभ्यगृणादसत्वरं परिश्रितोरुश्रवसं ध्रुवक्षितिम् ॥ ५ ॥

ध्रुव उवाच

योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां सञ्जीवयत्यखिलशक्तिधरः स्वधाम्ना ।
अन्यांश्च हस्तचरणश्रवणत्वगादीन् प्राणान् नमो भगवते पुरुषाय तुभ्यम् ॥ ६ ॥
एकस्त्वमेव भगवन्निदमात्मशक्त्या मायाख्ययोरुगुणया महदाद्यनेकम्[१] ।
सृष्ट्वाऽनुविश्य पुरुषस्तदसद्गुणेषु नानेव दारुषु विभावसुवद् विभासि ॥ ७ ॥
त्वद्दत्तया वयुनयेदमचष्ट विश्वं सुप्तः प्रबुद्ध इव नाथ भवत्प्रपन्नः ।
तस्यापवर्गशरणं[२] तव पादमूलं विस्मर्यते कृतधिया कथमार्तबन्धो ॥ ८ ॥
नूनं विमृष्टमतयस्तव मायया ते ये त्वां भवाप्ययविमोक्षणमन्यहेतोः ।
अर्चन्ति कल्पकतरुं कुणपोपभोग्यमिच्छन्ति यत् स्पर्शजं निरयेऽपि नॄणाम् ॥ ९ ॥
या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद् भवज्जनकथाश्रवणेन वा स्यात् ।
सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत् किम्वन्तकासिलुळितात् पततां विमानात् ॥
भक्तिं मुहुः प्रथयतां[३] त्वयि मे प्रसङ्गो भूयादनन्त महताममलाशयानाम् ।
येनाञ्जसोल्बणमुरुव्यसनं भवाब्धिं नेष्ये भवद्गुणकथामृतपानमत्तः ॥ ११ ॥
ते न स्मरन्त्यतितरां प्रियमीशमाद्यं स्वान् सम्पदः सुतसुहृद्गृहवित्तदारान् ।
ये त्वब्जनाभ भवदीयपदारविन्दसौगन्ध्यलुब्धहृदयेषु कृतप्रसङ्गाः ॥ १२ ॥
तिर्यङ्नगद्विजसरीसृपदेवदैत्यमर्त्यादिभिर्विरचितं[४] सदसद्विशेषम् ।
रूपं स्थविष्ठमज ते महदाद्यशेषं नातः परं परम वेद्मि न यत्र वाचः ॥ १३ ॥
कल्पान्त एतदखिलं जठरेण गृह्णन् शेते पुमान् स्वदृगनन्तसखस्तदङ्के ।
यन्नाभिसिन्धुरुहकाञ्चनलोकपद्मगर्भे द्युमान् भगवते प्रणतोऽस्मि तस्मै ॥ १४ ॥

---

१. महदाद्यशेषम् २. अपवर्ग्यशरणम् ३. प्रवहताम् ४. तिर्यङ्मृग.... *

त्वं नित्यमुक्तपरिशुद्धविबुद्ध आत्मा कूटस्थ आदिपुरुषो भगवांस्त्र्यधीशः ।
यद्बुद्ध्यवस्थितमखण्डितया[१] स्वबुद्ध्या दृष्ट्वा स्थिता वधिमतो व्यतिरिक्त आस्से[२] ॥
यस्मिन् विरुद्धगतयोऽप्यनिशं पतन्ति विद्यादयो विविधशक्तय आनुपूर्व्या ।
तद् ब्रह्म विश्वभवमेकमविश्वमाद्य[३]मानन्दमात्रमविकारमहं प्रपद्ये ॥ १६ ॥
सत्याशिषो हि भगवंस्तव पादमूलमाशिष्टयो[४]ऽनुभजतः पुरुषार्थमूर्तेः ।
अप्येवमार्य भगवान् परिपाति दीनान् वाश्रेव वत्सकमनुग्रहकातरोऽस्मान् ॥ १७ ॥

**मैत्रेय उवाच**

अथाभिष्टुत एवं स सत्सङ्कल्पेन धीमता । भृत्यानुकम्पी भगवानभिनन्द्येदमब्रवीत् ॥ १८ ॥

**श्रीभगवानुवाच**

वेदाहं ते व्यवसितं हृदि राजन्यबालक । तत् प्रयच्छामि भद्रं ते दुरापमपि सुव्रत ॥ १९ ॥
नान्यैरधिष्ठितं भद्र यद् भ्राजिष्णु ध्रुवक्षिति । यत्र ग्रहर्क्षताराणां ज्योतिषां चक्रमाहितम् ।
मेढ्यां गोचक्रवत् स्थास्नु पुरस्तात् कल्पवासिनाम् ॥ २० ॥
धर्मोऽग्निः कश्यपः शक्रो मुनयो ये वनौकसः । चरन्ति दक्षिणीकृत्य भ्रमन्तो यत् सतारकाः ॥ २१ ॥
प्रस्थिते तु वनं पित्रा दत्वा गां धर्मसंश्रयः । षट्त्रिंशद्वर्षसाहस्रं[५] रक्षिताऽव्याहतेन्द्रियः ॥ २२ ॥
त्वद्भ्रातर्युत्तमे नष्टे मृगयायां तु तन्मनाः । अन्वेषती वनं माता दावाग्निं सा प्रवेक्ष्यति ॥ २३ ॥
इष्ट्वा मां यज्ञहृदयं यज्ञैः पुष्कळदक्षिणैः । भुक्त्वा चेहाशिषः सत्या अन्ते माऽनुस्मरिष्यसि ॥ २४ ॥
ततो गन्तासि मत्स्थानं सर्वलोकनमस्कृतम् । उपरिष्टाद् ऋषिभ्यस्त्वं यतो नावर्तते यतिः ॥ २५ ॥

**मैत्रेय उवाच**

इत्यर्चितः स भगवानतिसृज्यात्मनः पदम् । बालस्य पश्यतो धाम स्वमगाद् गरुडध्वजः ॥ २६ ॥
सोऽपि सङ्कल्पजं विष्णोः पादसेवोपसादितम् । प्राप्य सङ्कल्पनिर्वाणं नातिप्रीतोऽभ्यगात् पुरम् ॥

**विदुर उवाच**

सुदुर्लभं यत् परमं पदं हरेर्मायाविनस्तच्चरणार्चनार्जितम् ।
लब्ध्वाऽप्यसिद्धार्थमिवैकजन्मना कथं स्वमात्मानममन्यतार्थवित् ॥ २८ ॥

---

१. ये बुद्ध्यवस्थितम्  २. आस्ते ❋  ३. एकमनन्तमाद्यम् ❋
४. पादपद्ममाशिष्टयः ❋  ५. षड्विंशद्वर्षसाहस्रम् ❋

**मैत्रेय उवाच**

मातुः सपत्न्या वाग्बाणैर्हृदि विद्धस्तु तत्[१] स्मरन्। नैच्छन्मुक्तिपतेर्मुक्तिं पश्चात्[२] तापमुपेयिवान् ॥

**ध्रुव उवाच**

समाधिनाऽनेकभवेन यत्पदं विदुः सनन्दादय ऊर्ध्वरेतसः।
मासैरहं षड्भिरमुष्य पादयोश्छायामुपेत्यापहतः पृथङ्मतिः ॥ ३० ॥

अहो बत ममानात्म्यं मन्दभाग्यस्य पश्यत। भवच्छिदः पादमूलं गत्वा याचे यदन्तवत् ॥ ३१ ॥

मतिर्विदूषिता देवैर्यतद्भिरसहिष्णुभिः। यो नारदवचस्तथ्यं नाग्रहीषमसत्तमः ॥ ३२ ॥

दैवीं मायामुपाश्रित्य प्रसुप्त इव भिन्नदृक्। तप्ये द्वितीयेऽप्यसति भ्रातृभ्रातृव्यहृद्रुजा ॥ ३३ ॥

मयैतत् प्रार्थितं व्यर्थं चिकित्सेव गतायुषि। प्रसाद्य जगदात्मानं तपसा दुष्प्रसादनम् ॥ ३४ ॥

भवच्छिदं न याचेऽहमभवं भाग्यवर्जितः[३]। तादात्म्यं यच्छतो मौढ्यान्मनो मे भिक्षितं बत।
ईश्वरात् क्षीणपुण्येन पुलाकानिव चाधनः ॥ ३५ ॥

**मैत्रेय उवाच**

न वै मुकुन्दस्य पदारविन्दयो रजोजुषस्तात भवादृशा जनाः।
वाञ्छन्ति तद्दास्यमृतेऽर्थमात्मनो यदृच्छया लब्धमनःसमृद्धयः ॥ ३६ ॥

आकर्ण्यात्मजमायान्तं सम्परेत्य यथाऽऽगतम्। राजा न श्रद्दधे भद्रमभद्रस्य कुतो मम ॥ ३७ ॥

श्रद्धाय वाक्यं देवर्षेर्हर्षवेगेन धर्षितः। वार्ताहर्तुरतिप्रीत्या हारं प्रादान्महाधनम् ॥ ३८ ॥

सदश्वं रथमारुह्य कार्तस्वरपरिच्छदम्। ब्राह्मणैः कुलवृद्धैश्च पर्यस्तोऽमात्यबन्धुभिः ॥ ३९ ॥

शङ्खतूर्यनिनादेन ब्रह्मघोषेण वेणुभिः। निश्चक्राम पुरात् तूर्णमात्मजाभीक्षणोत्सुकः ॥ ४० ॥

सुनीतिः सुरुचिश्चास्य महिष्यौ रुग्मभूषिते। आरुह्य शिबिकां सार्धमुत्तमेनाभिजग्मतुः ॥ ४१ ॥

तं दृष्ट्वोपवनाभ्याश आयान्तं तरसा रथात्। अवरुह्य नृपस्तूर्णमासाद्य प्रेमविह्वलः ॥ ४२ ॥

परिरेभेऽङ्गजं दोर्भ्यां दीर्घोत्कण्ठमनाः श्वसन्। विष्वक्सेनाङ्घ्रिसंस्पर्शहताशेषाघवन्धनम् ॥ ४३ ॥

अथाजिघ्रन्मुहुर्मूर्ध्नि शान्तैर्नयनवारिभिः। स्नापयामास तनयमाप्तोद्दाममनोरथम् ॥ ४४ ॥

अभिवन्द्य पितुः पादावाशीर्भिश्चनुमन्त्रितः। ननाम मातरौ शीर्ष्णा सत्कृतः सज्जनाग्रणीः ॥ ४५ ॥

सुरुचिस्तं समुत्थाप्य पादावनतमर्भकम्। परिष्वज्याह जीवेति बाष्पगद्गदया गिरा ॥ ४६ ॥

---

१. तान्  २. तस्मात्  ३. भवच्छिदमयाचेऽहं भवं भाग्यविवर्जितः।

यस्य प्रसन्नो भगवान् गुणैर्मैत्र्यादिभिर्हरिः । तस्मै नमन्ति भूतानि निम्नमाप इव स्वयम् ॥ ४७ ॥
उत्तमश्च ध्रुवश्चोभावन्योन्यं प्रेमविह्वलौ । अन्योन्यसङ्गादुत्पुळकावस्रौघं मुहुरूहतुः ॥ ४८ ॥
सुनीतिरस्य जननी प्राणेभ्योऽपि प्रियं सुतम् । उपगुह्य जहावाधिं तदङ्गस्पर्शनिर्वृता ॥ ४९ ॥
पयः स्तनाभ्यां सुस्राव नेत्रजैः सलिलैः शिवैः । तदाऽभिषिच्यमानाया वीरे[१] वीरसुवो मुहुः ॥ ५० ॥
तां शशंसुर्जना राज्ञीं दिष्ट्या ते पुत्र आर्तिहा । प्रतिलब्धश्चिरं नष्टो रक्षिता मण्डलं भुवः ॥ ५१ ॥
अभ्यर्चितस्त्वया नूनं भगवान् प्रणतार्तिहा । यदनुध्यायिनो धीरा मृत्युं जिग्युः सुदुर्जयम् ॥ ५२ ॥
लाळ्यमानं जनैरेवं ध्रुवं सभ्रातरं नृपः । आरोप्य करिणीं हृष्टः स्तूयमानोऽविशत् पुरम् ॥ ५३ ॥
तत्रतत्रोपसङ्क्लृप्तैर्लसत्काञ्चनतोरणैः । सवृन्तैः कदळीस्तम्भैः पूगपोतैश्च तद्विधैः ॥ ५४ ॥
चूतपल्लववासःस्रङ्मुक्तादामविळम्बिभिः । उपस्कृतप्रतिद्वारमपां कुम्भैः सदीपकैः ॥ ५५ ॥
प्राकारैर्गोपुराट्टालैः शातकुम्भपरिच्छदैः । सर्वतोऽलङ्कृतं श्रीमद्विमानशिखरद्युभिः ॥ ५६ ॥
मृष्टचत्वररथ्यादिमार्गं चन्दनचर्चितम् । लाजाक्षतैः पुष्पफलैस्तण्डुलैर्बहुभिर्युतम्[२] ॥ ५७ ॥
ध्रुवाय पथि दृष्टाय तत्रतत्र पुरस्त्रियः । सिद्धार्थाक्षतदध्यम्बुदूर्वापुष्पफलानि च ॥ ५८ ॥
उपजह्रुः प्रयुञ्जाना वात्सल्यादाशिषः सतीः । शृण्वंस्तद्वल्गुगीतानि प्राविशद् भवनं पितुः ॥ ५९ ॥
महामणिव्रातमये स तस्मिन् कशिपूत्तमे । लाळितो नितरां पित्रा न्यवसद् दिवि देववत् ॥ ६० ॥
पयःफेननिभाः शय्या दान्ता रुग्ममरिच्छदाः । आसनानि महार्हाणि यत्र रौग्म्या उपस्कराः ॥ ६१ ॥
यत्र स्फटिककुड्येषु महामारतकेषु च । मणिप्रदीपा आभान्ति ललनारत्नसंयुताः ॥ ६२ ॥
उद्यानानि च रम्याणि विचित्रैरमरद्रुमैः । कूजद्विहङ्गमिथुनैर्गायन्मत्तमधुव्रतैः ॥ ६३ ॥
वाप्यो वैडूर्यसोपानाः पद्मोत्पलकुमुद्वतीः । हंसकारण्डवकुलैर्जुष्टाश्चक्राह्वसारसैः ॥ ६४ ॥
उत्तानपादो राजर्षिः प्रभावं तनयस्य तम् । श्रुत्वा दृष्ट्वाऽद्भुततमं प्रपेदे विस्मयं परम् ॥ ६५ ॥
वीक्ष्योढवयसं पुत्रं प्रकृतीनां च सम्मतम् । अनुरक्तप्रजं राजा ध्रुवं चक्रे भुवः पतिम् ॥ ६६ ॥
आत्मानं च प्रवयसमाकलय्य विशां पतिः । वनं विरक्तः प्रातिष्ठत् विमृशन्नात्मनो गतिम् ॥ ६७ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे दशमोऽध्यायः ॥**

---

१. अभिषिच्यमानाभ्यां वीर ❋ २. बलिभिर्युतम्

**मैत्रेय उवाच**

प्रजापतेर्दुहितरं शिंशुमारस्य वै ध्रुवः । उपयेमे भ्रमिं नाम[१] तत्सुतौ कल्पवत्सरौ ॥ १ ॥
ज्येष्ठायामपि भार्यायां वायोः पुत्र्यां महाबलः । पुत्रमुत्कलनामानं योगेश्वरमजीजनत् ॥ २ ॥
उत्तमस्त्वकृतोद्वाहो मृगयायां बलीयसा । हतः पुण्यजनेनाजौ तन्माता तद्गतिं गता ॥ ३ ॥
ध्रुवो भ्रातृवधं श्रुत्वा कोपामर्षशुचाऽर्पितः । जैत्रं स्यन्दनमास्थाय गतः पुण्यजनालयम् ॥ ४ ॥
गत्वोदीचीं दिशं राजा रुद्रानुचरसेविताम् । ददर्श हिमवद्द्रोण्यां पुरीं गुह्यकसङ्कुलाम् ॥ ५ ॥
दध्मौ शङ्खं बृहद्बाहुः खं दिशश्चानुनादयन् । तेनोद्विग्नदृशः क्षत्तरुपदेव्योऽत्रसन् भृशम् ॥ ६ ॥
ततो निष्क्रम्य बलिन उपदेवमहाभटाः । असहन्तस्तन्निनादमभिपेतुरुदायुधाः ॥ ७ ॥
स तानापततो वीर उग्रधन्वा महारथः । एकैकं युगपत् सर्वानहन् बाणैस्त्रिभिस्त्रिभिः ॥ ८ ॥
ते वै ललाटलग्नैस्तैरिषुभिः सर्व एव हि । मत्वा निरस्तमात्मानं शशंसुः कर्म तस्य तत् ॥ ९ ॥
तेऽपि चामुममृष्यन्तः पादस्पर्शमिवोरगाः । शरैरविद्ध्यन् युगपद् द्विगुणं प्रचिकीर्षवः[२] ॥ १० ॥
ततः परिघनिस्त्रिंशैः प्रासशूलपरश्वधैः । शक्त्यृष्टिभिर्भुशुण्डीभिश्चित्रवाजैः[३] शरैरपि ॥ ११ ॥
अभ्यवर्षन् प्रकुपिताः सरथं सहसारथिम् । इच्छन्तस्तत्प्रतीकर्तुमयुतानां त्रयोदश ॥ १२ ॥
औत्तानपादिः स तदा शस्त्रवर्षेण भूरिणा । नोपादृश्यत सञ्छन्न आसारेण यथा गिरिः ॥ १३ ॥
हाहाकारस्तदैवासीत् सिद्धानां दिवि पश्यताम् । गतोऽयं मानवः सूर्यो मग्नः पुण्यजनार्णवे ॥ १४ ॥
नदत्सु यातुधानेषु जयकाशिष्वथो मृधे । उदतिष्ठद् रथस्तस्य नीहारादिव भास्करः ॥ १५ ॥
धनुर्विस्फूर्जयन्नुग्रं द्विषतां खेदमुद्वहन् । अस्त्रौघं व्यधमद् बाणैर्घनानीकमिवानिलः ॥ १६ ॥
तस्य ते चापनिर्मुक्ता भित्त्वा वर्माणि रक्षसाम् । कायानाविविशुस्तिग्मा गिरीनशनयो यथा ॥ १७ ॥
भल्लैः सञ्छिद्यमानानां शिरोभिश्चारुकुण्डलैः । ऊरुभिर्हेमतालाभैर्दोर्भिर्वलयवल्गुभिः ॥ १८ ॥
हारकेयूरमुकुटैरुष्णीषैश्च महाधनैः । आस्तृतास्ता रणभुवो रेजुर्वीरमनोहराः ॥ १९ ॥

हतावशिष्टा इतरे रणाजिराद् रक्षोगणाः क्षत्रियवर्यसायकैः ।
प्रायो विवृक्णावयवा विदुद्रुवुर्मृगेन्द्रविक्रीडितयूथपा इव ॥ २० ॥
अपश्यमानः स तदाऽऽततायिनं महामृधे कञ्चन मानवोत्तमः ।
पुरीं दिदृक्षन्नपि नाविशद् द्विषां न मायिनां वेद चिकीर्षितं जनः ॥ २१ ॥

---

१. भृमिं नाम   २. प्रतिचिकीर्षवः ❋   ३. ....मृशुण्ठीभिश्चित्रपुङ्खैः ❋

इति ब्रुवंश्चित्ररथः स्वसारथिं यत्तः परेषां प्रतियोगशङ्कितः ।
शुश्राव शब्दं जलधेरिवेरितं नभस्वता दिक्षु रजोऽन्वदृश्यत ॥ २२ ॥

क्षणेन च्छादितं व्योम घनानीकेन सर्वतः । विष्फुरत्तडिता दिक्षु त्रासयत्स्तनयित्नुना ॥ २३ ॥

ववृषू[1] रुधिरौघास्थिपूयविण्मूत्रमेधसः । निपेतुर्गगनादस्य कबन्धान्यग्रतोऽनघ ॥ २४ ॥

ततः खेऽदृश्यत गिरिर्निपेतुः[2] सर्वतोदिशम्[3] । गदापरिघनिस्त्रिंशमुसला अश्मवर्षिणः[4] ॥ २५ ॥

अहयोऽशनिनिःश्वासा वमन्तोऽग्निं रुषान्विताः[5] । अभ्यधावन् गजा मत्ताः सिंहव्याघ्राश्च यूथशः ॥

समुद्र ऊर्मिभिर्भीमः प्लावयन् सर्वतो भुवम् । आससाद महह्रादः कल्पान्त इव भीषणः ॥ २७ ॥

एवंविधान्यनेकानि त्रासनान्यमनस्विनाम् । ससृजुस्तिग्मगतय[6] आसुर्या माययाऽसुराः ॥ २८ ॥

ध्रुवे प्रयुक्तामसुरैस्तां मायामतिदुस्तराम् । निशम्य तस्य मुनयः समशंसन् समागताः ॥ २९ ॥

औत्तानपादे भगवांस्तव शार्ङ्गधन्वा देवः क्षिणोत्ववनतार्तिहरो विपक्षान् ।
यन्नामधेयमभिधाय निशम्य चाद्धा लोकोऽञ्जसा तरति दुस्तरमङ्ग मृत्युम् ॥ ३० ॥

निशम्य वदतामेवमृषीणां धनुषि ध्रुवः । सन्दधेऽस्त्रमुपस्पृश्य यन्नारायणनिर्मितम् ॥ ३१ ॥

सन्धीयमान एतस्मिन् माया गुह्यकनिर्मिताः । क्षिप्रं विनेशुर्विदुर क्लेशा ज्ञानोदये यथा ॥ ३२ ॥

तस्यार्षास्त्रं धनुषि प्रयुञ्जतः सुवर्णपुङ्खाः कळहंसवाससः ।
विनिःसृता आविविशुर्द्विषद्बलं वनं यथा भीमरवाः शिखण्डिनः ॥ ३३ ॥

तैस्तिग्मधारैः प्रधने शिलीमुखैरितस्ततः पुण्यजना उपद्रुताः ।
समभ्यधावन्[7] कुपिता उदायुधाः सुपर्णमुन्नद्धफणा इवाहयः ॥ ३४ ॥

स तान् पृषत्कैरभिधावतो मृधे निकृत्तबाहूरुशिरोधरोदरान् ।
निनाय लोकं परमर्कमण्डलं व्रजन्ति निर्भिद्य यमूर्ध्वरेतसः ॥ ३५ ॥

तान् हन्यमानानभिवीक्ष्य गुह्यकाननागसश्चित्ररथेन भूरिशः ।
औत्तनपादिं कृपया पितामहो मनुर्जगादोपगतः सहर्षिभिः ॥ ३६ ॥

### मनुरुवाच

अलं वत्सातिरोषेण तमोद्वारेण पाप्मना । येन पुण्यजनानेतानवधीस्त्वमनागसः ॥ ३७ ॥

---

१. ववर्षुः ❋ २. गिरेर्निपेतुः ३. सर्वतोदिशः ❋ ४. मुसलास्यश्मवर्षिणः ❋
५. रुषाऽक्षिभिः ६. तिग्ममतयः ❋ ७. तमभ्यधावन्

नास्मत्कुलोचितं तात कर्मैतत् सद्विगर्हितम् । वधोऽयमुपदेवानामारब्धस्तेऽकृतैनसाम् ॥ ३८ ॥
नन्वेकस्यापराधेन तत्सङ्गाद् बहवो हताः । भ्रातुर्वधाभितप्तेन त्वयाऽङ्ग भ्रातृवत्सल ॥ ३९ ॥
नायं मार्गो हि साधूनां हृषीकेशानुवर्तिनाम् । यदात्मानमसङ्गृह्य पशुवद् भूतवैशसम्[1] ॥ ४० ॥
सर्वभूतात्मभावेन भूतावासं हरिं भवान् । आराध्याप दुराराध्यं विष्णोस्तत् परमं पदम् ॥ ४१ ॥
स त्वं हरेरनुध्याता[2] तत्पुंसामपि सम्मतः । कथं न्ववद्यं कृतवाननुशिक्षन् सतां व्रतम् ॥ ४२ ॥
तितिक्षया करुणया मैत्र्या चाखिलजन्तुषु । समत्वेन च सर्वात्मा भगवान् सम्प्रसीदति ॥ ४३ ॥
सम्प्रसन्ने भगवति पुरुषः प्रकृतेर्गुणैः । विमुक्तो जीवनिर्मुक्तो ब्रह्म निर्वाणमृच्छति ॥ ४४ ॥
भूतैः पञ्चभिरारब्धो योषित् पुरुष एव च । तयोर्व्यवायात् सम्भूतिर्योषित्पुरुषयोरिह ॥ ४५ ॥
एवं प्रवर्तते सर्गः स्थितिः संयम एव च । गुणव्यतिकराद् राजन् मायया परमात्मनः ॥ ४६ ॥
निमित्तमात्रं तत्रात्मा निर्गुणः पुरुषर्षभ । व्यक्ताव्यक्तमिदं विश्वं यत्र भ्रमति लोहवत् ॥ ४७ ॥

स खल्विदं भगवान् योगशक्त्या गुणप्रवाहेषु[3] विभक्तवीर्यः ।
करोत्यकर्तेव निहन्त्यहन्ता चेष्टा विभूम्नः खलु दुर्विभाव्या ॥ ४८ ॥

सोऽनन्तोऽन्तकरः कालोऽनादिरादिकृदव्ययः । जनं जनेन जनयन् मारयन् मृत्युनाऽऽत्मनः ॥ ४९ ॥

न वै स्वपक्षोऽस्य विपक्ष एव वा परस्य मृत्योर्विशतः समं प्रजाः ।
तं धावमानमनुधावन्त्यनीशा यथा रजांस्यनिलं भूतसङ्घाः ॥ ५० ॥

आयुषोऽपचयं जन्तोस्तथैवोपचयं विभुः । उभाभ्यां रहितः स्वस्थो दुःस्थस्य विदधात्यसौ ॥ ५१ ॥
केचित् कर्म वदन्त्येनं स्वभावमपरे नृप । एके कालं परे दैवं पुंसः काममुतापरे ॥ ५२ ॥
अव्यक्तस्याप्रमेयस्य नानाशक्त्युदयस्य च । न वै चिकीर्षितं तात को वेदाद्धाऽस्य सम्भवम् ॥ ५३ ॥
नैव ते पुत्रक भ्रातुर्हन्तारो धनदानुगाः । विसर्गादानयोस्तात पुंसो दैवं हि कारणम् ॥ ५४ ॥
स एव विश्वं सृजति स एवावति हन्ति च । अथापि ह्यनहङ्कारान्नाज्यते गुणकर्मभिः ॥ ५५ ॥
एष भूतानि भूतात्मा भूतेशो भूतभावनः । स्वशक्त्या मायया युक्तः सृजत्यत्ति च पाति च ॥ ५६ ॥

तमेव सत्यममृतं तात दैवं सर्वात्मनोपैहि जगत्परायणम् ।
यस्मै बलिं विश्वसृजो हरन्ति गावो यथा ता[4] नसि दामयन्त्रिताः ॥ ५७ ॥

---

१. भूतवैरकृत् ❋ २. अनुध्यातः ❋ ३. गुणप्रवाहेण ❋ ४. यथो ताः ❋

यः पञ्चवर्षो जननीं त्वं विहाय मातुः सपत्न्या वचसा भिन्नमर्मा ।
वनं गतस्तपसा प्रत्यगक्षमाराध्य लेभे मूर्ध्नि पदं त्रिलोक्याः ॥ ५८ ॥
तमेवमङ्गात्मनि मुक्तविग्रहैर्व्यपाश्रितं निर्गुणमेकमक्षरम् ।
आत्मानमन्विच्छ[१] विमुक्तमात्मदृग् यस्मिन्निदं भिन्नमसत् प्रतीयते[२] ॥ ५९ ॥
त्वं प्रत्यगात्मनि सदा भगवत्यनन्त आनन्दमात्र उपपन्नसमस्तशक्तौ ।
भक्तिं विधाय परमां शनकैरविद्याग्रन्थिं विभेत्स्यसि ममाहमिति प्ररूढाम् ॥ ६० ॥
संयच्छ रोषं भद्रं ते प्रतीपं श्रेयसां परम् । श्रुतेन भूयसा राजन्नगदेन यथाऽऽमयम् ॥ ६१ ॥
येनोपसृष्टात् पुरुषाल्लोक उद्विजते भृशम् । न बुधस्तद्वशं गच्छेदिच्छन्नभयमात्मनः ॥ ६२ ॥
हेळनं गिरिशभ्रातुर्धनदस्य त्वया कृतम् । यज्जघ्निवान् पुण्यजनान् भ्रातृघ्नानित्यमर्षितः ॥ ६३ ॥
तं प्रसादय वत्साशु सन्नत्या प्रश्रयोक्तिभिः । न यावन्महतां तेजः कुलं नोऽभिभविष्यति ॥ ६४ ॥
इत्युक्तस्तं प्रणम्याह भगवंस्तेऽनुशासनम् । आतिष्ठे भ्रातृमात्रोर्मे शोचतः क्षम्यतामिति ॥ ६५ ॥
एवं स्वायम्भुवः पौत्रमनुशास्य मनुर्ध्रुवम् । तेनाभिवन्दितः साकमृषिभिः स्वपुरं ययौ ॥ ६६ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे एकादशोऽध्यायः ॥**

---

**मैत्रेय उवाच**

ध्रुवं निवृत्तं प्रतिबुध्य वैशसादपेतमन्युं भगवान् धनेश्वरः ।
तत्रागतश्चारणयक्षकिन्नरैः संस्तूयमानोऽभ्यवदत् कृताञ्जलिम् ॥ १ ॥

**धनद उवाच**

भोभो क्षत्रियदायाद परितुष्टोऽस्मि तेऽनघ । यस्त्वं पितामहादेशाद् वैरं दुस्त्यजमत्यजः ॥ २ ॥
न भवानवधीद् यक्षान् न यक्षा भ्रातरं तव । काल एव हि भूतानां प्रभुरप्ययभावयोः ॥ ३ ॥
अहं त्वमित्यपार्था धीरज्ञानात् पुरुषस्य हि । स्वाप्नीव भात्यनुध्यानाद् यया बन्धविपर्ययः ॥ ४ ॥
तद् गच्छ ध्रुव भद्रं ते भगवन्तमधोक्षजम् । सर्वभूतात्मभावेन सर्वभूतात्मविग्रहम् ॥ ५ ॥
भजस्व भजनीयाङ्घ्रिमभवाय भवच्छिदम् । युक्तं विरहितं शक्त्या गुणमय्याऽऽत्ममायया ॥ ६ ॥
वृणीहि कामं नृप यन्मनोगतं मत्तस्त्वमौत्तानपदेऽविशङ्कितः ।
वरार्हणोऽस्यम्बुजनाभपादयोर्निरन्तरं[३] त्वां वयमङ्ग शुश्रुमः ॥ ७ ॥

---

१. अन्विष्य  २. प्रतीक्ष्यते ❋  ३. वरं वरार्होऽम्बुजनाभपादयोरनन्तरम् ❋

**मैत्रेय उवाच**

स राजराजेन वराय चोदितो ध्रुवो महाभागवतो महामतिः ।
हरौ स वव्रेऽचलितां स्मृतिं यया तरत्ययत्नेन दुरत्ययं तमः ॥ ८ ॥
तस्य प्रीतेन मनसा तां दत्त्वैळिबिळिस्तथा । पश्यतोऽन्तर्दधे सोऽपि स्वपुरं प्रत्यपद्यत ॥ ९ ॥
अथायजत यज्ञेशं क्रतुभिर्भूरिदक्षिणैः । द्रव्यक्रियादेवतानां कर्माकर्मफलप्रदम् ॥ १० ॥
सर्वात्मन्यच्युते सर्वे तीव्रौघां भक्तिमुद्वहन् । ददर्शात्मनि भूतेषु तमेवावस्थितं विभुम् ॥ ११ ॥
तमेव शीलसम्पन्नं ब्रह्मण्यं दीनवत्सलम् । गोप्तारं धर्मसेतूनां मेनिरे पितरं प्रजाः ॥ १२ ॥
षट्त्रिंशद्वर्षसाहस्रं[१] शशास क्षितिमण्डलम् । भोगैः पुण्यक्षयं कुर्वन्नभोगैरशुभक्षयम् ॥ १३ ॥
एवं बहुसवं कालं महात्माऽविकलेन्द्रियः । त्रिवर्गौपयिकं नीत्वा पुत्रायादान्नृपासनम् ॥ १४ ॥
मन्यमान इदं विश्वं मायारचितमात्मनि । अविद्यारचितस्वप्नगन्धर्वनगरोपमम् ॥ १५ ॥
आत्मस्त्र्यपत्यसुहृदो बलमृद्धकोशमन्तःपुरं परिविहारभुवश्च[२] रम्याः ।
भूमण्डलं जलधिमेखलमाकलय्य कालोपसृष्टमिति स प्रययौ विशालाम् ॥ १६ ॥
तस्यां विशुद्धकरणः शिववार्विगाह्य बद्धासनो जितमरुन्मनइन्द्रियार्थः[३] ।
स्थूले दधार भगवत्प्रतिरूप एतद् ध्यायंस्तदव्यवहितो व्यसृजत् समाधौ ॥ १७ ॥
भक्तिं हरौ भगवति प्रवहन्नजस्रमानन्दबाष्पकळया मुहुरर्द्यमानः ।
विक्लिद्यमानहृदयः पुळकाञ्चिताङ्गो नात्मानमस्मरदसाविति मुक्तलिङ्गः ॥ १८ ॥
स ददर्श विमानाग्र्यं नभसोऽवतरद् भुवः । विभ्राजयद् दश दिशो राकापतिमिवोदितम्[४] ॥ १९ ॥
तत्रानुदेवप्रवरौ चतुर्भुजौ श्यामौ किशोरावरुणाम्बुजेक्षणौ ।
स्थिताववष्टभ्य गदां सुवाससौ किरीटहाराङ्गदचारुकुण्डलौ ॥ २० ॥
विज्ञाय तावुत्तमभावकिङ्करावभ्युत्थितः साध्वससन्नविक्रमः ।
ननाम नामानि गृणन् मधुद्विषः पार्षत्प्रधानाविति संहताञ्जलिः ॥ २१ ॥
तं कृष्णपादाभिनिविष्टचेतसं बद्धाञ्जलिं प्रश्रयनम्रकन्धरम् ।
सुनन्दनन्दावुपलभ्य सस्मितं प्रीत्योचतुः पुष्करनाभसम्मतौ ॥ २२ ॥

---

१. षड्विंशद्वर्षसाहस्रम् ❋ २. परिविहाय भुवश्च ❋
३. जितमरुन्मनसाऽऽहृताक्षः ४. तारापतिमिवोदिम् ❋

**सुनन्दनन्दावूचतुः**

भोभो राजन् सुभद्रं ते वचो नोऽवहितं शृणु । यः पञ्चवर्षस्तपसा भवान् देवमतीतृपत् ॥ २३ ॥

तस्याखिलजगद्धातुर्देवदेवस्य[1] शार्ङ्गिणः । पार्षदाविह सम्प्राप्तौ नेतुं त्वां भगवत्पदम् ॥ २४ ॥

सुदुर्जयं विष्णुपदं जितं त्वया यत् सूरयोऽप्राप्य विचक्षते परम् ।
आतिष्ठ तच्चन्द्रदिवाकरादयो ग्रहर्क्षताराः परियन्ति दक्षिणम् ॥ २५ ॥

अनास्थितं ते पितृभिरन्यैरप्यङ्ग कर्हिचित् । आतिष्ठ जगतां वन्द्यं तद् विष्णोः परमं पदम् ॥ २६ ॥

एतद् विमानप्रवरमुत्तमश्लोकमौळिना । उपस्थापितमायुष्मन्नधिरोढुं त्वमर्हसि ॥ २७ ॥

**मैत्रेय उवाच**

निशम्य वैकुण्ठनियोज्यमुख्ययोर्मधुच्युतां वाचमुरुक्रमप्रियः ।
कृताभिषेकः कृतनित्यमङ्गलो मुनीन् प्रणम्याशिषमभ्यवादयत् ॥ २८ ॥

परीत्याभ्यर्च्य धिष्ण्याग्र्यं पार्षदावभिवन्द्य च । इयेष तदधिष्ठातुं बिभ्रद् रूपं हिरण्मयम् ॥ २९ ॥

तदा दुन्दुभयो नेदुर्मृदङ्गपणवादयः । गन्धर्वमुख्याः प्रजगुः पेतुः कुसुमवृष्टयः ॥ ३० ॥

स च स्वर्लोकमारोक्ष्यन् सुनीतिं जननीं ध्रुवः । अन्वस्मरदहं हित्वा नैनां यास्ये[2] त्रिविष्टपम् ॥ ३१ ॥

इति व्यवसितं तस्य व्यवधाय सुरोत्तमौ । दर्शयामासतुर्देवीं देवयानेन चाग्रगाम् ॥ ३२ ॥

तत्रतत्र प्रशंसद्भिः पथि वैमानिकैः सुरैः । अवकीर्यमाणो ददृशे कुसुमैः क्रमशो ग्रहान् ॥ ३३ ॥

त्रिलोकीं देवयानेन सोऽतिव्रज्य मुनीनपि । परस्ताद् यद् ध्रुवगतिं विष्णोः पदमथाभ्यगात् ॥ ३४ ॥

यद् भ्राजमानं स्वरुचैव सर्वतो लोकास्त्रयो ह्यनुविभ्राजन्त एते ।
न ते खला जन्तुषु ये त्वनुग्रहाद् व्रजन्ति भद्राणि चरन्ति येऽनिशम् ॥ ३५ ॥

शान्ताः समदृशः शुद्धाः सर्वभूतानुरञ्जनाः । यान्त्यञ्जसाऽच्युतपदमच्युतप्रियबान्धवाः ॥ ३६ ॥

इत्युत्तानपदः पुत्रो ध्रुवः कृष्णपरायणः । अभूत् त्रयाणां लोकानां चूडामणिरिवामलः ॥ ३७ ॥

गम्भीरवेगानिमिषां ज्योतिषां चक्रमर्पितम् । यस्मिन् भ्रमति कौरव्य मेढ्यामिव गवां गणः ॥ ३८ ॥

महिमानं विलोक्यास्य नारदो भगवान् ऋषिः । आतोद्यं वितुदन् श्लोकान् सत्रेऽगायत्[3] प्रचेतसाम् ॥

---

१. जगद्धातुर्विद्धि देवस्य २. अन्वस्मरन्न तां हित्वा दीनां यास्ये ❋

३. श्लोकानग्रेऽगायत् ❋

नारद उवाच

नूनं सुनीतेः पतिदेवतायास्तपःप्रभावस्य सुतस्य तां गतिम् ।
दृष्ट्वाऽभ्युपायानपि वेदवादिनो नैवाधिगन्तुं प्रभवन्ति किं नृपाः ॥ ४० ॥
यः पञ्चवर्षो गुरुदारवाक्शरैर्भिन्नेन यातो हृदयेन दूयता ।
वनं मदादेशकरोऽजितं प्रभुं जिगाय तद्भक्तिगुणैः पराजितम् ॥ ४१ ॥
कः क्षत्रबन्धुर्भुवि तस्याधिरूढमन्वारुरुक्षेदपि वर्षपूगैः ।
यः पञ्चवर्षो यदहोभिरल्पैः प्रसाद्य वैकुण्ठमवाप तत्पदम् ॥ ४२ ॥

मैत्रेय उवाच

एतत् तेऽभिहितं सर्वं यत् पृष्टोऽहमिह त्वया । ध्रुवस्योद्दामयशसश्चरितं सम्मतं सताम् ॥ ४३ ॥
धन्यं यशस्यमायुष्यं पुण्यं स्वस्त्ययनं महत् । स्वर्ग्यं ध्रौव्यं सौमनस्यं प्रशस्यमघमर्षणम् ॥ ४४ ॥
श्रुत्वैतच्छ्रद्धयाऽभीक्ष्णमच्युतप्रियचेष्टितम् । भवेद् भक्तिर्भगवति यया स्यात् क्लेशसङ्क्षयः ॥ ४५ ॥
महत्त्वमिच्छतां तीर्थं श्रोतुः श्रद्धादयो गुणाः । यत्र तेजस्तदिच्छूनां मानो यत्र मनस्विनाम् ॥ ४६ ॥
प्रयतः कीर्तयेत् प्रातः समवाये द्विजन्मनाम् । सायं च पुण्यश्लोकस्य ध्रुवस्य चरितं महत् ॥ ४७ ॥
पौर्णमास्यां सिनीवाल्यां द्वादश्यां श्रवणेऽथ वा । दिनक्षये व्यतीपाते सङ्क्रमेऽर्कदिनेऽपि वा ॥ ४८ ॥
श्रावयञ्छ्रद्दधानानां तीर्थपादपदाश्रयः । नेच्छंस्तत्रात्मनाऽऽत्मानं सन्तुष्ट इति सिद्ध्यति ॥ ४९ ॥
ज्ञानमज्ञाततत्त्वाय यो दद्यात् परमार्थवित् । कृपाळोर्दीननाथस्य देवास्तस्यानुगृह्णते ॥ ५० ॥

इदं मया तेऽभिहितं कुरूद्वह ध्रुवस्य विख्यातविशुद्धकर्मणः ।
हित्वाऽर्भकः क्रीडनकानि मातुर्गृहं च विष्णुं शरणं यो जगाम ॥ ५१ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे द्वादशोऽध्यायः ॥**

---

श्रीशुक उवाच

निशम्य कौषारविणोपवर्णितं ध्रुवस्य वैकुण्ठपदाधिरोहणम् ।
प्ररूढभावो भगवत्यधोक्षजे प्रष्टुं पुनस्तं विदुरः प्रचक्रमे ॥ १ ॥

विदुर उवाच

के ते प्रचेतसो नाम कस्यापत्यानि सुव्रत । कस्यान्ववाये प्रख्याताः कुत्र वा सत्रमासत ॥ २ ॥

मन्ये महाभागवतं नारदं देवदर्शनम् । येन प्रोक्तः क्रियायोगः परिचर्याविधिर्हरेः ॥ ३ ॥
स्वधर्मशीलैः पुरुषैर्भगवान् यज्ञपूरुषः । इज्यमानो भक्तिमता नारदेनेरितः किल ॥ ४ ॥
यास्ता देवर्षिणा तत्र वर्णिता भगवत्कथाः । मह्यं शुश्रूषवे ब्रह्मन् कार्त्स्न्येनाचष्टुमर्हसि ॥ ५ ॥

**मैत्रेय उवाच**

ध्रुवस्य चोत्कलः पुत्रः पितरि प्रस्थिते वनम् । सार्वभौमश्रियं नैच्छदधिराजासनं पितुः ॥ ६ ॥
स जन्मनोपशान्तात्मा निस्सङ्गः समदर्शनः। ददर्श लोके विततमात्मानं लोकमात्मनि ॥ ७ ॥
आत्मानं ब्रह्म निर्वाणं प्रत्यस्तमितविग्रहम् । अवबोधरसैकात्म्यमानन्दमनुसन्ततम् ॥ ८ ॥
अव्यवच्छिन्नयोगाग्निदग्धकर्ममलाशयः । स्वरूपमवरुन्धानो नान्यदस्मात् तदैक्षत ॥ ९ ॥
जडान्धबधिरोन्मत्तमूकाकृतिरतन्मतिः । लक्षितः पथि बालानां प्रशान्तार्चिरिवानलः ॥ १० ॥
मत्वा तं जडमुन्मत्तं कुलवृद्धाः समन्त्रिणः । वत्सरं भूपतिं चक्रुर्यवीयांसं भ्रमेः सुतम् ॥ ११ ॥
स्वर्वीथी वत्सरस्येष्टा भार्याऽसूत षडात्मजान् । पुष्पार्णं तिग्मकेतुं च इषमूर्जं वसुं जयम् ॥ १२ ॥
पुष्पार्णस्य प्रभा भार्या दोषा च द्वे बभूवतुः । प्रातर्मध्यन्दिनं सायमिति ह्यासन् प्रभासुताः ॥ १३ ॥
प्रदोषोऽथ निशीथश्च व्युष्टिर्दोषासुतास्त्रयः[१] । व्युष्टिः सुतं पुष्करिण्यां सर्वतेजसमादधे ॥ १४ ॥
स चक्षुः सुतमाकूत्यां पत्न्यां मनुमवाप ह । मनोरसूत महिषी वैराजा[२] नड्वला सुतान् ॥ १५ ॥
पुरुकुत्सं त्रितं द्युम्नं सत्यवन्तमृतव्रतम् । अग्निष्टोममतीरात्रं सुद्युम्नं शिबिमुल्मुकम् ॥ १६ ॥
उल्मुकोऽजनयत् पुत्रान् पुष्करिण्यां[३] षडुत्तमान् । अङ्गं सुनासमाख्यातिं[४] क्रतुमाङ्गिरसं गयम् ॥
सुनीथाऽङ्गस्य या पत्नी सुषुवे वेनमुद्धणम् । यद्दौःशील्यात् स राजर्षिर्निर्विण्णो निरगात् पुरात् ॥
यमङ्ग शेपुः कुपिता वाग्वज्रा मुनयः किल । गतासोस्तस्य भूयस्ते ममन्थुर्दक्षिणं करम् ॥ १९ ॥
अराजके तु भूलोके दस्युभिः पीडिताः प्रजाः । जातो नारायणांशेन पृथू राजा क्षितीश्वरः ॥ २० ॥

**विदुर उवाच**

तस्य शीलनिधेः साधोर्ब्रह्मण्यस्य महात्मनः । राज्ञः कथमभूद् दुष्टा प्रजा यद्विमना ययौ ॥ २१ ॥
किं चांहो वेनमुद्दिश्य ब्रह्मदण्डमयूयुजन् । दण्डव्रतधरे राज्ञि मुनयो धर्मकोविदाः ॥ २२ ॥
नावध्येयः प्रजापालः प्रजाभिरघवानपि । यदसौ लोकपालानां बिभर्त्योजः स्वतेजसा ॥ २३ ॥

---

१. व्युष्टः २. विरजान् ३. भृशकेश्याम् ❋ ४. अङ्गं सुमनसं स्वातिम् ❋

एतदाख्याहि मे ब्रह्मन् सुनीथात्मजचेष्टितम् । श्रद्दधानाय भक्ताय त्वं परावरवित्तमः ॥ २४ ॥

**मैत्रेय उवाच**

अङ्गोऽश्वमेधं राजर्षिराजहार महाक्रतुम् । नाजग्मुर्देवतास्तस्मिन्नाहूता ब्रह्मवादिभिः ॥ २५ ॥

त ऊचुर्विस्मितास्तात यजमानमथर्त्विजः । हवींषि हूयमानानि न ते गृह्णन्ति देवताः ॥ २६ ॥

राजन् हवींष्यदुष्टानि श्रद्धयाऽऽसादितानि ते । छन्दांस्ययातयामानि योजितानि धृतव्रतैः ॥ २७ ॥

न विदामेह देवानां हेळनं वयमण्वपि । यत्र गृह्णन्ति भागान् स्वान् ये देवाः कर्मसाक्षिणः ॥ २८ ॥

**मैत्रेय उवाच**

अङ्गो द्विजवचः श्रुत्वा यजमानः सुदुर्मनाः । तत् प्रष्टुं व्यसृजद् वाचं सदस्यांस्तदनुज्ञया ॥ २९ ॥

नागच्छन्त्याहुता देवा न गृह्णन्ति ग्रहानिह । सदसस्पतयो ब्रूत किमवद्यं मया कृतम् ॥ ३० ॥

**सदस्या ऊचुः**

नरदेवेह भवतो[१] नावद्यं हि मनाक् स्थितम् । अस्त्येकं प्राक्तनमघं यदिहेदृक् त्वमप्रजः ॥ ३१ ॥

तथा साधय भद्रं ते आत्मानं सप्रजं नृप । इष्टस्ते पुत्रकामस्य पुत्रं दास्यति यज्ञभुक् ॥ ३२ ॥

यथा[२] स्वभागधेयानि ग्रहीष्यन्ति दिवौकसः । यद् यज्ञपुरुषः साक्षादपत्याय हरिर्वृतः ॥ ३३ ॥

तांस्तान् कामान् हरिर्दद्याद् यान्यान् कामयते जनः । आराधितो यथैवैष तथा पुंसां फलोदयः ॥

इति व्यवसिता विप्रास्तस्य राज्ञः प्रजातये । पुरोडाशं निरवपन् शिपिविष्टाय विष्णवे ॥ ३५ ॥

तस्मात् पुरुष उत्तस्थौ हेममाल्यमलाम्बरः । हिरण्मयेन पात्रेण सिद्धमादाय पायसम् ॥ ३६ ॥

स विप्रानुमतो राजा गृहीत्वाऽञ्जलिनोदनम् । अवघ्राय मुदा युक्तः प्रादात् पत्न्या उदारधीः ॥

सा तत् पुंसवनं राज्ञी प्राश्यतौ पत्युरादधे । ततः काल उपावृत्ते कुमारं सुषुवेऽप्रजा ॥ ३८ ॥

स बाल एव पुरुषो मातामहमनुव्रतः । अधर्मांशोद्भवं मृत्युं[३] तेनाभवदधार्मिकः ॥ ३९ ॥

स शरासनमुद्यम्य मृगयुर्वनगोचरः । हन्त्यसाधुर्मृगान् दीनान् वेनोऽसावित्यरौज्जनः ॥ ४० ॥

आक्रीडे क्रीडतो बालान् वयस्यानतिदारुणः । प्रसँह्य निरनुक्रोशः पशुमारममारयत् ॥ ४१ ॥

तं विलक्ष्य खलं पुत्रं शासनैर्विविधैर्नृपः । यदा न शासितुं कल्यो[४] भृशमासीत् सुदुर्मनाः ॥ ४२ ॥

प्रायेणाभ्यर्चितो देवो येऽप्रजा गृहमेधिनः । कदपत्यकृतं दुःखं ये न विन्दन्ति दुर्भरम् ॥ ४३ ॥

यतः पापीयसी कीर्तिरधर्मश्च महान् नृणाम् । यतो विरोधः सर्वेषां यत आधिरनन्तकः ॥ ४४ ॥

---

१. भवता ❋ २. तथा ❋ ३. अधर्मांशोद्भवो मृत्युः ❋ ४. कल्पः

कस्तं प्रजापदेशं वै मोहबन्धनमात्मनः । पण्डितो बहुमन्येत यदर्थाः क्लेशदा गृहाः ॥ ४५ ॥

कदपत्यं वरं मन्ये सदपत्याच्छुचास्पदात्[1] । निर्विद्येत गृहान्मर्त्यो यत् क्लेशनिवहातुरः ॥ ४६ ॥

एवं स निर्विण्णमना नृपो गृहान्निशीथ उत्थाय महोदयोदयात् ।
अलब्धनिद्रोऽनुपलक्षितो नृभिर्हित्वा गतो वेनशुचा प्रतप्तः[2] ॥ ४७ ॥

विज्ञाय निर्विद्य गतं पतिं प्रजाः पुरोहितामात्यसुहृद्गणादयः ।
विचिक्युरुर्व्यामतिशोककातरा यथा निगूढं पुरुषं कुयोगिनः ॥ ४८ ॥

अलक्षयन्तः पदवीं प्रजापतेर्हतोद्यमाः प्रत्युपसृत्य ते पुरीम् ।
ऋषीन् समेतानभिवन्द्य साश्रवो[3] न्यवेदयन् पौरव भर्तृविप्लवम् ॥ ४९ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे त्रयोदशोऽध्यायः ॥**

---

**मैत्रेय उवाच**

भृग्वादयस्तु मुनयो[4] लोकानां क्षेमदर्शिनः । गोप्तर्यसति वै नृणां पश्यन्तः पशुसाम्यताम् ॥ १ ॥

वीर मातरमाहूय सुनीथां ब्रह्मवादिनः । प्रकृत्याऽसम्मतं वेनमभ्यषिञ्चन् पतिं भुवः ॥ २ ॥

श्रुत्वा नृपासनगतं वेनमत्युग्रशासनम् । निलिल्युर्दस्यवः सद्यः सर्पत्रस्ता इवाखवः ॥ ३ ॥

स आरूढनृपस्थान उन्नद्धोऽष्टविभूतिभिः । अवमेने महाभागान् स्तब्धः सम्भावितः स्वयम् ॥ ४ ॥

एवं मदान्ध उत्सिक्तो निरङ्कुश इव द्विपः । पर्यटन् रथमास्थाय कम्पयन्निव रोदसी ॥ ५ ॥

न यष्टव्यं न दातव्यं न होतव्यं द्विजाः क्वचित् । इति न्यवारयद् धर्मं भेरीघोषेण सर्वतः ॥ ६ ॥

वेनस्यावेक्ष्य मुनयो दुर्वृत्तस्य विचेष्टितम् । विमृश्य लोकव्यसनं कृपयोचुः स्म सत्रिणः ॥ ७ ॥

अहो उभयतः प्राप्तं लोकस्य व्यसनं महत् । दारुण्युभयतो दीप्त इव तस्करपालयोः ॥ ८ ॥

अराजकभयादेष कृतो राजाऽतदर्हणः । ततोऽप्यासीद् भयं त्वद्य कथं स्यात् स्वस्ति देहिनाम् ॥
अहेरिव पयःपोषः[5] पोषकस्याप्यनर्थकृत् ॥ १० ॥

वेनः प्रकृत्यैव खलः सुनीथागर्भसम्भवः । निरूपितः प्रजापालः स जिघांसति वै प्रजाः ॥ ११ ॥

तथाऽपि सान्त्वयामैनं माऽस्मांस्तत्पातकं स्पृशेत् । तद्विद्वद्भिरसद्वृत्तो[6] वेनोऽस्माभिः कृतो नृपः ॥

---

१. शुचां पदात्/शुचापदात्    २. गतो वेनसुवं प्रसुप्ताम्    ३. सास्रवः ❋
४. ऋषयः ❋    ५. पयःपानम्    ६. यद् विद्वद्भिः.... ❋

सान्त्वितो यदि नो वाचं न ग्रहीष्यत्यधर्मकृत् । लोकधिक्कारसन्दग्धं दहिष्यामः स्वतेजसा ॥ १३ ॥
एवमध्यवसायैनं मुनयो गूढमन्यवः । उपव्रज्याब्रुवन् वेनं सान्त्वयित्वाऽथ सामभिः ॥ १४ ॥
नृपवर्य निबोधेदं यद्धि विज्ञापयाम भोः । आयुःश्रीबलकीर्तीनां तव तात विवर्धनम् ॥ १५ ॥
धर्म आचरितः पुंसां वाङ्मनःकायबुद्धिभिः । लोकान् विशोकान् वितरत्यथानन्त्यमसङ्गिनाम् ॥
स ते मा विनशेद् वीर प्रजानां क्षेमलक्षणः । यस्मिन् विनष्टे नृपतिरैश्वर्यादवरोहति ॥ १७ ॥
राजन्नसाध्वमात्येभ्यश्चोरादिभ्यः[1] प्रजा नृपः । रक्षन् यथा बलिं गृह्णन्निह प्रेत्य च मोदते ॥ १८ ॥
यस्य राष्ट्रे पुरे चैव भगवान् यज्ञपूरुषः । इज्यते स्वेन धर्मेण जनैर्वर्णाश्रमात्मकैः ॥ १९ ॥
तस्य राज्ञो महाराज भगवान् भूतभावनः । परितुष्यति विश्वात्मा तिष्ठतो निजशासने ॥ २० ॥
तस्मिंस्तुष्टे किमप्राप्यं जगतामीश्वरेश्वरे । लोकाः सपाला ह्येतस्मै हरन्ति बलिमादृताः ॥ २१ ॥

तं सर्वलोकामरयज्ञसङ्ग्रहं त्रयीमयं द्रव्यमयं तपोमयम् ।
यज्ञैर्विचित्रैर्यजतो भवाय ते राजन् स्वदेशाननुरोद्धुमर्हसि ॥ २२ ॥
यज्ञेन युष्मद्विषये द्विजातिभिर्वितायमानेन सुराः कला हरेः ।
स्विष्टाः सुतुष्टाः प्रदिशन्ति वाञ्छितं तद्धेळनं नार्हसि वीर चेष्टितुम् ॥ २३ ॥

**वेन उवाच**

बालिशा बत यूयं वा अधर्मे धर्ममानिनः । ये वृत्तिदं पतिं हित्वा जारं पतिमुपासते ॥ २४ ॥
अवजानन्ति ये मूढा नृपरूपिणमीश्वरम् । नानुविन्दन्ति ते भद्रमिह लोके परत्र च ॥ २५ ॥
को यज्ञपुरुषो नाम यत्र वो भक्तिरीदृशी । भर्तृस्नेहविदूराणां यथा जारे कुयोषिताम् ॥ २६ ॥
विष्णुर्विरिञ्चो गिरिश इन्द्रो वायुर्यमो रविः । पर्जन्यो धनदः सोमः क्षितिरग्निरपां पतिः ॥ २७ ॥
एते चान्ये च विबुधाः प्रभवो वरशापयोः । देहे भवन्ति नृपतेः सर्वदेवमयो नृपः ॥ २८ ॥
तस्मान्मां कर्मभिर्विप्रा यजध्वं गतमत्सराः । बलिं च मह्यं हरत मत्तोऽन्यः कोऽग्रभुक् पुमान् ॥

**मैत्रेय उवाच**

इत्थं विपर्ययमतिः पापीयानुत्पथं गतः । अनुनीयमानस्तद्याच्ञां न चक्रे भ्रष्टमङ्गलः ॥ ३० ॥
इति तेऽसत्कृतास्तेन द्विजाः पण्डितमानिना । भग्नायां हव्ययाच्ञायां तस्मै विदुर चुक्रुधुः ॥ ३१ ॥

**ऋषय ऊचुः**

हन्यतां हन्यतामेष पापः प्रकृतिदारुणः । जीवन् जगदसावाशु कुरुते भस्मसाद् ध्रुवम् ॥ ३२ ॥

१. राजभ्योऽसाध्वमात्येभ्यः........ ❋

नायमर्हत्यसद्वृत्तो नरदेववरासनम् । योऽविद् यज्ञपतिं विष्णुं विनिन्दत्यनपत्रपः ॥ ३३ ॥
को वैनं परिचक्षीत वेनमेकमृतेऽशुभम् । प्राप्त ईदृशमैश्वर्यं यदनुग्रहभाजनम् ॥ ३४ ॥

**मैत्रेय उवाच**

इत्थं व्यवसिता हन्तुमृषयो रूढमन्यवः । निजघ्नुर्हुङ्कृतैर्वेनं हतमच्युतनिन्दया ॥ ३५ ॥
ऋषिभिः स्वाश्रमपदं[१] गते पुत्रकळेबरम् । सुनीथा पालयामास विद्यायोगेन शोचती ॥ ३६ ॥
एकदा मुनयस्ते तु सरयूसलिलाप्लुताः[२] । हुत्वाऽग्निं सत्कथाश्चक्रुरुपविष्टाः सरित्तटे ॥ ३७ ॥
वीक्ष्योत्थितान् महोत्पातानाहुर्लोकभयङ्करान् । अप्यभद्रमनाथाया दस्युभ्यो न भवेद् भुवः ॥ ३८ ॥
एवं ब्रुवत्सु ऋषिषु धावतां सर्वतो दिशम् । पांसुः समुत्थितो भूमेश्चोराणां वसु लुम्पताम्[३] ॥ ३९ ॥
तदुपद्रवमाज्ञाय लोकस्य वसु लुम्पताम् । भर्तर्युपरते तस्मिन्नन्योन्यं च जिघांसताम् ॥ ४० ॥
चोरप्रायं जनपदं हीनसत्त्वमराजकम् । लोका नावारयञ्छक्ता अपि तद्दोषदर्शिनः ॥ ४१ ॥
ब्राह्मणः समदृक् शान्तो दीनानां समुपेक्षकः । स्रवते ब्रह्म तस्यापि भिन्नभाण्डात् पयो यथा ॥
नाङ्गस्य वंशो राजर्षेरेवं संस्थातुमर्हति । अमोघवीर्या हि नृपा वंशेऽस्मिन् केशवाश्रयाः ॥ ४३ ॥
विनिश्चित्यैवमृषयो विपन्नस्य महीपतेः । ममन्थुरूरुं तरसा[४] तत्रासीद् बाहुको नरः ॥ ४४ ॥
काककृष्णोऽतिह्रस्वाङ्गो ह्रस्वबाहुर्महाहनुः । ह्रस्वपान्निम्ननासाग्रो रक्ताक्षस्ताम्रमूर्धजः ॥ ४५ ॥
तं तु तेऽवनतं दीनं किं करोमीति वादिनम् । निषीदेत्यब्रुवंस्तात स निषादस्ततोऽभवत् ॥ ४६ ॥
तस्य वंश्यास्तु नैषादा गिरिकाननगोचराः[५] । योऽपाहरज्जायमानो वेनकल्मषमुल्बणम् ॥ ४७ ॥
अथ तस्य पुनर्विप्रैर्विपन्नस्य[६] महीपतेः । बाहुभ्यां मथ्यमानाभ्यां मिथुनं समपद्यत ॥ ४८ ॥
तद् दृष्ट्वा मिथुनं जातमृषयो ब्रह्मवादिनः । ऊचुः परमसन्तुष्टा विदित्वा भगवत्कलाम् ॥ ४९ ॥

**ऋषय ऊचुः**

एष विष्णोर्भगवतः कला भुवनपालनी[७] । इयं तु लक्ष्मीः सम्भूतिः पुरुषस्यानपायिनी ॥ ५० ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे चतुर्दशोऽध्यायः ॥**

---

१. ऋषिभिश्चाश्रमपदम् ❋ २. सरस्वत्सलिलाप्लुताः ❋ ३. चोराणामभिलुम्पताम् ❋
४. तपसा ❋ ५. नैषादाः किराता वनगोचराः ❋ ६. विप्रैरपुत्रस्य ❋ ७. ...पालिनी

**विप्रा ऊचुः**

अत्र तु प्रथमो राज्ञां पुमान् प्रथयिता यशः । पृथुर्नाम महाराजा भविष्यति पृथुश्रवाः ॥ १ ॥

इयं च देवी सुदती गुणभूषणभूषिता[१] । अर्चिर्नाम वरारोहा पृथुमेवावरुन्धती ॥ २ ॥

एष साक्षाद्धरेरंशो जातो लोकरिरक्षया । इयं च परमा[२] हि श्रीरनुजज्ञेऽनपायिनी ॥ ३ ॥

**मैत्रेय उवाच**

प्रशंसन्ति स्म तं विप्रा गन्धर्वप्रवरा जगुः । मुमुचुः सुमनोधाराः सिद्धा नृत्यन्ति तत्स्त्रियः[३] ॥ ४ ॥

शङ्खतूर्यमृदङ्गाद्या नेदुर्दुन्दुभयो दिवि । तत्र सर्व उपाजग्मुर्देवर्षिपितॄणां गणाः ॥ ५ ॥

ब्रह्मा जगद्गुरुर्देवः सहागत्य सुरेश्वरैः । वैन्यस्य दक्षिणे हस्ते दृष्ट्वा चिह्नं गदाभृतः ॥ ६ ॥

पादयोररविन्दं च तस्मिन् मेने[४] हरेः कलाम् । यस्याप्रतिहतं चक्रमंशस्य परमेष्ठिनः[५] ॥ ७ ॥

तस्याभिषेक आरब्धे ब्राह्मणैर्ब्रह्मवादिभिः । आभिषेचनिकान्यस्मै आजह्रुः सर्वतो जनाः ॥ ८ ॥

सरित्समुद्रा गिरयो नागा गावः खगा मृगाः । द्यौः क्षितिः सर्वभूतानि समाजह्रुरुपायनम् ॥ ९ ॥

सोऽभिषिक्तो महाराजः सुवासाः साध्वलङ्कृतः । पत्न्याऽर्चिषाऽलङ्कृतया विरेजेऽग्निरिवापरः ॥

तस्मै जहार धनदो हैमं वीर वरासनम् । वरुणः सलिलस्रावमातपत्रं शशिप्रभम् ॥ ११ ॥

वायुश्च बालव्यजने धर्मः कीर्तिमयीं स्रजम् । इन्द्रः किरीटमुत्कृष्टं दण्डं संयमनं यमः ॥ १२ ॥

ब्रह्मा ब्रह्ममयं[६] वर्म भारती हारमुत्तमम् । हरिः सुदर्शनं चक्रं तत्पत्न्यव्याहतां श्रियम् ॥ १३ ॥

दशचन्द्रमसिं रुद्रः शतचन्द्रं तथाऽम्बिका । सोमोऽमृतमयानश्वांस्त्वष्टा रूपाश्रयं रथम् ॥ १४ ॥

अग्निराजगवं चापं सूर्यो रश्मिमयानिषून् । भूः पादुके योगमये द्यौः पुष्पबलिमन्वहम् ॥ १५ ॥

नाट्यं सुगीतं वादित्रमन्तर्धानं च खेचराः । ऋषयश्चाशिषः सत्याः समुद्रः शङ्खमात्मजम् ॥ १६ ॥

सिन्धवः पर्वता नद्यो रथवीथीर्महात्मनः । सूतोऽथ मागधो वन्दी[७] संस्तोतुमुपतस्थिरे ॥ १७ ॥

स्तावकांस्तानभिप्रेत्य पृथुर्वैन्यः प्रतापवान् । मेघनिर्ह्रादया वाचा प्रहसन्निदमब्रवीत् ॥ १८ ॥

**पृथुरुवाच**

हे सूत हे मागध सौम्य वन्दिन् लोकेऽधुनाऽस्पष्टगुणस्य मे स्यात् ।
किमाश्रयो वः[८] स्तव एष योज्यतां मा मय्यभूवन् वितथा गिरो वः ॥ १९ ॥

---

१. गुणभूषणभूषणा ❋ २. तत्परा ३. स्वःस्त्रियः ❋ ४. तं वै मेने ❋
५. अंशः स परमेष्ठिनः ❋ ६. वेदमयम् ७. बन्दी । एवमग्रेऽपि । ८. मे

तस्मात् परोक्षेऽस्मदुपाश्रितान्यलं करिष्यथ स्तोत्रमपीच्यवाचः ।
सत्युत्तमश्लोकगुणानुवादे जुगुप्सितं न स्तवयन्ति सभ्याः ॥ २० ॥
महद्गुणानात्मनि कर्तुमिच्छन् कः स्तावकैः स्तावयते सतोऽपि ।
स वै सुतोष्यैरतिविप्रलब्धो[1] जनापहासं कुमतिर्न वेद ॥ २१ ॥
प्रभवो ह्यात्मनः स्तोत्रं जुगुप्सन्त्यपि विश्रुताः । ह्रीमन्तः परमोदारा पौरुषं चाविगर्हितम्[2] ॥ २२ ॥
वयं त्वविदिता लोके सूताद्यापि वरीमभिः । कर्मभिः कथमात्मानं गाययिष्याम[3] बालवत् ॥ २३ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे पञ्चदशोऽध्यायः ॥**

---

**मैत्रेय उवाच**

इति ब्रुवाणं नृपतिं गायका मुनिचोदिताः । तुष्टुवुस्तुष्टमनसस्तद्वागमृतसेवया ॥ १ ॥

**सूत उवाच**

नालं वयं त्वन्महिमानुवर्णने यो देवदेवोऽवततार मायया ।
वेनाङ्गजातस्य च पौरुषाणि ते वाचस्पतीनामपि बभ्रमुर्धियः ॥ २ ॥
अथाप्युदारश्रवसः पृथोर्हरेः कलावतारस्य कथामृतादृताः ।
यथोपदेशं मुनिभिः प्रचोदिताः श्लाघ्यानि कर्माणि वयं वितन्महे ॥ ३ ॥
एष धर्मभृतां श्रेष्ठो लोकान् धर्मेऽनुवर्तयन् । गोप्ता च धर्मसेतूनां शास्ता तत्परिपन्थिनाम् ॥ ४ ॥
एष वै लोकपालानां बिभर्त्येकस्तनौ तनूः । कालेकाले यथाभागं लोकयोरुभयोर्हिते ॥ ५ ॥
वसु काल उपादत्ते काले चायं विमुञ्चति । समः सर्वेषु भूतेषु प्रतपन् सूर्यवद् विभुः ॥ ६ ॥
तितिक्षत्यक्रमं वैन्य उपर्याक्रमतामपि । भूतानां करुणः शश्वदार्तानां क्षितिवृत्तिमान् ॥ ७ ॥
देवेऽवर्षत्यसौ देवो नरदेववपुर्हरिः । कृच्छ्रप्राणाः प्रजा ह्येष रक्षिष्यत्यञ्जसेन्द्रवत् ॥ ८ ॥
आप्याययत्यसौ लोकं वदनामृतमूर्तिना । सानुरागावलोकेन विशदस्मितचारुणा ॥ ९ ॥
अव्यक्तवर्त्मैष विशुद्धकार्यो गम्भीरचेता उपगुप्तवित्तः ।
अनन्तमाहात्म्यगुणैकधामा पृथुः प्रचेता इव संवृतात्मा ॥ १० ॥

---

१. सुतोष्यैरिह विप्रलब्धः/स्वतोष्यैरतिविप्रलब्धः ❋ २. वा विगर्हितम् ३. गापयिष्याम

दुरासदो दुर्विषह आसन्नोऽपि विदूरवत् । नैवाभिभवितुं शक्यो वेनारण्युत्थितोऽनलः ॥ ११ ॥
अन्तर्बहिश्च भूतानां पश्यन् कर्माणि चारणैः । उदासीन इवाध्यक्षो वायुरात्मेव देहिनाम् ॥ १२ ॥
नादण्ड्यं दण्डयत्येष सुतमात्मद्विषामपि । दण्डयत्यात्मजमपि दण्ड्यं धर्मपथे स्थितः ॥ १३ ॥
अस्याप्रतिहतं चक्रं पृथोरामानसाचलात् । वर्तते भगवानर्को यावत् तपति गोगणैः ॥ १४ ॥
रञ्जयिष्यति यल्लोकमयमात्मविचेष्टितैः । अथामुमाहू राजानं मनोरञ्जनकैः प्रजाः ॥ १५ ॥
दृढव्रतः सत्यसन्धो ब्रह्मण्यो वृद्धसेवकः । शरण्यः सर्वभूतानां मानदो दीनवत्सलः ॥ १६ ॥
मातृभक्तिः परस्त्रीषु पत्न्याः स्मर इवापरः[1] । प्रजासु पितृवत् स्निग्धः किङ्करो ब्रह्मवादिनाम् ॥
देहिनामात्मवत् प्रेष्ठः सुहृदानन्दवर्धनः । मुक्तसङ्गप्रसङ्गोऽयं दण्डपाणिरसाधुषु ॥ १८ ॥
एष दोग्धा मही वीरो गां सतीमोजसौषधीः । समां करिष्यते चेमां धनुष्कोटचा समन्ततः ॥ १९ ॥

अयं तु साक्षाद्भगवांस्त्र्यधीशः कूटस्थ आत्मा कलयाऽवतीर्णः ।
यस्मिन्नविद्यारचितं निरर्थकं पश्यन्ति नानात्वमिव प्रतीतम् ॥ २० ॥
अयं भुवो मण्डलमोदयाद्रेर्गोप्तैकवीरो नरदेवनाथः ।
आस्थाय जैत्रं रथमात्तचापः पर्यस्यते दक्षिणतो यथाऽर्कः ॥ २१ ॥
तस्मै नृपालाः किल तत्रतत्र बलिं हरिष्यन्ति सलोकपालाः ।
मंस्यन्ति एषां स्त्रिय आदिराजं चक्रायुधं तद्यश उद्धरन्त्यः ॥ २२ ॥
अयं महीं गां दुदुहेऽधिराजः प्रजापतिर्वृत्तिकरः प्रजानाम् ।
यो लीलयाऽद्रीन् स्वशरासकोटचा भिन्दन् समां गामकरोद् यथेन्द्रः ॥ २३ ॥
विष्फूर्जयन्नाजगवं धनुः स्वयं यदाऽचरत् क्ष्मामविषह्य आजौ ।
तदा निलिल्युर्दिशिदिश्यसन्तो लाङ्गूलमुद्यम्य यथा मृगेन्द्रः ॥ २४ ॥
एषोऽश्वमेधाञ्छतमाजहार सरस्वती प्रादुरभूद्य यत्र ।
अहार्षीद् यस्य हयं पुरन्दरः शतक्रतुश्चरमे वर्तमाने ॥ २५ ॥
एष स्वसद्मोपवने समेत्य सनत्कुमारं भगवन्तमेकम् ।
आराध्य भक्त्याऽलभतामलं तज्ज्ञानं यतो ब्रह्म परं विदन्ति ॥ २६ ॥

तत्रतत्र गिरस्तास्ता इति विश्रुतविक्रमः । श्रोष्यत्यात्माश्रिता गाथाः[2] पृथुः पृथुपराक्रमः ॥ २७ ॥

---

१. पत्न्या अर्धमिवात्मनः ❋ २. गाथाः

दिशो विजित्याप्रतिरुद्धचक्रः स्वतेजसोत्पाटितलोकशल्यः ।
एवं सुरेन्द्रैरनुगीयमानो महानुभावो भविता पतिर्भुवः ॥ २८ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे षोडशोऽध्यायः ॥**

---

**मैत्रेय उवाच**

एवं स भगवान् वैन्यः ख्यापितो गुणकर्मभिः । छन्दयामास तान् कामैः प्रतिपूज्याभिनन्द्य च ॥ १ ॥
ब्राह्मणप्रमुखान् वर्णान् भृत्यामात्यपुरोधसः । पौरान् जानपदान् श्रेणीः प्रकृतीः समपूजयत् ॥ २ ॥

**विदुर उवाच**

कस्माद् दधार गोरूपं धरित्री बहुरूपिणी । यां दुदोह पृथुस्तत्र को वत्सो दोहनं च किम् ॥ ३ ॥
प्रकृत्या विषमा देवी कृता तेन समा कथम् । तस्य मेध्यं हयं देवः कस्य हेतोरपाहरत् ॥ ४ ॥
सनत्कुमाराद् भगवतो ब्रह्मन् ब्रह्मविदुत्तमात् । लब्ध्वा ज्ञानं सविज्ञानं राजर्षिः कां गतिं गतः ॥ ५ ॥
यच्चान्यदपि कृष्णस्य भवान् भगवतः[1] प्रभोः । श्रवः सुश्रवसः पुण्यं पूर्वदेहकथाश्रयम् ॥ ६ ॥
भक्ताय मेऽनुरक्ताय तव चाधोक्षजस्य च । वक्तुमर्हति[2] योऽदुह्यद् वैन्यरूपेण गामिमाम् ॥ ७ ॥

**श्रीशुक उवाच**

चोदितो विदुरेणैवं वासुदेवकथां प्रति । प्रशस्य तं प्रीतमना मैत्रेयः प्रत्यभाषत ॥ ८ ॥

**मैत्रेय उवाच**

यदाऽभिषिक्तः पृथुरङ्ग विप्रैरामन्त्रितो जनतायाश्च पालः ।
प्रजा निरन्ने क्षितिपृष्ठ एत्य क्षुत्क्षामदेहाः पतिमभ्यवोचन् ॥ ९ ॥

**प्रजा ऊचुः**

वयं राजन् जाठरेणाभितप्ता यथाऽग्निना कोटरस्थेन वृक्षाः ।
त्वामद्य याताः शरणं शरण्यं यः शाधि नो वृत्तिकरः पतिर्नः ॥ १० ॥
तन्नो भवानर्हति रातवेऽन्नं क्षुधाऽर्दितानां नरदेवदेव ।
यावन्न नङ्क्ष्यामह उज्झितान्ना वार्तापतिस्त्वं किल लोकपालः ॥ ११ ॥

---

१. ब्रह्मन् भगवतः २. वक्तुमर्हसि

### मैत्रेय उवाच

पृथुः प्रजानां करुणं निशम्य परिदेवितम् । दीर्घं दध्यौ कुरुश्रेष्ठ निमित्तं सोऽन्वपद्यत ॥ १२ ॥
इति व्यवसितो बुद्ध्या प्रगृहीतशरासनः । सन्दधे विशिखं भूमेः क्रुद्धस्त्रिपुरहा यथा ॥ १३ ॥
प्रवेपमाना धरणी निशाम्योदायुधं च तम् । गौः सत्यपाद्रवद् भीता मृगीव मृगयोर्द्रुतम् ॥ १४ ॥
तामेवान्वव्रजद् वैन्यः कुपितोऽत्यरुणेक्षणः । शरं धनुषि सन्धाय यत्रयत्र पलायति ॥ १५ ॥
सा दिशो विदिशो देवी रोदसी चान्तरं तयोः । धावन्ती तत्रतत्रैनं ददर्शानूद्यतायुधम् ॥ १६ ॥
लोके नाविन्दत त्राणं वैन्यान्मृत्योरिव प्रजाः । त्रस्ता तदा निववृते हृदयेन विदूयता ॥ १७ ॥
उवाचाथ महाभागं[1] धर्मज्ञापन्नवत्सल । त्राहि मामपि भूतानां पालनेऽवस्थितो भवान् ॥ १८ ॥
स त्वं जिघांससे कस्माद् दीनामकृतकिल्बिषाम् । अहनिष्यत् कथं योषां धर्मज्ञ इति यो मतः ॥
प्रहरन्ति न वै स्त्रीषु कृतागःस्वपि जन्तवः । किं पुनस्त्वद्विधा राजन् करुणा दीनवत्सलाः ॥ २० ॥
मां निहत्याजरां[2] नावं यत्र विश्वं प्रतिष्ठितम् । आत्मानं च प्रजाश्चेमाः कथमम्भसि धास्यसि॥२१॥

### पृथुरुवाच

वसुधे त्वां हनिष्यामि मच्छासनपराङ्मुखीम् । भागं बर्हिषि या वृङ्क्ते न तनोषि च नो वसु॥ २२ ॥
यवसं जग्ध्यनुदिनं नैव दोग्ध्यौधसं पयः । तस्यामेवं हि दुष्टायां दण्डो नात्र न शस्यते ॥ २३ ॥
त्वं खल्वौषधिबीजानि प्राक् सृष्टानि स्वयम्भुवा । न मुञ्चस्यात्मरुद्धानि मामवज्ञाय मन्दधीः ॥
अमूषां[3] क्षुत्परीतानामार्तानां परिदेवितम् । शमयिष्यामि मद्बाणैर्भिन्नायास्तव मेदसा ॥ २५ ॥
पुमान् योषिदुत क्लीब आत्मसम्भावनोऽधमः । भूतेषु निरनुक्रोशो नृपाणां तद्वधो वरः ॥ २६ ॥
त्वां स्तब्धां दुर्मदां नीत्वा मायागां तिलशः शरैः । आत्मयोगबलेनेमा धारयिष्याम्यहं प्रजाः ॥
एवं मन्युमयीं मूर्तिं कृतान्तमिव बिभ्रतम् । प्रणता प्राञ्जलिः प्राह मही सञ्जातवेपथुः ॥ २८ ॥

### धरण्युवाच

नमः परस्मै पुरुषाय मायया विन्यस्तनानातनवे गुणात्मने ।
नमः स्वरूपानुभवेन निर्धुतद्रव्यक्रियाकारकविभ्रमोर्मये ॥ २९ ॥
येनाहमात्मीयतनुर्विनिर्मिता धात्रा यतोऽयं गुणसर्गसङ्ग्रहः ।
स एव मां हन्तुमुदायुधः स्वराडुपस्थितोऽन्यं शरणं कमाश्रये ॥ ३० ॥

---

१. महाभाग २. मां निपात्याजराम् ❋ ३. अमीषाम् ❋

य एतदादावसृजच्चराचरं स्वमाययाऽऽत्माश्रययाऽवितर्क्यया ।
तयैव सोऽयं किल[1] गोप्तुमुद्यतः कथं नु मां धर्मपरो जिघांसति ॥ ३१ ॥
नूनं तवेशस्य समीहितं जनैः स्वमायया दुर्जययाऽकृतात्मभिः ।
न लक्ष्यते यस्त्वकरोदकारयद् योऽनेक एकः परतः स ईश्वरः ॥ ३२ ॥
सर्गादि योऽस्यानुरुणद्धि शक्तिभिर्द्रव्यक्रियाकारकचेतनात्मभिः ।
तस्मै समुन्नद्धविरुद्धशक्तये नमः परस्मै पुरुषाय वेधसे ॥ ३३ ॥
स वै भवानात्मविनिर्मितं जगद् भूतेन्द्रियान्तःकरणात्मकं विभो ।
संस्थापयिष्यन्नज मां रसातळादभ्युज्जहाराम्भस आदिसूकरः ॥ ३४ ॥
अपामुपस्थे मयि नाव्यवस्थिताः प्रजा भवानद्य रिरक्षिषुः किल ।
स वीरमूर्तिः समभूद् धराधरो यो मां पयस्युग्रशरो जिघांसति ॥ ३५ ॥
नूनं जनैरीहितमीश्वराणामस्मद्विधैस्तद्गुणसर्गमायया ।
न ज्ञायते मोहितचित्तवृत्तिभिस्तेभ्यो नमो वीरयशस्करेभ्यः ॥ ३६ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे सप्तदशोऽध्यायः ॥**

---

**मैत्रेय उवाच**

इत्थं पृथुमभिष्टूय रुषा प्रस्फुरिताधरम् । पुनराहावनिर्भीता संस्तभ्यात्मानमात्मना ॥ १ ॥
सन्नियच्छ विभो मन्युं निबोध श्रावितं च मे । सर्वतः सारमादत्ते यथा मधुकरो बुधः ॥ २ ॥
अस्मिँल्लोकेऽथवाऽमुष्मिन् मुनिभिस्तत्त्वदर्शिभिः । दृष्टा योगाः प्रयुक्ताश्च पुंसां श्रेयःप्रसिद्धये ॥
तानातिष्ठति यः सम्यगुपायान् पूर्वदर्शितान् । अपरः श्रद्धयोपेत उपायान् विन्दतेऽञ्जसा ॥ ४ ॥
ताननादृत्य योऽविद्वानर्थानारभते स्वयम् । तस्य व्यभिचरन्त्यर्थाः प्रारब्धाश्च पुनःपुनः ॥ ५ ॥
पुरा सृष्टा ह्योषधयो ब्रह्मणा य विशांपते । भुज्यमाना मया दृष्टा असद्भिरधृतव्रतैः ॥ ६ ॥
अपालिता नावृतास्ता भवद्भिर्लोकपालकैः । चौरीभूतेऽथ[2] लोकेऽहं यज्ञार्थेऽग्रसमौषधीः ॥ ७ ॥
नूनं ता वीरुधः क्षीणा मयि कालेन भूयसा । तत्र दृष्टेन योगेन भवानादातुमर्हति ॥ ८ ॥

---

१. स एव चायं किल ❋ २. चोरीभूतेऽथ

वत्सं कल्पय मे वीर येनाहं वत्सला तव । धोक्ष्ये क्षीरमयान् कामाननुरूपं च दोहनम् ॥ ९ ॥
दोग्धारं च महाबाहो भूतानां भूतभावन । अन्नमीप्सितमोजस्वद् भगवान् वाञ्छते यदि ॥ १० ॥
समां च कुरु मां राजन् देववृष्टं यथा पयः । अपर्तावपि भद्रं ते उपावर्तेत मां विभो ॥ ११ ॥
इति प्रियहितं वाक्यं भूमेरादाय भूपतिः । तथा चकार सर्वत्र सारमाददते बुधाः ॥ १२ ॥
वत्सं कृत्वा मनुं पाणावदुहत् स्वयमौषधीः । ततोऽपरे यथाकामं दुदुहुः पृथुभाविताम् ॥ १३ ॥
ऋषयो दुदुहुर्देवीमिन्द्रियेष्वथ सत्तम । वत्सं बृहस्पतिं कृत्वा पयश्छन्दोमयं शुचि ॥ १४ ॥
कृत्वा वत्सं सुरगणा इन्द्रं सोममदूदुहन् । हिरण्मयेन पात्रेण वीर्यमोजो बलं पयः ॥ १५ ॥
दैतेया दानवा वत्सं प्रह्लादमसुरर्षभम् । विधाय दुदुहुः क्षीरमयःपात्रे सुरासवम् ॥ १६ ॥
गन्धर्वाप्सरसोऽधुक्षन् पात्रे पद्ममये पयः । वत्सं विश्वावसुं कृत्वा गान्धर्वं मधु सौभगम् ॥ १७ ॥
वत्सेन पितरोऽर्यम्णा कव्यं क्षीरमधुक्षत । आमपात्रे महाभाग श्रद्धया श्राद्धदेवताः ॥ १८ ॥
प्रकल्प्य वत्सं कपिलं सिद्धाः सङ्कल्पनामयीम् । सिद्धिं नभसि विद्यां च ये च विद्याधरादयः॥ १९ ॥
अन्ये च मायिनो मायामन्तर्धानगतात्मना । मयं प्रकल्प्य वत्सं ते दुदुहुर्धारणामयीम् ॥ २० ॥
यक्षरक्षांसि भूतानि पिशाचाः पिशिताशनाः । भूतेशवत्सा दुदुहुः कपाले क्षतजासवम् ॥ २१ ॥
तथाऽहयो दन्दशूकाः सर्पा नागाश्च तक्षकम् । वत्सं विधाय दुदुहुर्बिलपात्रे विषं पयः ॥ २२ ॥
पशवो यवसं क्षीरं वत्सं कृत्वा च गोवृषम् । अरण्यपात्रे चाधुक्षन् मृगेन्द्रेण च दंष्ट्रिणः ॥ २३ ॥
क्रव्यादाः प्राणिनः क्रव्यं दुदुहुः स्वकळेबरे । सुपर्णवत्सा विहगाश्चरं चाचरमेव च ॥ २४ ॥
वटवत्सा वनस्पतयः[1] पृथग्रसमयं पयः । गिरयो हिमवद्वत्साः नानाधातून् स्वसानुषु ॥ २५ ॥
सर्वे स्वमुख्यवत्सेन स्वेस्वे पात्रे पृथक् पयः । सर्वकामदुघां पृथ्वीं दुदुहुः पृथुभाविताम् ॥ २६ ॥
एवं पृथ्वादयः पृथ्वीमन्नादाः[2] स्वन्नमात्मनः । दोहवत्सादिभेदेन क्षीरभेदं कुरूद्वह ॥ २७ ॥
ततो महीपतिः प्रीतः सर्वकामदुघां महीम् । दुहितृत्वे चकारेमां प्रेम्णा दुहितृवत्सलः ॥ २८ ॥
चूर्णयन् स्वधनुष्कोटया गिरिकूटानि राजराट् । भूमण्डलमिदं वैन्यः प्रायश्चक्रे समं विभुः ॥ २९ ॥
अथास्मिन् भगवान् वैन्यः प्रजानां वृत्तिदः पिता । निवासं कल्पयाञ्चक्रे तत्रतत्र यथार्हतः ॥ ३० ॥
ग्रामान् पुरः पट्टणानि दुर्गाणि विविधानि च । घोषान् व्रजांश्च शिबिरान् नगरान् खेटकर्पटान्[3] ॥

---

१. वनस्पत्यः * २. पृथ्वीमदुहन् ३. खेटखर्पटान्

प्राक् पृथोरिह नैवैषां[१] पुरग्रामादिकल्पना । यथासुखं वसन्ति स्म तत्रतत्राकुतोभयाः ॥ ३२ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे अष्टादशोऽध्यायः ॥**

---

**मैत्रेय उवाच**

अथादीक्षत राजर्षिर्हयमेधशतेन सः । ब्रह्मावर्ते मनोः क्षेत्रे यत्र प्राची सरस्वती ॥ १ ॥

तदभिप्रेत्य भगवान् कर्मातिशयमात्मनः । शतक्रतुर्न ममृषे पृथोर्यज्ञमहोत्सवम् ॥ २ ॥

यत्र यज्ञपतिः साक्षाद् भगवान् हरिरीश्वरः । अन्वहूयत[२] सर्वात्मा सर्वलोकपतिः प्रभुः ॥ ३ ॥

अन्वितो ब्रह्मशर्वाभ्यां लोकपालैः सहानुगैः । उपगीयमानो गन्धर्वैर्मुनिभिश्चाप्सरोगणैः ॥ ४ ॥

सिद्धा विद्याधरा दैत्या दानवा गुह्यकादयः । सुनन्दनन्दप्रमुखाः पार्षदप्रवरा हरेः ॥ ५ ॥

कपिलो नारदो दत्तो योगेशाः सनकादयः । तमन्वीयुर्भागवता ये च तत्सेवनोत्सुकाः ॥ ६ ॥

यत्र धर्मदुघा भूमिः सर्वकामदुघा सती । दोग्धि स्माभीप्सितानर्थान् यजमानस्य भारत ॥ ७ ॥

ऊहुः सर्वरसान् नद्यः क्षीरदध्यन्नगोरसान् । तरवो भूरिवर्ष्माणः प्रासूयन्त मधून्युत[३] ॥ ८ ॥

सिन्धवो रत्ननिकरान् गिरयोऽन्नं चतुर्विधम् । उपायनान्युपाजह्रुः सर्वे लोकाः सपालकाः ॥ ९ ॥

इति चाधोक्षजेशस्य पृथोर्यज्ञमहोदयम् । असूयन् भगवानिन्द्रः प्रतिघातमचीकरत् ॥ १० ॥

चरमेणाश्वमेधेन यजमाने यजुष्पतिम् । वैन्ये यज्ञपशुं स्पर्धन्नपोवाह तिरोहितः ॥ ११ ॥

तमत्रिर्भगवानैक्षत् त्वरमाणं विहायसा । आमुक्तमिव पाषण्डं[४] योऽधर्मे धर्मविभ्रमः ॥ १२ ॥

अत्रिणा सूचितं[५] हन्तुं पृथुपुत्रो महारथः । अन्वधावत सङ्क्रुद्धस्तिष्ठतिष्ठेति चाब्रवीत् ॥ १३ ॥

तं तादृशाकृतिं वीक्ष्य मेनेऽधर्मशरीरिणम् । जटिलं भस्मना च्छन्नं तस्मै बाणं न मुञ्चति ॥ १४ ॥

वधान्निवृत्तं भूयो वै हन्तवेऽत्रिरचोदयत् । जहि यज्ञहनं तात महेन्द्रं विबुधाधिपम् ॥ १५ ॥

एवं वैन्यसुतः प्रोक्तस्त्वरमाणं विहायसा । अन्वधावदतिक्रुद्धो रावणं गृध्रराडिव ॥ १६ ॥

सोऽश्वं रूपं च तद्धित्वा तस्यावन्तर्हितः स्वराट् । वीरस्तं पशुमादाय पितुर्यज्ञमुपेयिवान् ॥ १७ ॥

तत् तस्य चाद्भुतं कर्म विलक्ष्य परमर्षयः । नामधेयं ददुस्तस्मै विजिताश्व इति प्रभो ॥ १८ ॥

उपसृज्य तमस्तीव्रं जहाराश्वं पुनर्हरिः । चषालयूपयोश्छन्नो हिरण्यरशनं विभुः ॥ १९ ॥

---

१. नैवैषा   २. अन्वभूयत   ३. मधुच्युतः *   ३. पाखण्डम्   ५. चोदितः

अत्रिः सन्दर्शयामास त्वरमाणं विहायसा । कपालखट्वाङ्गधरं वीरो नैनमधावत[१] ॥ २० ॥
अत्रिणा चोदितस्तस्मै सन्दधे विशिखं रुषा । सोऽश्वं रूपं च तद्धित्वा तस्थावन्तर्हितः स्वराट् ॥
वीरश्चाश्वमुपादाय पितृयज्ञमथाव्रजत् । तदवद्यं हरे रूपं जगृहुर्ज्ञानदुर्बलाः ॥ २२ ॥
यानि रूपाणि जगृहे इन्द्रो हयजिहीर्षया । तानि पापस्य खण्डानि[२] लिङ्गं खण्डमिहोच्यते[३] ॥२३॥
एवमिन्द्रे हरत्यश्वं वैन्ययज्ञजिघांसया । तद्गृहीतविसृष्टेषु पाखण्डेषु[४] मतिर्नृणाम् ॥ २४ ॥
धर्म इत्युपधर्मेषु नग्नरक्तपटादिषु । प्रायेण सज्जते भ्रान्त्या पेशलेषु च वाग्मिषु ॥ २५ ॥
तदभिज्ञाय भगवान् पृथुः पृथुपराक्रमः । इन्द्राय कुपितो बाणमादत्तोद्यतकार्मुकः ॥ २६ ॥

तमृत्विजः शक्रवधाभिसन्धितं विचक्ष्य दुष्प्रेक्ष्यमसँह्यरंहसा ।
निवारयामासुरहो महामते न युज्यतेऽत्रान्यवधोऽप्रचोदितः ॥ २७ ॥
वयं मरुत्वन्तमिहार्थनाशनं ह्वयामहे त्वच्छ्रवसा हतत्विषम् ।
अयातयामोपहवैस्तमग्नये प्रसँह्य राजन् जुहवाम तेऽहितम् ॥ २८ ॥

इत्यामन्त्र्य क्रतुपतिं विदुरास्यर्त्विजो रुषा । स्रुङ्न्यस्तं जुह्वतोऽभ्येत्य स्वयम्भूः प्रत्यषेधत ॥ २९ ॥
न वध्यो भवतामिन्द्रो यद् यज्ञो भगवत्तनुः । तं जिघांसत यज्ञेन यस्येष्टास्तनवः सुराः ॥ ३० ॥
तदिदं पश्यत महद् धर्मव्यतिकरं द्विजाः । इन्द्रेणानुष्ठितं राज्ञः कर्मैतद्धि जिघांसया[५] ॥ ३१ ॥
पृथुकीर्तिः पृथो भूयास्त्वं ह्येकोनशतक्रतुः । अलं ते क्रतुभिः शिष्टैर्यद् भवान् मोक्षधर्मवित् ॥ ३२ ॥
नैवात्मने महेन्द्राय रोषमाहर्तुमर्हसि । उभावपि हि भद्रं ते उत्तमश्लोकविग्रहौ ॥ ३३ ॥

माऽस्मिन् महाराज कृथाः स्म चिन्तां निशामयास्मद्वच आदृतात्मा ।
यद् ध्यायतो दैवहतं तु कर्तुं मनोऽतिकष्टं विशते तमोऽन्धम् ॥ ३४ ॥

क्रतुर्विरमतामेष देवेषु दुरवग्रहः । धर्मव्यतिकरो यत्र पाखण्डैरिन्द्रनिर्मितैः ॥ ३५ ॥
एभिरिन्द्रोपसंसृष्टैः पाखण्डैर्हारिभिर्जनम् । ह्रियमाणं विचक्ष्वैतद्[६] यस्ते यज्ञध्रुगश्वमुट् ॥ ३६ ॥

भवान् परित्रातुमिहावतीर्णो धर्मं च नानासमयानुरूपम् ।
वेनापचारादवलुप्तमद्य तद्देहतो विष्णुकलाऽसि वैन्य ॥ ३७ ॥

---

१. नैनमबोधत २. षण्डानि ❋ ३. षण्डमिहोच्यते ❋
४. पाषण्डेषु ❋ एवमग्रेऽपि । ५. कर्मैतद्विजिघांसया ६. विचक्ष्वैनम् ❋

स त्वं विमृश्याभिभवं प्रजापतेः सङ्कल्पितं विश्वसृजोऽतिपीपृहि ।
ऐन्द्रीं च मायामुपधर्ममातरं प्रचण्डपाखण्डपथं प्रभो जहि ॥ ३८ ॥

**मैत्रेय उवाच**

इत्थं स लोकगुरुणा समादिष्टो विशाम्पतिः । तथा च कृतवान् सख्यं मघोनाऽपि च सन्दधे ॥ ३९ ॥
कृतावभृथ्यस्नानाय पृथवे भूरिकर्मणे । वरान् ददुस्ते वरदा ये तद्बर्हिषि तर्पिताः ॥ ४० ॥
विप्राः सत्याशिषस्तुष्टाः श्रद्धया लब्धदक्षिणाः । आशिषो युयुजुः क्षत्तरादिराजाय सत्कृताः ॥
त्वयाऽऽहूता महाबाहो सर्व एव समागताः । पूजिता दानमानाभ्यां पितृदेवर्षिमानवाः* ॥ ४२ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे एकोनविंशोऽध्यायः ॥**

---

**मैत्रेय उवाच**

भगवांश्चापि वैकुण्ठः साकं मघवता विभुः । यज्ञैर्यज्ञपतिस्तुष्टो यज्ञभुक् तमभाषत ॥ १ ॥

**श्रीभगवानुवाच**

एष ते ह्यकार्षीद् भङ्गं हयमेधशतस्य ह । क्षमापयत आत्मानममुष्य क्षन्तुमर्हसि ॥ २ ॥
सुधियः साधवो लोके नरदेव नरोत्तम । नाभिद्रुह्यन्ति भूतेभ्यो यर्ह्यनात्मा कळेबरम् ॥ ३ ॥
पुरुषा यदि मुह्यन्ति त्वादृशा देवमायया । श्रम एव परं जातो दीर्घया वृद्धसेवया ॥ ४ ॥
अतः कायमिमं विद्वानविद्याकामकर्मभिः । आरब्धमिति नैवास्मिन् प्रतिबुद्धोऽनुषज्जते ॥ ५ ॥
असंसक्तः शरीरेऽस्मिन्नमुनोत्पादिते गृहे । अपत्ये द्रविणे वाऽपि कः कुर्यान्ममतां बुधः ॥ ६ ॥
एकः शुद्धः स्वयञ्ज्योतिर्निर्गुणोऽसौ गुणाश्रयः । सर्वगोऽनावृतः साक्षी निरात्माऽनात्मनः परः[1] ॥
देहाद्यपार्थास्तद्धर्मा न स्युस्तद्द्रष्टुरात्मनः । कैवल्यं तस्य वै धर्मः सुषुप्तं तन्निदर्शनम् ॥ ८ ॥
य एवं सन्तमात्मानमात्मस्थं वेद पूरुषः । नाज्यते प्रकृतिस्थोऽपि तद्गुणैः समवस्थितः[2] ॥ ९ ॥
यः स्वधर्मेण मां नित्यं निराशीः श्रद्धयाऽन्वितः । भजते शनकैस्तस्य मनो राजन् प्रसीदति ॥ १० ॥
परित्यक्तगुणः सम्यग्दर्शनो विशदाशयः । शान्तिं मे समवस्थानं ब्रह्म कैवल्यमश्नुते ॥ ११ ॥
उदासीनमिवाध्यक्षं द्रव्यज्ञानक्रियात्मनाम् । कूटस्थमिममात्मानं यो वेदाप्नोति शोभनम् ॥ १२ ॥

---

* अयं श्लोकः प्राचीनकोशमात्रवर्ती । १. निरात्माऽऽत्माऽऽत्मनः परः ※ २. समवस्थितेः ※

भिन्नस्य लिङ्गस्य गुणप्रवाहं द्रव्यक्रियाकारकचेतनात्मनः ।
दृष्ट्वा सुसम्पत्सु विपत्सु सूरयो न विक्रियन्ते मयि बद्धसौहृदाः ॥ १३ ॥
समः समानोत्तममध्यमाधमः सुखे च दुःखे च जितेन्द्रियाशयः ।
मयोपक्लृप्ताखिलसत्त्वसंयुतो विधत्स्व वीराखिललोकरक्षणम् ॥ १४ ॥
श्रेयः प्रजापालनमेव राज्ञो यत् साम्पराये सुकृतं षष्ठमंशम् ।
अतोऽन्यथा हृतपुण्यः प्रजानामरक्षिता करहारोऽघमत्ति ॥ १५ ॥
एवं द्विजाग्र्यानुमतेऽनुवृत्तो धर्मे प्रजानां च समोऽविताऽस्याः ।
ह्रस्वेन कालेन गृहोपयातान् द्रष्टासि सिद्धाननुरक्तलोकः ॥ १६ ॥
वरं च मत् कञ्चन मानवेन्द्र वृणीष्व तेऽहं गुणशीलयन्त्रितः ।
नाहं मखैस्ते सुलभस्तपोभिर्योगेन वा यः समवृत्तवर्ती ॥ १७ ॥

**मैत्रेय उवाच**

स इत्थं लोकगुरुणा विष्वक्सेनेन विश्वजित् । अनुशासित आदेशं शिरसा जगृहे हरेः ॥ १८ ॥
स्पृशन्तं पादयोः प्रेम्णा[1] व्रीळितं स्वेन कर्मणा । शतक्रतुं परिष्वज्य विद्वेषं विससर्ज ह ॥ १९ ॥
भगवानपि विश्वात्मा पृथुनोपहृतार्हणः । समुज्जिहानया भक्त्या गृहीतचरणाम्बुजः ॥ २० ॥
प्रस्थानाभिमुखोऽप्येनमनुग्रहविलम्बितः[2] । पश्यन् पद्मपलाशाक्षो न प्रतस्थे सुहृत् सताम् ॥ २१ ॥
स आदिराजो रचिताञ्जलिर्हरिं विलोकितुं नाशकदश्रुलोचनः ।
न किञ्चनोवाच स बाष्पविक्लबो हृदोपगुह्यामुमथाभ्यवस्थितः ॥ २२ ॥
अथावमृज्याश्रुकणान् विलोकयन्नतृप्तदृग्गोचरमाह पूरुषम् ।
पदा स्पृशन्तं क्षितिमंस उन्नते विन्यस्तहस्ताग्रमुरङ्गविद्विषः ॥ २३ ॥

**पृथुरुवाच**

वरान् विभो त्वद् वरदेश्वराद् बुधः कथं वृणीते गुणविक्रियात्मनाम् ।
ये नारकाणामपि सन्ति देहिनां तानीश कैवल्यपतेर्वृणीत कः ॥ २४ ॥
न कामये नाथ तदप्यहं[3] क्वचिन्न यत्र युष्मच्चरणाम्बुजासवम् ।
महत्तमान्तर्हृदयान्मुखच्युतं विधत्स्व कर्णामृतमेष मे वरः ॥ २५ ॥

---

१. शीर्ष्णा  २. अनुग्रहविडम्बितः ❋  ३. तथाऽप्यहम् ❋

स उत्तमश्लोकमहन्मुखच्युतो भवत्पदाम्भोजसुधाकणानिलः ।
स्मृतिं पुनर्विस्मृततत्त्ववर्त्मनां कुयोगिनां नो वितरत्यलं वरैः ॥ २६ ॥
यशः शिवं सुश्रव आर्यसङ्गमे यदृच्छया चोपशृणोति ते सकृत् ।
कथं गुणज्ञो विरमेद् विना पशुं श्रीर्यत् प्रवव्रे[१] गुणसङ्ग्रहेच्छया ॥ २७ ॥
अथाभजं त्वाऽखिलपूरुषोत्तमं गुणालयं पद्मकरेव लालसः ।
अप्यावयोरेकपतिस्पृधोः कलिर्न स्यात् कृतस्त्वच्चरणैकतानयोः ॥ २८ ॥
जन्तोर्जगत्यां जगदीश वैशसं स्यादेव यत् कर्मणि नः समीहितम् ।
करोषि फल्ग्वप्युरु दीनवत्सल स्व एव धिष्ण्येऽभिरतस्य किं तया ॥ २९ ॥
भजन्त्यथ त्वामत एव साधवो व्युदस्तमायागुणविभ्रमोदयम् ।
भवत्पदानुस्मरणादृते सतां निमित्तमन्यद् भगवन् न विद्महे ॥ ३० ॥
मन्ये गिरं ते जगतां विमोहिनीं वरं वृणीष्वेति भजन्तमात्थ यत्[२] ।
वाचा नु तन्त्या यदि ते जनोऽसितः कथं पुनः कर्म करोति मोहितः ॥ ३१ ॥
त्वन्मायया‌ऽद्धा जन एष खण्डितो यदन्यदाशास्त ऋतात्मनोऽबुधः ।
यथा चरेद् बालहितं पिता स्वयं तथा त्वमेवार्हसि नः समीहितम् ॥ ३२ ॥

**श्रीभगवानुवाच**

साधु तेऽवसितं राजन्नाशास्ते न यदाशिषः । स्वर्गापवर्गनरकान् समं पश्यति मत्परः ॥ ३३ ॥
प्रीतोऽहं ते महाराज रोषं दुस्त्यजमत्यजः । श्रद्धधानो मदादेशं[३] तन्मह्यं परमार्हणम् ॥ ३४ ॥

**मैत्रेय उवाच**

इति वैन्यस्य राजर्षेरभिनन्द्यार्थवद् वचः । पूजितोऽनुगृहीत्वैनं गन्तुं चक्रेऽच्युतो मतिम् ॥ ३५ ॥
देवर्षिपितृगन्धर्वसिद्धचारणपन्नगाः । किन्नराप्सरसोऽमर्त्याः खगा भूतान्यनेकशः ॥ ३६ ॥
यज्ञेश्वरधिया राज्ञा वाग्वित्ताञ्जलिभक्तितः । सभाजिता ययुः सर्वे वैकुण्ठानुगतास्ततः ॥ ३७ ॥
भगवानपि राजर्षेः सोपाध्यायस्य पश्यतः । हरन्निव मनोऽमुष्य स्वधाम प्रत्यगाद् विभुः ॥ ३८ ॥
अदृष्टाय नमस्कृत्य स्वस्य सन्दर्शितात्मने[४] । वासुदेवाय देवानां देवाय स्वपुरं ययौ ॥ ३९ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे विंशोऽध्यायः ॥**

---

१. श्रीर्यं प्रवव्रे ❋ २. भजस्व मेति च ❋ ३. सदादेशम् ४. नृपः सन्दर्शितात्मने ❋

**मैत्रेय उवाच**

मौक्तिकैः कुसुमस्रग्भिर्दुकूलैः स्वर्णतोरणैः । महासुरभिभिर्धूपैर्मण्डितं तत्र तत्र वै ॥ १ ॥
चन्दनागरुतोयार्द्ररथ्याचत्वरमार्गवत् । पुष्पाक्षतफलैस्तोयैर्लाजैरर्चिर्भिरर्चितम् ॥ २ ॥
सवृन्तैः कदळीस्तम्भैः पूगपोतैः परिष्कृतम् । तरुपल्लवमालाभिः सर्वतः समलङ्कृतम् ॥ ३ ॥
प्रजास्तं दीपबलिभिः[१] सम्भृताशेषमङ्गलैः । अभीयुर्मृष्टकन्याश्च मृष्टकुण्डलमण्डिताः ॥ ४ ॥
शङ्खदुन्दुभिघोषेण ब्रह्मघोषेण चर्त्विजाम् । विवेश भवनं भूयः स्तूयमानो गतस्मयः ॥ ५ ॥
पूजितः पूजयामास तत्रतत्र महायशाः । पौरान् जानपदांस्तांस्तान् प्रीतः प्रियवरप्रदः ॥ ६ ॥

स एवमादीन्यनवद्यचेष्टितः कर्माणि भूयांसि महन्महत्तमः ।
कुर्वन् शशासावनिमण्डलं यशः स्फीतं निधायारुरुहे परं पदम् ॥ ७ ॥

**सूत उवाच**

श्रुत्वाऽऽदिराजस्य यशो विजृम्भितं गुणैरशेषैर्गुणवत्सभाजितम् ।
क्षत्ता महाभागवतः सदस्पतेः[२] कौशारविं प्राह गृणन्तमर्चयन्[३] ॥ ८ ॥

**विदुर उवाच**

सोऽभिषिक्तः पृथुर्विप्रैर्लब्धाशेषसुरार्हणः । बिभ्रच्च वैष्णवं तेजो बाह्वोर्याभ्यां दुदोह गाम् ॥ ९ ॥

को न्वस्य कीर्तिं न शृणोत्यभिज्ञो यद्विक्रमोच्छिष्टमशेषभूमिपाः ।
लोकाः सपाला उपजीवन्ति काममद्यापि तन्मे वद कर्म शुद्धम् ॥ १० ॥

**मैत्रेय उवाच**

गङ्गायमुनयोर्नद्योरन्तरा क्षेत्रमावसन् । आरब्धानेव बुभुजे भोगान् पुण्यजिहासया ॥ ११ ॥
सर्वत्रास्खलितादेशः सप्तद्वीपैकदण्डधृक् । अन्यत्र ब्राह्मणकुलादन्यत्राच्युतगोत्रतः ॥ १२ ॥
एकदाऽऽसीन्महासत्रदीक्षा[४] तत्र दिवौकसाम् । समाजो ब्रह्मर्षीणां च राजर्षीणां च सत्तम ॥ १३ ॥
तस्मिन्नर्हत्सु सर्वेषु स्वर्चितेषु यथार्हतः । उत्थितः सदसो मध्ये ताराणामुडुराडिव ॥ १४ ॥
प्रांशुः पीनायतभुजो गौरः कञ्जारुणेक्षणः । सुनासः सुमुखः सौम्यः पीनांसः सुद्विजस्मितः ॥
व्यूढवक्षा बृहच्छ्रोणिर्वलीवल्गुतरोदरः[५] । आवर्तनाभिरोजस्वी काञ्चनोरुरुदग्रवाक् ॥ १६ ॥

---

१. दीपवळिभिः ❋/दीपमालाभिः २. सदस्पते ३. गुरुं समर्चयन्
४. महांस्तस्य दीक्षा ❋ ५. वलीवल्गुतनूदरः ❋

सूक्ष्मवक्रासितस्निग्धमूर्धजः कम्बुकन्धरः । महाधने दुकूलाग्र्ये परिधायोपधाय च ॥ १७ ॥
व्यञ्जिताशेषगात्रश्रीर्नियमे न्यस्तभूषणः । कृष्णाजिनधरः श्रीमान् कुशपाणिः कृतोचितः ॥ १८ ॥
शिशिरस्निग्धताम्राक्षः समैक्षत समन्ततः ।ऊचिवानिदमुर्वीशः सदस्यान् हर्षयन्निव ।
चारु चित्रपदं श्लक्ष्णं हृद्यं गूढमविक्लबम् ॥ १९ ॥
सभ्याः शृणुत भद्रं वः साधवो य इहागताः । सत्सु जिज्ञासुभिर्धर्ममावेद्यं स्वमनीषितम् ॥ २० ॥
अहं दण्डधरो धात्रा प्रजानामिह योजितः । रक्षिता वृत्तिदः स्वेषु सेतुषु स्थापिता पृथक् ॥ २१ ॥
तस्य मे तदनुध्यानाद् यदाहुर्ब्रह्मवादिनः । लोकाः स्युः कामसन्दोहा यस्य तुष्यति विश्वभुक् ॥
य उद्धरेत् करं राजा प्रजा धर्मेष्वशिक्षयन् । प्रजानां शमलं भुङ्क्ते भागं च स्वं जहाति सः ॥ २३ ॥
तत् प्रजा भर्तृपिण्डार्थं स्वार्थमप्यनसूयवः । कुरुताधोक्षजधियं तर्हि मेऽनुग्रहः कृतः ॥ २४ ॥
यूयं तदनुमोदध्वं पितृदेवर्षयोऽमलाः । कर्तुः शास्तुरनुज्ञातुस्तुल्यं यत् प्रेत्य तत् फलम् ॥ २५ ॥
अस्ति यज्ञपतिर्नाम केषाञ्चिदिह सत्तमाः । इहामुत्र च दृश्यन्ते ज्योत्स्नावत्यः क्वचिद् भुवः ॥ २६ ॥
मनोरुत्तानपादस्य ध्रुवस्यापि महीपतेः । प्रियव्रतस्य राजर्षेरङ्गस्यास्मत्पितुः पितुः ॥ २७ ॥
ईदृशानामथान्येषामजस्य च भवस्य च । प्रह्लादस्य बलेश्चापि कृत्यमस्ति गदाभृतः ॥ २८ ॥
राज्यस्वर्गापवर्गाणां प्रायेणैकात्महेतुता । दौहित्रादीनृते मृत्योः शोच्यान् धर्मविमोहितान् ॥ २९ ॥

यत्पादसेवाभिरुचिस्तपस्विनामशेषजन्मोपचितं मलं धियः ।
सद्यः क्षिणोत्यन्वहमेधती सती यथा पदाङ्गुष्ठविनिःसृता सरित् ॥ ३० ॥
विनिर्धुताशेषमनोमलः पुमानसङ्गविज्ञानविशेषवीर्यवान् ।
यदङ्घ्रिमूले कृतकेतनः पुनर्न संसृतिं क्लेशवहां प्रपद्यते ॥ ३१ ॥
तमेव यूयं भजतात्मवृत्तिभिर्मनोवचःकायगुणैः स्वकर्मभिः ।
अमायिनः कामदुघाङ्घ्रिपङ्कजं[१] यथाधिकारावसितार्थसिद्धये ॥ ३२ ॥
असाविहानेकगुणाध्वरैः सता पृथग्विधैर्द्रव्यगुणक्रियोक्तिभिः[२] ।
सम्पद्यतेऽर्थाशयलिङ्गनामभिर्विशुद्धविज्ञानधनस्वरूपतः ॥ ३३ ॥
प्रधानकालाशयकर्मसङ्ग्रहः शरीरशेषं प्रतिपद्य चेतनः ।
क्रियाफलत्वेन विभुर्विभाव्यते यथाऽनलो दारुषु तद्गुणात्मकः ॥ ३४ ॥

---

१. कामधुगङ्घ्रिपङ्कजम् २. .... गुणाध्वरैः पृथक्पृथग्विधैर्द्रव्यगुण.... *

अहो बतामी[१] वितरन्त्यनुग्रहं हरिं गुरुं यज्ञभुजामधीश्वरम् ।
स्वधर्मयोगेन यजन्ति मामका निरन्तरं क्षोणितळे धृतव्रताः ॥ ३५ ॥
मा जातु तेजः प्रभवेन्महर्द्धिभिस्तितिक्षया तपसा विद्यया च ।
देदीप्यमानेऽजितदेवतानां कुले स्वयं राजकुले द्विजानाम् ॥ ३६ ॥
ब्रह्मण्यदेवः पुरुषः पुरातनो नित्यं हरिर्यच्चरणाभिवन्दनात् ।
अवाप लक्ष्मीमनपायिनीं यशो जगत्पवित्रं च महत्तमाग्रणीः ॥ ३७ ॥
यत्सेवयाऽशेषगुणाश्रयः स्वराट् विप्रप्रियस्तुष्यति काममीश्वरः ।
तदेव तद्धर्मपरैर्हि नः सदा सर्वात्मना ब्रह्मकुलं निषेव्यताम् ॥ ३८ ॥
पुमान् लभेतानतिवेलमात्मनः प्रसादतोऽत्यन्तशमं स्वतः स्वयम् ।
यन्नित्यसम्बन्धनिषेवया ततः परं किमत्रास्ति सुखं हविर्भुजाम् ॥ ३९ ॥
अश्नात्यनन्तः खलु तत्त्वकोविदैः श्रद्धाहुतं यन्मुख ईड्यनामभिः[२] ।
न वै तथा चेतनया बहिष्कृते हुताशने पारमहंस्यवर्यगुः ॥ ४० ॥
यद् ब्रह्म नित्यं विरजं सनातनं श्रद्धातपोमङ्गलमौनसंयमैः ।
समाधिना बिभ्रदिहार्थसिद्धये यत्रेदमादर्श इवावभासते ॥ ४१ ॥
तेषामहं पादसरोजरेणुमार्या वहेयाधिकिरीटमायुः ।
यं नित्यदा बिभ्रत आशु पापं नश्यत्यमुं सर्वगुणा भजन्ति ॥ ४२ ॥
गुणालयं शीलधनं[३] कृतज्ञं श्रद्धाश्रयं संवृणते[४] नु सम्पदः ।
प्रसीदतां ब्रह्मकुलं गवां च जनार्दनः सानुचरश्च मह्यम् ॥ ४३ ॥

**मैत्रेय उवाच**

इति ब्रुवाणं नृपतिं पितृदेवद्विजातयः । तुष्टुवुर्हृष्टमनसः साधुवादेन साधवः ॥ ४४ ॥
पुत्रेण जयते लोकानिति सत्यवती श्रुतिः । ब्रह्मदण्डहतो पापो यद् वेनोऽत्यतरत् तमः ॥ ४५ ॥
हिरण्यकशिपुश्चापि भगवन्निन्दया तमः । विविक्षुरत्यगात् सूनोः प्रह्लादस्यानुभावतः ॥ ४६ ॥
वीरवर्य पितः पृथ्व्याः समाः सञ्जीव शाश्वतीः । यस्येदृश्यच्युते भक्तिः सर्वलोकैकभर्तरि ॥ ४७ ॥

---

१. अहो ममामी * २. इज्यनामभिः * ३. गुणायनं शीलधरम् * ४. संवृणुते *

अहो वयं ह्यद्य पवित्रकीर्ते त्वयैव नाथेन मुकुन्दनाथाः ।
यदुत्तमश्लोकतमस्य विष्णोर्ब्रह्मण्यदेवस्य कथां व्यनक्ति ॥ ४८ ॥
नात्यन्तिकमिदं नाथ तव जीव्यानुशासनम् । प्रजानुरागो महतां प्रकृतिः करुणात्मनाम् ॥ ४९ ॥
अद्य नस्तमसः पारस्त्वयोपासादितः प्रभो । भ्राम्यतां नष्टदृष्टीनां कर्मभिर्दैवसञ्ज्ञितैः ॥ ५० ॥
नमो विवृद्धसत्वाय पुरुषाय महीयसे । यो ब्रह्मक्षत्रमाविश्य बिभर्तीदं स्वतेजसा ॥ ५१ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे एकविंशोऽध्यायः ॥**

---

**मैत्रेय उवाच**

जनेषु प्रगृणत्स्वेवं पृथुं पृथुलविक्रमम् । तत्रोपजग्मुर्मुनयश्चत्वारः सूर्यवर्चसः ॥ १ ॥
तांस्तु सिद्धेश्वरान् राजा व्योम्नोऽवतरतोऽर्चिषा । लोकानपापान् कुर्वन्त्या[1] सानुगोऽचष्ट लक्षितान् ॥
तद्दर्शनोद्गतप्राणान् प्रत्यादित्सुरिवोत्थितः । ससदस्यानुगो वैन्य इन्द्रियेशो गुणानिव ॥ ३ ॥
गौरवाद् यन्त्रितः सभ्यः प्रश्रयानतकन्धरः । विधिवत् पूजयाश्चक्रे गृहीताघ्यार्हणासनान् ॥ ४ ॥
तत्पादशौचसलिलैर्मार्जिताळकबन्धनः । तत्र शीलवतां वृत्तिमाचरन् मानयन्निव ॥ ५ ॥
हाटकासन आसीनान् स्वधिष्ण्येष्विव पावकान् । श्रद्धासंयमसंयुक्तः प्रीतः प्राह भवाग्रजान् ॥ ६ ॥

**पृथुरुवाच**

अहो आचरितं कृष्णे मङ्गलं मङ्गलायनाः । यस्य वो दर्शनं ह्यासीद् दुर्दर्शानां कुयोगिनः ॥ ७ ॥
किं तस्य[2] दुर्लभतरमिह लोके परत्र च । यस्य विप्राः प्रसीदन्ति शिवो विष्णुश्च सानुगः ॥ ८ ॥
नैव लक्षयते लोको लोकान् पर्यटतोऽपि तान्[3] । यथा सर्वदृशं सर्व आत्मानं येऽस्य हेतवः ॥ ९ ॥
अधना अपि ते धन्याः साधवो गृहमेधिनः । यद्गृहा अर्हवर्याम्बुतृणभूमिसुवाग्धराः ॥ १० ॥
व्याळालयद्रुमा ह्येते संसिद्धाखिलसम्पदः[4] । यद्गृहास्तीर्थपादीयपादतीर्थविवर्जिताः ॥ ११ ॥
स्वागतं वो द्विजश्रेष्ठा यद् व्रतानि मुमुक्षवः । चरन्ति श्रद्धया धीरा बाला एव बृहन्ति वै ॥ १२ ॥
कच्चिन्नः कुशलं नाथा इन्द्रियार्थार्थवेदिनाम् । व्यसनावाप एतस्मिन् पतितानां स्वकर्मभिः ॥
भवत्सु कुशलप्रश्न आत्मारामेषु नेष्यते । कुशलाकुशला यत्र न सन्ति मतिवृत्तयः ॥ १४ ॥

---

१. कुर्वन्तः ❋ २. किम्वस्य ❋ ३. यान् ४. अरिक्ताखिलसम्पदः

तदहं कृतविस्रम्भः सुहृदोऽत्र तपस्विनाम् । सम्पृच्छे भव एतस्मिन् क्षेमः केनाञ्जसा भवेत् ॥ १५ ॥

व्यक्तं ह्यात्मवतामात्मा भगवानात्मभावनः । स्वानामनुग्रहायेमां सिद्धरूपी चरत्यजः ॥ १६ ॥

**मैत्रेय उवाच**

पृथोस्तत्सूक्तमाकर्ण्य सारं सुष्ठु मितं मधु । स्मयमान इव प्रीत्या कुमारः प्रत्युवाच ह ॥ १७ ॥

**सनत्कुमार उवाच**

साधु पृष्टं महाराज सर्वभूतहितात्मना । भवता विदुषा चापि साधूनां गतिरीदृशी ॥ १८ ॥

सङ्गमः खलु साधूनामुभयेषां च सम्मतः । सत्सम्भाषणसम्प्रश्नः सर्वेषां वितनोति शम् ॥ १९ ॥

अस्त्येव राजन् भवतो मधुद्विषः पादारविन्देऽस्य गुणानुवादतः[१] ।
रतिः सदा या विधुनोति नैष्ठिकी कामं कषायं मलमन्तरात्मनः ॥ २० ॥

शास्त्रेष्वियानेव सुनिश्चितो नृणां क्षेमस्य सम्यग्विमृशेषु हेतुः ।
असङ्ग आत्मव्यतिरिक्तवस्तुनि दृढा रतिर्ब्रह्मणि निर्गुणे च या ॥ २१ ॥

तच्छ्रद्धया[२] भगवद्धर्मचर्यया जिज्ञासयाऽऽध्यात्मिकयोगनिष्ठया ।
योगेश्वरोपासनया च नित्यं पुण्यश्रवःकथया पुण्यया च ॥ २२ ॥

अर्थेन्द्रियारामगुणेष्वतृष्णया तत्सम्मतानामपरिग्रहेण च ।
विविक्तरुच्यापरितोष आत्मन् विना हरेर्गुणपीयूषपानात् ॥ २३ ॥

अहिंसया पारमहंस्यचर्यया स्मृत्या मुकुन्दाचरिताग्र्यशीधुना[३] ।
यमैरकामैर्नियमैरभिध्यया निरीहया द्वन्द्वतितिक्षया च ॥ २४ ॥

हरेर्मुहुस्तत्परकर्णपूरया गुणाभिधानेन विजृम्भमाणया ।
भक्त्या ह्यसङ्गः सदसत्परात्मनि स्यान्निर्गुणे ब्रह्मणि चाञ्जसा रतिः ॥ २५ ॥

यदा रतिर्ब्रह्मणि नैष्ठिकी पुमानाचार्यवान् ज्ञानविरागरंहसा ।
दहत्यबीजं हृदयं जीवकोशं पञ्चात्मकं योनिमिवोत्थितोऽग्निः ॥ २६ ॥

दग्धाशयो मुक्तसमस्ततद्गुणो नैवात्मनो बहिरन्तर्विचष्टे ।
परात्मनोर्यद् व्यवधानं पुरस्तात् स्वप्ने यथाऽपुरुषस्तद्विनाशे ॥ २७ ॥

आत्मानमिन्द्रियार्थं च परं यदुभयोरपि । सत्याशय उपाधौ वै पुमान् पश्यति नान्यदा ॥ २८ ॥

---

१. गुणानुवादिनी २. यच्छ्रद्धया * ३. ....सीधुना

निमित्ते सति सर्वत्र जलादावपि पूरुषः । आत्मनश्च परस्यापि भिदां पश्यति नान्यदा ॥ २९ ॥

इन्द्रियैर्विषयाकृष्टैराक्षिप्तं ध्यायतो मनः । चेतनां हरते बुद्धेः स्तुम्बस्तोयमिव[१] ह्रदात् ॥ ३० ॥

भ्रश्यत्यनुस्मृतिश्चित्तं ज्ञानभ्रंशः स्मृतिक्षये । तद्रोधं कवयः प्राहुरात्मापह्नवमात्मनः ॥ ३१ ॥

नातः परतरो लोके पुंसः स्वार्थव्यतिक्रमः । यदस्त्यन्यस्य प्रेयस्त्वमात्मनः स्वव्यतिक्रमात् ॥ ३२ ॥

अर्थेन्द्रियार्थाभिध्यानं सर्वार्थापह्नवो नृणाम् । स्रंसितो ज्ञानविज्ञानाद् येनाविशति मुग्धताम् ॥ ३३ ॥

न कुर्यात् कर्हिचित् सङ्गं तमस्तीव्रं तितीर्षुणा[२] । धर्मार्थकाममोक्षाणां यदत्यन्तविघातकम्[३] ॥ ३४ ॥

तत्रापि मोक्ष एवार्थ आत्यन्तिकतयेष्यते । त्रैवर्ग्योऽर्थो यतो नित्यं कृतान्तभयसंयुतः ॥ ३५ ॥

परावरे च ये भावा गुणव्यतिकरादनु । न तेषां विद्यते क्षेमी[४] ईशविध्वंसिताशिषाम् ॥ ३६ ॥

मनोमात्रमिदं विश्वं यथा स्वप्ने मनःक्रिया । क्रिया च वासनामात्रं[५] साऽनीहायां प्रलीयते ॥ ३७ ॥

आत्मा त्वनीहया साक्षात् स्वयञ्ज्योतिः प्रसिद्ध्यति । एवं व्युदस्यात्ममायां भिदामुपरमेन्मुनिः ॥

न यत्र निद्रा मूर्च्छा वा नार्थदृक् च मनोरथः[६] । नानुवृत्तिर्न प्रळयस्तद् ब्रह्म विजितात्मनः ॥ ३९ ॥

तत्त्वं नरेन्द्र जगतामथ तस्थुषां च देहेन्द्रियासुधिषणात्मभिरावृतानाम् ।
यः क्षेत्रवित् त्वमनयोर्हृदि विष्वगाधिः प्रत्यक् चकास्ति भगवांस्तमवैहि सोऽस्मि ॥

यस्मिन्निदं सदसदात्मतया विभाति मायाविवेकविधुतिः स्रजि वाऽहिबुद्धिः ।
तं नित्यमुक्तपरिशुद्धविबुद्धतत्त्वप्रत्यूढकर्मकलिलप्रकृतिं प्रपद्ये ॥ ४१ ॥

यत्पादपङ्कजपलाशविलासभक्त्या कर्माशयं ग्रथितमुद्ग्रथयन्ति सन्तः ।
तत्त्वं न तद् द्विमतयोऽपि विरुद्धमार्गस्रोतोगुणास्तमरणं भज वासुदेवम् ॥ ४२ ॥

कृच्छ्रो महानिह भवार्णवमप्लवेशाः षड्वर्गनक्रमसुखेन तितीर्षन्ति ।
तत् त्वं हरेर्भगवतो भजनीयमङ्घ्रिं कृत्वोडुपं व्यसनमुत्तर दुस्तरार्णम् ॥ ४३ ॥

मैत्रेय उवाच

स एवं ब्रह्मपुत्रेण कुमारेणात्ममेधसा । दर्शितात्ममतिः सम्यक् प्रशस्योवाच तं नृपः ॥ ४४ ॥

---

१. बुद्धेस्तुम्बस्तोयमिव ❋ २. तितीर्षुः ❋ न कार्यः....... सङ्गः ....... (इति च पाठः)

३. यदत्यन्तविघातकः ❋ ४. क्षेमः ❋

५. वासनामात्रा ❋ ६. नार्थदृङ् न मनोरथः

पृथुरुवाच

कृतो मेऽनुग्रहः पूर्वं हरिणाऽऽर्तानुकम्पिना। तमापादयितुं ब्रह्मन् भगवान् यूयमागताः ॥ ४५ ॥

निष्पादितं च कात्स्न्र्येन भगवद्भिर्घृणाळुभिः। साधुदत्तं हि सर्वं च[१] आत्मना सह किं ददे॥ ४६ ॥

प्राणा दाराः सुता ब्रह्मन् गृहाश्च सपरिग्रहाः। रायो मही[२] बलं कोश इति सर्वं निवेदितम्॥ ४७ ॥

सेनापत्यं च राज्यं च दण्डनेतृत्वमेव च। सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥ ४८ ॥

स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च। तस्यैवानुग्रहेणान्ये भुञ्जते क्षत्रियादयः* ॥ ४९ ॥

यैरीदृशी भगवतो गतिरात्मवाद एकान्ततो निगमिभिः प्रतिपादिता नः।

तुष्यन्त्वदभ्रकरुणाः[३] स्वकृतेन नित्यं को नाम तत् प्रतिकरोति विनोदपात्रम् ॥ ५० ॥

मैत्रेय उवाच

त आत्मयोगपतय आदिराजेन पूजिताः। शीलं तदीयं शंसन्तः खेऽभूवन् मिषतां नृणाम् ॥ ५१ ॥

वैन्यस्तु धुर्यो महतां संस्थित्याऽध्यात्मशिक्षया। आप्तकाममिवात्मानं मेन आत्मन्यवस्थितः ॥

कर्माणि च यथाकालं यथादेशं यथाबलम्। यथोचितं यथावित्तमकरोद् ब्रह्मसात्कृतम् ॥ ५३ ॥

फलं ब्रह्मणि सन्न्यस्य निर्विषङ्गः समाहितः। कर्माध्यक्षं च मन्वान आत्मानं प्रकृतेः परम् ॥ ५४ ॥

गृहेषु वर्तमानोऽपि स साम्राज्यश्रियाऽन्वितः। नासज्जतेन्द्रियार्थेषु निरहम्मतिरर्कवत् ॥ ५५ ॥

एवमध्यात्मयोगेन कर्माण्यनुसमाचरन्। पुत्रानुत्पादयामास पञ्चार्चिष्यात्मसम्मतान् ॥ ५६ ॥

विजिताश्वं धूम्रकेशं हर्यक्षं द्रविणं वृकम्। सर्वेषां लोकपालानां दधारैकः पृथग् गुणान् ॥ ५७ ॥

गोपीथाय जगत्सृष्टेः काले स्वेस्वेऽच्युतात्मकः। मनोवाङ्मूर्तिभिः सौम्यैर्गुणैः संरञ्जयन् प्रजाः ॥

राजेत्यधान्नामधेयं सोमराज इवापरः। सूर्यवद् विसृजन् गृह्णन् प्रतपंश्च भुवो वसु ॥ ५९ ॥

दुर्धर्षस्तेजसेवाग्निर्महेन्द्र इव दुर्जयः। तितिक्षया धरित्रीव द्यौरिवाभीष्टदो नृणाम् ॥ ६० ॥

वर्षति स्म यथाकामं पर्जन्य इव तर्पयन्। समुद्र इव दुर्बोध्यः[४] सत्येनाचलराडिव ॥ ६१ ॥

धर्मराडिव शिक्षायामाश्चर्ये हिमवानिव[५]। कुबेर इव कोशाढ्यो गुप्तार्थो वरुणो यथा ॥ ६२ ॥

मातरिश्वेव सर्वात्मा बलेन महतौजसा। अविषँह्यतया देवो भगवान् भूतराडिव ॥ ६३ ॥

---

१. मे
* अयं श्लोकः प्राचीनकोशमात्रवर्ती।
२. राज्यं मही ❋
३. तुष्यध्वमिद्धकरुणाः ❋
४. दुर्बोधः
५. ऐश्वर्ये हिमवानिव

कन्दर्प इव सौन्दर्ये मनस्वी मृगराडिव । वात्सल्ये मनुवन्नॄणां प्रभुत्वे भगवानजः ॥ ६४ ॥
बृहस्पतिर्ब्रह्मवादे आत्मतत्त्वे स्वयं हरिः । भक्त्या गोगुरुविप्रेषु विष्वक्सेनानुवर्तिषु ॥ ६५ ॥
ह्रिया प्रश्रयशीलाभ्यामात्मतुल्यः परोद्यमे । कीर्त्योर्ध्वगीतया पुम्भिस्त्रैलोक्ये तत्रतत्र ह ।
प्रविष्टः कर्णरन्ध्रेषु स्त्रीणां रामः सतामिव ॥ ६६ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे द्वाविंशोऽध्यायः ॥**

---

**मैत्रेय उवाच**

दृष्ट्वाऽऽत्मानं प्रवयसमेकदा वैन्य आत्मवान् । आत्मना वर्धिताशेषसानुसर्गः प्रजापतिः ॥ १ ॥
जगतस्तस्थुषश्चापि वृत्तिदो धर्मभृत् सताम् । निष्पादितेश्वरादेशो यदर्थमिह जग्मिवान् ॥ २ ॥
आत्मजेष्वात्मजां न्यस्य विरहाद् रुदतीमिव । प्रजासु विमनास्वेकः सदारोऽगात् तपोवनम् ॥ ३ ॥
तत्रापाद्यात्मनियमो वैखानससुसम्मतः[१] । प्रारब्ध उग्रतपसि यथा स्वविषये पुरा ॥ ४ ॥
कन्दमूलफलाहारः तृणपर्णाशनः[२] क्वचित् । अब्भक्षः कतिचित्पक्षान् वायुभक्षस्ततः परम् ॥ ५ ॥
ग्रीष्मे पञ्चतपा वीरो वर्षास्वासारषाण्मुनिः[३] । आकण्ठमग्नः शिशिर उदके स्थण्डिलेशयः ॥ ६ ॥
तितिक्षुर्यतवाग् दान्त ऊर्ध्वरेता जितानिलः । आरिराधायिषुः कृष्णमाचरत् तप उत्तमम् ॥ ७ ॥
तेन क्रमानुरुद्धेन[४] ध्वस्तकर्ममलाशयः । प्राणायामैः सन्निरुद्धषड्वर्गश्छिन्नबन्धनः ॥ ८ ॥
सनत्कुमारो भगवान् यदाहाध्यात्मिकं परम् । योगं तेनैव पुरुषमभजत् पुरुषर्षभः ॥ ९ ॥
भगवद्धर्मिणः साधो श्रद्धया यततः सदा । भक्तिर्भगवति ब्रह्मण्यनन्यविषयाऽभवत् ॥ १० ॥
तस्यानया भगवतः परिकर्मशुद्धसत्वात्मनस्तदनु संस्मरणानुपूर्व्या ।
ज्ञानं विरक्तिमदभून्निशितेन येन चिच्छेद संशयपदं निजजीवकोशम् ॥ ११ ॥
छिन्नान्यधीरधिगतात्मगतिर्निरीहस्तत् तत्यजेऽच्छिनदिदं वयुनेन येन ।
तावत् तु योगगतिभिर्यतिरप्रपन्नो यावद् गदाग्रजकथासु रतिं न कुर्यात् ॥ १२ ॥
एवं स वीरप्रवरः संयोज्यात्मानमात्मनि । ब्रह्मभूतो दृढं काले तत्याज स्वकळेबरम् ॥ १३ ॥
सम्पीड्य पायुं पार्ष्णिभ्यां वायुमुत्सर्पयञ्छनैः । नाभ्यां कोष्ठेष्ववस्थाप्य हृदुरःकण्ठशीर्षणि[५] ॥
उत्सर्पयन्नसून् मूर्ध्नि क्रमेणावेश्य निस्स्पृहः । वायुं वायौ क्षितौ कायं तेजस्तेजस्ययूयुजत् ॥ १५ ॥

---

१. वेखानससुसम्मते २. शुष्कपर्णाशनः ३. आसारवान् मुनिः ❋ ४. ...सिद्धेन ५. हृदुरःकण्ठमूर्धसु ❋

खान्याकाशे द्रवं तोये यथास्थानं विभागशः । क्षितिमम्भसि तत् तेजस्यदो वायौ नभस्यमुम् ॥

इन्द्रियाणि समस्तानि तन्मात्राणि यथोद्भवम् । भूतादिस्थान् समुत्क्षिप्य महत्यात्मनि सन्दधे ॥

तं सर्वगुणविन्यासं जीवे मायामये न्यधात् । तं चानुशयमात्मस्थमसावनुशयी पुमान् ।

ज्ञानवैराग्यवीर्येण स्वरूपस्थो व्यधात् प्रभुः[1] ॥ १८ ॥

अर्चिर्नाम महाराज्ञी तत्पत्न्यनुगता वनम् । सुकुमार्यतदर्हा च यत् पद्भ्यां स्पर्शनं भुवः ॥ १९ ॥

अतीव भर्तुर्व्रतधर्मनिष्ठया शुश्रूषया चार्षदेहयात्रया ।

नाविन्दतार्तिं परिकर्शिताऽपि सा प्रेयस्करस्पर्शनमाननिर्वृता[2] ॥ २० ॥

देहं विपन्नाखिलचेतनादिकं पत्युः पृथिव्या दयितस्य चात्मनः ।

आलक्ष्य किञ्चित् प्रविलप्य सा सती चितामथारोपयदद्रिसानुनि ॥ २१ ॥

विधाय कृत्यं ह्रदिनीजलाप्लुता दत्वोदकं भर्तुरुदारकर्मणः ।

नत्वा दिविस्थांस्त्रिदशांस्त्रिः परीत्य विवेश वह्निं ध्यायती भर्तृपादम् ॥ २२ ॥

विलोक्यानुगतां साध्वीं पृथुं वीरवरं पतिम् । तुष्टुवुर्वरदा देवैर्देवपत्न्यः सहस्रशः ॥ २३ ॥

कुर्वन्त्यः कुसुमासारं तस्मिन् मन्दरसानुनि । नदत्स्वमरतूर्येषु गृणन्ति स्म परस्परम् ॥ २४ ॥

देव्य ऊचुः

अहो इयं वधूर्धन्या या चैवं भूभुजां पतिम् । सर्वात्मना पतिं भेजे यज्ञेशं श्रीवधूरिव ॥ २५ ॥

सैषा नूनं व्रजत्यूर्ध्वमनुवैन्यं पतिं सती । पश्यतोऽस्मानतीत्यार्चिर्दुर्विभाव्येन कर्मणा ॥ २६ ॥

तेषां दुरापं किञ्चान्यन्मर्त्यानां भगवत्पदम् । विद्युल्लोलायुषो ये वै नैष्कर्म्यं साधयन्त्युत ॥ २७ ॥

स वञ्चितो बतात्मध्रुक् कृच्छ्रेण महता भुवि । लब्ध्वाऽऽपवर्ग्यं मानुष्यं विषयेषु विषज्जते ॥ २८ ॥

मैत्रेय उवाच

स्तुवन्तीषु सुरस्त्रीषु पतिलोकं गता वधूः । यं वा आत्मविदां धुर्यो[3] वैन्यः प्रापाच्युताश्रयः ॥ २९ ॥

इत्थम्भूतानुभावोऽसौ पृथुः स भगवत्तमः । कीर्तितं तस्य चरितमुद्दामचरितस्य वै ॥ ३० ॥

य इदं सुमहत्पुण्यं श्रद्धयाऽवहितः पठेत् । श्रावयेच्छृणुयाद् वाऽपि स पृथोः पदवीमियात् ॥ ३१ ॥

ब्राह्मणो ब्रह्मवर्चस्वी राजन्यो जगतीपतिः । वैश्यः पठन् विश्पतिः स्याच्छूद्र उत्तमतामियात् ॥ ३२ ॥

---

१. स्वरूपस्थोऽजहात् प्रभुः ❋ २. ..... माननिर्वृतिः ❋ ३. आत्मवतां धुर्यः ❋

त्रि:कृत्व इदमाकर्ण्य नरो नार्यथवाऽऽदृतः । अप्रजः सुप्रजतमो निर्धनो धनवत्तमः ॥ ३३ ॥
अस्पष्टकीर्तिः सुयशा मूर्खो भवति पण्डितः ।*

इदं स्वस्त्ययनं पुंसाममङ्गल्यनिवारणम् । धन्यं यशस्यमायुष्यं स्वर्ग्यं कलिमलापहम् ॥ ३४ ॥

धर्मार्थकाममोक्षाणां सम्यक् सिद्धिमभीप्सुभिः । श्रद्धयैतदनुश्राव्यं चतुर्णां कारणं परम् ॥ ३५ ॥

सङ्ग्रामाभिमुखो राजा[१] श्रुत्वैतदभियाति यान् । बलिं तस्मै हरन्त्यग्रे राजानः पृथवे यथा ॥ ३६ ॥

मुक्तान्यसङ्गो भगवत्यचलां भक्तिमुद्वहन् । वैन्यस्य चरितं पुण्यं शृणुयाच्छ्रावयेत् पठेत् ॥ ३७ ॥

वैचित्रवीर्याभिहितं महन्माहात्म्यसूचकम्[२] । अस्मिन् कृतमतिर्मर्त्यः पार्थवीं गतिमाप्नुयात् ॥ ३८ ॥

अनुदिनमिदमादरेण शृण्वन् पृथुचरितं प्रथयन् विमुक्तसङ्गः ।
भगवति भवसिन्धुपारभूते स च निपुणां लभते रतिं मनुष्यः ॥ ३९ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे त्रयोविंशोऽध्यायः ॥**

---

**मैत्रेय उवाच**

विजिताश्वोऽथ राजाऽऽसीत् पृथोः पुत्रः पृथुश्रवाः । यवीयेभ्योऽददात् काष्ठा भ्रातृभ्यो भ्रातृवत्सलः ॥

हर्यक्षायादिशत् प्राचीं धूम्रकेशाय दक्षिणाम् । प्रतीचीं वृकसञ्ज्ञाय तुर्यां द्रविणसे विभुः[३] ॥ २ ॥

अन्तर्धानगतिं शक्राल्लब्ध्वाऽन्तर्धानसञ्ज्ञितः । अपत्यत्रयमाधत्त शिखण्डिन्यां सुसम्मतम् ॥ ३ ॥

पावकः पवमानश्च शुचिरित्यग्नयः पुरा । वसिष्ठशापादुत्पन्नाः पुनर्योगगतिं गताः ॥ ४ ॥

अन्तर्धानो नभस्वत्यां हविर्धानमविन्दत । य इन्द्रमश्वहर्तारं विद्वानपि न जघ्निवान् ॥ ५ ॥

राज्ञां वृत्तिं करादानं दण्डशुल्कादि दारुणम् । मन्यमानो दीर्घसत्रव्याजेन विससर्ज ह ॥ ६ ॥

तत्रापि हंसं पुरुषं परमात्मानमात्मदृक् । यजंस्तल्लोकतामाप कुशलेन समाधिना ॥ ७ ॥

हविर्धानाद्धविर्धानी विदुरासूत षट् सुतान् । बर्हिष्मन्तं[४] गयं शुक्लं कृष्णं सत्यं जितव्रतम्[५] ॥ ८ ॥

बर्हिष्मत् तु[६] महाभागो हाविर्धानिः प्रजापतिः । क्रियाकाण्डेषु निष्णातो योगेषु च कुरूद्वह ॥ ९ ॥

यस्येदं देवयजनमनुयज्ञं वितन्वतः । प्राचीनाग्रैः कुशैरासीद् द्व्यङ्गुलोच्चेन चोच्छ्रितम्[७] ॥ १० ॥

---

* इदं श्लोकार्धं प्राचीनकोशमात्रवृत्ति । १. भूयसोऽभिमुखो राजा ❋ २. महामाहात्म्यसूचकम्
३. द्रविणसञ्ज्ञके ४. बर्हिषदम् ❋ ५. सत्यजितं व्रतम् ❋ ६. बर्हिषत् तु ❋
७. आसीदास्तृतं वसुधातळम्

सामुद्रीं देवदेवोक्तामुपयेमे शतद्रुतीम् । यां वीक्ष्य चारुसर्वाङ्गीं किशोरीं सुष्ठ्वलङ्कृताम् ।
परिक्रमन्तीमुद्वाहे चकमेऽग्निः शुकीमिव ॥ ११ ॥
विबुधासुरगन्धर्वमुनिसिद्धमहोरगाः । विजिताः सूर्यया दिक्षु क्वणयन्त्यैव नूपुरैः[१] ॥ १२ ॥
प्राचीनबर्हिषः पुत्राः शतद्रुत्यां दशाभवन् । तुल्यनामव्रताः सर्वे वेदस्नाताः प्रचेतसः ॥ १३ ॥
पित्राऽऽदिष्टाः प्रजासर्गे तपसेऽर्णवमाविशन् । दशवर्षसहस्राणि तपस्यन्तस्तपस्विनः ॥ १४ ॥
यदुक्तं पथि दृष्टेन गिरिशेन प्रसीदता । तद् ध्यायन्तो जपन्तश्च पूजयन्तश्च संयताः ॥ १५ ॥

विदुर उवाच

प्रचेतसां गिरित्रेण यथाऽऽसीत् पथि सङ्गमः । यथाऽप्याह हरः प्रीतस्तन्नो ब्रह्मन् वदार्थवत् ॥ १६ ॥
सङ्गमः खलु विप्रर्षे शिवेन हि शरीरिणाम् । दुर्लभो मुनयो दध्युरसङ्गाः सदभीप्सितम् ॥ १७ ॥
आत्मारामोऽपि यस्त्वस्य लोककल्पस्य राधसे । शक्त्या युक्तो विचरति तीव्रया[२] भगवान् भवः ॥

मैत्रेय उवाच

प्रचेतसः पितुर्वाक्यं शिरसाऽऽधाय साधवः । दिशं प्रतीचीं प्रययुस्तपस्यादृतचेतसः ॥ १९ ॥
समुद्रमुपविस्तीर्णमपश्यंस्ते महत् सरः । महन्मन इव स्वच्छं प्रसन्नसलिलाशयम् ॥ २० ॥
नीलरक्तोत्पलाम्भोजकह्लारेन्दीवराकरम् । हंससारसचक्राह्वकारण्डवनिकूजितम् ॥ २१ ॥
मत्तभ्रमरसौस्वर्यं हृष्टरोमलताङ्घ्रिपम् । पद्मकोशरजो दिक्षु विक्षिपत्पवनोत्सवम् ॥ २२ ॥
तत्र गान्धर्वमाकर्ण्य दिव्यमार्गमनोहरम् । विसिस्म्यू[३] राजपुत्रास्ते मृदङ्गपणवाद्यनु ॥ २३ ॥
तर्ह्येव सरसस्तस्मान्निष्क्रामन्तं सहानुगम् । उपगीयमानममरप्रवरं विबुधानुगैः ॥ २४ ॥
तप्तहेमनिकर्षाभं[४] शितिकण्ठं त्रिलोचनम् । प्रसादसुमुखं वीक्ष्य प्रणेमुर्जातकौतुकाः ॥ २५ ॥
स तान् प्रपन्नार्तिहरो भगवान् धर्मवत्सलः । धर्मज्ञान् शीलसम्पन्नान् प्रीतान् प्रीत उवाच ह॥ २६ ॥

रुद्र उवाच

यूयं बर्हिषदः पुत्रा विदितं वश्चिकीर्षितम् । अनुग्रहाय भद्रं व एवं मे दर्शनं कृतम् ॥ २७ ॥
यः परस्तमसः साक्षात् त्रिगुणाज्जीवसञ्ज्ञितात् । भगवन्तं वासुदेवं प्रपन्नः स प्रियो हि मे ॥ २८ ॥

---

१. जिताऽभवन् यया दिक्षु क्वणयन्त्या चारुनूपुरम् ❋ २. घोरया ❋ ३. विविशुः ❋
४. तप्तहेमनिकाशाभम् ❋

स्वधर्मनिष्ठः शतजन्मभिः पुमान् विरिञ्चतामेति ततः परं हि माम् ।
अव्याकृतं भागवतोऽथ वैष्णवं पदं यथार्ह[१] विविधैः कलात्यये[२] ॥ २९ ॥
अथ भागवता यूयं प्रियाः स्थ भगवान् यथा । न मे भागवतानां च प्रेयानन्योऽस्ति कर्हिचित् ॥
इदं विविक्तं जप्तव्यं पवित्रं मङ्गलं परम् । निश्रेयसकरं चापि श्रूयतां यद् वदामि वः ॥ ३१ ॥

**मैत्रेय उवाच**

इत्यनुक्रोशहृदयो भगवानाह तान् शिवः । बद्धाञ्जलीन् राजपुत्रान् नारायणपरो वचः ॥ ३२ ॥

**रुद्र उवाच**

जितं व आत्मविद्धुर्याः स्वस्तये स्वस्तिरस्तु वः । भवतां राधसे राध्यं सर्वस्मा आत्मने नमः ॥ ३३ ॥
नमः पङ्कजनाभाय भूतसूक्ष्मेन्द्रियात्मने । वासुदेवाय शान्ताय कूटस्थाय स्वरोचिषे ॥ ३४ ॥
सङ्कर्षणाय सूक्ष्माय दुरन्तायान्तकाय च । नमो विश्वप्रबोधाय प्रद्युम्नायान्तरात्मने ॥ ३५ ॥
नमो नमोऽनिरुद्धाय हृषीकेशेन्द्रियात्मने । नमः परमहंसाय पूर्णाय निभृतात्मने ॥ ३६ ॥
स्वर्गापवर्गद्वाराय नित्यं शुचिषदे नमः । नमो हिरण्यवीर्याय चातुर्होत्राय तन्तवे ॥ ३७ ॥
नम ऊर्ज इषे त्रय्याः पतये यज्ञरेतसे । तृप्तिदाय च जीवानां नमः सर्वरसात्मने ॥ ३८ ॥
सर्वसत्त्वात्मदेहाय विशेषाय स्थवीयसे । नमस्त्रैलोक्यपालाय सहओजोबलाय च ॥ ३९ ॥
अर्थलिङ्गाय नभसे नमोऽन्तर्बहिरात्मने । नमः पुण्याय लोकाय अमुष्मै भूरिवर्चसे ॥ ४० ॥
प्रवृत्ताय निवृत्ताय पितृदेवाय कर्मणे । नमो धर्मविपाकाय मृत्यवे दुःखदायिने ॥ ४१ ॥
नमस्त आशिषामीश मनवे कारणात्मने । नमो धर्माय महते[३] कृष्णायाकुण्ठमेधसे ॥ ४२ ॥
पुरुषाय पुराणाय साङ्ख्ययोगेश्वराय च । शक्तित्रयसमेताय मीढुषेऽहङ्कृतात्मने ॥ ४३ ॥
चेतआकूतिरूपाय नमो वाचोविभूतये । दर्शनं नो दिदृक्षूणां देहि भागवतार्चितम् ॥ ४४ ॥
रूपं प्रियतमं स्वानां सर्वेन्द्रियगुणातिगम्[४] । स्निग्धप्रावृड्घनश्यामं[५] सर्वसौन्दर्यसङ्ग्रहम् ॥ ४५ ॥
चार्वायतचतुर्बाहुं सुजातरुचिराननम् । पद्मकोशपलाशाक्षं सुन्दरभ्रु सुनासिकम् ॥ ४६ ॥
सुद्विजं सुकपोलास्यं समकर्णविभूषितम् । प्रीतिप्रहसितापाङ्गमळकैरुपशोभितम् ॥ ४७ ॥
लसत्पङ्कजकिञ्जल्कदुकूलं मृष्टकुण्डलम् । स्फुरत्किरीटवलयहारनूपुरमेखलम् ॥ ४८ ॥

---

१. यथाऽहम् २. विबुधैः कलात्यये ❋ ३. बृहते ४. सर्वेन्द्रियगुणाञ्जनम्
५. स्निग्धप्रायाञ्जनश्यामम् ❋

शङ्खचक्रगदापद्ममालामण्युत्तमर्द्धिमत् । सिंहस्कन्धमुरो बिभ्रत् सौभगग्रीवकौस्तुभम् ॥ ४९ ॥

श्रियाऽनपायिन्याऽऽक्षिप्तं निकषाश्मोरसोल्लसत्[1] । पूररेचकसंविग्नवलिमत्पल्लवोदरम् ॥ ५० ॥

प्रतिसङ्क्रामयद् विश्वं नाभ्याऽऽवर्तगभीरया । श्यामश्रोण्यधिरोचिष्णुदुकूलस्वर्णमेखलम् ॥ ५१ ॥

समचार्वङ्घ्रिजङ्घोरुनिम्नजानुसुदर्शनम् ॥ ५२ ॥

पदा शरत्पद्मपलाशरोचिषा नखद्युभिर्नोऽन्तरघं विधुन्वता[2] ।

प्रदर्शय स्वीयमपास्तसाध्वसं पदं पुरोमार्गगुरुस्तमोजुषाम् ॥ ५३ ॥

एतद् रूपमभिध्येयमात्मशुद्धिमभीप्सताम् । यद्भक्तियोगोऽभयदः स्वधर्ममनुतिष्ठताम् ॥ ५४ ॥

भवान् भक्तिमतां लभ्यो दुर्लभः सर्वदेहिनाम् । स्वाराज्यस्याप्यभिमता एकान्तेनात्मविद्गतिः ॥ ५५ ॥

त्वां दुराराध्यमाराध्य सतामपि दुरापया । एकान्तभक्त्या को वाञ्छेत् पादमूलं विना बहिः ॥ ५६ ॥

यत्र निर्विष्टमरणं कृतान्तो नाभिमन्यते । विश्वं विध्वंसयन् वीर्यशौर्यविस्फूर्जितभ्रुवा ॥ ५७ ॥

क्षणार्धेनापि तुलये न स्वर्गं नापुनर्भवम्[3] । भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥ ५८ ॥

अथानघाङ्घ्रेस्तव कीर्तितीर्थयोरन्तर्बहिः स्नानविधूतपाप्मनाम् ।

भूतेष्वनुक्रोशसुसत्त्वशीलिनां[4] स्यात् सङ्गमोऽनुग्रह एष नस्तव ॥ ५९ ॥

न यस्य चित्तं बहिरर्थविभ्रमं तमोगुहायां च विशुद्धमाविशत् ।

यद्भक्तियोगानुगृहीतमञ्जसा मुनिर्विचष्टे ननु तत्र ते पदम् ॥ ६० ॥

यत्रेदं व्यज्यते विश्वं विश्वस्मिन्न च भाति[5] यत् । तत्त्वं[6] ब्रह्म परं ज्योतिराकाशमिव विस्तृतम् ॥

यो माययेदं पुरुरूपयाऽसृजद् बिभर्ति भूयः क्षपयत्यविक्रियः ।

यद्भेदबुद्धिः सदिवाऽऽत्मदुःस्थया तमाऽऽत्मतन्त्रं[7] भगवन् प्रतीमहि ॥ ६२ ॥

क्रियाकलापैरिदमेव योगिनः श्रद्धान्विताः साधु यजन्ति सिद्धये ।

भूतेन्द्रियान्तःकरणोपलक्षितं वेदे च तन्त्रे च त एव कोविदाः ॥ ६३ ॥

त्वमेक आद्यः पुरुषः सुप्तशक्तिस्तया रजःसत्त्वतमो विभिद्यते ।

महानहं खं मरुदग्निवार्धराः सुरर्षयो भूतगणा इदं यतः ॥ ६४ ॥

---

१. आक्षिप्तनिकषाश्मो.... ❋ २. ध्यातुरघं विधुन्वता ❋ ३. तुल्येत न स्वर्गो नापुनर्भवः ❋
४. ....सुतत्वशीलिनाम् ५. विश्वस्मिन्नवभाति ६. तत् त्वम् ७. तथाऽऽत्मतन्त्रम् ❋/तमात्मतन्त्रम्

सृष्टं स्वशक्त्येदमनुप्रविष्टश्चतुर्विधं[1] पुरमात्मांशकेन ।
अथो विदुस्त्वां पुरुषं सन्तमत्र भुङ्क्ते हृषीकैर्मधु सारघं यतः[2] ॥ ६५ ॥
स एष लोकानतिचण्डवेगो विकर्षसि त्वं खलु कालयानः ।
भूतानि भूतैरनुमेयतत्त्वो घनावलीर्वायुरिवाविषह्यः ॥ ६६ ॥
प्रमत्तमुच्चैरितिकृत्यचिन्तया प्रवृद्धलोभं विषयेषु लालसम् ।
त्वमप्रमत्तः सहसाऽभिपद्यसे क्षुल्लेलिहानोऽहिरिवाखुमन्तकृत्[3] ॥ ६७ ॥
कस्त्वत्पदाब्जं विजहाति पण्डितो यत् ते पुमानप्ययमब्जकेतनः ।
विशङ्कयाऽस्मद्गुरुरर्चति स्म यद् विनोपपत्तिं मनवश्चतुर्दश ॥ ६८ ॥
यत्स्पृष्टोऽहरहर्मुक्तक्लेशः शेतेऽमृताम्बुधौ । तावद् वेदाथ तत् तेऽङ्घ्रिं जनो नु स्मरते च तत् ॥ ६९ ॥
अथ त्वमसि नो ब्रह्मन् परमात्मन् विपश्चिताम् । विश्वं रुद्रभयध्वस्तमकुतश्चिद्भया गतिः ॥ ७० ॥
इदं जपत भद्रं वो विशुद्धा[4] नृपनन्दनाः । स्वधर्ममनुतिष्ठन्तो भगवत्यर्पिताशयाः ॥ ७१ ॥
तमेवात्मानमात्मस्थं सर्वभूतेष्ववस्थितम् । पूजयध्वं गृणन्तश्च ध्यायन्तश्चासकृद्धरिम् ॥ ७२ ॥
योगादेशमुपासाद्य धारयन्तो मुनिव्रताः । समाहितधियः सर्वे एतदभ्यसतादृताः ॥ ७३ ॥
इदमाह पुराऽस्माकं भगवान् विश्वसृक्पतिः । भृग्वादीनामात्मजानां सिसृक्षुः संसिसृक्षताम् ॥ ७४ ॥
ते वयं चोदिताः सर्वे प्रजासर्गे प्रजेश्वराः । अनेन ध्वस्ततमस अस्राक्ष्म विविधाः प्रजाः ॥ ७५ ॥
अथेदं नित्यदा युक्तो जपन्नवहितः पुमान् । अचिराच्छ्रेय आप्नोति वासुदेवपरायणः ॥ ७६ ॥
श्रेयसामिह सर्वेषां ज्ञानं निश्श्रेयसं स्मृतम् । सुखं तरति दुष्पारं ज्ञाननौर्व्यसनार्णवम् ॥ ७७ ॥
य इदं श्रद्धया युक्तो मद्गीतं भगवत्स्तवम् । अधीयानो दुराराध्यं हरिमाराधयत्यसौ ॥ ७८ ॥
विन्दते पुरुषोऽमुष्माद् यद्यदिच्छति सत्वरम् । मद्गीतगीतात् सुप्रीताच्छ्रेयसामेकवल्लभात् ॥ ७९ ॥
य इदं कल्य उत्थाय प्राञ्जलिः श्रद्धयाऽन्वितः । शृणुयाच्छ्रावयेन्मर्त्यो मुच्यते कर्मबन्धनैः ॥ ८० ॥
गीतं मयेदं नरदेवनन्दनाः परस्य पुंसः परमात्मनः स्तवम् ।
जपन्त एकाग्रधियस्तपो महच्चरध्वमन्ते[5] तत आप्स्यथेप्सितम् ॥ ८१ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे चतुर्विंशोऽध्यायः ॥**

---

१. अनुप्रविश्य चतुर्विधम् ❋ २. सारघं यः ❋ ३. अन्तकः ४. विस्रभ्य
५. तपोऽन्वहं चरध्वमन्ते ❋

**मैत्रेय उवाच**

इति सन्दिश्य भगवान् बार्हिषदैरभिपूजितः[१] । पश्यतां राजपुत्राणां तत्रैवान्तर्दधे हरः ॥ १ ॥
रुद्रगीतं भगवतः स्तोत्रं सर्वे प्रचेतसः । जपन्तस्ते तपस्तेपुर्वर्षाणामयुतं जले ॥ २ ॥
प्राचीनबर्हिषं क्षत्तः कर्मस्वासक्तचेतसम् । नारदोऽध्यात्मतत्वज्ञः कृपाळुः प्रत्यबोधयत् ॥ ३ ॥

**नारद उवाच**

श्रेयस्त्वं कतमद् राजन् कर्मणाऽऽत्मन ईहसे । दुःखहानिः सुखावाप्तिः श्रेयस्तन्नेह चेष्यते ॥ ४ ॥

**प्राचीनबर्हिरुवाच**

न जानामि महाभाग परं कर्मापविद्धधीः । ब्रूहि मे विमलं ज्ञानं येन मुच्येय कर्मभिः ॥ ५ ॥

**नारद उवाच**

गृहेषु कूटधर्मेषु पुत्रदारधनार्थधीः । न परं विन्दते मूढो भ्राम्यन् संसारवर्त्मसु ॥ ६ ॥
भोभो प्रजापते राजन् पशून् पश्य त्वयाऽध्वरे । सञ्ज्ञापितान् जीवसङ्घान् निर्घृणेन सहस्रशः ॥ ७ ॥
एते त्वां सम्प्रतीक्षन्ते स्मरन्तो वैशसं तव । सम्परेतमयःकूटैश्छिन्दन्त्युत्थितमन्यवः ॥ ८ ॥
अत्र ते कथयिष्येऽहमितिहासं पुरातनम् । पुरञ्जनस्य चरितं निबोध गदतो मम ॥ ९ ॥
आसीत् पुरञ्जनो नाम राजा राजन् बृहच्छ्रवाः । तस्याविज्ञातनामाऽऽसीत् सखा विज्ञातचेष्टितः ॥
सोऽन्वेषमाणः शरणं बभ्राम पृथिवीं प्रभुः । नानुरूपं यदाऽविन्ददभूत् स विमना इव ॥ ११ ॥
न साधु मेने ताः सर्वा भूतळे यावतीः पुरः । कामान् कामयमानोऽसौ तस्यतस्याभिपत्तये ॥ १२ ॥
स एकदा हिमवतो दक्षिणेष्वथ सानुषु । ददर्श नवभिर्द्वार्भिः[२] पुरीं लक्षितलक्षणाम् ॥ १३ ॥
प्राकारोपवनाट्टालपरिखैरुच्चतोरणैः[३] । स्वर्णरौप्यायसैः शृङ्गैः सङ्कुलां सर्वतो गृहैः ॥ १४ ॥
नीलस्फटिकवैडूर्यमुक्तामरतकारुणैः । क्लृप्तहर्म्यस्थलीं दीप्तां श्रिया भोगवतीमिव ॥ १५ ॥
सभाचत्वररथ्याभिराक्रीडायतनापणैः । चैत्यध्वजपताकाभिर्युक्तां विद्रुमवेदिभिः ॥ १६ ॥
पुर्यास्तु बाह्योपवने दिव्यद्रुमलताकुले । नदद्विहङ्गाळिकुलकोलाहलजलाशये ॥ १७ ॥
हिमनिर्झरविप्रुष्मत्कुसुमाकरवायुना । चलत्प्रवाळविटपिनळिनीतटसम्पदि ॥ १८ ॥
नानारण्यमृगव्रातैरनाबाधे मुनिव्रतैः । आहूतं मन्यते पान्थो यत्र कोकिलकूजितैः ॥ १९ ॥
यदृच्छयाऽऽगतां तत्र ददर्श प्रमदोत्तमाम् । भृत्यैर्दशभिरायान्तीमेकैकशतनायकैः ॥ २० ॥

---

१. बर्हिषदैरभिपूजितः ❋ २. नवभिर्द्वारैः ३. परिखाभिरलङ्कृताम्

तेषां परिवृढो राजन् सर्वेषां बलिमुद्वहन् । सस्त्रीकाणां सखा तस्या बहुरूपोऽग्रणीः स्त्रियः ॥ २१ ॥
पञ्चशीर्षाहिना गुप्तां प्रतीहारेण सर्वतः । अन्वेषमाणामृषभमप्रौढां कामरूपिणीम् ॥ २२ ॥
सुनासां सुदतीं बालां सुकपोलां वराननाम्[1] । समविन्यस्तकर्णाभ्यां बिभ्रतीं कुण्डलश्रियम् ॥ २३ ॥
पिशङ्गनीवीं सुश्रोणीं श्यामां कनकमेखलाम् । पद्भ्यां क्वणद्भ्यां चलतीं नूपुरैर्देवतामिव ॥ २४ ॥
स्तनौ व्यञ्जितकैशोरौ समवृत्तौ निरन्तरौ । वस्त्रान्तेन निगूहन्तीं व्रीळया गजगामिनीम् ॥ २५ ॥
तामाह ललितां[2] वीरः सव्रीळस्मितशोभिनीम् । स्निग्धेनापाङ्गपुङ्खेन स्पृष्टः प्रेमभ्रमद्भ्रुवा ॥ २६ ॥
का त्वं कञ्जपलाशाक्षि कस्यासीह कुतः सति । इमामुपपुरीं भीरु किं चिकीर्षसि शंस मे ॥ २७ ॥
क एतेऽनुपथा एत एकादशमहाभटाः । एता वा ललना सुभ्रु कोऽयं तेऽहिः पुरस्सरः ॥ २८ ॥

त्वं ह्रीर्भवान्यस्यथ वाग् रमा पतिं विचिन्वती किं मुनिवद् रहो वने ।
त्वदङ्घ्रिसाम्याप्तसमस्तकामः क्व पद्मकोशः पतितः कराग्रात् ॥ २९ ॥
नासां वरोर्वन्यतमा भुविस्पृक् पुरीमिमां वीरवरेण साकम् ।
अर्हस्यलङ्कर्तुमदभ्रकर्मणा लोकं परं श्रीरिव यज्ञपुंसा ॥ ३० ॥
यदेष माऽपाङ्गविखण्डितेन्द्रियं सव्रीळहासेक्षणविभ्रमद्भ्रुवः[3] ।
तवोपसृष्टो भगवान् मनोभवः प्रबाधतेऽथानुगृहाण शोभने ॥ ३१ ॥
त्वदाननं सुभ्रु सुतारलोचनं व्याळम्बिनीलाळकवृन्दसंवृतम् ।
उन्नीय मे दर्शय वल्गुवाचकं यद् व्रीळया नाभिमुखं शुचिस्मिते ॥ ३२ ॥

इत्थं पुरञ्जनं नारी याचमानमधीरवत् । अभ्यभाषत तं[4] वीरं हसन्ती वीरमोहिनी ॥ ३३ ॥
न विदाम वयं सम्यक् कर्तारं पुरुषर्षभ । आत्मनश्च परस्यापि[5] गोत्रं नाम च यत् कृतम् ॥ ३४ ॥
इहाद्य सन्तमात्मानं विदाम न ततः परम्[6] । येनेयं निर्मिता वीर पुरी शरणमात्मनः ॥ ३५ ॥
एते सखायः सख्यो मे नरा नार्यश्च मानद । सुप्तायां मयि जागर्ति नागोऽयं पालयन् पुरीम् ॥ ३६ ॥
दिष्ट्याऽऽगतोऽसि भद्रं ते ग्राम्यान् कामानभीप्ससे[7] । उद्वहिष्यामि त्वां स्नेहं स्वबन्धुभिररिन्दम ॥
इमां त्वमभितिष्ठस्व[8] पुरीं नवमुखीं विभो । मयोपनीतान् गृह्णानः कामभोगान् शतं समाः ॥ ३८ ॥

१. सुकपोलवराननाम् ❋ २. लळिताम् ❋ ३. विभ्रमद्भ्रुवा त्वयोपसृष्टः ४. अभ्यनन्दत तम् ❋
५. पुरस्यापि ❋ ६. न च तत्परम् ❋ ७. भोगानभीप्ससे ८. त्वमधितिष्ठस्व

का नु त्वदन्यं रमयेदरतिज्ञमकोविदम् । असाम्परायाभिमुखमश्वस्तनविदं पशुम् ॥ ३९ ॥
धर्मो ह्यत्रार्थकामौ च प्रजानन्दोऽमृतं यशः । लोका विशोका विरजा यान् न केवलिनो विदुः ॥ ४० ॥
पितृदेवर्षिमर्त्यानां भूतानामात्मनश्च ह । क्षेम्यं वदन्ति शरणं भवेऽस्मिन् यद् गृहाश्रमम् ॥ ४१ ॥
का नाम वीर विख्यातं वदान्यं प्रियदर्शनम् । न वृणीत पतिं प्राप्तं मादृशी त्वादृशं स्वयम् ॥ ४२ ॥
कस्या मनस्ते भुजगेन्द्रभोगयोः स्त्रियो न सज्जेद् भुजयोर्महाभुज ।
योऽनाथवर्गाधिमलं घृणोद्धतस्मितावलोकेन चरस्यपोहितुम् ॥ ४३ ॥

**नारद उवाच**

इति तौ दम्पती तत्र समुद्य समयं मिथः । तां प्रविश्य पुरीं राजन् मुमुदाते शतं समाः ॥ ४४ ॥
उपगीयमानो ललितं तत्र तत्र च गायकैः । क्रीडन् परिवृतः स्त्रीभिर्ह्रदिनीमाविशच्छुचौ ॥ ४५ ॥
सप्तोपरि कृता द्वारः[१] पुरस्तस्यास्तु द्वे अधः । पृथग् विषयगत्यर्थं तस्यां यः कश्चनेश्वरः ॥ ४६ ॥
पञ्च द्वारस्तु पौरस्त्या दक्षिणैका तथोत्तरा । पश्चिमे द्वे अमूषां ते नामानि नृप वर्णये ॥ ४७ ॥
खद्योताविर्मुखी च प्राग्द्वारावेकत्र निर्मिते । विभ्राजितं जनपदं याति ताभ्यां द्युमत्सखः ॥ ४८ ॥
नळिनी नाळिनी च प्राग्द्वारावेकतः श्रिते । अवधूतसखस्ताभ्यां विषयं याति सौरभम् ॥ ४९ ॥
मुख्या नाम पुरस्ताद् द्वास्तयाऽऽपणबहूदनौ । विषयौ याति पुरराट् रसज्ञविपणान्वितः ॥ ५० ॥
पितृभूर्नृप पुर्या द्वाः दक्षिणेन पुरञ्जनः । राष्ट्रं दक्षिणपाञ्चालं याति श्रुतधरान्वितः ॥ ५१ ॥
देवभूर्नाम पुर्या द्वा उत्तरेण पुरञ्जनः । राष्ट्रमुत्तरपाञ्चालं याति श्रुतधरान्वितः ॥ ५२ ॥
आसुरी नाम पश्चाद् द्वास्तया याति पुरञ्जनः । ग्राम्यकं नाम विषयं दुर्मदेन समन्वितः ॥ ५३ ॥
निऋऋतिर्नाम पश्चादुद्वास्तया याति पुरञ्जनः । वैशसं नाम विषयं लुब्धकेन समन्वितः ॥ ५४ ॥
अन्धावमीषां[२] पौराणां निर्वाक्योपस्करावुभौ । अक्षण्वतामधिपतिस्ताभ्यां याति करोति च ॥ ५५ ॥
स्वयं त्वन्तःपुरगतो[३] विषूचिना समन्वितः[४] । मोहं प्रसादं हर्षं वा याति जायात्मजोद्भवम् ॥ ५६ ॥
एवं कर्मसु संसक्तः कामात्मा वञ्चितोऽबुधः । महिषी यद्यदीहेत तत्तदेवान्ववर्तत ॥ ५७ ॥
क्वचित् पिबन्त्यां पिबति मदिरां मदविह्वलः । अश्नन्त्यां क्वचिदश्नाति जक्षत्यां सह जक्षति ॥ ५८ ॥
क्वचिद् गायति गायन्त्यां रुदन्त्यां रुदति क्वचित् । क्वचिद्धसन्त्यां हसति जल्पन्त्यामनुजल्पति ॥ ५९ ॥

---

१. वृता द्वारः ❋ २. अन्यावमीषाम् ❋ ३. स्वयं ह्यन्तःपुरगतः ❋ ४. विषूचीनसमन्वितः ❋

क्वचिद्धावति धावन्त्यां तिष्ठन्त्यागनुतिष्ठति । अनुशेते शयानायामन्वास्ते क्वचिदासतीम् ॥ ६० ॥
क्वचिच्छृणोति शृण्वन्त्यां पश्यन्त्यामनुपश्यति । क्वचिज्जिघ्रति जिघ्रन्त्यां स्पृशन्त्यां स्पृशति क्वचित् ॥
क्वचिच्च शोचतीं जायामनुशोचति दीनवत् । अनुहृष्यति हृष्टायां मुदितामनुमोदते ॥ ६२ ॥
विप्रलब्धो महिष्यैवं सर्वप्रकृतिवञ्चितः । नेच्छन्ननुकरोत्यज्ञः क्लैब्यात् क्रीडामृगो यथा ॥ ६३ ॥

॥ इति श्रीमद्भागवते चतुर्थस्कन्धे पञ्चविंशोऽध्यायः ॥

---

नारद उवाच

स एकदा महेश्वासो रथं पञ्चाश्वमाशुगम् । द्विकर्मचक्रमेकाक्षं त्रिवेणुं पञ्चबन्धुरम् ॥ १ ॥
एकरश्म्येकदमनमेकनीडं द्विकूबरम् । पञ्चप्रहरणं सप्तवरूथं पञ्चविक्रमम् ॥ २ ॥
हैमोपस्करमारुह्य स्वर्णवर्माऽक्षयेषुधिः । एकादशचमूनाथः पञ्चप्रस्थमगाद् वनम् ॥ ३ ॥
चचार मृगयां तत्र दृप्त आत्तेषुकार्मुकः । विहाय जायामतदर्हां मृगव्यसनलालसः ॥ ४ ॥
आसुरीं वृत्तिमाश्रित्य घोरात्मा निरनुग्रहः । न्यहनन्निशितैर्बाणैर्वनेषु वनगोचरान् ॥ ५ ॥
तीर्थेषु श्रुतिदृष्टेषु राजा मेध्यान् पशून् वने । यावदर्थमलं लुब्धो हन्यादिति नियम्यते ॥ ६ ॥
य एवं कर्म नियतं विद्वान् कुर्वीत वा नवा[१] । कर्मणा तेन राजेन्द्र ज्ञानेन स न लिप्यते ॥ ७ ॥
अन्यथा कर्म कुर्वाणः कामारूढो निबद्ध्यते । गुणप्रवाहपतितो नष्टप्रज्ञो व्रजत्यधः ॥ ८ ॥
तत्र निर्भिण्णगात्राणां चित्रवाजैः शिलीमुखैः । विप्लवोऽभूद् दुःखितानां दुस्सहः करुणात्मनाम् ॥
शशान् वराहान् महिषान् गवयान् रुरुशल्यकान् । मेध्यानन्यानमेध्यांश्च विनिघ्नन् श्रममध्यगात्[२] ॥
ततः क्षुत्तृट्परिश्रान्तो[३] निवृत्तो गृहमेयिवान् । कृतस्नानोचिताहारः संविवेश गतक्लमः ॥ ११ ॥
आत्मानमर्हयाञ्चक्रे धूपलेपस्रगादिभिः । साध्वलङ्कृतसर्वाङ्गो महिष्यामादधे मनः ॥ १२ ॥
तृप्तो हृष्टः सुदृप्तश्च कन्दर्पाकृष्टमानसः । न व्यचष्ट वरारोहां गृहिणीं गृहमेधिनीम् ॥ १३ ॥
अपि वः कुशलं रामाः सेश्वरीणां यथा पुरा । न तथैतर्हि रोचन्ते गृहेषु गृहसम्पदः ॥ १४ ॥
यदि न स्याद् गृहे माता पत्नी वा पतिदेवता । व्यङ्गे रथ इव प्राज्ञः को नामासीत दीनवत् ॥ १५ ॥
क्व वर्तते सा ललना मज्जन्तं[४] व्यसनार्णवे । या मामुद्धरति प्रज्ञां दीपयन्ती पदेपदे ॥ १६ ॥

---

१. मानवः ❋ २. वनमध्यगात् ❋ ३. ततस्तु तृट्परिश्रान्तः ❋ ४. मज्जती ❋

**रामा ऊचुः**

नरनाथ न जानीमस्त्वत्प्रिया यद् व्यवस्यति । भूतळे निरवस्तारे शयानां पश्य शत्रुहन् ॥ १७ ॥

**नारद उवाच**

पुरञ्जनः स्वमहिषीं निरीक्ष्यावधुतां भुवि । तत्सङ्गोन्मथितज्ञानो वैक्लब्यं परमं ययौ ॥ १८ ॥

सान्त्वयन् श्लक्ष्णया वाचा हृदयेन विदूयता । प्रेयस्याः प्रेमसंरम्भलिङ्गमात्मनि[१] नाध्यगात् ॥ १९ ॥

अनुनिन्येऽथ शनकैर्वीरोऽनुनयकोविदः । पस्पर्श पादयुगळमाह चोत्सङ्गलाळिताम् ॥ २० ॥

नूनं त्वकृतपुण्यास्ते भृत्या येष्वीश्वराः शुभे । कृतागःस्वात्मसात् कृत्वा शिक्षादण्डं न युञ्जते ॥ २१ ॥

परमानुग्रहो दण्डो भृत्येषु प्रभुणाऽर्पितः । बालो न वेद तत् तन्वि बन्धुकृत्यं समर्हणम्[२] ॥ २२ ॥

सा त्वं मुखं सुदति सुभ्रवनुरागभारव्रीळाविळम्बविलसद्धसितावलोकम् ।
नीलाळकाळिभिरुपस्कृतमुन्नसं नः स्वानां प्रदर्शय मनस्विनि वल्गुवाक्यम् ॥ २३ ॥

तस्मिन् दधे दममहं तव वीरपत्नि योऽन्यत्र भूसुरकुलात् कृतकिल्बिषस्तम् ।
पश्ये न वीतभयमुन्मुदितं त्रिलोक्यां क्रुद्धस्य मे मुररिपोरितरत्र दासात् ॥ २४ ॥

वक्त्रं न ते वितिलकं मलिनं विहर्षं संरम्भभीममविमृष्टमपेतरागम् ।
पश्ये स्तनावपि शुचोपहतौ सुजातौ बिम्बाधरं विगतकुङ्कुमपङ्करागम्[३] ॥ २५ ॥

तन्मे प्रसीद सुहृदः कृतकिल्बिषस्य स्वैरं गतस्य मृगयां व्यसनातुरस्य ।
का देवरं वशगतं कुसुमास्त्रवेगविस्रस्तपौंस्यमुशती न भजेत कृत्ये ॥ २६ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे षड्विंशोऽध्यायः ॥**

---

**नारद उवाच**

इत्थं पुरञ्जनं सम्यग् वशमानीय विभ्रमैः । पुरञ्जनी महाराज रेमे रमयती पतिम् ॥ १ ॥

स राजा महिषीं राजन् रुचिराम्बरसंवृताम्[४] । कृतस्वस्त्ययनां तृप्तामभ्यनन्ददुपागताम् ॥ २ ॥

तयोपगूढः परिरब्धकन्धरो रहोऽनुमन्त्रैरपकृष्टचेतनः ।
न कालरंहो बुबुधे दुरत्ययं दिवा निशेति प्रमदापरिग्रहः ॥ ३ ॥

---

१. स्नेहसंरम्भलिङ्गमात्मनि ❋ २. बन्धुकृत्यममर्षणः

३. सुजातौ विन्देय शं विगतकुङ्कुमपङ्करागौ ❋ ४. राजन् सुस्नातां रुचिराम्बराम् ❋

शयान उन्नद्धमदो महामना महार्हतल्पे महिषीभुजोपधे ।
तामेव वीरोऽमनुत व्यवायतस्तमोभिभूतो न निजं परं हि तत्[1] ॥ ४ ॥
तयैवं रममाणस्य कामकश्मलचेतसः । क्षणार्धमिव राजेन्द्र व्यतिक्रान्तं नवं वयः ॥ ५ ॥
तस्यामजीजनत् पुत्रान् पुरञ्जन्यां पुरञ्जनः । शतान्येकादश विराडायुषोऽर्धमथात्यगात् ॥ ६ ॥
दुहितॄर्दशोत्तरशतं पितृभ्रातृयशस्करीः । शीलौदार्यगुणोपेताः पौरञ्जन्यः प्रजापते ॥ ७ ॥
स पाञ्चालपतिः पुत्रान् पितृवंशविवर्धनान् । दारैः संयोजयामास दुहितॄः सदृशैर्वरैः ॥ ८ ॥
पुत्राणां चाभवन् पुत्रा एकैकस्य शतं शतम् । यैर्वै पौरञ्जनो वंशः पाञ्चालेषु समेधितः ॥ ९ ॥
तेषु तद्रिक्थहारेषु गृहकोशानुजीविषु । निगूढेन ममत्वेन विषक्तो नावबुध्यत ॥ १० ॥
ईजे च क्रतुभिर्घोरैर्दीक्षितः[2] पशुमारकैः । देवान् पितॄन् भूतपतीन् नानाकामो यथा भवान् ॥ ११ ॥
युक्तेष्वेवं प्रमत्तस्य कुटुम्बासक्तचेतसः । आससाद स वै कालो योऽप्रियः प्रिययोषिताम् ॥ १२ ॥
चण्डवेग इति ख्यातो गन्धर्वाधिपतिर्नृप । गन्धर्वास्तस्य बलिनः षष्ट्युत्तरशतत्रयम् ॥ १३ ॥
गन्धर्व्यस्तावतीरस्य[3] मैथुन्यश्च सितासिताः । परिवृत्त्या विलुम्पन्ति सर्वकामान् विनिर्मितान् ॥
ते चण्डवेगानुचराः पुरञ्जनपुरीं यदा । हर्तुमारेभिरे तत्र प्रत्यषेधत् प्रजागरः ॥ १५ ॥
स सप्तभिः शतैरेको विंशकेन[4] शतं समाः । पुरञ्जनपुराध्यक्षो गन्धर्वैर्युयुधे बली ॥ १६ ॥
क्षीयमाणे स्वसामर्थ्ये एकस्य[5] बहुभिर्युधि । चिन्तां परां जगामार्तः सराष्ट्रपुरबान्धवः ॥ १७ ॥
स एव पुर्यां मधुभुक् पाञ्चालेषु स्वपार्षदैः । उपनीतं बलिं गृह्णन् स्त्रीजितो नाविदद् भयम् ॥ १८ ॥
कालस्य दुहिता काचित् त्रिलोकीं पतिमिच्छती । पर्यटन्तीं[6] न बर्हिष्मन् प्रत्यनन्दत कश्चन ॥ १९ ॥
दौर्भाग्येनात्मनो लोके विश्रुता दुर्भगेति सा । यां तुष्टो राजऋषये[7] पिताऽदात् पूरवे वरम् ॥ २० ॥
कदाचिदटमाना सा ब्रह्मलोकान्महीं गतम् । वव्रे बृहद्व्रतं मां तु जानन्ती काममोहिता ॥ २१ ॥
मयि संरभ्य विपुलमदाच्छापं सुदुष्षहम् । स्थातुमर्हसि नैकत्र मद्याञ्चाविमुखो मुने ॥ २२ ॥
ततो विहतसङ्कल्पा[8] कन्यका यवनेश्वरम् । मयोपदिष्टमासाद्य वव्रे नाम्ना[9] भयं पतिम् ॥ २३ ॥

---

१. न निजं पदं हि तत् ❋ २. क्रतुभिर्विप्रैर्दीक्षितः ३. गन्धर्व्यस्तादृशीरस्य ❋
४. स सप्तकशतेनैको विंशद्भिश्च ❋ ५. एकस्मिन् ❋ ६. पर्यटन्ती
७. यां तु स्वां राजऋषये ❋ ८. ततो विगतसङ्कल्पा ❋ ९. वव्रे सा च ❋

ऋषभं यवनानां त्वां वृणे वीरेप्सितं पतिम् । सङ्कल्पस्त्वयि भूतानां कृतः किल न रिष्यति ।। २४ ।।
द्वाविमावनुशोचन्ति बालावसदवग्रहौ । यो लोकशास्त्रोपनतं न राति न तदिच्छति ।। २५ ।।
अथो भजस्व मां भद्र भजन्तीं मे दयां कुरु । एतावान् पौरुषो धर्मो यदार्ताननुकम्पते ।। २६ ।।
कालकन्योदितवचो निशम्य यवनेश्वरः । चिकीर्षुर्देवगुह्यं[1] स सस्मितं तामभाषत ।। २७ ।।
मया निरूपितस्तुभ्यं पतिरात्मसमाधिना । नाभिनन्दन्ति लोकोऽयं त्वामभद्रामसम्मताम् ।। २८ ।।
त्वमज्ञातगतिर्भुङ्क्ष्व लोकं कर्मविनिर्मितम् । याहि मे पृतनायुक्ता[2] सोऽप्रजस्त्वां प्रणेष्यति[3] ।। २९ ।।
प्रज्वारोऽयं मम भ्राता त्वं च मे भगिनी भव । चराम्युभाभ्यां लोकेऽस्मिन्नव्यक्तो भीमसैनिकः ।।

**।। इति श्रीमद्भागवते चतुर्थस्कन्धे सप्तविंशोऽध्यायः ।।**

---

**नारद उवाच**

सैनिका भयनाम्नो ये[4] बर्हिष्मन्निष्टकारिणः[5] । प्रज्वारकालकन्याभ्यां विचेरुरवनीमिमाम् ।। १ ।।
त एकदा तु रभसा पुरञ्जनपुरीं नृप । रुरुधुर्भौमभोगाढ्यां जरत्पन्नगपालिताम् ।। २ ।।
कालकन्याऽपि बुभुजे पुरञ्जनपुरीं बलात् । ययाऽभिभूतः पुरुषः सद्यो निस्सारतामियात् ।। ३ ।।
तयोपभुज्यमानां वै यवनाः सर्वतोदिशम् । द्वार्भिः प्रविश्य सुभृशं प्रार्दयन् सकलां पुरीम् ।। ४ ।।
तस्यां सम्पीड्यमानायामभिमानी पुरञ्जनः । अवापोरुविधांस्तापान् कुटुम्बी ममताकुलः ।। ५ ।।
कन्योपगूढो नष्टश्रीः कृपणो विषयात्मकः । नष्टप्रज्ञो हतैश्वर्यो गन्धर्वयवनैर्बलात् ।। ६ ।।
विशीर्णां स्वपुरीं वीक्ष्य प्रतिकूलाननादृतान् । पुत्रपौत्रानुगामात्यान्[6] जायां च गतसौहृदाम् ।। ७ ।।
आत्मानं कन्यया ग्रस्तं पाञ्चालानरिदूषितान् । दुरन्तचिन्तामापन्नो न लेभे तत्प्रतिक्रियाम् ।। ८ ।।
कामानभिलषन् दीनो यातयामांश्च कन्यया । गतात्मसंविन्निस्स्नेहः[7] पुत्रदारांश्च लाळयन् ।। ९ ।।
गन्धर्वयवनाक्रान्तां कालकन्योपमर्दिताम् । हातुं प्रचक्रमे राजा तां पुरीमनिकामतः ।। १० ।।
भयनाम्नोऽग्रजो भ्राता प्रज्वारः प्रत्युपस्थितः । ददाह तां पुरीं कृत्स्नां भ्रातुः प्रियचिकीर्षया ।। ११ ।।
तस्यां सन्दह्यमानायां सपौरः सपरिच्छदः । कौटुम्बिकः कुटुम्बिन्या उपातप्यत सान्वयः[8] ।। १२ ।।

---

१. चिकीर्षितं देवगुह्यम् ❋ २. पृतनामेत्य ❋ ३. साऽप्रजा त्वां प्रणेष्यति ❋
४. भयनाम्नो वै ❋ ५. बर्हिष्मन् दिष्टकारिणः ❋ ६. पुत्रान् पौत्रानमात्यांश्च ❋
७. गतात्मसंविद् विस्नेहः ❋ ८. कुटुम्बिन्यां तप्तायामन्वतप्यत ❋

यवनोपरुद्धायतनो ग्रस्तायां कालकन्यया । पुर्यां प्रज्वारसंस्पृष्टः पुरपालोऽन्वतप्यत ॥ १३ ॥
न शेक उषितुं तत्र पुरुकृच्छ्रोरुवेपथुः । गन्तुमैच्छत् ततो वृक्षकोटरादिव सानलात् ॥ १४ ॥
शिथिलावयवो यर्हि गन्धर्वैर्हृतपौरुषः । यवनैररिभी राजन्नुपरुद्धो रुरोद ह ॥ १५ ॥
दुहितॄः पुत्रपौत्रांश्च जामिजामातृपार्षदान् । स्मृत्वाऽवशिष्टं[1] यत्किञ्चिद् गृहकोशपरिच्छदम् ॥ १६ ॥
अहं ममेति स्वीकृत्य गृहेषु कुमतिर्गृही । दध्यौ प्रमदया दीनो विप्रयोग उपस्थिते ॥ १७ ॥
लोकान्तरं गतवति मय्यनाथा कुडुम्बिनी । वर्तिष्यते कथं त्वेषा बालकाननुशोचती ॥ १८ ॥
न मय्यनशिते भुङ्क्ते[2] नास्नाते स्नाति मत्परा । मयि तुष्टे सुसन्तुष्टा[3] भर्त्सिते[4] यतवाग् भयात् ॥
प्रबोधयति मां नित्यं व्युषिते शोककर्शिता । वर्त्मैतद् गृहमेधीयं वीरसूरपि नेष्यति[5] ॥ २० ॥
कथं नु दारका दीना दारिका मत्परायणाः । वर्तिष्यन्ते मयि गते भिन्ननाव इवोदधौ ॥ २१ ॥
एवं कृपणया बुद्ध्या शोचन्तमतदर्हणम् । ग्रहीतुं[6] कृतधीरेनं भयनामाऽभ्यपद्यत ॥ २२ ॥
पशुवद् यवनेनैनं नीयमानं स्वकं क्षयम् । अन्वद्रवन्ननुपथाः शोचन्तो भृशमातुराः ॥ २३ ॥
पुरीं विहायापगत उपरुद्धो भुजङ्गमः[7] । तदा तमेवानुपुरी विशीर्णा प्रकृतिं गता ॥ २४ ॥
विकृष्यमाणः प्रसभं यवनेन बलीयसा । नाविन्दत् तम आविष्टः[8] सखायं सुहृदं परम् ॥ २५ ॥
तं यज्ञपशवोऽनेन सञ्ज्ञप्ता येऽदयाळुना । कुठारैश्चिच्छिदुः क्रुद्धाः स्मरन्तो वैशसं तु तत् ॥ २६ ॥
अनन्तपारे तमसि मग्नो नष्टस्मृतिः समाः । शाश्वतीरनुभूयार्तीः प्रमदासङ्गदूषितः ॥ २७ ॥
तामेव मनसा गृह्णन् बभूव प्रमदोत्तमा । अनन्तरं विदर्भस्य राजसिंहस्य वेश्मनि* ॥ २८ ॥
उपयेमे वीर्यपणां वैदर्भीं मलयध्वजः । युधि निर्जित्य राजन्यान् पाण्ड्यः परपुरञ्जयः ॥ २९ ॥
तस्यां सञ्जनयाञ्चक्रे आत्मजामसितेक्षणाम् । यवीयसः सप्त सुतान् सप्तद्रमिळभूभृतः ॥ ३० ॥
एकैकस्याभवत् तेषां राजन्नर्बुदमर्बुदम् । भोक्ष्यते यद्वंशधरैर्मही मन्वन्तरं परम् ॥ ३१ ॥
अगस्त्यः प्राग्दुहितरमुपयेमे धृतव्रताम्[9] । तस्यां दृढच्युतो जात इध्मवासात्मजो[10] मुनिः ॥ ३२ ॥

---

१. स्वत्वावशिष्टम्/सत्वावशिष्टम् ❋ २. न मय्यनशितेऽश्नाति ❋ ३. मयि रुष्टे सुसन्त्रस्ता ❋
४. भत्सिते ❋ ५. वीरसूरधि नेष्यति ❋ ६. गृहीतुम् ❋ ७. विहङ्गमः
८. तमसाविष्टः * इदमुत्तरार्धं प्राचीनकोशेषु नास्ति। ९. दृढव्रताम् ❋
१०. इध्मवाहात्मजः ❋

विभज्य तनयेभ्यः क्ष्मां राजर्षिर्मलयध्वजः । आरिराधयिषुः कृष्णं स जगाम कुलाचलम् ॥ ३३ ॥
हित्वा गृहान् सुतान् भोगान् वैदर्भी मदिरेक्षणा । अन्वपद्यत पाण्ड्येशं ज्योत्स्नेव रजनीकरम् ॥ ३४ ॥
तत्र चन्द्रवदा नाम[1] ताम्रपर्णी वटोदका[2] । तत्पुण्यसलिलैर्नित्यमुभयत्रात्मनो मृजन् ॥ ३५ ॥
कन्दादिभिर्मूलफलैः पुष्पपर्णैस्तृणोदकैः । वर्तमानः शनैर्गात्रकर्शनं तप आस्थितः ॥ ३६ ॥
शीतोष्णवातवर्षाणि क्षुत्पिपासे प्रियाप्रिये । सुखदुःखे इति द्वन्द्वान्यजयत् समदर्शनः ॥ ३७ ॥
तपसा विद्यया पक्वकषायो नियमैर्यमैः । युयुजे ब्रह्मणाऽऽत्मानं विजिताक्षानिलाशयः ॥ ३८ ॥
आस्ते स्थाणुरिवैकत्र दिव्यं वर्षशतं स्थितः[3] । वासुदेवे भगवति नान्यद् वेदोद्वहन् रतिम् ॥ ३९ ॥
स व्यापकतयाऽऽत्मानं व्यतिरिक्ततयाऽऽत्मनि । विद्वान् स्वप्न इवामृश्य साक्षिणं विरराम ह ॥ ४० ॥
साक्षाद्भगवतोक्तेन गुरुणा हरिणा नृपः[4] । विशुद्धज्ञानदीपेन स्फुरता विश्वतोमुखम् ॥ ४१ ॥
परे ब्रह्मणि चात्मानं परं ब्रह्म तथाऽऽत्मनि । वीक्षमाणो विहायेक्षामस्मादुपरराम ह ॥ ४२ ॥
पतिं परमधर्मज्ञं वैदर्भी मलयध्वजम् । प्रेम्णा पर्यचरद्धित्वा भोगान् सा पतिदेवता ॥ ४३ ॥
चीरवासा व्रतक्षामा वेणीभूतशिरोरुहा । बभावुप पतिं शान्ता शिखा शान्तमिवानलम् ॥ ४४ ॥
अजानती प्रियतमं यदोपरतमङ्गना । सुस्थिरासनमासाद्य यथापूर्वमुपाचरत् ॥ ४५ ॥
यदा नोपलभेताङ्घ्रावूष्माणं पत्युरर्चती । आसीत् संविग्नहृदया यूथभ्रष्टा मृगी यथा ॥ ४६ ॥
आत्मानं शोचती दीनमबन्धुर्विक्लबाऽश्रुभिः[5] । स्तनावासिच्य विपिने सुस्वरं प्ररुरोद सा[6] ॥ ४७ ॥
उत्तिष्ठोत्तिष्ठ राजर्षे इमामुदधिमेखलाम् । दस्युभ्यः क्षत्रबन्धुभ्यो बिभ्यतीं पातुमर्हसि ॥ ४८ ॥
एवं विलपती बाला विपिनेऽनुगता पतिम् । पतिता पादयोर्भर्तू रुदन्त्यश्रूण्यवर्तयत् ॥ ४९ ॥
चितिं दारुमयीं कृत्वा तस्यां पत्युः कळेबरम् । आदीप्य चानुमरणे विलपन्ती मनो दधे ॥ ५० ॥
तत्र पूर्वतरः कश्चित् सखा ब्राह्मण आत्मवान् । सान्त्वयन् वल्गुना साम्ना तामाह रुदतीं प्रभो[7] ॥
का त्वं कस्यासि को वाऽयं शयानो यस्य शोचसि । जानासि किं सखायं मां येनाग्रे विचचर्थ ह ॥
अपि स्मरसि चात्मानमविज्ञातसखं सखे । हित्वा मां पदमन्विच्छन् भौमभोगरतो गतः[8] ॥ ५३ ॥
हंसावहं च त्वं चार्य सखायौ मानसायनौ । अवात्स्व रमणौ चोभौ[9] सहस्रपरिवत्सरान् ॥ ५४ ॥

---

१. चन्द्रमदा नाम/चन्दवटं नाम ❋ २. वटोदका ❋ ३. स्थिरः ❋ ४. नृप ❋
५. अबन्धुं विक्लबाश्रुभिः ❋ ६. प्ररुरोद ह ❋ ७. विभो ❋ ८. भौमभोगरतोऽग्रतः ❋
९. आवां स्वरमणौ चोभौ ❋

स त्वं विहाय मां बन्धो गतो ग्राम्यमतिर्महीम् । विचरन् पदमद्राक्षीः कयाचिन्निर्मितं स्त्रिया ॥ ५५ ॥
पञ्चारामं नवद्वारमेकपालं त्रिकोष्ठकम् । षट्कूलं पञ्चविपणं पञ्चप्रकृति स्त्रीधवम् ॥ ५६ ॥
पञ्चेन्द्रियार्था आरामा द्वारो घ्राणादयः प्रभो । तेजोबन्नानि कोष्ठानि गोळकेन्द्रियसङ्ग्रहः[1] ॥ ५७ ॥
विपणस्तु क्रियाशक्तिर्भूतप्रकृतिरव्यया । शक्त्यधीशः पुमानत्र प्रविष्टो नावबुद्धचते ॥ ५८ ॥
तस्मिंस्त्वं रामया स्पृष्टो रममाणो हतस्मृतिः[2] । तत्सङ्गादीदृशीं प्राप्तो दशां पापीयसीं विभो ॥ ५९ ॥
न त्वं विदर्भदुहिता नायं वीर सुहृत् प्रभो[3] । न पतिस्त्वं पुरञ्जन्या रुद्धो नवमुखे यया ॥ ६० ॥
माया ह्येषा मया सृष्टा यत् पुमांसं स्त्रियं पतिम् । मन्यसे नोभयं यद् वै[4] हंसं पश्यात्मनो गतिम् ॥
अहं भवान्न चान्यस्त्वं त्वमेवाहं विचक्ष्व भोः । न नौ पश्यन्ति कवयश्छिद्रं जातु मनागपि॥ ६२ ॥
यथा पुरुष आत्मानमेकमादर्शचक्षुषोः । द्विधाभूतमवेक्षेत तथैवान्तरमावयोः ॥ ६३ ॥
एवं स मानसो हंसो हंसेन प्रतिबोधितः । स्वस्थस्तद्व्यभिचारेण नष्टामाप पुनः स्मृतिम् ॥ ६४ ॥
बर्हिष्मन्नेतदध्यात्मं पारोक्ष्येण प्रदर्शितम् । यत् परोक्षप्रियो देवो भगवान् विश्वभावनः ॥ ६५ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे अष्टाविंशोऽध्यायः ॥**

---

**प्राचीनबर्हिरुवाच**

भगवंस्ते वचोऽस्माभिर्न सम्यगवगम्यते । कवयस्तद्विजानन्ति न वयं कर्ममोहिताः ॥ १ ॥

**नारद उवाच**

पुरुषं पुरञ्जनं विद्याद् यद् व्यनक्त्यात्मनः पुरम् । एकद्वित्रिचतुष्पादं बहुपादमपादकम् ॥ २ ॥
योऽविज्ञाताह्वयस्तस्य पुरुषस्य सखेश्वरः । यन्न विज्ञायते रूपैर्नामभिर्वा क्रियागुणैः ॥ ३ ॥
यदा जिघृक्षन् पुरुषः कार्त्स्न्येन प्रकृतेर्गुणान् । नवद्वारं द्विहस्ताङ्घ्रि तत्रामनुत[5] साध्विति ॥ ४ ॥
बुद्धिं तु प्रमदां विद्यान्ममाहमिति यत्कृतम् । यामधिष्ठाय देहेऽस्मिन् पुमान् भुङ्क्तेऽक्षिभिर्गुणान् ॥
सखाय इन्द्रियगणो ज्ञानं कर्म च यत्कृतम् । सख्यस्तद्वृत्तयः प्राणः पञ्चवृत्तिर्यथोरगः ॥ ६ ॥
बृहद्बलं मनो विद्यादुभयेन्द्रियनायकम् । पाञ्चालाः पञ्च विषयाः यन्मध्ये नवखं पुरम् ॥ ७ ॥

---

१. कूलमिन्द्रियसङ्ग्रहः/कुलमिन्द्रिय.... ❋ २. गतस्मृतिः ❋
३. वीर पतिस्तव ४. मन्यसे नौ सखायौ वा ❋ ५. तदाऽमनुत

अक्षिणी नासिके कर्णौ मुखं शिश्नगुदाविति । द्वेद्वे द्वारौ बहिर्याति तत्तदिन्द्रियसंयुतः ॥ ८ ॥
अक्षिणी नासिके आस्यमिति पञ्च पुरस्कृताः । दक्षिणा दक्षिणः कर्ण उत्तरा चोत्तरः स्मृतः ॥ ९ ॥
पश्चिमे इत्यधोद्वारौ गुदशिश्नाविहोदिते । खद्योताविर्मुखी चात्र नेत्रे एकत्र निर्मिते ॥ १० ॥
रूपं विभ्राजितं ताभ्यां विचष्टे चक्षुषेश्वरः । नळिनी नाळिनी नासे गन्धः सौरभ उच्यते ॥ ११ ॥
घ्राणोऽवधूतो मुख्याऽऽस्यं विपणो वाग् रसविद् रसः । आपणो व्यवहारोऽत्र चित्रमन्धो बहूदनम्॥
पितृभूर्दक्षिणः कर्ण उत्तरो देवभूः स्मृतः । प्रवृत्तं च निवृत्तं च शास्त्रं पाञ्चालसञ्ज्ञितम् ॥ १३ ॥
पितृयानं देवयानं श्रोत्रं श्रुतधरो[1] व्रजेत् । आसुरी मेहनार्था द्वार्व्यवायो ग्रामिणां रतिः ॥ १४ ॥
उपस्थो दुर्मदः प्रोक्तो निर्ऋतिर्गुद उच्यते । वैशसं नरकं पायुर्लुब्धकोऽन्धौ तु मे शृणु ॥ १५ ॥
हस्तपादौ पुमांस्ताभ्यां युक्तो याति करोति च । अन्तःपुरं च हृदयं विषूचिर्मन उच्यते[2] ॥ १६ ॥
तत्र मोहं प्रसादं वा हर्षं प्राप्नोति तद्गुणैः । यथायथा विक्रियते गुणाक्तो विकरोति वा[3] ॥ १७ ॥
तथातथोपद्रष्टाऽऽत्मा तद्वृत्तिरिति कीर्त्यते[4] । देहो रथस्त्विन्द्रियाश्वः संवत्सरवयोगतिः ॥ १८ ॥
द्विकर्मचक्रस्त्रिगुणध्वजः पञ्चासुबन्धुरः । मनोरश्मिर्बुद्धिसूतो हृन्नीडो द्वन्द्वकूबरः ॥ १९ ॥
पञ्चेन्द्रियार्थप्रक्षेपः सप्तधातुवरूथकः । आकूतिर्विक्रमो बाह्यो मृगतृष्णां प्रधावति ॥ २० ॥
एकादशेन्द्रियचमूः पञ्चसूनाविनोदकृत् । संवत्सरश्चण्डवेगः कालो येनोपलक्षितः ॥ २१ ॥
तस्याहानीह गन्धर्वा गन्धर्व्यो रात्रयः स्मृताः । हरन्त्यायुः परिक्रान्त्या षष्ट्युत्तरशतत्रयम् ॥ २२ ॥
कालकन्या जरा साक्षाल्लोको यां नाभिनन्दति । स्वसारं जगृहे मृत्युः क्षयाय यवनेश्वरः ॥ २३ ॥
आधयो व्याधयस्तस्य सैनिका यवनाः खलाः । भूतोपसर्गा अरयः प्रज्वारो विविधो ज्वरः[5] ॥
एवं बहुविधैर्दुःखैर्दैवभूतात्मसम्भवैः । क्लिश्यमानः शतं वर्षं देहे देही तमोवृतः ॥ २५ ॥
प्राणेन्द्रियमनोधर्मानात्मन्यध्यस्य निर्गुणः[6] । शेते कामलवं ध्यायन् ममाहमिति कर्मकृत् ॥ २६ ॥
यदाऽऽत्मानमविज्ञाय भगवन्तं परं गुरुम् । पुरुषस्तु विषज्जेत गुणेषु प्राकृतेष्वदृक् ॥ २७ ॥
गुणाभिमानी स तदा कर्माणि कुरुतेऽवशः । शुक्लं कृष्णं लोहितं वा यथाकर्माभिजायते[7] ॥ २८ ॥

---

१. श्रोत्रश्रुतधरः ❋ २. विषूचीर्मन उच्यते ❋ ३. विकरोति च ❋
४. तथा तस्योपद्रष्टाऽऽत्मा तद्वृत्तिरनुकीर्त्यते ❋ ५. द्विविधो ज्वरः ❋ ६. निर्गुणे ❋
७. यथा तदभिजायते ❋

शुक्लान् प्रकाशभूयिष्ठान् लोकानाप्नोति कर्हिचित् ।
दुःखोदर्कान् क्रियायासान् तमश्शोकोत्कटान् क्वचित् ॥ २९ ॥

क्वचित् पुमान् क्वचिच्च स्त्री क्वचिन्नोभयमन्धधीः । देवो मनुष्यस्तिर्यग् वा यथाकर्मगुणं भवः॥ ३० ॥
क्षुत्परीतो यथा दीनः सारमेयो गृहंगृहम् । चरन् विन्दति यद् दिष्टं दण्डमोदनमेव वा ॥ ३१ ॥
तथा कामाशयो जीव उच्चावचपथा[१] भ्रमन् । उपर्यधो वा मध्ये वा याति दिष्टं प्रियाप्रियम् ॥ ३२ ॥
दुःखेष्वेकतरेणापि दैवभूतात्महेतुषु । जीवस्य न व्यवच्छेदः स्याच्चेत् तत् तत्प्रतिक्रिया[२] ॥ ३३ ॥
यथा हि पुरुषो भारं शिरसा गुरुमुद्वहन् । तं स्कन्धेन स आधत्ते तथा सर्वाः प्रतिक्रियाः ॥ ३४ ॥
नैकान्ततः प्रतीकारः कर्मणां कर्म केवलम् । द्वयं ह्यविद्योपसृतं स्वप्ने स्वप्न इवानघ ॥ ३५ ॥
अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते । मनसा लिङ्गभूतेन स्वप्ने विचरतो यथा ॥ ३६ ॥
अथात्मनोऽर्थभूतस्य यतोऽनर्थपरम्परा । संसृतिस्तद्व्यवच्छेदो भक्त्या परमया हरौ ॥ ३७ ॥
वासुदेवे भगवति भक्तियोगः समाहितः । सध्रीचीनेन वैराग्यं ज्ञानं च जनयिष्यति ॥ ३८ ॥
सोऽचिरादेव राजर्षे स्यादच्युतकथाश्रयः । शृण्वतः श्रद्दधानस्य नित्यदा स्यादधीयतः ॥ ३९ ॥
यत्र भागवता राजन् साधवो विशदाशयाः । भगवद्गुणानुकथनश्रवणाव्यग्रचेतसः ॥ ४० ॥

तस्मिन् महन्मुखरिता मधुभिच्चरित्रपीयूषतोयसरितः परितः स्रवन्ति ।
ता ये पिबन्त्यनुसवं[३] नृप गाढकर्णैस्तान् न स्पृशन्त्यशनतृड्भयशोकमोहाः ॥ ४१ ॥

एतैरुपद्रुतो नित्यं जीवलोकः स्वभावजैः । न करोति हरेर्नूनं कथामृतनिधौ रतिम् ॥ ४२ ॥
प्रजापतिपतिः साक्षाद्भगवान् गिरिशो मनुः । दक्षादयः प्रजाध्यक्षा नैष्ठिकाः सनकादयः ॥ ४३ ॥
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । भृगुर्वसिष्ठ इत्येते मदन्ता ब्रह्मवादिनः ॥ ४४ ॥
अद्यापि वाचस्पतयस्तपोविद्यासमाधिभिः । पश्यन्तोऽपि न पश्यन्ति तद् विष्णोः परमं पदम् ॥
शब्दब्रह्मणि दुष्पारे चरन्त उरुविस्तरे । मन्त्रलिङ्गैर्व्यवच्छिन्नं भजन्तो न विदुः परम् ॥ ४६ ॥
सर्वेषामपि[४] जन्तूनां सन्ततं देहपोषणे[५] । अस्ति प्रज्ञा समायत्ता को विशेषस्तया नृणाम् ॥ ४७ ॥
लब्ध्वेहान्ते मनुष्यत्वं हित्वा देहाद्यसद्ग्रहम् । आत्मसृत्या विहायेदं जीवात्मा स विशिष्यते[६] ॥ ४८ ॥

---

१. उच्चावचतया ❋ २. स्याच्चेत् तत्र प्रतिक्रिया ❋ ३. ता ये पिबन्त्यतितृषम् ❋
४. सर्वेषामिह ❋ ५. देहसन्तत्यपोषणे ❋ ६. जीवात्माऽसौ विशिष्यते ❋

यदा[१] यस्यानुगृह्णाति भगवानात्मभावितः। स जहाति मतिं लोके वेदे च परिनिष्ठिताम् ॥ ४९ ॥
तस्मात् कर्मसु बर्हिष्मन्नज्ञानादर्थकाशिषु[२]। माऽर्थदृष्टिं कृथाः श्रोत्रस्पर्शिष्वस्पृष्टवस्तुषु ॥ ५० ॥
स्वलोकं[३] न विदुस्ते वै यत्र देवो जनार्दनः। आहुर्धूम्रधियो वेदं सकर्मकमतद्विदः ॥ ५१ ॥
आस्तीर्य दर्भैः प्रागग्रैः कार्त्स्न्येन क्षितिमण्डलम्। ततो बृहद्वधान्मानी कर्म नावैषि यत् परम् ॥ ५२ ॥
तत् कर्म हरितोषं यत् सा विद्या तन्मतिर्यया। हरिर्देहभृतामात्मा स्वयं प्रकृतिरीश्वरः ॥ ५३ ॥
तत्पादमूलं शरणं यतः क्षेमो नृणामिह। स वै प्रियतमो ह्यस्य[४] यतो न भयमण्वपि।
इति वेद स वै विद्वान् यो विद्वान् स्वगुरुर्हरिः[५] ॥ ५४ ॥
प्रश्न एवं हि सञ्छिन्नो भवतः पुरुषर्षभ। अत्र मे वदतो गुह्यं निशामय सुनिश्चितम् ॥ ५५ ॥
क्षुद्रश्चरं सुमनसां शरणे मिथित्वा रक्तं षडङ्घ्रिगणसामसुलुब्धकर्णम्।
अग्रे वृकानसुहृदोऽविगणय्य[६] यान्तं पृष्ठे मृगं मृगय लुब्धकबाणभिन्नम् ॥

अस्यार्थः सुमनसः सधर्माणां स्त्रीणां शरण आश्रमे पुष्पमधुगन्धवत् क्षुद्रतरं काम्यकर्मविपाकजं कामसुखलवं जैह्वचौपस्थ्यादि विचिन्वन्तं मिथुनीभूय तदभिनिवेशितमनसं षडङ्घ्रिगणसामगीतवदतिमनोहरवनिताजनालापेष्वतितरामतिप्रलोभितकर्णमग्रे वृकयूथवदात्मन आयुर्हरतोऽहोरात्रादिकालविशेषानविगणय्य गृहेषु विहरन्तं पृष्ठत एव परोक्षमनुप्रवृत्तो लुब्धकः कृतान्तः शरेण यमिह पराविध्यति तमिममात्मानमहो राजन् भिन्नहृदयं द्रष्टुमर्हसि यथा मृगयुहतं मृगमिति ॥ ५६ ॥

स त्वं विचक्ष्व मृगचेष्टितमात्मनोऽन्तश्चित्तं नियच्छ हृदि कर्णधुनीं च चित्तिम्[७]।
जह्यङ्गनाश्रममसत्तमयूथगाथं प्रीणीहि हंसशरणं विरम क्रमेण ॥ ५७ ॥

राजोवाच

श्रुतमन्वीक्षितं ब्रह्मन् भगवान् यदभाषत। नैतज्जानन्त्युपाध्यायाः किन्न ब्रूयुर्विदुर्यदि ॥ ५८ ॥
संशयोऽत्र न[८] मे विप्र सञ्छिन्नस्तत्कृते महान्। ऋषयोऽपि हि मुह्यन्ति यत्र नेन्द्रियवृत्तयः ॥
कर्माण्यारभते येन पुमानिह विहाय तम्। अमुत्रान्येन देहेन जुष्टानि स यदश्नुते ॥ ६० ॥
इति वेदविदां वाचः श्रूयन्ते तत्रतत्र ह। कर्म च क्रियते प्रोक्तं परोक्षं न प्रकाशते ॥ ६१ ॥

---

१. तदा ❋ २. अज्ञानादर्थकारिषु ❋ ३. स्वं लोकम् ❋ ४. स वै प्रियतमोऽथास्य ❋
५. स गुरुर्हरिः ❋ ६. असुहृतोऽविगणय्य ❋ ७. कर्णधुनिं च चित्तम् ❋ ८. अत्र तु ❋

नारद उवाच

येनैवारभते कर्म तेनैवामुत्र तत् पुमान् । भुङ्क्ते ह्यव्यवधानेन लिङ्गेन मनसा स्वकम् ॥ ६२ ॥
शयानमिममुत्सृज्य[1] श्वसन्तं पुरुषो यथा । कर्मात्मन्याहितं भुङ्क्ते तादृशेनेतरेण वा ॥ ६३ ॥
ममेति मनसा यद्यदसावहमिति ब्रुवन् । गृह्णीयात् तत् पुमान् राद्धं कर्म येन पुनर्भवः ॥ ६४ ॥
यथाऽनुमीयते चित्तमुभयैरिन्द्रियेहितैः । एवं प्राग्देहजं कर्म लक्ष्यते चित्तवृत्तिभिः ॥ ६५ ॥
नानुभूतं क चानेन देहेनादृष्टमश्रुतम् । कदाचिदुपलभ्येत यद्रूपं यादृगात्मनि ॥ ६६ ॥
तेनास्य तादृशो राजन् लिङ्गिनो देहसम्भवः । श्रद्धत्स्वाननुभूतार्थं न मनः स्प्रष्टुमर्हति ॥ ६७ ॥
मन एव मनुष्यस्य पूर्वरूपाणि शंसति । भविष्यतश्च भद्रं ते तथैव नभविष्यतः ॥ ६८ ॥
अदृष्टमश्रुतं चेह[2] क्वचिन्मनसि दृश्यते । यथा तथाऽनुमन्तव्यं देशकालक्रियाश्रयम् ॥ ६९ ॥
सर्वे क्रमानुरोधेन मनसीन्द्रियगोचराः । आयान्ति वर्गशो यान्ति सर्वे सुभनसो जवात् ॥ ७० ॥
सत्त्वैकनिष्ठे मनसि भगवत्पार्श्ववर्तिनि । तमश्चन्द्रमसीवेदमुपरज्यावभासते ॥ ७१ ॥
नाहम्ममेति भावोऽयं पुरुषे व्यवधीयते । यावद् बुद्धिमनोक्षार्थगुणव्यूहो ह्यनादिमान् ॥ ७२ ॥
सुप्तिमूर्च्छोपतापेषु प्राणायनविघाततः । नेहतेऽहमिति ज्ञानं मृत्युप्रज्वारयोरपि ॥ ७३ ॥
गर्भे बाल्येऽप्यपौष्कळ्यादेकादशविधं तदा । लिङ्गं न दृश्यतेऽयूनः कुह्वां चन्द्रमसो यथा[3] ॥ ७४ ॥
अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते । ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ ७५ ॥
एकं पञ्चविधं लिङ्गं त्रिवृत् षोडशविस्तरम् । एष चेतनया युक्तो जीव इत्यभिधीयते ॥ ७६ ॥
अनेन पुरुषो देहानुपादत्ते विमुञ्चति । हर्षं शोकं भयं दुःखं सुखं चानेन विन्दति ॥ ७७ ॥
यथा तृणजलूका च नोपयात्यपयाति च[4] । न त्यजेन्म्रियमाणोऽपि प्राग्देहाभिमतिं जनः ।
यावदन्यं न विन्देत व्यवधानेन कर्मणाम्[5] ॥ ७८ ॥
मन एव मनुष्येन्द्र भूतानां भवभावनम् । यदक्षैश्चरितं ध्यायन् कर्माण्याचिनुतेऽसकृत् ॥ ७९ ॥
सति कर्मण्यविद्यायां बन्धः कर्मण्य आत्मनः । अतस्तदपबाधार्थं भज सर्वात्मना हरिम् ॥ ८० ॥
पश्यंस्तदात्मकं विश्वं स्थित्युत्पत्त्यप्यया यतः ॥ ८१ ॥

---

१. अमुमुत्सृज्य ❋ २. अदृष्टमश्रुतं चात्र ❋ ३. पुंसां चन्द्रमसो यथा ❋
४. यथा तृणंजळू राजन्नुपयात्यपयाति च ❋ ५. कर्मणा ❋

भक्तिः कृष्णे दया जीवेष्वकुण्ठज्ञानमात्मनि । यदि[१] स्यादात्मनो भूयादपवर्गस्तु संसृतेः ॥ ८२ ॥

अदृष्टं दृष्टवन्नङ्क्षेद् भूतं स्वप्नवदन्यथा । भूतं भवद् भविष्यच्च सुप्तं सर्वरहो रहः ॥ ८३ ॥

**मैत्रेय उवाच**

भागवतमुख्यो भगवान् नारदो हंसयोर्गतिम् । प्रदर्श्य नृपमामन्त्र्य सिद्धलोकं ततोऽगमत् ॥ ८४ ॥

प्राचीनबर्ही राजर्षिः प्रजासर्गाभिरक्षणे । आदिश्य पुत्रानगमत्[२] तपसे कपिलाश्रमम् ॥ ८५ ॥

तत्रैकाग्रमना धीरो गोविन्दचरणाम्बुजम् । विमुक्तसङ्गोऽनुभजन् भक्त्या तत्साम्यतामगात् ॥ ८६ ॥

एतदध्यात्मपारोक्ष्यं गीतं देवर्षिणाऽनघ । यःश्रावयेद् यः शृणुयात् स लिङ्गेन विमुच्यते ॥ ८७ ॥

एतन्मुकुन्दयशसा भुवनं पुनानं देवर्षिवर्यमुखनिःसृतमात्मशौचम् ।
यः कीर्त्यमानमधिगच्छति पारमेष्ठ्यं नास्मिन् भवे भ्रमति मुक्तसमस्तबन्धः ॥ ८८ ॥

अध्यात्मपारोक्ष्यमिदं मयाऽधिगतमद्भुतम् । एवं त्र्याश्रयः पुंसश्छिन्नोऽमुत्र च संशयः ॥ ८९ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे एकोनत्रिंशोऽध्यायः ॥**

---

**विदुर उवाच**

ये त्वयाऽभिहिता ब्रह्मन् सुताः प्राचीनबर्हिषः । ते रुद्रगीतेन हरिं सिद्धिमापुः प्रतोष्य काम् ॥ १ ॥

किं चेह नार्हन्त्यपरत्र वा सुखं[३] कैवल्यनाथप्रियपार्श्ववर्तिनः ।
आसाद्य देवं गिरिशं यदृच्छया प्रापुः परं नूनमथ प्रचेतसः ॥ २ ॥

**मैत्रेय उवाच**

प्रचेतसोऽन्तरुदधौ पितुरादेशकारिणः । जपयज्ञेन तपसा पुरञ्जनमतोषयन् ॥ ३ ॥

दशवर्षसहस्रान्ते[४] पुरुषस्तु सनातनः । तेषामाविरभूत् कृच्छ्रं शान्तेन शमयन् रुचा ॥ ४ ॥

सुपर्णस्कन्धमारूढो मेरुशृङ्गमिवाम्बुदः । पीतवासा मणिग्रीवः कुर्वन् वितिमिरा दिशः ॥ ५ ॥

कासिष्णुना कनककर्णविभूषणेन[५] भ्राजत्कपोलवदनो विलसत्किरीटः ।
आत्तायुधैरनुचरैर्मुनिभिः सुरेशैरासेवितो गरुडकिन्नरगीतकीर्तिः ॥ ६ ॥

---

१. यर्हि ❋ २. आमन्त्र्य पुत्रानगमत् ❋ ३. किञ्चेह नार्हन्ति परत्र वाऽथ ❋
४. दशवर्षसहस्रान्ते ❋ ५. काशिष्णुना कनककुण्डलभूषणेन ❋

पीनायताष्टभुजमण्डलमध्यलक्ष्म्या स्पर्धच्छ्रिया परिवृतो वनमालयाऽऽद्यः ।
बर्हिष्मतः पुरुष आह सुतान् प्रपन्नान् पर्जन्यनादरुतया सघृणावलोकः ॥ ७ ॥

**श्रीभगवानुवाच**

वरं वृणीध्वं भद्रं वो यूयं मे नृपनन्दनाः । सौहार्देनापृथग्धर्मास्तुष्टोऽहं सौहृदेन वः ॥ ८ ॥
योऽनुस्मरति शय्यायां[1] युष्माननुदितं नरः । तस्य भ्रातृष्वात्मसाम्यं तथा भूतेषु सौहृदम् ॥ ९ ॥
ये तु मां रुद्रगीतेन सायम्प्रातः समाहिताः । स्तुवन्त्यहं कामवरान् दास्ये प्रज्ञां च शोभनाम् ॥ १० ॥
यद् यूयं पितुरादेशमग्रहीष्ट मुदाऽन्विताः । अतो व उशती कीर्तिर्लोकाननु भविष्यति ॥ ११ ॥
भविता विश्रुतः पुत्रोऽनवमो ब्रह्मणो गुणैः । य एतामात्मवीर्येण त्रिलोकीं पूरयिष्यति ॥ १२ ॥
कण्डोः प्रम्लोचया लब्धा कन्या कमललोचना । तां चापविद्धां जगृहुर्भूरुहा नृपनन्दनाः ॥ १३ ॥
क्षुत्क्षामाया मुखे राजा सोमः पीयूषवर्षिणीम् । देशिनीं रोदमानाया निदधे स दयान्वितः ॥ १४ ॥
प्रजाविसर्ग आदिष्टाः पित्रा मामनुवर्तिताः[2] । तत्र कन्यां वरारोहां तामुद्वहत माचिरम् ॥ १५ ॥
अपृथग्धर्मशीलानां सर्वेषां वः सुमध्यमा । अपृथग्धर्मशीलेयं भूयात् पत्न्यर्पिता मया ॥ १६ ॥
दिव्यवर्षसहस्राणां सहस्रममितौजसः । भौमान् भोक्ष्यथ भोगान् वै दिव्यांश्चानुग्रहान्मम ॥ १७ ॥
अथ मय्यनपायिन्या भक्त्या पक्वगुणाशयाः । उपयास्यथ मद्धाम निर्विद्य निरयादतः ॥ १८ ॥
गृहेष्वाविशतां चापि पुंसां कुशलकर्मणाम् । मद्वार्तायातयामानां न बन्धाय गृहा मताः ॥ १९ ॥
न व्यवह्रियते यज्ञो ब्रह्मैतद् ब्रह्मवादिभिः । न मुह्यन्ति न शोचन्ति न हृष्यन्ति यतो गताः ॥ २० ॥

**मैत्रेय उवाच**

एवं ब्रुवाणं पुरुषार्थसाधनं जनार्दनं प्राञ्जलयः प्रचेतसः ।
तद्दर्शनध्वस्ततमोरजोमला गिराऽगृणन् गद्गदया सुहृत्तमम् ॥ २१ ॥

**प्रचेतस ऊचुः**

नमोनमः क्लेशविनाशनाय निरूपितोदारगुणाह्वयाय ।
मनोवचोवेगपुरोजवाय सर्वाक्षमार्गैरगताध्वने नमः[3] ॥ २२ ॥
शुद्धाय शान्ताय नमः स्वनिष्ठमनस्यपार्थे विलसद्द्वयाय ।
नमो जगत्स्थानलयोदयेषु गृहीतमायागुणविग्रहाय ॥ २३ ॥

---

१. सन्ध्यायाम् २. मामनुवर्तता ३. सर्वार्थमार्गैरगताध्वने नमः ❋

नमो विशुद्धसत्त्वाय[१] हरये हरिमेधसे । वासुदेवाय कृष्णाय प्रभवे सर्वसात्वताम् ॥ २४ ॥
नमः कमलनाभाय नमः कमलमालिने । नमः कमलपादाय नमस्ते कमलेक्षण ॥ २५ ॥
नमः कमलकिञ्जल्कपिशङ्गामलवाससे । सर्वभूतनिवासाय नमोऽयुङ्क्ष्महि साक्षिणे[२] ॥ २६ ॥
रूपं भगवता त्वेतदशेषक्लेशसङ्क्षयम् । आविष्कृतं नः क्लिष्टानां किमन्यदनुकम्पया ॥ २७ ॥
एतावदेव विभुभिर्भाव्यं दीनेषु वत्सलैः । यदनुस्मर्यते काले स्वबुद्ध्याऽभद्ररन्धन ॥ २८ ॥
येनावैषि हि भूतानां क्षुल्लकानामपीहितम् । योऽन्तर्हितोऽन्तर्हृदये कस्मान्नो वेद नाशिषः ॥ २९ ॥
असावेव वरोऽस्माकमीप्सितो जगतां पते । प्रसन्नो भगवानेषामपवर्गगुरुर्गतिः ॥ ३० ॥
वरं वृणीमहेऽथापि नाथ त्वत् परतः परात्[३] । नह्यन्तस्त्वद्विभूतीनां योऽनन्त[४] इति गीयते ॥ ३१ ॥
पारिजातेऽञ्जसा लब्धे सारङ्गोऽन्यन्न सेवते । त्वदङ्घ्रिमूलमासाद्य साक्षात् किंकिं वृणीमहे[५] ॥ ३२ ॥
यावत् ते मायया स्पृष्टा भ्रमाम इह कर्मभिः । तावद् भवत्प्रसङ्गानां सङ्गः स्यान्नो भवेभवे ॥ ३३ ॥
तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् । भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥ ३४ ॥
यत्रेड्यन्ते कथा मृष्टास्तृष्णायाः प्रशमो यतः । निर्वैरं यत्र भूतेषु नोद्वेगो यत्र कश्चन ॥ ३५ ॥
यत्र नारायणः साक्षाद् भगवान् न्यासिनां गतिः । प्रस्तूयते सत्कथासु मुक्तसङ्गैः पुनःपुनः ॥ ३६ ॥
तेषां विचरतां पद्भ्यां तीर्थानां पावनेच्छया । भीतस्य किं न रोचेत तावकानां समागमः ॥ ३७ ॥

वयं तु साक्षाद्भगवत्प्रियस्य प्रियस्य सख्युः क्षणसङ्गमेन ।
सुदुश्चिकित्सस्य भवस्य मृत्योर्भिषक्तमं त्वाऽद्य गतिं गताः स्मः ॥ ३८ ॥
यन्नः स्वधीतं गुरवः प्रसादिता विप्राश्च वृद्धाश्च सदाऽनुवृत्त्या ।
आर्या अनाथाः सुहृदो भ्रातरश्च सर्वाणि भूतान्यनसूययैव ॥ ३९ ॥
यन्नः सुतप्तं तप एतदीश निरन्धसां कालमदभ्रमप्सु ।
सर्वं तदेतत् पुरुषस्य भूम्नो वृणीमहे ते परितोषणाय ॥ ४० ॥
मनुः स्वयम्भूर्भगवान् भवश्च येऽन्ये तपोज्ञानविशुद्धसत्त्वाः ।
अदृष्टपारा[६] अपि यन्महिम्नः स्तुवन्त्यथो त्वाऽऽत्मसमं गृणीमः ॥ ४१ ॥

---

१. नमो विशुद्धतत्त्वाय ❋ २. नमोऽयुञ्ज्महि साक्षिणे ❋ ३. त्वद् वरदर्षभात् ❋
४. न ह्यन्तो यद्विभूतीनां सोऽनन्तः ❋ ५. वृणीमहि ❋ ६. अदृष्टसारा अपि ❋

नमः समाय शुद्धाय पुरुषाय पराय च । वासुदेवाय सत्वाय तुभ्यं भगवते नमः ॥ ४२ ॥

**मैत्रेय उवाच**

इति प्रचेतोभिरभिष्टुतो हरिः प्रीतस्तथेत्याह शरण्यवत्सलः ।
अनिच्छतां यानमतृप्तचक्षुषां ययौ स्वधामानपवर्गविक्रमः ॥ ४३ ॥

अथ निर्याय सलिलात् प्रचेतस उदन्वतः । वीक्ष्याकुप्यन् द्रुमैश्छन्नां गामारोद्धुमिवोच्छ्रितैः[१] ॥ ४४ ॥
ततोऽग्निमारुतौ राजन्नमुञ्चन् मुखतो रुषा । महीं निर्वीरुधां कर्तुं सांवर्तक इवाप्यये ॥ ४५ ॥
भस्मसात् क्रियमाणांस्तान् द्रुमान् वीक्ष्य पितामहः । आगतः शमयामास पुत्रान् बर्हिष्मतो नयैः ॥
तत्रावशिष्टा ये वृक्षा भीता दुहितरं तदा । आजह्रुस्ते प्रचेतोभ्य उपदिष्टाः स्वयम्भुवा ॥ ४७ ॥
ते च ब्रह्मण आदेशान्मारिषामुपयेमिरे । यस्यां महदवज्ञानादजन्यजनयोनिजः ॥ ४८ ॥
चाक्षुषे त्वन्तरे प्राप्ते प्राक्सर्गे कालविप्लुते । यः ससर्ज प्रजाः स्रष्टा स दक्षो दैवचोदितः ॥ ४९ ॥
यो न्यक्चकार सर्वेषां तेजस्तेजस्विनां रुचा । स्वयोग्योपात्तदाक्ष्याच्च[२] कर्मणा दक्षमब्रुवन् ॥ ५० ॥
तं प्रजासर्गरक्षायामनादिर्भगवानजः । युयोज युयुजुस्तं वै सर्वेऽन्ये च प्रजेश्वराः ॥ ५१ ॥

**॥ इति श्रीमद्भागवते चतुर्थस्कन्धे त्रिंशोऽध्यायः ॥**

---

**मैत्रेय उवाच**

तत उत्पन्नविज्ञाना आश्वधोक्षजभाषितम्[३] । स्मरन्त आत्मजे भार्यां विसृज्य प्राव्रजन् गृहात् ॥ १ ॥
दीक्षिता ब्रह्मसत्रेण सर्वभूतात्ममेधसा । प्रतीच्यां दिशि वेलायां सिद्धोऽभूद् यत्र जाजलिः ॥ २ ॥

तान् निर्जितप्राणमनोवचोदृशो जितासनाञ्छान्तसमानविग्रहान् ।
परेऽमले ब्रह्मणि योजितात्मनः सुरासुरेड्यो ददृशे स्म नारदः ॥ ३ ॥

तमागतं त उत्थाय प्रणिपत्याभिनन्द्य च । पूजयित्वा यथादेशं सुखासीनमथाब्रुवन् ॥ ४ ॥
स्वागतं ते सुरर्षेऽद्य दिष्ट्या नो दर्शनं गतः । तव चङ्क्रमणं ब्रह्मन्नभयाय यथा रवेः ॥ ५ ॥
यदादिष्टं[४] भगवता शिवेनाधोक्षजेन च । तद् गृहेषु प्रसक्तानां प्रायशः क्षपितं[५] प्रभो ॥ ६ ॥

---

१. गां द्यां रोद्धुमिवोच्छ्रितैः ❋ २. स्वयोगोपात्तदाक्ष्याच्च ❋ ३. अप्स्वधोक्षजभाषितम् ❋
४. यथाऽऽदिष्टम् ❋ ५. प्रायो नः क्षपितम् ❋

तन्नः प्रद्योतयाध्यात्मज्ञानं तत्त्वार्थदर्शनम् । येनाञ्जसा तरिष्यामो दुस्तरं भवसागरम् ॥ ७ ॥

**मैत्रेय उवाच**

इति प्रचेतसा पृष्टो भगवान् नारदो मुनिः । भगवत्युत्तमश्लोक आविष्टात्माऽब्रवीन्नृपान् ॥ ८ ॥

**नारद उवाच**

तज्जन्म तानि कर्माणि तदायुस्तन्मनोवचः । नृणां येन हि विश्वात्मा सेव्यते हरिरीश्वरः ॥ ९ ॥

किं जन्मभिस्त्रिभिर्वेह शुक्लसावित्रयाज्ञिकैः । कर्मभिर्वा त्रयीप्रोक्तैः पुंसोऽपि विबुधायुषा ॥ १० ॥

श्रुतेन तपसा वा किं वचोभिश्चित्तवृत्तिभिः । बुद्ध्या वा किं निपुणया बलेनेन्द्रियराधसा ॥ ११ ॥

किं वा योगेन साङ्ख्येन न्यासस्वाध्याययोरपि । किं वा श्रेयोभिरन्यैश्च न यत्रात्मप्रदो हरिः ॥ १२ ॥

श्रेयसामपि सर्वेषामात्मा ह्यवधिरर्थितः । सर्वेषामपि भूतानां हरिरात्माऽऽत्मदः प्रियः ॥ १३ ॥

यथा तरोर्मूलनिषेवणेन[1] तृप्यन्ति तत्स्कन्धभुवो विशाखाः[2] ।
प्राणोपहारोऽत्र[3] यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या ॥ १४ ॥

यथैव सूर्यात् प्रभवन्ति गावः पुनश्च तस्मिन् प्रविशन्ति काले ।
भूतानि भूमौ स्थिरजङ्गमानि तथा हरावेव गुणप्रवाहः[4] ॥ १५ ॥

एतत् परं तज्जगदात्मनः पदं सकृद् विभातं सवितुर्यथा प्रभा ।
यदाऽसवो जाग्रति सुप्तवृत्तयो द्रव्यक्रियाकारकविभ्रमात्ययः ॥ १६ ॥

यथा नभस्यभ्रतमःप्रकाशा भवन्ति भूयो न भवन्त्यनुक्रमात् ।
एवं परे ब्रह्मणि शक्तयस्त्वमू रजस्तमस्सत्वमिति प्रवाहः ॥ १७ ॥

तेनैवमात्मानमशेषदेहिनां कालं प्रधानं पुरुषं परेशम् ।
स्वतेजसा ध्वस्तगुणप्रवाहमात्मैकभावेन भजध्वमद्धा ॥ १८ ॥

निरस्तसङ्कल्पविकल्पमद्वयं द्वयापवादोपरमोपलम्भनम् ।
अनादिमध्यान्तमजस्रनिर्वृतिं सञ्ज्ञप्तिमात्रं भजतामुया दृशा ॥ १९ ॥

दयया सर्वभूतेषु सन्तुष्ट्या येन केन वा । सर्वेन्द्रियोपशान्त्या च तुष्यत्याशु जनार्दनः ॥ २० ॥

अपगतसकलेषणामलात्मन्यविरतमेधितभावनोपहूतः ।
निजजनवशगत्वमाप्तवान् यन्न सरति च्छिद्रवदक्षरः सतां हि ॥ २१ ॥

---

१. मूलनिषेचनेन ❋ २. तत्स्कन्धभुजोपशाखाः ❋ ३. प्राणोपहाराच्च ४. गुणप्रवाहाः ❋

न भजति कुमनीषिणां स इज्यां हरिरधनात्मधनप्रियो रसज्ञः ।
श्रुतधनकुलकर्मणां मदैर्ये विदधति पापमकिञ्चनेषु सत्सु ॥ २२ ॥
श्रियमनुसरतीं तदर्थिनश्च द्विपदपतीन् विबुधांश्च यः स्वपूर्णः ।
न भजति निजभृत्यवर्गतन्त्रः कथममुमुद्विसृजेत् पुमान् कृतज्ञः ॥ २३ ॥
भवतां वंशधुर्योऽभूद् ध्रुवश्चित्ररथः स्वराट् । गुरुदारवचोबाणैर्निर्भिण्णहृदयोऽर्भकः ॥ २४ ॥
त्यक्त्वा स्त्रैणं च तं गच्छन् दृष्टो मे पथ्युदारधीः । पञ्चवर्षो मदादेशैः संराध्य पुरुषेश्वरम् ॥ २५ ॥
तत् परं[1] सर्वधिष्ण्येभ्यो मायाधिष्ठितमारुहत् । मुनयोऽद्याप्युदीक्षन्ते परं नापुरवाङ् नृपाः ॥ २६ ॥
तं यूयं सर्वभूतानामन्तर्यामिणमीश्वरम् । रुद्रादिष्टोपदेशेन भजध्वं भवनुत्तये ॥ २७ ॥

**मैत्रेय उवाच**

इति प्रचेतसां राजन्नन्यांश्च भगवत्कथाः । श्रावयित्वा ब्रह्मलोकं ययौ स्वायम्भुवो मुनिः ॥ २८ ॥
तेऽपि तन्मुखनिर्यातं यशो लोकमलापहम् । हरेर्निशम्य तत्पादं ध्यायन्तस्तद्गतिं ययुः ॥ २९ ॥
एतत् तेऽभिहितं क्षत्तर्यन्मां त्वं परिपृष्टवान् । प्रचेतसां नारदस्य संवादं हरिकीर्तनम् ॥ ३० ॥
य एष उत्तानपदो मानवस्यानुवर्णितः । वंशं[2] प्रियव्रतस्यापि निबोध नृपसम्मतम् ॥ ३१ ॥
यो नारदादात्मविद्यामधिगम्य पुनर्महीम् । भुक्त्वा विभज्य पुत्रेभ्य ऐश्वरं समगात् पदम् ॥ ३२ ॥
इत्थं स कौषारविणोपवर्णितां क्षत्ता निशम्याजितपादसत्कथाम् ।
प्रवृद्धभावाश्रुकळाकुलो मुनेर्दधार मूर्ध्ना चरणं हृदा हरेः ॥ ३३ ॥

**विदुर उवाच**

सोऽयं तेन महायोगिन् भवता करुणात्मना । दर्शितस्तमसः पारो यत्राकिञ्चनगो हरिः ॥ ३४ ॥

**श्रीशुक उवाच**

इत्यानम्य तमामन्त्र्य विदुरो गजसाह्वयम् । स्वानां दिदृक्षुः प्रययौ ज्ञातीनां निर्वृताशयः ॥ ३५ ॥
एतद् यः शृणुयाद् राजन् राज्ञां हर्यर्पितात्मनाम् । आयुर्धनं यशः स्वस्ति गतिमैश्वर्यमाप्नुयात् ॥ ३६ ॥

**॥इति श्रीमद्भागवते महापुराणे पारमहंस्यामष्टादशसाहस्र्यां संहितायां वैयासक्यां चतुर्थस्कन्धे एकत्रिंशोऽध्यायः॥**

## ॥ समाप्तश्च चतुर्थस्कन्धः ॥

---

१. तत्परः ❋ २. वंशः ❋

# ॥ अथ पञ्चमस्कन्धः ॥

## राजोवाच

प्रियव्रतो भागवत आत्मारामः कथं मुने। गृहेऽरमत यन्मूलः कर्मबन्धः पराभवः ॥ १ ॥

न नूनं मुक्तसङ्गानां तादृशानां महामुने। गृहेष्वभिनिवेशोऽयं पुंसां भवितुमर्हति ॥ २ ॥

महतां खलु विप्रर्षे ह्युत्तमश्लोकपादयोः। छायानिर्वृतचित्तानां न कुटुम्बे स्पृहामतिः ॥ ३ ॥

संशयोऽयं महान् ब्रह्मन् दारागारसुतादिषु। सक्तस्य यत्सिद्धिरभूत् कृष्णे च मतिरच्युता ॥ ४ ॥

## श्रीशुक उवाच

बाढमुक्तं भगवत उत्तमश्लोकस्य श्रीमच्चरणारविन्दमकरन्दरस आदित आवेशितचेतसो भागवत-पारमहंस्यदयितः कथञ्चिदन्तरायविहतां स्वां शिवतमां पदवीं न प्रायेण हि हिन्वन्[1] ॥ ५ ॥

यर्हि वाव स राजपुत्रः प्रियव्रतः परमभागवतो नारदस्य चरणोपसेवयाऽञ्जसाऽवगतपरमार्थ-सुतत्त्वो[2] ब्रह्मसत्रेण दीक्षिष्यमाणोऽवनितळपरिपालनायाम्नातप्रवरगुणगणैकान्तभाजनतया स्वपित्रोपा-मन्त्रितो भगवति वासुदेव एवाव्यवधानसमाधियोगेन समावेशितसकलकारकक्रियाकलापो नैवाभ्य-नन्दत्। यदपि तदप्रत्याम्नातव्यं तदधिकरण आत्मनोऽन्यस्मादसतो यदा पराभवमन्वीक्षमाणः ॥

अथ ह भगवानादिदेव एतस्य गुणविसर्गस्य परिबृंहणानुध्यानव्यवसितसकलजगदभिप्राय आत्मयोनिरखिलनिगमनिजगणपरिवेष्टितः स्वभवनादवततार ॥ ७ ॥

तत्रतत्र गगनतळ उडुपतिरिव विमानावळिभिरनुपथममरपरिवृढैरभिपूज्यमानः पथिपथि च वरूथशः सिद्धगन्धर्वसाध्यचारणमुनिगणैरुपगीयमानो गन्धमादनद्रोणीमवभासयन्नुपससर्प ॥ ८ ॥

तत्र हवाव एनं[3] देवर्षिः हंसयानेन पितरं भगवन्तं हिरण्यगर्भमुपलभमानः सहसैव सह पितापुत्राभ्यामवहिताञ्जलिरुपतस्थे ॥ ९ ॥

भगवानपि भारत तदुपनीतार्हणः [4]सूक्तवाकेनातितरामुदितगुणगणावतारसुविजयः[5] प्रियव्रतमादि-पुरुषस्तं सदयहासावलोक इति होवाच ॥ १० ॥

## श्रीभगवानुवाच

निबोध तातेदमृतं ब्रवीमि माऽसूयितुं देवमर्हस्यमेयम्।
अहं भवस्ते तत एष महर्षिर्वहाम सर्वे विवशा यस्य दिष्टम् ॥ ११ ॥

---

१. प्रायेण हिन्वन् ❋ २. ....परमार्थसत्तत्त्वः ❋ ३. तत्र हवा एतम् ❋
४. सूक्तवाक्येन ५. गुणावतारसुविजयः ❋

न तस्य कश्चित् तपसा विद्यया वा न योगवीर्येण मनीषया वा ।
नैवार्थधर्मैः परतः स्वतो वा कृतं विहन्तुं तनुभृद् विभूयात् ॥ १२ ॥
भवाय नाशाय च कर्म कर्तुं शोकाय मोहाय सदा भयाय ।
सुखाय दुःखाय च देहयोगमव्यक्तदिष्टं जनताऽङ्ग धत्ते ॥ १३ ॥
यद्वाचि तन्त्र्यां[१] गुणकर्मनामभिः स्वदामभिर्वत्स वयं सुयोजिताः ।
सर्वे वहामो बलिमीश्वराय प्रोता नसीव द्विपदे चतुष्पदः ॥ १४ ॥
ईशातिसृष्टं[२] ह्यवरुन्ध्महेऽङ्ग दुःखं सुखं वा गुणकर्मसङ्गात् ।
आस्थाय तत्तद् यद्युङ्क्त[३] नाथश्चक्षुष्मताऽन्धा इव नीयमानाः ॥ १५ ॥
मुक्तोऽपि तावद् बिभृयात् स्वदेहमारब्धमश्नन्नभिमानशून्यः ।
यथोपयातं प्रतियातनिद्रः किन्त्वन्यदेहाय गुणान् न वृङ्क्ते ॥ १६ ॥
भयं प्रमत्तस्य वनेष्वपि स्याद् यतो वसन्ते सह षट् सपत्नाः ।
जितेन्द्रियस्यात्मरतेर्बुधस्य गृहाश्रमः किन्नु करोत्यवद्यम् ॥ १७ ॥
यः षट् सपत्नान् विजिगीषमाणो गृहेषु निर्विद्य यतेत पूर्वम् ।
युध्येत दुर्गाश्रित ऊर्जितारीन् क्षीणेषु कामं विचरेद् विपश्चित् ॥ १८ ॥
त्वं त्वब्जनाभाङ्घ्रिसरोजकोशदुर्गाश्रितो निर्जितषट्सपत्नः ।
भुङ्क्ष्वेह भोगान् पुरुषातिसृष्टान् विमुक्तसङ्गः प्रकृतिं भजस्व ॥ १९ ॥

**श्रीशुक उवाच**

इति समभिहितो महाभागवतो भगवतस्त्रिभुवनगुरोरनुशासनमात्मनो लघुतयाऽवनतशिरोधरो बाढमिति सबहुमानमुवाह ॥ भगवानपि मनुना यथावदुपकल्पितापचितिः प्रियव्रतनारदयोरनिमिषमभिसमीक्षमाणयोरात्मसमवस्थानमवाङ्मनस[४]क्षयमव्यवहितमगमत् । ॥ २०-२१ ॥

मनुरपि परेणैवेत्थं समभिसन्धितमनोरथः[५] सुरर्षिवरानुमतेनात्मजमखिलधरामण्डलस्थितिगुप्तय आस्थाप्य स्वयमतिविषयविषमविषजलाशयादुपरराम । ॥ २२ ॥

इति ह वाव स जगतीपतिरीश्वरेच्छयाधिनिवेशितकर्माधिकारो[६]ऽखिलजगद्बन्धध्वंसनपरानुभावस्य

---

१. तन्त्याम्  २. ईशावसृष्टम्  ३. आस्थाय तद् यद्यद्युङ्क्त
४. समवस्थानं वाङ्मनसोः क्षयम् ❋  ५. प्रतिसन्धितमनोरथः/परेण समभि... ❋
६. विनिवेशितकर्माधिकारः ❋

भगवत आदिपुरुषस्याङ्घ्रियुगळानवरतध्यानानुभावेन परिरन्धितकषायाशयावदातोऽपि मानवर्धनो महतां महीतळमनुशशास ॥ २३ ॥

अथ ह दुहितरं प्रजापतेर्विश्वकर्मण उपयेमे बर्हिष्मतीं नाम । तस्यामुहवा आत्मजानात्मसमानशीलगुणकर्मरूपवीर्योदारान् दश भावयाम्बभूव । कन्यां च यवीयसीमूर्जस्वतीं नाम ॥२४॥

आग्नीध्रेध्मजिह्वयज्विबाहु[१]महावीरहिरण्यरेतोघृतपृष्ठसवनमेधातिथिवीतिहोत्रकवय इति सर्व एवाग्निनामानः ॥ एतेषां कविर्महावीरः सवन इति त्रय आसन्नूर्ध्वरेतसः । त आत्मविद्यायामर्भकभावादारभ्य कृतपरिचयाः पारमहंस्यमेवाश्रममभजन् ॥ २५-२६ ॥

तस्मिन्नुहवा उपशमशीलाः[२] परमऋषयः सकलजीवनिकायावासस्य भगवतो वासुदेवस्य संसारभीतानां शरणभूतस्य श्रीमच्चरणारविन्दाविरतस्मृतिविगळितपरमभक्तियोगानुभावेन परिभावितान्तर्हृदयाधिगते भगवति सर्वेषां भूतानामात्मभूते प्रत्यगात्मन्येव तादात्म्यमविशेषेण समीयुः ॥

अन्यस्यामपि भार्यायां त्रयः पुत्रा आसन् । उत्तमस्तापसो रैवत इति मन्वन्तराधिपतयः ॥

एवमुपशमायनेषु स्वतनयेष्वथ जगतीपतिर्जगतीमर्बुदान्येकादशपरिवत्सराणामव्याहताखिलपुरुषकारसारसम्भृत[३]दोर्दण्डयुगळापीडितकोदण्डमौर्वीगुणस्तनितविरमितधर्मप्रतिपक्षो बर्हिष्मत्यां चानुदिनमेधमानप्रमोद[४]प्रसरणपोषणव्रीळाप्रमुषितहासावलोकरुचिरक्ष्वेळनादिभिः पराभूयमानविवेकोऽनवबुध्यमान इव महामना बुभुजे ॥ २९ ॥

यावदवभासयति सुरगिरिमनुपरिक्रामन् भगवानादित्यो वसुधातळमर्धेनैव प्रतपति अर्धेनैवाच्छादयति तदा हि भगवदुपासनोपचितातिपुरुषप्रभावस्तदनभिनन्दन् समजवेन रथेन ज्योतिर्मयेन रजनीमपि दिनं करिष्यामीति सप्तकृत्वस्तरणिमनुपर्याक्रामन्[५] द्वितीय इव पतङ्गः ॥ या वा इह तद्रथचरणनेमिकृतपरिघास्ताः[६] सप्तसिन्धव आसन् यत एव कृताः सप्त भुवो द्वीपाः ॥ जम्बूप्लक्षशाल्मलि[७]कुशक्रौञ्चशाकपुष्करसञ्ज्ञाः । तेषां परिमाणं पूर्वस्मादुत्तरोत्तरं[८] यथासङ्ख्यं द्विगुणेन बहिः समन्तत उपक्लृप्ताः ॥ ३०-३२ ॥

लवणोदसुरसोदसुरोद[९]घृतोदक्षीरोददधिमण्डोदशुद्धोदाः सप्त जलधयः सप्तद्वीपपरिघा अभ्यन्तर-

---

१. यज्वबाहु   २. उपरमशीलाः ❋   ३. सारभूत...   ४. एधमानप्रमद...❋

५. पर्याक्रमत्/परिक्रामन्   ६. ....परिखास्ताः   ७. जम्बु....❋ एवमुत्तरत्रापि

८. उत्तरोत्तरे   ९. लवणोदेक्षुरसोदसुरोद....

द्वीपसमाना एकैकशो यथानुपूर्व्यं[1] सप्तस्वपि बहिर्द्वीपेषु पृथक्पृथक् परित उपकल्पिताः । तेषु जम्ब्वादिषु बर्हिष्मतीपतिरनुवृत्तानात्मजानाग्नीध्रेध्मजिह्वयज्विबाहुहिरण्यरेतोघृतपृष्ठमेधातिथि-वीतिहोत्रसञ्ज्ञान् यथासङ्ख्यमेकैकस्मिन्नेकैकमेवाधिपतिं विदधे ॥ ३३ ॥

दुहितरमूर्जस्वतीं नामोशनसे प्रायच्छद् यस्यामासीद् देवयानी नाम काव्यसुता ॥ ३४ ॥

नैवंविधः पुरुषकार उरुक्रमस्य पुंसां तदङ्घ्रिरजसा जितषड्गुणानाम् ।
चित्रं विदूरविगतः सकृदाददीत यन्नामधेयमधुना स जहाति बन्धम् ॥ ३५ ॥

स एवमपरिमितबलपराक्रम एकदा तु देवर्षिचरणानुसेवयाऽनुपतितगुणविसर्गसंसर्गेणा-निवृत्तमिवात्मानं[2] मन्यमान आत्तनिर्वेद इदमाह ॥ ३६ ॥

अहो असाध्वनुष्ठितं यदभिनिवेशितोऽहमिन्द्रियैरविद्याविरचितविषमविषयान्धकूपे तदलमलं मनुष्यवनिताविनोदमृगं मां धिग्धिगिति गर्हयाञ्चकार ॥ ३७ ॥

परदेवताप्रसादाधिगतात्मप्रत्यवमर्शनपरिनिर्वृतोऽनुवृत्तेभ्यः पुत्रेभ्य[3] इमां गां यथादायं विभज्य भुक्तभोगां च महिषीं मृतकमिव स ह महाविभूतिमपहाय स्वयं निहितनिर्वेदो हृदि गृहीतरुचिरहरिविहारानुभावो भगवतो नारदस्य पदवीं पुनरेवानुससार[4] ॥ ३८ ॥

**तस्य ह वा एते श्लोकाः ।**

प्रियव्रतकृतं कर्म को नु कुर्याद् विनेश्वरम् । यो नेमिनिम्नैरकरोच्छायां घ्नन् सप्त वारिधीन् ॥ ३९ ॥
भूसंस्थानं कृतं येन सरिद्गिरिवनादिभिः । सीमा च भूतनिर्वृत्यै द्वीपेद्वीपे विभागशः ॥ ४० ॥
भौमं दिव्यं मानसं च[5] महित्वं योगकर्मजम् । यश्चक्रे निरयौपम्यं पौरुषं तु जनप्रियम्[6] ॥ ४१ ॥

**॥ इति श्रीमद्भागवते पञ्चमस्कन्धे प्रथमोऽध्यायः ॥**

---

**श्रीशुक उवाच**

एवं पितरि सन्निवृत्ते[7] तदनुशासने वर्तमान आग्नीध्रो जम्बुद्वीपौकसः प्रजा औरसवद् धर्मानवेक्षमाणः[8] पर्यगोपायत् ॥ १ ॥

स कदाचित् पितृलोककामः सुरवरवनिताक्रीडाचलद्रोण्यां भगवन्तं विश्वसृजां पतिमाहृत-परिचर्योपकरण आत्मैकाग्र्येण तपसाऽऽराधयाम्बभूव ॥ २ ॥

---

१. यथानुपूर्वम् २. अनिर्वृतमिवात्मानम् ३. स्वपुत्रेभ्यः ४. पदवीमनुससार
५. मानुषम् ६. पुरुषानुजनप्रियः ७. संवृत्ते ८. धर्ममवेक्षमाणः

तदुपलभ्य[1] भगवानादिपुरुषः सदसि गायन्तीं पूर्वचित्तिं नामाप्सरसमभियापयामास ॥

सा च तदाश्रमोपवनमतिरमणीयविविधनिबिडविटपिविटपनिकटपुटलताकुटिलरूढस्थलविहङ्गम-मिथुनैः प्लाव्यमानश्रुतिभिः [2]प्रबोध्यमानसलिलकुक्कुटकारण्डवकळहंसादिभिर्विचित्रमुपकूजितामल-जलाशयरूढकमलाकरमुप बभ्राम ॥ ४ ॥

तस्याः सुलळितपदविन्यासगतिविलासेनानुपदं खणखणायमानरुचिरचरणाभरणस्वनमुपाकर्ण्य नरदेवकुमारः समाधियोगेनामीलितनयननळिनमुकुलयुगळमीषद् विकचय्याचष्ट[3] ॥ ५ ॥

तामेवाविदूरे विलोक्य मधुकरीमिव[4] सुमनस उपजिघ्रन्तीं दिविजमनुजमनोनयनाह्लाददुघैर्गति-विहारविनयविलोकनसुस्वराक्षरावयवैर्मनसि नृणां कुसुमायुधस्य विदधतीं विवरम् ॥ ६ ॥

निजमुखविगळितमदासवामोदमदान्धमधुकरनिकरोपरोधेन द्रुतपदविन्यासवल्गुस्पन्दनस्तन-कलशकबरहाररशनां देवीं तदवलोकनेन विधृतावसरस्य[5] भगवतो मकरध्वजस्य वशमुपनीतो जडवदिति होवाच ॥ ७ ॥

**आग्नीध्र उवाच**

का त्वं चिकीर्षसि च किं मुनिवर्य शैले मायाऽसि काऽपि भगवन् परदेवतायाः[6] ।
विज्ये बिभर्षि धनुषी सुहृदात्मनोऽर्थे किं वा मृगान् मृगयसे विपिने प्रमत्तान् ॥ ८ ॥
बाणाविमौ भगवतः शतपत्रपत्रौ शान्तावपुङ्खरुचिरावतितिग्मदन्तौ ।
कस्मै युयुङ्क्षसि वने विचरन् न विद्मः क्षेमाय नो जडधियां तव विक्रमोऽस्तु ॥ ९ ॥
शिष्या इमे भगवतः परितः पठन्ति गायन्ति साम सरहस्यमजस्रमीश ।
युष्मच्छिखाविलुळिताः सुमनोभिवृष्टीः सर्वे भजन्त्यृषिगणा इव वेदशाखाः ॥ १० ॥
वाचं परं चरणपङ्कजतित्तिरीणां ब्रह्मन्नरूपमुखरीं शृणुमोऽद्य तुभ्यम् ।
लब्धा कदम्बरुचिराङ्कविटङ्कबिम्बे[7] यस्यामलातुपरिधिः[8] क्व च वल्कला ते॥ ११ ॥
किं सम्भृतं रुचिरयोर्द्विज शृङ्गयोस्ते मध्येकृशो वहसि यत्र दृशिः श्रिता मे[9] ।
पङ्कोऽरुणः सुरभिरात्मविषाण ईदृग् येनाश्रमं सुभग मे सुरभीकरोषि ॥ १२ ॥

---

१. एतदुपलभ्य २. प्रतिबोध्यमान.... ३. विकास्य व्याचष्ट ❋/आचष्ट
४. अविदूरे मधुकरीव ५. विवृतावसरस्य ६. भगवत्परदेवतायाः
७. कदम्बरुचिरङ्क.... ८. अलातपरिधिः ९. दृशी श्रिते मे

लोकं प्रदर्शय सुहृत्तम तावकं मे यत्रत्य इत्थमुरसाऽवयवावपूर्वौ ।
अस्मद्विधस्य मनउन्नयनौ बिभर्षि बह्वद्भुतं सरसहाससुधां[१] च वक्त्रे ॥ १३ ॥
का वाऽऽत्मवृत्तिरदनाद् बहिरङ्ग भाति विष्णोः कलाऽस्यनिमिषन्मकरौ च कर्णौ
उद्विग्नमीनयुगळं द्विजपङ्क्तिशोभि[२] चासन्नभृङ्गनिकरं सर उन्मुखं ते ॥ १४ ॥
योऽसौ त्वया करसरोजहतः पतङ्गो दिक्षु भ्रमन् भ्रमत एजयतेऽक्षिणी ते ।
युक्तं न ते स्म वरवक्रजटावरूथं कष्टोऽनिलो[३] हरति लम्पट एष नीवीम्॥ १५ ॥
रूपं तपोधन तपश्चरतां तपोघ्नं ह्येतत् तु केन तपसा भवतेह लब्धम् ।
चर्तुं तपोऽर्हसि मया सह मित्र मह्यं किं वा प्रसीदसि स वै भवभावनो मे ॥ १६ ॥
न त्वां त्यजामि दयितं द्विज देवदत्तं यस्मिन् मनो दृगपि वा न वियाति लग्नम् ।
मां चारुशृङ्गार्हसि नेतुमनुव्रतं ते चित्तं यतः प्रतिसरन्तु शिवाः सचिव्यः ॥ १७ ॥

**श्रीशुक उवाच**

इति ललनानुनयातिविशारदो ग्राम्यवैदग्ध्यया परिभाषया तां विबुधवधूमिति सभाजयामास ॥

सा च ततस्तस्य वीरयूथपतेर्बुद्धिशीलरूपविद्यावयःश्रियौदार्यैः पराक्षिप्तमनास्तेन[४] सहायुतायुत-परिवत्सरोपलक्षणं कालं जम्बुद्वीपपतिना भौमस्वर्गभोगान्[५] बुभुजे ॥ १९ ॥

तस्यामु हवा आत्मजान् स राजवर[६] आग्नीध्रो नाभिकिम्पुरुषहरिवर्षेळावृतरम्यकहिरण्मयकुरु-भद्राश्वकेतुमालसञ्ज्ञान् नवाजनयत्[७] सा सूत्वा तु[८] पुत्रान् नवानुवत्सरं गृह एवापहाय पूर्वचित्तिर्भूय एवाजं देवमुपतस्थे ॥ २० ॥

आग्नीध्रसुतास्ते मातुरनुग्रहादौत्पत्तिकेनैव संहननबलोपेताः पित्रा विभक्तान्यात्मतुल्यनामानि[९] यथाभागं जम्बूद्वीपवर्षाणि बुभुजुः ॥ २१ ॥

आग्नीध्रो राजपुत्रस्तामप्सरसमेवानुदिनमभिमन्यमानस्तस्याः सलोकतां श्रुतिभिरवरुन्धन् ईजे यत्र पितरो मादयन्ते[१०] ॥ २२ ॥

---

१. सरसराससुधाम् ❋ २. द्विजपङ्क्तिशोचिरासन्न.... ❋ ३. वरवक्रजटावरूथः कृष्णोऽनिलः ❋
४. बुद्धिशीलरूपयशःश्रियौदार्यगुणपराक्षिप्तमनास्तेन ❋/....श्रियौदार्येण ५. भूस्वर्गभोगान्
६. राजवर्यः ७. नव भावयाम्बभूव ❋ ८. सूत्वाऽथ ❋
९. विभक्ता आत्मतुल्यनामानि १०. मोदयन्ते

सम्परेते पितरि नव भ्रातरो मेरुदुहितॄर्मेरुदेवीं प्रतिरूपामुग्रदंष्ट्रीं लतां रामां श्यामां नारीं भद्रां देवीमिति नवसञ्ज्ञा नवोदवहन् ॥ २३ ॥

**॥ इति श्रीमद्भागवते पञ्चमस्कन्धे द्वितीयोऽध्यायः ॥**

---

**श्रीशुक उवाच**

नाभिरपत्यकामोऽप्रजया मेरुदेव्या भगवन्तं यज्ञपुरुषमवहितात्माऽयजत ॥ १ ॥

तस्य हवाव श्रद्धया विशुद्धभावेन यजतः प्रवर्ग्येषु प्रचरत्सु द्रव्यदेशकालमन्त्रर्त्विग्दक्षिणाविधानयोगोपपत्त्या दुरधिगमोऽपि भगवान् भागवतवत्सलतया सुप्रीत[१] आत्मानमपराजितं निजजनाभिप्रेतार्थविधित्सया[२] गृहीतहृदयो हृदयङ्गमं मनोनयननन्दनाभिरामावयवमाविश्चकार ॥२॥

अथ ह तमाविष्कृतभुजयुगळद्वयं हिरण्मयं पुरुषविशेषं कपिशकौशेयाम्बरमुरसि विलसच्छ्रीवत्सललामं दरवरवनरुहवनमालास्फूर्जामृतमणिगणप्रवरादिभिरुपलक्षितम् ॥ स्फुटकिरणप्रवरमणिमयमुकुटकिरीटकुण्डलकटककटिसूत्रहारकेयूरनूपुराद्यङ्गविभूषणभूषितं ऋत्विक्सदस्यगृहपतयोऽधना इवोत्तमं धनमुपलभ्य[३] सबहुमानमर्हणेनावनतशीर्षाण[४] उपतस्थुः ॥ ३-४ ॥

**ऋत्विज ऊचुः**

अर्हसि मुहुरर्हत्तमार्हणमस्माकमनुपथानां नमोनम इत्येतावत् सदुपशिक्षितं कोऽर्हति पुमान् प्रकृतिगुणव्यतिकरमतिरनीश[५] ईश्वरस्य प्रकृतिपुरुषयोः परस्यार्वाक्तनमतिर्नामरूपाकृतिनिरूपणम् ॥ सकलजननिकायव्रजिननिरसनशिवतमप्रवरगुणगणैकदेशकथनादृते ॥ ५-६ ॥

परिजनानुरागविरचितस्तवलवसंशब्दसलिलकिसलयतुळसीदूर्वाङ्कुरैरपि सम्भृतया सपर्यया किल परम परितुष्यति ॥ ७ ॥

अथानयाऽपि न भगवत[६] इज्ययोरुसम्भारभरया[७] समुचितमर्थमिहोपलभामहे[८] आत्मत एवानुसवनमञ्जसाऽव्यतिरेकेणानुबोभूयमानाशेषपुरुषार्थस्वरूपस्य ॥ किन्तु नाथाशिष [९]आशासानानामेतदभिसंराधनमात्रं भवितुमर्हति[१०] ॥ ८-९ ॥

तद्यथा बालिशानां स्वयमात्मनः श्रेयः परमविदुषां परमपुरुष प्रकृष्टकरुणया[११] स्वमहिमानं चापवर्गाख्यमुपकल्पयिष्यन् स्वयत्नोपचित एवेतरवदिहोपलक्षितः ॥ १० ॥

---

१. प्रतीतः/सुप्रतीतः २. निजजनाभिप्रायार्थविधित्सया ३. उत्तमधनमुपलभ्य ४. आनतशीर्षाणः
५. व्यतिरेकमतिरनीशः ६. भवतः ७. सम्भारभारया ८. समुपचितमर्थम् ❋
९. आशासानाम्.... १०. अर्हतीति ❋ ११. प्रबलतरकरुणया ❋/प्रवरतरकरुणया

अथार्हयामः परं ह्यर्हत्तम यर्हि बर्हिषि राजर्षेर्वरदर्षभो भगवान् निजपुरुषेक्षणविषय आसीत् ॥

असङ्गनिशितज्ञानानलविधूताशेषमलानां भवत्स्वभावानामात्मारामाणां मुनीनामनवरतपरिगुणितगुणगण परममङ्गळायतनगुणगणकथनोऽसि[1] ॥ १२ ॥

अथ कथञ्चित् स्खलनक्षुतपतनजृम्भणदुरवस्थानादिषु[2] विवशानां नः श्रीमच्चरणारविन्दस्मरणाय ज्वरमरणदशायामपि सकलकश्मलनिरसनानि तव गुणकृतनामधेयानि वचनगोचराणि भवन्तु ॥

किञ्चायं राजर्षिरपत्यकामः प्रजां भवादृशीमाशासान ईश्वरमाशिषां स्वर्गापवर्गयोरपि भगवन्तमुपधावति[3] प्रजायामर्थप्रत्ययो धनदमिवाधनः फलीकरणं को वा ईहते ॥ अपराजितापराजितया माययाऽनवसितपदध्यानव्यावृत्तमतिर्विषमविषयविषरयावृतप्रकृतिः[4] अनुपासितमहच्चरणः ॥१४-१५॥

यदु हवाव पुनरदभ्रकर्तरिह समाहूतः तदर्थधियां मन्दानां नस्तद्देवहेडनं[5] देवार्हसि साम्येन सर्वात्मन् प्रतिवोढुमविदुषाम् ॥ १६ ॥

इति निगदेनाभिष्टूयमानो भगवाननिमिषर्षभो वर्षधराभिवन्दितचरणः सदयमिदमाह ॥

**श्रीभगवानुवाच**

अहो बताहमृषयो भवद्भिरवितथगीर्भिर्वरमसुलभमभियाचितो यदमुष्मा आत्मजो[6] मया सदृशो भूयादिति ममाहमेवाभिरूपः कैवल्यादथापि ब्रह्मवादो न मृषा भवितुमर्हति ममैव हि मुखं यद् द्विजदेवकुलम् ॥ तत आग्नीध्रीये क्षेत्रेऽहं कलयाऽवतरिष्यामि आत्मतुल्यमलभमानः[7] ॥ इति निशामयन्त्या मेरुदेव्याः पतिं समभिधायान्तर्दधे भगवान् ॥ १८-२० ॥

बर्हिषि तस्मिन्नेवं विष्णुरात भगवान् परमर्षिभिः प्रसादितो नाभेः प्रियचिकीर्षया तदवरोधजने मेरुदेव्यां धर्मान् दर्शयितुकामो वातरशनानां श्रमणानामृषीणामूर्ध्वमन्थिनां शुक्लया तनुवाऽवततार[8] ॥ २१ ॥

**॥ इति श्रीमद्भागवते पञ्चमस्कन्धे तृतीयोऽध्यायः ॥**

---

**श्रीशुक उवाच**

अथ तमुत्पत्त्यैवाभिव्यज्यमानभगवल्लक्षणं साम्योपशमवैराग्यैश्वर्यमहाविभूतिभिरनुदिनमेधमानानुभावं प्रकृतयः प्रजा ब्राह्मणा देवताश्चावनितळसमवनायातितरां जगृधुः ॥ १ ॥

---

१. परिगणितगुणगणपरममङ्गलायतनकथनोऽसि २. ....विजृम्भण....* ३. भवन्तमुपधावति

४. विषमविषयरयावृतप्रकृतिः/विषमविषयविषव्यापृतप्रकृतिः ५. तद् यद् देवहेडनम् *

६. अमुष्यात्मजः ७. आत्मतुल्यमनुपलभमानः ८. तन्वाऽवततार

तस्य हवा इत्थं वर्ष्मणा वरीयसा बृहच्छ्लोकेन ओजसा बलेन श्रिया यशसा वीर्यशौर्याभ्यां च पिता ऋषभ इतीदङ् नाम चकार ॥ २ ॥

यस्य[१] हीन्द्रः स्पर्धमानो भगवान् वर्षे न ववर्ष तदवधार्य भगवान् ऋषभदेवो योगेश्वरः प्रहस्यात्मयोगमायया स्वविषयमञ्जनाभं[२] नामाभ्यवर्षीत् ॥ ३ ॥

नाभिस्तु यथाभिलषितं सुप्रजास्त्वमवबुद्धय प्रमोदभरविह्वलो[३] गद्गदाक्षरया गिरा स्वैरं गृहीत-नरलोकधर्मं[४] भगवन्तं पुराणपुरुषं मायाविलसितमतिर्वत्सताततेति सानुरागमुपलाळयन् परां निर्वृति-मुपगतः । विदितानुरागः पौरप्रकृतिजनपदानां राजा नाभिरात्मजं समयसेतुरक्षायामभिषिच्य ब्राह्मणेषूपनिधाय सह मेरुदेव्या विशालायां प्रसन्ननिपुणेन तपसा[५] समाधियोगेन नरनारायणाख्यं भगवन्तं वासुदेवमुपासीनः कालेन तन्महिमानमवाप ॥ ४ ॥

**यत्र ह पाण्डवेय श्लोकावुदाहरन्ति -**

को नु तत्कर्म राजर्षेर्नाभेरन्वाचरेत् पुमान् । अपत्यतामगाद् यस्य हरिः शुद्धेन कर्मणा ॥

ब्रह्मण्योऽन्यः कुतो नाभेर्विप्रा मङ्गलपूजिताः । यस्य बर्हिषि यज्ञेशं दर्शयामासुरोजसा ॥

अथ स[६] भगवान् ऋषभः स्ववर्षं कर्मक्षेत्रमनुमन्यमानः प्रदर्शितगुरुकुलवास उपलब्धवरैर्गुरुभिरनु-ज्ञातो गृहमेधिनां[७] धर्माननुशिक्षमाणो जयन्त्यामिन्द्रदत्तायामुभयलक्षणं धर्मं समाम्नायाम्नात-मभियुञ्जन्नात्मजानामात्मसमानानां शतं जनयामास ॥ येषां खलु महायोगी भरतो ज्येष्ठः श्रेष्ठगुण आसीद् येनेदं वर्षं भारतमिति व्यपदिशन्ति ॥ ७-८ ॥

तमनु कुशावर्त इळावर्तो ब्रह्मावर्त आर्यावर्तो मलयकेतुर्भद्रसेन इन्द्रस्पृग् विदर्भः कीकट[८] इति नव नवतिप्रधानाः ॥ ९ ॥

कविर्हरिरन्तरिक्षः प्रबुद्धः पिप्पलायन आविर्होत्रोऽथ द्रुमिळश्चमसः[९] करभाजन इति भागवत-धर्मदर्शना नव महाभागवतास्तेषां सुचरितं भगवन्महिमोपबृंहितं वसुदेवनारदसंवादरूपम् उपशमा-यनमुपरिष्टाद् वर्णयिष्यामः ॥ यवीयांस एकाशीतिर्जायन्तेयाः पितुरादेशकरा महाशालीना महा-श्रोत्रिया यज्ञशीलाः कर्मश्रद्धा[१०] ब्राह्मणा बभूवुः ॥ १०-११ ॥

---

१. तस्य २. अजनाभम्/आञ्जनाभम् ३. अतिप्रमोदभरविह्वलः ❋ ४. नरलोकसमानधर्मम् ५. मनसा
६. अथ ह ७. गृहमेधीयान् ❋ ८. कीटकट ९. द्रमिळश्चमसः १०. कर्मविशुद्धाः

भगवान् ऋषभसञ्ज्ञ[1] आत्मतन्त्रः स्वयं नित्यनिवृत्तानर्थपरम्परः केवल आनन्दानुभव[2] ईश्वर एवं विपरीतवत् कर्माण्यारभमाणः कालेनानुगतं धर्ममाचारेणोपशिक्षयन् अतद्विद्वांसं समुपशान्तो मैत्रः कारुणिको धर्मार्थयशःप्रजानन्दामृताविरोधेन[3] गृहेषु लोकान् न्यरमयत्[4] ।। यद्यच्छीर्षण्याचरितं तदनुवर्तते लोकः ।। १२-१३ ।।

यदपि स्वविदितं[5] सकलं धर्मं ब्राह्मं गुह्यं ब्राह्मणैर्दर्शितमार्गेण सामादिभिरुपायैर्जनतामनुशशास ।।

द्रव्यदेशकालवयःश्रद्धर्त्विग्विविधोद्देशोपचितैः सर्वैरपि क्रतुभिर्यथोपदेशं शतकृत्व इयाज ।।

भगवता ऋषभेण परिरक्ष्यमाणे[6] एतस्मिन् वर्षे न कश्चन पुरुषो वाञ्छत्यविद्यमानमिवात्मनोऽ[7]-न्यस्मात् कथञ्चन किमपि कर्हिचिदपेक्षते भर्तर्यनुसवनविजृम्भितस्नेहातिशयमन्तरेण ।। १६ ।।

स कदाचिदटमानो भगवान् ऋषभदेवो ब्रह्मावर्तं गतो ब्रह्मर्षिप्रवरसभायां[8] प्रजानां निशामयन्तीनामात्मजानवहितात्मनः प्रश्रयप्रणयभयसुयन्त्रितानप्युपशिक्षयन्निति[9] होवाच ।। १७ ।।

**।। इति श्रीमद्भागवते पञ्चमस्कन्धे चतुर्थोऽध्यायः ।।**

---

**ऋषभ उवाच**

नायं देहो देहभाजां नृलोके कस्तत्कामानर्हति विड्भुजां ये ।
तपो दिव्यं ह्यर्हथ येन सत्त्वं शुध्येद् यस्माद् ब्रह्मसुखं ह्यनन्तम् ।। १ ।।
महत्सेवां द्वारमाहुर्विमुक्तेस्तमोद्वारं योषितां सङ्गिसङ्गम् ।
महान्तस्ते समचित्ताः प्रशान्ता विमन्यवः सुहृदः साधवो ये ।। २ ।।
ये वा मयीशे कृतसौहृदार्था जनेषु देहम्भरवार्तिकेषु ।
गृहेषु जायात्मजरातिरासु न प्रीतियुक्ता यावदर्थाश्च लोके ।। ३ ।।
नूनं प्रमत्तः कुरुते कर्म दीनो यदिन्द्रियप्रीतय आवृणोति ।
न साधु मन्ये यत आत्मनोऽयमसन्नपि क्लेशद आस देहः ।। ४ ।।
पराभवस्तावदबोधजातो यावन्न जिज्ञासत आत्मतत्त्वम् ।
तावत् क्रियास्तावदिदं मनो वै कर्मात्मकं येन शरीरबन्धः ।। ५ ।।

---

१. ऋषभः २. केवलानन्दानुभवः ३. ....प्रजानन्दामृतावरोधेन ❋
४. लोकानरमयत्/लोकान्यरमयत् ❋ लोकान् नियमयत् ५. स्वविहितम् ६. परिरक्ष्यमाणः
७. अविद्यमान इवात्मनः ❋ ८. ब्रह्मर्षिप्रवरसञ्ज्ञानाम् ❋ ९. प्रश्रयप्रणयभर....

एवं मनः कर्मवशं प्रयुङ्क्त अविद्ययाऽऽत्मन् व्यवधीयमाने[७] ।
प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावत् ॥ ६ ॥
यदाऽनुपश्यत्ययथागुणेहां स्वार्थे प्रमत्तः सहसाऽविपश्चित् ।
गतस्मृतिर्विन्दति तत्र तापानासाद्य मैथुन्यमगारमज्ञः ॥ ७ ॥
पुंसः स्त्रिया मिथुनीभाव[१] एषस्तयोर्मिथो हृदयग्रन्थिमाहुः[२] ।
यतो[३] गृहक्षेत्रसुताप्तवित्तैर्जनस्य मोहोऽयमहम्ममेति ॥ ८ ॥
यदाऽऽत्मनो हृदयग्रन्थिरस्य कर्मानुबन्धो दृढमाश्लथेत ।
तदा जनः सम्परिवर्तमानो मुक्तः परं यात्यतिहाय हेतुम् ॥ ९ ॥
हरौ गुरौ मयि भक्त्याऽनुवृत्त्या वितृष्णया द्वन्द्वतितिक्षया च ।
सर्वत्र जन्तोर्व्यसनावगत्या जिज्ञासया तपसेहानिवृत्त्या ।
मत्कर्मभिर्मत्कथया च नित्यं मत्पादसङ्गाद् गुणकीर्तनान्मे ॥ १० ॥
निर्वैरसाम्योपशमेन पुत्रा जिहासया देहगेहात्मबुद्धेः ।
अध्यात्मयोगेन विविक्तसेवया प्राणेन्द्रियात्माभिजयेन सध्र्यक्[४] ॥ ११ ॥
सच्छ्रद्धया ब्रह्मचर्येण शश्वदसम्प्रमादेन जयेन वाचाम् ।
सर्वत्र मद्भावविचक्षणेन[५] ज्ञानेन विज्ञानविराजितेन ॥ १२ ॥
योगेन धृत्युद्धवसत्वयुक्तो लिङ्गं व्यपोहेत् कुशलोऽहमाख्यम् ।
कर्माशयं हृदयग्रन्थिबन्धमविद्ययाऽऽसादितमप्रमत्तः ॥ १३ ॥
अनेन योगेन यथोपदेशं सम्यग् व्यपोह्योपरमेत योगात् ।
पुत्रांश्च शिष्यांश्च पिता[६] गुरुर्वा मल्लोककामो मदनुग्रहार्थः ॥ १४ ॥
इत्थं विमन्युरनुशिष्यादतज्ज्ञान् न योजयेत् कर्मसु कर्ममूढान् ।
कं योजयन् मनुजोऽर्थं लभेत निपातयन् नष्टदृशं हि गर्ते ॥ १५ ॥
लोकः स्वयं श्रेयसि नष्टदृष्टिर्योऽर्थान् समीहेत निकामकामः ।
अन्योन्यवैरं सुखलेशहेतोरनन्तदुःखं च न वेद मूढः ॥ १६ ॥

---

१. मिथुनीभावमेतम्/एनम् २. हृदयग्रन्धिमाहुः ❋ एवं सर्वत्रोत्तरत्रापि। ३. अतः
४. सम्यक् ५. मद्भावनिरीक्षणेन ६. नृपः ७. आत्मन्यवधीयमाने

कस्तं स्वयं तदभिज्ञो विपश्चिदविद्यायामन्तरे वर्तमानम् ।
दृष्ट्वा पुनस्तं सघृणः कुबुद्धिं प्रयोजयेदुत्पथगं यथाऽन्धम् ॥ १७ ॥
गुरुर्न स स्यात् स्वजनो न स स्यात् पिता न स स्याज्जननी न सा स्यात् ।
दैवं न तत् स्यान्न पतिश्च स स्यान्न मोचयेद् यः समुपेतमृत्युम् ॥ १८ ॥
इदं शरीरं मम दुर्विभाव्यं सत्त्वं हि मे हृदयं यत्र धर्मः ।
पृष्ठे कृतो मे यदधर्म आरादतो हि मामृषभं प्राहुरार्याः ॥ १९ ॥
तस्माद् भवन्तो हृदयेन जाताः सर्वे महीयांसमिमं[1] सुनाभम् ।
अक्लिष्टबुद्ध्या भरतं भजध्वं शुश्रूषणं तद् भरणं प्रजानाम् ॥ २० ॥
भूतेषु वीरुद्भ्य उदुत्तमा ये सरीसृपास्तेषु सुबोधनिष्ठाः[2] ।
ततो मनुष्याः प्रवरास्ततोऽपि[3] गन्धर्वसिद्धा विबुधानुगा ये ॥ २१ ॥
देवासुरेभ्यो मघवान् प्रधानो दक्षादयो ब्रह्मसुताश्च तेषाम् ।
भवः परः सोऽथ विरिञ्चिवीर्यः स मत्परोऽहं द्विजदेवदेवः ॥ २२ ॥
न ब्राह्मणैस्तुलये भूतमन्यत् पश्यामि विप्रात् किमतः परं नु ।
यस्मिन् नृभिः सुहुतं[4] श्रद्धयाऽहमश्नामि कामं न तथाऽग्निहोत्रे ॥ २३ ॥
धृतास्तनूरुशतीर्मे पुराणीर्येनेह सत्त्वं परमं पवित्रम् ।
शमो दमः सत्यमनुग्रहश्च तपस्तितिक्षाऽनुभवश्च यत्र ॥ २४ ॥
मत्तोऽप्यनन्तात् परतः परस्मात् स्वर्गापवर्गाधिपतेर्न किञ्चित् ।
येषां किमु स्यादितरेण तेषामकिञ्चनानां मयि भक्तिभाजाम् ॥ २५ ॥
सर्वाणि मद्धिष्ण्यतया भवद्भिश्चराणि भूतानि सुता ध्रुवाणि ।
सम्भावितव्यानि पदेपदे वो विविक्तदृष्टिस्तदुतार्हणं मे ॥ २६ ॥
मनोवचोदृक्करणैर्हि तस्य साक्षात् कृतं मे परिबर्हणं यत्[5] ।
विना पुमान् येन महाविमोहकृतान्तपाशान्न विमोक्तुमीशः ॥ २७ ॥

**श्रीशुक उवाच**

स एवमनुशास्यात्मजान् स्वयमनुशिष्टानपि लोकानुशासनार्थं महानुभावः परमसुहृद् भगवान्

---

१. महीयांसममुम् २. सबोधनिष्ठाः ❋ ३. प्रमथास्ततोऽपि ४. प्रहुतम् ५. परमार्हणं तत्

ऋषभापदेश उपशमशीलानामुपरतकर्मणां महामुनीनां भक्तिज्ञानवैराग्यलक्षणं पारमहंस्यधर्ममुपशिक्षमाणः स्वतनयशतज्येष्ठं परमभागवतं भगवज्जनपरायणं भरतं धरणीतळपरिपालनायाभिषिच्य स्वयं भवन एवोर्वरितशरीरमात्रपरिग्रह उन्मत्त इव गगनपरिधानः प्रकीर्णकेश आत्मन्यारोपिताहवनीयो ब्रह्मावर्तात् प्रवव्राज ।। जडान्धमूकबधिरपिशाचोन्मादकवदवधूतवेषोऽभिभाष्यमाणोऽपि जनानां गृहीतमौनव्रतस्तूष्णीं बभूव ।। २८-२९ ।।

तत्रतत्र पुरग्रामदुर्गाकरखेटकर्पटशिबिरव्रजघोषसार्थगिरिवनाश्रमादिष्वनुपथमवनिचरापशदैः[१] परिभूयमानो मक्षिकाभिरिव वनगजस्तर्जनताडनावमेहन[२]निष्ठीवनग्रावशकृद्रजःप्रक्षेपणपूतिवातदुरुक्तैस्तदविगणयन्नेवासत्संस्थान एतस्मिन् देहोपलक्षणेऽसदपदेश अभयानुभवस्वरूपेण स्वमहिमावस्थानेन समवरोपिताहम्ममाभिमानत्वादखण्डितः[३] पृथिवीमेकचरः परिबभ्राम ।।

अतिसुकुमारकरचरणोरःस्थलविपुलबाह्वंसगळवदनाद्यवयवविन्यासः प्रकृतिसुन्दरस्वभावहासमुखो नवनळिनदळायमानशिशिरतारचार्वरुणायतनयनसदृशसुभगकपोलकर्णकण्ठनासो विगूढस्मितवदनमहोत्सवेन पुरवनितानां मनसि कुसुमशरमुपदधानः । परागवलम्बमानकुटिलजटिलाळककपिलकेशभूरिभारोऽवधूतमलिननिजशरीरेण[४] ग्रहगृहीत इवादृश्यत ।। ३१ ।।

यर्हि वाव स भगवान् लोकमिमं योगस्याद्धा अप्रतीपमिवाचक्षाणस्तत्प्रतिक्रियाकर्म बीभत्सितमिति व्रतमाजगरमास्थितः शयान एवाश्नाति पिबति खादत्यवमेहति हसति स्म वेष्टमान[५] उच्चरितादिग्धोद्देशस्तस्य ह यः पुरीषसुरभिसौगन्ध्यो वायुस्तं देशं दशयोजनं समन्तात् सुरभीचकार । एवं गोमृगकाकचर्यया व्रजंस्तिष्ठन्नासीनः शयानः काकमृगगोवच्चरति पिबति खादत्यवमेहति स्म ।।

इति नानायोगचर्याचरणो भगवान् कैवल्यपतिर्ऋषभोऽधिगतपरममहानन्दानुभव[६] आत्मनि सर्वेषां भूतानामात्मभूते भगवति वासुदेवे आत्मनोऽव्यवधानेनानन्तरोदरभावेन सिद्धसमस्तार्थैः परिपूर्णो[७] योगैश्वर्याणि वैहायसमनोजवान्तर्धानपरकायप्रवेशदूरग्रहणादीनि यदृच्छयोपगतानि नाञ्जसा हृदयेनाभ्यनन्दत् ।। ३३ ।।

**।। इति श्रीमद्भागवते पञ्चमस्कन्धे पञ्चमोऽध्यायः ।।**

---

१. अवनिचरापसदैः २. ताडनमेहन.... ३. अखण्डितमनाः ४. ....केशभूरिभारावधूत.... ❋
५. चेष्टमानः ६. अधिगतमहानन्दानुभवः ७. सिद्धसमस्तार्थपरिपूर्णः ❋

राजोवाच

न नूनं भगवन्नात्मरामाणां योगसमीरितज्ञानावभर्जितकर्मबीजानामैश्वर्याणि पुनः क्लेशदानि भवितुमर्हन्ति यदृच्छयोपगतानि ॥ १ ॥

ऋषिरुवाच

सत्यमुक्तं किन्त्विह वा एके न मनसो विस्रम्भमनवस्थानस्य शठकिरात[१] इव सङ्गच्छन्ति ॥
**तथा चोक्तम् ।**

न कुर्यात् कर्हिचित् सङ्गं मनसि ह्यनवस्थिते । यद्विस्रम्भाच्चिरं चीर्णं चस्कन्द[२] तप ऐश्वरम् ॥
नित्यं ददाति कामस्य छिद्रं तदनु येऽरयः । योगिनः कृतमैत्रस्य पत्युर्जायेव पुंश्चली ॥
कामो मन्युर्मदो लोभः शोकमोहभयादयः । कर्मबन्धश्च यन्मूलः स्वीकुर्यात् कोनु तद् बुधः ॥

अथैवमखिललोकपालललामो विलक्षणो जडवदवधूतवेषभाषाचरितैरविलक्षितभगवत्प्रभावो[३] योगिनां विविधसाम्परायविधिमनुशिक्षयत्[४] स्वकळेबरं जिहासुरात्मन्यात्मानमसंव्यवहितमनर्थान्तर-भावेनान्वीक्षमाण उपरतानुवृत्तिरुपरराम ॥ तस्य हवा एवं मुक्तलिङ्गस्य भगवत ऋषभस्य योग-मायावसानो देह इमां जगतीमभिमानाभासेन चङ्क्रममाण एकदा तु काङ्कटकर्णाटकाद् दक्षिण-कर्णाटकान् देशान् यदृच्छयोपगतः कुटचाचलोपवने[५] आस्यकृताश्मकबळ[६] उन्माद इव मुक्त-मूर्द्धजोऽसंवीत एव विचचार ॥ अथ समीरवेगविधुतवेणुनिकषजातो[७] दवानलस्तद्वनमालेलिहानः समन्तात् स ह तेन ददाह ॥ ६-९ ॥

यस्य किलानुरचितमुपाकर्ण्य[८] काङ्कटकर्णाटकानां दक्षिणकर्णाटकानां राजाऽर्हतनामोपशिक्ष्य कलावधर्म उत्कृष्यमाणे भवितव्येन विमोहितः स्वधर्मपथमकुतोभयमपहाय कुपथं पाषण्डमसमञ्जसं निजमनीषया मन्दः सम्प्रवर्त्तयिष्यते ॥ १० ॥

येन हवा कलौ मनुजापशदा देवमायाविमोहिताः स्वविधिनियोगशौचचारित्रविहीना देवहेडनादीन्यपव्रतानि निजेच्छया गृह्णाना अस्नानानाचमनाशौचकेशोल्लुण्ठनादीनि[९] कलिनाऽधर्म-बहुळेनोपहतधियो ब्रह्मब्राह्मणयज्ञपुरुषलोकविदूषकाः प्रायेण भविष्यन्ति ॥ ११ ॥

---

१. घटकिराट इव ❋ २. स्कन्दते/स्कन्देच्च/चस्कन्देत् ३. अनुपलक्षित....❋/....भगवत्स्वभावः
४. अनुशिक्षयन् ५. कुटकाचलोपवने ६. ....कवलः
७. समीरवेगविधूतवेणुनिकर्षणजातः ८. अनुचरितमुपाकर्ण्य ९. केशोल्लुञ्चनादीनि/केशोल्लूञ्जनादीनि ❋

ते च ह्यर्वाक्तनया [६]निजदेहयात्रयाऽन्धपरम्परयाऽत एवानाश्वस्तास्तमस्यन्धे[१] स्वयमेव प्रपतिष्यन्ति ॥

अयमवतारो रजसोपप्लुतकैवल्यशिक्षणार्थः[२] । तस्यानुगुणान् श्लोकान् गायन्ति ॥ १३ ॥

अहो भुवः सप्तसमुद्रवत्या द्वीपेषु वर्षेष्वधिपुण्यमेतत् ।
गायन्ति यत्रत्यजना मुरारेः कर्माणि भद्राण्यवतारवन्ति ॥ १४ ॥

अहोऽनुवंशो यशसाऽवदातः प्रैयव्रतो यत्र पुमान् पुराणः ।
कृतावतारः पुरुषः स आद्यश्चचार धर्मं यदकर्महेतुम् ॥ १५ ॥

को न्वस्य काष्ठामपरोऽनुगच्छेन्मनोरथेनाप्यभवस्य[३] योगी ।
यद्योगमायां स्पृहयन्त्युदस्तां महत्तमा येन कृतप्रयत्नाः ॥ १६ ॥

इति ह स्म सकललोकवेददेवब्राह्मणगवां परमगुरोर्भगवत ऋषभाख्यस्य विशुद्धाचरितं पुंसां समस्तदुश्चरिताभिचरणं[४] परममहामङ्गळायनमिदमनुश्रद्धयोपचितयाऽनुशृणोत्याश्रावयति वाऽवहितो भगवति तस्मिन् वासुदेवे एकान्ततो भक्तिरनयोरपि समनुवर्तते ॥ १७ ॥

यस्यामेव कवय आत्मानमविरतविविधवृजिनसंसारपरितापोपतप्यमानमनुसवनं स्नापयन्तस्तयैव परया निर्वृत्या ह्यापवर्गिकमात्यन्तिकं परमपुरुषार्थमपि स्वयमासादितं नो एवाद्रियन्ते भागवतत्वेनैव परिसमाप्तसर्वार्थाः ॥ १८ ॥

राजन् पतिर्गुरुरलं भवतां यदूनां देवः प्रियः कुलपतिः क्व च किङ्करो वः ।
अस्त्वेवमङ्ग भगवान् भजतां मुकुन्दो मुक्तिं ददाति कर्हिं स्म[५] न भक्तियोगम् ॥

नित्यानुभूतनिजलाभनिवृत्ततृष्णः श्रेयस्यतद्रचनया चिरसुप्तबुद्धेः ।
लोकस्य यः करुणयाऽभयमात्मलोकमाख्यान् नमो भगवते ऋषभाय तस्मै ॥ २० ॥

**॥ इति श्रीमद्भागवते पञ्चमस्कन्धे षष्ठोऽध्यायः ॥**

---

**श्रीशुक उवाच**

भरतस्तु महाभागवतो यदा भगवताऽवनितळपरिपालनाय सञ्चिन्तितस्तदनुशासनपरः पञ्चजनीं

---

१. अनास्थास्तमस्यन्धे　　२. कैवल्योपशिक्षणार्थः *　　३. अभवाय
४. समस्तदुश्चरिताभिहरणम्　　५. कर्हिचित् स्म　　६. निजलोकयात्रया

विश्वरूपदुहितरमुपयेमे ॥ तस्यामु हवा आत्मजान् कात्स्नर्चेनानुरूपानात्मनः पञ्च जनयामास भूतादिरिव भूतसूक्ष्माणि सुमतिं राष्ट्रभृतं सुदर्शनमावरणं धूम्रकेतुमिति ॥ १-२ ॥

अञ्जनाभं[१] नामैतद्वर्षं भारतमिति यत आरभ्य व्यपदिशन्ति ॥ स हि बहुविन्महीपतिः पितृपितामहवदुरुवत्सलतया स्वेस्वे कर्मणि वर्तमानाः प्रजाः पर्यपालयत्[२] ॥ ईजे च भगवन्तं यज्ञपुरुषं क्रतुभिरुच्चावचैः श्रद्धयाऽऽहिताग्निरग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुसोमानां प्रकृतिविकृतिभिः । ॥ ३-५ ॥

अनुसवनं चातुर्होत्रविधिना सम्प्रचरत्सु नानायागेषु[३] विरचिताङ्गक्रियेषु अपूर्वं यत्तत्क्रियाफलं धर्माख्यं परब्रह्मणि यज्ञपुरुषे सर्वदेवतालिङ्गानां मन्त्राणामर्थनियामकतया साक्षात्कर्तरि परदेवतायां भगवति वासुदेव एव भावयमानः[४] आत्मनैपुण्यमृदितकषायो हविष्ष्वध्वर्युभिर्गृह्यमाणेषु स यजमानो यज्ञभाजो देवांस्तान् पुरुषावयवेष्वध्यभावयत् ॥ ६ ॥

एवं कर्मविशुद्धिविशुद्धसत्त्वस्यान्तर्हृदय आकाशशरीरे ब्रह्मणि भगवति वासुदेवे महापुरुषोपलक्षणैः श्रीवत्सकौस्तुभवनमालारिदरगदादिभिरुपलक्षिते निजपुरुषहृदुल्लिखितेनात्मनि[५] पुरुषरूपेण विरोचमाने उच्चैस्तरां भक्तिरनुदिनमेधमानरयाऽजायत ॥ ७ ॥

एवं वर्षायुतसहस्रपर्यन्तावसानावसित[२]कर्मनिर्वाणावसरोऽधिभुज्यमानं स्वतनयेभ्यो रिक्थं पितृपैतामहं यथादायं विभज्य स्वयं सकलसम्पन्निकेतात् स्वनिकेतात्[६] पुलहाश्रमं प्रवव्राज । यत्र हवाव भगवान् हरिरद्यापि तत्रत्यानां निजजनानां वात्सल्येन सन्निधाप्यते इच्छारूपेण ॥ यत्राश्रमपदान्युभयतोनाभिभिर्दृषच्चक्रैश्चक्रनदी नाम सरित्प्रवरा सर्वतः पवित्रीकरोति ॥ ८-९ ॥

तस्मिन् वाव किल स एकलः पुलहाश्रमोपवने विविधकुसुमकिसलयतुळसीकाम्बुभिः[७] कन्दमूलफलोपहारैश्च समीहमानो भगवत आराधनं विविक्त उपरतविषयाभिलाष उपभृतोपशमः[८] परां निर्वृतिमवाप[९] ॥ १० ॥

तयैवमविरतपुरुषपरिचर्यया[१०] भगवति प्रवर्द्धमानानुरागभारहृतहृदयशैथिल्यः प्रहर्षवेगेनात्मन्युद्भिद्यमानरोमपुळककुलक औत्कण्ठ्यप्रवृत्तप्रणयबाष्पनिरुद्धावलोकनयनोऽभिरेमे । एवं निजरमणारुण-

---

१. आञ्जनाभम् २. प्रजाः स्वधर्ममनुवर्तमानः पर्यपालयत् ३. नानायोगेषु ❋
४. भावयानः ५. निजपुरुषहृल्लिखितेनात्मनाऽऽत्मनि ❋/....हृदुल्लिखितेन....
६. स्वनिकेतनात् ७. तुळसिकाम्बुभिः ८. उपहृतोपशमः
९. निर्वृतिमाप १०. तस्येत्थमविरत....

चरणारविन्दानुध्यानोपचित[१] भक्तियोगपरिप्लुतपरमाह्लादगभीरहृदयहृदावगाढधिषणस्तामपि क्रियमाणां भगवत्सपर्यां न सस्मार ॥ ११ ॥

इत्थं धृतभगवद्व्रत ऐणेयाजिनवाससाऽनुसवनाभिषेकार्द्रकपिशकुटिलजटाकलापेन च विरोचमानः सूर्यर्चा[२] भगवन्तं हिरण्मयं पुरुषमुज्जिहाने[३] सूर्यमण्डलेऽभ्युपतिष्ठन्नेतदु[४] होवाच॥ १२ ॥

परोरजाः[५] सवितर्जातवेदो वेदस्य गर्भो मनसेदं जजान ।
स्वरेतसाऽदः पुनराविश्य चष्टे[६] हंसं गृध्राणामृषभं सङ्गृणीमः ॥ १३ ॥

**॥ इति श्रीमद्भागवते पञ्चमस्कन्धे सप्तमोऽध्यायः ॥**

---

**श्रीशुक उवाच**

एकदा तु महानद्यां कृताभिषेकनैयमिकावश्यको[७] ब्रह्माक्षरमभिगृणानो मुहूर्तत्रयमुदकान्तः प्रविवेश[८] । तत्र तदा राजन् हरिणी पिपासया जलाशयाभ्याशमेकैवोपजगाम । तया पेपीयमाने उदके तावदेवाविदूरे[९] नदतो मृगपतेरुन्नादो लोकभयङ्कर उदपतत् ॥ १ ॥

तमुपश्रुत्य सा मृगवधूः प्रकृतिविक्लवा चकितनिरीक्षणा[१०] सुतरामपि हरिभयाभिनिवेशव्यग्रहृदया पारिप्लवदृष्टिरगततृषाऽतिभयात् सहसोच्चक्राम ॥ तस्या उत्पतन्त्या अन्तर्वत्न्या उरुभयावगळितो योनिगतो[११] गर्भः स्रोतसि निपपात । तत्प्रस्रवणोत्सर्पणभयखेदातुरा[१२] स्वगणेन वियुज्यमाना कस्यांचिद् दर्यां कृष्णसारसती निपपाताथ च ममार ॥ २-३ ॥

तं त्वेणकुणकं कृपणं स्रोतसा चोह्यमानमभिवीक्ष्यापविद्धबन्धुं बन्धुरिवानुकम्पया राजर्षिर्भरत आदाय मृतमातरमेणमाश्रमपदमनयत् ॥ तस्य हवा एणकुणक उच्चैस्तस्मिन् कृतनिजाभिमानस्याहरहस्तत्पोषणपालनप्रीणनलालनानुध्यानेनात्मनियमाः सहयमाः पुरुषपरिचर्यादय एकैकशः कतिपयाहर्गणेन वियुज्यमानाः किल सर्व एवोदवसन् ॥ ४-५ ॥

अथेदमाह अहो बतायं हरिणकुणकः कृपण ईश्वररथचरणपरिभ्रमणरयेण स्वगणसुहृद्बन्धुभ्यः परिवर्जितः शरणं च मोपसादितो मामेव मातृपितृभ्रातृज्ञातिभ्योधिकं गोपायनं[१३] नान्यं[१४] कञ्चन

---

१. अनुध्यानेनोपचित २. सूर्य इव ❋ ३. पुरुषं ददर्श ❋ ४. उपविष्टमेतदु
५. परोरजः ६. च स्वम् ❋ ७. नैगमिकावश्यकः ८. उदकान्त उपविवेश
९. अविदूरेण १०. प्रकृतिविक्लबतया चलितनिरीक्षणा ❋ ११. योनिनिर्गतः
१२. तत्प्रसवोत्सर्पण.... १३. मातापितरौ भ्रातृज्ञातिभ्योधिकम् ❋ १४. अधिकं मन्यमानो नान्यम्

वेद मय्येवातिविस्रब्धश्चात एव मया मत्परायणस्य पोषणपालनप्रीणनलालनमप्यनसूयुनाऽनुष्ठेयं शरण्योपेक्षादोषविदुषा ॥ ६ ॥

नूनं ह्यार्याः साधव उपशमशीलाः कृपणसुहृद एवंविधार्थे स्वार्थानपि गुरुतरानुपेक्षन्ते॥ इति कृतानुषङ्ग आसनस्नानाशनशयनाटनस्थानादिषु सह मृगजहुना स्नेहानुबद्धहृदय आसीत् ॥

कुशकुसुमसमित्पलाशफलमूलोदकादीन्याहरिष्यमाणो वृकसालावृकादिभ्यो[१] भयमाशङ्कमानः[२] सह हरिणकुणकेन वनमाविशति ॥ ९ ॥

पथिपथि च[३] मुग्धभावेन तत्रतत्र विषक्तमतिप्रणयभारहृदयः[४] कार्पण्यात् स्कन्धेनोद्वहति एवमुत्सङ्गे उरसि चाधायोपलाळयन् परमामवाप मुदम् ॥ १० ॥

क्रियायां निर्वर्त्यमानायामन्तराळ उत्थायोत्थाय यदैनमभिचक्षीत तर्हि वाव स वर्षपतिः प्रकृतिस्थेन मनसा तस्मै हाशिष आशास्ते स्वस्ति स्याद् वत्स ते सर्वत इति ॥ अन्यदा तु भृशमुद्विग्नमना नष्टद्रविण इव कृपणः सकरुणमतितर्षेण हरिणकुणकविरहविह्वलहृदयसन्तापस्तमेवानुशोचन् किल कश्मलं महदभिरम्भित इति होवाच ॥ ११-१२ ॥

अपि बत स वै कृपण एणबालको मृतहरिणीसुतो ममानार्यस्य [५]शठकितवमतेरकृतसुकृतस्य कृत-विस्रम्भ आत्मप्रत्ययेन तदविगणयन् स्वजन इवागमिष्यति ॥ अपि क्षेमेणास्मिन्नाश्रमोपवने शष्पाणि चरन्तं देवगुप्तं द्रक्ष्यामि ॥ अपि न वृकः सालावृकोऽन्यतमो वा नैकचरो वा भक्षयति[६] ॥ १३-१५ ॥

निम्लोचति भगवान् सकलजगत्क्षेमोदयस्त्रय्यात्माऽद्यापि[७] न मम मृगवधून्यास आगच्छति ॥ अपि स्विदकृतसुकृतं मामागत्य सुखयिष्यति हरिणराजकुमारो विविधरुचिरदर्शनीयनिजमृगदारक-विनोदैरसन्तोषं स्वानामपनुदन् ॥ १६-१७ ॥

क्ष्वेळिकायां[८] मां मुधासमाधिना मीलितदृशं प्रेमसंरम्भेण सचकितमागत्य पृषत अपरुषविषाणाग्रेण लुठति ॥ आसादितहविषि बर्हिषि दूषिते मयोपालब्धो भीतभीतः सपद्युपरतरभस ऋषिकुमार-वदवहितकरणकलाप आस्ते ॥ १८-१९ ॥

किं वा अरे आचरितं तपस्तपस्विन्याऽनया यदियमवनिः सविनयकृष्णसारतनयतनुतरसुभग-शिवतमखरखुरपद[९]पङ्क्तिभिर्द्रविणविधुरातुरस्य कृपणस्य मम द्रविणपदवीं सूचयन्त्यात्मानं[१०] सर्वतः कृतकौतुकं द्विजानां स्वर्गापवर्गकामानां देवयजनं करोति ॥ २० ॥

---

१. वृकशालावृकादिभ्यः २. आशंसमानः ❋ ३. पथिषु च ❋ ४. प्रणयसारहृदयः ५. शठकिरातमतेः ६. जक्षति/जक्षयति ७. सूर्यात्माऽद्यापि ८. क्ष्वेळिकया ❋ ९. शिवतमखुरपद.... १०. सूत्रयन्त्यात्मानम्

अपि स्विदसौ भगवानुडुप एनं मृगपतिभयान्मृतमातरं मम मृगबालकं स्वाश्रमपरिभ्रष्टमनु-कम्पया कृपणजनवत्सलः परिपालयति । एष ते हरिणकुलोपनिधिर्मया गुप्त इति॥ २१ ॥

किं वा आत्मजविश्लेषज्वरदवदहनशिखाभिरुपतप्यमानहृदयस्थलनळिनं[१] मामुपसृतः[२] मृगीतनयः शिशिरशान्तानुरागगुणितनिजवदनसलिलामृतमयगभस्तिभिः स्वधयति ॥ २२ ॥

इति चैवमघटमानमनोरथाकुलहृदयो मृगदारकाभासेन स्वारब्धकर्मणा[३] योगारम्भणतो विभ्रंशितः स योगतापसो भगवदाराधनलक्षणाच्च कथमितरथा जात्यन्तर एणकुणके आसङ्गः[४] साक्षान्निश्रेय-सप्रतिपक्षतया प्राक् परित्यक्तदुस्त्यजहृदयाभिजातस्य तस्यैवमन्तरायविहतयोगारम्भणस्य राजर्षेर्भरतस्य तावन्मृगार्भकपोषणपालनप्रीणनलालनानुषङ्गेणाविगणयत आत्मानमहिरिवाखुबिलं दुरतिक्रमः कालः कराळरभस आपद्यत ॥ २३ ॥

तदानीमपि पार्श्ववर्तिनमात्मजं[५] बन्धुमिवानुशोचन्तमभिवीक्षमाणो मृग एवाभिनिवेशितमना विसृज्य लोकमिमं सह मृगेण कळेबरं मृतमनु नमृतजन्मानुस्मृति[६]रितरवन्मृगशरीरमवाप ॥२४॥

तत्रापि हवा आत्मनो मृगत्वकारणं भगवदाराधनसमीहानुभावेनानुस्मृत्य भृशमनुतप्यमान आह ॥ अहो कष्टं भ्रष्टोऽहमात्मवतामनुपथाद्[७] यद्विमुक्तसमस्तसङ्गस्य विविक्तपुण्यारण्यशरण्य-स्यात्मवत[८] आत्मनि सर्वेषामात्मनां भगवति वासुदेवे तदनुश्रवणमननसङ्कीर्तनाराधनानुस्मरणाभि-योगेनाशून्यसकलयामेन कालेन समावेशितं समाहितं कात्स्न्र्येन मनः । तत्तु पुनर्ममाबुधस्य रागान्मृगसुतमनु परिसुस्राव[९] ॥ २५-२६ ॥

एवं निगूढनिर्वेदो विसृज्य मृगीं मातरं[१०] पुनर्भगवत्क्षेत्रमुपशमशीलमुनिगणदयितं सालग्रामं[११] पुलस्त्यपुलहाश्रमं कालञ्जरात् प्रत्याजगाम ॥ तस्मिन्नपि कालं प्रतीक्षमाणः सङ्गाच्च भृशमुद्विग्न आत्मसहचरः[१२] शुष्कपर्णतृणवीरुधा वर्त्तमानो मृगत्वनिमित्तावसानमेव गणयन् मृगशरीरं तीर्थोदकक्लिन्नमुत्ससर्ज ॥ २८ ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धेऽष्टमोऽध्यायः ॥

---

१. हृदयच्छलनळिनम् ❋ २. मामुपसृत्य/उपसृतः ३. स्वप्रारब्धकर्मणा
४. जात्यन्तर आसङ्गः ❋ ५. आत्मजमिवानु.... ६. कळेबरमनुस्मृतजन्मानुस्मृतिः ❋
७. आत्मवत्तानुपथात् ❋ ८. पुण्यारण्यशरणस्यात्मनः ९. मृगसुतमनुसुस्राव
१०. मृगीमातरम् ११. साळग्रामम् १२. आत्मसहचरैः ❋

श्रीशुक उवाच

अथ कस्यचिद् द्विजवरस्याङ्गिरसप्रवरस्य शमदमतपःस्वाध्यायाध्ययनत्यागसन्तोषतितिक्षाप्रश्रय-विद्यानसूयात्मज्ञानानन्दयुक्तस्यात्मसदृशश्रुतशीलाचाररूपौदार्यगुणा नव सोदर्याङ्गजा[1] बभूवुः मिथुनं च यवीयस्यां भार्यायाम् ॥ यस्तु तत्र पुमांस्तं परमभागवतं राजर्षिप्रवरं भरतमुत्सृष्टमृगशरीरं चरमशरीरेण विप्रत्वं गतमाहुः ॥ १-२ ॥

तत्रापि स्वजनसङ्गाच्च भृशमुद्विजमानो भगवतः कर्मबन्धविध्वंसनश्रवणस्मरणगुणविवरण-चरणारविन्दयुगळं मनसा विदधत आत्मनः प्रतिघातमाशंसमानो[2] भगवदनुग्रहेणानुस्मृतस्वपूर्व-जन्मावळिरात्मानमुन्मत्तजडबधिररूपेण[3] दर्शयामास लोकस्य ॥ ३ ॥

तस्यापि हवाऽऽत्मजस्य स विप्रः पुत्रस्नेहानुबद्धमना आसमावर्तनात् संस्कारान् यथोपदेशं विदधान उपनीतस्य च पुनः शौचाचमनादीन् कर्मनियमाननभिप्रेतानपि समशिक्षयत् अनुशिष्टेन हि भाव्यं पितुः पुत्रेणेत्यसदाग्रहः ॥ ४ ॥

स च[4] तदुह पितृसन्निधावेवासध्रीचीनमिव[5] करोति । छन्दांस्यध्यापयिष्यन् महाव्याहृतिभिः[6] सप्रणवशिरस्त्रिपदीं सावित्रीं ग्रैष्मवासन्तिकान् मासानधीयमानमप्यसमवेतरूपं ग्राहयामास ॥

एवं स्वतनुजे आत्मन्यनुरागावेशितचित्तः शौचाध्ययनव्रतनियमगुर्वनलशिश्रूषणाद्यौपकुर्वाणकानि कर्माण्यतदभियुक्तान्यपि समनुशिष्टेन भाव्यमित्यसदाग्रहः पुत्रमनुशास्य[12] पिता स्वयं[7] तावदनधि-गतमनोरथः कालेनाप्रमत्तेन स्वयं गृहे प्रमत्त उपसंहृतः[8] ॥ ६ ॥

अथ यवीयसी द्विजसती स्वगर्भजातमिथुनं सपत्न्यामुपनिधाय[9] स्वयमनुसंस्थया पतिलोकम-गात् । पितर्युपरते भ्रातर एनमतत्प्रभावविदस्त्रय्यां विद्यायामेव पर्यवसितमतयो न परविद्यायां जडमतिरिति भ्रातरमनुशासननिर्बन्धान्न्यवृत्सन्त[10] ॥ ७ ॥

स च प्राकृतैर्द्विपदपशुभिरुन्मत्तजडबधिरेत्यभिभाष्यमाणो यदा तदनुरूपाणि प्रभाषते कर्माणि च स कार्यमाणः परेच्छया करोति । विष्टितो वेतनतो याच्ञया वा यदृच्छया वोपसादितमल्पं बहु मृष्टं[11] कदन्नं वाऽभ्यवहरति परं नेन्द्रियप्रीतिनिमित्तम् ॥ ८ ॥

नित्यनिवृत्तदुःखस्वसिद्धविशुद्धानुभवानन्दस्वात्मलाभाधिगमः सुखदुःखयोर्द्वन्द्वनिमित्तयोर-

---

१. सौदर्या अङ्गजाः २. आशङ्कमानः ३. ....जडान्धबधिररूपेण ४. स चापि
५. सध्रीचीनमिव * ६. सह व्याहृतिभिः * ७. पुत्रमनुशास्य स्वयम् ८. उपसंवृतः
९. सपत्न्या उपन्यस्य १०. भ्रातुरनुशासन.... ११. मिष्टम् १२. अनुशशास

सम्भावितदेहाभिमानः ।। शीतोष्णवातवर्षेषु वृष इवानावृताङ्गः पीनः संहननाङ्गः[१] स्थण्डिल-संवेशनानुन्मर्दनामज्जनेन[२] रजसा महामणिरिवानभिव्यक्तब्रह्मवर्चसः[३] कर्पटावृतकटिरुपवीतेनोरु-मषिणा द्विजातिरिति ब्रह्मबन्धुरिति सञ्ज्ञयाऽज्ञजनावमतो[१२] विचचार ।। ९-१० ।।

यदा तु परत आहारं कर्मवेतनत ईहमानः स्वभ्रातृभिरपि केदारकर्मणि निरूपितस्तदपि करोति । किन्तु न समं विषमं न्यूनमधिकमिति[४] वेद । कणपिण्याकफलीकरणकुल्माषस्थाली-पुरीषादीन्यप्यमृतवदारोचयति ।। ११ ।।

अथ कदाचिद् कश्चिद् वृषळपतिर्भद्रकाळ्यै पशुमालभतापत्यकामः[५] ।। तस्य ह दैवविमुक्तस्य पशोः पदवीं तदनुचराः परिधावन्तो निशि निशीथसमये तमसाऽऽवृतायामनधिगतपशव आकस्मिकेन विधिना केदारान् वीरासनेन मृगवराहादिभ्यः[६] संरक्ष्यमाण[७]माङ्गिरसप्रवरसुतमपश्यन्।।१२-१३।।

अथ त एनमनवद्यलक्षणमवमृश्य भर्तुः[८] कर्मनिष्पत्तिं मन्यमाना बद्ध्वा रशनया चण्डिका-गृहमुपनिन्युर्मुदा विकसितवदनाः ।। १४ ।।

अथ पणयस्तं स्वविधिनाऽभिषिच्याहतेन वाससाऽऽच्छाद्य भूषणानुलेप[९]स्रक्तिलकादिभिरुप-स्कृतं भुक्तवन्तं धूपदीपमाल्यलाजकिसलयाङ्कुरफलोपहारोपेतया वैशससंस्थया महता गीतस्तुति-मृदङ्गपणवघोषेण च तं पुरुषपशुं भद्रकाळ्याः पुरत उपवेशयामासुः ।। १५ ।।

अथ वृषळराजपणिः पुरुषपशोरसृगासवेन देवीं भद्रकाळीं यक्ष्यमाणस्तदाऽभिमन्त्रितमसिमति-कराळं निशितमुपाददे ।। १६ ।।

इति तेषां वृषळराज्ञां रजस्तमःप्रकृतीनां धनमदरजसोत्सिक्तमनसां भगवत्कलाङ्गिरसकुलं कदर्थीकृत्योत्पथेन स्वैरं विहरतां हिंसाविहाराणां कर्मातिदारुणं यद् ब्रह्मभूतस्य साक्षाद्ब्रह्मर्षिसुतस्य निर्वैरस्य सर्वभूतसुहृदः सूनायामप्यनभिमतस्यालभनं तदुपलभ्य ब्रह्मतेजसाऽतिदुर्विषहेण दन्दह्य-मानेन वपुषा सहसोच्चचाल सैव भद्रकाळी[१०] ।। १७ ।।

भृशममर्षरोषावेशरभसविलसितभ्रुकुटिविटपकुटिलदंष्ट्रारुणेक्षणाटोपातिभयानकवदना[११]हन्तुकामेवेद-

---

१. अपावृताङ्गः पीनसंहननाङ्गः २. अनुन्मर्दनानुन्मज्जनेन ३. .... ब्रह्मवर्चाः
४. समविषमन्यूनमधिकमिति ❋ ५. पुरुषपशुमालभत.... ६. मृगचमरिकादिभ्यः
७. संरक्षमाणम् ८. तेन भर्तुः ९. भूषणोपलेपन ❋
१०. सैव देवी भद्रकाळी ११. इदं सहाट्टहासम्/इदं महदट्टहासम् १२. ...जनावगतः

मट्टहासमतिसंरम्भेण विमुञ्चती[१] तत उत्पत्य पापीयसां दृप्तानां[२] तेनैवासिना वृक्णशीर्ष्णां[३] गळात् स्रवन्तमसृगासवमत्युष्णं सह[४] गणैर्निपीयातिपानमदविह्वलोच्चैस्तरां स्वपार्षदैः सह जगौ ननर्त विजहार च शिरःकन्दुकलीलया ॥ एवमेव खलु महदभिचारातिक्रमः कात्स्न्यर्येनात्मने फलति ॥ १८-१९ ॥

न वा एतद् विष्णुराताद्भुतं[५] यदसम्भ्रमः स्वशिरश्छेदन आपतितेऽपि विमुक्तदेहाद्यात्मभाव-सुदृढहृदयग्रन्थीनां सर्वसत्वसुहृदात्मनां निर्वैराणां साक्षाद्भगवतोऽनिमिषारिवरायुधेनाप्रमत्तेन तैस्तैर्भावैरभिरक्ष्यमाणानां तत्पादमूलमकुतोभयमाश्रितानां[६] भागवतपरमहंसानाम् ॥ २० ॥

**॥ इति श्रीमद्भागवते पञ्चमस्कन्धे नवमोऽध्यायः ॥**

---

**श्रीशुक उवाच**

अथ सिन्धुसौवीरपते रहूगणस्य व्रजत इक्षुमत्यास्तटे भगवन्तं कपिलऋषिं द्रष्टुं तत्कुलपतिना[७] शिबिकावाहकपुरुषान्वेषणसमये दैवेनोपसादितः स द्विजवर उपलब्ध एष पीवा युवा संहननाङ्गः गोखरवद्[८] धुरं वोढुमलमिति पूर्वविष्टिगृहीतैः सह गृहीतः प्रसभमतदर्ह उवाह शिबिकां स महानुभावः ॥ १ ॥

यदा हि द्विजवरस्य युगमात्रावलोकानुगतेर्न समा पुरुषगतिस्तदा विषमगतायां स्वशिबिकायां[९] रहूगण उपधार्य पुरुषानधिवहत आह हे वोढारः साध्वभिक्रमत किमिति विषममुह्यते यानमिति ॥ २ ॥

अथ त ईश्वरवचः सोपालम्भमुपाकर्ण्योपायात् तुर्याच्छङ्कितमनसस्तं[१०] विज्ञापयाम्बभूवुः ॥ न वयं नरदेव प्रमत्ता भवन्नियमानुपथाः साध्वेव वहामः । अयमधुनैव नियुक्तोऽपि न द्रुतं व्रजति नानेन सह वोढुमिह वयं पारयाम इति ॥ ३-४ ॥

सांसर्गिको दोष एव नूनमेकस्यापि सर्वेषां सांसर्गिकाणां[११] भवितुमर्हतीति निशम्य कृपणं वचो राजा रहूगण उपासितवृद्धोपि निसर्गेण बलात्कृत ईषदुत्थितमन्युरविस्पष्टब्रह्मतेजसं जातवेदसमिव रजसा तमसाऽऽवृतमतिराह[१२] ॥ ५ ॥

---

१. विमुञ्चन्ती २. दुर्भावानाम् ३. विवृक्णशीर्ष्णाम् ४. सह गणेन ५. विष्णुदत्ताद्भुतम् ❋
६. अकुतश्चनभयमाश्रितानाम् ❋ ७. इक्षुमत्यास्तटे नद्या भगवन्तं द्रष्टुं कस्मिंश्चिदाश्रमे स्थितं तत्कुलपतिना
८. खरवत्/गोखरबन्धुरं वोढुमलमिति ❋ ९. विषमगतां स्वशिबिकाम् १०. तुरीयात्....
११. संसर्गिणाम् १२. रजसाऽऽवृतमतिराह

अहो कष्टं भ्रातर्व्यक्तमुरु परिश्रान्तो दीर्घमध्वानमेक एव ऊहिवान् सुचिरं नातिपीवा नातिसंहननाङ्गो जरसा चोपद्रुतो भवान् सखे नो एवापर एते सङ्घट्टिनः ॥ ६ ॥

इति बहुविप्रलब्धोऽप्यविद्यया विहितद्रव्यगुणकर्माशयस्वचरमकळेबरेऽवस्तुनि संस्थानविशेषे अहम्ममेत्यनध्यारोपितमिथ्याप्रत्ययो ब्रह्मभूतस्तूष्णीं शिबिकामुवाह[१] ॥ ७ ॥

अथ पुनः स्वशिबिकायां विषमगतायां प्रकुपित उवाच रहूगणः किमरे त्वं जीवन्मृतो[२] मां कदर्थीकृत्य भर्तृशासनमतिचरसि । प्रमत्तस्य ते करोमि चिकित्सां दण्डपाणिरिव जनताया यथा प्रकृतिं स्वां भजिष्यसीति[३] ॥ ८ ॥

एवं बह्वबद्धमभिभाष्यमाणो[४] नरदेवाभिमानिनं रजसा तमसाऽनुविद्धेन मदेन तिरस्कृताशेष-भगवत्प्रियनिकेतं पण्डिताभिमानिनं[५] स भगवान् ब्राह्मणो ब्रह्मभूतः सर्वभूतसुहृदात्मा[६] योगेश्वर-चर्यायां नातिव्युत्पन्नमतिं स्मयमान इव विगतस्मय इदमाह ॥ ९ ॥

**ब्राह्मण उवाच**

त्वयोदितं व्यक्तमविप्रलब्धं भर्तुः स मे स्याद् यदि वीर भारः ।
गन्तुर्यदि स्यादधिगम्यमध्वा पीवेति चासौ न विदां प्रवादः ॥ १० ॥
स्थौल्यं कार्श्यं व्याधय आधयश्च क्षुत् तृड् भयं कलिरिच्छा जरा च ।
निद्राऽरतिर्मन्युरहम्मदश्च[७] देहेन जातस्य हि मे न सन्ति ॥ ११ ॥
जीवन्मृतत्वं नियमेन राजन्नाद्यन्तवद् यद् विकृतस्य दृष्टम् ।
स्वस्वामिभावो ध्रुव एष यत्र[८] तर्ह्यच्युतेऽसाविति कृत्ययोगः ॥ १२ ॥
विशेषबुद्धेर्विवरं मनाक् च पश्यामि यन्न व्यवहारतोऽन्यत् ।
क ईश्वरस्तत्र किमीशितव्यमथापि राजन् करवाम किं ते ॥ १३ ॥
उन्मत्तमूकान्धजडवत्[९] स्वसंस्थां गतस्य मे वीर चिकित्सितेन ।
अर्थः कियान् भवता शिक्षितेन स्तब्धप्रमत्तस्य च पिष्टपेषः ॥ १४ ॥

---

१. शिबिकां पूर्ववदुवाह २. किमिदमरे त्वं जीवन्मृतोऽसि ३. भजिष्यस इति
४. अभिभाषमाणम् ५. पण्डितमानिनम् ६. सर्वभूतसुहृदात्मानम्
७. अहम्मदः शुचः ८. यर्हि ९. उन्मत्तमत्तजडवत्

**श्रीशुक उवाच**

एतावदनुवादपरिभाषया प्रत्युदीर्य मुनिवर उपशमशील उपरतानात्म्यनिमित्त उपभोगेन[१] कर्मारब्धं व्यपनयन् राजयानमपि तथोवाह ॥ १५ ॥

स चापि पाण्डवेय सिन्धुसौवीरपतिस्तत्त्वजिज्ञासायां[२] सम्यक्श्रद्धयाऽधिकृताधिकारः तद्धृदय-ग्रन्थिविमोचनं[३] द्विजवच आश्रुत्य[४] बहुयोगग्रन्थसम्मतं[५] त्वरयाऽवरुह्य शिरसा पादमूलमुपगतः क्षमापयन् विगतनरदेवस्मय उवाच[६] ॥ १६ ॥

**रहूगण उवाच**

कस्त्वं निगूढश्चरसि द्विजानां बिभर्षि सूत्रं कतमोऽवधूतः ।
कस्यासि कुत्रत्य इहापि कस्मात् क्षेमाय नश्चेदसि नोत शुक्लः ॥ १७ ॥
नाहं विशङ्के सुरराजवज्रान्न त्र्यक्षशूलान्न यमस्य दण्डात् ।
नाग्न्यर्कसोमानिलवित्तपास्त्राच्छङ्के भृशं ब्रह्मकुलावमानात् ॥ १८ ॥
तद् ब्रूह्यसङ्गो जडवन्निगूढविज्ञानवीर्यो विचरस्यपारः ।
वचांसि योगग्रथितानि साधो न नः क्षमन्ते मनसा विभेत्तुम् ॥ १९ ॥
अहं च योगेश्वरमात्मतत्त्वविदां मुनीनां कपिलं गुरुं वै ।
प्रष्टुं प्रवृत्तः किमिहारणं यत्[७] साक्षाद्धरिं ज्ञानकलावतीर्णम् ॥ २० ॥
स वै भवाँल्लोकनिरीक्षणार्थमव्यक्तलिङ्गो विचरत्यपिस्वित् ।
योगेश्वराणां गतिमन्धबुद्धिः कथं विचक्षीत गृहानुबद्धः ॥ २१ ॥
दृष्टः श्रमः कर्मत आत्मनो वै भर्तुर्गन्तुर्भवतश्चानुमन्ये[८] ।
यथा श्रुतोदानयनादिभावाः समूल दृष्टो[९] व्यवहारमार्गः ॥ २२ ॥
स्थाल्यग्नितापात् पयसोऽभितापस्तत्तापतस्तण्डुलगर्भरन्धिः ।
देहेन्द्रियास्वाशयसन्निकर्षात् तत्संसृतिः पुरुषस्यानुरोधात् ॥ २३ ॥
शास्ताऽधिगोप्ता नृपतिः प्रजानां यः किङ्करो वै न[१०] पिनष्टि पिष्टम् ।
स्वधर्ममाराधनमच्युतस्य यदीहमानो विजहात्यघौघम् ॥ २४ ॥

---

१. ....निमित्तमुपभोगेन २. तत्वजिज्ञासासुः ३. ....ग्रन्धिविमोचनम् ❋
४. द्विजवचनमाश्रुत्य ५. बहुयोगग्रन्थमतम् ६. उवाच रहूगणः ७. तत्
८. भवतश्चाद्य मन्ये ❋ ९. समूल इष्टः ❋ १०. किङ्करो नैव

तन्मे भवान् नरदेवाभिमानमदेन तुच्छीकृतसत्तमस्य ।
कृषीष्ट मैत्रीदृशमार्तबन्धो[१] यया तरेयं सदवध्यानमंहः ॥ २५ ॥
न विक्रिया विश्वसुहृत्सखस्य साम्येन वीताभिमतेस्तवापि ।
महद्विमानात् स्वकृताद्धि मादृग् धक्ष्यत्यदूरादपि शूलपाणिः ॥ २६ ॥

**॥ इति श्रीमद्भागवते पञ्चमस्कन्धे दशमोऽध्यायः ॥**

---

**ब्राह्मण उवाच**

अकोविदः कोविदवादवादान् वदस्यथो नातिविदां वरिष्ठः ।
न सूरयो हि व्यवहारमेनं तत्त्वावमर्शेन सहामनन्ति ॥ १ ॥
तथैव राजन्नुरुगार्हमेधवितानविद्योरुविजृम्भितेषु ।
न वेदवादेषु हि तत्त्ववादः प्रायेण शुद्धो नु चकास्ति साधु ॥ २ ॥
न तस्य तत्त्वग्रहणाय साक्षाद् वरीयसीरपि वाचः समासन् ।
स्वप्ने निरुक्त्या गृहमेधिसौख्यं[२] न यस्य हेयानुमितं स्वयं स्यात् ॥ ३ ॥
यावन्मनो रजसा पूरुषस्य सत्वेन वा तमसा वाऽनुविद्धम्[७] ।
चेतोभिराकूतिभिरातनोति निरङ्कुशं[३] कुशलं वेतरं वा ॥ ४ ॥
स वासनात्मा विषयोपरक्तो गुणप्रवाहो विकृतः षोडशात्मा ।
चित्रं पृथङ्नामभी रूपभेदमन्तर्बहिष्ठः स्वपुरैस्तनोति ॥ ५ ॥
दुःखं सुखं व्यतिमिश्रं च तीव्रं[४] कालोपपन्नं[५] फलमाव्यनक्ति ।
आलिङ्ग्य मायारचितान्तरात्मा स्वदेहिनं संसृतिचक्रकूटः[६] ॥ ६ ॥
तावानयं व्यवहारः सदा वै क्षेत्रज्ञसाक्ष्योर्भवति स्थूलसूक्ष्मः ।
तस्मान्मनो लिङ्गमदो वदन्ति गुणागुणस्यास्य परावरस्य ॥ ७ ॥
गुणानुरक्तं व्यसनाय जन्तोः क्षेमाय नैर्गुण्यमथो मनः स्यात् ।
यथा प्रदीपो घृतवर्तिमास्थितः स्थितिं सधूमां भजति ह्यन्यदा स्वम् ।
पदं तथा गुणकर्मानुबद्धं बहिर्मनः श्रयतेऽन्यत्र तत्वम् ॥ ८ ॥

---

१. मैत्रीं दृशम्.... २. गृहमेधसौख्यम् * ३. निरङ्कुशः ४. चेतरं वा
५. तीव्रकालोपपन्नम् ६. संसृतिचक्रकूटम् * ७. वाऽनुरुद्धम्

एकादशासन् मनसोऽस्य वृत्तीराकूतयः पञ्च धियोऽभिमाना:[१] ।
मात्राणि कर्माणि पुरं च तासां वदन्ति हैकादश वीर भूमिम् ॥ ९ ॥
गन्धाकृतिस्पर्शरसश्रवांसि विसर्गगत्यत्त्यभिजल्पशिल्पाः ।
एकादशं स्वीकरणं ममेति मायामहं द्वादशमेकमाहुः ॥ १० ॥
द्रव्यस्वभावाशयकर्मकालैरेकादशामी मनसो विकाराः ।
सहस्रशः शतशः कोटिशश्च क्षेत्रज्ञतो न मिथो न स्वतः स्युः ॥ ११ ॥
क्षेत्रज्ञ एता मनसो विभूतीर्जीवस्य मायारचिता अनित्याः ।
आविर्हिताश्चापि[२] तिरोहिताश्च शुद्धो विचष्टे ह्यविशुद्धकर्तुः ॥ १२ ॥
क्षेत्रज्ञ आत्मा पुरुषः पुराणः साक्षात्स्वयञ्ज्योतिरजः परेशः ।
नारायणो भगवान् वासुदेवः स्वमाययाऽऽत्मन् व्यवधीयमानः ॥ १३ ॥
यथाऽनिलः स्थावरजङ्गमानामात्मस्वरूपेण निविष्ट ईष्टे ।
एवं परो भगवान् वासुदेवः क्षेत्रज्ञ आत्मेदमनुप्रविष्टः ॥ १४ ॥
न यावदेतां तनुभृन्नरेन्द्र विधूय मायां वयुनोदयेन ।
विमुक्तसङ्गो जितषट्सपत्नो वेदार्थतत्त्वं भ्रमतीह तावत् ॥ १५ ॥
न तावदेतन्मन[३] आत्मलिङ्गं संसारतापावपनं जनस्य ।
यच्छोकमोहामयरागलोभवैरानुबन्धं[४] ममतां विधत्ते ॥ १६ ॥
भ्रातृव्यमेनं त्वमदभ्रवीर्यमुपेक्षयाऽप्येधितमप्रमत्तः ।
गुरोर्हरेश्चरणोपासनास्त्रो जहि व्यळीकं स्वयमात्ममोहम् ॥ १७ ॥

**॥ इति श्रीमद्भागवते पञ्चमस्कन्धे एकादशोऽध्यायः ॥**

---

**रहूगण उवाच**

नमोनमः कारणविग्रहाय स्वरूपतुच्छीकृतविग्रहाय ।
नमोऽवधूतद्विजबन्धुलिङ्गनिगूढनित्यानुभवाय तुभ्यम् ॥ १ ॥

---

१. धियोऽभिमानः
२. आविर्हिताः क्वापि
३. न यावदेतन्मनः ❋
४. .... मोहामयसङ्गलोभ....

ज्वरामयार्तस्य यथाऽगदं सन्निदाघदग्धस्य यथा हिमाम्भः ।
कुदेहमानाहिसुदष्टदृष्टेः[१] ब्रह्मन् वचस्तेऽमृतमौषधं मे ॥ २ ॥
तस्माद् भवन्तं मम संशयार्थं प्रक्ष्यामि[२] पश्चादधुना सुबोधम् ।
अध्यात्मयोगग्रथितं त्वयोक्तमाख्याहि[८] कौतूहलचेतसो मे ॥ ३ ॥
यदाह योगेश्वर दृश्यमानं क्रियाफलं सद्व्यवहारमूलम् ।
नह्यञ्जसा तत्त्वविमर्शनाय भवानमुष्मिन् भ्रमते मनो मे ॥ ४ ॥

**ब्राह्मण उवाच**

अयं जनो नाम चलन् पृथिव्यां यः पार्थिवः पार्थिव कस्य हेतोः ।
तस्यापि चाङ्घ्र्योरधि गुल्फजङ्घाजानूरुमध्योरशिरोधरांसाः ॥ ५ ॥
अंसे च दार्वी[३] शिबिका च यस्यां सौवीरराजेत्यपदेश आस्ते ।
यस्मिन् भवान् रूढनिजाभिमानो राजाऽस्मि सिन्धुष्विति दुर्मदान्धः ॥ ६ ॥
शोच्यानिमांस्तानधि कः समाधिः[४] विष्टया निगृह्णन् निरनुग्रहोऽसि ।
जनस्य गोप्तेति विकत्थमानो न शोभसे वृद्धसभासु धृष्टः[५] ॥ ७ ॥
यदि क्षितावेव चराचरस्य विदाम निष्ठां प्रभवं च नित्यम् ।
तन्नामतोऽन्यद् व्यवहारमूलं[६] निरूप्यतां सत्क्रिययाऽनुमेयम् ॥ ८ ॥
एवं निरुक्तं क्षितिशब्दवृत्तमसन्निधानं परमाणवो ये ।
अविद्यया मनसा कल्पितास्ते येषां समूहेन कृतो विशेषः ॥ ९ ॥
एवं कृशस्थूलमणुर्बृहद्[७] यदसच्च सज्जीवमजीवमन्यत् ।
द्रव्यस्वभावाशयकालकर्मनाम्न्याऽजयाऽवैहि कृतं द्वितीयम् ॥ १० ॥
ज्ञानं विशुद्धं परमार्थमेकमनन्तरं नबहिर्ब्रह्म सत्यम् ।
प्रत्यक् प्रशान्तं भगवच्छब्दवाच्यं यद् वासुदेवं कवयो वदन्ति ॥ ११ ॥

---

१. कुदेहमानाहिसुनष्टदृष्टेः/कुदेहमानाहिविदष्टदृष्टेः २. पृच्छामि ३. अंसेऽधि दार्वी
४. शोच्यानिमांस्तानधिकस्तवाधिः/....तवर्द्धिः ५. दुष्टः ६. व्यवहारमात्रम् *
७. कृशं स्थूलमणुर्बृहद् ८. तवोक्त.../पुरोक्त.....

रहूगणैतत् तपसा न याति न चेज्यया[१] निर्वसनाद् गृहाद् वा ।
न छन्दसा नोत जलाग्निसूर्यैर्विना महत्पादरजोभिषेकम् ॥ १२ ॥
यत्रोत्तमश्लोकगुणानुवादः प्रस्तूयते ग्राम्यकथाविघातः ।
निषेव्यमाणोऽनुदिनं मुमुक्षोर्मतिं सतीं यच्छति वासुदेवे ॥ १३ ॥
अहं पुरा भरतो नाम राजा विमुक्तदृष्टश्रुतसङ्गबन्धः ।
आराधनं भगवत ईहमानो मृगोऽभवं मृगसङ्गाद् हतार्थः ॥ १४ ॥
सा मां स्मृतिर्मृगदेहेऽपि वीर कृष्णार्चनप्रभवा नो जहाति ।
अथो अहं जनसङ्गादसङ्गो विशङ्कमानोऽविवृतश्चरामि[२] ॥ १५ ॥
तस्मान्नरोऽसङ्गसुसङ्गजातज्ञानासिनेवैह विवृक्णमोहः[३] ।
हरिं तदीहाकथनश्रुतिभ्यां[४] लब्धस्मृतिर्यात्यतिपारमध्वनः ॥ १६ ॥

**॥ इति श्रीमद्भागवते पञ्चमस्कन्धे द्वादशोऽध्यायः ॥**

---

**ब्राह्मण उवाच**

दुरत्ययेऽध्वन्यजया निवेशितो रजस्तमस्सत्वविभक्तकर्मदृक् ।
स एष सार्थोऽर्थपरः परिभ्रमन् भवाटवीं याति न शर्म विन्दति ॥ १ ॥
यस्यामिमे षण्णरदेव दस्यवः स्वार्थं विलुम्पन्ति कुनायकं बलात् ।
गोमायवो यत्र हरन्ति सार्थिकं[५] प्रमत्तमाविश्य यथोरणं वृकाः ॥ २ ॥
प्रभूतवीरुत्तृणगुल्मगह्वरे कठोरदंशैर्मशकैरुपद्रुतः ।
क्वचिच्च गन्धर्वपुरं प्रपश्यति[६] क्वचित् क्वचिच्चाशुहरोल्मुकग्रहम् ॥ ३ ॥
निवासतोयद्रविणात्मबुद्धिस्ततस्ततो धावति भो अटव्याम् ।
क्वचित्तु[७] वात्योत्थितपांसुधूम्रा दिशो न जानाति रजस्वलाक्षः ॥ ४ ॥
अदृश्यझिल्लीखनकर्णशूल[८] उलूकवाग्भिर्व्यथितान्तरात्मा ।
अपुण्यवृक्षान् श्रयते क्षुधार्दितो मरीचितोयान्यभिधावति क्वचित् ॥ ५ ॥

---

१. न विद्यया ❋ २. जनसङ्गाद् विमुक्तो विशङ्कमानोऽवधुतश्चरामि ❋ ३. ज्ञानासिनैवेह विवृक्णसङ्गः ❋
४. ....कथनश्रुताभ्याम् ५. सार्थकम् ❋ ६. प्रविश्य ७. क्वचिच्च ८. ....कर्णमूलः ❋

क्वचिद् वितोयाः सरितोऽभियाति परस्परं चालषते निरन्धः[१] ।
आसाद्य दावं क्वचिदग्नितप्तो निर्विद्यते क्व च यक्षैर्हृतासुः ॥ ६ ॥
शूरैर्हृतस्वः[२] क्व च निर्विण्णचेताः[३] शोचन् विमुह्यन्नुपयाति कश्मलम् ।
क्वचिच्च गन्धर्वपुरं प्रविष्टः प्रमोदते निर्वृतवन्मुहूर्तम् ॥ ७ ॥
चलन् क्वचित् कण्टकशर्कराङ्घ्रिर्नगारुरुक्षुर्विमना इवास्ते ।
पदेपदेऽभ्यन्तरवह्निनाऽर्दितः कौटुम्बिकः क्रुद्ध्यति वै जनाय ॥ ८ ॥
क्वचिन्निगीर्णोऽजगराहिना जनो नावैति किञ्चिद् विपिनेऽपविद्धः ।
दष्टः स्म शेते क्व च दन्दशूकैरन्धोऽन्धकूपे पतितस्तमिस्रे ॥ ९ ॥
कर्हिस्मचित् क्षुद्ररसान् विचिन्वंस्तन्मक्षिकाभिर्व्यथितो विमानः[४] ।
तत्रातिकृच्छ्रात्[५] प्रतिलब्धमन्ये बलाद् विलुम्पन्त्यथ तांस्ततोऽन्ये[६] ॥ १० ॥
क्वचिच्च शीतातपवातवर्षप्रतिक्रियां[७] कर्तुमनीश आस्ते ।
क्वचिन्मिथो विपणन् यच्च किञ्चिद् विद्वेषमृच्छत्युत[८] वित्तशाठ्यात् ॥ ११ ॥
क्वचित्क्वचित् क्षीणधनस्तु तस्मिन् शय्यासनस्थानविहारहीनः ।
याचन्[९] परादप्रतिलब्धकामः पारक्यदृष्टिर्लभतेऽवमानम् ॥ १२ ॥
प्रसज्जति क्वापि लताभुजाश्रयस्तदाश्रयाव्यक्तपदद्विजस्पृहः[१०] ।
क्वचित् कदाचिद्धरिचक्रतस्त्रसन् सख्यं विधत्ते बककङ्कगृध्रैः ॥ १३ ॥
तैर्वञ्चितो हंसकुलं समाविशन् नरोचयन् शीलमुपैति वानरान्[११] ।
तज्जातिरासेन सुनिर्वृतेन्द्रियः परस्परोद्वीक्षणविस्मृतावधिः[१२] ॥ १४ ॥
द्रुमेषु रंस्यन् सुतदारवत्सलो व्यवायदीनो विवशः स्वबन्धने[१३] ।
क्वचित् प्रमादाद् गिरिकन्दरे पतन् वल्लीं गृहीत्वा गजभीत आस्थितः ॥ १५ ॥

---

१. खादयते निरन्नः॥ २. परैर्हृतस्वः ३. निर्विण्णचित्तः ४. मथितो विमानः
५. तत्रापि कृच्छ्रात् ६. तं ततोऽन्ये ७. ....वर्षवातप्रतिक्रियाम् ८. विक्रेयमृच्छत्युत अथ
९. यावत् १०. ....स्तदाश्रयोऽव्यक्तपद.... ११. वानरम्
१२. परस्परान्वीक्षणविस्मृतावधिः १३. विवशश्चरन् वने

अतः कथञ्चित् स विमुक्त[१] आपदः पुनश्च सार्थं प्रविशत्यरिन्दम
अध्वन्यमुष्मिन्नजया निवेशितो भ्रमन् जनोऽद्यापि न याति पारम्[२] ॥ १६ ॥
अन्योन्यवित्तव्यतिषङ्गवृद्धवैरानुबन्धो विवहन् मिथश्च[३] ।
अध्वन्यमुष्मिन्नुरुकृच्छ्रवित्तबाधोपसर्गैर्विहरन् विपन्नः ॥ १७ ॥
तांस्तान् विपन्नान् स हि तत्रतत्र विहाय जातं परिगृह्य सार्थः ।
आवर्ततेऽद्यापि न कश्चिदत्र वीराध्वनः पारमुपैति योगम् ॥ १८ ॥
मनस्विनो निर्जितदिग्गजेन्द्रा ममेति सर्वे भुवि बद्धवैराः ।
मृधे शयीरन् नतु तद् व्रजन्ति यन्न्यस्तदण्डो गतवैरोऽभियाति ॥ १९ ॥
रहूगण त्वमपि ह्यध्वनोऽस्य सन्न्यस्तदण्डः कृतभूतमैत्रः ।
असज्जितात्मा हरिसेवया शितज्ञानासिमादाय[४] तरातिपारम् ॥ २० ॥

**राजोवाच**

अहो नृजन्माखिलजन्मशोभनं किं जन्मभिस्त्वपरैरप्यमुष्मिन् ।
न यद् हृषीकेशयशःकृतात्मनां महात्मनां वः प्रचुरसमागमः ॥ २१ ॥
न ह्यद्भुतं त्वच्चरणाब्जरेणुभिर्हतांहसो भक्तिरधोक्षजेऽमला ।
मौहूर्तिकाद् यस्य समागमाच्च मे दुस्तर्कमूलोऽपहतोऽविवेकः ॥ २२ ॥
नमो महद्भ्योऽस्तु नमः शिशुभ्यो नमो युवभ्यो नम आबटुभ्यः[५] ।
ये ब्राह्मणा गामवधूतलिङ्गाश्चरन्ति तेभ्यः शिवमस्तु राज्ञाम् ॥ २३ ॥

**श्रीशुक उवाच**

इत्येवमुत्तरामातः स वै ब्रह्मर्षिसुतः सिन्धुपतये[६] आत्मसुतत्वमविगणितपरानुभावः[७] परमकारुणिकतयोपदिश्य रहूगणेन सकरुणमभिवन्दितचरणकमल आपूर्णार्णव[८] इव निभृतकरणोर्म्याशयो धरणीमिमां[९] विचचार ॥ सौवीरपतिरपि सुजनसमवगतपरमात्मसुतत्त्व[१०] आत्मन्यविद्याध्यारोपितां च देहात्ममतिं विससर्ज । एवं हि नृप भगवदाश्रिताश्रितानुभावः[११] । तस्येमान्[१२] श्लोकानुपगायन्ति ॥ २४-२५ ॥

---

१. ततः कथञ्चित् प्रविमुक्तः २. न वेद कश्चन ३. अधिवहन् मिथश्च ४. शितं ज्ञानासि....
५. आवटुभ्यः ६. सिन्धुपतेः ❋ ७. परमात्मसत्तत्वमविगणितपरमानुभावः ८. पूर्णार्णव इव
९. धरणिमिमाम् १०. ....परमात्मसत्तत्वः ११. भगवदाश्रितानुभावः १२. तत्रेमान्

आर्षभस्येह राजर्षेर्मनसाऽपि महात्मनः । नानुवर्त्मार्हति पुमान्[१] मक्षिकेव गरुत्मतः ॥ २६ ॥

यो दुस्त्यजान् दारसुतान् सुहृद्राज्यं हृदिस्पशम्[२] । जहौ युवैव मलवदुत्तमश्लोकलालसः ॥ २७ ॥

यो दुस्त्यजान् क्षितिसुतस्वजनार्थदारान् प्रार्थ्यां श्रियं सुरवरैः सदयावलोकाम्[३] ।
नैच्छन् नृपस्तदुचितं महतां मधुद्विट्सेवानुरक्तमनसामभवोऽपि फल्गुः ॥ २८ ॥

यज्ञाय धर्मपतये विधिनैपुणाय योगाय साङ्ख्यशिरसे प्रकृतीश्वराय ।
नारायणाय हरये नम इत्युदारं गायन् मृगत्वमपि यः समुदाजहार ॥ २९ ॥

य इदं[४] भागवतसभाजितावदातगुणकर्मणो राजर्षेर्भरतस्यानुचरितं स्वस्त्ययनमायुष्यं धन्यं यशस्यं स्वर्ग्यमापवर्ग्यं चानुशृणोत्याख्यास्यत्यभिनन्दति च सर्वा ह्येवाशिष आत्मन आशास्ते न काञ्चन[५] परत इति ॥ ३० ॥

**॥ इति श्रीमद्भागवते पञ्चमस्कन्धे त्रयोदशोऽध्यायः ॥**

---

### राजोवाच

यो हवा इह बहुविदा महाभागवत त्वयाऽभिहितः पारोक्ष्येण वचसा जीवलोकस्य भवाध्वा स ह्यार्यमनीषया कल्पितविषयो नाञ्जसाऽव्युत्पन्नलोकसमधिगम्यः[६] । अथ तदेतद् दुरधिगमं[७] समवेतानुकूल्येन[८] निर्दिश्यताम् ॥ १ ॥

### सूत उवाच

स होवाच । य एष देहात्ममानिनां सत्वादिगुणविशेषविकल्पित[९]कुशलाकुशलसमाहार-विनिर्मितविविधदेहावळीभिर्वियोगसंयोगाद्यनादिसंसारानुभवस्य द्वारभूतेन षडिन्द्रियवर्गेण तस्मिन् दुर्गाध्ववदसुगमेऽध्वन्यापतित ईश्वरस्य भगवतो विष्णोर्वशवर्तिन्या मायया जीवलोकोऽयं यथा वणिक्सार्थोऽर्थपरः स्वदेहनिष्पादितकर्मानुभवः[१०] श्मशानवदशिवतमायां संसाराटव्यां गतो नाद्यापि विफलबहुप्रतियोगेहः तत्तापोपशमनीं[११] हरिगुरुचरणारविन्दमधुकरानुपदवीमवरुन्धे ॥ २ ॥

---

१. अर्हति नृपः २. हृदिस्पृशः ३. सदयावलोकैः ४. इदम्
५. न काञ्चन ६. ....समधिगतः ७. दुरवगमम् * ८. समवेतानुकल्पेन *
९. गुणविशेषकल्पित....निर्मित....देहावळिभिः १०. स्वदेहनिष्पादितं कर्मानुभवन्*
११. विफलबहुयोगहृत्तापोपशमनीम् */...बहुयोगसहस्रहृत्तापोपशमनीम्

यस्यामु हवा एते षडिन्द्रियनामानः कर्मणा दस्यव इव ते । तद्यथा पुरुषस्य धनं यत्किञ्चित् साक्षाद् धर्मौपयिकं बहुकृच्छ्राधिगतं यत् परमपुरुषाराधनलक्षणं साम्परायिकमुदाहरन्ति[1] तद् धर्म्यं धनं दर्शनस्पर्शनश्रवणास्वादनावघ्राणसङ्कल्पसमवायेन गृहे ग्राम्योपभोगेन कुनाथस्य यथा सार्थस्य तथाऽजितात्मनो[2] विलुम्पन्ति ॥ ३ ॥

अथच यत्र कौडुम्बिकस्य दारापत्यादयो नाम्ना कर्मणा वृकसृगाला इवानिच्छतोऽपि कदर्यस्य कुडुम्बिन उरणकवत् संरक्ष्यमाणं मिषतोऽपि हरन्ति[3] ॥ यथा ह्यनुवत्सरं कृष्यमाणमप्यदग्धबीजं क्षेत्रं पुनरेवावपनकाले गुल्मतृणवीरुद्भिर्गह्वरमिव[4] भवति ॥ एवमेव गृहाश्रमः कर्मक्षेत्रं यस्मिन् नहि कर्माण्युत्सीदन्ति यदपककामकरण्ड एष आवसथः । ॥ ४-६ ॥

तत्र रतो दंशमशकसममनुजापशदैः शलभशकुन्ततस्करमूषिकादिभिरुपरुध्यमानबहिःप्राणः क्वचित् परिवर्तमानोऽस्मिन्नध्वन्यविद्याकामकर्मभिरुपरक्तमनसाऽनुपपन्नार्थनरलोकगन्धर्वनगरमुपपन्नमिति मिथ्यादृष्टिरनुपश्यति ॥ ७ ॥

क्वचिच्चाशेषदोषनिषदनं पुरुषविशेषमुपेत्य तद्वर्णगुणनिर्जितमतिः[5] सुवर्णमुपादित्सत्यग्निकामकातर इवोल्मुकपिशाचम् ॥ अथ कदाचिद् गृहपानीयद्रविणाद्यनेकात्मोपजीवनाभिनिवेश[6] एतस्यां संसाराटव्यामितस्ततः परिधावति ॥ क्वचिद् वात्योपमया[7] प्रमदयाऽऽरोहमारोपितस्तत्कालरजसा रजनीभूत इवासाधुमर्यादो[8] दिग्देवता अतिरजस्वलमतिर्न विजानाति ॥ ८-१० ॥

क्वचिदुलूकझिल्लीस्वनवदतिपरुषरभसाटोपं[9] प्रत्यक्षं परोक्षं वा रिपुराजकुलनिर्भत्सितेन व्यथितकर्णमूलहृदयः ॥ स यदा दग्धपूर्वसुकृतस्तदा[10] कारस्करकाकतुण्डाद्यपुण्यद्रुमलताविषोदपानवदुभयार्थशून्यद्रविणान्[11] जीवन्मृतान् स्वयं जीवन्म्रियमाण उपधावति ॥ क्वचित् सकृदवगतविषयवैतथ्यः स्वयं विषयाभिध्यानेन विभ्रंशितमतिः[12] अत एव मरीचितोयप्रायांस्तानेवाभिधावति ॥ एकदा त्वसत्प्रसङ्गान्निकृतमति[13]र्व्युदस्रोतस्स्खलनवदुभयतोऽपि[14] दुःखदं पाषण्डमभिधावति[15] ॥ ११-१४ ॥

---

१. साम्परायकमुदाहरन्ति २. सार्थस्याजितात्मनः * ३. मिषतोऽपहरन्ति *
४. गह्वरमेव ५. ....निर्वृतमतिः */निहितमतिः ६. आत्मोपजीव्याभिनिवेशः ७. वात्यौपम्यया
८. असाधुमर्यादो रजस्वलाक्षोऽपि ९. अतिपरुषसंरम्भसाटोपम् * १०. दुग्धपूर्व....
११. उभयार्थद्रविणशून्यान् १२. पराभिध्यानेन विभ्रंशितस्मृतिः * १३. निकृत्तमतिः
१४. व्युदस्रोतश्चलनवत्.... १५. उपधावति

यदा तु परबाधयाऽन्ध[१] आत्मनो नोपनमति तदा हि पितृपुत्रान् बालान् खलु भक्षयति ॥ क्वचिदासाद्य गृहं दाववत् प्रियार्थविधुरमसुखोदर्कं शोकाग्निना दह्यमानो भृशं निर्वेदमुपगच्छति ॥ क्वचित् कालविषमितराजकुलयक्षापहृतप्रियतमधनासुर्मृतक इव गतजीवलक्षण[२] आस्ते ॥ कदाचिन्मनोरथोपगतपितृपैतामहाद्यसत् सदिति स्वप्ननिर्वृतिं क्षणमनुभवति ॥ १५-१८ ॥

क्वचिद् गृहाश्रमचोदितकर्मातिभरगिरीनारुरुक्षमाणो[३] लौकिकव्यसनकर्शितमनाः[४] कण्टक-शर्कराक्षेत्रं प्रविशन्निव सीदति ॥ क्वचिच्च दुस्सहेन कायाभ्यन्तरवह्निना गृहीतसारः स्वकुडुम्बाय क्रुध्यति॥ स एव पुनर्निद्राजगरगृहीतोऽन्धेतमसि मग्नः शून्यारण्य इव शेते नान्यत् किञ्चन वेद शव इवापविद्धः। क्वचिद् भग्नमना दष्टो दुर्जनदन्दशूकैरलब्धनिद्राक्षणो व्यथता हृदयेन क्षीयमाण[५]-विज्ञानोऽन्धकूपेऽन्धवत् पतति ॥ १९-२१ ॥

कर्हि स्म चित् काममधुलवान्[६] विचिन्वन् यदा परदारपरद्रव्याण्यवरुन्धानो राज्ञा स्वामिभिर्वा निहतः पतत्यपारे निरये ॥ अथ च तस्मादुभयथाऽपि हि कर्मास्मिन्नात्मनः[७] संसारावपनमुदाहरन्ति ॥ यदि च मुक्तस्ततो बन्धाद् देवदत्त उपाच्छिनत्ति तस्मादपि विष्णुमित्र इत्यनव-स्थितिः ॥ क्वचिच्च शीतातपवातवर्षाद्यनेकाधिदैविकभौतिकात्मीयानां दुःखानां वारणायाकल्पो[८] दुरन्तचिन्तया विषण्ण आस्ते ॥ २२-२५ ॥

क्वचिन्मिथोऽभ्येत्य विपणिकः काकणिकामात्रमप्यपहरति । अकिञ्चिद्वा विद्वेषमुपयाति वित्त-शाठ्येन[९] ॥ क्वचिच्च क्षीणधनः शय्यासनाद्युपभोगविहीनो यावदप्रतिलब्धमनोरथः परस्वादाने व्यवसितमतिस्ततोऽवमानादीनि लभते ॥ एवं वित्तव्यतिषङ्गविवृद्धवैरानुबन्धोऽपि पूर्ववासनया मिथ उद्वहतः स एवोद्वहति[१०] ॥ २६-२८ ॥

क्वचिद् देवमायया स्त्रिया भुजलतोपगूढः प्रस्कन्नविवेकविज्ञानस्तद्विहारगृहारम्भान् कुर्वन् तदाश्रमासक्तः सुतदुहितृकळभाषितावलोकविचेष्टितापहृतहृदय आत्मानमजितात्माऽपारेऽन्धे तमसि प्रहिणोति ॥ २९ ॥

---

१. अर्थः ❋ २. मृत इव गतजीवलक्षणः ❋ ३. चोदनातिभारगिरिम्
४. लोकव्यसन.... ५. व्यथितहृदयेनानुक्षीयमाण.... ६. कामसुखलवान्
७. तस्याशुभप्रक्षाळनकर्म ❋ ८. दशानां प्रतिनिवारणाकल्पः/अकल्यः ❋
९. वित्तशाठ्यात् १०. एवमित्यादिवाक्यं प्राचीनकोशे नास्ति।

कदाचिदीश्वरस्य भगवतो[१] विष्णोश्चक्रात् परमाण्वादिद्विपरार्धापवर्गकालोपलक्षणपरिवर्तेनेन वयो हरत[२] आब्रह्मस्तम्बादीनां मिषतां वित्रस्तहृदयस्तमेवेश्वरं कालचक्रनिजायुधं साक्षाद् भगवन्तं यज्ञपुरुषमनादृत्य पाषण्डदेवताः कङ्कगृध्रबकप्राया आर्यहंससमयपरिभूताः साकल्येनाभिधत्ते[३]॥

यदा तु ताभिः पाषण्डदेवताभिरात्मवञ्चकै[४]रुरुवञ्चितः[५] ब्रह्मकुलं समाविशन् तेषां शीलमुपनयनादिकर्मानुष्ठानेन[६] भगवतो यज्ञपुरुषस्याराधनमेव पुनस्तदरोचयन्[७] शूद्रकुलं भजत्यनिगमपरिशुद्धं यस्य हि मिथुनीभावः कुडुम्बभरणं यथा वानरजातेस्तत्रापि निरवरोधः स्वैरेण विहरन्नतिकृपणबुद्धिरन्योन्यमुखनिरीक्षणादिना ग्राम्यकर्मणैव[८] विस्मृतकालावधिः ॥ ३१ ॥

क्वचिद् द्रुमवदैहिकार्थेषु गृहेषु रंस्यन् यथा वानरः सुतदारवत्सलो व्यवायक्षणः ॥ एवमध्वन्यवरुन्धानो मृत्युगजभयात् तमसि गिरिकन्दरप्राये पतन् कर्मवल्लीमवलम्ब्य तत आपदः कथञ्चिन्नरकाद् विमुक्तः पुनरप्येवं संसाराध्वनि वर्तमानो नरलोकसार्थमुपयाति ॥ ३२-३३ ॥

एतस्मिन् संसाराध्वनि नानाक्लेशोपसर्गवितते आपन्नांस्तत्रतत्र विसृज्य जातंजातमुपादाय शोचन् मुह्यन् खिद्यन् बिभ्यद्[९] हृष्यन् रुदन् गायन् साधुवर्जितो[१०] नैवावर्ततेऽद्यापि[११] यत आरब्ध एष नरलोकसार्थवाहस्तमध्वनः पारमुपदिशन्ति। यदिदं योगानुशासनमेतदेव[१२] शन्तममुपशमशीला उपरतात्मान[१३] उपतिष्ठन्ति ॥ ३४ ॥

यदपि दिगिभजयिनो राजर्षयो नैवैतद् व्रजन्ति किन्तु मृधे शयीरन् ममैवेयं महीति कृतवैरानुबन्धा यां विसृज्य स्वयमुपसंहृताः ॥ यस्यामिम उपसर्गाः सुखदुःखरागद्वेषभयाभिमानप्रमादमदशोकमोहमात्सर्येर्ष्यावमानक्षुत्पिपा[१४]साधिव्याधिजराजन्ममरणादयः ॥ ३५-३६ ॥

**॥ इति श्रीमद्भागवते पञ्चमस्कन्धे चतुर्दशोऽध्यायः[१५] ॥**

---

१. ईश्वरस्य महतो भगवतः २. वयस्तरसा हरतः ३. आर्यसमयपरिहृताः साङ्केत्येवाभिधत्ते
४. आत्मवञ्चितैः ५. उपवञ्चितः ❋ ६. उपनयनादिश्रौतस्मार्तकर्मानुष्ठानेन ७. आराधनमेव तदरोचयन् ८. निरीक्षणादिग्राम्यकर्मणैव ९. बिभ्यद् १०. बिभ्यद् विवदन् क्रन्दन् संहृष्यन् गायन् नह्यमानः साधुवर्जितः ११. गायन्नसाधुवन एवावर्ततेऽद्यापि/....व्यावर्ततेऽद्यापि
१२. योगानुशासनमेतन्नावरुन्धे। एतदेव १३. शन्तमं यन्न्यस्तदण्डा मुनय उपरतात्मानः
१४. ....प्रमादोन्माद.... १५. अस्मिन्नध्याये गद्यक्रमे कोशेषु भूयान् व्यत्यासोऽस्ति।

श्रीशुक उवाच

भरतस्यात्मजः सुमतिर्नामाभिहितो यमुहवाव केचित् पाषण्डिनो विलोक्य ऋषभपदवी-मनुवर्तमानमनार्या अवेदसमाम्नातां देवतां स्वमनीषया पापीयस्या[१] कलौ कल्पयिष्यन्ति ।। तस्माद् गृध्रश्येनायां[२] देवपादिर्नाम पुत्रोऽभवत् ।। अथासुर्यां तत्तनयो देवद्युम्नस्ततो धेनुमत्यां सुतः परमेष्ठी तस्य सुवर्चलायां प्रतीह उपजातो य आत्मविद्यायां स्वयं संसिद्धो महापुरुषमनुसस्मार ।। प्रतीहात् सुतबलायां[३] प्रतिहर्त्रादयस्त्रय आसन् इज्याकोविदाः सूनवः । प्रतिहर्तुः स्तुत्यां व्योमभूमानावज-निषाताम् ।। २-४ ।।

व्योम्न ऋषिकुल्यायामुद्गीथस्ततः प्रस्तोता[४] देवकुल्यायां प्रस्तोतुर्विरुत्सायां[५] हृदयज आसीद् विभुर्विभो रथ्यां[६] च पृथुषेणस्तस्मान्नक्त आकूत्यां जज्ञे नक्ताद् ऋतिपुत्रो गयो राजर्षिप्रवर उदारश्रवा अजायत साक्षाद् भगवतो विष्णोर्जगद्रिरक्षयिषया[७] गृहीतसत्त्वस्य कलाया आत्मवत्ताभिलक्षणेन[८] महापुरुषतां प्राप्तः ।। ५ ।।

स वै स्वधर्मेण प्रजापालनपोषणप्रीणनोपलाळनानुशासनलक्षणेनेज्यादिना च भगवति महापुरुषे परब्रह्मणि सर्वात्मनाऽर्पितपरमार्थलक्षणेन ब्रह्मविच्चरणानुसेवयोपासादितभगवद्भक्तियोगेन[९] चाभी-क्ष्णशः परिभावितविशुद्धमतिरुपरतानात्म्ये[१०] स्वात्मनि[११] स्वयमुपलभ्यमानब्रह्मानुभावोऽपि निरभिमान एवावनिमजूगुपत्[१२] । तस्येमां गाथां पाण्डवेय पुराविद उपगायन्ति ।। ६ ।।

गयं नृपं[१३] कः प्रतियाति कर्मभिर्यज्वाऽभिमानी बहुविद् धर्मगोप्ता ।
सदागतश्रीः[१४] सदसस्पतिः सतां सत्सेवकोऽन्यो भगवत्कलामृते ।। ७ ।।
यमभ्यषिञ्चन् परया मुदा सतीः सत्याशिषो दक्षकन्याः सरिद्भिः ।
यस्य प्रजानां दुदुहे धराऽऽशिषो यथेप्सिता वै गुणवत्स्नुतोधाः[१५] ।। ८ ।।
छन्दांस्यकामस्य च यस्य कामानुदूहुराजहुरथो बलिं नृपाः ।
प्रत्याहृता युधि धर्मे च विप्रा यस्याशिषां[१६] षष्ठमंशं प्रजाश्च ।। ९ ।।

---

१. पापीयसि २. बृहत्सेनायाम्/ध्रुवसेनायाम्/वृद्धसेनायाम् ३. सुबलायाम् ४. प्रस्तावः
५. प्रस्तावाद् विरुरुत्सायाम् ६. रत्याम् ७. जगदभिरक्षया * ८. कलयाऽऽत्मवत्ताभिलक्षणेन
९. सेवयाऽऽपादित.... १०. शुद्धसत्त्व उपरता... * ११. आत्मनि १२. अजुगुपत्
१३. नृपः १४. समागतश्रीः १५. गुणवत्सस्नुतोधाः १६. यस्याशिषः */यस्याशिषा

यस्याध्वरे भगवानध्वरात्मा मघोनि माद्यत्युरुसोमपीथे ।
श्रद्धाविशुद्धाचलभक्तियोगसमर्पितेज्याफलमाजहार ॥ १० ॥
यत्प्रीणनाद् बर्हिषि देवतिर्यङ्मनुष्यवीरुत्तृणमाविरिञ्चात् ।
प्रीयेत सद्यः स ह[1] विश्वजीवः प्रीतः स्वयं प्रीतिमगाद् गयस्य ॥ ११ ॥

गयाज्जयन्त्यां चित्ररथः स्वातिरवरोधन[2] इति त्रयः पुत्रा बभूवुश्चित्ररथादूर्जायां सम्राडजनिष्ट ॥ तत उत्कलायां मरीचिर्मरीचेर्बिन्दुमत्यां बिन्दुमानुदपद्यत तस्मात् सुषेणायां[3] मधुर्नामाऽभवत् । मधोः सुमनस्यां[4] वीरव्रतस्ततो भोजायां[5] मन्युप्रमन्यू[6] जज्ञाते मन्योः[7] सत्यायां भुवनस्ततो दोषायां[8] त्वष्टा अजनिष्ट । त्वष्टुर्विरजो विरोचनायां[9] विरजस्य शतजित्प्रवरं पुत्रशतं कन्या च विषूच्यां किल जाता[10] ॥ १२-१३ ॥

**तत्रायं श्लोकः**

प्रैयव्रतं वंशमिमं विरजश्चरमोद्भवः । अकरोदत्यलं कीर्त्या विष्णुः सुरगणं यथा ॥ १४ ॥

**॥ इति श्रीमद्भागवते पञ्चमस्कन्धे पञ्चदशोऽध्यायः ॥**

---

**राजोवाच**

उक्तस्त्वया[11] भूमण्डलायामविशेषो यावदादित्यस्तपति यत्र चासौ ज्योतिषां गणैश्चन्द्रमाः सह दृश्यते ॥ तत्रापि प्रियव्रतरथचरणपरिघातैः[12] सप्तभिः सप्त सिन्धव उपक्लृप्ता यत एतस्याः सप्तद्वीपविकल्पस्त्वया[13] खलु भगवन् सूचितः । एतदेवाखिलमहं[14] मानतो लक्षणतश्च सर्वं विजिज्ञास्यामि[15] ॥ भगवतो गुणमये एव स्थूलरूपे[16] आवेशितं मनो ह्यगुणेऽपि सूक्ष्मतम[17] आत्मज्योतिषि परे ब्रह्मणि भगवति वासुदेवाख्ये क्षममावेशितुं तदुहैवैतद्[18] गुरोऽर्हस्यनुवर्णितुमिति[19]॥ १-३ ॥

---

१. स हि २. अवरोधः ३. सरघायाम् ४. सुमनसि ५. व्रजायाम्
६. मन्थुप्रमन्थू ७. मन्थोः ८. दूषणायाम् ९. विरचनायाम् ❋ १०. जातम्
११. इत्युक्तस्त्वया १२. ...परिखातैः १३. सप्तद्वीपविशेषकल्पस्त्वया
१४. एतदेव निखिलमहम् १५. विजिज्ञास्यामि १६. गुणमये स्थूलरूपे १७. सूक्ष्मे ❋
१८. तदु हैतद् १९. वर्णयितुमिति

**ऋषिरुवाच**

नवै महाराज भगवतो मायागुणविभूतेः स्थानविशेषाणां नामरूपतः काष्ठां मनसाऽधिगन्तुमलं विबुधायुष्येणापि[१] पुरुषस्तस्मात् प्राधान्येनैव भूगोळविशेषं नामरूपमानलक्षणतो व्याख्यास्यामः॥

यो वा अयं द्वीपः कुवलयकमलकोशाभ्यन्तरकोशो नियुतयोजनविशालः समवर्तुळो[२] यथा पुष्करपत्रम्॥ यस्मिन् नव वर्षाणि नवनवयोजनसहस्रायामानि[३] अष्टभिर्मर्यादागिरिभिः सुविभक्तानि भवन्ति॥ येषां[४] मध्ये इळावृतं नामाभ्यन्तरवर्षं यस्य नाभ्यामवस्थितः सर्वतः सौवर्णः कुलगिरि-राजो मेरुर्द्वीपायामसमुन्नाहः कर्णिकाभूतः कुवलयकमलकोशस्य[५] मूर्ध्नि द्वात्रिंशत्सहस्रयोजन-विततो मूले षोडशसाहस्रस्तावता[६]ऽन्तर्भूम्यां प्रविष्टः ॥ ६-७ ॥

उत्तरेणेळावृतान्नीलः श्वेतः शृङ्गवानिति त्रयो रम्यकहिरण्मयकुरूणां[७] त्रयाणां मर्यादागिरयः प्रागायता उभयतः क्षारोदावधयो द्विसाहस्रपृथव[८] एकैकशः पूर्वस्मादुत्तरोत्तरा दशांशेन दैर्घ्य एव ह्रसन्ति ॥ ८ ॥

एवं दक्षिणेनेळावृतान्निषधो हेमकूटो हिमालय इति प्रागायता यथा नीलादयोऽयुतयोजनोत्सेधाः हरिवर्षकिम्पुरुषभारतानां यथासङ्ख्यं मर्यादागिरयः ॥ ९ ॥

तथैवेळावृतमपरेण पूर्वेण च माल्यवद्गन्धमादनावानीलनिषधायतौ द्विसाहस्रपृथू केतुमाल-भद्राश्वयोः सीमानं विदधाते ॥ १० ॥

मन्दरो मेरुमन्दरः सुपार्श्वः कुमुद इत्ययुतयोजनविस्तारोन्नाहा मेरोश्चतुर्दिशमवष्टम्भगिरय उपक्लृप्ताः[९]॥ चतुर्ष्वेतेषु चूतजम्बूकदम्बन्यग्रोधाश्चत्वारः पादपप्रवराः पर्वतकेतव इव अधिकशतसहस्र-योजनोन्नाहा[१०]स्तावद्विटपविततयः शतयोजनपरिणाहाः॥ ह्रदाश्चत्वारः पयोमध्विक्षुरसमृष्टजला यदुपस्पर्शिन उपदेवगणा योगैश्वर्याणि स्वाभाविकानि भरतर्षभ धारयन्ति॥ देवोद्यानानि च भवन्ति चत्वारि नन्दनं चैत्ररथं वैभ्राजं सर्वतोभद्रमिति॥ येष्वमरपरिवृढाः सहामरललना-ललामयूथपतयः उपदेवगणैरुपगीयमानमहिमानः[११] किल विहरन्ति ॥ ११-१५ ॥

---

१. महागुणविभूतेः काष्ठां मनसा वचसाऽधिगन्तुमलं विबुधायुषापि २. समवर्तुळम्
३. नवयोजनसहस्रायामानि ४. एषाम्/तेषाम् ५. कुवलयकमलस्य
६. षोडशसहस्रयोजनविततस्तावता ७. कुरूणां वर्षाणाम् ८. द्विसाहस्रं पृथवः/द्विसहस्रपृथवः
९. उपक्षिप्ताः १०. अधिसहस्रयोजनोन्नाहाः ११. उपगीयमानाः

मन्दरोत्सङ्ग एकादशशतयोजनोत्तुङ्गदेवचूतशिरसो गिरिशिखरस्थूलानि फलान्यमृतकल्पानि पतन्ति ॥ तेषां विशीर्यमाणानामतिमधुरसुरभिबहळारुणरसोदेनारुणोदा नाम नदी मन्दरगिरिशिखरान्निपतन्ती पूर्वेणेळावृतमुपप्लावयति[१] ॥ यदुपजोषाद्[२] भवान्या अनुचरीणां पुण्यजनवधूनामवयवस्पर्शसुगन्धवातो दशयोजनं समन्तादनुवासयति ॥ एवं जम्बूफलानामत्युच्चनिपातविशीर्णानामनस्थिप्रायाणामिभकायनिभानां रसेन जम्बू नाम नदी मेरुमन्दरशिखरादयुतयोजनादवनितळे निपतन्ती दक्षिणेनात्मानं यावदिळावृतमुपस्यन्दयति ॥ १६-१९ ॥

तावदुभयोरपि रोधसोर्या मृत्तिका फलरसेन चानुविध्यमाना च वाय्वर्कसंयोगविपाकेन सदाऽमरलोकाभरणं जाम्बूनदं नाम सुवर्णं भवति ॥ यदुहवाव विबुधादयः सह युवतिभिः कटकमुकुटकटिसूत्राद्याभरणरूपेण[३] खलु धारयन्ति ॥ यस्तु महाकदम्बः सुपार्श्वनिगूढस्तस्य कोटरेभ्यो निःसृताः पञ्चव्यामपरिणाहाः पञ्च मधुधाराः सुपार्श्वशिखरात् पतन्त्योऽपरेणात्मानं इळावृतमनुमोदयन्ति ॥ या ह्युपयुञ्जानानां[४] मुखनिर्वासितो वायुः समन्ताच्छतयोजनमनुवासयति ॥२०-२३॥

एवं कुमुदनिरूढो यः शतबलिशो[५] नाम वटस्तस्य स्कन्धेभ्योऽवाचीनाः[६] पयोदधिघृतमधुगुडान्नाद्यम्बरशय्यासनाभरणादयः सर्वकामदुघा[७] नदाः कुमुदाग्रात् पतन्त उत्तरेणेळावृतमुपयोजयन्ति[८] ॥ यानुपयुञ्जानानां न कदाचिदपि प्रजानां वलीपलितक्लमस्वेददौर्गन्ध्यजरामयमृत्युशीतोष्णवैवर्ण्योपसर्गादयस्तापविशेषा भवन्ति । यावज्जीवं सुखं निरतिशयमेव ॥ २४-२५ ॥

कुरङ्गकुररकुसुम्भवैकङ्कतत्रिकूट[९]शिशिरपतङ्गरुचकनिषधशितिवासकपिलशङ्खवैडूर्यजारुधिहंसर्षभनीरनागकाळाञ्जननारदादयो[१०] गिरयो मेरोः कर्णिकाया इव केसरभूता मूलदेशे परित उपक्लृप्ताः॥ जठरदेवकूटौ मेरुं पूर्वेण[११] अष्टादशयोजनसहस्रौ उदगायतौ द्विसाहस्रं पृथूत्तुङ्गौ[१२] भवतः । एवमपरेण पवनपारियात्रौ दक्षिणेन कैलासकरवीरौ प्रागायतौ एवमुत्तरतः शृङ्गमकरौ इत्यष्टभिरेतैः परिस्तृतोऽग्निरिव परितो मेरुश्चकास्ति काञ्चनगिरिः ॥ २७ ॥

मेरोर्मूर्धनि तन्मध्यतो भगवत आत्मयोनेरुपक्लृप्तां पुरीमयुतयोजनसाहस्रीं समचतुरस्रां शात-

---

१. उपधावति २. यदुपजोषणात् ३. मकुटकटक.... ४. उपभुञ्जानानाम्
५. शतवल्कलः/शतवलशः ६. अर्वाचीनाः ७. सर्व एव कामदुघाः ८. उपभोजयन्ति
९. वैकङ्कत्रिकूट.... १०. कालञ्जरनारदादयः ११. मेरुपर्वतः १२. द्विसाहस्रपृथुतुङ्गौ ❋

कौम्भीं शतकोटिं वदन्ति ॥ तामनु परितो लोकपालानामष्टानां यथादिशं यथानुरूपं[१] तुरीयभागेन पुरोऽष्टावुपक्लृप्ताः ॥ २८-२९ ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे षोडशोऽध्यायः ॥

श्रीशुक उवाच

यत्र[२] भगवतः साक्षाद् यज्ञलिङ्गस्य विष्णोर्विक्रमतो वामपादाङ्गुष्ठनखनिर्भिण्णोर्ध्वाण्ड-कटाहविवरेणान्तःप्रविष्टा या बाह्यजलधारा तच्चरणपङ्कजावनेजनारुणकिञ्जल्ककुङ्कुमोपरञ्जिताखिल[३]-जगदघमलापहोपस्पर्शनामला साक्षाद्भगवत्पदीत्यनुपलक्षितवचोभिरभिधीयमानाऽतिमहता कालेन युगसहस्रोपलक्षणेन दिवो मूर्धन्यवततार यत्तद्विष्णुपदमाहुः । यत्र हवाव वीरव्रत औत्तानपादिः परमभागवतोऽस्मत्कुलदेवताचरणारविन्दोदकमिति यामनुसवनमुत्कृष्यमाणभगवद्भक्तियोगेन दृढं क्लिद्यमानान्तर्हृदय औत्कण्ठ्यविवशामीलितलोचनयुगळकुड्मलविगळितामलबाष्पकळयाऽभिव्यज्य-मानरोमपुळककुलकः अधुनाऽपि परमादरेण शिरसा बिभर्ति ॥ १-२ ॥

ततः[४] सप्तऋषयस्तत्प्रभावज्ञा[५] ननु तपस[६] आत्यन्तिकी सिद्धिरेतावतीति भगवति सर्वात्मनि वासुदेवेऽनवरतभक्तियोगलाभेनैवोपेक्षितान्यार्थात्मगतयो मुक्तिमिवागतां मुमुक्षवः सबहुमानमेनामद्यापि जटाजूटैरुद्वहन्ति ॥ ततोऽनेकसहस्रकोटिविमानानीकसङ्कुलदेवयानेनावतरन्तीन्दुमण्डलमाप्लाव्य ब्रह्मसदने निपतति ॥ तत्र चतुर्धा भिद्यमाना चतुर्भिर्नामभिश्चतुर्दिशमभिस्यन्दती नदनदीपति-मेवभिनिविशते सीताऽळकनन्दा चक्षुर्भद्रेति ॥ ३-५ ॥

सीता तु ब्रह्मसदनात् केसराचलादिगिरिशिखरेभ्योऽधोऽधः प्रस्रवन्ती[७] गन्धमादनमूर्ध्नि पतित्वाऽन्तरेण भद्राश्वं वर्षं प्राच्यां दिशि क्षारसमुद्रं प्रविशति[८] ॥ एवं माल्यवच्छिखरान्निष्प-तन्त्यनुपरतवेगा केतुमालमभि चक्षुः प्रतीच्यां दिशि सरित्पतिं प्रविशति ॥ ७ ॥

भद्रा चोत्तरतो मेरुशिरसो निपतिता गिरिशिखराद् गिरिशिखरमतिहाय शृङ्गवतः शृङ्गादवस्यन्दमाना उत्तरांस्तु कुरूनतिक्रम्योदीच्यां दिशि लवणार्णवं प्रविशति ॥ तथैवाळकनन्दा

१. यथारूपम् २. तत्र ३. किञ्जल्कोपरञ्जिता.... ४. ततः सप्तऋषयः
५. तत्प्रभावज्ञा ऋषिलोके ६. इयं नु तपसः ❋/यां ननु ७. पतन्ती ८. अभिप्रविशति

दक्षिणेन तु ब्रह्मसदनाद् बहूनि गिरिकूटान्यतिक्रम्य हेमकूटहिमकूटानि रभसतररंहसा[१] लुठती भारतमेव[२] वर्षं दक्षिणस्यां दिशि जलधिं प्रविशति ॥ ८-९ ॥

अन्ये नदा नद्यश्च वर्षेवर्षे सन्ति बहुशो मेर्वादिगिरिदुहितरः । अत्रापि[३] जम्बुद्वीपे भारतमेव वर्षं कर्मक्षेत्रम् अथान्यान्यष्टवर्षाणि स्वर्गिणां पुण्यशेषोपभोगस्थानानि भौमस्वर्गपदानि[४] व्यपदिशन्ति ।। येषु[५] पुरुषाणामयुतवर्षायुषां देवकल्पानां नागायुतप्राणानां वज्रसंहननबलवयोमोदप्रमुदितमहासौरत[६]मिथुनव्यवायापवर्गैकवर्षायुर्धृतैकगर्भकळत्राणां[७] त्रेतायुगसमः कालो वर्तते ॥१०-११॥

यत्र ह देवपतयः स्वैःस्वैर्गणनायकैर्विहितमहार्हणाः सर्वर्तुकुसुमस्तबकफलकिसलयश्रिया आनम्यमान[८]विटपलताविटपिभिरुपशोभमानरुचिरकाननाश्रमायतनवरगिरिद्रोणीषु[९] तथा चामलजलाशयेषु विचकविविधवनरुहामोदमदमुदितराजहंसकळहंसजलकुक्कुटकारण्डवसारसचक्रवाकादिभिर्मधुकरनिकराकृतिभिरुपकूजितेषु[१०] जलक्रीडादिभिर्विविधविनोदैः सुलळितसुरसुन्दरीणां कामकलिलविलासहासलीलावलोकाकृष्टमनोदृष्टयः स्वैरं किल विहरन्ति ॥ १२ ॥

नवस्वपि वर्षेषु भगवान् नारायणो महापुरुषः पुरुषाणामनुग्रहायात्मतत्त्वव्यूहेनाद्यापि सन्निधीयते ।। इळावृते तु भगवान् भव एक एव पुमान् नह्यन्यस्तत्र प्रविशति[११] भवान्याः शापनिमित्तज्ञः । यत् प्रविश्य[१२] स्त्रीभावस्तत्[१३] पश्चाद् वक्ष्यामः ।। भवानीनाथैः स्त्रीगणार्बुदसहस्रैरवरुध्यमानो भगवतश्चतुर्मूर्तेर्महापुरुषस्य तुरीयां तामसीं मूर्तिं प्रकृतिमात्मनः सङ्कर्षणसञ्ज्ञां आत्मसमाधिरूपेण सन्निधाप्यैतदभिगृणन् भव उपधावति ।। **भव उवाच** ।

ॐ नमो भगवते महापुरुषाय सर्वगुणसङ्ख्यातायानन्तायाव्यक्ताय नम इति ।। १३-१६ ॥

भजे भजन्यारुणपादपङ्कजं[१४] भगस्य कृत्स्नस्य परं परायणम् ।
भक्तेष्वलम्भावितभूतभावनं भवापहं त्वां भवभावमीश्वरम् ॥ १७ ॥
न यस्य मायागुणचित्तवृत्तिभिर्निरीक्षतो ह्यण्वपि दृष्टिरज्यते ।
ईशो यथा नोऽजितमन्युरंहसां कस्तं न मन्येत जिगीषुरात्मनः ॥ १८ ॥

---

१. अतितररभसरंहसा ❋ २. लुठयन्ती भारतमभि ३. तत्रापि ४. भौमानि स्वर्गपदानि ❋
५. येषु ६. महासौरतनिरतनखरावरोधमिथुन.... ❋ ७. व्यवायापवर्गधृतैकगर्भ...❋
८. नानम्यमान ९. ....वर्षगिरिद्रोणीषु.... ❋ १०. निकरारुतिभिरुप.... ❋
११. निर्विशति १२. प्रवेक्ष्यतः १३. स्त्रीस्वभावस्तत् १४. भजन्यारणपादपङ्कजम्

असन्दृशो यः प्रतिभाति मायया क्षीबेव मध्वासवताम्रलोचनः ।
न नागवध्वोऽर्हण ईशिरे[१] ह्रिया यत्पादयोः स्पर्शनधर्षितेन्द्रियाः ॥ १९ ॥
यमाहुरस्य स्थितिजन्मसंयमं त्रिभिर्विहीनं यमनन्तमीश्वरम् ।
न वेद सिद्धार्थमिव क्वचित् स्थितं[२] भूमण्डलं मूर्धसहस्रधामसु ॥ २० ॥
यस्याद्य आसीद् गुणविग्रहो महान् विज्ञानधिष्ण्यो भगवानजः किल ।
यत्सम्भवोऽहं त्रिवृता स्वतेजसा वैकारिकं तामसमैन्द्रियं सृजे ॥ २१ ॥
एते वयं यस्य वशे महात्मनः स्थिताः शकुन्ता इव सूत्रयन्त्रिताः ।
महानहं वैकृततामसैन्द्रियाः[३] सृजाम सर्वे[४] यदनुग्रहादिदम् ॥ २२ ॥
यन्निर्मितां कर्ह्यपि कर्मपर्वणीं मायां जनोऽयं गुणसर्गमोहितः ।
न वेद निस्तारणयोगमञ्जसा तस्मै नमस्तद्विलयोदयात्मने ॥ २३ ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे सप्तदशोऽध्यायः ॥

---

### श्रीशुक उवाच

तथाच भद्रश्रवा नाम धर्मसुतस्तत्कुलपतयः पुरुषा भद्राश्वे वर्षे साक्षाद्भगवतो वासुदेवस्य प्रियां तनूं[५] धर्ममयीं हयशीर्षाभिधानां परमेण समाधिना सन्निधाप्येदमभिगृणन्त उपधावन्ति ॥ १ ॥

### भद्रश्रवस ऊचुः

ॐ नमो भगवते धर्मायात्मशोधनाय नम इति[६] ॥ २ ॥
अहो विचित्रं भगवद्विचेष्टितं घ्नन्तं जनोऽयं हि मिषन् न पश्यति[७] ।
ध्यायन्नसद् यर्हि विकर्म सेवते निर्हृत्य पुत्रः पितरं जिजीविषन्[८] ॥ ३ ॥
वदन्ति विश्वं कवयः स्म नश्वरं पश्यन्ति चाध्यात्मविदो विपश्चितः ।
तथापि मुह्यन्ति तवाज मायया सुविस्मयं कृत्यविदं[९] नताः स्म तम् ॥ ४ ॥

---

१. अर्हणमीशिरे  २. स्थितं क्वचित्  ३. वैकृततामसेन्द्रियैः ❋  ४. सर्वम्  ५. तनुम्
६. नमोनम इति  ७. निमिषन्न पश्यति ❋  ८. जिजीविषुः  ९. कृत्यमिदम्

विश्वोद्भवस्थाननिरोधकर्म ते ह्यकर्तुरङ्गीकृतमप्यपावृतम् ।
युक्तं न चित्रं त्वयि कार्यकारणे सर्वात्मके[१] व्यतिरिक्ते च वस्तुनि ॥ ५ ॥
वेदान् युगान्ते तमसा तिरस्कृतान् रसातळाद् यो नृतुरङ्गविग्रहः ।
प्रत्याददे वै कवयेऽभियाचते तस्मै नमस्तेऽवितथेहिताय इति ॥ ६ ॥

हरिवर्षे चापि भगवान् नरहरिरूपेणास्ते तद्रूपग्रहणनिमित्तमुत्तरत्राभिधास्यामः । तद् दयितं रूपं महापुरुषगुणभाजनो[२] महाभागवतो दैत्यदानवकुलतीर्थीकरणशीलाचरितः प्रह्लादोऽव्यवधानानन्य-भक्तियोगेन सह तद्वर्षपुरुषैरुपास्ते । इदं चोदाहरति ॥ ७ ॥

ॐ नमो भगवते नरसिंहाय[३] तेजस्तेजसे आविराविर्भव वज्रनख वज्रदंष्ट्र कर्माशयान् रन्धयरन्धय तमो ग्रसग्रस स्वाहा[४] अभयमात्मने भूयिष्ठा[५] ॐ क्ष्रौम् ॥ ८ ॥

स्वस्त्यस्तु विश्वस्य खलु प्रसीदतां ध्यायन्तु भद्राणि शिवं मनो धिया ।
मनश्च भद्रं भजतादधोक्षजे ह्यावेश्यतां[६] नो मतिरप्यहैतुकी ॥ ९ ॥
माऽऽगारदारात्मजदेहबन्धुषु[७] सङ्गो यदि स्याद् भगवत्प्रियेषु नः ।
यः प्राणवृत्त्या परितुष्ट आत्मवान् सिद्ध्यत्यदूरान्न तथेन्द्रियप्रियः ॥ १० ॥
यत्सङ्गलब्धं निजवीर्यवैभवं तीर्थं मुहुः संस्पृशतां हि मानसम् ।
हरत्यजोऽन्तः श्रुतिभिर्गतोऽङ्गः को वै न सेवेत मुकुन्दविक्रमम् ॥ ११ ॥
यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासते सुराः ।
हरावभक्तस्य कुतो महद्गुणा मनोरथेनासति धावतो बहिः ॥ १२ ॥
हरिर्हि साक्षाद् भगवान् शरीरिणामात्मा झषाणामिव तोयमीप्सितम्[८] ।
हित्वा महान्तं यदि सज्जते गृहे तदा महत्त्वं वयसा दम्पतीनाम् ॥ १३ ॥
तस्माद् रजोरागविषादमन्युमानस्पृहाभयदैन्याधिमूलम् ।
हित्वा गृहं संसृतिचक्रवाळं नृसिंहपादं भजताकुतोभयमिति ॥ १४ ॥

केतुमाले[९] भगवान् कामदेवस्वरूपेणास्ते लक्ष्म्याः प्रियचिकीर्षया । प्रजापतेर्दुहितॄणां

---

१. सर्वात्मनि २. महापुरुषभाजनम् ३. नृसिंहाय ४. तमो ग्रस स्वाहा
५. भूयिष्ठात् * ६. आविश्यताम् ७. ....वित्तबन्धुषु * ८. तोयमीप्सितः ९. केतुमालेऽपि

तद्वर्षपतीनां पुरुषायुषाऽहोरात्रपरिसङ्ख्यानानां यासां गर्भा महापुरुषमहास्त्रतेजसोद्वेजितमनसां विध्वस्ता व्यसवः संवत्सरान्ते निपतन्ति ॥ १५ ॥

अतीवसुलळितगतिविलासविलसितरुचिरहासलेशावलोकलीलया किञ्चिदुत्तम्भितसुन्दरभ्रूमण्डलसुभगवदनारविन्दश्रिया रमां रमयन्निन्द्रियाणि रमयते ॥ तद् भगवतो मायामयं रूपं परमसमाधियोगेन रमादेवी संवत्सरस्य रात्रिषु प्रजापतेर्दुहितृभिरुपेताऽहस्सु तद्भर्तृभिरुपेतोपास्ते । इदं चोदाहरति ॥ १६-१७ ॥

ॐ ह्रां ह्रीं ह्रूं ॐ नमो भगवते[१] हृषीकेशाय सर्वविशेषैर्विलक्षितात्मने[२] आकूतीनां चित्तानां चेतसां विशेषाणां चाधिपतये षोडशकलाय च्छन्दोमयायान्नमयायामृतमयाय सर्वमयाय सहसे ओजसे बलाय कान्ताय कामाय नमस्ते उभयत्र भूयात् ॥ १८ ॥

स्त्रियो व्रतैस्त्वां हृषीकेशमीश्वरमाराध्य[३] लोके पतिमासतेऽन्यम्[४] ।
अनेन तासां परिपास्यपत्यं प्रियं धनायूंषि यतोऽस्वतन्त्राः ॥ १९ ॥
स वै पतिः स्यादकुतोभयः स्वयं समन्ततः पाति भयातुरं जनम् ।
स एक एवेतरथा मिथो भयं[५] नैवात्मलाभादधि मन्यते परम् ॥ २० ॥
यस्तस्य ते पादसरोरुहार्हणं निकामयेत् सोऽखिलकामलम्पटः ।
तदेव चाभीप्सितमीप्सितार्चितं यद् भग्नयाश्चो भगवन् प्रतप्यते ॥ २१ ॥
मत्प्राप्तये ये ससुरासुरादयस्तप्यन्त उग्रं तप ऐन्द्रियेधियः ।
ऋते भवत्पादपरायणं न मां विन्दन्त्यहं त्वद्धृदया यतोऽजित ॥ २२ ॥
स त्वं ममाप्यच्युत शीर्ष्णि वन्दितं[६] कराम्बुजं यत् त्वदधायि[७] सात्वताम् ।
बिभर्षि मां लक्ष्म वरेण्य मायया क ईश्वरस्येहितमूहितुं विभुरिति ॥ २३ ॥

रम्यके च भगवतः प्रियं[८] मात्स्यमवताररूपं तद्वर्षपुरुषस्य मनोः प्राग् दर्शितं[९] स इदानीमपि महता भक्तियोगेनाराधयन्निदं चोदाहरति ॥ २४ ॥

ॐ नमो भगवते मुख्यतमाय नमः सत्वाय प्राणायौजसे बलाय सहसे महामत्स्याय नम इति ॥ २५ ॥

---

१. ॐ नमो भगवते २. सर्वविशेषवित्क्षेत्रात्मने * ३. हृषीकेश ईश्वरमाराध्य */हृषीकेश्वरं स्वतः
४. पतिमाशासतेऽन्यम् ५. भजन् ६. ममापि कुरु शीर्षणि स्वम्
७. तदधायि ८. प्रियतमम् ९. प्राक् प्रदर्शितम्

अन्तर्बहिश्चाखिललोकपालकैरदृष्टरूपो विचरस्युरुस्वनः ।
स ईश्वरस्त्वं य इदं वशेऽनयन्नाम्ना यथा दारुमयीं नरः स्त्रियम् ॥ २६ ॥
यं लोकपालाः किल मत्सरज्वरा हित्वा यतन्तोऽपि पृथक् समेत्य च ।
पातुं न शेकुर्द्विपदश्चतुष्पदः सरीसृपं स्थास्नु यदत्र दृश्यते ॥ २७ ॥
भवान् युगान्तार्णव ऊर्मिमालिनि क्षोणीमिमामोषधिवीरुधां निधिम् ।
मया सहोरुक्रम ऊह ओजसा तस्मै जगत्प्राणगुणात्मने नम इति ॥ २८ ॥

हिरण्मये तु भगवान् निवसति कूर्मतनुं बिभ्राणः । तस्य प्रियतमां तनुमर्यमा सह तद्वर्षपुरुषैः पितृगणाधिपतिरुपधावति । मन्त्रमिमं चानुजपति ॥ २९ ॥

ॐ नमो भगवते अकूपाराय सर्वसत्वगुणविशेषणाय नोपलक्षितस्थानाय नमो वर्ष्मणे नमः प्रमाणाय नमो भूम्ने[१] नमोऽवस्थानाय नमस्ते ॥ ३० ॥

यद्रूपमेतन्निजमाययाऽर्पितमर्थस्वरूपं बहुरूपरूपितम् ।
सङ्ख्या न यस्यास्त्ययथोपलम्भनात् तस्मै नमस्तेऽव्यपदेशरूपिणे[२] ॥ ३१ ॥
जरायुजं स्वेदजमण्डजोद्भिदं[३] चराचरं देवर्षिपितृभूतभेदम् ।
द्यौः खं क्षितिः शैलसरित्समुद्रद्वीपग्रहर्क्षेत्यभिधेय एकः ॥ ३२ ॥
यस्मिन्नसङ्ख्येयविशेषनामरूपाकृतौ कविभिः कल्पितेयम् ।
सङ्ख्यां यया तत्वदृशा विनीयते तस्मै नमः साङ्ख्यनिदर्शनाय इति ॥ ३३ ॥

उत्तरेषु कुरुषु भगवान् यज्ञपुरुषः कृतवराहरूप आस्ते । तं तु दैवी हैषा भूः सह कुरुभिरस्खलितभक्तियोगेनोपधावति । इमां च परमामुपनिषदमावर्तयति ॥ ३४ ॥

ॐ नमो भगवते मन्त्रतत्वलिङ्गाय यज्ञक्रतवे महीधराय महापुरुषाय नमः कर्मशुक्लाय त्रियुगाय नमस्ते ॥ ३५ ॥

यस्य स्वरूपं कवयो विपश्चितो गुणेषु योनिष्विव[४] जातवेदसम् ।
मथ्नन्ति मथ्ना मनसा दिदृक्षवो गूढं क्रियार्थैर्नम ईरितात्मने ॥ ३६ ॥
द्रव्यक्रियाहेत्वयनेशकर्तृभिर्मायागुणैर्वस्तुनिरीक्षितात्मने ।
तथैव तत्रातिशयात्मबुद्धिभिर्निरस्तमायाकृतये नमोनमः ॥ ३७ ॥

१. नमो भूयसे २. अव्यपदेश्यरूपिणे ३. स्वेदजमण्डजोद्भिजम् * ४. दारुष्विव

करोति विश्वस्थितिसंयमोदयं यस्येप्सितं नेप्सितमीक्षितुर्गुणैः[१] ।
माया यथाऽयो भ्रमते यदाश्रयं[२] ग्राव्णो नमस्ते गुणकर्मसाक्षिणे ॥ ३८ ॥
प्रमथ्य दैत्यं प्रतिवारणं मृधे यो मां रसाया जगदादिसूकरः ।
कृत्वाऽग्रदंष्ट्रे निरगादुदन्वतः क्रीडन्निवेभः प्रणतास्मि तं विभुमिति ॥ ३९ ॥

**॥ इति श्रीमद्भागवते पञ्चमस्कन्धे अष्टादशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

किम्पुरुषेषु[३] भगवन्तमादिपुरुषं लक्ष्मणाग्रजं सीताभिरामं रामं तच्चरणसन्निकर्षाभिरतः परम-भागवतो हनूमान्[४] सह किम्पुरुषैरविरतभक्तिरुपास्ते ॥ आर्ष्टिषेणेन सह गन्धर्वैरुपगीयमानां परमकल्याणीं भर्तृभगवत्कथां समुपशृणोति । स्वयं चेदं गायति ॥ १-२ ॥

ॐ नमो भगवत उत्तमश्लोकाय नम आर्यलक्षणशीलव्रताय नम उपश्रितात्मने नमः उपासित-लोकाय नमः साधुवादनिकर्षणाय[५] नमो ब्रह्मण्यदेवाय महापुरुषाय महाराजाय नम इति ॥ ३ ॥

यत् तद् विशुद्धानुभवमात्रमेकं[६] स्वतेजसा ध्वस्तगुणव्यवस्थम् ।
प्रत्यक् प्रशान्तं सुधियोपलम्भनमनामरूपं निरहं प्रपद्ये ॥ ४ ॥
मर्त्यावतारस्त्विह मर्त्यशिक्षणं रक्षोवधायैव न केवलं विभोः ।
कुतोऽन्यथा स्यू[७] रमतः स्व आत्मन् सीताकृतानि व्यसनानीश्वरस्य ॥ ५ ॥
नवै स आत्माऽऽत्मवतामधीश्वरो भुङ्क्ते हि दुःखं भगवान् वासुदेवः ।
न स्त्रीकृतं कश्मलमश्नुवीत न लक्ष्मणं चापि जहाति कर्हिचित् ॥ ६ ॥
न जन्म नूनं महतो न सौभगं न वाङ्न बुद्धिर्नाकृतिस्तोषहेतुः ।
तैर्यद्विसृष्टानपि नो वनौकसश्चकार सख्ये बत[८] लक्ष्मणाग्रजः ॥ ७ ॥
सुरोऽसुरो वाप्यथवा नरोऽनरः[९] सर्वात्मना यः सुकृतज्ञमुत्तमम् ।
भजेत रामं मनुजाकृतिं हरिं य उत्तराननयत् कोसलान् दिवमिति ॥ ८ ॥

---

१. नेक्षितुमीशते गुणैः ❋ २. यदाश्रया ३. किम्पुरुषे तु वर्षे
४. परमभागवतोत्तमो हनुमान् ५. निष्कर्षणाय ६. विशुद्धानुभवैकमात्रम् ❋
७. कुतोऽस्य हि स्युः ८. सख्ये च स ९. वाऽथ नरोऽथ वानरः

भारतेऽपि वर्षे भगवान् नरनारायणाख्य आकल्पान्तमुपचितधर्मज्ञानवैराग्यैश्वर्योपशमोपरमात्मोपलम्भो[१]ऽनुग्रहायात्मवतामनुकम्पया तपोऽव्यक्तगतिश्चरति ।। तं भगवान् नारदो वर्णाश्रमवतीभिर्भारतीभिः प्रजाभिर्भगवत्प्रोक्ताभ्यां साङ्ख्ययोगाभ्यां भगवदनुभावोपवर्णनं सावर्णेरुपदेक्ष्यमाणः परमभक्तिभावेनोपसरति । इदं चाभिगृणाति[२] ।। ९-१० ।।

ॐ नमो भगवत उपशमशीलायोपरतानात्म्यायाकिञ्चनवित्ताय ऋषिऋषभाय नरनारायणाय परमहंसाय परमगुरवे आत्मारामाधिपतये[३] नमोनम इति गायति चेदम् ।। ११ ।।

कर्ताऽस्य सर्गादिषु यो न बद्ध्यते न हन्यते देहगतोऽपि दैहिकैः ।
द्रष्टुर्न दृग् यस्य गुणैर्विदूष्यते तस्मै नमोऽसक्तविविक्तसाक्षिणे ।। १२ ।।
इदं हि योगेश्वर योगनैपुणं हिरण्यगर्भो भगवान् जगाद यत् ।
यदन्तकाले त्वयि निर्गुणे मनो भक्त्या विधायोज्झति दुष्कळेबरम् ।। १३ ।।
अथैहिकामुष्मिककामलम्पटः[४] सुतेषु दारेषु धनेषु चिन्तयन् ।
शङ्केत विद्वान् कुकळेबरात्ययाद् यस्तस्य यत्नः श्रम एव केवलम् ।। १४ ।।
तन्नः प्रभो त्वं कुकळेबरार्पितां त्वन्माययाऽहम्ममतामधोक्षज ।
भिन्द्याम येनाशु वयं सुदुर्भिदां विधेहि योगं त्वयि नः सुभावितमिति ।। १५ ।।

भारतेऽप्यस्मिन् वर्षे सरिच्छैलाः सन्ति बहवः । मलयो मङ्गलप्रस्थो मैनाकस्त्रिकूट ऋषभः कनकः कोल्लः सह्यो वेदगिरिर्ऋष्यमूकः श्रीशैलो वेङ्कटो महेन्द्रो वारिधरो विन्ध्यः शुक्तिमान् ऋक्षगिरिः पारियात्रो द्रोणश्चित्रकूटो गोवर्धनो रैवतः ककुभो नीलः कोकामुख[५] इन्द्रकीलः कामगिरिरिति[६] चान्ये च शतशः सहस्रशः शैलास्तेषां नितम्बप्रभवा नदा नद्यश्च सन्त्यसङ्ख्याताः ।। १६ ।।

एतासामपो भारत्यः प्रजा नामभिरेव पुनन्तीनामात्मना चोपस्पृशन्ति ।। चन्द्रवटा[७] ताम्रपर्णी अवटोदा घृतमाला वैहायसी कावेरी वेणी[८] पयोदा शर्करावर्ता[९] तुङ्गभद्रा कृष्णा भीमरथी गोदावरी निर्विन्ध्या परुष्णी तापी रेवा सुरसा नर्मदा चर्मण्वती अन्धःशोणश्च महानदौ[१०]

---

१. आत्मोपलम्भनम्    २. इदं चोदाहरति    ३. आत्मारामाय    ४. यथैहिकामुष्मिक....
५. कालमुखः    ६. कामो हैमगिरिरिति    ७. चन्द्रवशा    ८. वेण्णा
९. शर्करा    १०. सिन्धुरन्धः शोणश्च नदाः

वेदस्मृतिर्ऋषिकुल्या त्रिसामा कौशिकी मन्दाकिनी यमुना सरस्वती दृषद्वती गोमती सरयू रोधवती[१] सप्तवती घोणा[२] सुषोमा शतमाला चन्द्रभागा शुतुद्री मरुद्वृधा वितस्ता असिक्नी विश्वेति महानद्यः ॥ १७-१८ ॥

अस्मिन्नेव वर्षे पुरुषैर्लब्धजन्मभिः शुक्ललोहितकृष्णवर्णेन स्वारब्धेन कर्मणा दिव्यमानुषनारकगतयो बह्व्य आत्मन आनुपूर्व्येण सर्वा ह्येव सर्वेषां विधीयन्ते यथावर्णविधानमपवर्गश्चापि[३] ॥ योऽसौ भगवति सर्वभूतात्मन्यनात्म्येऽनिरुक्तेऽनिलयने परमात्मनि वासुदेवेऽनन्यनिमित्तभक्तियोगलक्षणो नानागतिनिमित्ताविद्याग्रन्थिरन्धनद्वारेण यदा हि महापुरुषपुरुषप्रसङ्गः[४] । एतदेव हि देवा गायन्ति ॥ २० ॥

अहो बतैषां किमकारि शोभनं प्रसन्न एषां स्विदुत स्वयं हरिः ।
यैर्जन्म लब्धं नृषु भारतेऽजिरे मुकुन्दसेवौपयिकस्पृहात्मभिः ॥ २१ ॥
किं दुष्करैर्नः क्रतुभिस्तपोव्रतैर्दानादिभिर्वा द्युजयेन फल्गुना ।
न यत्र नारायणपादपङ्कजस्मृतिः प्रमुष्टाऽतिशयेन्द्रियोत्सवात् ॥ २२ ॥
कल्पायुषां स्थानजयात् पुनर्भवात् क्षणायुषां भारतभूजयो वरः ।
क्षणेन मर्त्येन कृतं मनस्विनः सन्न्यस्य संयान्त्यभयं पदं हरेः ॥ २३ ॥
न यत्र वैकुण्ठकथामृतापगा[५] न साधवो भागवतास्तदाश्रयाः ।
न यत्र यज्ञेशमखा महोत्सवाः सुरेशलोकोऽपि न याति सेव्यताम् ॥ २४ ॥
प्राप्ता नृजातिं त्विह ये च जन्तवो ज्ञानक्रियाद्रव्यकलापसम्भृताः ।
न चेद् यतेरन्नपुनर्भवाय ते भूयो वनौका इव यान्ति बन्धनम् ॥ २५ ॥
यैः श्रद्धया बर्हिषि भागशो हविर्निरुप्तमिष्टं विधिमन्त्रवस्तुतः ।
एकः पृथङ्नामभिराहुतो मुदा गृह्णाति पूर्णः स्वयमाशिषां प्रभुः ॥ २६ ॥
सत्यं दिशत्यर्थितमर्थितो नृणां नैवार्थितो यत् पुनरर्थिनो मदः ।
स्वयं विधत्ते भजतामनिच्छतामिच्छाविधानं निजपादपल्लवम् ॥ २७ ॥

---

१. ओघवती/रोधस्वती  २. घोषणा  ३. अपवर्गश्चापि भवति
४. महापुरुषसङ्गतिः  ५. वैकुण्ठकथासुधापगाः

यद्यस्ति[1] नः स्वर्गसुखावशेषितं स्विष्टस्य सूक्तस्य[2] कृतस्य शोभनम् ।
तेनाब्जनाभस्मृति जन्म नः स्याद् वर्षे हरिर्यद् भजतां शं तनोति ॥ २८ ॥

जम्बुद्वीपस्य च राजन्नुपद्वीपानष्टौ ह्येक उपदिशन्ति सगरात्मजैरश्वान्वेषण इमां महीं परितो निखनद्भिरुपकल्पितान् ॥ तद्यथा स्वर्णप्रस्थश्चन्द्रशुक्ल आवर्तनो रमणको मन्दहारः[3] पाञ्चजन्यः सिंहलो लङ्केति ॥ एवं तव भारतोत्तम जम्बुद्वीपवर्षे विभागो यथोपदेशमुपवर्णितः ॥२९-३१॥

**॥ इति श्रीमद्भागवते पञ्चमस्कन्धे एकोनविंशोऽध्यायः ॥**

---

**श्रीबादरायणिरुवाच**

अतः परं प्लक्षद्वीपादीनां[4] प्रमाणलक्षणसंस्थानतो वर्षविभाग उपवर्ण्यते ॥ जम्बूद्वीपोऽयं यावान् विस्तरतस्तावता[5] क्षारोदधिना परिवेष्टितो यथा मेरुर्जम्ब्वाख्येन । लवणोदधिरपि ततो द्विगुणविशालेन प्लक्षाख्येन परिक्षिप्तो यथा परिघा[6] बाह्योपवनेन । प्लक्षो जम्बुप्रमाणो द्वीपाख्यातिकरो हिरण्मय उत्थितो यत्राग्निरुपासक उपास्ते सप्तजिह्वः । तस्याधिपतिः प्रियव्रतात्मज इध्मजिह्वः स्वं द्वीपं सप्तवर्षाणि विभज्य वर्षनामभ्य[7] आत्मजेभ्य आकलय्य स्वयमात्मयोगेनोपरराम ॥ १-२ ॥

शिवं यशस्यं सुभद्रं शान्तं क्षेमममृतमभयमिति वर्षाणि । तेषु गिरयो नद्यश्च सप्तसप्तैवासन्नभिज्ञाताः[8] ॥ मणिकूटो वज्रकूट इन्द्रसेनो ज्योतिष्मान् धूम्रवर्णो हिरण्यग्रीवो मेघमाल इति सेतुशैलाः । अरुणाऽनुगणा[9]ऽऽङ्गिरसी सावित्री सुप्रभाता ऋतम्भरा सत्यम्भरेति महानद्यो यासां जलोपस्पर्शनविधूतरजस्तमसो हंसपतङ्गोर्ध्वायन[10]सत्याङ्गसञ्ज्ञाश्चत्वारो वर्णाः सहस्रायुषो विबुधोपमसन्दर्शनप्रजननाः स्वर्गद्वारं त्रय्या विद्यया भगवन्तं त्रयीमयं सूर्यमात्मानं[11] यजन्ते ॥ प्रत्नस्य विष्णो रूपं यत् सत्यस्यर्तस्य ब्रह्मणः । अमृतस्य च मृत्योश्च सूर्यमात्मानमीमहीति ॥ प्लक्षादिषु पञ्चसु पुरुषाणामायुरिन्द्रियमोजः सहो बलं बुद्धिर्विक्रम इति सर्वेषामौत्पत्तिकी सिद्धिरविशेषेण वर्तते ॥ ३-६ ॥

---

१. यद्यत्र २. दत्तस्य ३. मन्दारकः/मन्दरहरिणः ४. प्लक्षादिद्वीपानाम्
५. यावत्प्रमाणविस्तारस्तावता/यावान्..../....विस्तारत्.... ६. परिखा
७. सप्तभ्यो वर्षनामभ्यः ८. सप्तैवाभिज्ञाताः ९. अनुगुणा १०. ....पतङ्गोध्यायन....
११. सूर्यात्मानम्

प्लक्षस्तु समानेनेक्षुरसोदेनावृतो[१] यथा तथा द्वीपोऽपि शाल्मलो द्विगुणविशालः समानेन सुरोदेनावृतः परिवृत्तेन॥ यत्र हवै शाल्मली प्लक्षायामा यस्याश्राधः किल निलयमाहुर्भगवतश्छन्दःस्तुतः पतत्रिराजस्य साऽध्यर्धा जम्बूत उपलक्ष्यते ॥ तद्वीपाधिपतिः प्रियव्रतात्मजो यज्विबाहुः स्वसुतेभ्यस्तन्नामानि सप्तवर्षाणि व्यभजत् । सुरोचनं सौमनसं[२] रमणकं देवबर्हं[३] पारिभद्रमाप्यायनमभिजातमिति ॥ तेष्वद्रयो नद्यश्च सप्तैवाभिज्ञाताः । स्वरसः[४] शतशृङ्गो वामदेवः कुन्दो मुकुन्दः पुण्यवर्षः सहस्रश्रुतिरिति । अनुमतिः सिनीवाली सरस्वती कुहू रजनी नन्दा राकेति ॥ तद्वर्षपुरुषाः श्रुतधरवीर्यधरवसुन्धरेध्मधरसञ्ज्ञा[५] भगवन्तं वेदमयं सोममात्मानं वेदेन यजन्ते ॥ स्वगोभिः पितृदेवेभ्यो विभजन् शुक्लकृष्णयोः । अन्धः प्रजानां सर्वासां राजा नः सोममस्त्विति ॥७-१२॥

एवं सुरोदाद् बहिस्तद्विगुणः स्वसमानेनावृतो[६] घृतोदेन यथा पूर्वः कुशद्वीपो यस्मिन् कुशस्तम्बो देवकृतः स्वद्वीपाख्यापनो ज्वलन इवापरः स्वशष्परोचिषा दिशो विराजयति ॥ १३ ॥

तत्रापि प्रैयव्रतो राजन् हिरण्यरेता नाम स्वद्वीपं सप्तभ्यः पुत्रेभ्यो यथाभागं विभज्य स्वयं तु तप आतिष्ठद् वसुदानदृढरुचिनाभिगुप्तसत्यव्रतविप्रवामदेवनामभ्यः ॥ तेषां वर्षेषु सीमागिरयो नद्यश्चाभिज्ञाताः सप्तसप्तैव बभूवुः । चक्रः क्रतुशृङ्गः कपिलश्चित्रकूटो देवानीक ऊर्ध्वरोमा द्रविण इति सेतुशैलाः । रसकुल्या मधुकुल्या श्रुतविन्दा मित्रविन्दा देवगर्भा घृतच्युता मन्त्रमालेति नद्यो यासां पयोभिः कुशद्वीपौकसः कुशलकोविदाभियुक्तकुलकसञ्ज्ञा भगवन्तं जातवेदस्स्वरूपिणं[७] कर्मकौशलेन यजन्ते ॥ १४-१६ ॥

परस्य ब्रह्मणः साक्षाज्जातवेदोऽसि हव्यवाट् । देवानां पुरुषाङ्गानां यज्ञेन पुरुषं यजेति॥

तथा बहिः[८] क्रौञ्चद्वीपोऽपि द्विगुणः कुशद्वीपात् स्वमानेन क्षीरोदेन परित उपक्लृप्तेनावृतो[९] यथा कुशद्वीपो घृतोदेन यस्मिन् क्रौञ्चो नाम पर्वतराजो द्वीपनामनिर्वर्तक आस्ते ॥ योऽसौ गुहप्रहरणोन्मथितनितम्बकुञ्जोऽपि क्षीरोदेनासिच्यमानो भगवता वरुणेनाभिगुप्तो विभयो बभूव॥ तस्मिन्नपि प्रैयव्रतो घृतपृष्ठो नामाधिपतिस्तद्द्वीपवर्षाणि सप्तधा विभज्य तेषु पुत्रनामसु सप्तरिक्थादान् वर्षपान् निवेश्य स्वयं भगवतः परमकल्याणस्यात्मभूतस्य[१०] हरेश्चरणारविन्दमुपजगाम ॥ आमो मध्वर्हो[११]

---

१. प्लक्षस्तु स्वसमानेन सुरसोदेनावृतः/तथा २. सौमनस्यम् ३. देववर्षम् ४. सुरसः
५. ....वसुन्धरद्युधरसञ्ज्ञाः ६. समानेनावृतः ७. जातवेदस्वरूपिणम्
८. तथा घृतोदाद् बहिः ९. उपक्लृप्तः १०. परमल्याणयशस आत्मभूतस्य ११. आमो मधुरुहः

मेघपृष्ठः सुधामा ऋषिज्यो[1] लोहितार्णो वनस्पतिरिति घृतपृष्ठसुतास्तेषां वर्षगिरयः सप्तसप्तैव नद्यश्चाभिख्याताः शुक्लो वर्धमान उपबर्हण उपभोजनो नन्दो नन्दनः सर्वतोभद्र इति ॥ अभयाऽमृतौघाऽऽर्यका तीर्थवती रूपवती पवित्रा[2] शुक्लेति यासामम्भः पवित्रमुपयुञ्जाना गुरुऋषभद्रविणदेवकसञ्ज्ञा वर्षपुरुषा अम्मयं देवमपां पूर्णेनाञ्जलिना यजन्ते ॥ आपः पुरुषवीर्याः स्थ[3] पुनन्तीर्भूर्भुवः सुवः । ता नः पुनीतामीवघ्नीः[4] स्पृशतामा[5]त्मना भुव इति ॥ १८-२३ ॥

एवं परस्तात् क्षीरोदात् परित उपवेशितः शाकद्वीपो द्वात्रिंशल्लक्षयोजनायामः समानेन दधिमण्डोदेन परित उपक्लृप्तो यस्मिन् शाको नाम महीरुहः स्वक्षेत्रव्यपदेशकरो यस्य ह महान् सुरभिगन्धस्तं द्वीपमनुवासयति ॥ २४ ॥

तस्यापि प्रैयव्रत एवाधिपतिर्नाम्ना मेधातिथिः सोऽपि विभज्य सप्तवर्षाणि पुत्रनामानि तेषु स्वात्मजान् पुरोजव[6]मनोजववेपमान[7]धूम्रानीकचित्ररथबहुरूपविश्वधरसञ्ज्ञान् निधायाधिपतीन् स्वयं भगवत्यनन्त आवेशितमतिस्तपोवनं प्रविवेश ॥ तेषु वर्षेषु मर्यादागिरयो नद्यश्च सप्तसप्तैव । ईशान उरुशृङ्गो बलभद्रः शतकेसरः सहस्रस्रोतो देवपालो महानस इति ॥ अनघाऽऽयुर्दोभयस्पृष्टिरपराजिता पञ्चपदी सहस्रस्रुतिर्निजघ्नुरिति[8] ॥ तद्वर्षपुरुषा ऋतव्रत[9]सत्यव्रतदानव्रतानुव्रतनामानो भगवन्तं वाय्वात्मकं प्राणायामविधूतरजस्तमसः परमसमाधिना यजन्ते ॥ अन्तःप्रविश्य भूतानि यो बिभर्त्यात्मकेतुभिः । अन्तर्यामीश्वरः साक्षात् पातु नो यद्वशे इदमिति ॥ २५-२९ ॥

एवमेव दधिमण्डोदात् परतः पुष्करद्वीपस्ततो द्विगुणायामः समन्तत उपकल्पितः समानेन स्वादूदकसमुद्रेण बहिरावृतो यस्मिन् बृहत् पुष्करं ज्वलनशिखामलकनकपत्रायुतं भगवतः कमलासनस्याध्यासनं परिकल्पितम् । तद्द्वीपमध्ये मानसोत्तरनामैक एवार्वाचीनपराचीनयोर्वर्षयोर्मर्यादाचलोऽयुतयोजनोच्छ्रायायामो यत्र चतसृषु दिक्षु चत्वारि पुराणि लोकपालानामिन्द्रादीनां यदुपरिष्टात् सूर्यरथस्य मेरुं परिचङ्क्रमतः संवत्सरात्मकं चक्रं देवानामहोरात्राभ्यां चक्रवत् परिभ्रमति[10] ॥ तद्द्वीपस्याप्यधिपतिः प्रैयव्रतो वीतिहोत्रो नाम स्वस्यात्मजौ रमणधातकिनामानौ[11] वर्षपती नियुज्य स्वयं पूर्वजवत् भगवत्कर्मशील एवास्ते ॥ तद्वर्षपुरुषा भगवन्तं ब्रह्मरूपिणमकर्मकेण

१. ऋषयज्वा  २. तीर्थवती तृप्तिरोघवती/तीर्थवती तृप्ती रूपवती शुक्लवती *  ३. पुरुषवीर्याश्च
४. पुनीयुरघघ्नीः  ५. संस्पृशेतात्मना भवे  ६. पुराजव....  ७. पवमान....
८. निजधृतिरिति/जघ्नुरिति  ९. धृतव्रत....  १०. चक्रमहोरात्राभ्यां परिभ्रमति
११. रमणधातकनामानौ

कर्मणा चाराधयन्ति ।। यत् तत् कर्ममयं लिङ्गं ब्रह्मलिङ्गं जनोऽर्चति । भेदेनैकान्तमद्वैतं तस्मै भगवते नम इति ।। ३०-३३ ।।

ततः परस्ताल्लोकालोकनामाऽचलो लोकालोकयोरन्तराळे परित उपक्लृप्तः ।। यावन्मानसोत्तर-मेर्वोरन्तरं तावती भूमिः काञ्चन्यन्याऽऽदर्शतळोपमा यस्यां निहितः पदार्थो न कथञ्चित् पुनः प्रत्युपलभ्यते तस्मात् सर्वसत्वपरिहृताऽऽसीत्[१] ।। लोकालोक इति समाख्या यदनेनाचलेन लोकालोकावन्तरवर्तिना व्यवस्थाप्येते[२] ।। स लोकत्रयान्ते परित ईश्वरेणोपकल्पितो[३] यस्मात् सूर्यादीनां ध्रुवापवर्गाणां ज्योतिर्गणानां गभस्तयोऽर्वाचीनास्त्रिलोकान्[४] वितन्वाना न कदाचित् पराचीना भवितुमुत्सहन्ते तावदुन्नहनायामः ।। ३४-३७ ।।

एतावान् लोकविन्यासो मानलक्षणसंस्थाभिर्विचिन्तितः कविभिः । स च[५] पञ्चाशत्कोटि-गणितस्य[६] भूगोळस्य तुरीयभागो* यावान् लोकालोकाचलः ।। तदुपरिष्टाच्चतसृष्वप्याशास्वात्म-योनिनाऽखिलजगद्गुरुणाऽधिनिवेशिता[७] ये द्विरदपतय ऋषभः पुष्करचूडो वामनोऽपराजित इति सकललोकस्थितिहेतवः ।। तेषां स्वविभूतीनां महेन्द्रादीनां लोकपालानां विविधवीर्योपबृंहणाय भगवान् परममहापुरुषो महाविभूतिपतिरन्तर्याम्यात्मनो विशुद्धसत्वधर्मज्ञानवैराग्यैश्वर्याद्यष्टमहा-सिद्ध्युपलक्षणैः[८] विष्वक्सेनादिभिः स्वपार्षदप्रवरैः परिवारितो निजवरायुधोपशोभितैर्दोर्दण्डैः सन्धारयमाणस्तस्मिन् गिरिवरे समन्तात् सकललोकस्वस्तय आस्ते ।। आकल्पान्तमेवैष भगवान्[९] योगमायया विरचितविविधलोकयात्रागोपीथाय[१०] ।। ३९-४१ ।।

अथ योऽन्तर्विस्तार एतेन ह्यलोकपरिमाणं व्याख्यातं यद् बहिर्लोकालोकाचलात् । ततः परस्ताद् योगेश्वरगतिं विशुद्धामुदाहरन्ति ।। अण्डमध्यगतः सूर्यो द्यावापृथ्व्योर्यदन्तरम्[११] । सूर्याण्डगोळयोर्मध्ये कोटयः स्युः पञ्चविंशतिः ।। मृतेऽण्ड एष एतस्मिन् यदभूत् ततो मार्तण्ड-व्यपदेशः[१२] । हिरण्यगर्भ इति यद्धिरण्मयाण्डसमुद्भवः ।। ४२-४४ ।।

सूर्येण हि विभज्यन्ते दिशः खं द्यौर्मही तथा । स्वर्गापवर्गनरकरसौकांसि[१३] च सर्वशः ।। ४५ ।।

---

१. ....परिहृत आसीत् २. स्थाप्येते/व्यवस्थाप्येते इति ❋ ३. ईश्वरेणोपक्लृप्तः/ईश्वरेण विहितः
४. अर्वाचीनान् त्रिलोकान् ५. स तु ६. पञ्चाशत्कोटिगुणितस्य ७. अभिनिवेशिता
८. महासिद्ध्युपलक्षणः ९. आकल्पान्तमेवं वेषं गत एष भगवान् १०. गोपीथायेति
११. द्यावाभूम्योर्यदन्तरम् १२. मार्ताण्डव्यपदेशः १३. स्वर्गापवर्गतरका रसौकांसि * तुरीयभागे

देवतिर्यङ्मनुष्याणां सरीसृमन्गवीरुधाम्[१] । सर्वजीवनिकायानां सूर्य आत्मा दृगीश्वरः[२] ॥४६॥

**॥ इति श्रीमद्भागवते पञ्चमस्कन्धे विंशोऽध्यायः ॥**

---

### श्रीशुक उवाच

एतावानेव भूवलयस्य सन्निवेशः प्रमाणलक्षणतो व्याख्यातः । एतेनैव हि दिवोमण्डलमानं तद्विद उपदिशन्ति ॥ यथा द्विदलयोर्निष्पावादीनां[३] तदन्तरेणान्तरिक्षं तदुभयसन्धितम्[४] ॥ यन्मध्यगतो भगवांस्तपतां पतिस्तपन आतपेन त्रीन् लोकान् प्रतपति । अवभासयत्यात्मभासा । एष उदगयन-दक्षिणायनवैषुवसञ्ज्ञाभि[५]र्मान्द्यशैघ्र्यसमानाभि[६]र्गतिभिरारोहणावरोहणसमस्थानेषु[७] यथासवन-मभिपद्यमानो मकरादिषु राशिष्वहोरात्राणि दीर्घह्रस्वसमानानि विधत्ते ॥ १-३ ॥

यदा मेषतुलयोर्वर्तते तदाऽहोरात्राणि समानानि भवन्ति ॥ यदा वृषभादिषु पञ्चसु राशिषु चरति तदाऽहान्येव वर्धन्ते ह्रसति[८] च मासिमास्येकैका घटिका रात्रिषु । यदा वृश्चिकादिषु पञ्चसु वर्तते तदाऽहोरात्राणि विपरीतानि भवन्ति । यावद् दक्षिणायनमहानि वर्धन्ते[९] यावदुदगायनं रात्रयः ॥ समुद्धृत्य समान्यहोरात्राणि त्रिंशन्मुहूर्तानि भवन्ति ॥ ४-६ ॥

एवं नवकोटय एकपञ्चाशल्लक्षाणि च योजनानां मानसोत्तरगिरिपरिवर्तनस्योपदिशन्ति । तस्मिन्नैन्द्री पुरी[१०] मेरोः पूर्वस्माद् देवधानी नाम दक्षिणतो याम्या संयमनी नाम पश्चाद् वारुणी निम्लोचनी नामोत्तरतः सौम्या विभावरी नाम तासूदयमध्याह्नास्तमयनिशीथानि भूतानां प्रवृत्तिनिवृत्तिनिमित्तानि समयविशेषेण मेरोश्चतुर्दिशम् ॥ ७ ॥

तत्रत्यानां दिवसमध्यगत एवादित्यस्तपति सव्येनाचलं दक्षिणेन करोति ॥ यत्रोदेति तत्समानसूत्रनिपाते निम्लोचति । यत्र क्वचन स्यन्देनाभितपति[११] तस्य हैष समानसूत्रनिपाते प्रस्वापयति तत्र गतं न पश्यन्ति[१२] ॥ यदा चैन्द्र्याः पुर्याः प्रचलति पञ्चदशभिर्घटिकाभिर्याम्यां

---

१. सरीसृपसवीरुधाम् /सरीसृपखगवीरुधाम् २. दृगीरितः ३. विदळनिष्पावादीनाम् ❋/द्विदळनि....
४. ...क्षं तदुपसन्धितम् ५. वैषुवतसञ्ज्ञाभिः ६. दीर्घह्रस्वसमानाभिः
७. समानस्थानेषु/समवस्थानेषु ❋ ८. ह्रसन्ति च रात्रयो मासिमास्यैकैका घटिका । तुल्यं दिवसम् । वर्धमानान्यहानि तावतीरनुसङ्क्षीयमाणा रात्रयः । समुद्धृत्याहोरात्राणि त्रिंशन्मुहूर्तान्येव भवन्ति । ❋
९. वर्धन्ते ह्रसन्ति च रात्रयः । यावदुदगायनमहानि ह्रसन्ति रात्रयो विवर्धन्ते ❋
१०. ऐन्द्रीं पुरीं.... देवधानीमित्यादि सर्वत्र द्वितीया ११. स्पन्दते ❋ १२. न पश्यन्ति ये तमनुपश्येरन्

सपादकोटिद्वयं योजनानां सार्धद्वादशलक्षाणि साधिकानि चोपयाति ।। एवं ततो वारुणीं सौम्यामैन्द्रीं च पुनःपुनः । तथाऽन्ये च ग्रहाः सोमादयो नक्षत्रैः सह ज्योतिश्चक्रे समभ्युद्यन्ति सह चाभिनिम्लोचन्ति । एवं मुहूर्तेन चतुस्त्रिंशल्लक्षयोजनान्यष्टशताधिकानि सौरो रथस्त्रयीमयोऽसौ चतसृषु परिवर्तते पुरीषु ।। ८-११ ।।

यस्यैकं चक्रं द्वादशारं षण्णेमि त्रिनाभि संवत्सरात्मकं समामनन्ति । तस्याक्षो मेरोर्मूर्धनि कृतो मानसोत्तरकृतेतरभागो यत्र प्रोतं रविरथचक्रं तैलयन्त्रचक्रवन्मानसोत्तरे गिरौ परिभ्रमति ।। तस्मिन्नक्षे कृतमूलो द्वितीयोऽक्षस्तुरीयमानेन सम्मितः तैलयन्त्राक्षवद् ध्रुवे कृतोपरिभागः ।। रथनीडस्तु षट्त्रिंशल्लक्षयोजनायतस्तत्तुरीयभागविशालस्तावान् रविरथयुगो यत्र हयाश्छन्दोनामानः सप्तारुण-योजिता वहन्ति देवमादित्यम् ।। १२-१४ ।।

पुरस्तात् सवितुररुणः पश्चान्नियुक्तः सौत्ये कर्मणि किलास्ते ।। तथा बालखिल्या[१] ऋषयोऽङ्गुष्ठ-मात्राः[२] षष्टिसहस्राणि पुरतः सूर्यं सूक्तवाकाय नियुक्ताः संस्तुवन्ति ।। तथाऽन्ये च ऋषयो गन्धर्वा-प्सरसो नागा ग्रामण्यो यातुधाना देवा इत्येकैकशो गणाः सप्त चैकैकशो रथस्था मासिमासि भगवन्तं सूर्यमात्मानं नानानामानं पृथङ्नामानः पृथक्कर्मभिर्द्वादश उपासते ।। लक्षोत्तरसार्धनवकोटियोजन-परिमण्डलभूवलयस्य क्षणेन गव्यूत्युत्तरं द्विसहस्रयोजनानि[३] स भुङ्क्ते ।।१५-१८।।

**।। इति श्रीमद्भागवते पञ्चमस्कन्धे एकविंशोऽध्यायः ।।**

---

## राजोवाच

यदेतद् भगवत आदित्यस्य मेरुं ध्रुवं च प्रदक्षिणेन परिक्रामतो[४] राशीनामभिमुखं प्रचलनं भगवतोपवर्णितम् । अमुष्य वयं कथमनुमिमीमहीति[५] ।। १ ।।

स होवाच । यथा कुलालचक्रेण भ्रमता[६] सह भ्रमतां तदाश्रयाणां पिपीलिकादीनां गतिरन्यैव प्रदेशान्तरेष्वप्युपलभ्यमानत्वात् । एवं नक्षत्रराशिभिरुपलक्षितेन कालचक्रेण ध्रुवं मेरुं च प्रदक्षिणेन परिधावता सह परिधावमानानां तदाश्रयाणां सूर्यादीनां ग्रहाणां गतिरन्यैव नक्षत्रान्तरे राश्यन्तरे चोपलभ्यमानत्वात् ।। २ ।।

---

१. वालखिल्याः २. अङ्गुष्ठपर्वमात्राः ३. गव्यूत्युत्तरद्विसहस्रयोजनानि
४. परिभ्रमतः */परिक्रमतः ५. अनुमीमहीति * ६. परिभ्रमता

स एष भगवानादिपुरुषः साक्षान्नारायणो लोकानां स्वस्तय आत्मानं त्रयीमयं कर्मविशुद्धिनिमित्तं कविभिरपि वेदेन विजिज्ञास्यमानो द्वादशधा विभज्य षट्सु वसन्तादिषु ऋतुषु यथोपजोषमृतुगुणान् विदधाति ॥ तमेतमिह पुरुषास्त्रय्यां विद्यायां वर्णाश्रमाचारानुपथा उच्चावचैः कर्मभिराम्नायाम्नातैर्योग-वितानैश्च श्रद्धया यजन्तोऽञ्जः[1] श्रेयः समधिगच्छन्ति ॥ ३-४ ॥

अथ स एष आत्मा लोकानां द्यावापृथिव्योरन्तरेण नभोवलयस्य कालचक्रगतो द्वादशमासान् भुङ्क्ते । तानेव राशिसञ्ज्ञान् संवत्सरावयवान् मासान्[2] पक्षद्वयं दिवानक्तं सपादर्क्षद्वयमुपदि-शन्ति। यावता कालेन षष्ठमंशं भुञ्जीत स वै ऋतुरित्युपदिश्यते संवत्सरावयवः ॥ अथ च यावताऽर्धेन नभोवीथ्याः प्रचरति[3] तं कालमयनमित्याचक्षते ॥ अथ च यावन्नभोमण्डलं सह द्यावापृथिव्योर्मण्ड-लाभ्यां कार्त्स्न्येन भुञ्जीत तं कालं संवत्सरं परिवत्सरमिडावत्सरमनुवत्सरं वत्सरमिति भानोर्मान्द्य-शैघ्र्यसमानगतिभिः समामनन्ति ॥ ५-७ ॥

एवं चन्द्रमा अर्कगभस्तिभ्य उपरिष्टाल्लक्षयोजनत उपलभ्यमानोऽर्कस्य संवत्सरभुक्तिं पक्षाभ्यां मासभुक्तिं सपादर्क्षाभ्यां दिनेनैव च पक्षभुक्तिमग्रचारी द्रुततरगमनो भुङ्क्ते ॥ अथ चापूर्यमाणाभिरुपक्षीयमाणाभिश्च[4] कलाभिः पितॄणामहोरात्राणि पूर्वपक्षापरपक्षाभ्यां वितन्वानः सर्वजीवनिवहप्राणो जीवश्चैकमेकं नक्षत्रं त्रिंशन्मुहूर्तैर्भुङ्क्ते ॥ स एष षोडशकलः पुरुषो भगवान्मनोमयोऽन्नमयोऽमृतमयो[5] देवपितृमनुष्यभूतपशुपक्षिसरीसृपवीरुधां प्राणाप्यायनशीलत्वात् सर्वमय इति वर्णयन्ति ॥ ८-१० ॥

तत उपरिष्टाल्लक्षयोजनतो[6] नक्षत्राणि मेरुं प्रदक्षिणेनैव कालायन ईश्वरयोजितानि सहाभिजिताऽष्टाविंशतिः ॥ ११ ॥

तत उपरिष्टादुशना द्विलक्षयोजनादुपलभ्यते[7] पुरतः पश्चात् सहैवार्कस्य शैघ्र्यमान्द्यसाम्या-भिर्गतिभिरर्कवच्चरति लोकानां नित्यदाऽनुकूल एव प्रायेण वर्षं यत्स्थितिद्वारेणानुमीयते स वृष्टिविष्टम्भग्रहोपशमनः । उशनसा बुधोऽपि व्याख्यातः ॥ १२ ॥

तत उपरिष्टाद् द्विलक्षयोजनतो बुधः सोमसुत उपलभ्यमानः प्रायेण शुभकृद् यदाऽर्कमतिरिच्यते[8] तदाऽतिवाताभ्रप्रायानावृष्ट्यादिभयमाशंसते ॥ १३ ॥

---

१. अञ्जसा २. मासं/मासः/पक्षद्वयं सपादर्क्षम् ३. प्रचलति
४. आपूर्यमाणाभिश्च कलाभिरमराणामुप.... ५. मनोमयोऽमृतमयः * ६. त्रिलक्षयोजनतः
७. द्विलक्षयोजनतः ८. अतिरिच्येत

तत ऊर्ध्वमङ्गारकोऽपि योजनलक्षद्वितय उपलभ्यमानस्त्रिभिस्त्रिभिः पक्षैरेकैकशो राशीन् द्वादश चानुभुङ्क्ते यदि न वक्रेणाभिवर्तते[१] । प्रायेणाशुभग्रहोऽघशंसः ॥ १४ ॥

अत उपरिष्टाद् द्विलक्षयोजनान्तरगतो भगवान् बृहस्पतिरेकैकस्मिन् राशौ परिवत्सरं प्रचरति यदि न वक्रस्थः स्यात् प्रायशोऽनुकूलो ब्राह्मणकुलस्य ॥ १५ ॥

तत उपरिष्टाद् योजनलक्षद्वयात् प्रतीयमानः शनैश्चर एकैकस्मिन् राशौ त्रिंशत्त्रिंशन्मासान् विळम्बमानः सर्वानेवानुपर्येति तावद्भिरनुवत्सरैः प्रायेण हि सर्वेषामशान्तिकरः ॥ १६ ॥

तत उत्तरस्माद् ऋषय एकादशलक्षयोजनान्तर उपलभ्यन्ते य एते लोकानां शमनुभावयन्तो भगवतो विष्णोर्यत् परमं पदं प्रदक्षिणमुपक्रमन्ति[२] ॥ १७ ॥

अथ तस्मात् परतस्त्रयोदशलक्षयोजनान्तरतो यत् तद् विष्णोः परमं पदमभिवदन्ति यत्र महाभागवतो ध्रुव औत्तानपादिरग्निनेन्द्रेण प्रजापतिना काश्यपेन धर्मेण च समकालयुग्भिः सबहुमानं दक्षिणतः क्रियमाण इदानीमपि कल्पजीविनामाजीव्य[३] उपास्ते । तस्य हवा अनुभाव उपवर्णितः ॥ स हि सर्वेषां ज्योतिर्गणानां ग्रहनक्षत्रादीनामनिमिषेणाव्यक्तरंहसा भगवता कालेन बम्भ्रम्यमाणानां स्थाणुरिवावष्टम्भ ईश्वरेण विहितः शश्वदवभासते ॥ १८- १९ ॥

यथा मेढीस्तम्भे धान्याक्रमणपशवः[४] संयोजितास्त्रिभिः सवनैर्यथास्थानं मण्डलमाचरन्ति[५] ॥ एवं भगणा ग्रहादय एतस्मिन्नन्तर्बहिर्योगेन कालचक्र आयोजिता ध्रुवमेवावलम्ब्य वायुनोदीर्यमाणा आकल्पान्तं परितः क्रमन्ति[६] ॥ नभसि यथा मेघाः श्येनादयो वायुवशाः कर्मसारथयः परिवर्तन्ते एवं ज्योतिर्गणाः प्रकृतिपुरुषसंयोगानुगृहीतकर्मनिर्मितगतयो भुवि न पतन्ति ॥ २०-२२ ॥

केचनैतज्ज्योतिरनीकं शिंशुमारसंस्थानस्य[७] भगवतो वासुदेवस्य योगधारणायामनुवर्णयन्ति ॥ यस्य पुच्छाग्रेऽवाक्शिरसः कुण्डलीभूतदेहस्य ध्रुव उपकल्पितस्तस्य लाङ्गूले प्रजापतिरग्निरिन्द्रो धर्मः पुच्छमूले धाता विधाता च कट्यां सप्तर्षयः तस्य दक्षिणावर्तकुण्डलीभूतशरीरस्य यान्युदगायनानि दक्षिणपार्श्वे नक्षत्राण्युपकल्पयन्ति ॥ दक्षिणायनानि तु सव्ये । यथा शिंशुमारस्य कुण्डलाभोगसन्निवेशस्य पार्श्वयोरुभयोरप्यवयवाः समसङ्ख्या भवन्ति ॥ पृष्ठे त्वजवीथी आकाश-

---

१. वक्रोऽतिवर्तते / वक्रेणातिवर्तते २. प्रदक्षिणं प्रक्रमन्ति ३. कल्पजीवानामाजीव्यः
४. मेढीस्तम्भ आक्रमणपशवः ५. मण्डलानि चरन्ति ६. परिचङ्क्रमन्ति ७. शिंशुमारसंस्थानेन

गङ्गा चोदरतः । पुनर्वसुपुष्यौ दक्षिणवामयोः श्रोण्योरार्द्राऽऽश्लेषा च[1] दक्षिणवामयोः पादयोरभि-जिदुत्तराषाढे दक्षिणवामयोर्नासिकयोर्यथासङ्ख्यं श्रवणपूर्वाषाढे दक्षिणवामयोर्लोचनयोर्धनिष्ठा मूलं च दक्षिणवामयोः कर्णयोर्मखादीन्यष्टनक्षत्राणि दक्षिणायनानि वामपार्श्वपङ्क्तिषु युञ्जीत ॥ तथैव मृगशीर्षादीन्युदगायनानि दक्षिणपार्श्वपङ्क्तिषु प्रातिलोम्येन युञ्जीत ॥ शतभिषग्ज्येष्ठे[2] स्कन्धयोर्दक्षिण-वामयोर्न्यसेत् ॥ उत्तराहनावगस्त्योऽधराहनौ[3] यमो मुखे चाङ्गारकः शनैश्चर उपस्थे बृहस्पतिः ककुदि वक्षस्यादित्यो हृदये नारायणो मनसि चन्द्रो नासाभ्यामुशनाः[4] स्तनयोरश्विनौ बुधः प्राणापानयो राहुर्गळे केतवः सर्वाङ्गेषु रोमसु सर्वे तारकागणाः[5] ॥ एतदु हैव भगवतो विष्णोः सर्वदेवतामयं रूपमहरहः सन्ध्यायां प्रयतो निरीक्षमाण उपतिष्ठेत नमोनमो ज्योतिर्लोकाय कालायनायानिमिषां पतये महापुरुषाय धीमहीति ॥ २३-३१ ॥

ग्रहर्क्षताराममयमाधिदैविकं पापापहं मन्त्रकृतां त्रिकालम्[6] ।
नमस्यतः स्तुवतो नश्यते वै स्वयं त्रिकालकृतमाशु पापम् ॥ ३२ ॥

**॥ इति श्रीमद्भागवते पञ्चमस्कन्धे द्वाविंशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

अधस्तात् सवितुर्योजनायुते स्वर्भानुर्नक्षत्रवच्चरतीत्येके योऽसावमरत्वं ग्रहत्वं चालभत भगवदनु-कम्पया स्वयमसुरापशदः सैंहिकेयो ह्यतदर्हस्तस्य तात जन्मकर्मणी चोपरिष्टाद् वक्ष्यामः ॥ यददस्तरणेर्मण्डलं प्रतपति तद् विस्तरतो योजनायुतमाचक्षते द्वादशसहस्रं सोमस्य त्रयोदशसहस्रं राहोर्यः पर्वणि तद्व्यवधानकृद् वैरानुबन्धात् सूर्याचन्द्रमसावभिधावति ॥ तन्निशाम्योभयत्रापि भगवता रक्षणाय प्रयुक्तं सुदर्शनं नाम भागवतं चक्रं दुर्विषहं परिवर्तमानमभ्यवस्थितो मुहूर्तमुद्विज-मानश्चकितहृदय आरादेव निवर्तते तदुपराग इति[7] वदन्ति लोकाः[8] ॥ १-३ ॥

ततोऽधस्तात् सिद्धचारणविद्याधराणां सदनानि तावन्मात्र एव ॥ ततोऽधस्ताद् यक्षपिशाचभूतप्रेतगणानां[9] विहाराजिरमन्तरिक्षं यावद् वायुर्वाति यावन्मेघा उपलभ्यन्ते ॥

---

१. आर्द्राश्लेषे २. शतभिषाज्येष्ठे ३. अधरहनौ
४. नाभ्यामुशनाः ५. तारागणाः ६. रूपं हरेर्मन्त्रकृतस्त्रिकालम्
७. उपरागमिति ८. वदति लोकः ९. यक्षरक्षःपिशाचप्रेतभूतगणानाम्

ततोऽधस्ताच्छतयोजनान्तरे चेयं पृथिवी यावद्धंसभासश्येनसुपर्णादयः पतत्रिप्रवरा उत्पतन्ति । इत्युपवर्णितं भूमेर्यथासन्निवेशमवस्थानम्[१] ॥ ४-६ ॥

अवनेरप्यधस्तात् सप्त भूविवरा एकैकशो योजनायुतायामाः तारतम्येनोपक्लृप्ता अतळं वितळं सुतळं तळातळं महातळं रसातळं पाताळमिति ॥ एतेषु हि बिलस्वर्गेषु स्वर्गादप्यधिकसकल-सम्पत्समृद्धिकामभोगैश्वर्यानन्दविभूतिभिः सुसमृद्धभवनोद्यानाक्रीडविहारेषु दैत्यदानवकाद्रवेया नित्य-प्रमुदितानुरक्तकळत्रापत्यबन्धुसुहृदनुचरा गृहपतय ईश्वरादप्यप्रतिहतकामविनोदा निवसन्ति ॥ येषु महाराज मयेन मायया निर्मिताः पुरो नानामणिप्रवेकविरचितविचित्रभवनप्राकारगोपुर-सभाचैत्यचत्वरायतनादिभिर्नानास्वनमिथुनपारावतशुकशारिकाकीर्ण[२]कृत्रिमभूमिभिर्विवरेश्वर-गृहोत्तमैः समलङ्कृताश्चकासन्ति[३] ॥ उद्यानानि चातितरां मनइन्द्रियानन्दिभिः कुसुमफलस्तबक-किसलयावनतरुचिरविटपैर्विटपिनां कनकलतालिङ्गितानां श्रीभिः समिथुनविविधविहङ्गकुलकोला-हलजलाशयानाममलजलपूर्णानां[४] झषकुलोल्लङ्घनक्षुभितनीरनीरजकुमुदकुवलयकल्हारनीलोत्पल-शतपत्रादिवनेषु कृतनिकेतनानामनेकविहाराकुलमधुकराणां[५] मधुरस्वनादिभिरिन्द्रियोत्सवैरमर-लोकश्रियमतिशयितानि ॥ यत्र हवाव न भयमहोरात्रादिभिः कालविभागैरुपलक्ष्यते ॥ यत्र हि महाहिप्रवरशिरोमणयः शार्वरं तमः[६] प्रबाधन्ते ॥ न वा एतेषु वसतां दिव्यौषधरसपानस्नानादाधयो व्याधयो वलीपलितजरादयश्च देहवैवर्ण्यदौर्गन्ध्यस्वेदक्लमग्लानिरिति वयोवस्थाश्च भवन्ति ॥ न हि तेषां कल्याणानां प्रभवति कुतश्चन मृत्युर्विना भगवत्तेजसश्चक्रापदेशात् ॥ यस्मिन् प्रविष्टेऽसुर-वधूनां प्रायः पुंसवनानि भयादवस्रवन्ति[७] पतन्ति च ॥ ७-१५ ॥

अथातळे मयपुत्रो बलो नामासुरो निवसति येन हवा इह सृष्टाः षण्णवतिर्मायाः याः काश्चनाद्यापि मायाविनो धारयन्ति । यस्य च विजृम्भमाणस्य मुखतस्त्रयः स्त्रीगणा उदपद्यन्त स्वैरिण्यः कामिन्यः पुंश्चल्य इति ॥ या वै बिलायनं प्रविष्टं पुरुषं रसेन हाटकाख्येन पाययित्वा स्वविलासावलोकनानुरागस्मितसँल्लापोपगूहनादिभिः स्वैरं किल रमयन्ति ॥ यस्मिन्नुपयुक्ते[८] पुरुष ईश्वरोऽहं सिद्धोऽहमित्ययुतमहागजबलमात्मानं मन्यमानः कत्थते मदान्ध इव॥ १६-१८ ॥

---

१. यथा सन्निवेशावस्थानम्    २. शुकसारिकाकीर्ण....    ३. चकासति
४. अमृतजलपूर्णानाम्    ५. मधुकरनिकराणाम्    ६. सर्वं शार्वरं तमः    ७. आस्रवन्ति
८. उपभुक्ते

ततो वितळे हरो भगवान् हाटकेश्वरः स्वपार्षदभूतगणावृतः प्रजापतिसर्गोपबृंहणाय भवो भवान्या सह मिथुनीभूयास्ते यतः प्रवृत्ता सरित्प्रवरा हाटका नाम भवयोर्वीर्येण यत् तच्चित्र[१] भानुर्मातरिश्वनेध्यमान ओजसा पिबति। तन्निष्ठचूतं[१२] हाटकाख्यं सुवर्णं भूषणेनासुरेन्द्रावरोधेषु पुरुषाः सह पुरुषीभिर्धारयन्ति ॥ १९ ॥

ततोऽधस्तात् सुतळ उदारश्रवाः[२] पुण्यश्लोको विरोचनात्मजो बलिर्भगवता महेन्द्रस्य प्रियं चिकीर्षमाणेनादितेर्लब्धकायो भूत्वा वामनरूपेण[३] पराक्षिप्तलोकत्रयो[४] भगवदनुकम्पयैव पुनः प्रवेशित इन्द्रादिष्वविद्यमानया सुसमृद्धया श्रियाऽभिजुष्टः स्वधर्मेणाराधयंस्तमेव भगवन्तमपगतसाध्वस आस्तेऽधुनाऽपि ॥ नो एवैतद् साक्षाद्धरो भूमिदानस्य यद् भगवत्यशेषजीवनिकायानां जीवभूतात्मभूते परमात्मनि वासुदेवे तीर्थतमे पात्र उपपन्ने परया श्रद्धया परमादरसमाहितमनसा सम्प्रतिपादितस्य साक्षादपवर्गद्वारस्य यद् बिलनिलयनैश्वर्यं यस्य हवा क्षुतपतनप्रस्खलनादिषु विवशः सकृन्नामाभि-गृणन् पुरुषः कर्मबन्धमञ्जसा विधुनोति ॥ यस्य हैव प्रतिबोधनं तु मुमुक्षवोऽञ्जसेहोपलभन्ते यत्तद् भगवन्नाम सर्वेषामात्मनामात्मदमेव ॥ न वै भगवान् नूनं मनुष्याननुजग्राह यदुत पुनरात्मानुस्मृति-मोषणं[५] मायामयभोगैश्वर्यमेवातनुते[६] ॥ २०-२३ ॥

यत्तद् भगवताऽनधिगतान्योपायेन च याञ्चाछलेनापहृतस्वशरीरावशेषितलोकत्रयो वरुणपाशैश्च बद्धो[७] गिरिदर्यां चापविद्ध इति होवाच ॥ नूनं बतायं भगवानर्थेषु निष्णातो योऽसाविन्द्रस्य सचिवो मन्त्राय धृत एकान्ततो बृहस्पतिस्तमपहाय यदा स्वयमुपेन्द्रेणातदर्हं मामयाचत पदान्यात्मन आशिषो नो एव न दास्यामि अतिगभीररयस्य[८] महतः कालस्य मन्वन्तरपरिमितं कियल्लोकत्रयमिदम् ॥ यस्यानुदास्यमेवास्मत्पितामहः किल वव्रे न तत् स्वपित्र्यं यदकुतोभयं दीयमानं भगवतोपरमिते[९] पितरि न तस्य महानुभावस्यानुपथमनुवर्तितुमलममृजितकषायः[१०] को वाऽस्मद्विधः परिहीणभगवदनुग्रहः ॥ तस्यानुचरितमुपरिष्टाद् विस्तरिष्यते यस्य भगवान् स्वयमखिलजगद्गुरुर्नारा-यणो द्वारि गदापाणिरवतिष्ठते निजजनानुकम्पितहृदयो येन पदाङ्गुष्ठेन[११] दशकन्धरो योजनायुतं दिग्विजय उच्चाटितः ॥ २४-२७ ॥

---

१. यत्र चित्रभानुः.... समिध्यमानः २. उरुश्रवाः ३. वटुवामनरूपेण ४. पराक्षिप्तस्वलोकत्रयः
५. ....मोक्षणम् ६. अतनुतेति ७. वरुणपाशैश्च सम्प्रतिमुक्तः ८. गम्भीररयस्य
९. भगवता विरमिते १०. अमृदितकषायः ११. अङ्गुष्ठेन पदा * १२. तन्निष्पन्नम्

ततोऽधस्तात् तळातळे मयो नाम दानवेन्द्रस्त्रिपुराधिपतिर्भगवता पुरारिणा त्रिलोक्याः शं चिकीर्षुणा निर्दग्धस्वपुरत्रयस्तत्प्रसादाल्लब्धपदो मायाविनामाचार्यो महादेवेन परिरक्षितो विगतसुदर्शनभयो महीयते ॥ २८ ॥

ततोऽधस्तान्महातळे काद्रवेयाणां नैकशिरसां क्रोधवशो नाम गणः कुहकतक्षककाळिय[१]-सुषेणादिप्रधाना महाभोगवन्तः पतत्रिराजाधिपतेः पुरुषोत्तमवाहादनवरतमुद्विजमानाः स्वकळत्रापत्य-सुहृत्कुडुम्बसङ्गेन क्वचित् प्रमत्ता विहरन्ति[२] ॥ २९ ॥

ततोऽधस्ताद् रसातळे दैतेया दानवाः पणयो नाम निवातकवचाः कालकेया हिरण्यपुरवासिन इति विबुधप्रत्यनीका उत्पत्त्या महौजसो महासाहसिनो भगवतः सकललोकमहानुभावस्य[३] हरेरेव तेजसा प्रतिहतबलावलेपा[४] बिलेशया एव वसन्ति[५] ये वै सरमयेन्द्रदूत्या वाग्भिर्मन्त्रवर्णाभिरिन्द्राद् बिभ्यति ॥ ३० ॥

ततोऽधस्तात् पाताळे नागलोकपतयो[६] वासुकिप्रमुखाः शङ्खगुळिकमहाशङ्खश्वेतधनञ्जयधृतराष्ट्र-शङ्खचूडकम्बळाश्वतरदेवदत्तादयो महाभोगिनो महामर्षा निवसन्ति येषामुहवै[७] पञ्चसप्तदश-शतसहस्रशीर्षाणां फणासु[८] विरचिता महामणयो रोचिष्णवः पाताळविवरतिमिरनिकरं स्वरोचिषा विधमन्ति ॥ ३१ ॥

तस्य मूलदेशे त्रिंशद्योजनसहस्रान्तर आस्ते या वै कला भगवतस्तामसी समाख्याताऽनन्त इति सात्वतीया[९] द्रष्टृदृश्ययोः सन्निकर्षणमहमित्यभिमानलक्षणं यं सङ्कर्षणमित्याचक्षते ॥ तस्येदं क्षितिमण्डलं भगवतोऽनन्तमूर्तेः सहस्रशिरस एकस्मिन्नेव शिरसि[१०] ध्रियमाणं सिद्धार्थ इव लक्ष्यते ॥ यस्य हवा इदं कालेनोपसञ्जिहीर्षतोऽमर्षरचितरुचिरभङ्गभ्रुवोरन्तरेण[११] साङ्कर्षणो नाम रुद्र एकादशव्यूहस्त्र्यक्षस्त्रिशिखं शूलमुत्तम्भयन्नुदतिष्ठत्[१२] ॥ यस्याङ्घ्रिकमलयुगळारुणविशदनखमणि-षण्डमण्डलेष्वहिपतयः[१३] सह सात्वतर्षभैरेकान्तभक्तियोगेनावनमन्तः स्ववदनानि परिस्फुरत्-कुण्डलप्रभामण्डितगण्डस्थलान्यतिमनोहराणि प्रमुदितमनसः किल विलोकयन्ति ॥ ३२-३५ ॥

---

१. काळीय २. विचरन्ति ३. सकललोकानुभावस्य ४. प्रतिहतावलेपाः ५. निवसन्ति
६. नागपतयः ७. येषामुहैव ८. शिरस्सु ९. सात्वतैः यद् द्रष्टृ..../सत्वता यद् द्रष्टृ....
१०. शीर्ष्णि ११. रुचिरभ्रमद्भ्रुवोरन्तरेण १२. उत्कम्पयन्नुदतिष्ठत्
१३. नखमणिखण्डमण्डलेष्वहिपतयः/नखमणिमण्डलेष्वहिपतयः

यस्यैव हि नागराजकुमार्य आशिष आशासानाश्चार्वङ्गदवलयविलसितविशदविपुलधवळ-सुभगरुचिरभुजरजतस्तम्भेष्वगरुचन्दनकुङ्कुमपङ्कानवलिम्पमानास्तदभिमर्शनोन्मथितहृदयमकर-ध्वजावेशरुचिरलळितस्मितास्तदनुरागमुदिता मदाघूर्णितारुणकरुणावलोकनयनवदनारविन्दं[१] सव्रीळं[२] किल विलोकयन्ति ॥ स एष भगवाननन्तोऽनन्तगुणार्णव आदिदेव उपसंहृतामर्षरोषवेगो लोकानां स्वस्तय आस्ते ॥ ध्यायमानः सुरासुरोरगसिद्धगन्धर्वविद्याधरमुनिगणैरनवरतमदमुदितविकृत-विह्वललोचनः सुलळितमुखरितामृतेनाप्यायमानः स्वपार्षदविबुधयूथपतीनपरिम्लानरागनवतुळसिका-मोदमध्वासवेन माद्यन्मधुकरव्रातमधुरगीतश्रियं वैजयन्तीं स्वां वनमालां नीलवासा एककुण्डलो हलककुदिकृतसुभगसुन्दरभुजो भगवान् महेन्द्रो वारणेन्द्र इव काञ्चनीं कक्षामुदारलीलो[३] बिभर्ति ॥ ३६-३८ ॥

स एष एवमनुश्रुतोऽभिध्यायमानो मुमुक्षूणामनादिकालकर्मवासनाग्रथितमविद्यामयं[४] हृदय-ग्रन्थिं सत्वरजस्तमोमयमन्तर्हृदयं गत आशु निर्भिनत्ति[५] ॥ तस्यानुभावमिमं[६] भगवान् स्वायम्भुवो नारदः सह तुम्बुरुणा सभायां ब्रह्मणः संश्लोकयामास ॥ ३९-४० ॥

उत्पत्तिस्थितिलयहेतवोऽस्य कल्याः[७] सत्वाद्याः प्रकृतिगुणा यदीक्षयाऽऽसन् ।
यद्रूपं ध्रुवमकृतं यदेकमात्मन् नानाऽधात् कथमुह वेद तस्य वर्त्म ॥ ४१ ॥
मूर्तं नः[८] पुरुकृपया बभार सत्वं संशुद्धं सदसदिदं विभाति यत्र ।
यल्लीलां मृगपतिराददेऽनवद्यामादातुं स्वजनमनांस्युदारवीर्यः ॥ ४२ ॥
यन्नाम श्रुतमनुकीर्तयेदकस्मादार्तो वा यदि पतितः प्रलम्भनाद्वा[९] ।
हन्त्यंहः सपदि नृणामशेषमन्यं कं शेषाद् भगवत आश्रयेन्मुमुक्षुः ॥ ४३ ॥
मूर्धन्यर्पितमणुवत् सहस्रमूर्ध्नो भूगोळं सगिरिसरित्समुद्रसत्वम् ।
आनन्त्यादविदितविक्रमस्य भूम्नः को वीर्याण्यपि गणयेत् सहस्रजिह्वः ॥ ४४ ॥
एवम्प्रभावो भगवाननन्तो दुरन्तवीर्यस्वगुणानुभावः[१०] ।
मूले रसायाः स्थित आत्मतन्त्रो यो लीलया क्ष्मां स्थितये बिभर्ति ॥ ४५ ॥

---

१. तदनुरागमदमुदितावघूर्णितारुण.... २. सव्रीडम् ३. कक्ष्यामुदारलीलः
४. अनादिवासनाग्रथितमविद्यामयम् * ५. आशु भिनत्ति ६. तस्यानुभावान्
७. कल्पाः ८. मूर्तं यः ९. प्रलोभनाद्वा १०. दुरन्तवीर्योरुगुणानुभावः

एता ह्येवेह[१] नृभिरुपगन्तव्या गतयो यथाकर्मविनिर्मिता यथोपदेशमनुवर्णिताः[२] ॥ कामान् कामयमानस्यैतावत्यो हि राजन् पुंसः प्रवृत्तिलक्षणस्य धर्मस्य विपाकगतय उच्चावचा विसदृशा यथाप्रश्नं व्याख्याताः किमन्यत् कथयाम इति ॥ ४६-४७ ॥

**॥ इति श्रीमद्भागवते पञ्चमस्कन्धे त्रयोविंशोऽध्यायः ॥**

---

**राजोवाच**

महर्ष एतद् वैचित्र्यं लोकस्य कथमिति ॥ १ ॥

**श्रीशुक उवाच**

बहुगुणत्वात् कर्तुः श्रद्धायाः कर्मगतयः पृथग्विधाः सर्वा एव सर्वस्य तारतम्येन भवन्ति ॥ तथेदानीं[३] प्रतिषिद्धलक्षणस्याधर्मस्य कर्तुः[४] श्रद्धाया वैसादृश्यात् कर्मफलं विसदृशं भवति ॥ या ह्यनाद्यविद्याकामानां तत्परिणामलक्षणाः सृतयः सहस्रशः प्रवृत्तास्ताः प्राधान्येनानुवर्णयिष्यामः[५]॥ ॥ २-४ ॥

**राजोवाच**

नरका नाम भगवन् किं देशविशेषा अथवा बहिस्त्रिलोक्या आहोस्विदन्तराळ इति॥ ५ ॥

**ऋषिरुवाच**

अन्तराळ एव त्रिजगत्यास्तु दिशि दक्षिणस्यामधस्ताद् भूमेरुपरिष्टादण्डजलाशयस्य यस्यामग्निष्वात्तादयः पितृगणा दिशि स्वानां गोत्राणां परमेण समाधिना सत्या एवाशिष आशासाना निवसन्ति ॥ यत्र हवाव भगवान् पितृराजो वैवस्वतः स्वविषयं प्रापितेषु स्वपुरुषैर्जन्तुषु[६] यथकर्मावद्यमेवानुल्लङ्घितभगवच्छासनः सगणो दमं धारयति ॥ तत्र हैके नरकानेकविंशतिं गणयन्ति । अथ तांस्ते राजन् नामरूपलक्षणतोऽनुक्रमिष्यामः । तामिस्रोऽन्धतामिस्रो[७] रौरवो महारौरवः कुम्भीपाकः, कालसूत्रमसिपत्तवनं, सूकरमुखोऽन्धकूपः, कृमिभोजनः[८], सन्दंशस्तप्तसूर्मिर्वज्रकण्टकशाल्मली वैतरणी पूयोदः प्राणरोधो विशसनं[९] लालाभक्षः सारमेयादनमवीचिरयःपानमिति[१०] । किञ्च क्षारकर्दमो रक्षोगणभोजनः शूलप्रोतो दन्दशूकोऽवटनिरोधः पर्यावर्तनः सूचीमुखमित्यष्टाविंशतिनरका विविधयातनाभूमयः[११] ॥ ६-९ ॥

---

१. एताह्येव ❋ २. उपवर्णिताः ३. अथेदानीम् ४. तथैव कर्तुः ५. प्राचुर्येणानुवर्णयिष्यामः
६. जन्तुषु सम्परेतेषु ७. तामिस्रमन्धतामिस्रम् ८. कृमिभोजनम् ९. वैशसः/वैशसनं
१०. वीचिरयो रेतःपानमिति १. विविधयातनाभूमयः पापकर्मिणाम्

तत्र यस्तु[१] परवित्तापत्यकळत्राण्यपहरति स हि कालपाशबद्धो यमपुरुषैरतिभयानकैः तामिस्रे नरके बलान्निपात्यते। अनशनानिपान[२]दण्डसन्ताडनसन्तर्जनादिभिर्यात्यमानो यत्र कश्मलमासादित एकदैव मूर्च्छामुपयाति तमिस्रप्राये ॥ १० ॥

एवमेवान्धतामिस्रे यस्तु वधित्वा पुरुषं[३] धनदारादीनुपयुङ्क्ते यत्र शरीरी निपात्यमानो यातनास्थो वेदनया नष्टस्मृतिर्नष्टदृष्टिश्च[४] भवति। यथा हि वनस्पतिर्वृश्च्यमानमूलस्तस्मादन्धतामिस्रं तमुपदिशन्ति ॥ ११ ॥

यस्त्विह वा एतदहमिति ममेदमिति भूतद्रोहेण केवलं कुडुम्बमेवानुदिनं पुष्णाति स तदिह विहाय स्वयमेव तदशुभेन रौरवे निपतति ॥ ये चेह यथैवामुना विहिंसिता जन्तवः परत्र यमयातना[५] उपगतं त एव रुरवो भूत्वा तथा तमेव विहिंसन्ति । तस्माद् रौरवमित्याहुः । रुरुरिति सर्पादतिक्रूरसत्वापदेशः[६] ॥ १२-१३ ॥

एवमेव महारौरवो यत्र निपतितं पुरुषं क्रव्यादा रुरवस्तं क्रव्येण खादन्ति[७] यः केवलं हि तथा देहम्भरः ॥ १४ ॥

यस्त्विह वा उग्रः पशून् पक्षिणो वा प्राणिन[८] उपरुन्धयति[९] तमपकरुणं पुरुषादैरपि विगर्हितममुत्र यमानुचराः कुम्भीपाके तप्ततैल उपरुन्धयन्ति[१०] यावन्ति पशुरोमाणि तावद्वर्षसहस्राणि ॥

यस्त्विह पितृमातृब्रह्मध्रुक्[११] स कालसूत्रसञ्ज्ञके नरकेऽयुतयोजनपरिमण्डले ताम्रमये खले उपर्यधस्तादग्न्यर्काभ्यां तप्यमानेऽभिनिवेशितः क्षुत्पिपासाभ्यां च दह्यमानान्तर्बहिश्शरीर आस्ते शेते तिष्ठति परिधावति याचति च[१२] यावन्ति पशुरोमाणि तावद्वर्षसहस्राणि ॥ १६ ॥

यस्त्विह वै निजवेदपथादनापद्यपगतः कुपथा पाषण्डं[१३] चोपगतस्तमसिपत्रवनं प्रवेश्य कशया प्रहरन्ति । तत्र हासावितस्ततो[१४] धावमान उभयतोधारैस्ताळवनासिपत्रैश्छिद्यमानसर्वाङ्गो हा हतोऽस्मीति परया वेदनया मूर्च्छितः पदेपदे निपतति[१५] ॥ १७ ॥

यस्त्विह वै राजा वा राजपुरुषो वा अदण्ड्ये दण्डं प्रणयति ब्राह्मणे वा शरीरदण्डं स पापीयान् नरके सूकरमुखे निपतति । तत्रातिबलैर्निष्पिष्यमाणावयवो यथैवेभेनेक्षुदण्ड[१६]

---

१. यस्त्विह २. अनशनद्रिपातन..../अनशनानुदपान... ३. पुरुषान् ४. नष्टमतिर्नष्टदृष्टिश्च
५. यमयातनाम् ६. ...सत्वस्यापदेशः ७. घातयन्ति ८. प्राणभृतः ९. उपरन्धयति
१०. उपरुन्धयन्ति यावन्ति पशुरोमाणि तावद्वर्षसहस्राणि ११. मातृपितृभ्रातृब्रह्मध्रुक्
१२. याचति च। शेषो नास्ति १३. पाषण्डं कुपथम् १४. ततस्ततः १५. निपतति स्वधर्महा पाषण्डानुगतं फलं भुङ्क्ते ११. यथैवेक्षुदण्डः

आर्तस्वरेण स्तनयन् कचिन्मूर्च्छितः कश्मलमुपगतो यथैवेह दृष्टदोष उपरुद्धः[१] ॥ १८ ॥

यस्त्विह वा भूतानामीश्वरकल्पितवृत्तीनामविदितपरव्यथानां स्वयं पुरुषोपकल्पितवृत्तिर्विदितपरव्यथो व्यथामाचरति स परत्रान्धकूपे तदभिद्रोहेण निपतति । तत्र हासौ तैस्तैर्जन्तुभिः पशुपक्षिसरीसृपैर्मशकयूकमत्कुणमक्षिकादिभिर्ये केचनेहाभिद्रुग्धास्तैः सर्वतोऽपि द्रुह्यमाणस्तमसि विगतनिद्रावृत्तिर्[२]लब्धावस्थानः परिक्रामति यथा कुशरीरे जीवः ॥ १९ ॥

यस्त्विह वाऽसंविभज्याश्नाति यत्किञ्चनोपनतमनिर्वृतयज्ञोपायमसंस्कृतं[३] स परत्र कृमिभोजने नरकाधमे निपतति । तत्र सहस्रयोजने कृमिकुण्डे कृमिभूतः स्वयं कृमिभिरेव भक्ष्यमाणः कृमिभोजनो यावत्तदप्रत्ताकृतनिर्वेशमात्मानं[४] यातयते ॥ २० ॥

यस्त्विह वै स्तेयेन बलाद्वा हिरण्यरजतादीनि[५] ब्राह्मणस्यापहरत्यन्यस्य वाऽनापदि पुरुषस्तं परत्र राजन् यमपुरुषा अयस्मयैरग्निवर्णैः सन्दंशैस्त्वचि निष्कुषन्ति[६] ॥ २१ ॥

यस्त्विह वा अगम्यां स्त्रियं पुरुषं[७] वा योषिदभिगच्छति तावमुत्र कशया ताडयन्तस्तर्जयन्तस्तप्तया सूर्म्या लोहमय्या पुरुषमालिङ्गयन्ति स्त्रियं च पुरुषरूपया सूर्म्या ॥ २२ ॥

यस्त्विह वै सर्वाभिगमस्तममुं निरये वर्तमानं वज्रकण्टकशाल्मलीमारोप्य निष्कर्षन्ति[८] ॥

ये त्विह वै राजन्या राजपुरुषा वाऽपाषण्डा[९] धर्मसेतुं भिन्दन्ति ते सम्परेत्य वैतरण्यां निपतन्ति भिन्नमर्यादाः । तस्यां निरयपरिघाभूतायां नद्यां यादोगणैरितस्ततो भक्ष्यमाणा आत्मना नवियुज्यमानास्ते स्वासुभि[१०]रुह्यमानाश्चौघेन कर्मपाकमनुस्मरन्तो विण्मूत्रपूयशोणितकेशनखास्थिमेदोमांसवसावाहिन्यामुपतप्यन्ते ॥ २४ ॥

ये त्विह वै वृषळीपतयो नष्टशौचाचारनियमास्त्यक्तलज्जाः पशुचर्यां चरन्ति ते चापि[११] प्रेत्य पूयविण्मूत्रश्लेष्ममलपूर्णार्णवे निपतन्ति तदेवातिबीभत्सितमश्नन्ति ॥ २५ ॥

ये त्विह वै श्वगर्दभपतयो ब्राह्मणादयो मृगयाविहारा अतीर्थे च मृगान् निघ्नन्ति तानपि सम्परेतान् लक्ष्यभूतान् यमपुरुषा इषुभिर्विध्यन्ति ॥ २६ ॥

ये त्विह वै डाम्भिका डम्भयज्ञेन पशून् विशसन्ति तानमुष्मिँल्लोके वैशसे नरके पतितान् निरयपतयो पातयित्वा विशसन्ति ॥ २७ ॥

---

१. यथैवेह दृष्टदोषः । २. विहतनिद्रावृत्तिः ३. उपनतं निवृत्तयज्ञोपायसंस्कृतम्
४. अप्रत्ताकृतनिर्वेशेनात्मानम् ५. हिरण्यरत्नादीनि ६. निष्काळयन्ति * ७. अगम्यं पुरुषम्
८. निष्कर्षयन्ति * ९. पाषण्डाः १०. नवियुज्यमानाश्चासुभिः ११. ते पापिनः

यस्त्विह वै सवर्णां भार्यां द्विजो रेतः पाययति[१] काममोहितस्तं पापकृतममुत्र रेतःकुल्यायां पातयित्वा रेतः सम्पाययन्ति ॥ २८ ॥

ये त्विह वै दस्यवोऽग्निदा गरदा ग्रामान् सार्थान् वा विलुम्पन्ति राजा राजभटा वा तांश्चापि परेतान् यमदूता वज्रदंष्ट्राः श्वानः सप्तशतानि विंशतिश्च तैः सरभसं खादयन्ति ॥ २९ ॥

यस्त्विह वा अनृतं वदति साक्ष्ये द्रव्यविनिमये वा कथञ्चित् स वै प्रेत्य नरकेऽवीचीमत्यधः[२]-शिरा निरवकाशो[३] योजनशतोच्छ्रयाद् गिरिशृङ्गान्निपात्यते[४]। यत् तज्जलमिव स्थलमश्मपृष्ठमवभासते तदवीचीमति तिलशो विशीर्यमाणसर्वाङ्गो[५] नम्रियमाणः पुनरारोपितो निपतति ॥ ३० ॥

यस्त्विह[६] वा विप्रो राजन्यो वैश्यो वा सोमपीथस्तत्कळत्रं वा सुरां व्रतस्थितो वा पिबति[७] तेषां निरयनीतानामुरसि पदाऽऽक्रम्यास्ये वह्निना द्रवमाणं कार्ष्णायसं निषिञ्चन्ति ॥

अथ च यस्त्विहात्मसम्भावनेन स्वयमवमो जन्मतपोविद्याचारवर्णाश्रमवतो वरीयसो न बहुमन्यते[८] स मृतक एव मृत्वा क्षारकर्दमे निरयेऽवाक्शिरा निपातितो[९] दुरन्ता यातना ह्यश्नुते ॥ ३२ ॥

ये त्विह वै पुरुषा पुरुषमेधेन यजेरन् नशास्त्रीयांश्च[१०] पशून् खादन्ति तांश्च ते पशव इह निहता यमसादने[११] यातयन्तो रक्षोगणाः सौनिका इव स्वधितिना विदार्यासृक्[१२] पिबन्ति नृत्यन्ति गायन्ति हसन्ति च हृष्यमाणा यथेह पुरुषादाः ॥ ३३ ॥

ये त्विह वा अनागसोऽरण्ये ग्रामे वा वैस्रम्भकैरुपविस्रम्भय्य जिजीविषून् शूलसूत्रादिषूपप्रोतान् क्रीडनया[१३] यातयन्ति तेऽपि च प्रेत्य यमयातनासु शूलसूत्रादिषु च प्रोतात्मानः क्षुत्तृड्भ्यां चाभिहता कङ्कबळादिभिश्चेतस्ततस्तिग्मतुण्डैराहन्यमाना[१४] आत्मशमलं स्मरन्ति ॥ ३४ ॥

ये त्विह वै भूतान्युद्वेजयन्ति नरा अत्युद्बणस्वभावा यथा दन्दशूकास्तेऽपि प्रेत्य नरके दन्दशूकाख्ये निपतन्ति यत्र नृप दन्दशूकाः पञ्चमुखाः सप्तमुखा उपसृत्य उत्पत्य ग्रसन्ति यथा बिलेशयाः ॥ ३५ ॥

ये त्विह वा अवटकुसूलग्रहादिषु[१५] भूतानि निरुन्धन्ति तथाऽमुत्र तेष्वेवोपवेश्य सगरेण वह्निना धूमेन निरुन्धन्ति ॥ ३६ ॥

---

१. सवर्णां भार्यां रेतः प्रापयति  २. अवीचिमत्यधःशिराः  ३. निरवकाशे
४. गिरिमूर्ध्नः सम्पात्यते  ५. विशीर्यमाणशिराः/विशीर्यमाणशरीरः  ६. ये त्विहेत्यादिबहुवचनमासमाप्ति।
७. पिबन्ति प्रमादतः  ८. न बहुमन्येत  ९. निपतितः  १०. अशास्त्रीयान् वा  ११. यमसदने
१२. विदीर्यासृक्/अवदायासृक्  १३. क्रीडनकतया  १४. काककङ्कबकादिभि....  १५. गुहादिषु/गृहादिषु

यस्त्विह वा अतिथीनभ्यागतान् वा गृहपतिरसकृदाहितमन्युर्दिधक्षुरिव[१] पापचक्षुषा निरीक्षते तस्य चापि निरये पापदृष्टेरक्षिणी वक्रतुण्डा गृध्राः कङ्कबळादयः प्रसँह्योरुबलादुत्पाटयन्ति॥

यस्त्विह वा अर्थाभिमतिरहङ्कृतिः[२] तिर्यक्प्रेक्षणः सर्वतश्शङ्की व्ययविनाशचिन्तया[३] परिशुष्य-माणहृदयवदनो निर्वृतिमनुपगतो ग्रह इवार्थमनुरक्षति[४] स पापी प्रेत्य तत्सम्पादनोत्कर्षणसंरक्षण-शमलग्रहः सूचीमुखे नरके निपतति यत्र ह वित्तग्रहं पापपुरुषं धर्मराजपुरुषा वायका इव सर्वतोऽङ्गेषु सूत्रैः परिवयन्ति ॥ ३८ ॥

एवंविधा नरका यमालये[५] सन्ति शतशः सहस्रशस्तेषु सर्वेषु सर्व एवाधर्मवर्तिनो ये केचिदि-होदिता[६] अवनिपते पर्यायेण विशन्ति[७] ॥ ३९ ॥

तथैव धर्मानुवर्त्तिन उत्तरत्र । इह तु पुनर्भवे उभयशेषाभ्यां निविशन्ति ॥ ४० ॥

निवृत्तिलक्षणमार्ग आदावेव व्याख्यातः । एतावानेवाण्डकोशो यश्चतुर्दशधा पुराणेषु विकल्पितः उद्गीयते[८] ॥ ४१ ॥

यत्तद् भगवतो नारायणस्य साक्षान्महापुरुषस्य स्थविष्ठं रूपमात्ममायागुणमयमादृतः[९] पठति शृणोति श्रावयति स एवायं भगवतः परमात्मनो ह्यणिष्ठमपि श्रद्धधानो[१०] भक्तिविशुद्धबुद्धिर्वेद ॥

श्रुत्वा स्थूलं तथा सूक्ष्मं रूपं भगवतो यतिः ।
स्थूले निर्जितमात्मानं शनैः सूक्ष्मं धिया नयेत् - इति क्रमः॥ ४३ ॥

भूद्वीपवर्षसरिदद्रिनभःसमुद्रपाताळदिङ्नरकभागणलोकसंस्थम् ।
गीतं मया तव नृपाद्भुतमीश्वरस्य स्थूलं वपुः सकलजीवनिकायधाम[११] ॥ ४४ ॥

**॥इति श्रीमद्भागवते महापुराणे पारमहंस्यामष्टादशसाहस्र्यां संहितायां वैयासक्यां पञ्चमस्कन्धे चतुर्विंशोऽध्यायः॥**

## ॥ समाप्तश्च पञ्चमस्कन्धः ॥

---

१. उपगतमन्यु.... २. आढ्याभिमतिरहङ्कृतः ३. शङ्कितहृदयोऽर्थव्ययनाशचिन्तनया
४. अभिरक्षति ५. यमलोके ६. इहोदिता अनुदिताश्च
७. निविशन्ते/निविशन्ति ८. पुराणेषूपकल्पितः ९. आत्ममायया मायागुणमयमनुवर्णितमादृतः
१०. अणिष्ठमतिश्रद्धधानः ११. सकलजीवनिकायभूम्नः/सकलजीवनिकायधाम्नः

## ॥ अथ षष्ठस्कन्धः ॥

**राजोवाच**

निवृत्तिमार्गः कथित आदौ भगवता यथा। क्रमयोगोपलब्धेन ब्रह्मणा यदसंसृतिः ॥ १ ॥
प्रवृत्तिलक्षणश्चैव त्रैगुण्यविषयो मुने। योऽसावलीनप्रकृतेर्गुणसर्गः पुनःपुनः ॥ २ ॥
अधर्मलक्षणा नाना नरकाश्चोपवर्णिताः। मन्वन्तरश्च व्याख्यात आद्यः स्वायम्भुवो यतः ॥ ३ ॥
प्रियव्रतोत्तानपदोर्वंशस्तच्चरितानि च। द्वीपवर्षसमुद्राद्रिनदीनदवनानि च ॥ ४ ॥
धरामण्डलसंस्थानं भागलक्षणमानतः। ज्योतिषां विवराणां च यथेदमसृजद् विभुः ॥ ५ ॥
अधुनेह महाभाग यथैव नरकान् नरः। नानोग्रयातनान् नेयात् तन्मे व्याख्यातुमर्हसि ॥ ६ ॥

**श्रीशुक उवाच**

न चेदिहैवापचितिं यथांहसः कृतस्य कुर्यान्मनउक्तिपाणिभिः।
ध्रुवं स वै प्रेत्य नरकानुपैति ये कीर्तिता मे भवतस्तिग्मयातनाः ॥ ७ ॥
तस्मात् पुरैवाश्विह पापनिष्कृतौ यतेत मृत्योरविपद् यदात्मनः।
दोषस्य दृष्ट्वा गुरुलाघवं यथा भिषक् चिकित्सेत रुजां निदानवित् ॥ ८ ॥

**राजोवाच**

दृष्टश्रुताभ्यां यत् पापं जानन्नप्यात्मनोऽहितम्। करोति भूयो विवशः प्रायश्चित्तमथो कथम् ॥ ९ ॥
क्वचिन्निवर्ततेऽभद्रात् क्वचिच्चरति[1] तत् पुनः। प्रायश्चित्तमथोऽपार्थं मन्ये कुञ्जरशौचवत् ॥ १० ॥

**श्रीशुक उवाच**

कर्मणा कर्मनिर्हारो नेहात्यन्तिक[2] इष्यते। अविद्वदधिकारित्वात्[3] प्रायश्चित्तविमर्शनम् ॥ ११ ॥
नाश्नतः पथ्यमेवान्नं व्याधयोऽभिभवन्ति हि। एवं नियमकृद् राजन् शनैः क्षेमाय कल्पते ॥ १२ ॥
तपसा ब्रह्मचर्येण शमेन च दमेन च। त्यागेन सत्यशौचाभ्यां नियमेन यमेन च ॥ १३ ॥
देहवाग्बुद्धिजं धीरा धर्मज्ञाः श्रद्धयाऽन्विताः। क्षपयन्त्यघं महदपि वेणुगुल्ममिवानलः ॥ १४ ॥
केचित् केवलया भक्त्या वासुदेवपरायणाः। अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः ॥ १५ ॥
न तथा ह्यघवान् राजन् पूयेत तपआदिभिः। यथा कृष्णार्पितप्राणस्तत्पूरुषनिषेवया ॥ १६ ॥
सध्रीचीनो ह्ययं लोके पन्थाः क्षेमोऽकुतोभयः। सुशीलाः साधवो यत्र नारायणपरायणाः ॥ १७ ॥

---

१. क्वचाचरति ❋　　२. न ह्यात्यन्तिकः　　३. अविद्वदधिकारत्वात् ❋

प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखैः । न वै पुनन्ति[1] राजेन्द्र सुराकुम्भमिवापगा[2] ॥ १८ ॥

सकृन्मनः कृष्णपदारविन्दयोर्निवेशितं तद्गुणरागि यैरिह ।
न ते यमं पाशभृतश्च तद्भटान् स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः ॥ १९ ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् । दूतानां विष्णुयमयोः संवादं तं निबोध मे ॥ २० ॥

कान्यकुब्जे द्विजः कश्चिद् दासीपतिरजामिळः । नाम्ना नष्टसदाचारो दास्याः संसर्गदूषितः ॥ २१ ॥

बन्धक्षैः[3] कैतवैश्चौर्यैर्गर्हितां वृत्तिमाश्रितः । बिभ्रत् कुडुम्बमशुचिर्यातयामास देहिनम् ॥ २२ ॥

एवं निवसतस्तस्य लाळयानस्य तत्सुतान् । कालोऽत्यगान्महान् राजन्नष्टाशीत्यायुषः समाः ॥

तस्य प्रवयसः पुत्रा दश तेषां तु योऽवमः । बालो नारायणो नाम्ना पित्रोश्च दयितो भृशम् ॥ २४ ॥

स बद्धहृदयस्तस्मिन्नर्भके कळभाषिणि । निरीक्षमाणस्तल्लीलां मुमुदे जरठो भृशम्[4] ॥ २५ ॥

भुञ्जानः प्रपिबन् खादन् बालकस्नेहयन्त्रितः। भोजयन् पाययन् मूढो न वेदागतमन्तकम् ॥ २६ ॥

स एवं वर्तमानोऽज्ञो मृत्युकाल उपस्थिते । मतिं चकार तनये बाले नारायणाह्वये ॥ २७ ॥

स पाशहस्तांस्त्रीन् दृष्ट्वा पुरुषान् भृशदारुणान् । वक्रतुण्डानूर्ध्वरोम्ण आत्मानं नेतुमागतान् ॥ २८ ॥

दूरे क्रीडनकासक्तं पुत्रं नारायणाह्वयम् । प्लावितेन स्वरेणोच्चैराजुहावाकुलेन्द्रियः ॥ २९ ॥

निशम्य म्रियमाणस्य मुखतो हरिकीर्तनम् । भर्तुर्नाम महाराज पार्षदाः सहसाऽपतन् ॥ ३० ॥

विकर्षतोऽन्तर्हृदयाद् दासीपतिमजामिळम् । यमप्रेष्यान् विष्णुदूता वारयामासुरोजसा ॥ ३१ ॥

ऊचुर्निषेधितास्तांस्ते वैवस्वतपुरस्सराः । के यूयं प्रतिषेद्धारो धर्मराजस्य शासनम् ॥ ३२ ॥

कस्य वा कुत आयाताः कस्मादस्य निषेधथ । किं देवा उपदेवा वा यूयं किं सिद्धसत्तमाः ॥ ३३ ॥

सर्वे पद्मपलाशाक्षाः पीतकौशेयवाससः । किरीटिनः कुण्डलिनो लसत्पुष्करमालिनः ॥ ३४ ॥

सर्वे च नूत्नवयसः सर्वे चारुचतुर्भुजाः । धनुर्निषङ्गासिगदाशङ्खचक्राम्बुजश्रियः ॥ ३५ ॥

दिशो वितिमिरालोकाः कुर्वन्तः स्वेन रोचिषा । किमर्थं धर्मराजस्य[5] किङ्करान् नो निषेधथ ॥ ३६ ॥

**श्रीशुक उवाच**

इत्युक्ते यमदूतैस्ते वासुदेवोक्तकारिणः । तान् प्रत्यूचुः प्रहस्येदं मेघगम्भीरया गिरा ॥ ३७ ॥

---

१. न निष्पुनन्ति ❋ २. आपगाः ३. वन्धक्षैः ❋ ४. जरढो भृशम् ❋
५. धर्मपालस्य

**विष्णुदूता ऊचुः**

यूयं वै धर्मराजस्य यदि निर्देशकारिणः। ब्रूत धर्मस्य नस्तत्त्वं यच्चाधर्मस्य लक्षणम् ॥ ३८ ॥

कथंस्विद् ध्रियते दण्डः किं वाऽस्य स्थानमीप्सितम्।
दण्ड्याः किं कारिणः सर्वे आहोस्वित् कतिचिन्नृणाम् ॥ ३९ ॥

**यमदूता ऊचुः**

वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः। वेदो नारायणः साक्षात् स्वयम्भूरिति शुश्रुम: ॥ ४० ॥

येन स्वधाम्न्यमी भावा रजस्सत्वतमोमयाः। गुणनामक्रियारूपैर्विभाव्यन्ते यथातथम् ॥ ४१ ॥

सूर्योऽग्निः खं मरुद् गावः सोमः सन्ध्याहनी दिशः[१]। कालः स्वयं धर्म इति ह्येते धर्मस्य साक्षिणः॥

एतैरधर्मो विज्ञातः स्थानं दण्डस्य युज्यते। सर्वे क्रमानुरोधेन दण्डमर्हन्ति कारिणः ॥ ४३ ॥

सम्भवन्ति ह्यभद्राणि विपरीतानि चानघाः। कारणं गुणसङ्गोऽस्ति देहवान् न ह्यकर्मकृत् ॥ ४४ ॥

येन यावान् यथा धर्मो ह्यधर्मो वा समीहितः। स एव तत्फलं भुङ्क्ते तथा तावदमुत्र वै ॥ ४५ ॥

यथेह देवप्रवरास्त्रैविध्यमुपलभ्यते। भूतेषु गुणवैचित्र्यात् तथाऽन्यत्रानुमीयते ॥ ४६ ॥

वर्तमानोऽन्ययोः कालो गुणाभिज्ञापको यथा। एवं जन्मान्ययोरेतद्[२] धर्माधर्मनिदर्शनम् ॥ ४७ ॥

मनसैव पुरे देवः पूर्वं रूपं विपश्यति। अनुमीमांसतेऽपूर्वं मनसा भगवानजः ॥ ४८ ॥

यथाऽज्ञस्तमसा युक्त उपास्ते व्यक्तमेव हि। न वेद पूर्वमपरं नष्टजन्मस्मृतिस्तथा ॥ ४९ ॥

पञ्चभिः कुरुते स्वार्थान् पञ्च वेदाथ पञ्चभिः। एकस्तु षोडशेन त्रीन् स्वयं सप्तदशोऽश्नुते ॥ ५० ॥

तदेतत् षोडशकलं लिङ्गं शक्तित्रयं महत्। धत्तेऽनु संसृतिं पुंसि हर्षशोकभयार्तिदाम् ॥ ५१ ॥

देह्यज्ञोऽजितषड्वर्गोऽनिच्छन् कर्माणि कार्यते। कोशकार इवात्मानं कर्मणाऽऽच्छाद्य मुह्यति ॥

न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्। कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः[३] ॥ ५३ ॥

लब्ध्वा निमित्तमव्यक्तं व्यक्ताव्यक्तं भवत्युत। यथायोनि यथाबीजं स्वभावेन बलीयसा ॥ ५४ ॥

एष प्रकृतिसङ्गेन पुरुषस्य विपर्ययः। आसीत् स एव नचिरादीशसङ्गाद् विलीयते ॥ ५५ ॥

अयं च श्रुतसम्पन्नः शीलवृत्तगुणालयः। धृतव्रतो मृदुर्दान्तः सत्यवाक् मन्त्रविच्छुचिः ॥ ५६ ॥

गुर्वग्न्यतिथिवृद्धानां शुश्रूषुर्निरहङ्कृतिः। सर्वभूतसुहृत् साधुर्मितवागनसूयकः ॥ ५७ ॥

एकदाऽसौ वनं यातः पितृसन्देशकृद् द्विजः। आदाय तत आवृत्तः फलमूलसमित्कुशान् ॥ ५८ ॥

---

१. अहनी निशा ❋ २. अनयोरेतत् ३. कर्म गुणैः स्वाभाविकैर्बलात् ❋

ददर्श कामिनं कञ्चिच्छूद्रं सह भुजिष्यया । पीत्वा तु मधु मैरेयं मदाघूर्णितनेत्रया ॥ ५९ ॥
मत्तया विश्लथन्नीव्या ह्युपेतं निरपत्रपम् । क्रीडन्तमनुगायन्तं हसन्तमनयाऽन्तिके ॥ ६० ॥
दृष्ट्वा तां कामलिप्तेन बाहुना परिरम्भिताम् । जगाम हृच्छयवशं सहसैव विमोहितः ॥ ६१ ॥
स्तम्भयन्नात्मनाऽऽत्मानं यावत्सत्त्वं यथाश्रुतम् । न शशाक समाधातुं मनो मदनवेपितम् ॥ ६२ ॥
तन्निमित्तस्मरव्याजग्रहग्रस्तो विचेतनः । तामेव मनसा ध्यायन् स्वधर्माद् विरराम ह ॥ ६३ ॥
तामेव तोषयामास पित्र्येणार्थेन[१] यावता । ग्राम्यैर्मनोरमैः कामैः प्रसीदेत यथा यथा ॥ ६४ ॥
विप्रां स्वभार्यामप्रौढां कुले महति लम्भिताम् । विससर्जाचिरात् पापः स्वैरिण्यापाङ्गविद्धधीः ॥ ६५ ॥
इतस्ततश्चोपनिन्ये न्यायतोऽन्यायतो धनम् । बभारास्याः कुडुम्बिन्याः कुडुम्बं मन्दधीरयम् ॥ ६६ ॥
यदसौ शास्त्रमुल्लङ्घ्य स्वैरचार्यार्यगर्हितः । अवर्तत चिरं कालमघायुरशुचिर्मलात् ॥ ६७ ॥
तत एनं दण्डपाणेः सकाशं कृतकिल्बिषम् । नेष्यामोऽकृतनिर्वेशं यत्र दण्डेन शुद्ध्यति ॥ ६८ ॥

**॥ इति श्रीमद्भागवते षष्ठस्कन्धे प्रथमोऽध्यायः ॥**

---

**बादरायणिरुवाच**

एतत् ते[२] भगवद्दूता यमदूताभिभाषितम् । उपधार्याथ तान्[३] राजन् प्रत्याहुर्नयकोविदाः ॥ १ ॥

**विष्णुदूता ऊचुः**

अहो कष्टं धर्मदृशामधर्मः स्पृशते सताम्[४] । यत्रादण्ड्येष्वपापेषु दण्डो यैर्ध्रियते वृथा ॥ २ ॥
प्रजानां पितरो ये च शास्तारः साधवः समाः । यदि स्यात् तेषु वैषम्यं कं यान्ति शरणं प्रजाः ॥ ३ ॥
यद्यदाचरति श्रेयानितरस्तत्तदीहते । स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ ४ ॥
यस्याङ्के शिर आधाय लोकः स्वपिति निर्वृतः । स्वयं धर्ममधर्मं वा न हि वेद यथा पशुः ॥ ५ ॥
स कथं ह्यर्पितात्मानं कृतमैत्रमचेतनम् । विस्रम्भणीयो भूतानां सघृणो द्रोग्धुमर्हति ॥ ६ ॥
अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि । यद् व्याजहार विवशो नाम स्वस्त्ययनं हरेः ॥ ७ ॥
एतेनैव ह्यघो नोऽस्य कृतं स्यादघनिष्कृतम् । यदा नारायण इति जगाद चतुरक्षरम् ॥ ८ ॥
स्तेनः सुरापो मित्रध्रुग् ब्रह्महा गुरुतल्पगः । स्त्रीराजपितृगोहन्ता[५] ये च पातकिनोऽपरे ॥ ९ ॥

---

१. पैत्रेणार्थेन ❋ २. एवं ते ❋ ३. तद् ❋ ४. सभाम् ❋ ५. स्त्रीराजपितृहन्तारः ❋

सर्वेषामप्यघवतामिदमेव सुनिष्कृतम् । नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः ॥ १० ॥

न निष्कृतैरुदितैर्ब्रह्मवादिभिस्तथा विशुद्ध्यत्यघवान् व्रतादिभिः ।
यथा हरेर्नामपदैरुदाहृतैस्तदुत्तमश्लोकगुणोपलम्भकम् ॥ ११ ॥
नैकान्तिकं तद्धि कृतेऽपि निष्कृते मनः पुनर्धावति चेदसत्पथे ।
तत् कर्मनिर्हारमभीप्सतां हरेर्गुणानुवादः खलु सत्वभावनः ॥ १२ ॥

अथैनं माऽपनयत कृताशेषाघनिष्कृतम् । यदसौ भगवन्नाम म्रियमाणः समग्रहीत् ॥ १३ ॥
साङ्केत्यं पारिहास्यं वा स्तोभं हेळनमेव वा । वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥ १४ ॥
पतितः स्खलितो भग्नः सन्दष्टस्तप्त आहतः । हरिरित्यवशेनाह पुमान् नार्हति यातनाम् ॥ १५ ॥
गुरूणां च लघूनां च गुरूणि च लघूनि च । प्रायश्चित्तानि पापानां ज्ञात्वोक्तानि मनीषिभिः ॥
तैस्तान्यघानि पूयन्ते तपोदानजपादिभिः[१] । नाधर्मबीजं हृदयं तदपीशाङ्घ्रिसेवया ॥ १७ ॥
धर्मो योऽयमुपन्यस्तः परमस्तु सनातनः । क्रियतेऽहरहः शुद्धिरात्मनो वाससो यथा ॥ १८ ॥
नैकान्तशुद्धिः स्यात् कर्तुः क्रिययाऽकर्तृता यतः । अकर्तुरात्मनस्तस्माद् भजेतानीहया हरिम् ॥ १९ ॥
अज्ञानादथवा ज्ञानादुत्तमश्लोकनाम यत् । सङ्कीर्तितमघं पुंसो दहत्येधो यथाऽनलः ॥ २० ॥
यथाऽगदं वीर्ययुतं[२] सूपयुक्तं यदृच्छया । अजानतोऽप्यात्मगुणं कुर्यान्मन्त्रोऽप्युदाहृतः ॥ २१ ॥
पतिं वः पृच्छत भटा धर्मेऽस्मिन् यदि संशयः । स वेद परमं गुह्यं धर्मस्य भगवान् यमः ॥ २२ ॥

**श्रीशुक उवाच**

एवं ते सुविनिर्णीय धर्मं भागवतं नृप । तं याम्यपाशान्निर्मुच्य विप्रं मृत्योरमूमुचन् ॥ २३ ॥
इति प्रत्युदिता याम्या दूता गत्वा यमान्तिकम् । यमराज्ञे यथा सर्वमाचचख्युररिन्दम[३] ॥ २४ ॥
द्विजः पाशाद् विनिर्मुक्तो गतभीः प्रकृतिं गतः । ववन्दे शिरसा विष्णोः किङ्करान् दर्शनोत्सवः[४] ॥
तं विवक्षुमभिप्रेत्य महापुरुषकिङ्कराः । सहसा पश्यतस्तस्य तत्रान्तर्दधिरेऽनघ ॥ २६ ॥
अथाजामिळ आकर्ण्य दूतानां यमकृष्णयोः । धर्मं भागवतं शुद्धं त्रैविध्यं च गुणाश्रयम् ॥ २७ ॥
भक्तिमान् भगवत्याशु माहात्म्यश्रवणाद्धरेः । अनुतापो महानासीत् स्मरतोऽशुभमात्मनः ॥ २८ ॥
अहो मे परमं कष्टमभूदविजितात्मनः । येन विप्लावितं ब्रह्म वृषळ्यां जायताऽऽत्मना ॥ २९ ॥

---

१. तपोदानव्रतादिभिः ❋ २. वीर्यतमम् ❋ ३. समाचख्युररिन्दम ❋
४. दर्शनोत्सवान्/दर्शनोत्सुकः

धिङ्मां विगर्हितं सद्भिर्दुष्कृतं कुलकज्जलम् । हित्वा बालां सतीं योऽहं सुरापामसतीमगाम् ॥ ३० ॥
वृद्धावनाथौ पितरौ नान्यबन्धू तपस्विनौ । अहो मयाऽधुना त्यक्तावकृतज्ञेन नीचवत् ॥ ३१ ॥
सोऽहं व्यक्तं पतिष्यामि नरके भृशदारुणे । धर्मघ्नाः कामिनो यत्र विन्दन्ति यमयातनाः ॥ ३२ ॥
किमिदं स्वप्नमाहोस्वित् साक्षाद् दृष्टमिहाद्भुतम् । क्व याता अद्य ते ये मां व्यकर्षन् पाशपाणयः ॥
अथ ते क्व गताः सिद्धाश्चत्वारश्चारुदर्शनाः । व्यमोचयन् नीयमानं बद्ध्वा पाशैरधोभुवः ॥ ३४ ॥
अथापि मे दुर्भगस्य विबुधोत्तमदर्शने । भवितव्यं मङ्गलेन येनात्मा मे प्रसीदति ॥ ३५ ॥
अन्यथा म्रियमाणस्य नाशुचेर्वृषळीपतेः । वैकुण्ठनामग्रहणं जिह्वा कर्तुमिहार्हति ॥ ३६ ॥
क्व चाहं कितवः पापो ब्रह्मोज्झो निरपत्रपः । क्व च नारायणेत्येतद् भगवन्नाम मङ्गलम् ॥ ३७ ॥
सोऽहं तथा यतिष्यामि यतचित्तेन्द्रियानिलः । यथा न भूय आत्मानमन्धे तमसि मज्जये ॥ ३८ ॥
विमुच्य तमिमं बन्धमविद्याकामकर्मजम् । सर्वभूतसुहृद् दान्तो[1] मैत्रः करुण आत्मवान् ॥ ३९ ॥
मोचये ग्रस्तमात्मानं योषिन्मय्याऽऽत्ममायया । विक्रीडितो यथैवाहं क्रीडामृग इवाधमः ॥ ४० ॥
ममाहमिति देहादौ हित्वा मिथ्यार्थधीर्मतिम् । धास्ये मनो भगवति शुद्धं तत्कीर्तनादिभिः ॥ ४१ ॥
इति जातसुनिर्वेदः क्षणसङ्गेन साधुषु । गङ्गाद्वारमुपेयाय मुक्तसर्वानुबन्धनः ॥ ४२ ॥
स तस्मिन् देवसदन आसीनो योगमास्थितः । प्रत्याहृतेन्द्रियग्रामो युयोज मन आत्मनि ॥ ४३ ॥
ततो गुणेभ्य आत्मानं वियुज्यात्मसमाधिना । युयोज[2] भगवद्धाम्नि ब्रह्मण्यनुभवात्मनि ॥ ४४ ॥
यर्ह्युपारतधीस्तस्मिन्नद्राक्षीत् पुरुषान् पुरः । उपलभ्योपलब्धान् प्राग् ववन्दे शिरसा द्विजः ॥
हित्वा कळेबरं तीर्थे गङ्गाया दर्शनादनु । सद्यः स्वरूपं जगृहे भगवत्पार्श्ववर्तिनाम् ॥ ४६ ॥
साकं विहायसा विप्रो महापुरुषकिङ्करैः । हैमं विमानमारुह्य ययौ यत्र श्रियःपतिः ॥ ४७ ॥

एवं स विप्लावितसर्वधर्मो दास्याःपतिः पतितो गर्ह्यकर्मा[3] ।
निपात्यमानो निरये हतव्रतः सद्यो विमुक्तो भगवन्नाम गृह्णन् ॥ ४८ ॥
नातः परं कर्मनिबन्धकृन्तनं मुमुक्षतां तीर्थपदानुकीर्तनात् ।
न यत् पुनः कर्मसु सज्जते मनो रजस्तमोभ्यां कलिलं न चान्यथा ॥ ४९ ॥

य एनं परमं गुह्यमितिहासमघापहम् । शृणुयाच्छ्रद्धया युक्तो यश्च भक्त्याऽनुकीर्तयेत् ॥ ५० ॥

---

१. शान्तः ❋ २. युयुजे ❋ ३. गर्ह्यकर्मणा ❋

न वै स नरकं गच्छेन्नेक्षितो[१] यमकिङ्करैः । यद्यप्यमङ्गलो मर्त्यो विष्णुलोके महीयते ॥ ५१ ॥

म्रियमाणो हरेर्नाम गृणन् पुत्रोपचारितम् । अजामिळोऽप्यगान्मुक्तिं किमुत श्रद्धया गृणन् ॥ ५२ ॥

**॥ इति श्रीमद्भागवते षष्ठस्कन्धे द्वितीयोऽध्यायः ॥**

---

**राजोवाच**

निशम्य देवः स्वभटोपवर्णितं प्रत्याह किं तानथ धर्मराजः ।
एवं हताज्ञो विहतान् मुरारेर्नैदेशिकैर्यस्य वशे जनोऽयम् ॥ १ ॥

यमस्य देवस्य न दण्डभङ्गः कुतश्चनर्षे श्रुतपूर्व आसीत्[२] ।
एतन्मुने[३] वृश्चति लोकसंशयं न हि त्वदन्य इति मे विनिश्चयः[४] ॥ २ ॥

**बादरायणिरुवाच**

भगवत्पुरुषै राजन् याम्याः प्रतिहतोद्यमाः । पतिं विज्ञापयामासुः यमं संयमनीपतिम् ॥ ३ ॥

**यमदूता ऊचुः**

कति सन्तीह शास्तारो जीवलोकस्य वै प्रभो । त्रैविध्यं कुर्वतः कर्म फलाभिव्यक्तिहेतवः ॥ ४ ॥

यदि स्युर्बहवो लोके शास्तारो दण्डधारिणः । कस्य स्यातां न वा कस्य मृत्युश्चामृतमेव च ॥ ५ ॥

किन्तु शास्तृबहुत्वे स्याद् बहूनामिह कर्मिणाम् । शास्तृत्वमुपचारो हि यथा मण्डलवर्तिनाम् ॥ ६ ॥

अतस्त्वमेको भूतानां सेश्वराणामधीश्वरः । शास्ता दण्डधरो नृणां शुभाशुभविवेचनः ॥ ७ ॥

तस्य ते विहतो दण्डो नृलोके वर्ततेऽधुना । चतुर्भिरद्भुतैः सिद्धैराज्ञा ते विप्रलङ्घिता ॥ ८ ॥

नीयमानं तवादेशादस्माभिर्यातनागृहम्[५] । व्यमोचयन् पातकिनं च्छित्वा पाशान् प्रसँह्य ते ॥ ९ ॥

तांस्तु वेदितुमिच्छामो यदि नो मन्यसे क्षमम् । नारायणेत्यभिहिते मा भैरित्याययुर्द्रुतम् ॥ १० ॥

**श्रीशुक उवाच**

इति देवः स आपृष्टः प्रजासंयमनो यमः । प्रीतः स्वदूतान् प्रत्याह स्मरन् पादाम्बुजं हरेः ॥ ११ ॥

---

१. नरकं याति नेक्षितः ❋ २. देवस्य हि दण्डभङ्गः कुतश्चनाप्यश्रुतपूर्व आसीत् ❋ ३. एवं मुने
४. विनिश्चितम् ५. त्वदादेशा..... ❋

**यम उवाच**

परो मदन्यो जगतस्तस्थुषश्च ओतं प्रोतं पटवद् यत्र विश्वम् ।
यदंशतोऽस्य स्थितिजन्मनाशा नस्योतवद् यस्य वशे च लोकः ॥ १२ ॥
यो नामभिर्वाचि जनं निजायां बध्नाति तन्त्यामिव[1] दामभिर्गाः ।
यस्मै बलिं त इमे नामकर्मभिर्निबन्धबद्धाश्चकिता वहन्ति ॥ १३ ॥
अहं महेन्द्रो निर्ऋतिः प्रचेताः सोमोऽग्निरीशः पवनोऽर्को विरिञ्चः ।
आदित्यविश्वेवसवोऽथ साध्या मरुद्गणा रुद्रगणाः ससिद्धाः ॥ १४ ॥
अन्ये च ये विश्वसृजोऽमरेशा भृग्वादयोऽस्पृष्टरजस्तमस्काः ।
यस्येहितं न विदुः स्पृष्टमायाः सत्त्वप्रधाना अपि किं ततोऽन्ये ॥ १५ ॥
यं वै न गोभिर्मनसाऽसुभिर्वा हृदा गिरा वाऽसुभृतो विचक्षते ।
आत्मानमन्तर्हृदि सन्तमात्मनां चक्षुर्यथैवाकृतयस्ततः परम् ॥ १६ ॥
तस्यात्मतन्त्रस्य हरेरधीशितुः परस्य मायाधिपतेर्महात्मनः ।
प्रायेण दूता इह वै मनोहराश्चरन्ति तद्रूपगुणस्वभावाः ॥ १७ ॥
भूतानि विष्णोः सुरपूजितानि दुर्दर्शलिङ्गानि महाद्भुतानि ।
रक्षन्ति तद्भक्तिमतः परेभ्यो मत्तश्च मर्त्यानथ सर्वतश्च ॥ १८ ॥
धर्मं तु साक्षाद् भगवत्प्रणीतं न वै विदुर्ऋषयो नापि देवाः ।
न सिद्धमुख्या असुरा मनुष्याः कुतो नु विद्याधरचारणादयः ॥ १९ ॥
स्वयम्भूर्नारदः शम्भुः कुमारः कपिलो मनुः । प्रह्लादो जनको भीष्मो बलिर्वैयासकिर्वयम् ॥
द्वादशैते विजानीमो धर्मं भागवतं भटाः । गुह्यं विशुद्धं दुर्बोधं यज्ज्ञात्वाऽमृतमश्नुते ॥ २१ ॥
एतावानेव लोकेऽस्मिन् पुंसां धर्मः परः स्मृतः । भक्तियोगो भगवति तन्नामग्रहणादिभिः ॥ २२ ॥
नामोच्चारणमाहात्म्यं हरेः पश्यत पुत्रकाः । अजामिळोऽपि येनैव मृत्युपाशादमुच्यत ॥ २३ ॥
एतावताऽलमघनिर्हरणाय पुंसां सङ्कीर्तनं भगवतो गुणकर्मनाम्नाम् ।
विक्रुश्य पुत्रमघवान् यदजामिळोऽपि नारायणेति म्रियमाण इयाय मुक्तिम् ॥ २४ ॥
प्रायेण वेद तदिदं न महाजनोऽयं देव्या विमोहितमतिर्बत माययाऽलम् ।
त्रय्यां जडीकृतमतिर्मधुपुष्पितायां वैतानिके महति कर्मणि युज्यमानः ॥ २५ ॥

---
१. तन्त्यामिव ❋

एवं विमृश्य सुधियो भगवत्यनन्ते सर्वात्मना विदधते खलु भावयोगम् ।
ते मे न दण्डमर्हन्त्यथ यद्यमीषां स्यात् पातकं तदपि हन्त्युरुगायवादः ।। २६ ।।
ते देवसिद्धपरिगीतपवित्रगाथा ये साधवः समदृशो भगवत्प्रपन्नाः ।
तान् नोपसीदत हरेर्गदयाऽभिगुप्तान् नैषां भयं न च वयं प्रभवाम दण्डे ।। २७ ।।
तानानयध्वमसतो विमुखान् मुकुन्दपादारविन्दमकरन्दरसादजस्रम् ।
निष्किञ्चनैः परमहंसकुलै रसज्ञैः जुष्टाद् गृहे निरयवर्त्मनि बद्धतृष्णान् ।। २८ ।।
जिह्वा न वक्ति भगवद्गुणनामधेयं चेतश्च न स्मरति तच्चरणारविन्दम् ।
कृष्णाय नो नमति यच्छिर एकदाऽपि तानानयध्वमसतोऽकृतविष्णुकृत्यान् ।। २९ ।।
कृष्णाङ्घ्रिपद्ममधुलिट् न पुनर्विसृष्टमायागुणेषु रमते व्रजिनावहेषु ।
अन्यस्तु कामहत आत्मरजः प्रमार्ष्टुमीहेत कर्म यत एव रजः पुनः स्यात् ।। ३० ।।
तत् क्षम्यतां स भगवान् पुरुषः पुराणो नारायणः स्वपुरुषैर्यदसत्कृतं नः ।
स्वानामहो नविदुषां रचिताञ्जलीनां क्षान्तिर्वरीयसि नमः पुरुषाय भूम्ने ।। ३१ ।।

**श्रीशुक उवाच**

इत्थं स्वभर्तृगदितं भगवन्महित्वं संश्रुत्य विस्मितधियो यमकिङ्करास्ते ।
तेनाच्युताश्रयजनं प्रतिशङ्कमाना द्रष्टुं च बिभ्यति ततः प्रभृति स्म राजन् ।। ३२ ।।
तस्मात् सङ्कीर्तनं विष्णोर्जगन्मङ्गळमंहसाम् । महतामपि कौरव्य विध्येकान्तविनिष्कृतम् ।। ३३ ।।
शृण्वतो गृणतो वीर्याण्युद्दामानि हरेर्मुहुः । यथाऽऽशुजातया[1] भक्त्या शुध्येन्नात्मा व्रतादिभिः ।।
इतिहासमिमं गुह्यं भगवान् कुम्भसम्भवः । कथयामास मलय आसीनो हरिमर्चयन् ।। ३५ ।।

**।। इति श्रीमद्भागवते षष्ठस्कन्धे तृतीयोऽध्यायः ।।**

---

**राजोवाच**

देवासुरनृणां सर्गो नागानां मृगपक्षिणाम् । सामासिकस्त्वया प्रोक्तो यस्तु स्वायम्भुवेऽन्तरे ।। १ ।।
तस्यैव व्यासमिच्छामि ज्ञातुं ते[2] भगवन् यथा । अनुसर्गं यथा शक्त्या ससर्ज भगवान् परः ।। २ ।।

---

१. यथा सुजातया २. श्रोतुं ते

**सूत उवाच**

इति सम्प्रश्नमाकर्ण्य राजर्षेर्बादरायणिः। प्रतिनन्द्य महायोगी जगाद मुनिसत्तमाः ॥ ३ ॥

**ऋषिरुवाच**

यदा प्रचेतसः पुत्रा दश प्राचीनबर्हिषः। अन्तस्समुद्रादुन्मग्ना ददृशुर्गां द्रुमैर्वृताम् ॥ ४ ॥

द्रुमेभ्यः क्रुध्यमानास्ते तपोदीपितमन्यवः। मुखतो वायुमग्निं च ससृजुस्तद्दिधक्षया ॥ ५ ॥

ताभ्यां निर्दह्यमानांस्तानुपलभ्य कुरूद्वह। राजोवाच महान् सोमो मन्युं प्रशमयन्निव ॥ ६ ॥

मा द्रुमेभ्यो महाभागा दीनेभ्यो द्रोग्धुमर्हथ। विवर्धयिषवो यूयं प्रजानां पतयः स्मृताः ॥ ७ ॥

आदौ प्रजापतिपतिर्भगवान् हरिरव्ययः। वनस्पतीनोषधीश्च ससर्जोर्जमिषं विभुः ॥ ८ ॥

अन्नं चराणामचरा ह्यपदः पादचारिणाम्। अहस्ता हस्तयुक्तानां द्विपदां च चतुष्पदः ॥ ९ ॥

यूयं च पित्रा निर्दिष्टा देवदेवेन चानघाः। प्रजासर्गाय हि कथं वृक्षान् निर्दग्धुमर्हथ ॥ १० ॥

आतिष्ठत सतां मार्गं कोपं यच्छत दीपितम्। पित्रा पितामहेनापि जुष्टं वः प्रपितामहैः ॥ ११ ॥

तोकानां पितरौ बन्धू दृशः पक्ष्म स्त्रियः पतिः। नृपः प्रजानां भिक्षूणां गृह्यज्ञानां बुधः सुहृत् ॥

अन्तर्देहेषु भूतानामात्माऽऽस्ते हरिरीश्वरः। सर्वं तद्धिष्ण्यमीक्षध्वमेवं वस्तोषितो ह्यसौ ॥ १३ ॥

यः समुत्पतितं देह आकाशान्मन्युमुद्बणम्। आत्मजिज्ञासया यच्छेत् स गुणानतिवर्तते ॥ १४ ॥

अलं दग्धैर्द्रुमैर्दीनैः शेषाणां शिवमस्तु वः। वार्क्षी यैषा वरा कन्या पत्नीत्वे प्रतिगृह्यताम् ॥ १५ ॥

इत्यामन्त्र्य वरारोहां कन्यामाप्सरसीं नृप। सोमो राजा ययौ दत्वा ते धर्मेणोपयेमिरे ॥ १६ ॥

तेभ्यस्तस्यामभूद् राजन् दक्षः प्राचेतसः किल। यस्य प्रजाविसर्गेण लोका आपूरितास्त्रयः॥ १७ ॥

यथा ससर्ज भूतानि दक्षो दुहितृवत्तमः[१]। रेतसा मनसा चैव तन्ममावहितः शृणु ॥ १८ ॥

मनसैवाऽसृजत् पूर्वं प्रजापतिरिमाः प्रजाः। देवासुरमनुष्यादीन् नभःस्थलजलौकसः ॥ १९ ॥

तमबृंहितमालोक्य प्रजासर्गं प्रजापतिः। विन्ध्यपादानुपव्रज्य सोऽचरद् दुश्चरं तपः ॥ २० ॥

तत्राघमर्षणं नाम तीर्थं पापहरं परम्। उपस्पृश्यानुसवनं तपसाऽतोषयद्धरिम् ॥ २१ ॥

अस्तौषीद् हंसगुह्येन भगवन्तमधोक्षजम्। तुभ्यं तदभिधास्यामि कस्यातुष्यद् यतो हरिः ॥ २२ ॥

**प्रजापतिरुवाच**

नमः परायावितथानुभूतये गुणत्रयाभासनिमित्तबन्धवे।
अदृष्टधाम्ने गुणतत्त्वबुद्धिभिर्निवृत्तमानावधये स्वयम्भुवे ॥ २३ ॥

---

१. दुहितृवत्सलः

न यस्य सख्यं पुरुषो वेत्ति सख्युः सखा वसन् संवसतः पुरेऽस्मिन्।
गुणो यथा गुणिनोऽव्यक्तदृष्टिस्तस्मै महेशाय नमस्करोमि ॥ २४ ॥
देहोऽसवोऽक्षा मनवो भूतमात्रा नात्मानमन्यं च विदुः परं यत्।
सर्वं पुमान् वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञमनन्तमीडे ॥ २५ ॥
यदोपरामो मनसो नामरूपरूपस्य दृष्टिस्मृतिसम्प्रमोषात्।
य ईयते केवलया स्वसंस्थया हंसाय तस्मै शुचिषद्मने नमः ॥ २६ ॥
मनीषिणोऽन्तर्हृदि सन्निवेशितं स्वशक्तिभिर्नवभिश्च त्रिवृद्भिः।
वह्निं यथा दारुणि पाञ्चदश्यं मनीषया निष्कृषन्तीह गूढम् ॥ २७ ॥
स वै ममाशेषविशेषमायानिषेधनिर्वाणसुखानुभूतिः।
स सर्वनामा स च विश्वरूपः प्रसीदतामनिरुक्तात्मशक्तिः ॥ २८ ॥
यद्यन्निरुक्तं वचसा निरूपितं धियाऽक्षभिर्वा मनसोत यस्य।
मा भूत् स्वरूपं गुणरूपबृंहितं स वै गुणापायनिसर्गलक्षणः ॥ २९ ॥
यस्मिन् यतो येन च यस्य यस्मै यं यो यथा कुरुते कार्यते वा।
परावरेषां परमं प्राक् स्वसिद्धं[1] तद् ब्रह्म तद्धेतुरनन्यदेकम् ॥ ३० ॥
यच्छक्तयो वदतां वादिनां वै विवादसंवादभुवो भवन्ति।
कुर्वन्ति तेषां मुहुरात्ममोहं तस्मै नमोऽनन्तगुणाय भूम्ने ॥ ३१ ॥
अस्तीति नास्तीति च वस्तुनिष्ठयोरेकस्थयोर्भिन्नविरुद्धधर्मयोः।
अपेक्षितं किञ्चन साङ्ख्ययोगयोः समं परं ह्यनुकूलं बृहत् तत् ॥ ३२ ॥
योऽनुग्रहार्थं भजतां पादमूलमनामरूपो भगवाननन्तः।
नामानि रूपाणि च जन्मकर्मभिर्भेजे स मह्यं परमः प्रसीदताम् ॥ ३३ ॥
यः प्राकृतैर्ज्ञानपथैर्जनानां यथाशयं देहगतो विभाति।
यथाऽनिलः पार्थिवमाश्रितो गुणं स ईश्वरो मे कुरुतान्मनोरथम् ॥ ३४ ॥

**श्रीशुक उवाच**

इति स्तुतः[2] संस्तुवतः स तस्मिन्नघमर्षणे। प्रादुरासीत् कुरुश्रेष्ठ भगवान् भक्तवत्सलः ॥ ३५ ॥

१. प्रसिद्धम् २. स्तवैः

कृतपादः सुपर्णांसे प्रलम्बाष्टमहाभुजः । शङ्खचक्रासिचर्मेषुधनुष्पाशगदाधरः[१] ॥ ३६ ॥
पीतवासा घनश्यामः प्रसन्नवदनेक्षणः । वनमालानिवीताङ्गो लसच्छ्रीवत्सकौस्तुभः ॥ ३७ ॥
महाकिरीटकटकस्फुरन्मकरकुण्डलः । काञ्च्यङ्गुलीयवलयनूपुराङ्गदभूषितः ॥ ३८ ॥
त्रैलोक्यमोहनं रूपं बिभ्रत् त्रिभुवनेश्वरः । वृतो नारदनन्दाद्यैः पार्षदैः सुरयूथपैः ॥ ३९ ॥
स्तूयमानोऽनुगायद्भिः सिद्धगन्धर्वचारणैः । रूपं तन्महदाश्चर्यं विलोक्यागतसाध्वसः ।
ननाम दण्डवद् भूमौ प्रहृष्टात्मा प्रजापतिः ॥ ४० ॥
न किञ्चनोदीरयितुमशकत् तीव्रया मुदा । आपूरितमनोद्वारो ह्रदिन्य इव निर्झरैः ॥ ४१ ॥
तं तथाऽवनतं भक्तं प्रजाकामं प्रजापतिम् । चित्तज्ञः सर्वभूतानामिदमाह जनार्दनः ॥ ४२ ॥

**श्रीभगवानुवाच**

प्राचेतस महाभाग संसिद्धस्तपसा भवान् । यच्छ्रद्धया मत्परया मयि भावं परं गतः ॥ ४३ ॥
प्रीतोऽहं ते प्रजानाथ यत् ते स्याद् बृंहणं तपः । ममैष कामो भूतानां यद् भूयासुर्विभूतयः ॥ ४४ ॥
ब्रह्मा भवो भवन्तश्च मनवो विबुधेश्वराः । विभूतयो मम ह्येता भूतानां भूतिहेतवः ॥ ४५ ॥
तपो मे हृदयं ब्रह्म[२] तनुर्विद्या क्रियाऽऽकृतिः । अङ्गानि क्रतवो जाता धर्म आत्माऽसवः सुराः ॥
अहमेवेदमासाग्रे नान्यत् किञ्चान्तरं बहिः । संज्ञानमात्रमव्यक्तं प्रसुप्तमिव विश्वतः[३] ॥ ४७ ॥
मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे । यदासीत् तत एवाद्यः स्वयम्भूः समभूदजः ॥ ४८ ॥
स वै यदा महादेवो मम वीर्योपबृंहितः । मेनेऽकल्पमिवात्मानमुद्यतः[४] सर्गकर्मणि ॥ ४९ ॥
अथ मेऽभिहितो देवस्तपोऽतप्यत दारुणम् । नव विश्वसृजो युष्मान् येनादावसृजद् प्रभुः ॥ ५० ॥
एषा पञ्चजनस्याङ्ग दुहिता वै प्रजापतेः । असिक्नी नाम पत्नीत्वे प्रजेश प्रतिगृह्यताम् ॥ ५१ ॥
मिथुनव्यवायधर्मस्त्वं प्रजासर्गमिमं पुनः । मिथुनव्यवायधर्मिण्यां भूरिशो भावयिष्यसि ॥ ५२ ॥
त्वत्तोऽधस्तात् प्रजाः सर्वा मिथुनीभूय मायया । मदीयया भविष्यन्ति हरिष्यन्ति च मे बलिम् ॥
इत्युक्त्वा मिषतस्तस्य भगवान् विश्वभावनः । स्वप्नोपलब्धार्थ इव तत्रैवान्तर्दधे हरिः ॥ ५४ ॥

**॥ इति श्रीमद्भागवते षष्ठस्कन्धे चतुर्थोऽध्यायः ॥**

---

तस्यां स पाञ्चजन्यां वै विष्णुमायोपबृंहितः । हर्यश्वसञ्ज्ञानयुतं पुत्रानजनयद् विभुः ॥ १ ॥

---

१. धनुःपाश.... २. ब्रह्मन्/साक्षात् ३. सर्वतः ४. मेनेऽकल्यमिवा.....*

अपृथग्धर्मशीलास्ते सर्वे दाक्षायणा नृप । पित्रा प्रोक्ताः प्रजासर्गे प्रतीचीं प्रययुर्दिशम् ॥ २ ॥
तत्र नारायणसरस्तीर्थं सिन्धुसमुद्रयोः । सङ्गमो यत्र सुमहन्मुनिसिद्धनिषेवितम् ॥ ३ ॥
तदुपस्पर्शनादेव विनिर्धूतमलाशयाः । धर्मे पारमहंस्ये च प्रोत्पन्नमतयोऽप्युत ॥ ४ ॥
तेपिरे[1] तप एवोग्रं पित्रादेशेन यन्त्रिताः । प्रजाविवृद्धये यत्तान् देवर्षिस्तान् ददर्श ह ॥ ५ ॥
उवाच वाचं[2] हर्यश्वाः कथं स्रक्ष्यथ वै प्रजाः । अदृष्ट्वाऽन्तं भुवो यूयं बालिशा बत बालकाः॥ ६ ॥
तथैकपुरुषं राज्यं बिलं चादृष्टनिर्गमम् । बहुरूपां स्त्रियं चापि पुमांसं पुंश्चलीपतिम् ॥ ७ ॥
नदीमुभयतोवाहां पञ्चपञ्चाद्भुतं गृहम् । क्वचिद्धंसं चित्रकथं क्षुरान्तं च स्वयं भ्रमिम् ॥ ८ ॥
कथं स्वपितुरादेशमविद्वांसो विपश्चितः । अनुरूपमविज्ञाय अहो सर्गं करिष्यथ ॥ ९ ॥

**श्रीशुक उवाच**

तन्निशम्याथ हर्यश्वा औत्पत्तिकमनीषया । वाचः कूटं च देवर्षेः स्वयं विममृशुर्धिया ॥ १० ॥
भूः क्षेत्रं बीजसञ्ज्ञस्य यदनादिनिबन्धनम् । अदृष्ट्वा तस्य निर्वाणं किमसत्कर्मभिर्भवेत् ॥ ११ ॥
एक एवेश्वरस्तुर्यो भगवान् स्वाश्रयः परः । तमदृष्ट्वाऽभवं पुंसः किमसत्कर्मभिर्भवेत् ॥ १२ ॥
पुमान् नापैति यद् गत्वा बिलं स्वर्गगतो यथा । प्रत्यग्धामाविद[3] इह किमसत्कर्मभिर्भवेत् ॥ १३ ॥
नानारूपाऽऽत्मनो बुद्धिः स्वैरिणीव गुणान्विता । तन्निष्ठामगतस्येह किमसत्कर्मभिर्भवेत् ॥ १४ ॥
तत्सङ्गभ्रंशितैश्वर्यं संसरन्तं कुभार्यवत् । तद्गतीरबुधस्येह किमसत्कर्मभिर्भवेत् ॥ १५ ॥
सृष्ट्यप्ययकरीं मायां वेलाकूलान्तवेगिताम् । मत्तस्य तदविज्ञानात् किमसत्कर्मभिर्भवेत् ॥ १६ ॥
पञ्चविंशतितत्त्वानां पुरुषोऽद्भुतदर्शनः । अध्यात्ममबुधस्येह किमसत्कर्मभिर्भवेत् ॥ १७ ॥
ऐश्वरं शास्त्रमुत्सृज्य बन्धमोक्षानुदर्शनम् । विविक्तपदमज्ञात्वा किमसत्कर्मभिर्भवेत् ॥ १८ ॥
कालचक्रं भ्रमिं तीक्ष्णं सर्वं निष्कषयज्जगत्[4] । स्वतन्त्रमबुधस्येह किमसत्कर्मभिर्भवेत् ॥ १९ ॥
शास्त्रस्य पितुरादेशं यो न वेद निवर्तकम् । कथं तदनुरूपाय गुणविस्रम्भ्युपक्रमेत् ॥ २० ॥
इति व्यवसिता राजन् हर्यश्वा एकमेधसः । प्रययुस्तं परिक्रम्य पन्थानमनिवर्तकम् ॥ २१ ॥
स्वरब्रह्मणि निर्भाते[5] हृषीकेशपदाम्बुजे । अखण्डं चित्तमावेश्य लोकाननुचरन्मुनिः[6] ॥ २२ ॥

---

१. तेपुस्ते २. उवाच चाथ ३. प्रत्यगात्माविदः ४. निष्कर्षयज्जगत्
५. निर्भातम् ६. लोकानन्वचरन्मुनिः

नाशं निशम्य पुत्राणां नारदाच्छीलशालिनाम् । अन्वतप्यत कः शोचन् सुप्रजास्त्वं शुचां पदम् ॥

स भूयः पाञ्चजन्यायामजेन परिसान्त्वितः । पुत्रानजनयद् दक्षः शबळाश्वान् सहस्रिणः ॥ २४ ॥

तेऽपि पित्रा समादिष्टाः प्रजासर्गे धृतव्रताः । नारायणसरो जग्मुर्यत्र सिद्धास्तु पूर्वजाः ॥ २५ ॥

तदुपस्पर्शनादेव विनिर्धूतमलाशयाः । जपन्तो ब्रह्म परमं तेपुस्तत्र महत् तपः ॥ २६ ॥

अब्भक्षाः कतिचिन्मासान् कतिचिद् वायुभोजनाः । आराधयन् मन्त्रमिममभ्यसन्त इडस्पतिम् ॥

ओं नमो नारायणाय पुरुषाय महात्मने । विशुद्धसत्त्वधिष्ण्याय महाहंसाय धीमहि ॥ २८ ॥

इति तानपि राजेन्द्र प्रजासर्गधियो मुनिः । उपेत्य नारदः प्राह वाचः कूटानि पूर्ववत् ॥ २९ ॥

दाक्षायणाः संशृणुत गदतो निगमं मम । अन्विच्छतानुपदवीं भ्रातॄणां भ्रातृवत्सलाः ॥ ३० ॥

भ्रातॄणां प्रायणं भ्राता योऽनुतिष्ठति धर्मवित् । स पुण्यबन्धुः पुरुषो मरुद्भिः सह मोदते ॥ ३१ ॥

एतावदुक्त्वा प्रययौ नारदोऽमोघदर्शनः । तेऽपि चान्वगमन्मार्गं भ्रातॄणामेव मारिष ॥ ३२ ॥

सध्रीचीनं प्रतीचीनं परस्यानुपथं गताः । नाद्यापि ते निवर्तन्ते पश्चिमा यामिनीरिव ॥ ३३ ॥

एतस्मिन् काल उत्पातान् बहून् पश्यन् प्रजापतिः । पूर्ववन्नारदकृतं पुत्रनाशमथाशृणोत् ॥ ३४ ॥

चुक्रोध नारदायासौ पुत्रशोकविमूर्च्छितः । देवर्षिमुपलभ्याह रोषाद् विष्फुरिताधरः[1] ॥ ३५ ॥

**दक्ष उवाच**

अहो असाधो साधूनां साधुलिङ्गेन नस्त्वया । असाध्वकार्यर्भकाणां भिक्षोर्मार्गः प्रदर्शितः ॥ ३६ ॥

ऋणैस्त्रिभिरमुक्तानाममीमांसितकर्मणाम् । विघातः श्रेयसः पाप लोकयोरुभयोः कृतः ॥ ३७ ॥

एवं त्वं निरनुक्रोशो बालानां मतिभिद्धरेः । पार्षदमध्ये चरसि यशोहानिरपत्रपः ॥ ३८ ॥

ननु भागवता नित्यं भूतानुग्रहकातराः । ऋते त्वां सौहृदघ्नं वै वैरङ्करमवैरिणाम् ॥ ३९ ॥

नेत्थं पुंसो विरागः स्यात् त्वया केवलिना विना । मन्यसे यद्युपशमं स्नेहपाशनिकृन्तनम् ॥ ४० ॥

नानुभूय न जानाति पुमान् विषयतीक्ष्णताम् । निर्विद्यते[2] स्वयं तस्मान्न तथा भिन्नधीः परैः ॥ ४१ ॥

यन्नस्त्वं कर्मबद्धानां साधूनां गृहमेधिनाम् । कृतवानसि दुर्मर्ष विप्रियं तच्च मर्षितम् ॥ ४२ ॥

तन्तुकृन्तनयानां त्वमभद्रमचरः पुनः । तस्माल्लोकेषु ते मूढ न भवेद् भ्रमतः पदम् ॥ ४३ ॥

---

१. देवर्षिमुपलक्ष्याह रुषा प्रस्फुरिताधरः ❋ २. निर्विद्येत ❋

**श्रीशुक उवाच**

प्रतिजग्राह तद् बाढं नारदः साधुसम्मतः । एतावान् साधुवादो हि तितिक्षेतेश्वरः स्वयम् ॥ ४४ ॥

**॥ इति श्रीमद्भागवते षष्ठस्कन्धे पञ्चमोऽध्यायः ॥**

---

**श्रीशुक उवाच**

ततः प्राचेतसोऽसिक्न्यामनुनीतः स्वयम्भुवा । स षष्टिं जनयामास[1] दुहितॄः पितृवत्सलाः ॥ १ ॥

ददौ स दश धर्माय काश्यपाय त्रयोदश । कालस्य नयने युक्ताः सप्तविंशतिमिन्दवे ।
भूताङ्गिरःकृशाश्वेभ्यो द्वेद्वे तार्क्ष्यस्य चापराः ॥ २ ॥

नामधेयान्यमूषां त्वं सापत्यानां च मे शृणु । यासां प्रसूतिप्रभवैर्लोका आपूरितास्त्रयः ॥ ३ ॥

भानुर्लम्बा ककुब् जामी विश्वा[2] साध्या मरुत्वती । वसुर्मुहूर्ता सङ्कल्पा धर्मपत्न्यः सुताञ्छृणु ॥ ४ ॥

भानोस्तु वेदऋषभ इन्द्रसेनस्ततो नृप । विद्योत आसील्लम्बायास्ततश्च स्तनयित्नवः ॥ ५ ॥

ककुभः सङ्कटश्चासीत् कीकटस्तनयो यतः । भुवो दुर्गाणि जामेयाः स्वर्गो नन्दिस्ततोऽभवत् ॥ ६ ॥

विश्वेदेवास्तु विश्वायामप्रजांस्तान् प्रचक्षते । साध्या गणास्तु[3] साध्यायामर्थसिद्धिस्तु तत्सुतः ॥ ७ ॥

मरुत्वांश्च जयन्तश्च मरुत्वत्यां बभूवतुः । जयन्तो वासुदेवांश उपेन्द्र इति यं विदुः ॥ ८ ॥

मौहूर्तिका देवगणा मुहूर्तायाश्च जज्ञिरे । यथाफलं प्रयच्छन्ति भूतानां स्वस्वकालजम् ॥ ९ ॥

सङ्कल्पायाश्च सङ्कल्पः कामः सङ्कल्पजः स्मृतः । वसवोऽष्टौ वसोः पुत्रास्तेषां नामानि मे शृणु ॥१०॥

द्रोणः प्राणो ध्रुवोऽर्कोऽग्निर्दोषो वस्तुर्विभावसुः । द्रोणस्याभिमतेः पत्न्या हर्षशोकभयादयः॥ ११ ॥

प्राणस्योर्जस्वती भार्या सह आयुः परोजवः । ध्रुवस्य भार्या धरणी त्वसूत[4] विविधाः पुरः ॥ १२ ॥

अर्कस्य चमसा[5] भार्या पुत्रास्तर्षादयः स्मृताः । अग्नेर्भार्या वसोर्धारा पुत्रा द्रविणकादयः ॥ १३ ॥

स्कन्दश्च कृत्तिकापुत्रो ये विशाखादयस्ततः । दोषस्य शर्वरीपुत्रः शिंशुमारो हरेः कला ॥ १४ ॥

वस्तोराङ्गिरसी पुत्रो विश्वकर्मा कृतीपतिः । ततो मनुश्चाक्षुषोऽभूद् विश्वेसाद्या मनोः सुताः ॥ १५ ॥

विभावसोरसूतोषा व्युष्टिं रोचिषमातपम् । पञ्चयामोऽथ भूतानि येन जाग्रति कर्मसु ॥ १६ ॥

---

१. षष्टिं सञ्जनयामास २. जामिर्विश्वा ३. साध्यो गणस्तु ४. धरणी असूत ❋
५. वासना

भूतस्य भार्या भूताया रुद्रा एकादश स्मृताः* । सुरूपाऽसूत भूतस्य भार्या रुद्रांश्च कोटिशः।। १७ ।।
रैवतोऽजो भवो भीमो वाम उग्रो वृषाकपिः । अजैकपादहिर्बुध्न्यो बहुरूपो[१] महानिति ।
रुद्रांश्च पार्षदांश्चान्यान्[२] घोरान् प्रेतविनायकान् ।। १८ ।।
प्रजापतेरङ्गिरसः स्वधा पत्नी पितॄनथ । अथर्वाङ्गिरसं वेदं पुत्रत्वे चाकरोत् सती ।। १९ ।।
कृशाश्वोऽर्चिषि भार्यायां धूमकेतुमजीजनत् । धिषणायां वेदशिरा देवलं वयुनं मनुम् ।। २० ।।
तार्क्ष्यस्य विनता कद्रूः पतङ्गी यामिनी इति । पतङ्ग्यसूत पतगान् यामिनी शलभानथ ।। २१ ।।
विनताऽसूत गरुडं साक्षाद् यज्ञेशवाहनम् । सूर्यसूतमनूरुं च कद्रूर्नागाननेकशः ।। २२ ।।
कृत्तिकादीनि नक्षत्राणीन्दोः पत्न्यस्तु भारत । दक्षशापात् सोऽनपत्यस्तासु यक्ष्मग्रहार्दितः ।
पुनः प्रसाद्य तं सोमः कला लेभे क्षयेधिताः ।। २३ ।।
शृणु नामानि लोकानां मातॄणां शङ्कराणि च । अथ काश्यपपत्नीनां यत्प्रसूतमिदं जगत् ।। २४ ।।
अदितिर्दितिर्दनुः काष्ठा अरिष्टा सुरसा इळा । मुनिः क्रोधवशा ताम्रा सुरभिः सरमा तिमिः ।। २५ ।।
तिमेर्यादोगणा आसन् श्वापदाः सरमासुताः । सुरभेर्महिषा गावो ये चान्ये द्विशफा नृप ।
ताम्रायाः श्येनगृध्राद्या मुनेरप्सरसां गणाः ।। २६ ।।
दन्दशूकादयः सर्पा राजन् क्रोधवशात्मजाः । इळाया भूरुहाः सर्वे यातुधानाश्च सौरसाः ।। २७ ।।
अरिष्टायां तु गन्धर्वाः काष्ठायां द्विशफेतराः । सुता दनोरेकषष्टिस्तेषां प्राधानिकान् शृणु ।। २८ ।।
द्विमूर्धा शम्बरोऽरिष्टो हयग्रीवो विभावसुः । अयोमुखः शङ्कुशिराः स्वर्भानुः कपिलोऽरुणः।। २९ ।।
पुलोमा वृषपर्वा च एकचक्रोऽनुतापनः । धूम्रकेशो विरूपाक्षो विप्रचित्तिश्च दुर्जयः ।। ३० ।।
स्वर्भानोः सुप्रभां कन्यामुवाह नमुचिः किल । वृषपर्वणस्तु शर्मिष्ठां ययातिर्नाहुषो बली ।। ३१ ।।
वैश्वानरसुता याश्च चतस्रश्चारुदर्शनाः । उपदानवी हयशिराः पुलोमा कालका तथा[३] ।। ३२ ।।
उपदानवीं हिरण्याक्षः क्रतुर्हयशिरां नृप । पुलोमां कालकां च द्वे वैश्वानरसुते नृप ।। ३३ ।।
उपयेमे च भगवान् काश्यपो ब्रह्मचोदितः । पौलोमाः कालकेयाश्च दानवा युद्धशालिनः ।। ३४ ।।
तयोः षष्टिसहस्राणि यज्ञघ्नांस्ते पितुः पिता । जघान स्वर्गतो राजन् एक इन्द्रप्रियङ्करः ।। ३५ ।।
विप्रचित्तिः सिंहिकायां शतं चैकमजीजनत् । राहुज्येष्ठं केतुशतं ग्रहत्वं य उपागताः ।। ३६ ।।

---

* इदं श्लोकार्धं प्राचीनकोशेषु नास्ति । १. अहिर्बुध्निर्विरूपाक्षः ❋ २. रुद्रपार्षदांश्चान्यान् ❋
३. कालिका । एवमुत्तरत्रापि ।

अथातः श्रूयतां वंशो ह्यदितेरनुपूर्वशः । यत्र नारायणो देवः स्वांशेनावतरद् विभुः ॥ ३७ ॥
विवस्वानर्यमा पूषा त्वष्टा च सविता भगः । धाता विधाता वरुणो मित्रः शक्र उरुक्रमः ॥ ३८ ॥
विवस्वतः श्राद्धदेवं सञ्ज्ञाऽसूयत वै मनुम् । मिथुनं च महाभाग यमं देवं यमीं तथा ॥ ३९ ॥
सैव भूत्वाऽथ बडवा[1] नासत्यौ सुषुवे भुवि । छाया शनैश्चरं लेभे सावर्णिं च मनुः ततः[2] ।
कन्यां च तपतीं या वै वव्रे संवरणं पतिम् ॥ ४० ॥
अर्यम्णो मातृका पत्नी तयोश्चर्षणयः सुताः । यत्र वै मानुषी जातिर्ब्रह्मणा चोपकल्पिता ॥ ४१ ॥
पूषाऽनपत्यः पिष्टादो भग्नदन्तोऽभवत् पुरा । योऽसौ दक्षाय कुपितं जहास विवृतद्विजः ॥ ४२ ॥
त्वष्टुर्दैत्यानुजा भार्या रचना नाम कन्यका । सन्निवेशस्तयोर्जज्ञे विश्वरूपश्च वीर्यवान् ॥ ४३ ॥
तं वव्रिरे सुरगणा स्वस्रीयं द्विषतामपि । विमतेन परित्यक्ता गुरुणाऽऽङ्गिरसेन यत् ॥ ४४ ॥

॥ इति श्रीमद्भागवते षष्ठस्कन्धे षष्ठोऽध्यायः ॥

---

### राजोवाच

यस्य हेतोः परित्यक्ता आचार्येणात्मनः सुराः । एतदाचक्ष्व भगवन् शिष्याणामक्रमं गुरोः[3]॥ १ ॥

### श्रीशुक उवाच

इन्द्रस्त्रिभुवनैश्वर्यमदोल्लङ्घितसत्पथः । मरुद्भिर्वसुभी रुद्रैरादित्यैर्ऋभुभिर्नृप ॥ २ ॥
विश्वेदेवैश्च साध्यैश्च नासत्याभ्यां परिश्रितः । सिद्धचारणगन्धर्वैर्मुनिभिर्ब्रह्मवादिभिः ॥ ३ ॥
विद्याधराप्सरोभिश्च किन्नरैः पतगोरगैः । निषेव्यमाणो भगवान् स्तूयमानश्च भारत ॥ ४ ॥
उपगीयमानो ललितमास्थानाध्यासनाश्रितः । पाण्डरेणातपत्रेण[4] चन्द्रमण्डलचारुणा ॥ ५ ॥
युक्तश्चान्यैः पारमेष्ठ्यैश्चामरव्यजनादिभिः । विराजमानः पौलोम्या सहार्धासनया भृशम् ॥ ६ ॥
स यदा परमाचार्यं देवानामात्मनश्च ह । नाभ्यनन्दत सम्प्राप्तं प्रत्युत्थानासनादिभिः ॥ ७ ॥
वाचस्पतिं मुनिवरं सुरासुरनमस्कृतम् । नोच्चचालासनादिन्द्रः पश्यन्नपि समागतम् ॥ ८ ॥
ततो निर्गत्य सहसा कविराङ्गिरसः प्रभुः । आययौ स्वगृहं तूष्णीं विद्वान् श्रीमदविक्रियाम् ॥ ९ ॥
तर्ह्येव प्रतिबुध्येन्द्रो गुरुहेळनमात्मनः । गर्हयामास सदसि स्वयमात्मानमात्मना ॥ १० ॥

---

१. वडवा  २. मनूत्तमम् ❋  ३. गुरौ  ४. पाण्डुरेणातपत्रेण

अहो बत मयाऽसाधु कृतं वै दभ्रबुद्धिना । यन्मयैश्वर्यमत्तेन गुरुः सदसि कात्कृतः ॥ ११ ॥
को गृध्येत् पण्डितो लक्ष्मीं त्रिविष्टपपतेरपि । ययाऽहमासुरं भावं नीतोऽद्य विबुधेश्वरः ॥ १२ ॥
ये पारमेष्ठ्यधिषणमधितिष्ठन् न कञ्चन । प्रत्युत्तिष्ठेदिति ब्रूयुर्धर्मं ते न परं विदुः ॥ १३ ॥
तेषां कुपथदेष्टॄणां पततां तमसि ह्यधः । ये श्रद्दध्युर्वचस्ते वै मज्जन्त्यश्मप्लवा इव ॥ १४ ॥
अथाहममराचार्यमगाधधिषणं द्विजम् । प्रसादयिष्ये निशठः[1] शीर्ष्णा तच्चरणं स्पृशन् ॥ १५ ॥
एवं चिन्तयतस्तस्य मघोनो भगवान् गृहात् । बृहस्पतिर्गतोऽदृष्टां गतिमध्यात्ममायया ॥ १६ ॥
गुरोर्नाधिगतः सञ्ज्ञां परीक्षन् भगवान् स्वराट् । ध्यायन् धिया शुचा युक्तः[2] शर्म नालभतात्मनः ॥
तच्छ्रुत्वैवासुराः सर्व आश्रित्यौशनसं मतम् । देवान् प्रत्युद्यमं चक्रुर्दुर्मदा आततायिनः ॥ १८ ॥
तैर्विसृष्टेषुभिस्तीक्ष्णैर्निर्भिण्णाङ्गोरुबाहवः । ब्रह्माणं शरणं जग्मुः सहेन्द्रा नतकन्धराः ॥ १९ ॥
तांस्तथाऽभ्यर्दितान् वीक्ष्य भगवानात्मभूरजः । कृपया परया देव उवाच परिसान्त्वयन् ॥ २० ॥

**ब्रह्मोवाच**

अहो बत सुरश्रेष्ठा ह्यभद्रं वः कृतं महत् । ब्रह्मिष्ठं ब्राह्मणं दान्तमैश्वर्यान्नाभ्यनन्दत ॥ २१ ॥
तस्यायमनयस्यासीत् परेभ्यो वः पराभवः । प्रक्षीणेभ्यः सपत्नेभ्यः समृद्धानां च यत् सुराः[3] ॥ २२ ॥
मघवन् द्विषतः पश्य प्रक्षीणान् गुर्वतिक्रमात् । सम्प्रत्युपचितान्[4] भूयः काव्यमाराध्य भक्तितः ॥
आददीरन् निलयनं ममापि भृगुदेवताः ॥ २४ ॥
त्रिविष्टपं किं गणयन्त्यभेद्यं मन्त्रा भृगूणामनुशिक्षितार्थाः ।
न विप्रगोविन्दगवीश्वराणां भवन्त्यभद्राणि नरेश्वराणाम् ॥ २५ ॥
तद् विश्वरूपं भजताशु विप्रं तपस्विनं त्वाष्ट्रमथात्मवन्तम् ।
सभाजितोऽर्थान् स विधास्यते वो यदि क्षमध्वं यदुतास्य कर्म[5] ॥ २६ ॥

**श्रीशुक उवाच**

त एवमुदिता राजन् ब्रह्मणा विगतज्वराः । ऋषिं त्वाष्ट्रमुपव्रज्य परिष्वज्येदमब्रुवन् ॥ २७ ॥

**देवा ऊचुः**

वयं तेऽतिथयः प्राप्ता आश्रमं भद्रमस्तु ते । कामः सम्पाद्यतां तात पितॄणां समयोचितः ॥ २८ ॥

---

१. विशठः २. धिया सुरैर्युक्तः ३. च वः सुराः * ४. उपागतान् *
५. यदि क्षमिष्यध्वमुतास्य कर्म

पुत्राणां हि परो धर्मः पितृशुश्रूषणं सताम् । अपि पुत्रवतां ब्रह्मन् किमुत ब्रह्मचारिणाम् ॥ २९ ॥
आचार्यो ब्रह्मणो मूर्तिः पिता मूर्तिः प्रजापतेः । भ्राता मरुत्पतेर्मूर्तिर्माता साक्षात् क्षितेस्तनुः ॥ ३०॥
दयाया भगिनी मूर्तिर्धर्मस्यात्माऽतिथिः स्वयम् । अग्नेरभ्यागतो मूर्तिः सर्वभूतानि चात्मनः ॥ ३१ ॥
तस्मात् पितॄणामार्तानामार्तिं परपराभवम्[१] । तपसाऽपनयन् तात सन्देशं कर्तुमर्हसि ॥ ३२ ॥
वृणीमहे त्वोपाध्यायं ब्रह्मिष्ठं ब्राह्मणं गुरुम् । यथाऽञ्जसा विजेष्यामः सपत्नांस्तव तेजसा ॥ ३३ ॥
न गर्हयन्ति ह्यर्थेषु यविष्ठाङ्घ्र्यभिवादनम् । छन्दोभ्योन्यत्र न ब्रह्मन् वयो ज्यैष्ठ्यस्य कारणम् ॥ ३४ ॥

**ऋषिरुवाच**

अभ्यर्थितः सुरगणैः पौरोहित्ये महातपाः । स विश्वरूपस्तानाह प्रसन्नः श्लक्ष्णया गिरा ॥ ३५ ॥

**विश्वरूप उवाच**

विगर्हितं धर्मशीलैर्ब्रह्मवर्चउपव्ययम् । कथं नु मद्विधो नाथा लोकेशैरभियाचितः ।
प्रत्याख्यास्यति तच्छिष्यः स एव स्वार्थ उच्यते ॥ ३६ ॥
अकिञ्चनानां हि धनं सिलोञ्छनं तेनैव निर्वर्तितसाधुसत्क्रियः ।
कथं विगर्ह्यं तु करोम्यधीश्वराः पौरोधसं हृष्यति येन दुर्मतिः ॥ ३७ ॥
तथाऽपि न प्रतिब्रूयां गुरुभिः प्रार्थितं कियत् । भवतां प्रार्थितं सर्वं प्राणैरर्थैश्च साधये ॥ ३८ ॥

**श्रीशुक उवाच**

तेभ्य एवं प्रतिश्रुत्य विश्वरूपो महातपाः । पौरोहित्यं ततश्चक्रे परमेण समाधिना ॥ ३९ ॥
सुरद्विषां श्रियं गुप्तामौशनस्याऽपि विद्यया । आच्छिद्यादान्महेन्द्राय वैष्णव्या विद्यया विभुः॥ ४० ॥
यया गुप्तः सहस्राक्षो जिग्येऽसुरचमूर्विभुः । तां प्राह स महेन्द्राय विश्वरूप उदारधीः ॥ ४१ ॥
यां प्रविश्यासुराञ्छश्वत् कक्ष्यां नारायणात्मिकाम् । अजैषीद् वृषभस्तात सिंहः क्षुद्रमृगानिव॥ ४२ ॥

**॥ इति श्रीमद्भागवते षष्ठस्कन्धे सप्तमोऽध्यायः ॥**

---

**राजोवाच**

यया गुप्तः सहस्राक्षः सवाहान् रिपुसैनिकान् । क्रीडन्निव विनिर्जित्य त्रिलोक्या बुभुजे श्रियम् ॥ १ ॥
भगवंस्तन्ममाख्याहि वर्म नारायणात्मकम् । यथाऽऽततायिनः शत्रून् येन गुप्तोऽजयन्मृधे ॥ २ ॥

१. परपराभवाम्

श्रीशुक उवाच

वृतः पुरोहितस्त्वाष्ट्रो महेन्द्रायानुपृच्छते । नारायणाख्यं वर्माह तदिहैकमनाः शृणु ॥ ३ ॥

विश्वरूप उवाच

धौताङ्घ्रिपाणिराचम्य सपवित्र उदङ्मुखः । कृतस्वाङ्गकरन्यासो मन्त्राभ्यां वाग्यतः शुचिः ॥ ४ ॥

नारायणमयं वर्म सन्नह्येद् भय आगते । दैवभूतात्मकर्मभ्यो नारायणमयः पुमान् ॥ ५ ॥

पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि । मुखे शिरस्यानुपूर्व्यादोङ्कारादीनि विन्यसेत् ॥ ६ ॥

ओं नमो नारायणायेति विपर्ययमथापि वा । करन्यासं ततः कुर्याद् द्वादशाक्षरविद्यया ॥ ७ ॥

प्रणवादियकारान्तमङ्गुल्यङ्गुष्ठपर्वसु । न्यसेद्धृदय ओङ्कारं विकारमनु मूर्धनि ॥ ८ ॥

षकारं तु भ्रुवोर्मध्ये णकारं शिखया दिशेत् । वेकारं नेत्रयोर्युञ्ज्यान्नकारं सर्वसन्धिषु ॥ ९ ॥

मकारमस्त्रमुद्दिश्य मन्त्रमूर्तिर्भवेद् बुधः । सविसर्गं फडन्तं तु सर्वदिक्षु विनिर्दिशेत् ॥ १० ॥

'ओं विष्णवे नमः'

इत्यात्मानं परं ध्यायेद् ध्येयं षट्शक्तिभिर्युतम् । विद्यातेजस्तपोमूर्तिरिमं मन्त्रमुदाहरेत् ॥ ११ ॥

ओं ॥ हरिर्विदध्यान्मम सर्वरक्षां न्यस्ताङ्घ्रिपद्मः पतगेन्द्रपृष्ठे ।
दरारिचर्मासिगदेषुचापपाशान् दधानोऽष्टगुणोऽष्टबाहुः ॥ १२ ॥

जलेषु मां रक्षतु मत्स्यमूर्तिर्यादोगणेभ्यो वरुणस्य पाशात् ।
स्थले च मायावटुवामनोऽव्यात् त्रिविक्रमः खेऽवतु विश्वरूपः ॥ १३ ॥

दुर्गेष्वटव्याजिमखादिषु[1] प्रभुः पायान्नृसिंहोऽसुरयूथपारिः ।
विमुञ्चतो यस्य महाट्टहासं दिशो विनेदुर्न्यपतंश्च गर्भाः ॥ १४ ॥

रक्षत्वसौ माऽध्वनि यज्ञकल्पः स्वदंष्ट्रयोन्नीतधरो वराहः ।
रामोऽद्रिकूटेष्वथ विप्रवासे सलक्ष्मणोऽव्याद् भरताग्रजो माम् ॥ १५ ॥

मामुग्रधन्वा अखिलप्रमादान्नारायणः पातु नरश्च हासात् ।
दत्तस्त्वयोगादथ योगनाथः पायाद् गुणेशः कपिलः कर्मबन्धात् ॥ १६ ॥

सनत्कुमारोऽवतु कामदेवाद्धयशीर्षो मां पथि देवहेळनात्[2] ।
देवर्षिवर्यः पुरुषान्तरार्चनात् कूर्मो हरिर्मां निरयादशेषात् ॥ १७ ॥

---

१. दुर्गेष्वटव्याजिमुखादिषु ❋ २. देवहेडनात् ❋

धन्वन्तरिर्भगवान् पात्वपथ्याद् द्वन्द्वाद् भयाद् ऋषभो निर्जितात्मा ।
यज्ञश्च लोकादथ तत्कृतान्नो बलो गणात् क्रोधवशादहीन्द्रः ॥ १८ ॥
द्वैपायनो भगवान् सम्पमोहात्[१] बुद्धस्तु पाषण्डिगणात्[२] प्रमादात् ।
कल्की कलेः कालमलात् प्रपातु धर्मावनायोरुकृतावतारः ॥ १९ ॥
मां केशवो गदया प्रातरव्याद् गोविन्द आसङ्गव आत्तवेणुः ।
नारायणः पातु सदाऽऽत्तशक्तिर्मध्यन्दिने विष्णुररीन्द्रपाणिः ॥ २० ॥
देवोऽपराह्णे मधुहोग्रधन्वा सायं त्रिधामाऽवतु माधवो माम् ।
दोषे हृषीकेश उतार्धरात्रे निशीथ एकोऽवतु पद्मनाभः ॥ २१ ॥
श्रीवत्सलक्ष्माऽपररात्र ईशः प्रत्यूष ईशोऽसिधरो जनार्दनः ।
दामोदरोऽव्यादनुसन्ध्यं प्रभाते विष्णुः श्रीमान् भगवान् कालमूर्तिः ॥ २२ ॥
चक्रं युगान्तानलतिग्मनेमि भ्रमत् समान्ताद् भगवत्प्रयुक्तम् ।
दन्दग्धि दन्दग्ध्यरिसैन्यमाशु कक्षं यथा वातसखो हुताशः ॥ २३ ॥
गदेऽशनिस्पर्शनविष्फुलिङ्गे निष्पिण्ढि निष्पिण्ढ्यजितप्रियाऽसि ।
कूष्माण्डवैनायकयक्षरक्षोभूतग्रहांश्चूर्णय चूर्णयारीन् ॥ २४ ॥
त्वं यातुधानप्रमथप्रेतमातृपिशाचविप्रग्रहघोरदृष्टीन् ।
दरेन्द्र विद्रावय कृष्णपूरितो भीमस्वनोऽरीन् हृदयानि कम्पयन् ॥ २५ ॥
त्वं तिग्मधारासिवरारिसैन्यमीशप्रयुक्तो मम छिन्धि छिन्धि ।
चक्षूंषि चर्मञ्छतचन्द्र छादय द्विषामघं नो हर पापचक्षुषाम् ॥ २६ ॥
यन्नो भयं ग्रहेभ्योऽभूत् केतुभ्यो नृभ्य एव च । सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्योऽघेभ्य एव च ॥ २७ ॥
सर्वाण्येतानि भगवन्नामरूपास्त्रकीर्तनात् । प्रयान्तु सङ्क्षयं सद्यो येऽन्ये श्रेयःप्रतीपकाः ॥ २८ ॥
गरुडो भगवान् स्तोत्रस्तोमच्छन्दोमयः[३] प्रभुः । रक्षत्वशेषकृच्छ्रेभ्यो विष्वक्सेनःस्वनामभिः॥ २९ ॥
सर्वापद्भ्यो हरेर्नामरूपयानायुधानि नः । बुद्धीन्द्रियमनःप्राणान् पान्तु पार्षदभूषणाः ॥ ३० ॥
यथा हि भगवानेव वस्तुतः सदसच्च यत् । सत्येनानेन नः सर्वे यान्तु नाशमुपद्रवाः ॥ ३१ ॥
यथैकात्म्यानुभावेन विकल्परहितः स्वयम् । भूषणायुधलिङ्गाख्या धत्ते शक्तीः स्वमायया ॥ ३२ ॥

---

१. भगवानप्रबोधात् २. पाखण्डगणात् ३. स्तोत्रस्तोभच्छन्दोमयः

तेनैव सत्यमानेन सर्वज्ञो भगवान् हरिः । पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः ॥ ३३ ॥

विदिक्षु दिक्षूर्ध्वमधः समन्तादन्तर्बहिर्भगवान् नारसिंहः ।
प्रहापयँल्लोकभयं स्वनेन स्वतेजसा ग्रस्तसमस्ततेजाः ॥ ३४ ॥

मघवन्निदमाख्यातं वर्म नारायणात्मकम् । विजेष्यस्यञ्जसा येन दंसितोऽसुरयूथपान् ॥ ३५ ॥

एतद् धारयमाणस्तु यं यं पश्यति चक्षुषा । पदा वा संस्पृशेत् सद्यः साध्वसात् स विमुच्यते ॥ ३६ ॥

न कुतश्चिद् भयं तस्य विद्यां धारयतो भवेत् । राजदस्युग्रहादिभ्यो व्याध्यादिभ्यश्च कर्हिचित्॥ ३७ ॥

इमां विद्यां पुरा कश्चित् कौशिको धारयन् द्विजः । योगधारणया स्वाङ्गं जहौ स मरुधन्वनि ॥ ३८ ॥

तस्योपरि विमानेन गन्धर्वपतिरेकदा । ययौ चित्ररथः स्त्रीभिर्वृतो यत्र द्विजक्षयः ॥ ३९ ॥

साङ्गनो न्यपतत् सद्यः सविमानो ह्यवाक्शिराः । विद्यामिमां धारयतो मृतस्यास्थिविलङ्घनात्* ॥

स बालखिल्यवचनादस्थीन्यादाय[1] विस्मितः । प्रास्य प्राचीसरस्वत्यां स्नात्वा धाम स्वमन्वगात् ॥

य इदं शृणुयात् काले यो धारयति चादृतः । तं नमस्यन्ति भूतानि मुच्यते सर्वतो भयात् ॥ ४२ ॥

एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुः । त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान् ॥ ४३ ॥

**॥ इति श्रीमद्भागवते षष्ठस्कन्धेऽष्टमोऽध्यायः ॥**

---

**श्रीशुक उवाच**

तस्यासन् विश्वरूपस्य शिरांसि त्रीणि भारत । सोमपीथं सुरापीथमन्नादमिति शुश्रुमः ॥ १ ॥

स वै बर्हिषि देवेभ्यो भागं प्रत्यक्षमुच्चकैः । अददाद् यस्य पितरो देवाः सप्रश्रयं नृप ॥ २ ॥

स एव हि ददौ भागं परोक्षमसुरान् प्रति । यजमानोऽवहद् भागं मातृस्नेहवशानुगः ॥ ३ ॥

तद् देवहेळनं तस्य धर्मालीकं सुरेश्वरः । आलक्ष्य तरसा भीतस्तच्छीर्षाण्यच्छिनद् रुषा ॥ ४ ॥

सोमपीथमयं तस्य[2] शिर आसीत् कपिञ्जलः । कळविङ्कः सुरापीथमन्नादं यत् स तित्तिरिः ॥ ५ ॥

ब्रह्महत्यामञ्जलिना जग्राह यदपीश्वरः । संवत्सरान्ते तदघं भूताशंसाविशुद्धये ।
भूम्यम्बुद्रुमयोषिद्भ्यश्चतुर्धा व्यभजद्धरिः ॥ ६ ॥

भूमिस्तुरीयं जग्राह खातपूरवरेण वै । ईरणं ब्रह्महत्याया रूपं भूमौ प्रदृश्यते ॥ ७ ॥

---

* उत्तरार्धमिदं प्राचीनकोशेषु नास्ति । १. वालखिल्य.... ❋ २. सोमपीथं तु यत्तस्य

तुरीयं छेदरोहेण वरेण जगृहुर्द्रुमाः । तेषां निर्यासरूपेण ब्रह्महत्या प्रदृश्यते ॥ ८ ॥
शश्वत्कामवरेणाङ्ग तुरीयं[१] जगृहुः स्त्रियः । रजोरूपेण तास्वंहो मासिमासि प्रदृश्यते ॥ ९ ॥
द्रव्यभूयोवरेणापस्तुरीयं जगृहुर्मलम् । तासु बुद्बुदफेनाभ्यां दृष्टं तद्धरिकिल्बिषम् ॥ १० ॥
हतपुत्रस्ततस्त्वष्टा जुहावेन्द्राय शत्रवे । इन्द्रशत्रो विवर्धस्व माचिरं जहि विद्विषम् ॥ ११ ॥
अथान्वाहार्यपचनादुत्थितो घोरदर्शनः । कृतान्त इव लोकानां युगान्तसमये यथा ॥ १२ ॥
विष्वग्विवर्धमानं तमिषुमात्रं दिने दिने । दग्धशैलप्रतीकाशं सन्ध्याभ्रानीकवाससम् ।
तप्तताम्रशिखाश्मश्रुं मध्याह्नार्कोग्रलोचनम् ॥ १३ ॥
देदीप्यमाने त्रिशिखे शूल आरोप्य रोदसी । नृत्यन्तमुन्नदन्तं च चालयन्तं पदा महीम् ॥ १४ ॥
दरीगम्भीरवक्त्रेण पिबन्तं च नभस्तळम् । लिहन्तं जिह्वयर्क्षाणि ग्रसन्तं भुवनत्रयम् ॥ १५ ॥
महता रौद्रदंष्ट्रेण जृम्भयन्तं मुहुर्मुहुः । वित्रस्ता दुद्रुवुर्लोका वीक्ष्य सर्वे दिशो दश ॥ १६ ॥
येनावृता इमे लोकास्तमसा त्वाष्ट्रमूर्तिना । स वै वृत्र इति प्रोक्तः पापः परमदारुणः ॥ १७ ॥
तं निजघ्नुरभिद्रुत्य सगणा विबुधर्षभाः । स्वैःस्वैर्दिव्यास्त्रशस्त्रौघैः सोऽग्रसत् तानि कृत्स्नशः ॥ १८ ॥
ततस्ते विस्मिताः सर्वे विषण्णा भ्रष्टतेजसः । प्रत्यञ्चमादिपुरुषमुपतस्थुः समाहिताः ॥ १९ ॥

**देवा ऊचुः**

वाय्वम्बराग्न्यप्क्षितयस्त्रिलोका ब्रह्मादयो ये वयमुद्विजन्तः ।
हराम यस्मै बलिमन्तकोऽसौ बिभेति यस्मादरणं ततो नः ॥ २० ॥
अविस्मितं तं परिपूर्णकामं स्वेनैव लाभेन समं प्रशान्तम् ।
विनोपसर्पत्यपरं हि बालिशः श्वलाङ्गुलेनातितिपिपर्ति सिन्धुम् ॥ २१ ॥
यस्योरुशृङ्गे जगतीं स्वनावं मनुर्यथाऽऽबध्य ततार दुर्गम् ।
स एव नस्त्वाष्ट्रभयाद् दुरन्तात् त्राता श्रितान् वारिचरोऽपि नूनम् ॥ २२ ॥
पुरा स्वयम्भूरपि संयमाम्भस्युदीर्णवातोर्मिरवैः कराळे[२] ।
एकोऽरविन्दात् पतितस्ततार तस्माद् भयाद् येन स नोऽस्तु पारः ॥ २३ ॥
य एक ईशो निजमायया नः ससर्ज येनानुसृजाम विश्वम् ।
वयं च यस्यापि पुरः समेताः पश्याम लिङ्गं पृथगीशमानिनः ॥ २४ ॥

---

१. शश्वत्कामवरेणांहस्तुरीयम्    २. कराळैः ❋

यो नः सपत्नैर्भृशमर्द्यमानान् देवर्षितिर्यङ्नृषु नित्य एव ।
कृतावतारस्तनुभिः स्वमायया कृत्वाऽऽत्मसात् पाति युगेयुगे च ॥ २५ ॥
तमेव देवा वयमात्मदैवतं परं प्रधानं पुरुषं विश्वमाद्यम् ।
व्रजाम सर्वे शरणं शरण्यं स्वानां स नो धास्यति शं महात्मा ॥ २६ ॥

**श्रीशुक उवाच**

इति तेषां महाराज सुराणामुपतिष्ठताम् । प्रतीच्यां दिश्यभूदाविः शङ्खचक्रगदाधरः ॥ २७ ॥
आत्मतुल्यैः षोडशभिर्विना श्रीवत्सकौस्तुभौ । पर्युपासितमुन्निद्रशारदाम्बुरुहेक्षणम् ॥ २८ ॥
दृष्ट्वा तममराः सर्वे ईक्षणाह्लादविक्लबाः । दण्डवत् पतिता भूमौ शनैरुत्थाय तुष्टुवुः ॥ २९ ॥

**देवा ऊचुः**

नमस्ते यज्ञवीर्याय वयसे उत ते नमः । नमस्ते अस्तु चक्राय नमोऽस्तु पुरुहूतये ॥ ३० ॥
यत् ते गतीनां तिसृणामीशितुः परमं पदम् । नार्वाचीनो विसर्गस्य धातुर्वेदितुमर्हति ॥ ३१ ॥

नमस्तेऽस्तु भगवन् नारायण वासुदेवादिपुरुष महानुभाव परममङ्गल परमकल्याण परमकारुणिक परमहंसपरिव्राजकैः परमेणात्मयोगसमाधिना परिभावितपरिस्फुटितपारमहंस्यधर्मेणोद्घाटिततमः-कपाटद्वारेणापावृते आत्मलोके स्वयमुपलब्धो निजसुखानुभवो भवान् दुरवबोध इव तव विहारयोगो यदशरणोऽशरीर इदमनपेक्षितास्मत्समवाय आत्मनैवाविक्रियमाणेन सगुणमगुणः स्वयं सृजसि पासि हंसि ॥ ३२ ॥

अथ तत्र भगवान् किं देवदत्तवदिह गुणविसर्गापतितः पारतन्त्र्येण स्वकृतकुशलाकुशलफलमुपाददाति आहोस्विदात्माराम उपशमशीलः समञ्जसदर्शन उदास्त इति ह वाव न विदामः ॥

नहि विरोध उभयं भगवत्यपरिगणितगुणगण ईश्वर अनवगाह्यमाहात्म्ये अर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलान्तःकरणदुरवग्रहवादिनां च विवादानवसरे उपरतसमस्तमायामये केवलस्वात्ममायामन्तर्धाय को नु दुर्घट इव भवति । ॥

स्वरूपद्वयाभावात् समविषममतीनां मतमनुसरसि यथा रज्जुखण्डः सर्पादिधियाम् ।

स एव हि पुनः सर्ववस्तुषु वस्तुस्वरूपः सर्वेश्वरः सकलजगत्कारणकारणभूतः[१] सर्वप्रत्यगात्मत्वात् सर्वगुणाभासोपलक्षित एक एव पर्यवशेषितः[२] ॥

---

१. सकलजगत्कारणभूतः ❋　　२. पर्यवसितः ❋

अथ ह वाव तव महिमामहामृतरससमुद्रविप्रुषाऽसकृल्लीढया स्वमनसि निष्यन्दमाननिरवरतसुखेन विस्मारितदृष्टश्रुतविषयसुखलेशाभासाः परमभागवता एकान्तिनो भगवति सर्वभूतप्रियसुहृदि सर्वात्मनि निरन्तरनिर्वृतमनसः कथमु ह वा एते मधुमथन पुनः स्वार्थकुशला ह्यात्मप्रियसुहृदः साधवस्त्वच्चरणाम्बुजानुसेवां विसृजन्ति न यत्र पुनरयं संसारपरिवर्तः ॥

त्रिभुवनात्मभवन त्रिविक्रम त्रिनयन त्रिलोकमनोहरानुभाव तवैव विभूतयोऽभूवन् दिविजमनुजादयश्चापि[१] तेषामनुपक्रमसमयोऽयमिति स्वात्ममायया सुरनरमृगमिश्रितजलचराकृतिभिः यथाऽपराधं दण्डं दधर्थावतीर्य[२] ॥ ३३ ॥

एवमेनमपि भगवन् जहि त्वाष्ट्रं यदि मन्यसे। अस्माकं तावकानां तव चरणनळिनयुगळध्यानानुबद्धहृदयनिगळानां [३]स्वलिङ्गविधारणेनात्मसात्कृतानामनुकम्पानुरञ्जितविशदरुचिरशिशिरस्मितावलोकनेन विगळितमधुरमुखरितवचसाऽमृतकलया चान्तस्तापमनघार्हसि शमयितुम् ॥

अथ भगवंस्तवास्माभिरखिलजगदुत्पत्तिस्थितिलयनिमित्तायमानदिव्यमायाविनोदस्य सकलजीवनिकायानामन्तर्हृदयेषु बहिरपि च ब्रह्मप्रत्यगात्मस्वरूपेण[४] यथादेशकालदेहावस्थानविशेषं तदुपादानोपलम्भकतयाऽनुभवतः सर्वप्रत्ययसाक्षिण आकाशशरीरस्य साक्षात् परब्रह्मणः परमात्मनः कियानिहार्थविशेषो विज्ञापनीयः स्याद् विष्फुलिङ्गादिभिरिव हिरण्यरेतसः। अत एव स्वयं तदुपकल्पयास्माकं भगवतः परमगुरोस्तव चरणशतपलाशच्छायां विविधव्रजिनसंसारपरिश्रमोपशमनीमुपसन्नानां वयं यत्कामेनोपसादिताः ॥

अथो ईश जहि त्वाष्ट्रं ग्रसन्तं भुवनत्रयम्। ग्रस्तानि येन नः कृष्ण तेजांस्यस्त्रायुधानि च ॥ ३४ ॥

हंसाय दभ्रनिलयाय निरीक्षकाय कृष्णाय मृष्टयशसे निरुपक्रमाय।
सत्सङ्ग्रहाय भवपान्थनिजाश्रयाय शश्वद्वरिष्ठगतये हरये नमस्ते ॥ ३५ ॥

**श्रीशुक उवाच**

अथैवमीडितो राजन् सादरं त्रिदशैर्हरिः। स्वमुपस्थानमाकर्ण्य प्राह तानभिनन्दितः ॥ ३६ ॥

---

१. दितिजदनुजादयश्चापि ❋ २. दण्डं दधर्थ। ❋ ३. स्वलिङ्गविधरणेना.... ❋
४. ब्रह्मप्रत्यगात्मस्वरूपेण प्रधानरूपेण च

**श्रीभगवानुवाच**

प्रीतोऽहं वः सुरश्रेष्ठा मदुपस्थानविद्यया । आत्मैश्वर्यस्मृतिः पुंसां भक्तिश्चैव यया मयि ॥ ३७ ॥
किं दुरापं मयि प्राप्ते तथापि विबुधर्षभाः । मय्येकान्तमतिर्नान्यन्मत्तो वाञ्छति तत्ववित् ॥ ३८ ॥
न वेद कृपणः श्रेय आत्मनो गुणवस्तुदृक् । तस्य तानिच्छतो यच्छे यदि सोऽपि तथाविधः॥ ३९ ॥
स्वयं निश्रेयसं विद्वान् न वक्त्यज्ञाय कर्मभिः । न राति रोगिणोऽपथ्यं वाञ्छतोऽपि भिषग् यथा ॥
मघवन् यात भद्रं वो दध्यञ्चमृषिसत्तमम् । विद्याव्रततपःसारं गात्रं याचत माचिरम् ॥ ४१ ॥
स वै ह्यधिगतो दध्यङ् अश्विभ्यां ब्रह्म निष्कृतम् । तद् वा अश्वशिरं नाम[1] तयोरमरतां व्यधात् ॥
कृत्स्नं चाथर्वणं त्वाष्ट्रं वर्मभेद्यं मदात्मकम् । विश्वरूपाय यत् प्रादात् त्वाष्ट्राय त्वमधास्ततः॥ ४३ ॥
युष्मभ्यं याचितो दध्यङ्[2] धर्मज्ञोऽङ्गानि दास्यति । ततस्तैरायुधश्रेष्ठो विश्वकर्मविनिर्मितः ।
येन वृत्रशिरोहर्ता मत्तेजउपबृंहितः ॥ ४४ ॥
तस्मिन् विनिहते यूयं तेजोऽस्त्रायुधसम्पदः । भूयः प्राप्स्यथ भद्रं वो न हिंसन्ति च मत्परान् ॥ ४५ ॥

**॥ इति श्रीमद्भागवते षष्ठस्कन्धे नवमोऽध्यायः ॥**

---

**श्रीशुक उवाच**

इन्द्रमेवं समादिश्य भगवान् विश्वभावनः । पश्यतामनिमेषाणां तत्रैवान्तर्दधे हरिः ॥ १ ॥
तथाऽभियाचितो देवैर्ऋषिराथर्वणो महान् । मोदमान उवाचेदं प्रहसन्निव भारत ॥ २ ॥
अपि वृन्दारका यूयं न जानीथ शरीरिणाम् । संस्थायां यस्त्वभिद्रोहो दुस्सहश्चेतनापहः ॥ ३ ॥
जिजीविषूणां जीवानामात्मा प्रेष्ठ इहेप्सितः । क उत्सहेत तं दातुं भिक्षमाणाय विष्णवे ॥ ४ ॥

**देवा ऊचुः**

किन्नु तद् दुस्त्यजं ब्रह्मन् पुंसां भूतानुकम्पिनाम् । भवद्विधानां महतां पुण्यश्लोकेड्यकर्मणाम् ॥ ५ ॥
नूनं स्वार्थपरो लोको न वेद परसङ्कटम् । यदि वेद न याचेत नेति नाह यदीश्वरः ॥ ६ ॥

**ऋषिरुवाच**

धर्मं वः श्रोतुकामेन यूयं वै प्रत्युदाहृताः । एष वः प्रियमात्मानं त्यजन्तं सन्त्यजाम्यहम् ॥ ७ ॥
योऽध्रुवेणात्मना नाथा न धर्मं न यशः पुमान् । ईहेत भूतदयया स शोच्यः स्थावरैरपि ॥ ८ ॥

---

१. अश्वशिरो नाम ※ २. याचितोऽश्विभ्याम् ※

एतावानव्ययो धर्मः पुण्यश्लोकैरुपासितः । यद् भूतशोकहर्षाभ्यामनुशोचति[1] हृष्यति ॥ ९ ॥
अहो दैन्यमहो कष्टं पारक्यैः क्षणभङ्गुरैः । यन्नोपकुर्यादस्वार्थैर्मर्त्यः स्वज्ञातिविग्रहैः ॥ १० ॥

**श्रीशुक उवाच**

एवं कृतव्यवसितो दध्यङाथर्वणस्तनुम् । परे भगवति ब्रह्मण्यात्मानं सन्नयन् जहौ ॥ ११ ॥
यत्ताक्षासुमनोबुद्धिस्तत्त्वदृग् ध्वस्तबन्धनः । आस्थितः परमं योगं न देहं बुबुधे गतम् ॥ १२ ॥
अथेन्द्रो वज्रमुद्यम्य निर्मितं विश्वकर्मणा । मुनेरस्थिभिरुत्सिक्तो भगवत्तेजसाऽन्वितः ॥ १३ ॥
वृतो देवगणैः सर्वैर्गजेन्द्रोपर्यशोभत । स्तूयमानो मुनिगणैस्त्रैलोक्यं हर्षयन्निव ॥ १४ ॥
वृत्रमभ्यद्रवच्छत्रुमसुरानीकयूथपैः । पर्यस्तमोजसा राजन् क्रुद्धो रुद्र इवान्तकम् ॥ १५ ॥
ततः सुराणामसुरै रणः परमदारुणः । त्रेतामुखे नर्मदायामन्तरे प्रथमे युगे ॥ १६ ॥
रुद्रैर्वसुभिरादित्यैरश्विभ्यां पितृवह्निभिः । मरुद्भिर्ऋभुभिः साध्यैर्विश्वेदेवैर्मरुत्पतिम् ॥ १७ ॥
दृष्ट्वा वज्रधरं शक्रं रोचमानं स्वया श्रिया । नामृष्यन्नसुरा राजन् मृधे वृत्रपुरस्सराः ॥ १८ ॥
नमुचिः शम्बरोऽनर्वा द्विमूर्धा वृषभोऽम्बरः । हयग्रीवः शङ्कुशिरा विप्रचित्तिरयोमुखः ॥ १९ ॥
पुलोमा वृषपर्वा च प्रहेतिर्हेतिरुत्कचः । व्योमकेशो विरूपाक्षः कपिलोऽथ विभावसुः ॥ २० ॥
इल्वलो बल्वलश्चैव दन्दशूको वृषध्वजः । कालनाभो महानाभो भूतसन्तापनो वृकः* ॥ २१ ॥
दैतेया दानवा यक्षा रक्षांसि च सहस्रशः । सुमालिमालिप्रमुखाः कार्तस्वरपरिच्छदाः ॥ २२ ॥
प्रतिषिध्येन्द्रसेनाग्रं मृत्योरपि दुरासदम् । अभ्यद्रवन्नसम्भ्रान्ताः[2] सिंहनादेन दुर्मदाः ॥ २३ ॥
गदाभिः परिघैर्बाणैः प्रासमुद्गरतोमरैः । शूलैः परश्वधैः खड्गैः शतघ्नीभिर्भुशुण्डिभिः[3] ।
सर्वतोऽवाकिरन्नस्त्रैः शस्त्रैश्च विबुधर्षभान् ॥ २४ ॥
न तेऽदृश्यन्त सञ्छन्नाः शरजालैः समन्ततः । पुङ्खानुपुङ्खपतितैः प्रावृषीव नभो घनैः ॥ २५ ॥
न ते शस्त्रास्त्रबाणौघा ह्यासेदुः सुरसैनिकान् । छिन्नाः सिद्धपथे देवैर्लघुहस्तैः सहस्रधा ॥ २६ ॥
अथ क्षीणास्त्रशस्त्रौघा गिरिशृङ्गद्रुमोपलैः । अभ्यवर्षन् सुरबलं चिच्छिदुस्तांश्च पूर्ववत् ॥ २७ ॥
तानक्षतान् स्वस्तिमतो निशाम्य शस्त्रास्त्रपूगैरथ वृत्रनाथाः ।
द्रुमैर्दृषद्भिर्विविधाद्रिशृङ्गैरथाक्षिपंस्तत्र सुरेन्द्रसैनिकान् ॥ २८ ॥

---

१. यो भूतशोकहर्षाभ्यामात्मा शोचति ❋
२. अभ्यद्रवन्नसम्भीताः
* अयं श्लोकः प्राचीनकोशेषु नास्ति ।
३. शतघ्नीभिर्मृसृण्ठिभिः ❋

सर्वे प्रयासा अभवन् विमोघाः कृताः कृता देवगणेषु दैत्यैः ।
कृष्णानुकूलेषु यथा महत्सु क्षुद्रैः प्रयुक्ता रुशती रूक्षवाचः ॥ २९ ॥
ते स्वप्रयासं वितथं निरीक्ष्य हरावभक्ता हतयुद्धवीर्याः[1] ।
पलायनायाजिमुखे विसृज्य पतिं मनस्ते दधुरस्तसाराः ॥ ३० ॥
वृत्रोऽसुरांस्ताननुगान् मनस्वी प्रधावतः प्रेक्ष्य बभाष एतत् ।
पलायितं प्रेक्ष्य बलं च भग्नं भयेन तीव्रेण विहस्य वीरः ॥ ३१ ॥
कालोपपन्नां रुचिरां मनस्विनामुवाच वाचं पुरुषप्रवीरः ।
हे विप्रचित्ते नमुचे पुलोमन् मयानर्वन् शम्बर मे शृणुध्वम् ॥ ३२ ॥
जातस्य मृत्युर्ध्रुव एष सर्वतः प्रतिक्रिया यस्य न चेह क्लृप्ता ।
लोको यशश्चाथ ततो यदि स्यात् को नाम मृत्युं न वृणीत युक्तम् ॥ ३३ ॥
द्वौ सम्मताविह मृत्यू दुरापौ यद् ब्रह्मसन्धारणया जितासुः ।
कळेबरं योगरतो विजह्याद् यदग्रणीर्वीरशयेऽनिवृत्तः ॥ ३४ ॥

**इति श्रीमद्भागवते षष्ठस्कन्धे दशमोऽध्यायः ॥**

---

**श्रीशुक उवाच**

त एवं शंसतो धर्म्यं वचः पत्युरचेतसः । नैवागृह्णन् भयत्रस्ताः पलायनपरा नृप ॥ १ ॥
विशीर्यमाणां पृतनामासुरीमसुरर्षभः । कालानुकूलैस्त्रिदशैः काल्यमानामनाथवत् ॥ २ ॥
दृष्ट्वाऽतप्यत सङ्क्रुद्ध इन्द्रशत्रुरमर्षितः । तान् निवार्यौजसा राजन् निर्भर्त्स्येदमुवाच ह[2] ॥ ३ ॥

**वृत्र उवाच**

किं व उच्चरिता मातुर्धावद्भिः पृष्ठतो हतैः । न हि भीतवधः श्लाघ्यो न स्वर्ग्यः शूरमानिनाम् ॥ ४ ॥
यदि वः प्रधने श्रद्धा सारं वा क्षुल्लका हृदि । अग्रे तिष्ठत मात्रं मे न चेद् ग्राम्यसुखे स्पृहा ॥ ५ ॥
एवं सुरगणान् क्रुद्धो भीषयन् वपुषा रिपून् । व्यनदत् सुमहाप्राणो येन लोका विचेतसः ॥ ६ ॥
तेन देवगणाः सर्वे वृत्रविष्फोटनेन वै । निपेतुर्मूर्च्छिता भूमौ यथैवाशनिना हताः ॥ ७ ॥

---

१. हतयुद्धदर्पाः २. निर्भत्स्येदमुवाच ह *

ममर्द पद्भ्यां सुरसैन्यमातुरं निमीलिताक्षं रणरङ्गदुर्मदः ।
गां कम्पयन्नुद्यतशूल ओजसा नाळं वनं यूथपतिर्यथोन्मदः ॥ ८ ॥
विलोक्य तं वज्रधरोऽत्यमर्षितः स्वशत्रवेऽभिद्रवते महागदाः
चिक्षेप तामापततीं सुदुस्सहां जग्राह वामेन करेण लीलया ॥ ९ ॥
स इन्द्रशत्रुः कुपितो भृशं तया महेन्द्रवाहं गदयोरुविक्रमः ।
जघान कुम्भस्थल उन्नदन् मृधे तत्कर्म सर्वे समपूजयन् नृप ॥ १० ॥
ऐरावतो वृत्रगदाभिमृष्टो विघूर्णितोऽद्रिः कुलिशाहतो यथा ।
अपासरद् भिन्नमुखः सहेन्द्रो मुञ्चन्नसृक् सप्तधनुर्भृशार्तः ॥ ११ ॥
न सन्नवाहाय विषण्णचेतसे प्रायुङ्क्त भूयः स गदां महात्मा ।
इन्द्रोऽमृतस्यन्दिकराभिमर्शवीतव्यथक्षतवाहोऽभितस्थे ॥ १२ ॥
स तं नृपेन्द्राहवकाम्यया रिपुं वज्रायुधं भ्रातृहणं विलोक्य ।
स्मरंश्च तत्कर्म नृशंसमंहः शोकेन मोहेन हसन् जगाद ॥ १३ ॥

**वृत्र उवाच**

दिष्ट्या भवान् मे समवस्थितो रिपुर्यो ब्रह्महा गुरुहा भ्रातृहा च ।
दिष्ट्याऽनृणोऽद्याहमसत्तम त्वया मच्छूलनिर्भिण्णदृषद्धृदाऽचिरात् ॥ १४ ॥
यो नोऽग्रजस्यात्मविदो द्विजातेर्गुरोरपापस्य च दीक्षितस्य ।
विस्रभ्य[1] खड्गेन शिरांस्यवृश्चः[2] पशोरिवाकरुणः स्वर्गकामः ॥ १५ ॥
ह्रीश्रीदयाकीर्तिभिरुज्झितं त्वां स्वकर्मणा पुरुषादैश्च गर्ह्यम् ।
कृच्छ्रेण मच्छूलविभिन्नदेहमस्पृष्टवह्निं समदन्तु गृध्राः ॥ १६ ॥
अन्ये तु ये त्वाऽनु नृशंसमज्ञा यद्युद्यतास्त्राः प्रहरन्ति मह्यम् ।
तैर्भूतनाथं सगणं निशातत्रिशूलनिर्भिण्णगळैर्यजामि ॥ १७ ॥
अथो[3] हरे मे कुलिशेन वीर हर्ता प्रमथ्येह शिरो यदीह ।
तत्रानृणो भूतबलिं विधाय मनस्विनां पादरजः प्रपत्स्ये ॥ १८ ॥

---

१. विस्रम्भ्य ❋ २. अवृश्चत् ❋ ३. अहो ❋

सुरेन्द्र कस्मान्न हिनोषि वज्रं पुरःस्थिते वैरिणि मय्यमोघम् ।
मा संशयिष्ठा भगदेव वज्रं स्यान्निष्फलं कृपणार्थेव याञ्चा ॥ १९ ॥

नन्वेष वज्रस्तव शक्र तेजसा हरेर्दधीचेस्तपसा[१] च तेजितः ।
तेनैव शत्रुं जहि विष्णुयन्त्रितो यतो हरिर्विजयः श्रीर्गुणास्ततः ॥ २० ॥

अहं समाधाय मनो यथाऽऽह तत् सङ्कर्षणस्तच्चरणारविन्दे ।
त्वद्वज्ररंहोलुळितग्राम्यपाशो गतिं मुनेर्याम्यपविद्धलोकः ॥ २१ ॥

पुंसां किलैकान्तधियां स्वकानां याः सम्पदो दिवि भूमौ रसायाम् ।
न राति यस्माद् भयमुद्वेग आधिर्मदः कलिर्व्यसनं सम्प्रयासः ॥ २२ ॥

त्रैवर्गिकायासविघातमस्मत्पतिर्विधत्ते पुरुषस्य शक्र ।
तेनानुमेयो भगवत्प्रसादो यो दुर्लभोऽकिञ्चनगोचरोऽन्यैः ॥ २३ ॥

अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूयः ।
मनः स्मरेतात्मपतेर्गुणान् नो गृणीत वाक् कर्म करोतु कायः ॥ २४ ॥

न नाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमं न रसाधिपत्यम् ।
न यौगसिद्धीरपुनर्भवं वा समञ्जसं त्वा[२] विरहय्य काङ्क्षे ॥ २५ ॥

अजातपक्षा इव मातरं खगाः स्तन्यं यथा वत्सतराः क्षुधार्दिताः[३] ।
प्रियं प्रियेवाध्युषितं प्रियं त्वां[४] मनोऽरविन्दाक्ष दिदृक्षते मे[५] ॥ २६ ॥

ममोत्तमश्लोकजनेषु सख्यं संसारचक्रे भ्रमतः स्वकर्मभिः ।
त्वन्माययाऽऽत्मात्मजदारगेहेष्वासक्तचित्तेषु न नाथ भूयात् ॥ २७ ॥

**इति श्रीमद्भागवते षष्ठस्कन्धे एकादशोऽध्यायः ॥**

---

**ऋषिरुवाच**

एवं जिहासुर्नृप देहमाजौ मृत्युं परं विजयं मन्यमानः[६] ।
शूलं प्रगृह्याभ्यपतत् सुरेन्द्रं यथा महापुरुषं कैटभोऽप्सु ॥ १ ॥

---

१. दधीचस्तपसा ❋ २. त्वाम् ३. क्षुधार्ताः ४. अध्युषितं विषण्णम्
५. दिदृक्षते त्वाम् ६. वरं विजयान्मन्यमानः ❋

ततो युगान्ताग्निकठोरजिह्वमाविध्य शूलं तरसाऽसुरेन्द्रः ।
क्षिप्त्वा महेन्द्राय विनद्य धीरो हतोऽसि पापेति रुषा जगाद ॥ २ ॥
ख आपतन्तं ज्वलितं महोल्कवन्निरीक्ष्य दुष्प्रेक्ष्यमजातविक्लवः[१] ।
वज्रेण वज्री शतपर्वणाऽच्छिनद् भुजं च तस्योरगभोगभोगम्[२] ॥ ३ ॥
छिन्नैकबाहुः परिघेण वृत्रः संरब्ध आसाद्य गृहीतवज्रम् ।
हनौ तताडेन्द्रमथामरेशं वज्रं च हस्तान्न्यपतन्मघोनः ॥ ४ ॥
वृत्रस्य कर्मातिमहाद्भुतं तत् सुरासुराश्चारणसिद्धसङ्घाः ।
अपूजयंस्तत् पुरुहूतसङ्कटं निरीक्ष्य हाहेति विचुक्रुशुर्भृशम् ॥ ५ ॥
इन्द्रो न वज्रं जगृहे विलज्जितश्च्युतं च हस्तादरिसन्निधौ[३] पुनः ।
तमाह वृत्रो हर आत्तवज्रो जहि स्वशत्रुं न विषादकालः ॥ ६ ॥
युयुत्सतां कुत्रचिदाततायिनां जयः सदैकत्र न वै पराजयः ।
विनैकमुत्पत्तिलयस्थितीश्वरं सर्वज्ञमाद्यं पुरुषं सनातनम् ॥ ७ ॥
लोकाः सपाला यस्येमे श्वसन्ति विवशा वशे । द्विजा इव सिचा बद्धाः स काल इह कारणम् ॥ ८ ॥
ओजः सहो बलं प्राणममृतं मृत्युमेव च । तमज्ञाय जनो हेतुमात्मानं मन्यते जडः ॥ ९ ॥
यथा दारुमयी नारी यथा यन्त्रमयो मृगः । एवं भूतानि मघवन् ईशतन्त्राणि विद्धि भोः ॥ १० ॥
पुरुषः प्रकृतिर्व्यक्तमात्मभूतेन्द्रियाशयाः । शक्नुवन्त्यस्य सर्गादौ न विना यदनुग्रहम् ॥ ११ ॥
अविद्वानेवमात्मानं मन्यतेऽनीशमीश्वरम् । भूतैः सृजति भूतानि ग्रसते तानि वै स्वयम् ॥ १२ ॥
आयुः श्रीः कीर्तिरैश्वर्यमाशिषः पुरुषस्य याः । भवन्त्येव हि ते काले यथाऽनिच्छोर्विपर्ययाः ॥
तस्मादकीर्तियशसोर्जयापजययोरपि । समः स्यात् सुखदुःखाभ्यां मृत्युजीवितयोस्तथा ॥ १४ ॥
सत्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः । तत्र साक्षिणमात्मानं यो वेद न स बध्यते ॥ १५ ॥
पश्य मां निर्जितं शक्र वृक्णायुधभुजं मृधे । घटमानं यथाशक्ति तव प्राणजिहीर्षया ॥ १६ ॥
प्राणग्लहोऽयं समर इष्वक्षो वाहनासनः । अत्र न ज्ञायतेऽमुष्य जयोऽमुष्य पराजयः ॥ १७ ॥

**श्रीशुक उवाच**

इन्द्रो वृत्रवचः श्रुत्वा गताळीकमपूजयत् । गृहीतवज्रः प्रहसंस्तमाह गतविस्मयः ॥ १८ ॥

---

१. अजातविक्लबः ❋ २. तस्योरगराजभोगम् ❋ ३. स्वहस्तादरिसन्निधौ

इन्द्र उवाच

अहो दानव सिद्धोऽसि यस्य ते मतिरीदृशी । भक्तः सर्वात्मनाऽऽत्मानं सुहृदं जगदीश्वरम् ॥ १९ ॥

भवानतार्षीन्मायां वै वैष्णवीं जनमोहिनीम् । यद् विहायासुरं भावं महापुरुषतां गतः ॥ २० ॥

खल्विदं महदाश्चर्यं यद् रजःप्रकृतेस्तव । वासुदेवे भगवति सर्वात्मनि दृढा मतिः ॥ २१ ॥

यस्य भक्तिर्भगवति हरौ निश्रेयसेश्वरे । विक्रीडतोऽमृताम्भोधौ किं क्षुद्रैः खातकोदकैः ॥ २२ ॥

श्रीशुक उवाच

इति ब्रुवाणावन्योन्यं धर्मजिज्ञासया नृप । युयुधाते महावीर्याविन्द्रवृत्रौ युधाम्पती ॥ २३ ॥

आविध्य परिघं वृत्रः कार्ष्णायसमरिन्दम । इन्द्राय प्राहिणोद् घोरं वामहस्तेन मारिष ॥ २४ ॥

स तु वृत्रस्य परिघं करं च करभोपमम् । चिच्छेद युगपद् देवो वज्रेण शतपर्वणा ॥ २५ ॥

दोर्भ्यामुत्कृत्तमूलाभ्यां बभौ रक्तस्रवोऽसुरः । छिन्नपक्षो यथा गोत्रः खाद् भ्रष्टो वज्रिणा हतः ॥ २६ ॥

कृत्वाऽधरां हनुं भूमौ दैत्यो दिव्युत्तरां हनुम् । नभोगम्भीरवक्त्रेण लिलेहोल्बणजिह्वया ॥ २७ ॥

दंष्ट्राभिः कालकल्पाभिर्ग्रसन्निव जगत्त्रयम् । अतिमात्रं महाकाय आक्षिपंस्तरसा गिरीन् ॥ २८ ॥

गिरिराट् पादचारीव पद्भ्यां निर्दरयन् महीम् । जग्रास तं समासाद्य वज्रिणं सह वाहनम् ।

महाप्राणो महावीर्यो महासर्प इव द्विपम् ॥ २९ ॥

वृत्रग्रस्तं समालक्ष्य[1] सप्रजापतयः सुराः । हा कष्टमिति निर्विण्णाश्चुक्रुशुः समहर्षयः ॥ ३० ॥

निगीर्णोऽप्यसुरेन्द्रेण न ममारोदरं गतः । महापुरुषसन्नद्धो योगमायाबलेन च ॥ ३१ ॥

भित्त्वा वज्रेण तत्कुक्षिं निष्क्रम्य बलभिद् विभुः । उच्चकर्त शिरः शत्रोर्गिरिशृङ्गमिवौजसा ॥ ३२ ॥

वज्रस्तु तत्कन्धरमाशुवेगः कृन्तन् समन्तात् परिवर्तमानः ।
न्यपातयत् तावदहर्गणेन यो ज्योतिषामयने वार्त्रहत्ये ॥ ३३ ॥

तदा च खे दुन्दुभयो विनेदुर्गन्धर्वविद्याध्रमहर्षिसिद्धाः[2] ।
वार्त्रघ्नलिङ्गैः समभिष्टुवाना[3] मन्त्रैर्मुदा कुसुमैरभ्यवर्षन् ॥ ३४ ॥

वृत्रस्य देहान्निष्क्रान्तमात्मज्योतिररिन्दम । पश्यतां सर्वलोकानां स्वं लोकं समपद्यत ॥ ३५ ॥

॥ इति श्रीमद्भागवते षष्ठस्कन्धे द्वादशोऽध्यायः ॥

---

१. तमालक्ष्य  २. गन्धर्वसिद्धाः समहर्षिसङ्घाः *  ३. ....लिङ्गैस्तमभिष्टुवानाः

**श्रीशुक उवाच**

वृत्रे हते त्रयो लोका विना शक्रेण भूरिद। सपाला ह्यभवन् सद्यो विज्वरा निर्वृतेन्द्रियाः ॥ १ ॥

देवर्षिपितृभूतानि दैत्या देवानुगाश्च ये। प्रतिजग्मुः स्वधिष्ण्यानि ब्रह्मेशेन्द्रादयस्ततः ॥ २ ॥

**राजोवाच**

इन्द्रस्यानिर्वृतेर्हेतुं श्रोतुमिच्छाम्यहं मुने। येनासन् सुखिनो देवा हरेर्दुःखं कुतोऽभवत् ॥ ३ ॥

**श्रीशुक उवाच**

वृत्रविक्रमसंविग्नाः सर्वे देवाः सहर्षिभिः। तद्वधायार्थयन्निन्द्रं नैच्छद् भीतो बृहद्वधात् ॥ ४ ॥

**इन्द्र उवाच**

स्त्रीभूजलद्रुमैरेनो विश्वरूपवधोद्भवम्। विभक्तमनुगृह्णद्भिर्वृत्रहत्यां क्व माज्म्र्यहम्[1] ॥ ५ ॥

**श्रीशुक उवाच**

ऋषयस्तदुपाकर्ण्य महेन्द्रमिदमब्रुवन्। याजयिष्याम[2] भद्रं ते हयमेधेन मा स्म भैः ॥ ६ ॥

हयमेधेन पुरुषं परमात्मानमीश्वरम्। इष्ट्वा नारायणं देवं मोक्ष्यसेऽपि जगद्वधात् ॥ ७ ॥

ब्रह्महा गुरुहा[3] गोघ्नो मातृहाऽऽचार्यहाऽघवान्।
श्वादः पुल्कसको वाऽपि शुध्येरन् यस्य कीर्तनात् ॥ ८ ॥

तमश्वमेधेन महामखेन श्रद्धान्वितोऽस्माभिरनुष्ठितेन।
हत्वाऽपि सब्रह्म चराचरं त्वं न लिप्यसे किं खलनिग्रहेण ॥ ९ ॥

एवं सञ्चोदितो विप्रैर्मरुत्वान् न्यहनद् रिपुम्। ब्रह्महत्या हते तस्मिन्नाससाद वृषाकपिम् ॥ १० ॥

तयेन्द्रं स्म ह सन्तप्तं निर्वृतिर्नामुमाविशत्। ह्रीमन्तं हत्यया तप्तं सुखयन्त्यपि नो गुणाः ॥ ११ ॥

तां ददर्शानुधावन्तीं चण्डालीमिव रूपिणीम्। जरया वेपमानाङ्गीं यक्ष्मग्रस्तामसृक्पटाम् ॥ १२ ॥

विकीर्य पलितान् केशांस्तिष्ठतिष्ठेति भाषिणीम्। मीनगन्ध्यसुगन्धेन कुर्वतीं मार्गदूषणम् ॥ १३ ॥

नभोगतो दिशः सर्वाः सहस्राक्षो विशाम्पते। प्रागुदीचीं दिशं दृष्ट्वा प्रविष्टः प्राप मानसम् ॥ १४ ॥

स आवसत् पुष्करनाळतन्तूनलब्धभोगो यदिहाग्निदूतः।
वर्षाणि साहस्रमलक्षितोऽद्भिः[4] सञ्चिन्तयन् ब्रह्मवधाद् विमोक्षम् ॥ १५ ॥

---

१. क्व माष्म्र्यहम् ❋ २. मार्जयिष्याम ३. पितृहा ४. अलक्षितोऽन्तः

तावत् त्रिणाकं[1] नहुषः शशास विद्यातपोयोगबलानुभावः ।
स सम्पदैश्वर्यमदान्धबुद्धिर्नीतस्तिरश्चां गतिमिन्द्रपत्न्या ॥ १६ ॥
ततो गतो ब्रह्मगिरोपहूत ऋतम्भरध्याननिवारितांहः ।
पापश्च दिग्देवतया हतौजास्तं नाभ्यभूदवितं विष्णुपत्न्या ॥ १७ ॥
तं च ब्रह्मर्षयोऽभ्येत्य हयमेधेन भारत । यथावद् दीक्षयाञ्चक्रुः पुरुषाराधनेन ह ॥ १८ ॥
अथेज्यमाने पुरुषे सर्वभूतमयात्मनि । अश्वमेधे महेन्द्रेण वितते ब्रह्मवादिभिः ॥ १९ ॥
स वै त्वाष्ट्रवधो भूयानपि पापः परन्तप । नीतस्तेनैव शून्याय नीहार इव भानुना ॥ २० ॥
स वाजिमेधेन यथोदितेन वितायमानेन मरीचिमिश्रैः ।
इष्ट्वाऽपि यज्ञं पुरुषं पुराणमिन्द्रो महानास विधूतपापः ॥ २१ ॥
इदं महाख्यानमशेषपाप्मनां प्रक्षाळनं तीर्थपदानुकीर्तनम् ।
भक्त्युच्छ्रयं भक्तजनानुवर्णनं महेन्द्रमोक्षं विजयं मरुत्वतः ॥ २२ ॥
पठेयुराख्यानमिदं सदा बुधाः शृण्वन्त्यथो पर्वणिपर्वणीन्द्रियम् ।
धन्यं यशस्यं निखिलाघमोचनं रिपुञ्जयं स्वस्त्ययनं तथाऽऽयुषम् ॥ २३ ॥

**इति श्रीमद्भागवते षष्ठस्कन्धे त्रयोदशोऽध्यायः ॥**

---

**परीक्षिदुवाच**

रजस्तमस्स्वभावस्य ब्रह्मन् वृत्रस्य पाप्मनः । नारायणे भगवति कथमासीद् दृढा रतिः[2] ॥ १ ॥
देवानां शुद्धसत्वानामृषीणां चामलात्मनाम् । भक्तिर्मुकुन्दचरणे न प्रायेणोपजायते ॥ २ ॥
रजोभिः समसङ्ख्याताः पार्थिवैरिह जन्तवः । तेषां ये केचनेहन्ते श्रेयो वै मनुजादयः ॥ ३ ॥
प्रायो मुमुक्षवस्तेषां केचनेह द्विजोत्तमाः । मुमुक्षूणां सहस्रेषु कश्चिन्मुच्येत सिद्धयति ॥ ४ ॥
मुक्तानामपि सिद्धानां नारायणपरायणः । सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने ॥ ५ ॥
वृत्रस्तु स कथं पापः सर्वलोकोपतापनः । इत्थं दृढमतिः कृष्ण आसीत् सङ्ग्राम उद्धणे[3] ॥ ६ ॥
अत्र नः संशयो भूयान् श्रोतुं कौतूहलं प्रभो । यः पौरुषेण समरे सहस्राक्षमतोषयत् ॥ ७ ॥

---

१. तावत् त्रिलोकम् ❋ /तावच्च नाकम्     २. मतिः ❋     ३. सङ्ग्राममूर्धनि ❋

**सूत उवाच**

परीक्षितोऽथ सम्प्रश्नं भगवान् बादरायणिः । निशम्य श्रद्दधानस्य प्रतिनन्द्येदमब्रवीत्[१] ॥ ८ ॥

**श्रीशुक उवाच**

शृणुष्वावहितो राजन्नितिहासमिमं यथा । श्रुतं द्वैपायनमुखान्नारदाद् देवलादपि ॥ ९ ॥

आसीद् राजा सार्वभौमः शूरसेनेषु वै नृप । चित्रकेतुरिति ख्यातो यस्यासीत् कामधुङ् मही ॥ १० ॥

तस्य भार्यासहस्राणां सहस्राणि दशाभवन् । सान्तानिकश्चापि नृपो न लेभे तासु सन्ततिम् ॥ ११ ॥

रूपौदार्यवयोजन्मविद्यैश्वर्यश्रियादिभिः । सम्पन्नस्य गुणैः सर्वैश्चिन्ता वन्ध्यापतेरभूत् ॥ १२ ॥

न तस्य सम्पदः सर्वा महिष्यो वामलोचनाः । सार्वभौमस्य भूश्चेयं नाभवन्[२] प्रीतिहेतवः ॥ १३ ॥

तस्यैकदा तु भवनमङ्गिरा भगवान् ऋषिः । लोकाननुचरन्नेतानुपागच्छद् यदृच्छया ॥ १४ ॥

तं पूजयित्वा विधिवत् प्रत्युत्थानार्हणादिभिः । कृतातिथ्यमुपासीदत् सुखासीनं समाहितः ॥ १५ ॥

महर्षिस्तमुपासीनं प्रश्रयावनतं क्षितौ । प्रतिपूज्य महाराज समाभाष्येदमब्रवीत् ॥ १६ ॥

**अङ्गिरा उवाच**

अपि तेऽनामयं स्वस्ति प्रकृतीनां तथाऽऽत्मनः । यथा प्रकृतिभिर्गुप्तः पुमान् राजा च सप्तभिः ॥ १७ ॥

आत्मानं प्रकृतिष्वद्धा निधाय श्रेय आप्नुयात् । राज्ञस्तथा प्रकृतयो नरदेवाहितादयः ॥ १८ ॥

अपि दाराः सुतामात्या[३] भृत्याः श्रेण्योऽथ मन्त्रिणः । पौरा जानपदा भूपा आत्मा च वशवर्तिनः ॥

यस्यात्माऽनुवशश्चेत् स्यात् सर्वे तद्वशगा इमे । लोकाः सपाला यच्छन्ति सर्वे बलिमतन्द्रिताः ॥

आत्मनः प्रीतयेऽनात्मा परतः स्वत एव वा । लक्षयेऽलब्धकामं त्वां चिन्तया शबळं मुखम् ॥ २१ ॥

**श्रीशुक उवाच**

एवं विकल्पितो राजन् विदुषा मुनिनाऽपि सः । प्रश्रयावनतः प्राह[४] प्रजाकामस्ततो मुनिम् ॥ २२ ॥

**चित्रकेतुरुवाच**

भगवन् किन्वविदितं[५] तपोज्ञानसमाधिभिः । योगिनां ध्वस्तपापानां बहिरन्तः शरीरिषु ॥ २३ ॥

तथाऽपि पृच्छतो ब्रूयां ब्रह्मन्नात्मनि चिन्तितम् । भवतो विदुषश्चापि चोदितस्त्वदनुज्ञया ॥ २४ ॥

लोकपालैरपि प्रार्थ्याः साम्राज्यैश्वर्यसम्पदः । न नन्दयन्त्यप्रजं मां क्षुत्तृट्क्षाममिवापरे ॥ २५ ॥

---

१. प्रतिनन्द्य वचोऽब्रवीत् २. भूश्चेयमभवन् ३. दारसुतामात्याः ❋
४. प्रश्रयावनतोऽभ्याह ५. किं न विदितम्

तन्नः पाहि महाभाग पूर्वैः सह गतं तमः । यथा तरेम दुस्तारं प्रजया तद् विधेहि नः ॥ २६ ॥

**श्रीशुक उवाच**

इत्यर्थितः स भगवान् कृपालुर्ब्रह्मणः सुतः । श्रपयित्वा चरुं त्वाष्ट्रं त्वष्टारमयजद् विभुः ॥ २७ ॥

ज्येष्ठा श्रेष्ठा च या राज्ञो महिषीणां च भारत । नाम्ना कृतद्युतिस्तस्यै यज्ञोच्छिष्टमदाद् विभुः ॥ २८ ॥

अथाह नृपतिं राजन् भवितैकस्तवात्मजः । हर्षशोकप्रदस्तुभ्यमिति ब्रह्मसुतो ययौ ॥ २९ ॥

साऽपि तत्प्राशनादेव चित्रकेतोरधारयत् । गर्भं कृतद्युतिर्देवी कृत्तिकाऽग्नेरिवात्मजम् ॥ ३० ॥

तस्या अनुदिनं गर्भः शुक्लपक्ष इवोडुपः । ववृधे शूरसेनस्य तेजसा शनकैर्नृप ॥ ३१ ॥

अथ काल उपावृत्ते कुमारः समजायत । जनयन् शूरसेनानां शृण्वतां परमां मुदम् ॥ ३२ ॥

हृष्टो राजा कुमारस्य स्नातः शुचिरलङ्कृतः । वाचयित्वाऽऽशिषो विप्रैः कारयामास जातकम् ॥

तेभ्यो हिरण्यं रजतं वासांस्याभरणानि च । ग्रामान् हयान् गजान् प्रादाद् धेनूनामर्बुदानि षट् ॥

ववर्ष कामानन्येषां पर्जन्य इव देहिनाम् । धन्यं यशस्यमायुष्यं कुमारस्य महामनाः ॥ ३५ ॥

कृच्छ्रलब्धे च राजर्षेस्तनयेऽनुदिनं पितुः । यथा निःस्वस्य कृच्छ्राप्ते धने स्नेहोऽन्ववर्धत ॥ ३६ ॥

मातुस्त्वतितरां पुत्रे स्नेहो मोहसमुद्भवः । कृतद्युतेः सपत्नीनां प्रजाकामज्वरोऽभवत् ॥ ३७ ॥

चित्रकेतोरतिप्रीतिः यथा दारे प्रजावति । न तथाऽन्येषु सञ्जज्ञे बालं लाळयतोऽन्वहम् ॥ ३८ ॥

ताः पर्यतप्यन्नात्मानं गर्हयन्त्योऽभ्यसूयया । अनपत्येन दुःखेन राज्ञश्चानादरेण च ॥ ३९ ॥

धिगप्रजां स्त्रियं पापां पत्युश्चागृहसम्मताम् । सप्रजाभिः सपत्नीभिर्दासीमिव तिरस्कृताम् ॥ ४० ॥

दासीनां को नु सन्तापः स्वामिनः परिचर्यया । अभीक्ष्णं लब्धमानानां दास्या दासीव दुर्भगा ॥

एवं सन्दह्यमानानां सपत्न्याः पुत्रसम्पदा । राज्ञोऽसम्मतवृत्तीनां विद्वेषो बलवानभूत् ॥ ४२ ॥

विद्वेषान्नष्टमतयः स्त्रियो दारुणचेतसः । गरं ददुः कुमाराय दुर्मर्षा नृपतिं प्रति[१] ॥ ४३ ॥

कृतद्युतिरजानन्ती सपत्नीनामघं महत् । सुप्त एवेति सञ्चिन्त्य निरीक्ष्य व्यचरद् गृहे ॥ ४४ ॥

शयानं सुचिरं बालमुपधार्य मनीषिणी । पुत्रमानय मे भद्रे इति धात्रीमचोदयत् ॥ ४५ ॥

सा शयानमुपव्रज्य दृष्ट्वा चोत्तारलोचनम् । प्राणेन्द्रियात्मभिस्त्यक्तं हताऽस्मीत्यपतद् भुवि ॥ ४६ ॥

तस्यास्तदाकर्ण्य भृशातुरं स्वरं घ्नन्त्याः कराभ्यामुर उच्चकैरपि ।
प्रविश्य राज्ञी त्वरयाऽऽत्मजान्तिकं ददर्श बालं सहसा मृतं सुतम् ॥ ४७ ॥

---

१. विद्वेषान्नृपतिं प्रति

पपात भूमौ परिवृद्धया शुचा मुमोह विभ्रष्टशिरोरुहाम्बरा ।
ततो नृपान्तःपुरवर्तिनो जना नराश्च नार्यश्च निशम्य रोदनम् ।
आगत्य तुल्यव्यसनाः सुदुःखितास्ताश्च व्यळीकं रुरुदुः कृतागसः ॥ ४८ ॥
श्रुत्वा मृतं पुत्रमलक्षितान्तकं विनष्टदृष्टिः प्रपतन् स्खलन् पथि ।
स्नेहानुबन्धैधितया शुचा भृशं विमूर्च्छितोऽनुप्रकृतिर्द्विजैर्वृतः ॥ ४९ ॥
पपात बालस्य स पादमूले मृतस्य विस्रस्तशिरोरुहाम्बरः ।
दीर्घं श्वसन् बाष्पकळोपरोधतो निरुद्धकण्ठो न शशाक भाषितुम् ॥ ५० ॥
पतिं निरीक्ष्योरुशुचाऽर्पितं तदा मृतं च बालं सुतमेकसन्ततिम् ।
जनस्य राज्ञी प्रकृतेश्च हृद्रुजं सती दधाना[१] विललाप चित्रधा ॥ ५१ ॥
स्तनद्वयं कुङ्कुमपङ्कमण्डितं निषिञ्चती साञ्जनबाष्पबिन्दुभिः ।
विकीर्य केशान् विगळत्स्रजः सुतं शुशोच चित्रं कुररीव सुस्वरम् ॥ ५२ ॥
अहो विधातस्त्वमतीव बालिशो यस्त्वात्मसृष्ट्यप्रतिरूपमीहसे ।
परे तु जीवत्यपरस्य या मृतिः विपर्ययश्चेत् त्वमसि ध्रुवं परः[२] ॥ ५३ ॥
न हि क्रमश्चेदिह मृत्युजन्मनोः शरीरिणामस्तु तदात्मकर्मभिः ।
यः स्नेहपाशो निजसर्गवृद्धये स्वयं कृतस्ते तमिमं विवृश्चसि ॥ ५४ ॥
त्वं तात नार्हसि स मां कृपणामनाथां त्यक्तुं विचक्ष्व पितरं तव शोकतप्तम् ।
अञ्जस्तरेम भवताऽप्रजदुस्तरं यद् ध्वान्तं न याह्यकरुणेन यमेन दूरम् ॥ ५५ ॥
उत्तिष्ठ तात त इमे शिशवो वयस्यास्त्वामाह्वयन्ति नृपनन्दन संविहर्तुम् ।
सुप्तश्चिरं[३] ह्यशनया च भवान् परीतो भुङ्क्ष्व स्तनं पिब शुचो हर नः स्वकानाम् ॥ ५६ ॥
नाहं तनूज ददृशे हतमङ्गला ते मुग्धस्मितं मुदितवीक्षणमाननाब्जम् ।
किं वा गतोऽस्यपुनरन्वयमन्यलोकं नीतोऽघृणेन न शृणोमि कळा गिरस्ते ॥ ५७ ॥

**श्रीशुक उवाच**

विलपन्त्या[४] मृतं पुत्रमिति चित्रविलापनैः । चित्रकेतुर्भृशं तप्तो मुक्तकण्ठो रुरोद ह ॥ ५८ ॥

---

१. हृद्रुजसतीं दधाना ❋? / हृद्रुजसतिं दधाना ❋? २. त्वमपि ध्रुवं परः ❋
३. सुप्तं चिरम् ❋ ४. विलपन्त्याम् ❋

तयोर्विलपतोः सर्वे दम्पत्योस्तदनुव्रताः । रुरुदुः स्म नरा नार्यः सर्वमासीदचेतनम् ॥ ५९ ॥
एवं कश्मलमापन्नं नष्टसञ्ज्ञमनायकम् । ज्ञात्वाऽङ्गिरा नाम मुनिराजगाम[१] सनारदः ॥ ६० ॥

**॥ इति श्रीमद्भागवते षष्ठस्कन्धे चतुर्दशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

ऊचतुर्मृतकोपान्ते पतितं मृतकोपमम् । शोकाभिभूतं राजानं बोधयन्तौ सदुक्तिभिः ॥ १ ॥
कोऽयं स्यात् तव राजेन्द्र भवान् यमनुशोचति । त्वं चास्य कतमः सृष्टौ पुरेदानीमतः परम् ॥ २ ॥
यथा प्रयान्ति संयान्ति स्रोतोवेगेन वालुकाः । संयुज्यन्ते वियुज्यन्ते तथा कालेन देहिनः ॥ ३ ॥
यथा धानासु वै धाना भवन्ति न भवन्ति च । एवं भूतेषु भूतानि चोदितानीशमायया ॥ ४ ॥
वयं च त्वं च ये चेमे तुल्यकालाश्चराचराः । जन्ममृत्योर्यथा पश्चात् प्राक् चैवमधुना विभो ॥ ५ ॥
भूतैर्भूतानि भूतेशः सृजत्यवति हन्त्यजः । आत्मसृष्टैरस्वतन्त्रैरनपेक्षोऽपि बालवत्[२] ॥ ६ ॥
देहेन देहिनो राजन् देहाद् देहोऽभिजायते । बीजादेव यथा बीजं देह्यर्थ इव शाश्वतः ॥ ७ ॥
देहदेह्यविभागोऽयमविवेककृतः पुरा । जातिव्यक्तिविभागोऽयं यथा वस्तुनि कल्पितः ॥ ८ ॥
नानात्वं जन्म नाशश्च क्षयो वृद्धिः क्रियाफलम् । द्रष्टुश्च भान्त्यतद्धर्मा यथाऽग्नेर्दाह्यविक्रियाः[३] ॥ ९ ॥
त इमे देहसंयोगादात्मन्याभान्त्यसद्ग्रहात् । स्वप्ने यथा तथा नान्यद् ध्यायेत् सर्वं भयं च यत् ॥ १० ॥
प्रसुप्तस्यानहम्मानान्न घोरा भाति संसृतिः । जीवतोऽपि यथा तद्वद् विमुक्तस्यानहम्मतेः ॥ ११ ॥
तस्मादन्यन्मनोमात्रं जह्यहम्ममतां तमः[४] । वासुदेवे भगवति मनो धेह्यात्मनीश्वरे ॥ १२ ॥

**श्रीशुक उवाच**

एवमाश्वासितो राजा चित्रकेतुर्द्विजोक्तिभिः । प्रमृज्य पाणिना वक्त्रमाधिम्लानमभाषत ॥ १३ ॥

**राजोवाच**

कौ युवां ज्ञानसम्पन्नौ महिष्ठौ च महीयसाम् । अवधूतेन वेषेण गूढाविह समागतौ ॥ १४ ॥
चरन्ति ह्यवनौ कामं ब्राह्मणा भगवत्प्रियाः । मादृशां ग्राम्यबुद्धीनां बोधायोन्मत्तलिङ्गिनः ॥ १५ ॥

---

१. अङ्गिरा महर्षिराजगाम ❋ २. अनपेक्षोऽथ बालवत् ❋ ३. दाह्यविक्रियः ❋
४. अहम्ममतातमः

कुमारो नारद ऋभुरङ्गिरा देवलोऽसितः । अपान्तरतमो व्यासो मार्कण्डेयोऽथ गौतमः ॥ १६ ॥

वसिष्ठो भगवान् रामः कपिलो बादरायणिः । दूर्वासा याज्ञवल्क्यश्च जातूकर्ण्यस्तथाऽऽरुणिः ॥

रोमशश्च्यवनो दत्त आसुरिः सपतञ्जलिः । पराशरोऽथ मैत्रेयो भरद्वाजश्च आरुणः ।

ऋषिर्वेदशिरा बोध्यो मुनिः पञ्चशिखस्तथा ॥ १८ ॥

हिरण्यनाभः कौशल्यः[1] श्रुतदेवः क्रतुध्वजः[2] । एते परे च सिद्धेशाश्चरन्ति ज्ञानहेतवः ॥ १९ ॥

तस्माद् युवां ग्राम्यपशोर्मम मुग्धधियः प्रभू । अन्धे तमसि मग्नस्य ज्ञानदीप उदीर्यताम् ॥ २० ॥

**अङ्गिरा उवाच**

अहं ते पुत्रकामस्य पुत्रदोऽस्म्यङ्गिरा नृप । एष ब्रह्मसुतः साक्षान्नारदो भगवान् ऋषिः ॥ २१ ॥

इत्थं त्वां पुत्रशोकेन मग्नं तमसि दुस्तरे । अतदर्हमनुस्मृत्य महापुरुषगोचरम् ॥ २२ ॥

अनुग्रहाय भवतः प्राप्तावावामिह प्रभो । ब्रह्मण्यो भगवद्भक्तो नावसीदितुमर्हति ॥ २३ ॥

तदैव ते परं ज्ञानं ददामि गृहमागतः । ज्ञात्वाऽन्याभिनिवेशं ते पुत्रमेवाददामहम् ॥ २४ ॥

अधुना पुत्रिणां तापो भवतैवानुभूयते । एवं दारा गृहा रायो विविधैश्वर्यसम्पदः ॥ २५ ॥

शब्दादयश्च विषयाश्चला राजन् विभूतयः । राज्यं मही बलं कोशो भृत्यामात्यसुहृज्जनाः ॥ २६ ॥

सर्वेऽपि शूरसेनेमे शोकमोहभयार्तिदाः । गन्धर्वनगरप्रख्याः स्वप्नमायामनोरथाः ॥ २७ ॥

दृश्यमाना विनाऽर्थेन न दृश्यन्ते मनोभवाः । कर्माभिध्यायतो नाना कर्माणि मनसाऽभवन् ॥ २८ ॥

अयं हि देहिनो देहो द्रव्यज्ञानक्रियात्मकः । देहिनो विविधक्लेशसन्तापकृदुदाहृतः ॥ २९ ॥

तस्मात् स्वस्थेन मनसा विमृश्य गतिमात्मनः । द्वैते ध्रुवार्थविस्रम्भं त्यजोपशममाविश ॥ ३० ॥

भोजो नाम नृपः स्वप्ने शत्रुग्रस्तान्नभोजनः । दुःखं दुर्विषहं प्राप्तः शोकमोहभयार्तिदम् ॥ ३१ ॥

केचिद् विलुलुपुर्भोगानपरेऽवधिषुः श्रितान् । पूर्ववैरग्रहैर्जाया अन्य[3] आत्मशिरोऽहरन् ॥ ३२ ॥

इत्थं दुरन्तदुःखौघादुत्थितस्तदनुस्मरन् । तावद् भृशं स निर्विण्णो[4] निर्जगाम ततो गृहात् ॥ ३३ ॥

दर्शयन्नात्मनाऽऽत्मानं निस्सङ्गः शान्तविग्रहः । प्रविष्टो ब्रह्म निर्वाणं कुलायं नाविदच्च तम् ॥ ३४ ॥

**नारद उवाच**

इमां मन्त्रोपनिषदं प्रतीच्छ प्रयतो मम । यां धारयन् सप्तरात्राद् द्रष्टा सङ्कर्षणं प्रभुम्[5] ॥ ३५ ॥

---

१. कौसल्यः    २. श्रुतदेव ऋतुध्वजः ❋    ३. जायामन्ये ❋    ४. सुनिर्विण्णः    ५. विभुम्

यत्पादमूलमुपसृत्य नरेन्द्र पूर्वे शर्वादयो भ्रममिमं द्वितयं विसृज्य ।
सद्यस्तदीयमतुलानधिकं महित्वं प्रापुर्भवानपि परं नचिरादुपैति ।। ३६ ।।

**इति श्रीमद्भागवते षष्ठस्कन्धे पञ्चदशोऽध्यायः ।।**

---

**श्रीशुक उवाच**

अथ देवऋषी राजन् सम्परेतं नृपात्मजम् । दर्शयित्वेति होवाच ज्ञातीनामनुशोचताम् ।। १ ।।

**नारद उवाच**

जीवात्मन् पश्य भद्रं ते मातरं पितरं च ते । सुहृदो बान्धवांस्तप्तान् शुचा त्वत्कृतया भृशम् ।। २ ।।
कळेबरं स्वमाविश्य शेषमायुः सुहृद्वृतः । भुङ्क्ष्व भोगान् पितृप्रत्तानधितिष्ठ नृपासनम् ।। ३ ।।

**जीव उवाच**

कस्मिन् जन्मन्यमी ब्रह्मन् पितरो मातरोऽभवन् । कर्मभिर्भ्राम्यमाणस्य देवतिर्यङ्नृयोनिषु ।। ४ ।।
बन्धुज्ञात्यरिमध्यस्थमित्रोदासीनविद्विषः । सर्व एव हि सर्वेषां भवन्ति क्रमशो मिथः ।। ५ ।।
यथा वस्तूनि पण्यानि हेमादीनि ततस्ततः । पर्यटन्ति नरेष्वेवं जीवो योनिषु कर्तृषु ।। ६ ।।
नित्यस्यार्थस्य सम्बन्धो ह्यनित्यो दृश्यते नृषु । यावद् यस्य हि सम्बन्धो ममत्वं तावदेव हि ।। ७ ।।
एवं योनिगतो जीवः स नित्यो निरहङ्कृतः[1] । यावद् यत्रोपलभ्येत तावत् स्वत्वं हि तस्य तत् ।। ८ ।।
एष नित्योऽव्ययः सूक्ष्म एकः सर्वाश्रयः स्वदृक् । आत्ममायागुणैर्विश्वमात्मानं सृजते प्रभुः ।। ९ ।।
न ह्यस्यातिप्रियः कश्चिन्नाप्रियः स्वः परोऽपि वा । एकः सर्वधियां द्रष्टा कर्तॄणां गुणदोषयोः ।।
नादत्त आत्मा हि गुणं न दोषं न क्रियाफलम् । उदासीन इवासीनः परावरदृगीश्वरः ।। ११ ।।

**श्रीशुक उवाच**

इत्युदीर्य गतो जीवो ज्ञातयस्तस्य ते तदा । विस्मिता मुमुचुः शोकं छित्वाऽऽत्मस्नेहशृङ्खलाम् ।। १२ ।।
निर्हृत्य ज्ञातयो ज्ञातेर्देहं कृत्वोचिताः क्रियाः । तत्यजुर्दुस्त्यजं स्नेहं शोकमोहभयार्तिदम् ।। १३ ।।
बालघ्न्यो व्रीळितास्तत्र बालहत्याहतप्रभाः । बालहत्याव्रतं चेरुर्ब्राह्मणैर्यन्निरूपितम् ।
यमुनायां महाराज स्मरन्त्यो द्विजभाषितम् ।। १४ ।।
स इत्थं प्रतिबुद्धात्मा चित्रकेतुर्द्विजोक्तिभिः । गृहान्धकूपान्निष्क्रान्तः सरःपङ्कादिव द्विपः ।। १५ ।।

---

१. निरहङ्कृतिः ❋

काळिन्द्यां विधिवत् स्नात्वा कृतपुण्यजलक्रियः । मौनेन संयतप्राणो ब्रह्मपुत्रावववन्दत ॥ १६ ॥
अथ तस्मै प्रपन्नाय भक्ताय प्रयतात्मने । भगवान् नारदः प्रीतो विद्यामेतामुवाच ह ॥ १७ ॥

**नारद उवाच**

नमस्तुभ्यं भगवते वासुदेवाय धीमहि । प्रद्युम्नायानिरुद्धाय नमः सङ्कर्षणाय च ॥ १८ ॥
नमो विज्ञानमात्राय परमानन्दमूर्तये[1] । आत्मारामाय शान्ताय निवृत्तद्वैतदृष्टये[2] ॥ १९ ॥
आत्मानन्दानुभूत्यैव सम्यक्त्यक्तोर्मये नमः । हृषीकेशाय महते नमस्तेऽनन्तशक्तये[3] ॥ २० ॥
वचस्युपरते प्राप्यो य एको मनसा सह । अनामरूपचिन्मात्रः सोऽव्यान्नः सदसत्परः ॥ २१ ॥
यस्मिन्निदं यतश्चेदं तिष्ठत्यप्येति जायते । मृन्मयेष्विव मृज्जातिस्तस्मै ते ब्रह्मणे नमः ॥ २२ ॥
यन्न स्पृशन्ति न विदुर्मनोबुद्धीन्द्रियासवः । अन्तर्बहिश्च विततं व्योमवत् तं नतोऽस्म्यहम् ॥ २३ ॥

देहेन्द्रियप्राणमनोधियोऽमी यदंशविद्धाः प्रचरन्ति कर्मसु ।
नैवान्यदा लोहमिवाप्रतप्तं स्थानेषु तद् द्रष्टृपदेशमेमि ॥ २४ ॥

ओं नमो भगवते महापुरुषाय महानुभावाय महाविभूतिपतये सकलसात्वत-
परिवृढनिकरकरकमलकुड्मळोपलाळितचरणारविन्दयुगळ परम परमेष्ठिन् नमस्ते ॥ २५ ॥

**श्रीशुक उवाच**

भक्तायैतां प्रपन्नाय विद्यामादिश्य नारदः । ययावङ्गिरसा साकं धाम स्वायम्भुवं प्रभो ॥ २६ ॥
चित्रकेतुस्तु तां विद्यां यथा नारदभाषिताम् । धारयामास सप्ताहमब्भक्षः सुसमाहितः ॥ २७ ॥
ततश्च सप्तरात्रान्ते विद्यया धार्यमाणया । विद्याधराधिपत्यं स लेभेऽप्रतिहतं नृप ॥ २८ ॥
ततः कतिपयाहोभिर्विद्ययेद्धमनोगतिः । जगाम देवदेवस्य शेषस्य चरणान्तिकम् ॥ २९ ॥

मृणाळगौरं शितिवाससं स्फुरत्किरीटकेयूरकटित्रकङ्कणम् ।
प्रसन्नवक्त्रारुणलोचनं वृतं ददर्श सिद्धेश्वरमण्डलैः प्रभुम् ॥ ३० ॥
तद्दर्शनध्वस्तसमस्तकिल्बिषः स्वस्थामलान्तःकरणोऽभ्ययान्मुहुः ।
प्रवृद्धभक्त्या प्रणयाश्रुलोचनः प्रहृष्टरोमा तमनादिपूरुषम् ॥ ३१ ॥
स उत्तमश्लोकपदाब्जविष्टरं प्रेमाश्रुलेशैरुपसेचयन् मुहुः ।
प्रेमोपरुद्धाखिलवर्णनिर्गमो नैवाशकत् तं प्रसमीडितुं चिरम् ॥ ३२ ॥

---

१. परमानन्दरूपिणे २. निवृत्तद्वैतवृत्तये ३. अनन्तमूर्तये

ततः समाधाय मनो मनीषया बभाष ईषत्प्रतिलब्धवाग्रसः[१] ।
नियम्य सर्वेन्द्रियबाह्यवर्तनं जगद्गुरुं सात्वतशास्त्रविग्रहम् ॥ ३३ ॥

चित्रकेतुरुवाच

अजित जितः सममतिभिः साधुभिर्भवान् जितात्मभिर्भवता ।
विजितास्तेऽपि च भजतामकामानां य आत्मदोऽतिकरुणः ॥ ३४ ॥
तव विभवः खलु भगवन् जगदुत्पत्तिस्थितिलयादीनि ।
विश्वसृजस्तेंऽशास्तत्र मृषा[२] स्पर्धन्ति पृथगभिमत्या ॥ ३५ ॥
परमाणुपरममहतोस्त्वमाद्यन्तान्तरवर्ती त्रयविधुरः ।
आदावन्ते च सत्त्वानां यद् ध्रुवं तदेवान्तरकालेऽपि ॥ ३६ ॥
क्षित्यादिभिरेष किलावृतः सप्तभिर्दशगुणोत्तरैराण्डकोशः ।
यत्र भगवत्यणुभ्योऽणुकल्पः सहाण्डकोटिभिस्तदनन्तम् ॥ ३७ ॥
विषयतृषो नरपशवो य उपासते विभूतीर्न परं त्वाम् ।
तेषामाशिष ईश तदनु विनश्यन्ति यथाऽराजकुलम् ॥ ३८ ॥
कामधियस्त्वयि रचिता न पुनरारोहन्ति यथा करम्भबीजानि ।
ज्ञानात्मन्यगुणमये गुणगणतोऽस्य द्वन्द्वजालानि ॥ ३९ ॥
जितमजित तदा भवता यदाऽऽह भागवतधर्ममनवद्यम् ।
निष्किञ्चना ये मुनय आत्मारामा यमुपासतेऽपवर्गाय ॥ ४० ॥
विषममतिर्न यत्र नृणां त्वमहमिति मम तवेति योऽन्यत्र ।
विषमधिया रचितः स ह्यशुद्धः क्षयिष्णुरधर्मबहुळः ॥ ४१ ॥
कः क्षेमो निजपरयोः कियानर्थः स्वपरद्रुहा धर्मेण ।
स्वद्रोहात् तव कोपः परसम्पीडया च तथाऽधर्मः[३] ॥ ४२ ॥
न व्यभिचरति तवेक्षा यया ह्यभिहितो भागवतो धर्मः ।
स्थिरचरसत्वकदम्बेष्वपृथग्धियो यमुपासते त्वार्याः ॥ ४३ ॥

---

१. बभाष एतत् प्रतिलब्धवाग्रसः २. मुधा * ३. परपीडया चाधर्मः *

न हि भगवन्नघटितमिदं भवद्दर्शनान्नृणामखिलपापक्षयः ।
यन्नामसकृच्छ्रवणात् पुल्कसकोऽपि विमुच्यते संसारात् ॥ ४४ ॥
अथ भगवन् वयमधुना त्वदवलोकपरिमृष्टाशयमलाः ।
सुरऋषिणा[1] यदुदितं तावकेन कथमन्यथा भवति ॥ ४५ ॥
विदितमनन्त समस्तं तव जगदात्मनो जनैरिहाचरितम् ।
विज्ञाप्यं परमगुरोः कियदिह सवितुरिव खद्योतैः ॥ ४६ ॥
नमस्तुभ्यं भगवते सकलजगत्स्थितिलयोदयेशाय ।
दुरवसितात्मगतये कुयोगिनां नमः परमहंसाय ॥ ४७ ॥
यं वै श्वसन्तमनु विश्वसृजः श्वसन्ति यं चेकितानमनु वृत्तय उच्चकन्ति ।
भूमण्डलं सर्षपायति यस्य मूर्ध्नि तस्मै नमो भगवतेऽस्तु सहस्रमूर्ध्ने ॥ ४८ ॥

**श्रीशुक उवाच**

संस्तुतो भगवानेवमनन्तस्तमभाषत । विद्याधरपतिं प्रीतश्चित्रकेतुं कुरूद्वह ॥ ४९ ॥

**श्रीभगवानुवाच**

यन्नारदाङ्गिरोभ्यां ते व्याहृतं मम शासनम् । संसिद्धोऽसि तया राजन् विद्यया दर्शनाच्च मे ॥ ५० ॥
अहं वै सर्वभूतानि भूतात्मा भूतभावनः । शब्दब्रह्म परं ब्रह्म ममोभे शाश्वती तनू ॥ ५१ ॥
लोकेऽविततमात्मानं[2] लोकं चात्मनि सन्ततम् । उभयं च मया व्याप्तं मयि चैवोभयं कृतम् ॥ ५२ ॥
यथा सुषुप्तः पुरुषो विश्वं पश्यति चात्मनि । आत्मानमेकदेशस्थं मन्यते स्वप्न उत्थितः ॥ ५३ ॥
एवं जागरणादीनि जीवस्थानानि चात्मनः । मायामात्राणि विज्ञाय तद्द्रष्टारं परं स्मरेत् ॥ ५४ ॥
येन प्रसुप्तः पुरुषः स्वापं वेदात्मनस्तदा । सुखं च निर्गुणं ब्रह्म तमात्मानमवेहि माम् ॥ ५५ ॥
उभयं स्मरतः पुंसः प्रस्वापप्रतिबोधयोः । अन्वेति व्यतिरिच्येत तज्ज्ञानं ब्रह्म तत् परम् ॥ ५६ ॥
यद्येष विस्मृतः पुंसो मद्भावो भिन्न आत्मनः । ततः संसार एकस्य देहाद् देहो मृतेर्मृतिः ॥ ५७ ॥
लब्ध्वेह मानुषीं योनिं ज्ञानविज्ञानसम्भवाम् । आत्मानं यो न बुध्येत न क्वचित् क्षेममाप्नुयात् ॥ ५८ ॥
स्मृत्वेहायां परिक्लेशं ततः फलविपर्ययम् । नोभयं चाप्यनीहायां पश्यंस्तद् विरमेन्मुनिः ॥ ५९ ॥
सुखाय दुःखमोक्षाय कुर्वाते दम्पती क्रियाः । ततोऽनिवृत्तिरप्राप्तिर्दुःखस्य च सुखस्य च ॥ ६० ॥

१. सुरर्षिणा ❋ २. लोके विततमात्मानम्

एवं विपर्ययं बुद्ध्वा नृणां विद्याभिमानिनाम् । आत्मनश्च गतिं सूक्ष्मां स्थानत्रयविलक्षणाम् ॥ ६१ ॥
दृष्टश्रुताभिर्मात्राभिर्विमुक्तः स्वेन तेजसा । ज्ञानविज्ञानसन्तृप्तो मद्भक्तः पुरुषो भवेत् ॥ ६२ ॥
एतावानेव मनुजैर्योगनैपुण्यबुद्धिभिः । स्वार्थः सर्वात्मना ज्ञेयो यत् परात्मैकदर्शनम् ॥ ६३ ॥
त्वमेतच्छ्रद्धया राजन्नप्रमत्तो वचो मम । ज्ञानविज्ञानसम्पन्नो धारयन्नाशु सिद्ध्यति[१] ॥ ६४ ॥

**श्रीशुक उवाच**

आश्वास्य[२] भगवानित्थं चित्रकेतुं जगद्गुरुः । पश्यतस्तस्य विश्वात्मा ततश्चान्तर्दधे हरिः ॥ ६५ ॥

**इति श्रीमद्भागवते षष्ठस्कन्धे षोडशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

यतश्चान्तर्हितोऽनन्तस्तस्यै कृत्वा दिशे नमः । विद्याधरश्चित्रकेतुश्चचार गगनेचरः ॥ १ ॥
स लक्षं वर्षलक्षाणामव्याहतबलेन्द्रियः । स्तूयमानो महायोगी मुनिभिः सिद्धचारणैः ॥ २ ॥
कुलाचलेन्द्रद्रोणीषु नानासङ्कल्पसिद्धिषु । रेमे विद्याधरस्त्रीभिर्गापयन् हरिमीश्वरम् ॥ ३ ॥
एकदा स्वविमानेन[३] विष्णुदत्तेन भास्वता । गिरीशं[४] ददृशे गच्छन् परीतं सिद्धचारणैः ॥ ४ ॥
आलिङ्ग्याङ्कीकृतां देवीं बाहुना मुनिसंसदि । उवाच देव्यां शृण्वन्त्यां जहासोच्चैस्तदन्तिके ॥ ५ ॥

**चित्रकेतुरुवाच**

एष लोकगुरुः साक्षाद् धर्मवक्ता शरीरिणाम् । आस्ते मुख्यसभायां वै[५] मिथुनीभूय भार्यया॥ ६ ॥
जटाधरस्तीव्रतपा ब्रह्मवादी सतां पतिः । अङ्कीकृत्य स्त्रियं ह्यास्ते गतह्रीः प्राकृतो यथा ॥ ७ ॥
प्रायशः प्राकृताश्चापि स्त्रियं रहसि बिभ्रति । अयं महाव्रतधरो बिभर्ति सदसि स्त्रियम् ॥ ८ ॥
भगवानपि तच्छ्रुत्वा प्रहस्यागाधधीर्नृप । तूष्णीं बभूव सदसि सभ्याश्च तमनुव्रताः ॥ ९ ॥
इत्यतद्वीर्यविदुषि ब्रुवाणे बह्वशोभनम् । रुषाऽऽह देवी धृष्टाय निर्जितात्माभिमानिने ॥ १० ॥

**पार्वत्युवाच**

अयं किमधुना लोके शास्ता दण्डधरः प्रभुः । अस्मद्विधानां दुष्टानां निर्लज्जानां निषेधकृत्[६] ॥ ११ ॥

---

१. सिद्ध्यसि　२. आशास्य ※　३. एकदा स विमानेन　४. गिरिशम्
५. मुख्यः सभायां वै　६. च विप्रकृत्

न वेद धर्मं किल पद्मयोनिर्न ब्रह्मपुत्रा भृगुनारदाद्याः ।
न वै कुमारः कपिलो मनुश्च ये नो निषेधन्त्यतिवर्तिनं हरम् ॥ १२ ॥
एषामनुध्येयपदाब्जयुग्मं जगद्गुरुं मङ्गलमङ्गलं स्वयम् ।
यः क्षत्रबन्धुः परिभूय सूरीन् प्रशास्ति धृष्टस्तदयं हि दण्डयः ॥ १३ ॥
नायमर्हति वैकुण्ठपादमूलोपसर्पणम् । सम्भावितात्मा निस्तब्धः साधुभिः पर्युपासितम् ॥ १४ ॥
अतः पापीयसीं योनिमासुरीं याहि दुर्मते । यथेह भूयो महतां न कर्ताऽमुत्र किल्बिषम् ॥ १५ ॥

**श्रीशुक उवाच**

एवं शप्तश्चित्रकेतुर्विमानादवरुह्य सः । प्रसादयामास सतीं मूर्ध्ना नम्रेण भारत ॥ १६ ॥

**चित्रकेतुरुवाच**

प्रतिगृह्णामि ते[1] शापमात्मनोऽञ्जलिनाऽम्बिके । देवैर्मर्त्याय यत् प्रोक्तं पूर्वदिष्टं हि तस्य तत् ॥ १७ ॥
संसारचक्र एतस्मिन् जन्तुरज्ञानमोहितः । भ्राम्यन् सुखं च दुःखं च भुङ्क्ते सर्वत्र सर्वदा ॥ १८ ॥
नैवात्मा न परश्चापि कर्ता स्यात् सुखदुःखयोः । कर्तारं मन्यतेऽत्राज्ञ आत्मानं परमेव च ॥ १९ ॥
गुणप्रवाह एतस्मिन् कः शापः को न्वनुग्रहः । कः स्वर्गो नरकः को वा किं दुःखं सुखमेव च ॥ २० ॥
एकः सृजति भूतानि भगवानात्ममायया । एषां बन्धं च मोक्षं च सुखं दुःखं च निष्कळः ॥ २१ ॥
न चास्य कश्चिद् दयितो न प्रतीपो न ज्ञातिबन्धुर्न परो न च स्वः ।
समस्य सर्वत्र निरञ्जनस्य कुतो नु रागः[2] कुत एव रोषः ॥ २२ ॥
तथाऽपि तच्छक्तिविसर्ग एषां सुखाय दुःखाय हिताहिताय ।
बन्धाय मोक्षाय च मृत्युजन्मनोः शरीरिणां संसृतये च कल्पते ॥ २३ ॥
अथ प्रसादये न त्वां शापमोक्षाय भामिनि । यन्मन्यसे असाधूक्तं मम तत् क्षम्यतां सति ॥ २४ ॥

**बादरायणिरुवाच**

इति प्रसाद्य गिरिशौ चित्रकेतुररिन्दम । जगाम स्वविमानेन पश्यतोः स्मयतोस्तयोः ॥ २५ ॥
ततस्तु भगवान् रुद्रो रुद्राणीमिदमब्रवीत् । देवर्षिदैत्यसिद्धानां पार्षदानां च शृण्वताम् ॥ २६ ॥

**रुद्र उवाच**

दृष्टवत्यसि सुश्रोणि हरेरद्भुतकर्मणः । माहात्म्यं भृत्यभृत्यानां निःस्पृहाणां महात्मनाम् ॥ २७ ॥

---

१. शापं ते ❋ २. कुतोऽनुरागः

नारायणपराः सर्वे न कुतश्चन बिभ्यति । स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः ॥ २८ ॥
देहिनां देहसंयोगाद् द्वन्द्वानीश्वरमायया । सुखं दुःखं मृतिर्जन्म शापोऽनुग्रह एव च ॥ २९ ॥
अविवेककृतः पुंसो ह्यर्थभेद इहात्मनि[1] । गुणदोषविकल्पश्च भिदेव स्वप्नकल्पिता ॥ ३० ॥
वासुदेवे भगवति भक्तिमुद्वहतां नृणाम् । ज्ञानवैराग्यवीर्याणां[2] न हि कश्चिद् व्यपाश्रयः ॥ ३१ ॥
नाहं विरिञ्चो न कुमारनारदौ न ब्रह्मपुत्रा मुनयः सुरेशाः ।
विदाम यस्येहितमंशकांशका न तत्स्वरूपं पृथगीशमानिनः ॥ ३२ ॥
न ह्यस्यातिप्रियः कश्चिन्नाप्रियः स्वः परोऽपि वा । आत्मत्वात् सर्वभूतानां सर्वभूतप्रियो हरिः ॥
तस्य चायं महाभागश्चित्रकेतुः प्रियोऽनुगः । सर्वत्र समदृक् शान्तो ह्यहं चैवाच्युतप्रियः ॥ ३४ ॥
तस्मान्न विस्मयः कार्यः पुरुषेषु महात्मसु । महापुरुषभक्तेषु शान्तेषु समदर्शिषु ॥ ३५ ॥

**श्रीशुक उवाच**

इति श्रुत्वा भगवतः शिवस्योमाऽभिभाषितम् । बभूव शान्तधी राजन् देवी विगतविस्मया ॥ ३६ ॥
इति भागवतो देव्याः प्रतिशप्तुमलन्तमः । मूर्ध्ना सञ्जगृहे शापमेतावत्[3] साधुलक्षणम् ॥ ३७ ॥
जज्ञे त्वष्टुर्दक्षिणाग्नौ दानवीं योनिमाश्रितः । वृत्र इत्यभिविख्यातो ज्ञानविज्ञानसंयुतः ॥ ३८ ॥
एतत् ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि । वृत्रस्यासुरजातेश्च कारणं भगवन्मतेः ॥ ३९ ॥
इतिहासमिमं पुण्यं चित्रकेतोर्महात्मनः । माहात्म्यं विष्णुभक्तानां श्रुत्वा बन्धाद् विमुच्यते ॥ ४० ॥
य एतत् प्रातरुत्थाय श्रद्धया वाग्यतः पठेत् । इतिहासं हरिं स्मृत्वा स याति परमां गतिम् ॥ ४१ ॥

**॥ इति श्रीमद्भागवते षष्ठस्कन्धे सप्तदशोऽध्यायः ॥**

---

पृश्निस्तु पत्नी सवितुः सावित्रीं व्याहृतीं त्रयीम् । अग्निहोत्रं पशुं सोमं चातुर्मास्यं महामखान् ॥ १ ॥
सिद्धिर्भगस्य भार्याऽङ्ग महिमानं विभुं प्रभुम् । आशिषं च वरारोहां कन्यां प्रासूत सुव्रता ॥ २ ॥
धातुः कुहूः सिनीवाली राका चानुमतिस्तथा । सायं दर्शमथ प्रातः[4] पूर्णमासमनुक्रमात् ॥ ३ ॥
अग्नीन् पुरीषानाधत्त[5] क्रियायां समनन्तरः । चर्षणी वरुणस्यासीद् यस्यां जातो भृगुः पुनः ॥ ४ ॥
वाल्मीकिश्च[6] महायोगी वल्मीकादभवत् किल । अगस्त्यश्च वसिष्ठश्च मित्रावरुणयोर्ऋषी ॥ ५ ॥

---

१. इवात्मनि ❋ २. मानविज्ञानवीर्याणाम् ३. एतावान् ❋
४. सायं प्रातर्दर्शमथ ❋ ५. पुरीष्यानाधत्त ❋ ६. वाल्मीकिस्तु ❋

रेतः सिषिचतुः कुम्भे उर्वश्या सन्निधौ द्रुतम् । रेवत्यां मित्र उत्सर्गमरिष्टं पिप्पलं व्यधात् ॥ ६ ॥
पौलोम्यामिन्द्र आधत्त त्रीन् पुत्रानिति नः श्रुतम् । जयन्तं ऋषभं तात तृतीयं मीढुषं प्रभुम्[१] ॥ ७ ॥
उरुक्रमस्य देवस्य मायावामनरूपिणः । कीर्तौ पत्न्यां बृहच्छ्लोकस्तस्यासन् सौभगादयः ॥ ८ ॥
तत्कर्मगुणवीर्याणि काश्यपस्य[२] महात्मनः । पश्चाद् वक्ष्यामहेऽदित्यां यथैवावततार ह ॥ ९ ॥
अथ काश्यपदायादान्[३] दैतेयान् कीर्तयामि ते । यत्र भागवतः श्रीमान् प्रह्लादो बलिरेव च॥ १० ॥
दितेर्द्वावेव दायादौ दैत्यदानववन्दितौ । हिरण्यकशिपुर्नाम हिरण्याक्षश्च कीर्तितौ ॥ ११ ॥
हिरण्यकशिपोर्भार्या कयाधुर्नाम दानवी । जम्भस्य तनया दत्ता सुषुवे चतुरः सुतान् ॥ १२ ॥
सह्लादं प्रागनुह्लादं प्रह्लादं ह्लादमेव च । तत्स्वसा सिंहिका नाम राहुं विप्रचितोऽग्रहीत् ॥ १३ ॥
शिरोऽहरद् यस्य हरिश्चक्रेण पिबतोऽमृतम् । सह्लादस्य कृतिर्भार्याऽसूत[४] पञ्चजनं ततः ॥ १४ ॥
ह्लादस्य धमनिर्भार्याऽसूत वातापिमिल्वलम् । योऽगस्त्यायाप्यतिथये पेचे वातापिमिल्वलः ॥ १५ ॥
अनुह्लादस्य सूर्म्यायां बाष्कळो महिषस्तथा । विरोचनस्तु प्राह्लादिर्बलिस्तस्याभवत् किल ॥ १६ ॥
बाणज्येष्ठं पुत्रशतमशनायां[५] ततोऽभवत् । तस्यानुभावः सुश्लोक्यः[६] पश्चादेवाभिधास्यते ॥ १७ ॥
बाणस्त्वाराध्य गिरिशं लेभे तद्गणमुख्यताम् । यत्पार्श्वे भगवानास्ते ह्यद्यापि पुरपालकः ॥ १८ ॥
मरुतश्च दितेः पुत्राश्चत्वारिंशन्नवाधिकाः । त आसन्नप्रजाः सर्वे नीता इन्द्रेण सात्मताम् ॥ १९ ॥

**राजोवाच**

कथं त आसुरं भावमपोह्यौत्पत्तिकं गुरो । इन्द्रेण प्रापिताः साम्यं किं तत् साधु[७] कृतं हि तैः ॥ २० ॥
इमे श्रद्दधते विद्वन् ऋषयोऽपि मया सह । परिज्ञानाय भगवंस्तन्नो व्याख्यातुमर्हसि ॥ २१ ॥

**सूत उवाच**

तद् विष्णुरातस्य स बादरायणिर्वचो निशम्याद्दतमर्थवन्मुनिः ।
सभाजयंस्तन्निभृतेन चेतसा जगाद सत्रायणसर्वदर्शनः ॥ २२ ॥

**श्रीशुक उवाच**

हतपुत्रा दितिः शक्रपार्ष्णिग्राहेण विष्णुना । मन्युना शोकदीप्तेन ज्वलन्ती पर्यचिन्तयत् ॥ २३ ॥

---

१. प्रभुः २. कश्यपस्य ३. कश्यपदायादान् ४. मतिर्भार्याऽसूत
५. उशनायाम् * ६. तस्यानुभावं सुश्लोक्यम् * ७. किं नु साधु

कदा नु भ्रातृहन्तारं इन्द्रियाराममुल्बणम् । अक्लिन्नहृदयं पापं घातयित्वा स्वपे सुखम् ॥ २४ ॥
कृमिविड्भस्मसञ्ज्ञाऽन्ते यस्येशाभिहितस्य वा । भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः ॥
आशासानस्य तस्येदं ध्रुवमुन्नद्धचेतसः । मदशोषणमिन्द्रस्य भूयाद् येन सुतो हि मे ॥ २६ ॥
इति भावेन सा भर्तुराचचारासकृत् प्रियम् । शुश्रूषयाऽनुरागेण प्रश्रयेण दमेन च ॥ २७ ॥
भक्त्या परमया राजन् मनोज्ञैर्वल्गुभाषितैः । मनो जग्राह भावज्ञा सस्मितापाङ्गवीक्षणैः ॥ २८ ॥
एवं स्त्रिया जडीभूतो विद्वानपि विदग्धया । बाढमित्याह विवशो न तच्चित्रं हि योषिति ॥ २९ ॥
विलोक्यैकान्तभूतानि भूतान्यादौ प्रजापतिः । स्त्रियं चक्रे स्वदेहार्धां[१] यया पुंसां मतिर्हृता ॥ ३० ॥
एवं शुश्रूषितस्तात भगवान् काश्यपः[२] स्त्रिया । प्रहस्य परमप्रीतो दितिमाहाभिनन्द्य च ॥ ३१ ॥

**काश्यप उवाच**

वरं वरय वामोरु प्रीतस्तेऽहमनिन्दिते । स्त्रीणां भर्तरि सुप्रीते कः काम इह चागमः ॥ ३२ ॥
पतिरेव हि नारीणां दैवतं परमं स्मृतम् । मानसः सर्वभूतानां वासुदेवः श्रियः पतिः ॥ ३३ ॥
स एव देवतालिङ्गैर्नामरूपविकल्पितैः । इज्यते भगवान् पुम्भिः स्त्रीभिश्च पतिरूपधृक् ॥ ३४ ॥
तस्मात् पतिव्रता नार्यः श्रेयःकामाः सुमध्यमे । यजन्तेऽनन्यभावेन[३] पतिमात्मानमीश्वरम् ॥ ३५ ॥
योऽहं त्वयाऽर्चितो भद्रे ईदृग्भावेन भक्तितः । कं ते सम्पादये काममसतीनां सुदुर्लभम् ॥ ३६ ॥

**दितिरुवाच**

वरदो यदि मे ब्रह्मन्[४] पुत्रमिन्द्रहणं वृणे । अमृत्युं[५] मृतपुत्राऽहं येन मे घातितौ सुतौ ॥ ३७ ॥

**श्रीशुक उवाच**

निशम्य तद्वचो विप्रो विमनाः पर्यतप्यत । अहो अधर्मः सुमहानद्य मे समुपस्थितः ॥ ३८ ॥
अहो अद्येन्द्रियारामो योषिन्मय्येशमायया । गृहीतचेताः कृपणः पतिष्ये नरके ध्रुवम् ॥ ३९ ॥
कोऽतिक्रमोऽनुवर्तन्त्याः स्वभावमिह योषितः । धिङ् मां बताबुधं स्वार्थे यदहं लाळितेन्द्रियः[६] ॥
शरच्चन्द्रोपमं वक्त्रं वाचश्च[७] श्रवणामृतम् । हृदयं क्षुरधाराभं स्त्रीणां को वेद चेष्टितम् ॥ ४१ ॥
न हि कश्चित् प्रियः स्त्रीणामञ्जसा स्वाशिषात्मनाम् । पतिं पुत्रं भ्रातरं वा घ्नन्त्यर्थे घातयन्ति च ॥

---

१. स्वदेहार्धात्* २. कश्यपः ३. यजन्त्यनन्यभावेन *
४. वरदोऽसि यदि ब्रह्मन् ५. अमर्त्यम् * ६. त्वजितेन्द्रियः * ७. वचश्च

प्रतिश्रुतं ददानीति वचस्तन्न मृषा भवेत् । वधं नार्हति चेन्द्रोऽपि तत्रेदमुपकल्पये ॥ ४३ ॥

इति सञ्चिन्त्य भगवान् मारीचः कुरुनन्दन । उवाच किञ्चित् कुपित आत्मानं च विगर्हयन् ॥ ४४ ॥

काश्यप उवाच[१]

पुत्रस्ते भविता भद्रे इन्द्रहा देवबान्धवः । संवत्सरं व्रतमिदं यद्यञ्जो धारयिष्यसि ॥ ४५ ॥

दितिरुवाच

धारयिष्ये व्रतं ब्रह्मन् ब्रूहि कार्याणि यानि मे । यानि चेह निषिद्धानि न व्रतं घ्नन्ति यान्युत॥ ४६ ॥

काश्यप उवाच

न हिंस्यात् सर्वभूतानि न शपेन्नानृतं वदेत् । न छिन्द्यान्नखरोमाणि न स्पृशेद् यदमङ्गळम् ॥ ४७ ॥

नाप्सु स्नायान्न कुप्येत न सम्भाषेत दुर्जनैः । न वसीताधौतवासः स्रजं च विधृतां क्वचित् ॥ ४८ ॥

नोच्छिष्टं चण्डिकान्नं च सामिषं वृषळाहृतम् । भुञ्जीतोदक्यया दृष्टं पिबेन्नाञ्जलिना त्वपः ॥ ४९ ॥

नोच्छिष्टाऽस्पृष्टसलिला सन्ध्ययोर्मुक्तमूर्धजा । अनर्चिताऽसंयतवाक् नासंवीता बहिश्चरेत् ॥ ५० ॥

नाधौतपादा प्रयता नार्द्रपान्नाप्युदक्शिराः । शयीत नापराङ् नान्यैर्न नग्ना न च सन्ध्ययोः॥ ५१ ॥

धौतवासा शुचिर्नित्यं सर्वमङ्गळसंयुता । पूजयेत् प्रातराशात् प्राग् गोविप्रान् श्रियमच्युतम्[२] ॥ ५२ ॥

स्त्रियो वरवतीश्चार्चेत् स्रग्गन्धबलिमण्डनैः । पतिं चार्च्योपतिष्ठेत ध्यायेत् कोष्ठगतं च तम् ॥ ५३ ॥

संवत्सरं पुंसवनं व्रतमेतदविप्लुतम् । धारयिष्यसि चेत् तुभ्यं शत्रुहा[३] भविता सुतः ॥ ५४ ॥

श्रीशुक उवाच

बाढमित्यभ्युपेत्याथ दिती राजन् महामनाः । काश्यपात् गर्भमाधत्त व्रतं चाञ्जो दधार सा ॥ ५५ ॥

मातृष्वसुरभिप्रायमिन्द्र आज्ञाय मानद । शुश्रूषणेनाश्रमस्थां दितिं पर्यचरत् कविः ॥ ५६ ॥

नित्यं वनात् सुमनसः फलमूलसमित्कुशान् । पत्राङ्कुरमृदापश्च कालेकाल उपाहरत् ॥ ५७ ॥

एवं तस्या व्रतस्थाया व्रतच्छिद्रं हरिर्नृप । प्रेप्सुः पर्यचरज्जिह्मो मृगहेव मृगाकृतिः ॥ ५८ ॥

नाध्यगच्छद् व्रतच्छिद्रं तत्परोऽथ महीपते । चिन्तां तीव्रां गतः शक्रः केन मे स्याच्छिवं त्विह ॥

एकदा सा तु सन्ध्यायामुच्छिष्टा व्रतकर्शिता । अस्पृष्टवार्यधौताङ्घ्रिः सुष्वाप विधिमोहिता ॥ ६० ॥

लब्ध्वा तदन्तरं शक्रो निद्रोपहृतचेतसः । दितेः प्रविष्ट उदरं योगेशो योगमायया ॥ ६१ ॥

चकर्त्त सप्तधा गर्भं वज्रेण कनकप्रभम् । रुदन्तं सप्तधैकैकं मा रोदीरिति तान् पुनः ॥ ६२ ॥

---

१. कश्यप इत्यर्वाचीनपाठः सर्वत्रोत्तरत्र ज्ञेयः । २. प्राग् विप्रान् श्रियमथाच्युतम् * ३. शक्रहा

ते तमूचुः पाट्यमानाः सर्वे प्राञ्जलयो नृप । नो जिघांससि किं त्विन्द्र[१] भ्रातरो[२] मरुतस्तव।। ६३ ।।
मा भैष्ट भ्रातरो मह्यं यूयमित्याह कौशिकः । अनन्यभावान् पार्षदानात्मनो मरुतां गणान् ।। ६४ ।।
न ममार दितेर्गर्भः श्रीनिवासानुकम्पया । बहुधा कुलिशक्षुण्णो द्रौण्यस्त्रेण यथा भवान् ।। ६५ ।।
सकृदिष्ट्वाऽपि पुरुषं पुरुषो याति साम्यताम् । संवत्सरं किञ्चिदूनं दित्या यद्धरिरर्चितः ।। ६६ ।।
सजूरिन्द्रेण पञ्चाशद् देवास्ते मरुतोऽभवन् । व्यपोह्य मातृदोषं ते हरिणा सोमपाः कृताः ।। ६७ ।।
दितिरुत्थाय ददृशे कुमाराननलप्रभान् । इन्द्रेण सहितान् देवी पर्यतुष्यदनिन्दिता ।। ६८ ।।
अथेन्द्रमाह ताताहमादित्यानां भयावहम् । अपत्यमिच्छन्त्यचरं व्रतमेतत् सुदुश्चरम् ।। ६९ ।।
एकः सङ्कल्पितः पुत्रः सप्तसप्ताभवन् कथम् । यदि ते विदितं पुत्र सत्यं कथय मा मृषा ।। ७० ।।
अम्ब तेऽहं व्यवसितमुपधार्यागतोऽन्तिकम् । लब्धान्तरोऽच्छिनं गर्भमर्थबुद्धिर्न धर्मवित् ।। ७१ ।।
कृतो मे सप्तधा गर्भ आसन् सप्त कुमारकाः । तेऽपि चैकैकशो वृक्णाः सप्तधा नापि मम्रिरे ।। ७२ ।।
ततस्तत् परमाश्चर्यं वीक्ष्याध्यवसितं मया । महापुरुषपूजायाः सिद्धिः कार्यानुषङ्गिणी ।। ७३ ।।
आराधनं भगवत ईहमाना निराशिषः । ये तु नेच्छन्त्यपि वरं ते स्वार्थकुशलाः स्मृताः ।। ७४ ।।
आराध्यात्मप्रदं देवमात्मानं जगदीश्वरम् । को वृणीत गुणस्पर्शं बुधः स्यान्नरकेऽपि यत् ।। ७५ ।।
तदिदं मम दौर्जन्यं बालिशस्य महीयसि । क्षन्तुमर्हसि मातस्त्वं दिष्ट्या गर्भोऽमृतोत्थितः ।। ७६ ।।

**श्रीशुक उवाच**

इन्द्रस्तयाऽप्यनुज्ञातः शुद्धभावेन तुष्टया । मरुद्भिः सह तां नत्वा जगाम त्रिदिवं प्रभुः ।। ७७ ।।
एवं ते सर्वमाख्यातं यन्मां त्वं प्ररिपृच्छसि । मङ्गलं मरुतां जन्म किं भूयः कथयामि ते ।। ७८ ।।

**।। इति श्रीमद्भागवते षष्ठस्कन्धे अष्टादशोऽध्यायः।।**

---

**राजोवाच**

व्रतं पुंसवनं ब्रह्मन् भवता यदुदीरितम् । तस्य वेदितुमिच्छामो येन विष्णुः प्रसीदति ।। १ ।।

**श्रीशुक उवाच**

शुक्ले मार्गशिरे पक्षे योषिद् भर्तुरनुज्ञया । आरभेत व्रतमिदं सार्वकामिकमादितः ।। २ ।।
निशम्य मरुतां जन्म ब्राह्मणाननुमन्त्र्य च । स्नात्वा शुक्लदती शुक्ले वसित्वाऽलङ्कृताम्बरे ।। ३ ।।

---

१. किं न्विन्द्र २. किं न इन्द्र जिघांससि भ्रातरः *

पूजयेत् प्रातराशात् प्राक् भगवन्तं श्रिया सह । नमस्ते निरपेक्षाय पूर्णकाम नमोऽस्तु ते ।
महाविभूतिपतये नमः सङ्कल्पसिद्धये ॥ ४ ॥
यतस्त्वं कृपया भूत्या तेजसा महतौजसा । जुष्ट ईश गुणैः सर्वैस्ततोऽसि भगवान् विभुः ॥ ५ ॥
विष्णुपत्नि महामाये महापुरुषलक्षणे । प्रीयेथा मे महाभागे लोकमातर्नमोऽस्तु ते ॥ ६ ॥

ओं नमो भगवते महापुरुषाय महानुभावाय महाविभूतिपतये बलिमुपाहराणीति[१] ।

अनेनाहरहर्मन्त्रेण [२]विष्णोरासनार्घ्यपाद्योपस्पर्शनस्नानवासउपवीतभूषणगन्ध-पुष्पधूपोपहाराद्युपचारांश्च समाहित उपाहरेत् ॥ ७ ॥

हविश्शेषं तु जुहुयादनले द्वादशाहुतीः । ओं नमो भगवते महापुरुषाय महाविभूतिपतये स्वाहेति ।
श्रियं विष्णुं च वरदावाशिषां प्रभवावुभौ । भक्त्या सम्पूजयेन्नित्यं यदीच्छेत् सर्वसम्पदः ॥ ८ ॥
प्रणमेद् दण्डवद् भूमौ भक्तिप्रह्वेण चेतसा । दशवारं जपेन्मन्त्रं ततः स्तोत्रमुदीरयेत् ॥ ९ ॥
युवां तु विश्वस्य विभू जगतः कारणं परम् । इयं हि प्रकृतिः सूक्ष्मा मायाशक्तिर्दुरत्यया ॥ १० ॥
तस्या अधीश्वरः साक्षात् त्वमेव पुरुषः परः । त्वं सर्वयज्ञ इज्येयं क्रियेयं फलभुग् भवान् ॥ ११ ॥
गुणव्यक्तिरियं देवी व्यञ्जको गुणभुग् भवान् । त्वं हि सर्वशरीरात्मा[३] श्रीः शरीरेन्द्रियाशया ॥ १२ ॥
नामरूपे भगवती प्रत्ययस्त्वमपाश्रयः । यथा युवां त्रिलोकस्य वरदौ परमेष्ठिनौ ।
तथेमा उत्तमश्लोक सन्तु सत्या ममाशिषः ॥ १३ ॥
इत्यभिष्टूय वरदं श्रीनिवासं सह श्रिया । तन्निस्सार्योपहरणं दत्वाऽऽचमनमर्चयेत् ॥ १४ ॥
ततः स्तुवाना स्तोत्रेण भक्तिप्रह्वेण चेतसा । यज्ञोच्छिष्टमवघ्राय पुनरभ्यर्चयेद्धरिम् ॥ १५ ॥
पतिं च परया भक्त्या महापुरुषचेतसा । प्रियैस्तैस्तैरुपचरेत् प्रेमशीलः स्वयं पतिः ॥ १६ ॥
बिभृयात् सर्वकर्माणि पत्न्या उच्चावचानि च । कृतमेकतरेणापि दम्पत्योरुभयोरपि ॥ १७ ॥
पत्न्यां कुर्यादनर्हायां पतिरेतत्समाहितः[४] । विष्णोर्व्रतमिदं बिभ्रन्न विहन्यात् कथञ्चन ॥ १८ ॥
विप्रान् स्त्रियो[५] वरवतीः स्रग्गन्धबलिमण्डनैः । अर्चेदहरहर्भक्त्या ह्येवं नियममास्थिता ॥ १९ ॥
उद्वास्य देवं स्वे धाम्नि तन्निवेदितमग्रतः । अद्यादात्मविशुद्ध्यर्थं सर्वकामाप्तये तथा ॥ २० ॥

---

१. महाविभूतिपतये सह महाविभूतिभिर्बलिमुपहराणीति २. विष्णोरावहनार्घ्य.... ❋
३. शरीर्यात्मा ❋ ४. पतिरेव समाहितः ५. विप्रस्त्रियः ❋

एतेन पूजाविधिना मासान् द्वादश हायनम् । नीत्वा चोपरमेत्[१] साध्वी कार्त्तिके चरमेऽहनि ॥ २१ ॥

श्वोभूतेऽप उपस्पृश्य कृष्णमभ्यर्च्य पूर्ववत् । पयःशृतेन जुहुयाच्चरुणा सह सर्पिषा ।

पाकयज्ञविधानेन द्वादशैवाहुतीः पतिः ॥ २२ ॥

ब्राह्मणान् भोजयेद् भक्त्या त्वन्नाद्यैर्द्वादशात्मवित् ।

तेभ्यो दद्यात् तिलान् राजन् सोदपात्रानिडान्वितान् ॥ २३ ॥

आशिषः शिरसाऽऽदाय द्विजैः प्रीतैः समीरिताः । प्रणम्य शिरसा भक्त्या भुञ्जीत तदनुज्ञया ॥ २४ ॥

आचार्यमग्रतः कृत्वा वाग्यतः सह बन्धुभिः[२] । दद्यात् पत्न्यै चरोः शेषं सुप्रजास्त्वं सुसौभगम् ॥ २५ ॥

एतच्चरित्वा विधिवद् व्रतं विभोरभीप्सितार्थं लभते पुमानिह ।

स्त्रीर्वा तदास्थाय[३] लभेत सौभगं श्रियं प्रजां जीवपतिं यशो गृहम्[४] ॥ २६ ॥

कन्यापि विन्देत समग्रलक्षणं पतिं त्ववीरा हतकिल्बिषा गतिम् ।

मृतप्रजा जीवसुतान् धनेश्वरी सुदुर्भगा सुभगा रूपमग्र्यम् ॥ २७ ॥

विन्देद् विरूपा विरजो विमुच्यते य आमयावीन्द्रियदेहकल्पः[५] ।

एतत् पठन्नभ्युदये च कर्मण्यनन्ततृप्तिं पितृदेवतानाम् ॥ २८ ॥

तुष्टाः प्रयच्छन्ति समस्तकामान् होमावसाने हुतभुक् श्रीर्हरिश्च ।

राजन् महन्मरुतां जन्म पुण्यं दितेर्व्रतं चाभिहितं मया ते[६] ॥ २९ ॥

**॥ इति श्रीमद्भागवते महापुराणे पारमहंस्यामष्टादशसाहस्र्यां संहितायां वैयासक्यां षष्ठस्कन्धे एकोनविंशोऽध्यायः ॥**

## ॥ समाप्तश्च षष्ठस्कन्धः ॥

---

१. चोपचरेत् २. सुसमाहितः ३. स्त्रियैतदास्थाय? ❋ ४. जीवसुता धनेश्वरी

५. इन्द्रियकल्यदेहः ❋/इन्द्रियकल्पदेहः ६. महत् ते

# ॥ अथ सप्तमः स्कन्धः॥

राजोवाच

समः प्रियः सुहृद् ब्रह्मन् भूतानां भगवान् स्वयम् । इन्द्रस्यार्थे कथं दैत्यानवधीद् विषमो यथा॥ १ ॥
नह्यस्यार्थः सुरगणैः साक्षान्निश्रेयसात्मनः । नैवासुरेभ्यो विद्वेषो नोद्वेगश्चागुणस्य हि ॥ २ ॥
इति नः सुमहाभाग नारायणगुणान् प्रति । संशयः सुमहान् जातस्तं भवांश्छेत्तुमर्हति ॥ ३ ॥

श्रीशुक उवाच

साधु पृष्टं महाराज हरेश्चरितमद्भुतम् । यत्र[1] भागवतमाहात्म्यं भगवद्भक्तिवर्धनम् ॥४ ॥
गीयते परमं पुण्यं ऋषिभिर्नारदादिभिः । नत्वा कृष्णाय मुनये कथयिष्ये हरेः कथाम् ॥ ५ ॥
निर्गुणोऽपि ह्यजोऽव्यक्तो भगवान् प्रकृतेः परः । स्वमायागुणमाविश्य बाध्यबाधकतां गतः॥ ६ ॥
सत्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः । न तेषां युगपद् राजन् ह्रास उल्लाह एव च[2] ॥ ७ ॥
जयकाले तु सत्वस्य देवर्षीन् रजसोऽसुरान् । तमसो यक्षरक्षांसि तत्कालानुगुणो भजन् ॥ ८ ॥
ज्योतिरादिरिवाभाति सङ्घातान्न विविच्यते । [3]विन्दन्त्यात्मानमात्मस्थं मथित्वा कवयोऽन्ततः ॥

यदा सिसृक्षुः पुर आत्मनः परो रजः सृजत्येष पृथक् स्वमायया ।
सत्वं विचित्रासु रिरंसुरीश्वरः शयिष्यमाणस्तम ईरयत्यसौ ॥१०॥
कालं चरन्तं[4] सृजतीश आश्रयः प्रधानपुम्भ्यां नरदेव सत्यकृत् ।
स तत्र तत्रोभयसिद्धिमाप्नुयात् लिङ्गात्मनो लिङ्गगुणाश्च सन्ति ॥ ११ ॥
य एष राजन्नपि काल ईशिता सत्वं सुरानीकमिवैधयत्यजः ।
तत्प्रत्यनीकानसुरान् सुरप्रियो रजस्तमस्कान् प्रमिणोत्युरुश्रवाः ॥ १२ ॥

स वा पुनः स्वसृष्टस्य स्थितिरक्षानुवृत्तये । सत्वं सुरगणान् विष्णुरुपबृंहयते मुहुः* ॥ १३ ॥
अत्रैवोदाहृतः पूर्वमितिहासः सुरर्षिणा । प्रीत्या महाक्रतौ राजन् पृच्छतेऽजातशत्रवे ॥ १४ ॥
दृष्ट्वा महाद्भुतं राजा राजसूये महाक्रतौ । वासुदेवे भगवति सायुज्यं चेदिभूभुजः ॥ १५ ॥
तत्रासीनं सुरऋषिं राजा पाण्डुसुतः क्रतौ । पप्रच्छ विस्मितमना मुनीनां शृण्वतामिदम् ॥ १६ ॥
अहो ह्यत्यद्भुतं ह्येतद् दुर्लभैकान्तिनामपि । वासुदेवे परे तत्वे प्राप्तिश्चैद्यस्य विद्विषः ॥ १७ ॥

---

१. तत्र/यद्   २. वा   ३. विदन्त्या....   ४. च सन्तम्   * अयं श्लोको मूलकोशेषु नास्ति ।

एतद् वेदितुमिच्छामः सर्व एव वयं मुने । भगवन्निन्दया वेनो द्विजैस्तमसि पातितः ॥ १८ ॥
दमघोषसुतः पाप आरभ्य कळभाषणात् । सम्प्रत्यमर्षी गोविन्दे दन्तवक्रश्च दुर्मतिः ॥ १९ ॥
शपतोरसकृद् विष्णुं यद् ब्रह्म परमव्ययम् । श्वित्रो न जातो जिह्वायां नान्धं विविशतुस्तमः[१] ॥ २० ॥
कथं तस्मिन् भगवति दुरवग्राह्यधामनि । पश्यतां सर्वलोकानां लयमीयतुरञ्जसा ॥ २१ ॥
एतद् भ्राम्यति मे बुद्धिर्दीपार्चिरिव वायुना । ब्रूह्येतदद्भुततमं भगवन्नत्र कारणम् ॥ २२ ॥

### श्रीशुक उवाच

राज्ञस्तद्वच आकर्ण्य नारदो भगवान् ऋषिः । तुष्टः[२] प्राह तमाभाष्य शृण्वन्त्याः सदसः कथाः[३] ॥

### नारद उवाच

निन्दनस्तवसत्कारन्यक्कारार्थं[४] कळेबरम् । प्रधानपरयो राजन्नविवेकेन कल्पितम् ॥ २४ ॥
हिंसा तदभिमानेन दण्डपारुष्ययोरपि । वैषम्यमिह भूतानां ममाहमिति पार्थिव ॥ २५ ॥
यन्निबन्धोऽभिमानोऽयं तद्वधात् प्राणिनां वधः । तथा न यस्य कैवल्यादभिमानोऽखिलात्मनः ।
परस्येदमकर्तुर्हि हिंसा केनास्य कल्प्यते ॥ २६ ॥
तस्माद् वैरानुबन्धेन निर्वैरेण भयेन वा । स्नेहात् कामेन वा युञ्ज्यात् कथञ्चिन्नेक्षते पृथक् ॥ २७ ॥
यथा वैरानुबन्धेन मर्त्यस्तन्मयतामियात् । न तथा भक्तियोगेन इति मे निश्चिता मतिः ॥ २८ ॥
कीटः पेशस्कृता रुद्धः कुडचे यान्तमनुस्मरन् । संरम्भभययोगेन विन्दते तत्सरूपताम् ॥ २९ ॥
एवं कृष्णे भगवति मायामनुज ईश्वरे । वैरेण धूतपाप्मानः तमापुरनुचिन्तया ॥ ३० ॥
कामात् स्नेहाद् भयाद् द्वेषाद् यथा भक्त्येश्वरे मनः । आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः ॥ ३१ ॥
गोप्यः कामाद् भयात् कंसो द्वेषाच्चैद्यादयो नृपाः । सम्बन्धाद् वृष्णयः स्नेहाद् यूयं भक्त्या वयं विभो ॥
कतमोऽपि न वेनस्य पञ्चानां पुरुषं प्रति । तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत् ॥ ३३ ॥
मातृष्वसेयो वश्चैद्यो दन्तवक्रश्च पार्थिव । पार्षदप्रवरौ विष्णोर्विप्रशापात् पदच्युतौ ॥ ३४ ॥

### युधिष्ठिर उवाच

कीदृशः कस्य वा शापो हरिदासाभिमर्शनः । अश्रद्धेय इवाभाति हरेरेकान्तिनां भवः ॥ ३५ ॥
देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम् । देहसम्बन्धसम्बन्धमेतदाख्यातुमर्हसि ॥ ३६ ॥

---

१. नान्धं वा प्राविशत् तमः❋/ नान्धं वाऽप्यविशत् तमः । २. पृष्टः❋
३. कथाम् ४. न्यक्कारार्थे❋

नारद उवाच

एकदा ब्रह्मणः पुत्रा विष्णोर्लोकं यदृच्छया । सनन्दनादयो जग्मुश्चरन्तो भुवनत्रयम् ॥ ३७ ॥

पञ्चषड्ढायनार्भाभाः पूर्वेषामपि पूर्वजाः । दिग्वाससः शिशून् मत्वा द्वाःस्थौ तान् प्रत्यषेधताम् ॥३८॥

अशपन् कुपिता एवं युवां वासं न चार्हथः । रजस्तमोभ्यां रहिते पादमूले मधुद्विषः ।
पापिष्ठामासुरीं योनिं बालिशौ यातमाश्वतः ॥ ३९ ॥

एवं शप्तौ स्वभवनात् पतन्तौ तैः कृपाळुभिः । प्रोक्तौ पुनर्जन्मभिर्वां त्रिभिर्लोकाय कल्प्यताम्[१] ॥४०॥

जज्ञाते तौ दितेः पुत्रौ दैत्यदानववन्दितौ । हिरण्यकशिपुर्ज्येष्ठो हिरण्याक्षोऽनुजस्ततः ॥ ४१ ॥

हतो हिरण्यकशिपुर्हरिणा सिंहरूपिणा । हिरण्याक्षो धरोद्धारे बिभ्रता सौकरं वपुः ॥ ४२ ॥

हिरण्यकशिपुः पुत्रं प्रह्लादं भगवत्प्रियम् । जिघांसुरकरोन्नाना यातना मृत्युहेतवे ॥ ४३ ॥

तं सर्वभूतात्मभूतं प्रशान्तं समदर्शनम् । भगवत्तेजसा स्पृष्टं नाशक्नोद्धन्तुमुद्यमैः ॥ ४४ ॥

ततस्तौ राक्षसौ जातौ केशिन्यां विश्रवःसुतौ । रावणः कुम्भकर्णश्च सर्वलोकोपतापनौ ॥ ४५ ॥

तत्रापि राघवो भूत्वा न्यहनच्छापमुक्तये । रामवीर्यं श्रोष्यसि त्वं मार्कण्डेयमुखात् प्रभो ॥ ४६ ॥

तावद्य क्षत्रियौ जातौ मातृष्वस्रात्मजौ तव । अधुना शापनिर्मुक्तौ कृष्णचक्रहतांहसौ ॥ ४७ ॥

वैरानुबन्धतीव्रेण ध्यानेनाच्युतसात्म्यताम्[२] । नीतौ पुनर्हरेः पार्श्वं जग्मतुर्विष्णुपार्षदौ ॥ ४८ ॥

युधिष्ठिर उवाच

विद्वेषो दयिते पुत्रे कथमासीन्महात्मनि । ब्रूहि मे भगवन् येन प्रह्लादेऽप्यच्युतात्मनि ॥ ४९ ॥

॥ इति श्रीमद्भागवते सप्तमस्कन्धे प्रथमोऽध्यायः ॥

---

नारद उवाच

भ्रातर्येवं विनिहते हरिणा क्रोडमूर्तिना । हिरण्यकशिपू राजन् पर्यतप्यद् रुषा शुचा ॥ १ ॥

आह चेदं रुषा घूर्णः सन्दष्टदशनच्छदः । कोपोज्ज्वलाभ्यां चक्षुर्भ्यां निरीक्षन् धूम्रमम्बरम् ॥ २ ॥

कराळदंष्ट्रोग्रदृष्ट्या दुष्प्रेक्ष्यभ्रुकुटीमुखः । शूलमुद्यम्य सदसि दानवानिदमब्रवीत् ॥ ३ ॥

हिरण्यकशिपुरुवाच

भो भो दानवदैतेया द्विमूर्धस्त्र्यक्ष शम्बर । शतबाहो हयग्रीव नमुचे पाक इल्वल ॥ ४ ॥

---

१. कल्पताम्   २. साम्यताम्

विप्रचित्ते मम वचः पुलोमन् शकुनादयः । शृणुताऽनन्तरं सर्वैः[१] क्रियतामाशु माचिरम् ॥ ५ ॥
सपत्नैर्घातितः क्षुद्रैर्भ्राता मे दयितः सुहृत् । पार्ष्णिग्राहेण हरिणा समेनाप्युपधावनैः ॥ ६ ॥
तस्य त्यक्तस्वभावस्य[२] घृणेर्मायावनौकसः । भजन्तं भजमानस्य बालस्येवास्थिरात्मनः ॥ ७ ॥
मच्छूलभिन्नग्रीवस्य भूरिणा रुधिरेण वै । युधि प्रियं तर्पयिष्ये भ्रातरं मे गतव्यथः[३] ॥ ८ ॥
तस्मिन् कूटेऽहिते नष्टे कृत्तमूले वनस्पतौ । विटपा इव शुष्यन्ति विष्णुप्राणा दिवौकसः ॥ ९ ॥
तावद् यात भुवं यूयं ब्रह्मक्षत्रसमेधिताम् । सूदयध्वं तपोयज्ञस्वाध्यायव्रतदानकान् ॥ १० ॥
विष्णुर्द्विजक्रियामूलो यज्ञो धर्ममयः पुमान् । देवर्षिपितृभूतानां धर्मस्य च परायणम् ॥ ११ ॥
यत्र यत्र द्विजा गावो वेदा वर्णाश्रमक्रियाः । तं तं जनपदं यात सन्दीपयत वृश्चत ॥ १२ ॥
इति ते भर्तृनिर्देशमादाय शिरसाऽऽदृताः । तथा प्रजानां कदनं विदधुः कदनप्रियाः ॥ १३ ॥
पुरग्रामव्रजोद्यानक्षेत्रारामाश्रमाकरान् । खेटखर्पटघोषांश्च[४] ददहुः पत्तनानि च ॥ १४ ॥
केचित् खनित्रैर्बिभिदुः सेतुप्राकारगोपुरान् । आजीव्यांश्चिच्छिदुर्वृक्षान् केचित् परशुपाणयः ।
प्रादहञ्छरणानन्ये प्रजानां ज्वलितोल्मुकैः ॥ १५ ॥
एवं विप्रकृते लोके दैत्येन्द्रानुचरैर्मुहुः । दिवं देवाः परित्यज्य भुवि चेरुरलक्षिताः ॥ १६ ॥
हिरण्यकशिपुर्भ्रातुः सम्परेतस्य दुःखितः । कृत्वा कटोदकादीनि भ्रातृपुत्रानसान्त्वयत् ॥ १७ ॥
शकुनिं शम्बरं धृष्टं भूतसन्तपनं वृकम् । कालनेमिं महानाभं हरिश्मश्रुमथोल्कलम्[५] ॥ १८ ॥
तन्मातरं रुशाभानुं दितिं च जननीं गिरा । श्लक्ष्णया देशकालज्ञ इदमाह जनेश्वर ॥ १९ ॥

**हिरण्यकशिपुरुवाच**

अम्बाम्ब हे वधूः पुत्रा वीरं माऽर्हथ शोचितुम् । रिपोरभिमुखे श्लाघ्यः शूराणां वध ईप्सितः ॥ २० ॥
भूतानामिह संवासः प्रपायामिव सुव्रते । दैवेनैकत्र नीतानामुन्नीतानां तथाऽध्रुवः ॥ २१ ॥
नित्य आत्माऽव्ययः शुद्धः सर्ववित् सर्वगः परः । धत्तेऽसावात्मनो लिङ्गं मायया विसृजन् गुणान् ॥
यथाऽम्भसा प्रचलता तरवोऽपि चला इव । चक्षुषा भ्राम्यमाणेन दृश्यते भ्रमतीव भूः ॥ २३ ॥
एवं गुणैर्भ्राम्यमाणे मनस्यविकलः पुमान् । याति तत्साम्यतां भद्रे ह्यलिङ्गो लिङ्गवानिव ॥ २४ ॥

---

१. सर्वे २. स्वभावस्याघृणेः.....❋ ३. हतव्यथः
४. खेटखर्वटघोषांश्च ५. अथोत्कलम्

एष आत्मविपर्यासो ह्यलिङ्गे लिङ्गभावना। एवं प्रियाप्रियैर्योगो वियोगः कर्मसंसृतिः ॥१५॥

सम्भवश्च विनाशश्च शोकश्च विविधः स्मृतः। अविवेकश्च चिन्ता च विवेकस्मृतिरेव च ॥ १६ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम्। यमस्य प्रेतबन्धूनां संवादं तं निबोधत ॥ २७ ॥

उशीनरेष्वभूद् राजा सुयज्ञ इति विश्रुतः। सपत्नैर्निहतो युद्धे ज्ञातयस्तमुपासत ॥ २८ ॥

विशीर्णरत्नकवचं विभ्रष्टाभरणस्रजम्। शरनिर्भिण्णहृदयं शयानमसृगाविलम् ॥ २९ ॥

विकीर्णकेशं स्तब्धाक्षं संरम्भाद् दष्टदच्छदम्। रजःकुण्ठमुखाम्भोजं छिन्नायुधभुजं मृधे ॥ ३० ॥

उशीनरेन्द्रं विधिना तथाकृतं पतिं महिष्यः प्रसमीक्ष्य दुःखिताः।
हताः स्म नाथेति करैरुरो भृशं घ्नन्त्यो मुहुस्तत्पदयोरुपापतन् ॥ ३१ ॥

रुदन्त्य उच्चैर्दयिताङ्घ्रिपङ्कजं सिञ्चन्त्य आस्रैः कुचकुङ्कुमारुणैः।
विस्रस्तकेशाभरणाः शुचं नृणां सृजन्त्य आक्रन्दनया विलेपिरे ॥ ३२ ॥

अहो विधात्राऽकरुणेन नः [१]प्रभुर्भवान् प्रणीतो धिगगोचरं दृशाम्।
उशीनराणामपि वृत्तिदः पुरा कृतोऽधुना येन शुचां विवर्धनः ॥ ३३ ॥

त्वया कृतज्ञेन वयं महीपते कथं विना स्याम सुहृत्तमेन।
तत्रानुयानं तव वीर पादयोः शुश्रूषतीनां दिश यत्र यास्यसि ॥ ३४ ॥

एवं विलपतीनां वै परिगृह्य मृतं पतिम्। अनिच्छतीनां निर्हारमर्कोऽस्तं सन्न्यवर्तत ॥ ३५ ॥

तत्र ह प्रेतबन्धूनामाश्रुत्य परिदेवनम्। आह तान् बालको भूत्वा यमः स्वयमुपागतः ॥ ३६ ॥

**यम उवाच**

अहो अमीषां वयसाऽधिकानां विपश्यतां लोकविधिं विमोहः[२]।
यत्रोद्भवस्तत्र गतं मनुष्यं स्वयं सधर्मा अनुशोचन्त्यपार्थम् ॥ ३७ ॥

अहो वयं धन्यतमा यदत्र त्यक्ताः पितृभ्यां न विचिन्तयामः।
अभक्ष्यमाणा अबला वृकादिभिः स रक्षिता रक्षति यो हि गर्भे ॥ ३८ ॥

य इच्छयेशः सृजतीदमव्ययो य एव रक्षत्यवलुम्पते यः।
तस्याबलाः क्रीडनमाहुरीशितुश्चराचरं निग्रहसङ्ग्रहे प्रभोः ॥ ३९ ॥

---

१. नः प्रभो भवान् ❋ २. विमोहम् ❋

पथि च्युतं तिष्ठति दिष्टरक्षितं गृहे स्थितं तद्विहतं विनश्यति ।
जीवत्यनाथोऽपि तदीक्षितो वने गृहेऽपि गुप्तोऽस्य हतो न जीवति ॥ ४० ॥
भूतानि तैस्तैर्निजयोनिकर्मभिर्भवन्ति काले न भवन्ति सर्वशः ।
न तत्र ह्यात्मा प्रकृतावपि स्थितस्तस्या गुणैरन्यतमो निबध्यते ॥ ४१ ॥
इदं शरीरं पुरुषस्य मोहजं यथा पृथग् भौतिकमीयते गृहम् ।
तथोदकैः[1] पार्थिवतैजसैर्जनः कालेन जातो विकृतो विनश्यति ॥ ४२ ॥
यथाऽनलो दारुषु भिन्न ईयते यथाऽनिलो देहगतः पृथक् स्थितः ।
यथा नभः सर्वगतं न सज्जते तथा गुणैः सर्वगुणाश्रयः परः ॥ ४३ ॥
सुयज्ञो नन्वयं शेते मूढा यमनुशोचथ । यः श्रोता योऽनुवक्तेह न स दृश्येत कर्हिचित् ॥ ४४ ॥
न श्रोता नानुवक्ताऽयं[2] मुख्योऽप्यत्र महानसुः । यस्त्विहेन्द्रियवानात्मा स चान्यः प्राणदेहयोः ॥
भूतेन्द्रियमनोलिङ्गान् देहानुच्चावचान् विभुः । भजत्युत्सृजति ह्यन्यस्तच्चापि स्वेन तेजसा ॥ ४६ ॥
यावल्लिङ्गान्वितो ह्यात्मा तावत् कर्मनिबन्धनः । ततो विपर्ययः क्लेशो मायायोगोऽनुवर्तते ॥ ४७ ॥
वितथाभिनिवेशोऽयं यद्गुणेष्वर्थदृग्वचः । यथा मनोरथः स्वप्नः सर्वमैन्द्रियकं मृषा ॥ ४८ ॥
अथ नित्यमनित्यं वा नेह शोचन्ति तद्विदः । नान्यथा शक्यते कर्तुं स्वभावः शोचतामिति॥ ४९ ॥
लुब्धको विपिने कश्चित् पक्षिणां निर्मितोऽन्तकः । वितत्य जालं विदधे तत्र तत्र प्रलोभनम्॥ ५० ॥
कुळिङ्गमिथुनं तत्र विचरन् समदृश्यत । तयोः कुळिङ्गी सहसा लुब्धकेन प्रलोभिता ॥ ५१ ॥
साऽसज्जत सिचा तन्त्र्या महिषी कालयन्त्रिता । कुळिङ्गस्तां तथाऽऽपन्नां निरीक्ष्य भृशदुःखितः ॥
स्नेहादकल्पः कृपणां पर्यदेवयदातुरः । अहो अकरुणो देवः स्त्रिया कृपणया विभुः ॥ ५३ ॥
कृपणं माऽनुशोचन्त्या दीनया किं करिष्यति । कामं नयतु मां देवः किमर्द्धेनात्मनो हि मे ॥ ५४ ॥
दीनेन जीवता दुःखं मन्देन विधुरायुषा । कथं त्वजातपक्षांस्तान् मातृहीनान् बिभर्म्यहम् ।
मन्दभाग्या प्रतीक्षन्ते नीडे मे मातरं प्रजाः ॥ ५५ ॥
एवं कुळिङ्गं विरुवन्तमारात् प्रियावियोगातुरमश्रुकण्ठम् ।
तदैव तं शाकुनिकः शरेण विव्याध कालप्रहितो निलीनः[3] ॥ ५६ ॥

---

१. यथोदकैः २. नानुवक्ता वा॰ ३. विलीनः

एवं यूयमपश्यन्त्य आत्मापायमबुद्धयः । नैनं प्राप्स्यथ शोचन्त्यः पतिं वर्षशतैरपि ॥ ५७ ॥

**हिरण्यकशिपुरुवाच**

बाल एवं प्रवदति सर्वे विस्मितचेतसः । ज्ञातयो मेनिरे सर्वमनित्यमयथोत्थितम् ॥ ५८ ॥

यम एतदुपाख्याय तत्रैवान्तरधीयत । ज्ञातयोऽपि सुयज्ञस्य चक्रुर्यत् साम्परायिकम् ।

ततः शोचत मा यूयं परं चात्मानमेव वा[1] ॥ ५९ ॥

क आत्मा कः परो वाऽत्र स्वीयः पारक्य एव वा । स्वपराभिनिवेशेन विनाऽज्ञानेन देहिनः ॥६०॥

**नारद उवाच**

इति दैत्यपतेर्वाक्यं दितिराकर्ण्य सस्नुषा । पुत्रशोकं क्षणात् त्यक्त्वा तत्त्वे चित्तमधारयत् ॥ ६१ ॥

**॥ इति श्रीमद्भागवते सप्तमस्कन्धे द्वितीयोऽध्यायः ॥**

---

**नारद उवाच**

हिरण्यकशिपू राजन्नजेयमजरामरम् । आत्मानमप्रतिद्वन्द्वमेकराजं व्यधित्सत ॥ १ ॥

स तेपे मन्दरद्रोण्यां तपः परमदारुणम् । ऊर्ध्वबाहुर्नभोदृष्टिः पादाङ्गुष्ठाश्रितावनिः ॥ २ ॥

जटादीधितिभी रेजे संवर्तार्क इवांशुभिः । तस्मिंस्तपस्तप्यमाने देवाः स्थानानि भेजिरे ॥ ३ ॥

तस्य मूर्ध्नः समुद्भूतः सधूम्रोऽग्निस्तपोमयः । तिर्यगूर्ध्वमधोलोकानतपद् विष्वगीरितः ॥ ४ ॥

चुक्षुभुर्नद्युदन्वन्तः सद्वीपाद्रिश्चचाल भूः । निपेतुः सग्रहास्तारा जज्वलुश्च दिशो दश ॥ ५ ॥

तेन तप्ता दिवं त्यक्त्वा ब्रह्मलोकं ययुः सुराः । धात्रे विज्ञापयामासुर्देवदेव जगत्पते ॥ ६ ॥

दैत्येन्द्रतपसा तप्ता दिवि स्थातुं न शक्नुमः । तस्य चोपशमं भूमन् विधेहि यदि मन्यसे ॥ ७ ॥

लोका न यावन्नङ्क्ष्यन्ति बलिहारास्तवापि भो[2] । तस्यायं किल सङ्कल्पश्चरतो दुश्चरं तपः ॥ ८ ॥

श्रूयतां किन्त्वविदितं तथापि स निवेद्यते । सृष्ट्वा चराचरमिदं तपोयोगसमाधिना ॥ ९ ॥

अध्यास्ते सर्वधिष्ण्येभ्यः परमेष्ठी निजासनम् । तदहं वर्धमानेन तपोयज्ञसमाधिना ॥ १० ॥

कालात्मनोश्च नित्यत्वात् साधयिष्ये तथाऽऽत्मनः ॥ ११ ॥

अन्यथेदं विधास्येऽहमयथापूर्वमोजसा । किमन्यैः कालनिर्धूतैः कल्पान्तैर्वैष्णवादिभिः ॥ १२ ॥

---

१. आत्मानमेव च २. बलिहारास्तव प्रभो

इति शुश्रुम निर्बन्धं तपः परममास्थितः । विधत्स्वानन्तरं युक्तं स्वयं त्रिभुवनेश्वर ॥ १३ ॥
तवासनं हि जगतां पारमेष्ठ्यं जगत्पते । भवाय श्रेयसे भूत्यै क्षेमाय विजयाय च ॥ १४ ॥
इति विज्ञापितो देवैर्भगवानात्मभूर्नृप । परीतो भृगुदक्षाद्यैर्ययौ दैत्येश्वराश्रमम् ॥ १५ ॥
तं ददर्श प्रतिच्छन्नं वल्मीकतृणकीचकैः । पिपीलिकाभिराकीर्णं मेदत्वङ्मांसशोणितम्[1] ॥ १६ ॥
तपन्तं तपसा लोकान् यथा भावितितं रविम् । विलक्ष्य विस्मितः प्राह हसंस्तं हंसवाहनः ॥ १७ ॥

**ब्रह्मोवाच**

उत्तिष्ठोत्तिष्ठ भद्रं ते तपस्सिद्धोऽसि काश्यप । वरदोऽहमनुप्राप्तो व्रियतामीप्सितो वरः ॥ १८ ॥
अद्राक्षमहमेतत् ते हृत्सारं महदद्भुतम् । दंशभक्षितदेहस्य प्राणा ह्यस्थिषु शेरते ॥ १९ ॥
नैतत् पूर्वर्षयश्चक्रुर्न करिष्यन्ति चापरे । निरम्बुर्धारयेत् प्राणान् को वै दिव्यसमाः शतम् ॥ २० ॥
व्यवसायेन तेऽनेन दुष्करेणामनस्विभिः । तपोनिष्ठेन भवता जितोऽहं दितिनन्दन ॥ २१ ॥
ततस्त आशिषः सर्वा ददान्यसुरपुङ्गव । मर्त्यस्य ते ह्यमर्त्यस्य दर्शनं न च निष्फलम् ॥ २२ ॥

**नारद उवाच**

इत्युक्त्वाऽऽदिभवो देवो भक्षिताङ्गं पिपीलिकैः । कमण्डलुजलेनौक्षद् दिव्येनामोघराधसा ॥ २३॥
ततः कीचकवल्मीकात् सहओजोबलान्वितः । सर्वावयवसम्पन्नो वज्रसंहननो युवा ।
उत्थितस्तप्तहेमाभो विभावसुरिवैधसः ॥ २४ ॥
स निरीक्ष्याम्बरे देवं हंसवाहमवस्थितम् । ननाम शिरसा भूमौ तद्दर्शनमहोत्सवः ॥ २५ ॥
उत्थाय प्राञ्जलिः प्रह्व ईक्षमाणो दृशा विभुम् । हर्षाश्रुपुळकोद्भेदो गिरा गद्गदयाऽगृणत् ॥ २६ ॥

**हिरण्यकशिपुरुवाच**

कल्पान्ते कालसृष्टेन योऽन्धेन तमसाऽऽवृतम् । अभिव्यनग् जगदिदं स्वयञ्ज्योतिः स्वरोचिषा ॥
आत्मना त्रिवृता चेदं सृजत्यवति लुम्पति । रजःसत्वतमोधाम्ने पराय महते नमः ॥ २८ ॥
नम आद्याय बीजाय ज्ञानविज्ञानमूर्तये । प्राणेन्द्रियमनोबुद्धिविकारैर्व्यक्तिमीयुषे ॥ २९ ॥
त्वमीशिषे जगतस्तस्थुषश्च प्राणेन मुख्येन पतिः प्रजानाम् ।
चित्तस्य चित्तिर्मनइन्द्रियाणां पतिर्महाभूतगुणाशयेशः ॥ ३० ॥

---

१. आकीर्णमेदत्वङ्मांसशोणितम् ❋

त्वं सप्ततन्तून् वितनोषि तन्वा त्रय्या चतुर्होत्रकविद्यया च।
त्वमेक आत्माऽऽत्मवतामनादिरनन्तपारः कविरव्ययात्मा ॥ ३१ ॥
त्वमेव कालोऽनिमिषो जनानामायुः कलाद्यावयवैः[१] क्षिणोषि।
कूटस्थ आत्मा परमेष्ठ्यजो महान् त्वं जीवलोकस्य च जीव आत्मा ॥ ३२ ॥
त्वत्तः परं नापरमप्यनेजदेजच्च किञ्चिद् व्यतिरिक्तमस्ति।
विद्याकलास्ते तनवश्च सर्वा हिरण्यगर्भोऽसि बृहत् त्रिपृष्ठः ॥ ३३ ॥
व्यक्तं विभो स्थूलमिदं शरीरं येनेन्द्रियप्राणमनोगुणांस्त्वम्।
भुङ्क्षे स्थितो धामनि पारमेष्ठ्ये अव्यक्त आत्मा पुरुषः पुराणः ॥ ३४ ॥
अनन्ताव्यक्तरूपेण येनेदमखिलं ततम्। चिदचिच्छक्तियुक्ताय तस्मै भगवते नमः ॥ ३५ ॥
यदि दास्यस्यभिमतान् वरान् मे वरदोत्तम। भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्मा भून्मम प्रभो ॥ ३६ ॥
नान्तर्बहिर्दिवानक्तमन्यस्मादपि चायुधैः। न भूमौ नाम्बरे मृत्युर्न नरैर्न मृगैरपि ॥ ३७ ॥
व्यसुभिर्वाऽसुमद्भिर्वा सुरासुरमहोरगैः। अप्रतिद्वन्द्वतां युद्धे ऐकपत्यं च देहिनाम् ॥ ३८ ॥
सर्वेषां लोकपालानां महिमानं तथाऽऽत्मनः। तपोयोगप्रभावेन यो न रिष्यति कर्हिचित् ॥ ३९ ॥

**॥ इति श्रीमद्भागवते सप्तमस्कन्धे तृतीयोऽध्यायः ॥**

---

एवं वृतः शतधृतिः हिरण्यकशिपोरथ। प्रादात् तत्तपसा प्रीतो वरान् तस्य सुदुर्लभान् ॥ १ ॥

**ब्रह्मोवाच**

तातेमे दुर्लभाः पुंसो यान् वृणीषे वरान् मम। तथाऽपि वितराम्यङ्ग वरान् यदपि दुर्लभान् ॥ २ ॥
ततो जगाम भगवानमोघानुग्रहो विभुः। पूजितोऽसुरवर्येण स्तूयमानः प्रजेश्वरैः ॥ ३ ॥
एवं लब्धवरो दैत्यो बिभ्रद्धेममयं वपुः। भगवत्यकरोद् द्वेषं भ्रातुर्वधमनुस्मरन् ॥ ४ ॥
स विजित्य दिशः सर्वा लोकांश्च त्रीन् महासुरः। देवासुरमनुष्येन्द्रगन्धर्वगरुडोरगान् ॥ ५ ॥
सिद्धचारणविद्याध्रान् ऋषीन् पितृपतीन् मनून्। यक्षरक्षःपिशाचेशान् प्रेतभूतपतीनपि ॥ ६ ॥
सर्वसत्वपतीन् जित्वा वशमानीय विश्वजित्। जहार लोकपालानां स्थानानि सह तेजसा ॥ ७ ॥

---

१. लवाद्यावयवैः

देवोद्यानश्रिया जुष्टमध्यास्ते स्म त्रिविष्टपम् । महेन्द्रभवनं साक्षान्निर्मितं विश्वकर्मणा ॥ ८ ॥
त्रैलोक्यलक्ष्म्यायतनमध्युवासाखिलर्द्धिमत् । यत्र विद्रुमसोपाना महामरतका भुवः ॥ ९ ॥
यत्र स्फटिककुड्यानि वैडूर्यस्तम्भपङ्क्तयः । यत्र चित्रवितानानि पद्मरागासनानि च ॥ १० ॥
पयःफेननिभाः शय्या मुक्तादामपरिच्छदाः । कूजद्भिर्नूपुरैर्देव्यः शब्दयन्त्य इतस्ततः ।
रत्नस्थलीषु पश्यन्ति सुदतीः सुन्दरं मुखम् ॥ ११ ॥
तस्मिन् महेन्द्रभवने महासुरो महाबलो निर्जितलोक एकराट् ।
रेमेऽभिवन्द्याङ्घ्रियुगः सुरादिभिः प्रतापितैरूर्जितचण्डशासनः ॥ १२ ॥
तमङ्ग मत्तं मधुनोरुगन्धिना विवृत्तताम्राक्षमशेषधिष्ण्यपाः ।
उपासतोपायनपाणिभिर्विना त्रिभिस्तपोयोगबलौजसां पदम् ॥ १३ ॥
जगुर्महेन्द्रासनमोजसाऽऽस्थितं विश्वावसुस्तुम्बुरुरस्मदादयः ।
गन्धर्वसिद्धा ऋषयोऽस्तुवन् मुहुर्विद्याधरा अप्सरसश्च पाण्डव ॥ १४ ॥
स एव वर्णाश्रमिभिः क्रतुभिर्भूरिदक्षिणैः । इज्यमानो हविर्भागानग्रहीत् स्वेन तेजसा ॥ १५ ॥
अकृष्टपच्या तस्यासीत् सप्तद्वीपवती मही । तथा कामदुघा द्यौश्च नानाश्चर्यपदं नभः ॥ १६ ॥
रत्नाकराश्च रत्नानि तत्पत्न्यश्चोहुरूर्मिभिः । [1]क्षारशीधुघृतक्षौद्रदधिक्षीरामृतोदकाः ॥ १७ ॥
शैला द्रोणीभिराक्रीडं सर्वर्तुषु गुणान् द्रुमाः । दधार लोकपालानामेक एव पृथग् गुणान् ॥ १८ ॥
स इत्थं निर्जितककुबेकराड् विषयान् प्रियान् । यथोपजोषं भुञ्जानो नातृप्यदजितेन्द्रियः ॥ १९ ॥
एवमैश्वर्यमत्तस्य दृप्तस्योच्छास्त्रवर्तिनः । कालो महान् व्यतीयाय ब्रह्मशापमुपेयुषः ॥ २० ॥
तस्योग्रदण्डसंविग्नाः सर्वे लोकाः सपालकाः । अन्यत्रालब्धशरणाः शरणं ययुरच्युतम् ॥ २१ ॥
तस्यै नमोऽस्तु काष्ठायै यत्रात्मा हरिरीश्वरः । यद् गत्वा न निवर्तन्ते शान्ताः सन्न्यासिनोऽमलाः ॥
इति ते संयतात्मानः समाहितधियोऽमलाः । उपतस्थुर्हृषीकेशं विनिद्रा वायुभोजनाः ॥ २३ ॥
ओं नमो भगवते महापुरुषाय महात्मने । विशुद्धानुभवानन्दसन्दोहाय यतोऽभयम् ॥ २४ ॥
तेषामाविरभूद् वाणी अरूपा मेघनिस्वना । सन्नादयन्ती ककुभः साधूनामभयङ्करी ॥ २५ ॥
मा भैष्ट विबुधश्रेष्ठाः सर्वेषां भद्रमस्तु वः । मद्दर्शनं हि भूतानां सर्वश्रेयोपपत्तये ॥ २६ ॥
ज्ञातमेतस्य दौरात्म्यं दैतेयापशदस्य[2] यत् । तस्य शान्तिं करिष्यामि कालस्तावत् प्रतीक्ष्यताम् ॥

---

१. क्षारसीधु २. दैतेयापसदस्य

यदा देवेषु वेदेषु गोषु विप्रेषु साधुषु । धर्मे मयि च विद्वेषः स वा आशु विनश्यति ॥ २८ ॥

निर्वैराय प्रशान्ताय स्वसुताय महात्मने । प्रह्लादाय यदा द्रुह्येद्धनिष्येऽपि वरोर्जितम् ॥ २९ ॥

**नारद उवाच**

इत्युक्ता लोकगुरुणा तं प्रणम्य दिवौकसः । न्यवर्तन्त गतोद्वेगा मेनिरे चासुरं हतम् ॥ ३० ॥

तस्य दैत्यपतेः पुत्राश्चत्वारः परमाद्भुताः । प्रह्लादोऽभून्महान् तेषां गुणैर्महदुपासकः ।
ब्रह्मण्यः शीलसम्पन्नः सत्यसन्धो जितेन्द्रियः ॥ ३१ ॥

आत्मवत् सर्वभूतानामेकः प्रियसुहृत् समः[१] । दासवत् सन्नतार्याङ्घ्रिः पितृवद् दीनवत्सलः ॥ ३२ ॥

भ्रातृवत् सदृशे स्निग्धो गुरुष्वीश्वरभावनः । विद्यार्थरूपजन्माद्यैर्मानस्तम्भविवर्जितः ॥ ३३ ॥

नोद्विग्नचित्तो व्यसनेषु निःस्पृहः श्रुतेषु दृष्टेषु गुणेष्ववस्तुदृक् ।
दान्तेन्द्रियप्राणशरीरधीः सदा प्रशान्तकामो रहितासुरोऽसुरः ॥ ३४ ॥

यस्मिन् महागुणा[२] राजन् गृह्यन्ते कविभिर्मुहुः । न तेऽधुनाऽपि हीयन्ते[३] यथा भगवतीश्वरे ॥

यं साधुगाथाः सदसि[४] रिपवोऽपि सुरा नृप । प्रतिमानं प्रकुर्वन्ति किमुतान्ये भवादृशाः ॥ ३६ ॥

गुणैरलमसङ्ख्येयैर्माहात्म्यं तस्य सूच्यते । वासुदेवे भगवति यस्य नैसर्गिकी रतिः ॥ ३७ ॥

न्यस्तक्रीडनको बालो जडवत् तन्मनाः सदा । कृष्णग्रहगृहीतात्मा न वेद जगदीदृशम् ॥ ३८ ॥

आसीनः पर्यटन्नश्नन् शयानः प्रपिबन् ब्रुवन् । नानुसन्दध एतानि गोविन्दपरिरम्भितः ॥ ३९ ॥

क्वचित् रोदिति गोविन्दचिन्ताचञ्चलचेतनः । क्वचिद्धसति तच्चिन्ताह्लाद उद्गायति क्वचित् ॥ ४० ॥

नदति क्वचिदुत्कण्ठो विलज्जो नृत्यति क्वचित् । क्वचित् तद्भावनायुक्तस्तन्मयोऽनुचकार ह ॥ ४१ ॥

क्वचिदुत्पुळकस्तूष्णीमशेषस्पर्शनिःस्पृहः ।अस्पन्दप्राण आनन्दसलिलामीलितेक्षणः ॥ ४२ ॥

स उत्तमश्लोकपदारविन्दयोर्निषेवयाऽकिञ्चनसङ्गलब्धया ।
तन्वन् परां निर्वृतिमात्मनो मुहुर्दुस्सङ्गदीनः स्वमनः समं व्यधात्[५] ॥ ४३ ॥

तस्मिन् महाभागवते महाभागे महात्मनि । हिरण्यकशिपू राजन् अकरोदघमात्मजे ॥ ४४ ॥

**युधिष्ठिर उवाच**

देवर्ष एतदिच्छामो वेदितुं तव सुव्रत ।यदात्मजाय शुद्धाय पिताऽधात् साधवे अघम् ॥ ४५ ॥

---

१. प्रियसुहृत्तमः २. महद्गुणाः ३. अधुनाऽभिधीयन्ते ४. साधुगाथासदसि

५. दुस्सङ्गहीनः स्वमनश्शमं व्यधात्

पुत्रान् विप्रतिकूलांश्च[१] पितरः पुत्रवत्सलाः । उपालभन्ते शिक्षार्थं नैवाघमपरे यथा ॥ ४६ ॥
किमुतानुवशान् साधून् तादृशान् गुरुदैवतान् ।एतत् कौतूहलं ब्रह्मन्नस्माकं विधम प्रभो ॥ ४७ ॥

**॥ इति श्रीमद्भागवते सप्तमस्कन्धे चतुर्थोऽध्यायः ॥**

---

**नारद उवाच**

पौरोहित्याय भगवान् वृतः काव्यो महासुरैः[२] । शण्डामर्कौ सुतौ तस्य दैत्यराजगृहान्तिके ॥ १ ॥
तौ राज्ञा प्रापितं बालं प्रह्लादं नयकोविदम् । पाठयामासतुः पाठ्यानन्यांश्चासुरबालकान् ॥ २ ॥
यत् तत्र गुरुणा प्रोक्तं शुश्रुवे न पपाठ ह[३] । न साधु मनसा मेने स्वरूपासद्ग्रहाश्रयम् ॥ ३ ॥
एकदाऽसुरराट् पुत्रमङ्कमारोप्य लाळयन्[४] । पप्रच्छ कथ्यतां वत्स मन्यते साधु यद् भवान् ॥ ४ ॥

**प्रह्लाद उवाच**

तत् साधु मन्येऽसुरवर्य देहिनां सदा समुद्विग्नधियामसद्ग्रहात् ।
हित्वाऽऽत्मपातं गृहमन्धकूपं वनं गतो यद्धरिमाश्रयेत ॥ ५ ॥

**नारद उवाच**

श्रुत्वा पुत्रगिरो दैत्यः परपक्षसमीहिताः । जहास बुद्धिर्बालानां भिद्यते परबुद्धिभिः ॥ ६ ॥
सम्यग् विधार्यतां बालो गुरुगेहे द्विजातिभिः । विष्णुपक्षप्रतिच्छन्नैर्भिद्यते नास्य धीर्यथा[५] ॥ ७ ॥
गृहमागतमाहूय प्रह्लादं दैत्ययाजकाः । प्रशस्य श्लक्ष्णया वाचा समपृच्छन्त सामभिः ॥ ८ ॥
वत्स प्रह्लाद भद्रं ते सत्यं कथय मा मृषा । बालानति कुतस्तुभ्यमेष बुद्धिविपर्ययः ॥ ९ ॥
बुद्धिभेदः परकृत उताहो ते स्वतोऽभवत् । भण्यतां श्रोतुकामानां गुरूणां कुलनन्दन ॥ १० ॥

**प्रह्लाद उवाच**

परः स्वात्मेत्यसद्ग्राहः[६] पुंसां यन्मायया कृतः । विमोहितधियां दृष्ट स्तस्मै भगवते नमः ॥ ११ ॥
स यदाऽनुगतः पुंसां पशुबुद्धिर्विभिद्यते । अन्य एष तथाऽन्योऽहमिति देहगताऽसती ॥ १२ ॥

---

१. पुत्रेष्वप्रतिकूलेषु ? * २. किलासुरैः ३. तु ४. आरोप्य पाण्डव
५. न भिद्येतास्य धीर्यथा ६. परः स्वश्चेत्यसद्ग्राहः

स एष आत्मा स्वपरेत्यबुद्धिभिर्दुरन्वयानुक्रमणो निरुच्यते ।
मुह्यन्ति यद्वर्त्मनि वेदवादिनो ब्रह्मादयो ह्येष भिनत्ति मे मतिम् ॥ १३ ॥

यथा भ्राम्यत्ययो ब्रह्मन् स्वयमाकर्षसन्निधौ । तथा मे भिद्यते चेतश्चक्रपाणौ यदृच्छया ॥ १४ ॥

**नारद उवाच**

एतावद् ब्राह्मणायोक्त्वा विरराम महामतिः । तं सन्निर्भर्त्स्य[१] कुपितः सुदीनो राजसेवकः ॥ १५ ॥

आनीयतामरे वेत्रमस्माकमयशस्कृतः । कुलाङ्गारस्य दुर्बुद्धेश्चतुर्थोऽस्योदितो दमः ॥ १६ ॥

दैतेयचन्दनवने जातोऽयं कण्टकद्रुमः । तन्मूलोन्मूलपरशोर्विष्णोर्नाळायितोऽर्भकः ॥ १७ ॥

इति तं विविधोपायैर्भीषयन् तर्जनादिभिः । प्रह्लादं ग्राहयामास त्रिवर्गस्योपपादनम् ॥ १८ ॥

तत एनं गुरुर्ज्ञात्वा ज्ञातज्ञेयचतुष्टयम् । दैत्येन्द्रं दर्शयामास मातृमृष्टमलङ्कृतम् ॥ १९ ॥

प्रणतं पादयोर्बालं[२] प्रतिनन्द्याऽशिषाऽसुरः । परिष्वज्य चिरं दोर्भ्यां परमामाप निर्वृतिम् ॥ २० ॥

आरोप्याङ्कमवघ्राय मूर्धन्यश्रुकळाम्बुभिः । आसिञ्चन् विकसद्वक्त्र[३] इदमाह युधिष्ठिर ॥ २१ ॥

प्रह्लादानूच्यतां तात स्वधीतं किञ्चिदुत्तमम् । कालेनैतावताऽऽयुष्मन् यदशिक्षद् गुरोर्भवान् ॥ २२ ॥

**प्रह्लाद उवाच**

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ २३ ॥

इति पुंसाऽर्पिता विष्णौ भक्तिश्चेन्नवलक्षणा । क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥ २४ ॥

**नारद उवाच**

निशम्यैतत् सुतवचो हिरण्यकशिपुस्तदा । गुरुपुत्रमुवाचेदं रुषा प्रस्फुरिताधरः ॥ २५ ॥

**हिरण्यकशिपुरुवाच**

ब्रह्मबन्धो किमेतत् ते विपक्षं श्रयताऽसता । असारं ग्राहितो बालो मामनादृत्य दुर्मते ॥ २६ ॥

सन्ति ह्यसाधवो लोके दुर्मैत्राश्छद्मवासिनः[४] । तेषामुदेत्यघं काले रोगः पातकिनामिव ॥ २७ ॥

**गुरुपुत्र उवाच**

न मत्प्रणीतं न परप्रणीतं सुतो वदत्येष तवेन्द्रशत्रो ।
नैसर्गिकीयं मतिरस्य राजन् नियच्छ मन्युं क्व तदात्ममानः ॥ २८ ॥

---

१. तं निर्भर्त्स्यार्थ २. पादयोः पतितं बालम् ३. विकसद्वक्त्रम् ४. छद्मवेषिणः

नारद उवाच

गुरुणैवं प्रतिप्रोक्तो भूय आहासुरः सुतम् । न चेद् गुरुमुखीयं ते कुतोऽभद्रासती मतिः ॥ २९ ॥

प्रह्लाद उवाच

मतिर्न कृष्णे परतः स्वतोऽपि वा मिथोऽभिपद्येत गृहव्रतानाम् ।
अदान्तगोभिर्विशतां तमिस्रं पुनः पुनश्चर्वितचर्वणानाम् ॥ ३० ॥
न ते विदुः स्वार्थगतिं हि विष्णुं दुराशया ये बहिरर्थभावाः ।
अन्धा यथान्धैरुपनीयमाना वाचीशतन्त्र्यामुरुदाम्नि बद्धाः ॥ ३१ ॥
नैषां मतिस्तावदुरुक्रमाङ्घ्रिं स्पृशत्यनर्थापगमो यदुत्थः[१] ।
महीयसां पादरजोभिषेकं निष्किञ्चनानां न वृणीत यावत् ॥ ३२ ॥

नारद उवाच

इत्युक्त्वोपरतं पुत्रं हिरण्यकशिपू रुषा । अन्धीकृतात्मा स्वोत्सङ्गान्निरस्यत महीतळे ।
आहामर्षरुषाऽऽविष्टः कषायीकृतलोचनः[२] ॥ ३३ ॥

हिरण्यकशिपुरुवाच

वध्यतामाश्वयं वध्यो निस्सारयत नैर्ऋताः । अयं मे भ्रातृहा शोच्यो हित्वा स्वान् सुहृदोऽधमः ॥३ ४ ॥
पितृव्यहन्तुः स्वप्राणान् विष्णोर्दासवदर्पयन्[३] । विष्णोर्वा साध्वसौ किं नु करिष्यत्यसमञ्जसः ।
सौहृदं दुस्त्यजं पित्रोरत्यजत् पञ्चहायनः ॥ ३६ ॥
परोऽप्यवश्यं हितकृद् यथौषधं स्वदेहजोऽप्यामयवत् सुतोऽहितः ।
छिन्द्यात् तदङ्गं हि यदात्मनोऽहितं[४] शेषं सुखं जीवति यद्विवर्जनात्[५] ॥ ३७ ॥
सर्वैरुपायैर्हन्तव्यः सम्भोगशयनासनैः । सुहृल्लिङ्गधरः शत्रुर्मुनेर्दुष्टमिवेन्द्रियम् ॥ ३८ ॥
नैर्ऋतास्ते समुद्दिष्टा भर्त्रा वै शूलपाणयः । तिग्मदंष्ट्राः कराळास्याः ताम्रश्मश्रुशिरोरुहाः ॥ ३९ ॥
नदन्तो भैरवं नादं छिन्धि भिन्धीति वादिनः । आसीनमाहनन् शूलैः प्रह्लादं सवमर्मसु ॥ ४० ॥
परे ब्रह्मण्यनिर्देश्ये भगवत्यखिलात्मनि । युक्तात्मन्यफला आसन्नपुण्यस्येव तत्क्रियाः[६] ॥ ४१ ॥

---

१. यदर्थः  २. कषायीभूतलोचनः ❋  ३. पितृव्यहन्तुः पादौ यो विष्णोर्दासवदर्चति
४. तदङ्गं यदुतात्मनोऽहितम्  ५. यद्विसर्जनात्  ६. सत्क्रियाः ❋

प्रयासे नाशिते[१] तस्मिन् दैत्येन्द्रः परिशङ्कितः । चकार तद्वधोपायान्[२] निर्बन्धेन युधिष्ठिर ॥ ४२ ॥
दिग्गजैर्दन्दशूकेन्द्रैरभिचारावपातनैः । मायाभिः सन्निरोधैश्च गरदानैरभोजनैः ॥ ४३ ॥
हिमवाय्वग्निसलिलैः पर्वताक्रमणैरपि । न शशाक यदा हन्तुमपापमसुरः सुतम् ॥ ४४ ॥
चिन्तां दीर्घतमां प्राप्तः तत् कर्तुं नाभ्यपद्यत । एष मे बह्वसाधूक्तो वधोपायाश्च निर्मिताः ।
तैस्तैर्द्रोहैरसद्धर्मैर्मुक्तः स्वेनैव तेजसा ॥ ४५ ॥
वर्तमानोऽविदूरे वा बालोऽप्यजडधीरयम् । न विस्मरति मेऽनार्यं शुनःशेप इव प्रभुः ॥ ४६ ॥
अप्रमेयानुभावोऽयमकुतश्चिद्भयोऽमरः । नूनमेतद्विरोधेन मृत्युर्मे भविता न वा[३] ॥ ४७ ॥
इति तच्चिन्तया किञ्चिन्म्लानश्रियमधोमुखम् । शण्डामर्कावौशनसौ विविक्त इति होचतुः ॥ ४८ ॥
जितं त्वयैकेन जगत्त्रयं भ्रुवोर्विजृम्भणत्यक्तसमस्तधिष्ण्यपम् ।
न तस्य चिन्त्यं तव नाथ चक्ष्महे न वै शिशूनां गुणदोषयोः पदम् ॥ ४९ ॥
इमं तु पाशैर्वरुणस्य बद्धं निधेहि भीतो न पलायते यथा ।
बुद्धिश्च पुंसो वयसाऽऽर्यसेवया यावद् गुरुर्भार्गव आगमिष्यति ॥ ५० ॥
तथेति गुरुपुत्रोक्तमनुज्ञायेदमब्रवीत् । धर्मा ह्यस्योपदेष्टव्या राज्ञां ये गृहमेधिनाम् ॥ ५१ ॥
धर्ममर्थं च कामं च नितरां चानुपूर्वशः । प्रह्लादायोचतू राजन् प्रश्रितावनताय च ॥ ५२ ॥
यथा त्रिवर्गो गुरुभिरात्मने उपशिक्षितः । न साधु मेने तच्छिक्षां द्वन्द्वारामोपवर्णिताम् ॥ ५३ ॥
यदाऽऽचार्यः परावृत्तो गृहमेधीयकर्मसु । वयस्यैर्बालकैस्तत्र सोपहूतः कृतक्षणैः ॥ ५४ ॥
अथ तान् श्लक्ष्णया वाचा प्रत्याहूय महान् बुधः । उवाच विद्वान् तन्निष्ठां कृपया प्रहसन्निव ॥ ५५ ॥
ते तु तद्गौरवात् सर्वे त्यक्तक्रीडापरिच्छदाः । बाला नदूषितधियो द्वन्द्वारामेरितेहितैः ॥ ५६ ॥
पर्युपासत राजेन्द्र तन्न्यस्तहृदयेक्षणाः । तानाह करुणो मैत्रो महाभागवतोऽसुरः ॥ ५७ ॥

**॥ इति श्रीमद्भागवते सप्तमस्कन्धे पञ्चमोऽध्यायः ॥**

---

**प्रह्लाद उवाच**

हन्तार्भका मे शृणुत वचो वः सर्वतः शिवम् । वयस्यान् पश्यत मृतान् क्रीडान्धा मा प्रमाद्यथ॥ १ ॥

---

१. अपहृते २. वधोपायम् * ३. भविता ध्रुवम्

न पुरा विवशं बाला आत्मनोऽर्थे[1] प्रियैषिणः । गुरूक्तमपि न ग्राह्यं यदनर्थेऽर्थकल्पनम् ॥ २ ॥
यदुक्त्या न प्रबुध्येत सुप्तस्त्वज्ञाननिद्रया । न श्रद्दध्यान्मतं तस्य यथाऽन्धो ह्यन्धनायकः ॥ ३ ॥
कः शत्रुः क उदासीनः किं मित्रं चेह आत्मनः[2] । भवत्स्वपि नयैः किं स्याद् दैवं सम्पद्विपत्पदम् ॥
यो न हिंस्याद् धर्मकाममात्मानं स्वजनेऽवशः । पुनः श्रीलोकयोर्हेतुः स मुक्तान्ध्योऽतिदुर्लभः ॥५॥
कौमार आचरेत् प्राज्ञो धर्मान् भागवतानिह । दुर्लभं मानुषं जन्म तदप्यध्रुवमर्थदम् ॥ ६ ॥
यदा हि पुरुषस्येह विष्णोः पादोपसर्पणम् । यदेष सर्वभूतानां प्रिय आत्मेश्वरः सुहृत् ॥ ७ ॥
सुखमैन्द्रियकं दैत्या देहयोगेन देहिनाम् । सर्वत्र लभ्यते दैवाद् यथा दुःखमयत्नतः ॥ ८ ॥
तत् प्रयासो न कर्तव्यो आयासायुर्व्ययः परम् । न तथा विन्दते क्षेमं मुकुन्दचरणाम्बुजम् ॥ ९ ॥
ततो यतेत कुशलः क्षेमाय च तमाश्रितः । शरीरं पौरुषं यावन्न विपद्येत पुष्कळम् ॥ १० ॥
पुंसो वर्षशतं ह्यायुस्तदर्धमजितात्मनः । निष्फलं यदसौ रात्र्यां शेतेऽन्धं प्रापितस्तमः ॥ ११ ॥
मुग्धस्य बाल्यकौमारैः क्रीडतो याति विंशतिः । जरया ग्रस्तदेहस्य यात्यकल्पस्य विंशतिः ॥ १२ ॥
दुरापूरेण कामेन मोहेन च बलीयसा । शेषं गृहेषु सक्तस्य प्रमत्तस्य प्रयाति हि[3] ॥ १३ ॥
पश्यध्वं मतिवैषम्यं ज्ञातीनां नः कुडुम्बिनाम् । श्रेयोविघातादायासादीहतामनुसंसृति ॥ १४ ॥
को गृहेषु पुमान् सक्त आत्मानमजितेन्द्रियः । स्नेहपाशैर्दृढैर्बद्धमुत्सहेत विमोचितुम् ॥ १५ ॥
को न्वर्थतृष्णां विसृजेत् प्राणेभ्योऽपि गरीयसीम् । यां[4] क्रीणात्यसुभिः प्रेष्ठैस्तस्करः सेवको वणिक्॥

कथं प्रियाया अनुकम्पितायाः [5]सङ्गं रहस्यं रुचिरांश्च मन्त्रान् ।
सुहृत्सुतस्नेहवशः शिशूनां कळाक्षराणामनुरक्तचित्तः ॥ १७ ॥
प्रत्ताः स्मरंस्ता दुहितॄर्हृदय्या भ्रातॄन् स्वसॄर्वा पितरौ च दीनौ ।
गृहान् मनोज्ञान् रुचिरच्छदांश्च वृत्तीश्च कुल्याः पशुभृत्यवर्गान् ॥ १८ ॥
त्यजेत कोशस्थ इवेहमानः कर्माणि लोभादवितृप्तकामः ।
औपस्थ्यजैह्व्यं बहुमन्यमानः कथं विरज्येत दुरन्तमोहः ॥ १९ ॥

१. नैतत् पुरातना बाला आत्मनोऽर्थे ❋ २. योऽर्थ आत्मनः ❋ ३. अपयाति हि
४. यम् ५. अङ्गम् ❋

कुडुम्बपोषाय च यन्निजायुर्न बुद्ध्यतेऽर्थं विहतं प्रमत्तः ।
सर्वत्र तापत्रयदुःखितात्मा निर्विद्यते न स्वकुडुम्बरामः ॥ २० ॥
वित्तेषु नित्याभिनिविष्टचेता विद्वांश्च दोषं परवित्तहर्तुः ।
प्रेत्येह वाऽथाप्यजितेन्द्रियस्तदशान्तकामो हरते कुडुम्बी ॥ २१ ॥
विद्वानपीत्थं दनुजाः कुडुम्बं पुष्णन् स्वलोकाय न कल्पते वै ।
यत्[1] स्वीयपारक्यविभिन्नभावः तमः प्रपद्येत यथा विमूढः ॥ २२ ॥
यतो न कश्चित् क्वच कुत्र विद्वान् दीनं स्वमात्मानमलं समर्थः ।
विमोचितुं वामदृशां विहारक्रीडामृगोऽयं निगळोऽक्षिसर्गः[2] ॥ २३ ॥
ततोऽतिदूरात्[3] परिहृत्य दैत्या दैत्येषु सङ्गं विषयात्मकेषु ।
उपेत नारायणमादिदेवं स मुक्तसङ्गैरिषितोऽपवर्गः ॥ २४ ॥
न ह्यच्युतं प्रीणयतो बह्वायासोऽसुरात्मजाः । आत्मत्वात् सर्वभूतानां सिद्धत्वादिह सर्वतः ॥ २५ ॥
परावरेषु भूतेषु ब्रह्मान्तस्थावरादिषु । भौतिकेषु विकारेषु भूतेषु च महत्सु च ॥ २६ ॥
गुणेषु गुणसाम्ये च गुणव्यतिकरे तथा । एक एव परो ह्यात्मा भगवानीश्वरोऽव्ययः ॥ २७ ॥
प्रत्यगात्मस्वरूपेण कालरूपेण च स्वयम् । व्याप्यव्यापकनिर्देशो[4] ह्यनिर्देश्यो विकल्पितः॥ २८ ॥
केवलानुभवानन्दस्वरूपः परमेश्वरः । माययाऽन्तर्हितैश्वर्य ईयते[5] गुणसर्गया ॥ २९ ॥
तस्मात् सर्वेषु भूतेषु दयां कुरुत सौहृदम् । भावमासुरमुन्मुच्य तया तुष्यत्यधोक्षजः ॥ ३० ॥
तुष्टे च तत्र किमलभ्यमनन्त आद्ये किं तैर्गुणव्यतिकरैरिह येऽनुसिद्धाः ।
धर्मादिभिः किमगुणेन च काङ्क्षितेन सारञ्जुषां चरणयोरुपगायतां नः ॥ ३१ ॥
धर्मार्थकाम इति यो विहितस्त्रिवर्ग ईक्षा त्रयी नयदमौ विविधा च वार्ता ।
मन्ये तदेतदखिलं निगमस्य सत्यं स्वात्मार्पणं स्वसुहृदः परमस्य पुंसः ॥ ३२ ॥
ज्ञानं तदेतदखिलं दुरवापमाह नारायणो नरसखः किल नारदाय ।
एकान्तिनां भगवतस्तदकिञ्चनानां पादारविन्दरजसाऽऽप्लुतदेहिनां स्यात् ॥ ३३ ॥
श्रुतमेतन्मया पूर्वं ज्ञानं विज्ञानसंयुतम् । धर्मा भागवताः शुद्धा नारदाद् देवदर्शनात् ॥ ३४ ॥

---

१. यः ❋ २. निगडोऽक्षिसर्गः ३. ततो विदूरात् ४. निर्देश्यः ५. ईड्यते

दैत्यपुत्रा ऊचुः

प्रह्लाद त्वं वयं चापि नर्तेऽन्यं विद्महे गुरुम् । एताभ्यां गुरुपुत्राभ्यां बालानां नापि हीश्वरः ॥ ३५ ॥
बालस्यान्तःपुरस्थस्य महत्सङ्गो दुरन्वयः । छिन्धि नः संशयं सौम्य स्याच्चेद् विस्रम्भकारणम् ॥३६॥

॥ इति श्रीमद्भागवते सप्तमस्कन्धे षष्ठोऽध्यायः ॥

---

नारद उवाच

एवं दैत्यसुतैः पृष्टो महाभागवतोऽसुरः । उवाच स्मयमानस्तान् स्मरन् मदनुभाषितम्[१] ॥ १ ॥

प्रह्लाद उवाच

पितरि प्रस्थितेऽस्माकं तपसे मन्दराचलम् । युद्धोद्योगं परं चक्रुर्विबुधा दानवान् प्रति ॥ २ ॥
पिपीलिकैरहिरिव दिष्टया लोकोपतापनः । पापेन पापोऽभक्षीति वादिनो वासवादयः ॥ ३ ॥
तेषामतिबलोद्योगं निशाम्यासुरयूथपाः । वध्यमानाः सुरैर्भीता दुद्रुवुः सर्वतोदिशम् ॥ ४ ॥
कळत्रपुत्रवित्ताप्तान् गृहान् पशुपरिच्छदान् । नावेक्षमाणास्त्वरिताः सर्वे प्राणपरीप्सवः ॥ ५ ॥
व्यलुम्पन् राजशिबिरममरा जयकाशिनः । इन्द्रस्तु राजमहिषीं मातरं मम चाग्रहीत् ॥ ६ ॥
नीयमानां भयोद्विग्नां रुदन्तीं कुररीमिव । यदृच्छयाऽऽगतस्तत्र देवर्षिर्ददृशे पथि ॥ ७ ॥
प्राह मैनां सुरपते नेतुमर्हस्यनागसीम् । मुञ्चमुञ्च महाभाग सतीं परपरिग्रहाम् ॥ ८ ॥

इन्द्र उवाच

आस्तेऽस्या जठरे वीर्यमविषँह्यं सुरद्विषः । आस्यतां यावत् प्रसवं मोक्ष्येऽर्थपदवीं गतः ॥ ९ ॥

नारद उवाच

सोऽयं निष्कल्मषः[२] साक्षान्महाभागवतो महान् । त्वया न प्राप्यते संस्थामनन्तानुचरो बली ॥
इत्युक्तस्तां विहायेन्द्रो देवर्षेर्मानयन् वचः । अनन्तप्रियभक्त्यैनां परिक्रम्य दिवं ययौ ॥ ११ ॥
ततो नो मातरमृषिः समुन्नीय[३] निजाश्रमम् । आश्वास्येहोष्यतां[४] वत्से यावत् ते भर्तुरागमः ॥
तथेत्यवात्सीद् देवर्षेरन्ति साऽप्यकुतोभया । यावद् दैत्यपतिर्घोरात् तपसो न न्यवर्तत ॥ १३ ॥
ऋषिं पर्यचरत् तत्र भक्त्या परमया सती । अन्तर्वत्नी स्वगर्भस्य क्षेमायेच्छाप्रसूतये ॥ १४ ॥

---

१. मदनुशासनम् २. अयं निष्किल्बिषः ३. समानीय ४. आश्वास्याहोष्यताम्

ऋषिः कारुणिकस्तस्याः प्रादादुभयमीश्वरः । धर्मस्य तत्त्वं ज्ञानं च मामप्युद्दिश्य निर्मलम्॥ १५ ॥
तत् तु कालस्य दीर्घत्वात् स्त्रीत्वान्मातुस्तिरोदधे । ऋषिणाऽनुगृहीतं मां नाधुनाप्यजहात् स्मृतिः ॥
भवतामपि भूयान्मे यदि श्रद्दधते वचः । वैशारदी धीः श्रद्धातः स्त्रीबालानां च मे यथा ॥ १७ ॥
जन्माद्याः षडिमे भावा दृष्टा देहस्य नात्मनः । फलानामिव वृक्षस्य कालेनेश्वरमूर्तिना ॥ १८ ॥
आत्मा नित्योऽव्ययः शुद्ध एकः क्षेत्रज्ञ आश्रयः । अविक्रियः स्वदृग् हेतुर्व्यापकोऽसङ्ग्यनावृतः ॥
एतैर्द्वादशभिर्विद्वान् आत्मनो[1] लक्षणैः परैः । अहं ममेत्यतद्भावं देहादौ मोहजं त्यजेत् ॥ २० ॥

हेमं यथा ग्रावसु हेमकारः क्षेत्रेषु योगैस्तदभिज्ञ आप्नुयात् ।
क्षेत्रेषु देहेषु तथाऽऽत्मयोगैरध्यात्मविद् ब्रह्मगतिं लभेत ॥ २१ ॥

अष्टौ प्रकृतयः प्रोक्तास्त्रय एव हि तद्गुणाः । विकाराः षोडशाचार्यैः पुमानेकः समन्वयात् ॥ २२ ॥
देहस्तु सर्वसङ्घातो जगत्तस्थुडिति[2] द्विधा । अत्रैव मृग्यः पुरुषो नेति नेतीत्यतत् त्यजन्[3] ॥
अन्वयव्यतिरेकेण विवेकेनागतात्मना । सर्गस्थानसमाम्नायैर्विमृशद्भिरसत्वरैः ॥ २४ ॥
बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति वृत्तयः । ता येनैवानुभूयन्ते सोऽध्यक्षः पुरुषः परः ॥ २५ ॥
एभिस्त्रिवर्णैः पर्यस्तैर्बुद्धिभेदैः क्रियोद्भवैः। सरूपमात्मनो धत्ते गन्धैर्वायुरिवान्वयात् ॥ २६ ॥
एतद्द्वारो हि संसारो गुणकर्मनिबन्धनः । अज्ञानमूलोऽपार्थोऽपि पुंसः स्वप्न इवाप्यते ॥ २७ ॥
तस्माद् भवद्भिः कर्तव्यः कर्मणां त्रिगुणात्मनाम् । बीजनिर्हरणं[4] योगः प्रवाहोपरमो धियः ॥
तत्रोपायसहस्राणामयं भगवतोदितः । यदीश्वरे भगवति भक्तिः स्यान्नान्यथा रतिः ॥ २९ ॥
गुरुशुश्रूषया भक्त्या सर्वलाभार्पणेन च । सङ्गेन साधुभक्तानामीश्वराराधनेन च ॥ ३० ॥
श्रद्धया तत्कथायां च कीर्तनैर्गुणकर्मणाम् । तत्पदाम्बुरुहध्यानात् तल्लिङ्गेक्षार्हणादिभिः ॥ ३१ ॥
हरिः सर्वेषु भूतेषु भगवानास्त ईश्वरः । इति भूतानि मनसा कामैस्तैः साधु मानयेत् ॥ ३२ ॥
एवं निर्जितषड्वर्गैः क्रियते भक्तिरीश्वरे । वासुदेवे भगवति यया[5] सँलभते रतिम् ॥ ३३ ॥

निशाम्य कर्माणि गुणानतुल्यान् वीर्याणि लीलातनुभिः कृतानि ।
यदाऽऽतिहर्षोत्पुळकाश्रुगद्गदः प्रोत्कण्ठ उद्गायति रौति नृत्यति ॥ ३४ ॥

---

१. आत्मानम् ❋ २. तस्थुरिति ३. अतत्त्यजा ४. बीजनिर्हरणे
५. यथा ❋

यदा ग्रहग्रस्त इव क्वचिद् रुदन् हसत्यथाक्रन्दयते जनान्मुहुः[१] ।
मुहुर्मुहुर्वक्ति [२] हरे जगत्पते नारायणेत्यात्मगतिर्गतत्रपः ॥ ३५ ॥
तदा पुमान् मुक्तसमस्तबन्धनस्तद्भावभावानुकृताशयाकृतिः ।
निर्दग्धबीजानुशयो महीयसा भक्तिप्रयोगेण समेत्यधोक्षजम् ॥ ३६ ॥
अधोक्षजालापमिहासुखात्मनः[३] शरीरिणः संसृतिचक्रशातनम् ।
तद् ब्रह्मनिर्वाणसुखं विदुर्बुधास्ततो भजध्वं हृदये हृदीश्वरम् ॥ ३७ ॥
कोऽतिप्रयासोऽसुरबालका हरेरुपासने स्वे हृदि छिद्रवत् सतः ।
अस्यात्मनः सख्युरशेषदेहिनां सामान्यतः किं विषयोपपादनैः ॥ ३८ ॥
रायः कळत्रं पशवः सुतादयो गृहा मही कुञ्जरकोशभूतयः ।
सर्वेऽर्थकामाः क्षणभङ्गुरायुषः कुर्वन्ति मर्त्यस्य कियत् प्रियं चलाः ॥ ३९ ॥
एवं हि लोकाः क्रतुभिः कृता अमी क्षयिष्णवः सातिशया न निर्मलाः ।
तस्माददृष्टश्रुतदूषणं परं भक्त्यैकया सम्भजतात्मलब्धये ॥ ४० ॥
यदर्थमिह कर्माणि विध्यङ्गान्यसकृन्नरः । करोत्यतो विपर्यासममोघं विन्दतेऽपरम्[४] ॥ ४१ ॥
सुखाय दुःखमोक्षाय सङ्कल्प इह कर्मणः । समाप्नोतीहया दुःखमनीहायां सुखाश्रितः[५] ॥ ४२ ॥
कामान् कामयते काम्यान् यदर्थ इह पूरुषः । स वै देहस्तु पारक्यो भङ्गुरोऽपेत्युपैति च[६] ॥ ४३ ॥
किमु व्यवहितापत्यदारागारधनादयः । राष्ट्रकोशबलामात्यभृत्याप्ता[७] ममतास्पदाः ॥ ४४ ॥
[८]किमेतैरात्मनस्तुच्छैः सह देहेन नश्वरैः । अनर्थैरर्थसङ्काशैर्नित्यानन्दमहोदधेः ॥ ४५ ॥
निरूप्यतामिह स्वार्थः कियान् देहभृतोऽसुराः । निषेकादिष्ववस्थासु क्लिश्यमानस्य कर्मभिः ॥ ४६॥
कर्माण्यारभते देही देहेनात्मानुवर्तिना । कर्मभिस्तनुते देहमुभयं त्वविवेकतः ॥ ४७ ॥
तस्मादर्थाश्च कामाश्च धर्माश्च यदपाश्रयात् । भजतानीहयाऽऽत्मानमनीहं हरिमीश्वरम् ॥ ४८ ॥
सर्वेषामपि भूतानां हरिरात्मेश्वरः प्रियः[९] । भूतैर्महद्भिः स्वकृतैः भूतानां[१०] बीजसञ्ज्ञितः॥ ४९ ॥

---

१. यदा ग्रहग्रस्त इव क्वचिद्धसत्याक्रन्दते ध्यायति वन्दते जनम् । २. मुहुः श्वसन् वक्ति
३. अशुभात्मनः ४. विन्दते फलम् ❋ ५. सुखोन्नतिम् ६. यात्युपैति च
७. राज्यकोशगजामात्यभृत्याप्ताः ८. किम्वेतैः ९. परः १०. कृतानाम्

देवोऽसुरो मनुष्यो वा यक्षो गन्धर्व एव वा । भजन् मुकुन्दचरणं स्वस्तिमान् स्याद् यथा वयम् ॥ ५० ॥

नालं द्विजत्वं देवत्वमृषित्वं चासुरात्मजाः[1] । प्रीणनाय मुकुन्दस्य न वृत्तं न बहुज्ञता ॥ ५१ ॥

न दानं न तपो नेज्या न शौचं न व्रतानि च । प्रीयतेऽमलया भक्त्या हरिरन्यद् विडम्बनम् ॥ ५२ ॥

ततो हरौ भगवति भक्तिं कुरुत दानवाः । आत्मौपम्येन सर्वत्र सर्वभूतात्मनीश्वरे ॥ ५३ ॥

दैतेया यक्षरक्षांसि स्त्रियः शूद्रा व्रजौकसः । खगा मृगाः पापजीवाः सन्ति ह्यच्युततां गताः ॥ ५४ ॥

एतावानेव लोकेऽस्मिन् पुंसां स्वार्थः परः स्मृतः । एकान्तभक्तिर्गोविन्दे यत् सर्वत्र तदीक्षणम् ॥

**॥ इति श्रीमद्भागवते सप्तमस्कन्धे सप्तमोऽध्यायः ॥**

---

**नारद उवाच**

अथ दैत्यसुताः सर्वे श्रुत्वा तदनुवर्णितम् । जगृहुर्निरवद्यत्वान्नैव गुर्वनुशिक्षितम् ॥ १ ॥

अथाचार्यसुतस्तेषां बुद्धिमेकान्तसंस्थिताम् । आलक्ष्य भीतस्त्वरितो राज्ञ आवेदयद् यथा ॥ २ ॥

श्रुत्वा तदप्रियं दैत्यो दुस्सहं तनयानयम् । कोपावेशचलद्गात्रः पुत्रं हन्तुं मनो दधे ॥ ३ ॥

क्षिप्त्वा परुषया वाचा प्रह्लादमतदर्हणम् । आहेक्षमाणः पापेन तिरश्चीनेन चक्षुषा ॥ ४ ॥

प्रश्रयावनतं दान्तं बद्धाञ्जलिमवस्थितम् । सर्पः पदाऽऽहत इव श्वसन् प्रकृतिदारुणः ॥ ५ ॥

हे दुर्विनीत मन्दात्मन् कुलभेदकराधम । स्तब्धं मच्छासनोद्वृत्तं नेष्ये त्वाऽद्य यमक्षयम् ॥ ६ ॥

क्रुद्धस्य यस्य कम्पन्ते त्रयो लोकाः सहेश्वराः । तस्य मेऽभिहितं मूढ शासनं किम्बलोऽत्यगाः ॥ ७ ॥

**प्रह्लाद उवाच**

न केवलं मे भवतश्च राजन् स वै बलं बलिनां चापरेषाम् ।
परावरेऽमी स्थिरजङ्गमा ये ब्रह्मादयो येन वशं प्रणीताः ॥ ८ ॥

स ईश्वरः काल उरुक्रमोऽसावोजस्सहस्सत्त्वबलेन्द्रियात्मा ।
स एव विश्वं परमः स्वशक्तिभिः सृजत्यवत्यत्ति गुणत्रयेशः ॥ ९ ॥

जह्यासुरं भावमिमं स्वभावतः समं मनो धत्स्व न सन्ति विद्विषः ।
ऋतेऽजितादात्मन उत्पथस्थितात् तद् विद्धयनन्तस्य महत् समर्हणम् ॥ १० ॥

---

१. वाऽसुरात्मजाः

दस्यून् पुरं षण्णविजित्य लुम्पतो मन्यन्त एके स्वजिता दिशो दश ।
जितात्मनो ज्ञस्य समस्य देहिनां साधोः स्वमोहप्रभवाः कुतः परे ॥ ११ ॥

**हिरण्यकशिपुरुवाच**

व्यक्तं त्वं मर्तुकामोऽसि योऽतिमात्रं विकत्थसे । मुमूर्षूणां हि मन्दात्मन् ननु स्युर्विप्लुता[1] गिरः ॥
यस्त्वया मन्दभाग्योक्तो मदन्यो जगदीश्वरः । क्वासौ यदि स सर्वत्र स्तम्भे कस्मात् न दृश्यते ॥
सोऽहं विकत्थमानस्य शिरः कायाद्धरामि ते । गोपायेत हरिस्त्वाऽद्य यस्ते शरणमीप्सितः॥ १४ ॥

**नारद उवाच**

एवं दुरुक्तैर्मुहुरर्दयन् रुषा सुतं महाभागवतं महासुरः ।
खड्गं प्रगृह्योत्पतितो वरासनात् स्तम्भं बभञ्जातिबलः[2] स्वमुष्टिना ॥ १५ ॥
तदैव तस्मिन् निनदो विभीषणो[3] बभूव येनाण्डकटाहमस्फुटत् ।
यं वै स्वधिष्ण्योपगतं ह्यजादयः श्रुत्वा स्वधामाप्ययमङ्ग मेनिरे ॥ १६ ॥
अभिक्रमन् पुत्रवधेप्सुरोजसा निशम्य निर्ह्रादमपूर्वमद्भुतम् ।
अन्तः सभायां न ददर्श तत्पदं वितत्रसुर्येन सुरारियूथपाः ॥ १७ ॥
सत्यं विधातुं निजभृत्यभाषितं व्याप्तिं च भूतेष्वखिलेषु चात्मनः ।
अदृश्यतात्यद्भुतरूपमुद्वहन् स्तम्भे सभायां नमृगं नमानुषम् ॥ १८ ॥
स सत्वमेवं परितो विपश्यन् स्तम्भस्य मध्यादनु निर्जिहानम् ।
नायं मृगो नाप्यमृगो[4] विचित्रमहो किमेतन्नृमृगेन्द्ररूपम् ॥ १९ ॥
मीमांसमानस्य समुत्थितोऽग्रतो नृसिंहरूपं तदलं भयानकम् ।
प्रतप्तचामीकरचण्डलोचनं स्फुरत्सटाकेसरजृम्भिताननम् ॥ २० ॥
कराळदंष्ट्रं करवाळचञ्चलं क्षुरान्तजिह्वं भ्रुकुटीमुखोद्बणम् ।
स्तब्धोर्ध्वकर्णं गिरिकन्दराद्भुतव्यात्तास्यनासं हनुभेदभीषणम् ॥ २१ ॥
दिविस्पृशत्कायमदीर्घपीवरग्रीवोरुवक्षस्स्थलमल्पमध्यमम् ।
चन्द्रांशुगौरैश्छुरितं तनूरुहैर्विश्वग्भुजानीकशतैर्नखायुधम् ॥ २२ ॥

---

१. विप्लवाः २. तताडातिबलः ३. अतिभीषणः ४. नापि नरः

दुरासदं सर्वनिजेतरायुधप्रवेकविद्रावितदैत्यदानवम् ।
प्रायेण मेऽयं हरिणौरसारिणा वधः स्मृतोऽनेन समुद्यतस्य किम् ॥ २३ ॥
एवं विमृश्याभ्यपतद् गदायुधो नदन् नृसिंहं प्रति दैत्यकुञ्जरः ।
अलक्षितोऽग्नौ पतितः पतङ्गमो यथा नृसिंहौजसि सोऽसुरस्तथा ॥ २४ ॥
न तद् विचित्रं खलु सत्वधामनि स्वतेजसाऽंशेन पुराऽपिबत् तमः ।
ततोऽभिपद्याभ्यहनन्महासुरो रुषा नृसिंहं गदयोरुवेगया ॥ २५ ॥
तं विक्रमन्तं सगदं गदाधरो महोरगं तार्क्ष्यसुतो यथाऽग्रहीत् ।
स तस्य हस्तोत्कलितस्तदाऽसुरो विक्रीडितो यद्वदहिर्गरुत्मतः ॥ २६ ॥
असाध्वमन्यन्त [१]हतौजसोऽमरा घनच्छदा भारत सर्वधिष्ण्यपाः ।
तं मन्यमानो निजवीर्यशङ्कितं यद्धस्तमुक्तो नृहरेर्महासुरः ॥ २७ ॥
पुनस्तमासज्जत खड्गचर्मणी प्रगृह्य वेगेन जितश्रमो मृधे ।
तं श्येनवेगं [२]शतचन्द्रचर्मभिश्चरन्तमच्छिद्रमुपर्यधो हरिः ॥ २८ ॥
कृत्वाऽट्टहासं खरकेसरोद्धणो[३] निमीलिताक्षं जगृहे महाजवः ।
विष्वक् स्फुरन्तं ग्रहणातुरं हरिर्व्याळो यथाऽऽखुं कुलिशाक्षतत्वचम् ॥ २९ ॥
द्वार्यूरवापात्य ददार लीलया नखैर्यथाऽहिं गरुडो महाविषम् ।
संरम्भदुष्प्रेक्ष्यकराळलोचनो व्यात्ताननान्तं विलिहन् स्वजिह्वया ॥ ३० ॥
असृग्वसाक्तारुणकेसराननो यथाऽन्त्रमाली द्विपहत्यया हरिः ।
नखाङ्कुरोत्पाटितहृत्सरोरुहं विसृज्य तस्यानुचरानुदायुधान् ॥ ३१ ॥
अहन् समन्तान्नखशस्त्रपाणिभिर्दोर्दण्डयूथानुपथान् सहस्रशः ।
सटावधूता जलदाः परापतन् ग्रहाश्च तद्दृष्टिविमुष्टरोचिषः ॥ ३२ ॥
अम्भोधयः श्वासहता विचुक्षुभुर्निर्ह्रादभीता दिगिभा जहुर्दिशः ।
द्यौस्तत्सटाक्षिप्तविमानसङ्कुला प्रोत्सर्पत क्ष्मा च पदाऽतिपीडिता ॥ ३३ ॥
शैलाः समुत्पेतुरमुष्य रंहसा तत्तेजसा खं ककुभो न रेजिरे ।
ततः सभायामुपविष्टमुत्तमे नृपासने सम्भृततेजसं विभुम्[४] ॥ ३४ ॥

१. हृतौजसः/हृतौकसः २. शतचन्द्रवर्मभिः ३. खरमुत्खनोल्बणम् ४. असंहततेजसं प्रभुम् ❋

अलक्षितद्वैरथमत्यमर्षणं प्रचण्डवक्त्रं न बभाज कश्चन ॥ ३५ ॥

निशाम्य लोकत्रयमस्तकज्वरं तमादिदैत्यं हरिणा हतं मृधे ।

प्रहर्षवेगोत्कलितानना मुहुः प्रसूनवर्षैर्ववृषुः सुरस्त्रियः ॥ ३६ ॥

तदा विमानावलिभिर्नभस्तळं दिदृक्षतां सङ्कुलमास नाकिनाम् ।

सुरानका दुन्दुभयश्च जघ्निरे[1] गन्धर्वमुख्या ननृतुर्जगुः स्त्रियः ॥ ३७ ॥

त उपव्रज्य विबुधा ब्रह्मेन्द्रगिरिशादयः । ऋषयः पितरः सिद्धा विद्याधरमहोरगाः ॥ ३८ ॥

मनवः प्रजानां पतयो गन्धर्वाप्सरचारणाः । यक्षाः किम्पुरुषास्तात वैताळाः सहकिन्नराः ॥ ३९ ॥

ते विष्णुपार्षदाः सर्वे सुनन्दकुमुदादयः । मूर्ध्नि बद्धाञ्जलिपुटा आसीनं तीव्रतेजसम् ।

ईडिरे नरशार्दूलं नातिदूरचराः पृथक् ॥ ४० ॥

**ब्रह्मोवाच**

नतोऽस्म्यनन्ताय दुरन्तशक्तये विचित्रवीर्याय पवित्रकर्मणे ।

विश्वस्य सर्गस्थितिसंयमान् गुणैः स्वलीलया सन्दधतेऽव्ययात्मने ॥ ४१ ॥

**रुद्र उवाच**

कोपकालो युगान्तस्ते हतोऽयमसुरोऽल्पकः । तत्सुतं पाह्युनुसृतं भक्तं ते भक्तवत्सल ॥ ४२ ॥

**इन्द्र उवाच**

प्रत्यानीताः परम भवता त्रायता नः स्वभागा दैत्याक्रान्तं हृदयकमलं त्वद्गृहं प्रत्यबोधि ॥ ४३ ॥

कालग्रस्तं कियदिदमहो नाथ शुश्रूषतां ते मुक्तिस्तेषां न हि बहुमता नारसिंहापरैः किम् ॥ ४४ ॥

**ऋषय ऊचुः**

त्वं नस्तपः परममात्थ यदात्मतेजो येनेदमादिपुरुषात्मगतं समस्तम् ।

तद् विप्रलुप्तममुनाऽद्य शरण्यपाल रक्षागृहीतवपुषा पुनरन्वमंस्थाः[2] ॥ ४५ ॥

**पितर ऊचुः**

श्राद्धानि नोऽधिबुभुजे प्रसभं तनूजैर्दत्तानि तीर्थसमयेऽपि तिलाम्बुमन्ति[3] ।

तस्योदरान्नखविदीर्णवपाद् य आर्च्छत् तस्मै नमो नृहरयेऽखिलकर्मगोप्त्रे ॥ ४६ ॥

---

१. दुन्दुभयो विनेदिरे    २. पुनरप्यमंस्थाः *    ३. तिलान् सहाद्भिः

**सिद्धा ऊचुः**

यो नो गतिं योगसिद्धामसाधुरहार्षीद् योगतपोबलेन ।
नानादर्पं तं नखैर्निर्ददार तस्मै तुभ्यं प्रणमामो नृसिंह ॥ ४७ ॥

**विद्याधरा ऊचुः**

विद्यां पृथग्धारणयाऽनुरुद्धां न्यषेधदज्ञो बलवीर्यदृप्तः ।
स येन सङ्ख्ये पशुवद्धतस्तं महानृसिंहं प्रणताः स्म नित्यम् ॥ ४८ ॥

**नागा ऊचुः**

येन पापेन रत्नानि स्त्रीरत्नानि हृतानि नः । तद्वक्षःपाटनेनासां दत्तानन्द नमोऽस्तु ते ॥ ४९ ॥

**मनव ऊचुः**

मनवो वयं तव निदेशकारिणो दितिजेन देव परिभूतसेतवः ।
भवता खलः समुपसंहृतः प्रभो करवाम ते किमनुशाधि किङ्करान् ॥ ५० ॥

**प्रजापतय ऊचुः**

प्रजेशा वयं ते परेशाभिसृष्टा न येन प्रजा वै सृजामो निषिद्धाः ।
स एष त्वया भिन्नवक्षा नु शेते जगन्मङ्गलं सत्वमूर्तेऽवतारः ॥ ५१ ॥

**गन्धर्वा ऊचुः**

वयं विभो ते नटनाट्यगायका येनात्मसाद् वीर्यबलौजसा कृताः ।
स एष नीतो भवता दशामिमां किमुत्पथस्थः कुशलाय कल्पते ॥ ५२ ॥

**चारणा ऊचुः**

हरे तवाङ्घ्रिपङ्कजं भवापवर्गमाश्रिताः । य एष साधुहृच्छ्रयस्त्वयाऽसुरः समापितः ॥ ५३ ॥

**यक्षा ऊचुः**

वयमनुचरमुख्याः कर्मभिस्ते मनोज्ञैरिह च दितिसुतेन[1] प्रापिता वाहकत्वम् ।
[2]स तु जनपरितापं तत्कृतं जानता ते नरहर उपनीतः पञ्चतां पञ्चविंश ॥ ५४ ॥

**किम्पुरुषा ऊचुः**

वयं किम्पुरुषास्त्वं तु महापुरुष ईश्वरः । अयं कापुरुषो[3] नष्टो धिक्कृतः साधुभिर्यतः ॥ ५५ ॥

---

१. मनोज्ञैस्त इह दितिसुतेन २. अनुजनपरितापम् ३. कुपुरुषः

**वेताला ऊचुः**

सभासु सत्रेषु तवामलं यशो गीत्वा सपर्यां महतीं लभामहे ।
यस्तान् व्यनैषीद् भृशमेष दुर्जनो दिष्ट्या हतस्ते भगवन् यथाऽऽमयः ॥ ५६ ॥

**किन्नरा ऊचुः**

वयमीश किन्नरगणास्तवानुगा दितिजेन विष्टिममुनाऽद्य कारिताः[१] ।
भवता हरे स व्रजिनोऽपसादितो नरसिंह नाथ विभवाय नो भव ॥ ५७ ॥

**विष्णुपार्षदा ऊचुः**

अद्यैतद्धरिनररूपमद्भुतं ते दृष्टं नः शरणद सर्वलोकशर्म ।
सोऽयं ते विधिकर ईश विप्रशापात् तस्येदं निधनमनुग्रहाय विद्मः ॥ ५८ ॥

**॥ इति श्रीमद्भागवते सप्तमस्कन्धेऽष्टमोऽध्यायः ॥**

---

**नारद उवाच**

एवं सुरादयः सर्वे ब्रह्मरुद्रपुरस्सराः । नोपेतुमशकन् मन्युसंरम्भं सुदुरासदम् ॥ १ ॥
साक्षाच्छ्रीः प्रेषिता देवैर्दृष्ट्वा तन्महदद्भुतम् । अदृष्टाश्रुतपूर्वत्वात् सा नोपेयाय शङ्किता ॥ २ ॥
प्रह्लादं प्रेषयामास ब्रह्माऽवस्थितमन्तिके । तात प्रशमयोपेहि स्वपित्रे कुपितं प्रभुम् ॥ ३ ॥
तथेति शनकै राजन् महाभागवतोऽर्भकः । उपेत्य भुवि कायेन ननाम विधृताञ्जलिः ॥ ४ ॥

स्वपादमूले पतितं तमर्भकं विलोक्य देवः कृपया परिप्लुतः ।
उत्थाप्य तच्छीर्ष्ण्यदधात् कराम्बुजं कालाहिनिर्दष्टधियां[२] कृताभयम् ॥ ५ ॥
स तत्करस्पर्शधुताखिलाशुभः सपद्यभिव्यक्तपरात्मदर्शनः ।
तत्पादपद्मं हृदि निर्वृतो दधौ हृष्यत्तनुः क्लिन्नहृदश्रुलोचनः ॥ ६ ॥

अस्तौषीद् हरिमेकाग्रमनसा सुसमाहितः । प्रेमगद्गदया वाचा तन्न्यस्तहृदयेक्षणः ॥ ७ ॥

**प्रह्लाद उवाच**

ब्रह्मादयः सुरगणा मुनयोऽथ सिद्धाः सत्त्वैकतानमतयो वचसां प्रवाहैः ।
नान्तं परस्य परतोऽप्यधुनाऽपि यान्ति[३] किं तोष्टुमर्हति स मे हरिरुग्रजातेः ॥ ८ ॥

---

१. अमुना नु कारिताः २. कालाहिवित्रस्तधियाम् ३. यन्ति ❋

मन्ये धनाभिजनरूपतपःश्रुतौजस्तेजःप्रभावबलपौरुषबुद्धियोगाः ।
नाराधनाय हि भवन्ति परस्य पुंसो भक्त्या तुतोष भगवान् ननु यूथपाय ॥ ९ ॥
विप्राद् द्विषड्गुणयुतादरविन्दनाभपादारविन्दविमुखाच्छ्वपचं वरिष्ठम् ।
मन्ये तदर्पितमनोवचनात्मगेहप्राणः पुनाति सकलं न तु भूरिमानः ॥ १० ॥
नैवात्मनः प्रभुरयं निजलाभपूर्णो मानं जनादविदुषः करुणो वृणीते ।
यद्यज्जनो भगवते विदधीत मानं तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः ॥ ११ ॥
तस्मादहं विगतविक्लव ईश्वरस्य सर्वात्मना न हि गृणामि यथामनीषम् ।
नीचोऽजया गुणविसर्गमनुप्रविष्टः पूयेत येन हि पुमाननुवर्णितेन ॥ १२ ॥
सर्वे ह्यमी विधिकरास्तव सत्वधाम्नो ब्रह्मादयो वयमिवेश न चोद्विजन्तः ।
क्षेमाय भूतय उतात्मसुखाय चास्य विक्रीडितं भगवतो रुचिरावतारैः ॥ १३ ॥
तद् यच्छ मन्युमसुरश्च हतस्त्वयाऽद्य मोदेत साधुरपि वृश्चिकसर्पहत्या[१] ।
लोकाश्च निर्वृतिमिताः प्रतियान्तु सर्वे रूपं नृसिंह विभवाय जनाः स्मरन्ति ॥ १४ ॥
नाहं बिभेम्यजित तेऽतिभयानकस्य जिह्वाग्निनेत्रभ्रुकुटीरभसोग्रदंष्ट्रात्[२] ।
आन्त्रस्रजः क्षतजकेसरशङ्कुकर्णान्निर्ह्रादभीतदिगिभादरिभिन्नखाग्रात् ॥ १५ ॥
त्रस्तोऽस्म्यहं कृपणवत्सल दुःसहोग्रसंसारचक्रकदनात् कृशतां प्रणीतः ।
बद्धः स्वकर्मभिरुशत्तम तेऽङ्घ्रिमूलं भीतापवर्गमरणं समियां कदा नु ॥ १६ ॥
यस्मात् प्रियाप्रियवियोगसयोगजन्मशोकाग्निना सकलयोनिषु दह्यमानः ।
दुःखौषधं तदपि दुःखमतद्धियाऽहं भूमन् भ्रमामि वद मे तव दास्ययोगम् ॥ १७ ॥
सोऽहं प्रियस्य सुहृदः परदेवताया लीलाकथास्तव नृसिंह विरिञ्चिगीताः।
अञ्जस्तराम्यनुगृणन् गुणविप्रमुक्तो दुर्गाणि ते पदयुगालयहंससङ्गः ॥ १८ ॥
बालस्य चेह शरणं पितरौ नृसिंह आर्तस्य चागदमुदन्वति मज्जतो नौः ।
तप्तस्य तर्पणविधिर्य [३]इहाञ्जसेष्टस्तावत् प्रभो तनुभृतां त्वमुपासकानाम्[४] ॥ १९ ॥
यस्मिन् यतो यर्हि च येन यस्य यस्मै यथा यमुत यस्त्वपरः परो वा ।
भावं करोति विकरोति पृथक्स्वभावः सञ्चोदितस्तदखिलं भवतः स्वरूपम् ॥ २० ॥

१. वृश्चिकसर्पहत्याम् २. भ्रुकुटीरभसोग्रदंष्ट्रात् ३. यदिहाञ्जसेष्टः ४. त्वदुपासकानाम्

माया मनः सृजति कर्ममयं बलीयः कालेन चोदितगुणानुमतेन पुंसः ।
छन्दोमयं यदजयाऽर्पितषोळशारं[१] संसारचक्रमज कोऽतितरेत् त्वदन्यः ॥ २१ ॥
स त्वं हि नित्यविजितात्मगुणः स्वधाम्ना कालो वशीकृतविसृज्यविसर्गशक्तिः ।
चक्रे विसृष्टमजयेश्वर षोळशारे निष्पीड्यमानमपकर्ष विभो प्रपन्नम् ॥ २२ ॥
दृष्टा मया दिवि विभोऽखिलधिष्ण्यपानामायुः श्रियो विभव इच्छति यान् जनोऽयम् ।
येऽस्मत्पितुः कुपितहासविजृम्भितभ्रूविस्फूर्जितेन लुळिताः स तु ते निरस्तः ॥ २३ ॥
तस्मादमूस्तनुभृतामहमाशिषो ज्ञ आयुः श्रियं विभवमैन्द्रियमाविरिञ्चात्।
नेच्छामि ते विलुळिता उरुविक्रमेण कालात्मनोपनय मां निजभृत्यपार्श्वम् ॥ २४ ॥
कुत्राशिषः श्रुतिसुखा मृगतृष्णरूपाः क्वेदं कळेबरमशेषरुजां विरोहम् ।
निर्विद्यते नतु जनो यदपीह विद्वान् कामानलं मधुलवैः शमयन् दुरापैः ॥ २५ ॥
क्वाहं रजःप्रभव ईश तमोऽधिकेऽस्मिन् जातः सुरेतरकुले क्व तवानुकम्पा ।
न ब्रह्मणो न तु भवस्य न वै रमया यन्मेऽर्पितः शिरसि पद्मकरप्रसादः[२] ॥ २६ ॥
नैषा परावरमतिर्भवतो ननु स्यात् जन्तोर्यथाऽऽत्मसुहृदो जगतस्तथाऽपि ।
संसेवया सुरतरोरिव ते प्रसादः सेवानुरूप उदयो न परावरत्वात् ॥ २७ ॥
एवं जनं निपतितं प्रभवाहिकूपे कामाभिकाममनु यः प्रपतन् प्रसङ्गात् ।
कृत्वाऽऽत्मसात् सुरर्षिणा भगवन् गृहीतः सोऽहं कथं नु विसृजे तव भृत्यसेवाम् ॥ २८ ॥
मत्प्राणरक्षणमनन्त पितुर्वधं च[३] मन्ये स्वभृत्यऋषिवाक्यमृतं विधातुम् ।
खड्गं प्रगृह्य यदवोचदसद् विधित्सुस्त्वामीश्वरो मदपरोऽवतु कं हरामि ॥ २९ ॥
एकस्त्वमेव जगदेतदमुष्य यत् त्वमाद्यन्तयोः पृथगवस्यसि मध्यतश्च ।
सृष्ट्वा गुणव्यतिकरं निजमाययेदं नानेव तैरवसितस्तदनुप्रविष्टः ॥ ३० ॥
त्वं वा इदं सदसदीश भवांस्ततोऽन्यो माया यदात्मपरबुद्धिरियं ह्यपार्था ।
यद् यस्य जन्मनिधनं स्थितिरीक्षणं च तद् वै तदेव खलु कालवदुष्टितर्वोः ॥ ३१ ॥
न्यस्येदमात्मनि जगद् विलयाम्बुमध्ये शेषासनो निजसुखानुभवो निरीहः।
योगेन मीलितदृगात्मनि वीतनिद्रस्तुर्यस्थितो[४] ननु तमो न गुणांश्च भुङ्क्षे[५] ॥ ३२ ॥

---

१. ....षोडशारं २. पद्मकरः प्रसादः ३. पितुर्वधश्च * ४. तुर्यः स्थितः
५. ननु तमोऽनुगुणान् नियुङ्क्षे/ननु तमोऽनुगुणांश्च युङ्क्षे/ननु तमो न गुणांश्च युङ्क्षे ।

तस्यैव ते वपुरिदं निजकालशक्त्या सञ्चोदितं प्रकृतिधर्मिण आत्मगूढम् ।
अम्भस्यनन्तशयनाद् विरमत्समाधेर्नाभेरभूत् स्वकणिकाद् वटवन्महाब्जम्[१] ॥ ३३ ॥
तत्सम्भवः कविरतोऽन्यदपश्यमानस्त्वां बीजमात्मनि ततं स बहिर्विचिन्वन्।
नाविन्ददब्दशतमप्सु निमज्जमानो जातेऽङ्कुरे कथमिहोपलभेत बीजम् ॥ ३४ ॥
स त्वात्मयोनिरतिविस्मित आश्रितोऽब्जं कालेन तीव्रतपसा परिशुद्धभावः ।
त्वामात्मनीश भुवि गन्धमिवातिसूक्ष्मं भूतेन्द्रियाशयमये विततं ददर्श ॥ ३५ ॥
एवं सहस्रवदनाङ्घ्रिशिरःकरोरुनासास्यकर्णनयनाभरणायुधाढ्यम् ।
मायामयं सदुपलक्षणसन्निवेशं दृष्ट्वा महापुरुषमाप मुदं विरिञ्चः ॥ ३६ ॥
तस्मै भवान् हयशिरस्तनुवं च बिभ्रद्[२] वेदद्रुहावतिबलौ मधुकैटभाख्यौ ।
हत्वाऽनयत् श्रुतिगणांस्तु[३] रजस्तमश्च सत्वं तव प्रियतमां तनुमामनन्ति ॥ ३७ ॥
इत्थं नृतिर्यगृषिदेवझषावतारैर्लोकान् विभावयसि हंसि जगत्प्रतीपान् ।
धर्मं महापुरुष पासि युगानुवृत्तं छन्नः कलौ यदभवस्त्रियुगोऽथ स त्वम् ॥ ३८ ॥
नैतन्मनस्तव कथासु विकुण्ठनाथ सम्प्रीयते दुरितदुष्टमसाधु तीव्रम् ।
कामातुरं हर्षशोकभयेषणार्तं तस्मिन् कथं तव गतिं विमृशामि दीनः ॥ ३९ ॥
जिह्वैकतोऽच्युत विकर्षति मा वितृप्ता शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् ।
घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्तिर्बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति ॥ ४० ॥
एवं स्वकर्मपतितं भववैतरण्यामन्योन्यजन्ममरणाशनिभीतभीतम् ।
पश्यन् जनं स्वपरविग्रहवैरमैत्रं हन्तेति पारमतिपीपृहि मूढसत्वम्[४] ॥ ४१ ॥
कोन्वत्र तेऽखिलगुरो भगवन् प्रयास उत्तारणेऽस्य भवसम्भवलोपहेतोः ।
मूढेषु वै महदनुग्रह आर्तबन्धो किं तेन ते प्रियजनाननुसेवमानः ॥ ४२ ॥
नैवोद्विजे भवदुरत्ययवैतरण्यास्त्वत्तीर्थगायनमहामृतमत्तचित्तः ।
शोचे नु ते विमुखचेतस इन्द्रियार्थमायासुखाय भरमुद्वहतो विमूढान् ॥ ४३ ॥

---

१. सकणिकावटवन्महाब्जम् ❋ २. हयशिरस्त्वमुवाच बिभ्रद् ❋ ३. श्रुतिगणांश्च
४. हन्तेति पारचर पीपृहि मूढमद्य

प्रायेण देवमुनयः स्वविमुक्तिकामा मौनं चरन्ति विजनेन परार्थनिष्ठाः[१] ।
नैतान् विहाय कृपणान् विमुमुक्ष एको नान्यं[२] त्वदस्य शरणं भ्रमतोऽनुपश्ये ॥ ४४ ॥
यन्मैथुनादि गृहमेधिसुखं हि तुच्छं कण्डूयनेन करयोरिव दुःखदुःखम् ।
तृप्यन्ति देहकृपणा बहुदुःखभाजः कण्डूतिवन्मनसिजं विषहेत धीरः ॥ ४५ ॥
मौनव्रतश्रुततपोऽध्ययनस्वधर्मव्याख्यारहोजपसमाधय आपवर्ग्याः ।
प्रायः परं पुरुष ते त्वजितेन्द्रियाणां वार्ता भवन्त्युत न वाऽत्र तु डाम्भिकानाम् ॥ ४६ ॥
रूपे इमे सदसती तव वेददृष्टे बीजाङ्कुराविव न चान्यदरूपकस्य ।
युक्ताः समक्षमुभयत्र विचक्षते[३] त्वां योगेन वह्निमिव दारुषु नान्यतः स्यात् ॥ ४७ ॥
त्वं वायुरग्निरवनिर्वियदम्बुमात्राः प्राणेन्द्रियाणि हृदयं चिदनुग्रहश्च ।
सर्वं त्वमेव सगुणो विगुणश्च भूमन् नान्यत् त्वदस्त्यपि मनोवचसा निरुक्तम् ॥ ४८ ॥
नैते गुणा न गुणिनो महदादयो ये सर्वे मनःप्रभृतयः सहदेवमर्त्याः ।
आद्यन्तवन्त उरुगाय विदन्ति हि त्वामेवं विमृश्य सुधियो विरमन्ति शब्दात् ॥ ४९ ॥
तत्वे मनो दर्शने दृगपि स्तुतौ च वाक् कर्मणि ह्यपि करौ श्रवणं कथायाम् ।
संसेवया त्वयि विनेति षडङ्गया किं भक्तिं जनः परमहंसगतौ लभेत ॥ ५० ॥

### नारद उवाच

एतावद्वर्णितगुणो भक्त्या भक्तेन निर्गुणः । प्रह्लादं प्रणतं प्रीतो यतमन्युरभाषत[४] ॥ ५१ ॥

### श्रीभगवानुवाच

प्रह्लाद भद्र भद्रं ते प्रीतोऽहं तेऽसुरोत्तम । वरं वृणीष्वाभिमतं कामपूरोऽस्म्यहं नृणाम् ॥ ५२ ॥
मामप्रीणत आयुष्मन् दर्शनं दुर्लभं हि मे । दृष्ट्वा मां न पुनर्जन्तुरात्मानं तप्तुमर्हति ॥ ५३ ॥
प्रीणन्ति ह्यथ मां धीराः सर्वभावेन माधवम् । श्रेयस्कामा महाभागाः सर्वेषामाशिषां पतिम् ॥ ५४ ॥

### नारद उवाच

एवं प्रलोभ्यमानोऽपि वरैर्लोकप्रलोभनैः । एकान्तित्वाद् भगवति नैच्छत् तानसुरोत्तमः ॥ ५५ ॥

**॥ इति श्रीमद्भागवते सप्तमस्कन्धे नवमोऽध्यायः ॥**

---

१. विजने न परार्थनिष्ठाः २. नान्यत् ३. विचिन्वते ४. गतमन्युरभाषत

**नारद उवाच**

भक्तियोगस्य तत् सर्वमन्तरायतयाऽर्भकः। मन्यमानो हृषीकेशं स्मयमान उवाच ह ॥ १ ॥

**प्रह्लाद उवाच**

मा मा प्रलोभयोत्पत्त्याऽऽसक्तं कामेषु तैर्वरैः। तत्सङ्गभीतो निर्विण्णो मुमुक्षुस्त्वामुपाश्रितः॥ २ ॥

भृत्यलक्षणजिज्ञासुर्भक्तं कामेषु चोदयात्। भवान् संसारबीजेषु हृदयग्रन्धिषु[1] प्रभो ॥ ३ ॥

नान्यथा तेऽखिलगुरोर्घटते करुणात्मनः। नष्टदृष्टेस्तमस्यन्धे त्वं पारः पारदर्शिनः[2] ॥ ४ ॥

यस्त आशिष आशास्ते न स भृत्यः स वै वणिक्। स वै स्वामी स वै भृत्यो गुणलुब्धौ न कामुकौ ॥

आशासानो न वै भृत्यः स्वामिन्याशिष आत्मनः। न स्वामी भृत्यतः स्वाम्यमिच्छन् यो राति चाशिषः॥

अहं त्वकामस्त्वद्भक्तस्त्वं स्वामी ह्यनपाश्रयः[3]। नान्यथेहावयोरर्थो राजसेवकयोरिव ॥ ७ ॥

यदि रासीश मे कामान् वरान् त्वं वरदर्षभ। कामानां हृद्यसंरोहं भवतस्तु वृणे वरम्[4] ॥ ८ ॥

इन्द्रियाणि मनः प्राणा आत्मा धर्मो धृतिर्मतिः।
ह्रीः श्रीस्तेजः स्मृतिः सत्यं येषां नश्यन्ति जन्मना ॥ ९ ॥

विमुञ्चति यदा कामान् मानवो मनसि श्रितान्। तर्ह्येव पुण्डरीकाक्ष नभवायावकल्पते ॥ १० ॥

ओं नमो भगवते तुभ्यं पुरुषाय महात्मने। हरयेऽद्भुतसिंहाय ब्रह्मणे परमात्मने ॥ ११ ॥

**श्रीनृसिंह उवाच**

नैकान्तिनो मे मयि जात्विहाशिष आशासतेऽमुत्र तथा[5] भवादृशाः।
तथापि मन्वन्तरमेतदत्र दैत्येश्वराणामनुभुङ्क्ष्व भोगान् ॥ १२ ॥

कथा मदीया जुषमाणः प्रियास्त्वमावेश्य मामात्मनि सन्तमेकम्।
सर्वेषु भूतेष्वधियज्ञमीश्वरं यजस्व योगेन च कर्म हिन्वन् ॥ १३ ॥

भोगेन पुण्यं कुशलेन पापं कळेबरं कालजवेन हित्वा।
कीर्तिं विशुद्धां सुरलोकगीतां विताय मामेष्यसि मुक्तबन्धः ॥ १४ ॥

य एवं[6] कीर्तयेन्मह्यं त्वया गीतमिदं नरः। त्वां च मां च स्मरन् काले कर्मबन्धाद् विमुच्यते ॥

---

१. हृदयग्रन्थिषु २. पारदर्शनः ❋ ३. त्वं च स्वाम्यनपाश्रयः
४. भजतस्त्वां वृणे वरम् ❋ ५. अमुत्र चवै ६. य एतत्

**प्रह्लाद उवाच**

वरं वरय एतत् ते वरदेशान्महेश्वर । यदनिन्दत् पिता मे त्वामविद्वांस्तेज ऐश्वरम् ॥ १६ ॥

बद्धामर्षाशयः साक्षात् सर्वलोकगुरुं प्रभुम् । भ्रातृहेति मृषादृष्टिस्त्वद्भक्ते मयि चाघवान् ॥ १७ ॥

तस्मात् पिता मे पूयेत दुरन्ताद् दुस्तरादघात् । पूतस्ते शान्तया दृष्ट्या दृष्टः[1] कृपणवत्सल॥ १८ ॥

**श्रीभगवानुवाच**

त्रिःसप्तभिः पिता पूतः पितृभिः सह तेऽनघ । यत् साधोऽस्य गृहे[2] जातो भवान् वै कुलपावनः ॥

यत्रयत्र च मद्भक्ताः प्रशान्ताः समदर्शिनः । साधवः समुदाचारास्ते पूयन्तेऽपि कीकटाः[3] ॥

सर्वात्मना न हिंसन्ति भूतग्रामेषु किञ्चन । उच्चावचेषु दैत्येन्द्र मद्भावेन गतस्पृहाः ॥ २१ ॥

भवन्ति पुरुषा लोके मद्भक्ता मामनुव्रताः[4] । भवान् मे खलु भक्तानां सर्वेषां प्रतिरूपधृक् ॥ २२ ॥

कुरु ते प्रेतकार्याणि पितुः पूतस्य सर्वशः । मदङ्गस्पर्शनेनाङ्ग लोकान् यास्यति सुप्रजाः ॥ २३ ॥

पित्र्यं च स्थानमातिष्ठ यथोक्तं ब्रह्मवादिभिः । मय्यावेश्य मनस्तात कुरु कर्माणि मत्परः ॥ २४ ॥

**नारद उवाच**

प्रह्लादोऽपि तथा चक्रे पितुर्यत् साम्परायिकम् । यथाऽऽह भगवान् राजन्नभिषिक्तो द्विजोत्तमैः ॥२५॥

प्रसादसुमुखं दृष्ट्वा ब्रह्मा नरहरिं हरिम् । स्तुत्वा वाग्भिः पवित्राभिः प्राह देवादिभिर्वृतः ॥ २६ ॥

**ब्रह्मोवाच**

देवदेवाखिलाध्यक्ष भूतभावन पूर्वज । दिष्ट्या ते निहतः पापो लोकसन्तापनोऽसुरः ॥ २७ ॥

योऽसौ लब्धवरो मत्तो न वध्यो मम सृष्टिभिः । तपोयोगबलोन्नद्धः समस्तजनहानिदः[5] ॥ २८ ॥

दिष्ट्याऽस्य तनयः साधुर्महाभागवतोऽर्भकः । त्वया विमोचितो मृत्योर्दिष्ट्या तस्मै वरोऽधुना[6] ॥

एतद् वपुस्ते भगवान् ध्यायतः प्रयतात्मनः । सर्वतो गोप्तृ सन्त्रासान्मृत्योरपि जिघांसतः ॥ ३० ॥

**श्रीभगवानुवाच**

मैवंविधोऽसुराणां ते प्रदेयः पद्मसम्भव । वरः क्रूरनिसर्गाणामहीनाममृतं यथा ॥ ३१ ॥

**नारद उवाच**

इत्युक्त्वा भगवान् राजन् ततश्चान्तर्दधे हरिः । अदृश्यः सर्वभूतानां पूजितः परमेष्ठिना ॥ ३२ ॥

---

१. पूतस्तेऽपाङ्गसन्दृष्टस्तदा  २. कुले  ३. कीटकान्/कीकटान्
४. मद्भक्तास्त्वामनुव्रताः  ५. समस्तनिगमानहन्  ६. दिष्ट्या त्रातस्त्वयाऽधुना

ततः सम्पूज्य विधिवद् ववन्दे परमेष्ठिनम् । भवं प्रजापतीन् देवान् प्रह्लादो भगवत्कलाः ॥ ३३ ॥
ततः काव्यादिभिः साकं मुनिभिः कमलासनः । दैत्यानां दानवानां च प्रह्लादमकरोत् पतिम् ॥ ३४ ॥
प्रतिनन्द्य ततो देवाः प्रयुज्य परमाशिषः । स्वधामानि ययू राजन् ब्रह्माद्याः प्रतिपूजिताः ॥ ३५ ॥
एवं तौ पार्षदौ विष्णोः पुत्रत्वं प्रापितौ दितेः । हृदि स्थितेन हरिणा वैरभावेन तौ हतौ ॥ ३६ ॥
पुनस्तौ पूर्वशापेन राक्षसौ द्वौ बभूवतुः । कुम्भकर्णदशग्रीवौ हतौ तौ रामविक्रमैः ॥ ३७ ॥
शयानौ युधि निर्भिण्णहृदयौ रामसायकैः । तच्चित्तौ जहतुर्देहं यथा प्राक्तनजन्मनि ॥ ३८ ॥
ताविहापि पुनर्जातौ शिशुपालकरूशकौ । हतौ वैरानुबन्धेन पश्यतस्ते समीयतुः ॥ ३९ ॥
एनः पूर्वकृतं यत् तद् राजानः कृष्णवैरिणः । जहुस्तेऽन्ते तदात्मानः कीटाः पेशस्कृतो यथा ॥ ४० ॥
यथायथा भागवता भक्त्या परमयाभिदाम् । नृपाश्चैद्यादयः साम्यं हरेस्तच्चिन्तया ययुः ॥ ४१ ॥
आख्यातं सर्वमेतत् ते यन्मां त्वं परिपृष्टवान् । दमघोषसुतादीनां हरेः साम्यमपि द्विषाम् ॥ ४२ ॥
एषा ब्रह्मण्यदेवस्य कृष्णस्य च महात्मनः । अवतारकथा पुण्या वधो यत्रादिदैत्ययोः ॥ ४३ ॥
प्रह्लादस्यानुचरितं महाभागवतस्य च । भक्तिर्ज्ञानं विरक्तिश्च याथात्म्यं चास्य वै हरेः ॥ ४४ ॥
सर्गस्थित्यप्ययेशस्य गुणकर्मानुवर्णनम् । परावरेषां स्थानानां कालेनाव्यत्ययो[1] महान् ॥ ४५ ॥
धर्मो भागवतानां च भगवान् येन गम्यते । आख्यानेऽस्मिन् समाख्यातमाध्यात्मिकमशेषतः ॥ ४६ ॥
य एतत् पुण्यमाख्यानं विष्णोर्वीर्योपबृंहितम् । कीर्तयेच्छ्रद्धया श्रुत्वा कर्मपाशैर्विमुच्यते ॥ ४७ ॥

एतद् य आद्यपुरुषस्य मृगेन्द्रलीलां दैत्येन्द्रयूथपवधं प्रयतः पठेत ।
दैत्यात्मजस्य च सतां प्रवरस्य पुण्यं श्रुत्वाऽनुभावमकुतोभयमेति लोकम् ॥ ४८ ॥

यूयं नृलोके बत भूरिभागा लोकं पुनाना मुनयोऽतियाथ[2] ।
येषां[3] गृहानावसतीति साक्षाद् गूढं परं ब्रह्म मनुष्यलिङ्गम् ॥ ४९ ॥

स वा अयं ब्रह्म महद् विमृग्यं कैवल्यनिर्वाणसुखानुभूतिः ।
प्रियः सुहृद् वः खलु मातुलेय आत्माऽर्हणीयो विधिकृद् गुरुश्च ॥ ५० ॥

न यस्य साक्षाद् भवपद्मजादिभी रूपं धिया वस्तुतयाऽनुवर्णितम् ।
मौनेन भक्त्योपशमेन पूजितः प्रसीदतामेष स सात्वतां पतिः ॥ ५१ ॥

**॥ इति श्रीमद्भागवते सप्तमस्कन्धे दशमोऽध्यायः ॥**

---

१. कालेन व्यत्ययः/कालेनाप्यत्ययः २. मुनयोऽभियान्ति ३. एषाम्

नारद उवाच

स एष भगवान् राजन्नकरोद्[१] विततं यशः । पुरा रुद्रस्य देवस्य मयेनानन्तमायिना ॥ १ ॥

राजोवाच

कस्मिन् कर्मणि देवस्य यशोऽभूज्जगदीशितुः । यथा चोपचिता कीर्तिः कृष्णेनानेन कथ्यताम् ॥ २ ॥

नारद उवाच

निर्जिता असुरा देवैर्युध्यनेनोपबृंहितैः । मायिनां परमाचार्यं मयं शरणमभ्ययुः ॥ ३ ॥
स निर्ममे पुरस्तिस्रो हैमरौप्यायसीर्विभुः । दुर्लक्ष्यापायसंयोगा दुर्लक्ष्योरुपरिच्छदाः ॥ ४ ॥
ताभिस्तेऽसुरसेनान्यो लोकान् त्रीन् सेश्वरान् नृप । स्मरन्तो नाशयाञ्चक्रुः पूर्ववैरमलक्षिताः ॥ ५ ॥
ततस्ते सेश्वरा लोका उपासाद्योचिरे विभुम् । त्राहि नस्तावकान् देव विनष्टान् त्रिपुरालयैः ॥ ६ ॥
अथानुगृह्य भगवान् मा भैष्टेति सुरान् विभुः । शरं धनुषि सन्धाय पुर्यामस्त्रं व्यमुञ्चत ॥ ७ ॥
ततोऽग्निवर्णा इषव उत्पेतुः सूर्यमण्डलात् । यथा मयूखसन्दोहा नादृश्यन्त पुरो यतः ॥ ८ ॥
तैः स्पृष्टा व्यसवः सर्वे निपेतुस्त्रिपुरौकसः । तानानीय महायोगी मयः कूपरसेऽक्षिपत् ॥ ९ ॥
सिद्धामृतरसस्पृष्टा वज्रधारा[२] महौजसः । उत्तस्थुर्मेघपटलाद्[३] वैद्युता इव वह्नयः ॥ १० ॥
विलोक्य भग्नसङ्कल्पं विमनस्कं वृषध्वजम् । तदाऽयं भगवान् विष्णुस्तत्रोपायमकल्पयत् ॥ ११ ॥
वत्स आसीत् तदा ब्रह्मा स्वयं विष्णुरयं[४] हि गौः । प्रविश्य त्रिपुरं काले रसकूपामृतं पपौ ।
तेऽसुरा ह्यपि पश्यन्तो न न्यषेधन् विमोहिताः ॥ १२ ॥
तद् विज्ञाय महायोगी रसपालानिदं जगौ । स्मरन् विशोकः शोकार्तान् स्मरन् दैवगतिं च ताम् ॥१३॥
देवोऽसुरो नरोऽन्यो वा नेश्वरोऽस्तीह कश्चन । आत्मनोऽन्यस्य वा दिष्टं दैवेनापोहितुं द्वयोः ॥ १४ ॥
अथासौ शक्तिभिः स्वाभिः शम्भोः प्राधनिकं व्यधात् । धर्मज्ञानविरक्त्यृद्धितपोविद्याक्रियादिभिः ॥
रथं सूतं ध्वजं वाहं धनुर्वर्म शरादि यत्[५] । सन्नद्धो रथमास्थाय सशरं धनुराददे ॥ १६ ॥
शरं धनुषि सन्धाय धूर्जटिर्जगदीश्वरः[६] । भगवत्तेजसा गुप्तो ददाह त्रिपुरं नृप ॥ १७ ॥
दिवि दुन्दुभयो नेदुर्विमानशतसङ्कुले । देवर्षिपितृसिद्धेशा जयेति कुसुमोत्करैः ।
अवाकिरन् जगुर्हृष्टा ननृतुश्चाप्सरोगणाः ॥ १८ ॥

---

१. व्यतनोत् २. वज्रसाराः ३. मेघदळनात् ४. विष्णुरियम् ❋
५. रथसूतध्वजवाहानसिचर्मशरासनम् ❋ ६. मुहूर्तेऽभिजितीश्वरः

एवं दग्ध्वा पुरस्तिस्रो भगवान् पुरहा नृप । ब्रह्मादिभिः स्तूयमानः स्वधाम प्रत्यपद्यत ॥ १९ ॥

एवंविधान्यस्य हरेः स्वमायया विडम्बमानस्य नृलोकमात्मनः ।
वीर्याणि गीतान्यृषिभिर्जगद्गुरोर्लोकं[1] पुनानान्यपरं वदामि किम् ॥ २० ॥

**॥ इति श्रीमद्भागवते सप्तमस्कन्धे एकादशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

श्रुत्वेहितं साधुसभासभाजितं महत्तमाग्रण्य उरुक्रमात्मनः ।
युधिष्ठिरो दैत्यपतेर्मुदा युतः पप्रच्छ भूयस्तनयं स्वयम्भुवः ॥ १ ॥

**युधिष्ठिर उवाच**

भगवन् श्रोतुमिच्छामि नृणां धर्मं सनातनम् । वर्णाश्रमाचारयुतं यत् पुमान् विन्दते परम् ॥ २ ॥

भवान् प्रजापतेः साक्षादात्मजः परमेष्ठिनः । सुतानां सम्मतो ब्रह्मन् तपोज्ञानसमाधिभिः ॥ ३ ॥

नारायणपरा विप्रा धर्मगुह्यं यथा विदुः । करुणाः साधवः शान्तास्त्वद्विधा न तथा परे ॥ ४ ॥

**नारद उवाच**

नत्वा भगवतेऽजाय लोकानां धर्महेतवे । वक्ष्ये सनातनं धर्मं नारायणमुखाच्छ्रुतम् ॥ ५ ॥

योऽवतीर्यात्मनोंऽशेन दाक्षायण्यां तु धर्मतः । लोकानां स्वस्तयेऽध्यास्ते तपो बदरिकाश्रमे ॥ ६ ॥

धर्ममूलं हि भगवान् सर्ववेदमयो हरिः । स्मृतिश्च तद्विदां राजन् येन चात्मा प्रसीदति ॥ ७ ॥

सत्यं दया तपः शौचं तितिक्षेज्या शमो दमः । अहिंसा ब्रह्मचर्यं च त्यागः सन्तोष आर्जवम् ॥ ८ ॥

स्वाध्यायः समदृक् सेवा[2] ग्राम्येहोपरमः शनैः । नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम् ॥ ९ ॥

अन्नाद्यादेः संविभागो भूतेभ्यश्च यथाऽर्हतः । तेष्वात्मदेवताबुद्धिः सुतरां नृषु पाण्डव ॥ १० ॥

श्रवणं कीर्तनं चास्य स्मरणं महतां गतेः । सेवेज्याऽवनतिः सख्यं[3] दास्यमात्मसमर्पणम् ॥ ११ ॥

नृणामयं परो धर्मः सर्वेषां समुदाहृतः । त्रिंशल्लक्षणसंयुक्तः सर्वात्मा येन तुष्यति ॥ १२ ॥

संस्कारा यत्राविच्छिन्ना स द्विजो वैदिकादयः । इज्याध्ययनदानानि विहितानि द्विजन्मनाम् ॥ १३ ॥

जन्मकर्मावदातानां क्रियाश्च निगमोदिताः । विप्रस्याध्यापनादीनि ततोऽन्यस्यापरिग्रहः[4] ॥ १४ ॥

राज्ञो वृत्तिः प्रजागोप्तुरविप्राद् वा करादिभिः । वैश्यस्तु वार्तावृत्तिः स्यान्नित्यं ब्रह्मकुलानुगः ॥ १५ ॥

---

१. लोकान्  २. समदृक्सेवा  ३. इज्यावनतिः सख्यम्  ४. अप्रतिग्रहः ❋

शूद्रस्य द्विजशुश्रूषा वृत्तिश्च स्वामिनो भवेत्। वार्ता विचित्रशालीनं यायावर्यं सिलोञ्छनम्॥ १६ ॥
विप्रवृत्तिश्चतुर्धेयं श्रेयसी चोत्तरोत्तरा। जघन्यो नोत्तमां वृत्तिमनापदि भजेन्नरः ॥ १७ ॥
ऋते राजन्यमापत्सु सर्वेषामपि सर्वशः। ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा ॥ १८ ॥
सत्यानृताभ्यां जीवेत न श्ववृत्त्या कथञ्चन। ऋतमुञ्छसिलं प्रोक्तममृतं यदयाचितम् ॥ १९ ॥
मृतं तु नित्ययाञ्चा स्यात् प्रमृतं कर्षणं स्मृतम्। सत्यानृतं तु वाणिज्यं श्ववृत्तिर्नीचसेवनम् ॥ २० ॥
वर्जयेत् तां सदा विप्रो राजन्यश्च जुगुप्सिताम्। सर्ववेदमयो विप्रः सर्वदेवमयो नृपः ॥ २१ ॥
शमो दमस्तपः शौचं सन्तोषः क्षान्तिरार्जवम्। दानं दयाऽच्युतात्मत्वं सत्यं च ब्रह्मलक्षणम् ॥ २२ ॥
शौर्यं वीर्यं धृतिस्तेजस्त्याग आत्मजयः क्षमा। ब्रह्मण्यता प्रसादश्च रक्षा च क्षत्रलक्षणम् ॥ २३ ॥
देवगुर्वार्यगोभक्तिस्त्रिवर्गपरितोषणम्। आस्तिक्यमुद्यमो नित्यं नैपुण्यं वैश्यलक्षणम् ॥ २४ ॥
शूद्रस्य अन्ततः[1] शौचं सेवा स्वामिन्यमायया। अमन्त्रयज्ञो ह्यस्तेयं मौढ्यं गोविप्ररक्षणम्॥ २५ ॥
स्त्रीणां तु पतिदेवानां तच्छुश्रूषाऽनुकूलता। तद्बन्धुष्वनुवृत्तिश्च नित्यं तद्व्रतधारणम् ॥ २६ ॥
सम्मार्जनोपलेपाभ्यां गृहमण्डनवर्तनैः। स्वयं च मण्डिता नित्यं परिमृष्टपरिच्छदा ॥ २७ ॥
कामैरुच्चावचैः साध्वी प्रश्रयेण दमेन च। वाक्यैः सत्यैः प्रियैः प्रेम्णा कालेकाले भजेत् पतिम् ॥
सन्तुष्टाऽलोलुपा दक्षा धर्मज्ञा प्रियसत्यवाक्। अप्रमत्ता शुचिः स्निग्धा पतिं त्वपतितं भजेत्[2] ॥
या पतिं हरिभावेन भजेच्छ्रीरिव तत्परा। हर्यात्मना हरेर्लोके पत्या श्रीरिव मोदते ॥ ३० ॥
वृत्तिः सङ्करजातीनां तत्तत्कुलकृता भवेत्। [3]अचौराणामपापानामन्त्यजान्तेऽवसायिनाम्॥ ३१ ॥
प्रायः स्वभावविहितो नृणां धर्मो युगेयुगे। वेददृग्भिः स्मृतो राजन् प्रेत्य चेह च शर्मकृत् ॥ ३२ ॥
वृत्त्या[4] स्वभावकृतया वर्तमानः स्वकर्मणि। हित्वा स्वभावजं कर्म शनैर्निर्गुणतामियात् ॥ ३३ ॥
उप्यमानं मुहुः क्षेत्रं स्वयं निर्वीर्यतामियात्। न कल्पते पुनः सूत्यै उप्तं बीजं च नश्यति ॥ ३४ ॥
एवं कामाशयं चित्तं कामानामतिसेवया। विरज्येत यथा राजन्नाग्निवत्[5] कामबिन्दुभिः ॥ ३५ ॥
यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णादिव्यञ्जकम्। यद्यन्यत्रापि दृश्येत तत् तेनैव विनिर्दिशेत् ॥ ३६ ॥

**॥ इति श्रीमद्भागवते सप्तमस्कन्धे द्वादशोऽध्यायः ॥**

---

१. सन्नतिः ❋ २. यजेत् ❋ ३. अचोराणाम् ❋ ४. प्रकृत्या ❋ ५. राजन्नग्निवत्

**नारद उवाच**

ब्रह्मचारी गुरुकुले वसेद् दान्तो गुरोर्हितम् । आचरन् दासवन्नीचो गुरौ सुदृढसौहृदः ॥ १ ॥

सायम्प्रातरुपासीत गुर्वग्न्यर्कसुरोत्तमान् । सन्ध्ये उभे च यतवाग् जपन् ब्रह्म समाहितः ॥ २ ॥

छन्दांस्यधीयेत गुरोराहूतश्च सुयन्त्रितः । उपक्रमेऽवसाने च चरणौ शिरसा नमेत् ॥ ३ ॥

मेखलाजिनवासांसि जटादण्डकमण्डलून् । बिभृयादुपवीतं च दर्भपाणिर्यथोदितम् ॥ ४ ॥

सायम्प्रातश्चरेद् भैक्ष्यं गुरवे तन्निवेदयेत् । भुञ्जीत यद्यनुज्ञातो नो चेदुपवसेत् क्वचित् ॥ ५ ॥

सुशीलो मितभुग् दक्षः श्रद्दधानो जितेन्द्रियः । यावदर्थं व्यवहरेत् स्त्रीषु स्त्रीनिर्जितेषु च ॥ ६ ॥

प्रमदासु न गाथासु सङ्गं कुर्याद् बृहद्व्रतः[1] । इन्द्रियाणि प्रमाथीनि हरन्त्यपि यतेर्मनः ॥ ७ ॥

केशप्रसाधनोन्मर्दस्नपनाभ्यञ्जनादिकम् । गुरुस्त्रीभिर्युवतिभिः कारयेन्नात्मनो युवा ॥ ८ ॥

नन्वग्निः प्रमदा नाम घृतकुम्भः पुमानतः[2] । सुतामपि रहो जह्यादन्यदा यावदर्थकृत् ॥ ९ ॥

कल्पयेदात्मनो यावदाभासमिदमीश्वरः । द्वैतं तावन्न विरमेत् ततो ह्यस्य विपर्ययः ॥ १० ॥

एतच्चान्यद् गृहस्थस्य समाम्नातं यतेरपि । गुरुवृत्तिर्विकल्पेन गृहस्थस्यर्तुगामिनः ॥ ११ ॥

अञ्जनाभ्यञ्जनोन्मर्दस्त्र्यवलेपामिषं[3] मधु । स्रग्गन्धलेपालङ्कारांस्त्यजेयुर्ये धृतव्रताः ॥ १२ ॥

उषित्वैवं गुरुकुले द्विजोऽधीत्यावबुध्य च । त्रयीं साङ्गोपनिषदं यावदर्थं यथाबलम् ॥ १३ ॥

दत्वा वरमनुज्ञातो गुरोः कामं यदीश्वरः । गृहं वनं वा प्रविशेत् प्रव्रजेत् तत्र वाऽऽवसेत् ॥ १४ ॥

अग्नौ गुरावात्मनि च सर्वभूतेष्वधोक्षजम् । भूतैः स्वधामभिः पश्येदप्रविष्टं प्रविष्टवत् ॥ १५ ॥

एवंविधो ब्रह्मचारी वानप्रस्थो यतिर्गृही । परं विन्दति विज्ञानं परं ब्रह्माधिगच्छति ॥ १६ ॥

वानप्रस्थस्य वक्ष्यामो नियमान् मुनिसम्मतान् । यानातिष्ठन् मुनिर्गच्छेद् ऋषिलोकमिहाञ्जसा ॥ १७ ॥

न कृष्टपच्यमश्नीयादकृष्टं चाप्यकालतः । अग्निपक्वमथामं वा अर्कपक्वमुताहरेत् ॥ १८ ॥

वन्यैश्चरुपुरोडाशान् निर्वपेन्नित्यचोदितान् । लब्धे नवेनवेऽन्नाद्ये पुराणं तु परित्यजेत् ॥ १९ ॥

अग्न्यर्थमेव शरणमुटजं वाऽद्रिकन्दरम् । श्रयेत हिमवाय्वग्निवर्षार्कातपनान् स्वयम् ॥ २० ॥

केशरोमनखश्मश्रुमलानि जटिलो दधत् । कमण्डल्वजिने दण्डवल्कलाग्निपरिच्छदान् ॥ २१ ॥

चरेद् वने द्वादशाब्दानष्टौ वा चतुरो मुनिः । द्वावेकं वा यथा बुद्धिर्न विपद्येत कृच्छ्रतः ॥ २२ ॥

---

१. वर्जयेत् प्रमदागाथामगृहस्थो बृहद्व्रतः  २. घृतकुम्भसमः पुमान्  ३. स्त्र्यवलेखामिषम्

यदाऽकल्यः स्वक्रियायां व्याधिभिर्जरयोत वा। आन्विक्षिक्यां च विद्यायां कुर्यादनशनादिकम् ॥
आत्मन्यग्निं समारोप्य सन्न्यस्याहम्ममात्मताम्। कारणेषु न्यसेत् सम्यक् सङ्घातं तु यथार्हतः ॥ २४ ॥
खे खानि वायौ निःश्वासं तेजस्यूष्माणमात्मवान्। अप्स्वसृक्श्लेष्मपूयानि क्षितौ शेषं यथोद्भवम् ॥
वाचमग्नौ सवक्तव्यमिन्द्रे[1] शिल्पं करावपि। पदानि गतिभिर्विष्णौ रत्योपस्थं प्रजापतौ ॥ २६ ॥
मृत्यौ पायुं विसर्गं च यथास्थानं विनिर्दिशेत्। दिक्षु श्रोत्रं सनादेन स्पर्शेनाध्यात्मनि त्वचम् ॥ २७ ॥
अप्सु प्रवेशयेद् जिह्वां घ्रेयैर्घ्राणं क्षितौ न्यसेत्। मनो मनोरथैश्चन्द्रे बुद्धिं बोध्यैः कवौ परे ॥ २८ ॥
कर्माण्यध्यात्मना रुद्रे यदहंसम्मताः क्रियाः। सत्त्वेन चित्तं क्षेत्रज्ञे गुणैर्वैकारिकं परे ॥ २९ ॥
अप्सु क्षितिमपो ज्योतिष्यदो वायौ नभस्यमुम्। कूटस्थे तच्च महति तदव्यक्तेऽक्षरे तु तत् ॥ ३० ॥
इत्यक्षरतयाऽऽत्मानं चिन्मात्रमवशेषितम्। ज्ञात्वाऽद्वयोऽथ विरमेद् दग्धयोनिरिवानिलः ॥ ३१ ॥

**॥ इति श्रीमद्भागवते सप्तमस्कन्धे त्रयोदशोऽध्यायः ॥**

---

**नारद उवाच**

कल्यस्त्वेवं परिव्रज्य देहमात्रावशेषितः। ग्रामैकरात्रविधिना निरपेक्षश्चरेन्महीम् ॥ १ ॥
बिभृयाद् यद्यसौ वासः कौपीनाच्छादनं परम्। त्यक्तं न लिङ्गदण्डाभ्यामन्यत्[2] किञ्चिदनापदि ॥
एक एव चरेद् भैक्ष्यमात्मारामोऽनपाश्रयः। सर्वभूतसुहृच्छान्तो नारायणपरायणः ॥ ३ ॥
पश्येदात्मन्यदो विश्वं परे सदसतोऽद्वये। आत्मानं च परं ब्रह्म सर्वत्र सदसन्मये ॥ ४ ॥
सुप्तप्रबोधयोः सन्धावात्मनो गतिमात्मदृक्। पश्यन्[3] बन्धं च मोक्षं च मायामात्रं न वस्तुतः ॥
नाभिनन्देत् ध्रुवं मृत्युमध्रुवं वा स्वजीवितम्। कालं परं प्रतीक्षेत भूतानां प्रभवाप्ययम् ॥ ६ ॥
नासच्छास्त्रेषु सज्जेत नोपजीवेत जीविकाम्। अतिवादान् त्यजेत् तर्कान् पक्षं कञ्चिन्न संश्रयेत् ॥ ७ ॥
न शिष्याननुबध्नीत ग्रन्थान् नैवाभ्यसेद् बहून्। न व्याख्यामुपजीवेत नारम्भानारभेत् क्वचित् ॥ ८ ॥
न यतेराश्रमः प्रायो धर्महेतुर्महात्मनः। शान्तस्य समचित्तस्य बिभृयादुत वा त्यजेत् ॥ ९ ॥
अव्यक्तलिङ्गो व्यक्तार्थो मनीष्युन्मत्तबालवत्। कविर्मूकवदात्मानमदृश्यो दर्शयेन्नृणाम् ॥ १० ॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम्। प्रह्लादस्य च संवादं मुनेराजगरस्य च[4] ॥ ११ ॥
तं शयानं धरोपस्थे कावेर्यां सह्यसानुनि। रजस्वलैस्तनूदेशैर्निगूढामलतेजसम् ॥ १२ ॥

---

१. सवक्तव्यामिन्द्रे २. लिङ्गदण्डादेरन्यत् ॐ ३. पश्येत् ॐ ४. अजगरस्य च ॐ

ददर्श लोकान् विचरन् लोकतत्त्वविवित्सया। वृतोऽमात्यैः कतिपयैः प्रह्लादो भगवत्प्रियः ॥ १३ ॥

कर्मणाऽऽकृतिभिर्वाचा लिङ्गैर्वर्णाश्रमादिभिः। नाविन्दत जनोऽयं वै सोऽसाविति न चेति च ॥

तं नत्वाऽभ्यर्च्य विधिवत् पादयोः शिरसा स्पृशन्। विवित्सुरिदमप्राक्षीन्महाभागवतोऽसुरः ॥ १५ ॥

**प्रह्लाद उवाच**

बिभर्षि कायं पीवानं नोद्यमी भोगवान् यथा। वित्तं बतोद्यमवतां भोगो वित्तवतामिह ॥ १६ ॥

भोगिनां खलु देहोऽयं पीवा भवति नान्यथा ॥ १७ ॥

न ते शयानस्य निरुद्यमस्य ब्रह्मन्निहार्थो यत एव भोगः।

अभोगिनोऽयं तव विप्र देहः पीवा यतस्तद् वद नः क्षमं चेत् ॥ १८ ॥

कविः कल्यो निपुणदृक् चित्रप्रियकथः समः। लोकस्य कुर्वतः कर्म शेषे न द्वेक्षि नौषि वा ॥ १९ ॥

**नारद उवाच**

स इत्थं दैत्यपतिना परिपृष्टो महामुनिः। स्मयमानस्तमभ्याह तद्वागमृतयन्त्रितः ॥ २० ॥

**ब्राह्मण उवाच**

वेदेदमसुरश्रेष्ठ भवान् नन्वार्यसम्मतः। ईहोपरमयोर्नॄणां पदमध्यात्मचक्षुषा ॥ २१ ॥

यस्य नारायणो देवो भगवान् हृद्गतः सदा। भक्त्या केवलया श्लिष्टो धुनोति ध्वान्तमर्कवत् ॥ २२ ॥

अथापि ब्रूमहे प्रश्नान् तव राजन् यथाश्रुतम्। सम्भाषणीयो हि भवानात्मनः शुद्धिमिच्छता ॥ २३ ॥

तृष्णया भववाहिन्या ग्राम्यकामैरपूरया। कर्माणि कार्यमाणोऽहं नानायोनिषु योजितः ॥ २४ ॥

यदृच्छया लोकमिमं प्रापितः कर्मभिर्भ्रमन्। स्वर्गापवर्गयोर्द्वारं तिरश्चां पुनरस्य च ॥ २५ ॥

अत्रापि दम्पतीनां च सुखायान्यापनुत्तये। कर्माणि कुर्वतां दृष्ट्वा निवृत्तोऽस्मि विपर्ययम् ॥ २६ ॥

सुखमस्यात्मनो रूपं सर्वेहोपरतेर्हि तत्। मनःसंस्पर्शजान् दृष्ट्वा भोगान् शस्तान् न संविशेत् ॥ २७ ॥

इत्येतदात्मनः स्वार्थं सन्तं विस्मृत्य वै पुमान्। विचित्रामसति द्वैते घोरामाप्नोति संसृतिम् ॥ २८ ॥

जलं तदुद्भवैश्छन्नं हित्वाऽज्ञो जलकाम्यया। मृगतृष्णामुपाधावेत् तथाऽन्यत्रार्थदृक् स्वतः ॥ २९ ॥

देहादिभिर्दैवतन्त्रैरात्मनः सुखमीहतः। दुःखात्ययं चानीशस्य क्रिया मोघाः कृताःकृताः ॥ ३० ॥

आध्यात्मिकादिभिर्दुःखैरभिभूतस्य कर्हिचित्। मर्त्यस्य कृच्छ्रोपनतैरर्थैः कामैः क्रियेत किम् ॥ ३१ ॥

पश्यामि धनिनां क्लेशं लुब्धानामजितात्मनाम्। भयादलब्धनिद्राणां सर्वतोऽपि विशङ्किनाम् ॥ ३२ ॥

राजतश्चोरतः शत्रोः स्वजनात् पशुपक्षितः। अर्थिभ्यः कालतः स्वस्मात् नित्यं प्राणार्थवद्भयम् ॥

शोकमोहभयक्रोधरागक्लैब्यश्रमादयः। यन्मूलाः स्युर्नृणां जह्यात् स्पृहां प्राणार्थयोर्बुधः ॥ ३४ ॥

मधुकरमहासर्पौ[१] लोकेऽस्मिन् नो गुरूत्तमौ। वैराग्यं परितोषं च प्राप्ता यच्छिक्षया वयम् ॥ ३५ ॥
विरागः सर्वकामेभ्यः शिक्षितो मे मधुव्रतात्। कृच्छ्राप्तं मधुवद्वित्तं हत्वाऽप्यन्यो हरेत् पतिम् ॥ ३६ ॥
अनीहः परितुष्टात्मा यदृच्छोपनतादहम्। नो चेच्छये बह्वहानि महाहिरिव सत्त्ववान् ॥ ३७ ॥
क्वचिदल्पं क्वचित् भूरि भुञ्जेऽन्नं साध्वसाधु वा। क्वचिद् भूरिगुणोपेतं गुणहीनमुत क्वचित् ॥ ३८ ॥
श्रद्धयोपहृतं क्वापि कदाचिन्मानवर्जितम्। भुञ्जे भुक्त्वाऽथ कस्मिंश्चिद् दिवा नक्तं यदृच्छया ॥ ३९ ॥
क्षौमं दुकूलमजिनं चीरं वल्कलमेव वा। वसेऽन्यदपि सम्प्राप्तं दिष्टभुक् तुष्टधीरहम् ॥ ४० ॥
क्वचिच्छये धरोपस्थे तृणपर्णाश्मभस्मसु। क्वचित् प्रासादपर्यङ्के कशिपौ वा परेच्छया ॥ ४१ ॥
क्वचित् स्नातोऽनुलिप्ताङ्गः सुवासाः स्रगलङ्कृतः। रथेभाश्वैश्चरे क्वापि दिग्वासा ग्रहवत् क्वचित् ॥
नाहं निन्दे च न स्तौमि स्वभावविषमं जनम्। एतेषां श्रेय आशासे उतैकात्म्यं महात्मनि ॥ ४३ ॥
विकल्पं जुहुयाच्चित्ते तन्मनस्यर्थविभ्रमे। मनो वैकारिके हुत्वा मायायां वै जुहोत्यमुम्[२] ॥ ४४ ॥
आत्मानुभूतौ तां मायां[३] जुहुयात् सत्यदृङ् मुनिः। ततो निरीहो विरमेत् स्वानुभूत्याऽत्मनि स्थितः॥
[४]स्वात्मवृत्तं मयेत्थं ते सुगुप्तमनुवर्णितम्। व्यपेतं लोकशास्त्राभ्यां भवान् हि भगवत्परः ॥ ४६ ॥

**नारद उवाच**

धर्मं पारमहंस्यं वै मुनेः श्रुत्वाऽसुरेश्वरः। पूजयित्वा ततः प्रीत आमन्त्र्य प्रययौ गृहान् ॥ ४७ ॥

**॥ इति श्रीमद्भागवते सप्तमस्कन्धे चतुर्दशोऽध्यायः ॥**

---

**युधिष्ठिर उवाच**

गृहस्थ एतां पदवीं विधिना येन चाञ्जसा। यायाद् देवऋषे ब्रूहि मादृशो गृहरूढधीः ॥ १ ॥

**नारद उवाच**

साधु पृष्टं महाभाग लोकानामनुगृह्णता। तत्वेन तदहं वक्ष्ये नैष्कर्म्यं येन कर्मणाम् ॥ २ ॥
गृहेष्ववस्थितो राजन् क्रियाः कुर्वन् गृहोचिताः। वासुदेवार्पणं साक्षादुपासीत महामुनीन् ॥ ३ ॥
शृण्वन् भगवतोऽभीक्ष्णमवतारकथामृतम्। श्रद्दधानो यथाकालमुपशान्तजनादृतम् ॥ ४ ॥
तत्सङ्गाच्छनकैः सङ्गमात्मजायात्मजादिषु। विमुञ्चेन्मुच्यमानेषु स्वयं स्वप्नवदुत्थितः ॥ ५ ॥

---

१. मधुकारमहासर्पौ २. तन्मायायां जुहोत्यमुम् * ३. तन्मायाम् * ४. आत्मवृत्तम् *

यावदर्थ उपासीनो[१] देहे गेहे च पण्डितः । विरक्तो रक्तवत् तत्र नृलोके नरतां न्यसेत् ॥६॥
ज्ञातयः पितरौ पुत्रा भ्रातरः सुहृदोऽपरे । यद् वदन्ति यदिच्छन्ति नाऽनुमोदेत[२] निर्ममः ॥ ७ ॥
दिव्यं भौमं चान्तरिक्ष्यं वित्तमच्युतनिर्मितम् । [३]तत्सर्वमुपयुञ्जीरन् न स्वीकुर्यात् स्वतो बुधः ॥ ८ ॥
यावद् भ्रियेत जठरं तावत् स्वत्वं हि देहिनाम् । अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति ॥ ९ ॥
नृगोखराश्वमर्काखुसरीसृपविमक्षिकान्[४] । आत्मनः पुत्रवत् पश्येत् तैरेषामन्तरं कियत् ॥ १० ॥
त्रिवर्गं नातिकृच्छ्रेण भजेत गृहमेध्यपि । यथादेशं यथाकालं यावद् दैवोपपादितम् ॥ ११ ॥
आश्वभ्योऽन्तेवसायिभ्यः कामान् संविभजेद् यथा । आस्वैतान् महतो दारान्[५] नृणां सत्त्वग्रहो यतः॥

जह्याद् यदर्थे स्वान् प्राणान् हन्याद् वा पितरं गुरुम् ।
तस्यां स्वत्वं स्त्रियां जह्याद् यस्तेन ह्यजितो जितः[६] ॥ १३ ॥

कृमिविड्भस्मनिष्ठान्तं क्वेदं तुच्छं कळेबरम् । क्व तदीयरतिर्भार्या क्वायमात्मा नभश्छदिः[७] ॥ १४ ॥
सिद्धैर्यज्ञावशिष्टार्थैः कल्पयेद् वृत्तिमात्मनः । शेषे स्वत्वं त्यजेत् प्राज्ञः पदवीं महतामियात् ॥ १५ ॥
देवानृषीन् नृभूतानि पितॄनात्मानमन्वहम् । स्ववृत्त्याऽऽगतवित्तेन यजेत पुरुषं पृथक् ॥ १६ ॥
यर्ह्यात्मनोऽधिकारोऽस्ति[८] सर्वाः स्युर्यज्ञसम्पदः । वैतानिकेन विधिना अग्निहोत्रादिना यजेत् ॥
न ह्यग्निमुखतोऽयं वै भगवान् सर्वयज्ञभुक् । इज्येत हविषा राजन् यथा विप्रमुखे हुतैः ॥ १८ ॥
तस्माद् ब्राह्मणदेवेषु मर्त्यादिषु यथार्हतः । तैस्तैः कामैर्यजेच्चैनं क्षेत्रज्ञं ब्राह्मणाननम् ॥ १९ ॥
कुर्यादपरपक्षीयं मासि प्रोष्ठपदे द्विजः । श्राद्धं पित्रोर्यथावित्तं तद्बन्धूनां च वित्तवान् ॥ २० ॥
अयने विषुवे कुह्वां व्यतीपाते दिनक्षये । चन्द्रादित्योपरागे च द्वादश्यां श्रवणेषु च ॥ २१ ॥
तृतीयायां शुक्लपक्षे नवम्यामथ कार्त्तिके । चतसृष्वप्यष्टकासु हेमन्ते शिशिरे तथा ॥ २२ ॥
माघे च सितसप्तम्यां [९]मखाराकासमागमे । राकाया वाऽनुमत्या वा[१०] मासर्क्षाणि युतान्यपि ॥
द्वादश्यामनुराधा स्यात् श्रवणस्तिस्र उत्तराः[११] । तिसृष्वेकादशी चासु[१२] जन्मर्क्षं सौम्ययोगयुक् ॥
त एते श्रेयसः काला नृणां श्रेयोविवर्धनाः । कुर्यात् सर्वात्मनैतेषु श्रेयोऽमोघं तदायुषः ॥ २५ ॥
येषु स्नानं जपो होमो व्रतं देवद्विजार्चनम् । पितृदेवनृभूतेभ्यो यद् दत्तं तद्ध्यनश्वरम् ॥ २६ ॥

---

१. अवस्थितो यावदर्थम् २. अनुमोदेत ३. यत् सर्वम् ❋
४. मृगाश्वखरमर्काखुसरीसृब्दंशमक्षिकान् ❋ ५. आस्वा कामहतो दारान् ❋ ६. ह्यजितोऽजितः
७. नभश्छदः ८. अधिकाराद्याः ❋ ९. मघेत्यर्वाचीनः पाठः । एवमन्यत्रापि ।
१०. राकायां वाऽनुमत्यां वा ❋ ११. श्रवणस्तिष्य उत्तरा ❋ १२. तिस्र एकादशी वा स्युः ❋

संस्कारकालो जायाया अपत्यस्यात्मनस्तथा । प्रेतसंस्था मृताहश्च कर्मण्यभ्युदये नृप ॥ २७ ॥
अथ देशान् प्रवक्ष्यामि धर्मादिश्रेयआवहान् । स वै पुण्यतमो देशः सत्पात्रं यत्र लभ्यते ॥ २८ ॥
विश्वं भागवतो यत्र सर्वमेतच्चराचरम् । यत्र ह ब्राह्मणकुलं तपोविद्यादयान्वितम् ॥ २९ ॥
यत्रयत्र हरेरर्चा स देशः श्रेयसां पदम् । यत्र गङ्गादयो नद्यः पुराणेषु च विश्रुताः ॥ ३० ॥
सरांसि पुष्करादीनि क्षेत्राण्यर्हाश्रितानि च । कुरुक्षेत्रं गयशिरः प्रयागः पुलहाश्रमः ॥ ३१ ॥
नैमिशं फल्गुनं सेतुः प्रभासोऽथ कुशस्थली । वाराणसी मधुपुरी पम्पा बिन्दुसरस्तथा ॥ ३२ ॥
नारायणाश्रमो नन्दा सीतारामाश्रमादयः । सर्वे कुलाचला राजन् महेन्द्रमलयादयः ॥ ३३ ॥
एते पुण्यतमा देशा हरेरर्चाश्रिताश्च ये । एतान् देशान् निषेवेत श्रेयस्कामो ह्यभीक्ष्णशः ॥ ३४ ॥
धर्मो ह्यत्रोदितः पुंसां सहस्राधिफलोदयः । पात्रं चात्र निरुक्तं वै कविभिः पात्रवित्तमैः ॥ ३५ ॥
हरिरेवैक उर्वीश यन्मयं च चराचरम् । देवर्ष्यर्हत्सु वै सत्सु तत्र ब्रह्मात्मजादिषु[1] ।
राजन् यदग्रपूजायां मतः पात्रतयाऽच्युतः[2] ॥ ३६ ॥
जीवराशिभिराकीर्ण आण्डकोशाङ्घ्रिपो महान् । तन्मूलत्वादच्युतेज्या सर्वजीवात्मतर्पणम् ॥ ३७ ॥
पुराण्यनेन सृष्टानि नृतिर्यगृषिदेवताः । शेते जीवेन रूपेण पुरेषु पुरुषो ह्यसौ ॥ ३८ ॥
तेष्वीशो भगवान् राजन् तारतम्येन वर्तते । तस्मात् पात्रं हि पुरुषो यावानात्मा यथेयते ॥ ३९ ॥
दृष्ट्वा तेषां मिथो नृणामवज्ञामात्मनो नृप । त्रेतादिषु हरेरर्चा क्रियायै कविभिः कृता ॥ ४० ॥
ततोऽर्चायां हरिं केचिच्छ्रद्धया च सपर्यया[3]। उपासते उपासाऽपि नार्थदा पुरुषद्विषाम् ॥ ४१ ॥
पुरुषेष्वपि राजेन्द्र सुपात्रं ब्राह्मणं विदुः । तपसा विद्यया तुष्ट्या धत्ते वेदं[4] हरेस्तनुम् ॥ ४२ ॥
नन्वस्य[5] ब्राह्मणा राजन् कृष्णस्य जगदात्मनः । पुनन्तः पादरजसा त्रिलोकीं दैवतं महद्॥ ४३ ॥

**॥ इति श्रीमद्भागवते सप्तमस्कन्धे पञ्चदशोऽध्यायः ॥**

---

**नारद उवाच**

कर्मनिष्ठा द्विजाः केचित् तपोनिष्ठा नृपापरे । स्वाध्यायेऽन्ये प्रवचने एके चिज्ज्ञानयोगयोः[6] ॥ १ ॥
ज्ञाननिष्ठाय देयानि कव्यान्यानन्त्यमिच्छता । दैवे च तदभावे स्यादितरेभ्यो यथाऽर्हतः ॥ २ ॥

---

१. देवर्ष्यर्हत्सु सर्वेषु ब्रह्मब्रह्मात्मजादिषु ❋ २. अग्रपूजायामभूत् पात्रतया मतः ❋ ३. केचित् संश्रद्धाय सपर्यया ❋ ४. चेदम् ५. तन्वोऽस्य ६. अन्ये च ज्ञानयोगयोः

द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा । भोजयेत् सुसमृद्धोऽपि श्राद्धे कुर्यान्न विस्तरम् ॥ ३ ॥
देशकालोचितश्रद्धाद्रव्यपात्रार्हणानि च । सम्यग् भवन्ति नैतानि विस्तरात् स्वजनार्पणात् ॥ ४ ॥
न दद्यादामिषं श्राद्धे न चाद्याद् धर्मतत्त्ववित् । मुनीनां स्यात् परा प्रीतिर्यथा नपशुहिंसया ॥ ५ ॥
देशे काले च सम्प्राप्ते मुन्यन्नं दैवसम्भृतम् । श्रद्धया विधिवद् पात्रे न्यस्तं कामधुगक्षयम् * ॥ ६ ॥
देवर्षिपितृभूतेभ्य आत्मने स्वजनाय च । अन्नं संविभजन् पश्येत् सर्वं तत् पुरुषात्मकम् * ॥ ७ ॥
नैतादृशः परो धर्मो नृणां सद्धर्ममिच्छताम् । न्यासो दण्डस्य भूतेषु मनोवाक्कायजस्य यः ॥ ८ ॥
एके कर्ममयान् यज्ञान् ज्ञानिनो यज्ञवित्तमाः । आत्मसंयमनेऽनीहा जुह्वति ज्ञानदीपिते ॥ ९ ॥
द्रव्ययज्ञैर्यक्ष्यमाणं दृष्ट्वा भूतानि बिभ्यति । एष माऽकरुणो हन्यादतज्ज्ञो ह्यसुतृब् ध्रुवम् ॥ १० ॥
तस्माद् दैवोपपन्नेन मुन्यन्नेनैव धर्मवित् । सन्तुष्टोऽहरहः कुर्यान्नित्यनैमित्तिकाः क्रियाः ॥ ११ ॥
विधर्मः परधर्मश्च आभास उपमा छलः । अधर्मशाखाः पञ्चेमा धर्मज्ञोऽधर्मवत् त्यजेत् ॥ १२ ॥
धर्मबाधो विधर्मः स्यात् परधर्मोऽन्यचोदितः । उपधर्मस्तु पाषण्डो दम्भो वा धर्मभिच्छलः[१] ॥

यस्त्विच्छया कृतः पुम्भिराभासो ह्याश्रमः[२] पृथक् ।
स्वभावविहितो धर्मः कल्प्यते[३]ऽस्योपशान्तये ॥ १४ ॥

धर्मार्थमपि नेहेत यात्रार्थं वाऽधनो धनम् । अनीहाऽनीहमानस्य महाहेरिव वृत्तिदा ॥ १५ ॥
सन्तुष्टस्य निरीहस्य त्वात्मारामस्य यत् सुखम् । कुतस्तत् कामलोभेन धावतोऽर्थेहया दिशः ॥ १६ ॥
सदा सन्तुष्टमनसां सर्वाः सुखमया दिशः । शर्कराकण्टकादिभ्यो यथोपानत्पदः शिवम् ॥ १७ ॥
सन्तुष्टः केन वा राजन् न वर्तेतापि वारिणा । औपस्थ्यजैह्व्यकार्पण्याद् गृहपालायते जनः ॥ १८ ॥
असन्तुष्टस्य विप्रस्य तेजो विद्या तपो यशः । स्रवतीन्द्रियलौल्येन ज्ञानं चैवावकीर्यते ॥ १९ ॥
कामस्यान्तं हि क्षुत्तृड्भ्यां क्रोधस्यैतत्फलोदयात् । जनो याति न लोभस्य जित्वा भुक्त्वा दिशो भुवः॥
पण्डिता बहवो राजन् बहुज्ञाः संशयच्छिदः । सदसस्पतयोऽप्येके असन्तोषात् पतन्त्यधः॥ २१ ॥
असङ्कल्पाज्जयेत् कामान्[४] क्रोधं कामविवर्जनात्[५] । अर्थानर्थेक्षया लोभं भयं तत्वावमर्शनात् ॥
आन्वीक्षिक्या शोकमोहौ डम्भं महदुपासया । योगान्तरायान् मौनेन हिंसां कामाद्यनीहया[६] ॥
कृपया भूतजं दुःखं दैवं जह्यात् समाधिना । आत्मजं योगवीर्येण निद्रां सत्वनिषेवया ॥ २४ ॥

---

* इमौ श्लोकौ विजयध्वजीये पाठे न स्त इति भाति । १. शब्दतश्छलः ❋ २. आश्रमे
३. कल्पते ४. कामम् ❋ ५. क्रोधविसर्जनात् ६. कायाद्यनीहया

रजस्तमश्च सत्वेन सत्वं चोपशमेन च। एतत् सर्वं गुरौ भक्त्या पुरुषो मनसा जयेत् ॥ २५ ॥

यस्य साक्षाद् भगवति ज्ञानदीपप्रदे गुरौ। अभिसन्धिः श्रुतस्तस्य[१] सर्वं कुञ्जरशौचवत् ॥ २६ ॥

एष वै भगवान् साक्षात् प्रधानपुरुषेश्वरः। योगेश्वरैर्विमृग्याङ्घ्रिर्लोको यं मन्यते नरम् ॥ २७ ॥

षड्वर्गसंयमैकान्ताः सर्वा निगमचोदनाः। तदन्ता यदि नो योगमावहेयुः[२] श्रमावहाः ॥ २८ ॥

यथा वार्तादयो विद्या यद्यस्यार्थं न बिभ्रति। अनर्थाय भवेयुश्च पूर्तमिष्टं तथाऽसतः ॥ २९ ॥

यश्चित्तविजयेच्छुः स्यान्निस्सङ्गो निष्परिग्रहः। एको विविक्तशरणो भिक्षुर्भैक्ष्यमिताशनः ॥ ३० ॥

शुचौ देशे समे राजन्नास्थाप्यासनमात्मनः। स्थिरं सुखं समं तस्मिन्नासीतर्ज्वङ्ग ओमिति ॥ ३१ ॥

प्राणापानौ सन्निरुन्ध्यात् पूरकुम्भकरेचकैः। यावन्मनस्त्यजेत् कामान् स्वनासाग्रनिरीक्षणः ॥ ३२ ॥

यतो यतो निःसरति मनः कामहतं भ्रमत्। ततस्तत उपाहृत्य हृदि रुन्ध्याच्छनैर्बुधः ॥ ३३ ॥

एवमभ्यसतश्चित्तं कालेनाल्पीयसा यतेः। अविपन्नस्य[३] निर्वाणं यात्यनिन्धनवह्निवत् ॥ ३४ ॥

कामादिभिरनाविद्धं प्रशान्ताखिलवृत्ति यत्। चित्तं ब्रह्मसुखस्पृष्टं नैवोत्तिष्ठेत कर्हिचित् ॥ ३५ ॥

यः प्रव्रज्य गृहात् पूर्वं त्रिवर्गावपनात् पुनः। यदा सेवेत तान् भिक्षुः स वै वान्ताश्यपत्रपः[४] ॥ ३६ ॥

यस्य देहः[५] स्मृतोऽनात्मा मर्त्यो विट्कृमिभस्मवत्। तमेव स्वात्मसात् कृत्वा[६] श्लाघयन्ति ह्यसत्तमाः॥

गृहस्थस्य क्रियात्यागो व्रतत्यागो वटोरपि। तपस्विनो ग्रामसेवा भिक्षोरिन्द्रियलोलता ॥ ३८ ॥

आश्रमापशदा ह्येते खल्वाश्रमविडम्बिनः[७]। देवमायाविमूढांस्तानुपेक्षेतानुकम्पया ॥ ३९ ॥

आत्मानं चेद् विजानीयात् परं ज्ञानधृताशयः। किमिच्छन् कस्य वा हेतोर्देहं पुष्णाति लम्पटः ॥

आहुः शरीरं रथमिन्द्रियाणि हयानभीषुं मन इन्द्रियेशम्।
वर्त्मानि मात्रा धिषणां च सूतं सत्वं बृहद्बन्धुरमीशधाम[८] ॥ ४१ ॥

अक्षं दशप्राणमधर्मधर्मौ चक्रेऽभिमानं रथिनं च जीवम्।
धनुर्हि तस्य प्रणवं पठन्ति शरं तु जीवं परमेव लक्ष्यम् ॥ ४२ ॥

रागो द्वेषश्च लोभश्च शोकमोहौ भयं मदः। मानोऽभिमानोऽसूया च माया हिंसा च मत्सरः ॥ ४३ ॥

रजः प्रमादः क्षुन्निद्रा शत्रवस्त्वेवमादयः। रजस्तमःप्रकृतयः सत्वप्रकृतयः क्वचित् ॥ ४४ ॥

---

१. भक्तिर्नोपसृता तस्य * २. योगानावहेयुः ३. अविषण्णं च ४. स पापो निरपत्रपः
५. यैः स्वदेहः * ६. त एवामुं स्वसात् कृत्वा * ७. आश्रमविडम्बनाः * ८. ईशसृष्टम् *

यावन्नृकायरथमात्मवशोपकल्पं धत्ते गरिष्ठचरणार्चनया निशातम्[1] ।
ज्ञानासिमच्युतबलं दधदस्तशत्रुः स्वाराज्यतुष्ट उपशान्त इदं विजह्यात् ॥ ४५ ॥
नो चेत् प्रमत्तमसदिन्द्रियवाजिसूता नीत्वोत्पथं विषयदस्युषु निक्षिपन्ति ।
ते दस्यवः सहयसूतममुं तमोऽन्धे संसारकूप उरुमृत्युभये क्षिपन्ति ॥ ४६ ॥
प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् । आवर्तते प्रवृत्तेन निवृत्तेनाश्नुतेऽमृतम् ॥ ४७ ॥
हिंस्रं द्रव्यमयं काम्यमग्निहोत्राद्यशान्तिदम् । दर्शश्च पूर्णमासश्च चातुर्मास्यं पशुः श्रुतः ॥ ४८ ॥
एतदिष्टं प्रवृत्ताख्यं हुतं प्रहुतमेव च । पूर्तं सुरालयारामकूपाजीव्यादिलक्षणम् ॥ ४९ ॥
द्रव्यमूष्मविपाकश्च धूमो रात्रिरपक्षयः । अयनं दक्षिणं सोमो दर्श ओषधिवीरुधः ॥ ५० ॥
अन्नं रेत इति क्ष्मेश पितृयानं पुनर्भवः । एकैकस्यानुपूर्व्याच्च[2] भूत्वाभूत्वेह जायते ॥ ५१ ॥
निषेकादिश्मशानान्तसंस्कारैः संस्कृता द्विजाः । इन्द्रियेषु क्रियायज्ञान् ज्ञानदीपेषु जुह्वति॥ ५२ ॥
इन्द्रियाणि मनस्येवं वाचि वैकारिकं मनः । तां तु[3] वर्णसमाम्नाये तमोङ्कारे स्वरे न्यसेत् ॥ ५३ ॥
ओङ्कारं बिन्दुनादे तु तं तु प्राणे महत्यमुम् । अग्निः सूर्यो दिवा वायुः शुक्लो राकोत्तरः[4] स्वराट् ॥
विश्वोऽथ तैजसः प्राज्ञस्तुर्य आत्मा समन्वयः । देवयानमिदं प्राहुर्भूत्वाभूत्वाऽनुपूर्व्यशः ॥ ५५ ॥
य एते पितृदेवानामयने देवनिर्मिते । शास्त्रेण चक्षुषा वेद जनस्थोऽपि न मुह्यति ॥ ५६ ॥
आदावन्ते जनानाशं बहिरन्तः परावरम् । ज्ञानं ज्ञेयं वचो वाच्यं तमो ज्योतिश्च यत् स्वयम् ॥ ५७ ॥
अबाधितोऽपि ह्याभासो यथा वस्तुतया स्मृतः । दुर्घटत्वादैन्द्रियकं तद्वदर्थविकल्पितम् ॥ ५८ ॥
क्षित्यादीनामिहार्थानां छाया न कतमाऽपि हि । न सङ्घातो विकारोऽपि न पृथङ् नान्वितोऽपि वा ॥
धातवोऽवयवित्वाच्च तन्मात्रावयवैर्विना । न स्युर्ह्यसत्यवयविन्यासन् नावयवा इव[5] ॥ ६० ॥
स्यात् सादृश्यभ्रमस्तावद् विकल्पे सति वस्तुनः । जाग्रत्स्वप्नौ यथा स्वप्ने तथा विधिनिषेधता ॥ ६१ ॥
भावाद्वैतं क्रियाद्वैतं द्रव्याद्वैतं तथाऽऽत्मनः । वर्तयन् स्वानुभूत्येह त्रीन् स्वप्नान् धुनुते मुनिः॥ ६२ ॥
कार्यकारणवस्त्वैक्यदर्शनं पटतन्तुवत् । अवस्तुत्वाद् विकल्पस्य भावाद्वैतं तदुच्यते ॥ ६३ ॥
यद् ब्रह्मणि परे साक्षात् सर्वकर्मसमर्पणम् । मनोवाक्तनुभिः पार्थ क्रियाद्वैतं तदुच्यते ॥ ६४ ॥
आत्मजायासुतादीनामन्येषां सर्वदेहिनाम् । यत् स्वार्थकामयोरैक्यं द्रव्याद्वैतं तदुच्यते ॥ ६५ ॥
यद् यस्य वाऽनिषिद्धं स्याद् येन यत्र यतो नृप । स तेनेहेत कर्माणि नरो नान्यैरनापदि ॥ ६६ ॥

---

१. नितान्तम् * २. ककशो नानुपूर्व्यात् * ३. वाचम् * ४. राकोत्तरा *
५. न स्युर्ह्यसत्यावयविन्यासन्नावयवा इव/ असन्नवयवोऽन्ततः/आसन्नवयवा इव

एतैरन्यैश्च वेदोक्तैर्वर्तमानः स्वकर्मभिः । गृहेऽप्यस्य गतिं यायाद् राजन् तद्भक्तिभाङ्[1] नरः ॥

यथा हि यूयं नृपदेव दुस्त्यजादापद्गणादुत्तरिता ननु प्रभो ।
यत्पादपङ्केरुहसेवया भवानहार्षीन्निर्जितदिग्गजः क्रतुम् ॥ ६८ ॥

अहं पुराऽभवं कश्चिद् गन्धर्व उपबर्हणः । नाम्नाऽतीते महाकल्पे गन्धर्वाणां सुसम्मतः ॥ ६९ ॥
रूपपेशलमाधुर्यसौगन्ध्यप्रियदर्शनः । स्त्रीणां प्रियतमो नित्यं मत्तस्तत्पुरलम्पटः ॥ ७० ॥
एकदा देवसत्रे तु गन्धर्वाप्सरसां गणाः । उपहूता विश्वसृग्भिर्हरिगाथोपगायने ॥ ७१ ॥
अगायन् तद् विदित्वाऽहं[2] स्त्रीभिः परिवृतो गतः । ज्ञात्वा विश्वसृजस्तन्मे हेळनं शेपुरोजसा[3] ॥
याहि त्वं शूद्रतामाशु नष्टश्रीः कृतहेळनः । तावद् दास्यामहं जज्ञे तत्रापि ब्रह्मवादिनाम् ।
शुश्रूषयाऽनुषङ्गेन प्राप्तोऽहं ब्रह्मपुत्रताम् ॥ ७३ ॥
धर्मस्ते गृहमेधीयो वर्णितः पापनाशनः ।गृहस्थो येन पदवीमञ्जसा न्यासिनामियात् ॥ ७४ ॥

यूयं नृलोके बत भूरिभागा लोकं पुनाना मुनयोऽतियाथ ।
येषां[4] गृहानावसतीति साक्षाद् गूढं परं ब्रह्म मनुष्यलिङ्गम् ॥ ७५ ॥
स वा अयं ब्रह्म महद् विमृग्यं कैवल्यनिर्वाणसुखानुभूतिः ।
प्रियः सुहृद् वः खलु मातुलेय आत्माऽर्हणीयो विधिकृद् गुरुश्च ॥ ७६ ॥
न यस्य साक्षाद् भवपद्मजादिभी रूपं धिया वस्तुतयाऽनुवर्णितम् ।
मौनेन भक्त्योपशमेन पूजितः प्रसीदतामेष स सात्वतां पतिः ॥ ७७ ॥

**श्रीशुक उवाच**

इति देवर्षिणा प्रोक्तं निशम्य भरतर्षभः । पूजयामास सुप्रीतः कृष्णं च प्रेमविह्वलः ॥ ७८ ॥
कृष्णपार्थावुपामन्त्र्य पूजितः प्रययौ मुनिः । श्रुत्वा कृष्णं परं ब्रह्म पार्थाः परमविस्मिताः ॥ ७९ ॥
इति दाक्षायणीनां ते पृथग्वंशाः प्रकीर्तिताः । देवासुरमनुष्याद्या लोका यत्र चराचराः ॥ ८० ॥

**॥इति श्रीमद्भागवते महापुराणे पारमहंस्यामष्टादशसाहस्र्यां संहितायां वैयासक्यां सप्तमस्कन्धे षोडशोऽध्यायः॥**

## ॥ समाप्तश्च सप्तमस्कन्धः ॥

---

१. तद्भक्तिमान्* २. अगायन्त विदित्वाऽहम्* ३. हेतुना शेपुरोजसा* ४. एषाम्

## ॥ अथाष्टमस्कन्धः ॥

### राजोवाच

स्वायम्भुवस्य च मनोर्वंशोऽयं विस्तराच्छ्रुतः । यत्र यत्र हरेर्भक्ताः कर्माणि च महीयसः ॥ १ ॥

यत्र धर्माश्च विविधाश्चतुर्वर्णाश्रिताः शुभाः । यत्र विश्वसृजां सर्गो मनूनन्यान् वदस्व नः ॥ २ ॥

गायन्ति कवयो ब्रह्मन् तानि नो वद शृण्वताम् । यदस्मिन्नन्तरे ब्रह्मन् भगवान् विश्वभावनः ।

कृतवान् कुरुते कर्ता ह्यतीतेऽनागतेऽद्य वा ॥ ३ ॥

### ऋषिरुवाच

मनवोऽस्मिन् व्यतीताः षट् कल्पे स्वायम्भुवादयः । आद्यस्तु[१] कथितो यत्र देवादीनां च सम्भवः ॥

आकूत्यां देवहूत्यां च दुहित्रोस्तस्य वै मनोः । धर्मज्ञानोपदेशार्थं भगवान् पुत्रतां गतः ॥ ५ ॥

कृतं पुरा भगवतः कपिलस्यानुवर्णितम् । आख्यास्ये भगवान् यज्ञो यच्चकार कुरूद्वह ॥ ६ ॥

विरक्तः कामभोगेषु शतरूपापतिः प्रभुः । विसृज्य राज्यं तपसे सभार्यो वनमाव्रजत्[२] ॥ ७ ॥

सुनन्दायां वर्षशतं पदैकेन भुवं स्पृशन् । तप्यमानस्तपो घोरमिदमन्वाह भारत ॥ ८ ॥

### मनुरुवाच

येनायं तपते विश्वं विश्ववीर्यं यतस्तपः । यो जागर्ति शयानेऽस्मिन् नायं तं वेद वेद सः ॥ ९ ॥

आत्मावास्यमिदं विश्वं यज्जगत्यां जगन्मनः । तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यचिद् धनम्॥१०॥

यं न पश्यन्ति पश्यन्तं चक्षुर्यस्य न रिष्यति । तं भूतनिलयं देवं सुपर्णमुपधावत ॥११॥

यस्याद्यन्तौ न मध्यं च न परो नान्तरं बहिः । विश्वस्य मूलं[३] यद् यस्माद् विश्वं च तद् ऋतं महत् ॥

स विश्वकायः पुरुहूत ईशः सत्यं परञ्ज्योतिरजः पुराणः ।

धत्तेऽस्य जन्माद्यजयाऽऽत्मशक्त्या तां विद्ययोदस्य निरीह आस्ते ॥ १३ ॥

अथाग्र ऋषयः कर्माणीहन्ते कर्महन्तवे[४] । ईहमानो हि पुरुषः प्रायोऽनीहां प्रपद्यते ॥ १४ ॥

ईहते भगवानीशो न हि तत्र विषज्जते । आत्मलाभेन पूर्णार्थो नावसीदन्ति येऽनु तम् ॥ १५ ॥

तमीहमानं निरहङ्कृतं बुधैर्निराशिषं पूर्णमनन्यचोदितम्[५] ।

तच्छिक्षयन्तं[६] निजवर्त्ममूढान् प्रभुं प्रपद्येऽखिलधर्मभावनम् ॥ १६ ॥

---

१. आद्यस्ते २. वनमाविशत् २. विश्वस्यामूनि

४. ईहन्तेऽकर्महेतवे ❋ ५. पूर्णमनन्यमानसम् ❋ ६. तान् शिक्षयन्तम् ❋

**श्रीशुक उवाच**

इति मन्त्रोपनिषदं व्याहरन्तं समाहितम् । दृष्ट्वाऽसुरा यातुधाना जग्धुमभ्यद्रवन् क्षुधा[१] ॥ १७ ॥

तांस्तथाऽवसितान् वीक्ष्य यज्ञः सर्वगतो हरिः । यामैः परिवृतो देवैर्हत्वाऽशासत् त्रिविष्टपम्॥१८॥

स्वारोचिषो द्वितीयस्तु मनुरग्नेः सुतोऽभवत् । द्युमत्सुषेणरोचिष्णुप्रमुखास्तस्य[२] चात्मजाः॥ १९ ॥

तत्रेन्द्रो रोचनस्त्वासीत् देवाश्च तुषितादयः । ऊर्जस्तम्बादयः[३] सप्त ऋषयो ब्रह्मवादिनः ॥ २० ॥

ऋषेस्तु वेदशिरसस्तुषिता नाम पत्न्यभूत् । तस्यां जज्ञे ततो देवो विभुरित्यभिविश्रुतः ॥ २१ ॥

अष्टाशीतिसहस्राणि मुनयो ये धृतव्रताः । अन्वशिक्षन् व्रतं तस्य कौमारब्रह्मचारिणः ॥ २२ ॥

तृतीय उत्तमो नाम प्रियव्रतसुतो मनुः । पवनः सृञ्जयो यज्ञहोत्राद्यास्तत्सुता नृप ॥ २३ ॥

वसिष्ठतनयाः सप्त ऋषयः प्रमदादयः । सत्या वेदश्रुता भद्रा देवा इन्द्रस्तु सत्यजित् ॥ २४ ॥

धर्मस्य सूनृतायां तु भगवान् पुरुषोत्तमः । सत्यसेन इति ख्यातो जातः सत्यव्रतैः सह ॥ २५ ॥

सोऽनृतव्रतदुःशीलानसतो यक्षराक्षसान् । भूतद्रुहो भूतगणांस्त्ववधीत् सत्यजित्सुतः ॥ २६ ॥

चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तापसः । हरिरित्याहुतो येन गजेन्द्रो मोचितो ग्रहात् ।

*वृषः ख्यातिर्नरः[४] केतुरित्याद्या दश तत्सुताः ॥ २७ ॥

*सत्यका हरयो वीरा देवास्त्रिशिख ईश्वरः । ज्योतिर्वामादयः सप्त ऋषयस्तापसेऽन्तरे ॥ २८ ॥

*देवा वैधृतयो नाम विधृतेस्तनया नृप । नष्टाः कालेन यैर्वेदा विधृताः स्वेन तेजसा ॥ २९ ॥

**राजोवाच**

बादरायण एतत् ते श्रोतुमिच्छामहे वयम् । हरिर्यथा गजपतिं ग्राहग्रस्तममूमुचत् ॥ ३० ॥

तत् कथां सुमहापुण्यां धन्यां स्वस्त्ययनां शिवाम्[५] । यत्रयत्रोत्तमश्लोको भगवान् गीयते हरिः ॥

परीक्षितैवं स तु बादरायणिः प्रायोपविष्टेन कथासु चोदितः ।

उवाच विप्राः प्रतिनन्द्य पार्थिवं मुदा मुनीनां सदसि स्म शृण्वताम् ॥ ३२ ॥

**॥ इति श्रीमद्भागवते अष्टमस्कन्धे प्रथमोऽध्यायः ॥**

---

१. क्रुधा २. रोचिष्मत्प्रमुखास्तस्य ३. ओजस्स्तम्भादयः

४. शान्तिर्नरः ❋ ५. तत् कथासु महापुण्यं धन्यं स्वस्त्ययनं शुभम् ।

* प्राचीनतमे कोशे सार्धश्लोकद्वयमिदं नास्ति ।

**श्रीशुक उवाच**

आसीद् गिरिवरो राजन् त्रिकूट इति विश्रुतः । क्षीरोदेनावृतः श्रीमान् योजनायुतमुच्छ्रितः ॥ १ ॥
तावता विस्तृतः पर्यक् त्रिभिः शृङ्गैः पयोनिधिम् । दिशश्च रोचयन्नास्ते रौप्यायसहिरण्मयैः[१]॥ २ ॥
अन्यैश्च ककुभः सर्वा रत्नधातुविचित्रितैः । नानाद्रुमलतागुल्मैः निर्घोषैर्निर्झराम्भसाम् ॥ ३ ॥
सदा निर्णिज्यमानाङ्घ्रिः समन्तात् पयऊर्मिभिः । करोति श्यामळां भूमिं शुभैर्मरतकादिभिः ॥ ४ ॥
सिद्धचारणगन्धर्वविद्याधरमहोरगैः[२] । किन्नरैरप्सरोभिश्च क्रीडद्भिर्जुष्टकन्दरः ॥ ५ ॥
यत्र सङ्गीतसन्नादैर्नदद्गुहममर्षया । अभिगर्जन्ति हरयः श्लाघिनः परशङ्कया ॥ ६ ॥
नानारण्यपशुव्रातसङ्कुलद्रोण्यलङ्कृतः । चित्रद्रुमसुरोद्यानकळकण्ठविहङ्गमः[३] ॥ ७ ॥
सरित्सरोभिरच्छोदैः पुळिनैर्मणिवालुकैः । देवस्त्रीमज्जनामोदसौरभाम्बानिलैर्युतः[४] ॥ ८ ॥
तस्य द्रोण्यां भगवतो वरुणस्य महात्मनः । उद्यानमृतुमन्नाम आक्रीडं सुरयोषिताम् ॥ ९ ॥
सर्वतोऽलङ्कृतं दिव्यैर्नित्यपुष्पफलद्रुमैः । मन्दारैः पारिजातैश्च पाटलाशोकचम्पकैः ॥ १० ॥
चूतैः प्रियाळैः पनसैराम्रैराम्रातकैरपि । क्रमुकैर्नाळिकेरैश्च[५] खर्जूरैर्बीजपूरकैः ॥ ११ ॥
मधुकैः सालताळैश्च तमालै रसनार्जुनैः । अरिष्टोदुम्बरप्लक्षैर्वटैः किंशुकचन्दनैः ॥ १२ ॥
पिचुमन्दैः कोविदारैः सरळैः सुरदारुभिः । द्राक्षेक्षुरम्भाजम्बूभिर्बदर्यक्षाभयामलैः ॥ १३ ॥
बिल्वैः कपित्थैर्जम्बीरैर्वृतः फल्लातकादिभिः[६] । तस्मिन् सरः सुविपुलं लसत्काञ्चनपङ्कजम्॥ १४ ॥
कुमुदोत्पलकह्लारशतपत्रश्रियोर्जितम्[७] । मत्तषट्पदनिर्घुष्टं शकुन्तैः कळनिस्वनैः ॥ १५ ॥
हंसकारण्डवाकीर्णं चक्राह्वैः सारसैरपि । जलकुक्कुटकोयष्टिदात्यूहकुलकूजितम्[८] ॥ १६ ॥
मत्स्यकच्छपसञ्चारचलत्पद्मरजःपयः । कदम्बवेतसरळनीपवञ्जुलकैर्वृतम्[९] ॥ १७ ॥
कुन्दैः कुरवकाशोकैः[१०] शिरीषैः कुटजेङ्गुदैः । कुब्जकैः स्वर्णयूथीभिर्नागपुन्नागजातिभिः ॥ १८ ॥
मल्लिकाशतपत्रैश्च माधवीजालकादिभिः । शोभितं तीरजैश्चान्यैर्नित्यर्त्तुभिरलं द्रुमैः ॥ १९ ॥

---

१. रूप्यायस..... ❋ २. ....गन्धर्वैविद्या... ❋ ३. ...विहङ्गमैः ❋
४. अनिलैर्वृतः ❋ ५. नारिकेलैश्च ६. भल्लातकादिभिः ७. श्रियाऽऽचितम् ❋
८. ...कोयष्टिनत्यूहकुल..... ❋ ९. वेतसनळनीप.... ❋ १०. कुरबकाशोकैः

तत्रैकदा तद्गिरिकाननाश्रयः करेणुभिर्वारणयूथपश्चरन् ।
सकण्टकं कीचकवेणुवेत्रवद्विशालगुल्मं[१] प्ररुजन् वनस्पतीन् ॥ २० ॥
यद्गन्धमात्राद्धरयो गजेन्द्रा व्याघ्रादयो व्याळमृगाः सखड्गाः[२] ।
महोरगाश्चापि भयाद् द्रवन्ति सगौरकृष्णाः शरभाश्चमर्यः ॥ २१ ॥
वृषा[३] वराहा महिषर्क्षशल्या गोपुच्छसालावृकमर्कटाश्च ।
अन्ये च क्षुद्रा हरिणाः शशादयश्चरन्त्यभीता यदनुग्रहेण ॥ २२ ॥
स घर्मतप्तः करिभिः करेणुभिर्वृतो मदच्युत् कळभैरनुद्रुतः ।
गिरिं गरिम्णा परितः प्रकम्पयन् निषेव्यमाणोऽळिकुलैर्मदाशनैः ॥ २३ ॥
सरोऽनिलं पङ्कजरेणुरूषितं जिघ्रन्नदूरान्मदविह्वलेक्षणः ।
वृतश्च यूथेन[४] तृषार्दितेन तत्सरोवराभ्याशमथागमद्[५] द्रुतम् ॥ २४ ॥
विगाह्य तस्मिन्नमृताम्बुनिर्मलं हेमारविन्दोत्पलरेणुवासितम् ।
पपौ निकामं निजपुष्करोद्धृतमात्मानमद्भिः स्नपयन् गतक्लमः ॥ २५ ॥
*स्वपुष्करेणोद्धृतशीकराम्बुभिर्निपाययन् संस्नपयन् यथा गृही ।
घूर्णन् करेणूः कलभांश्च दुर्मदो नाचष्ट कृच्छ्रं कृपणोऽजमायया ॥ २६ ॥
तं तत्र कश्चिन्नृप दैवचोदितो ग्राहो बलीयांश्चरणे रुषाऽग्रहीत् ।
यदृच्छयैवं[६] व्यसनं गतो गजो यथाबलं सोऽतिबलो विचक्रमे ॥ २७ ॥
तथाऽऽतुरं यूथपतिं करेणवो विकृष्यमाणं तरसा बलीयसा ।
विचुक्रुशुर्दीनधियोऽपरे गजाः पार्ष्णिग्रहास्तारयितुं न चाशकन् ॥ २८ ॥
नियुध्यतोरेवमिभेन्द्रनक्रयोर्विकर्षतोरन्तरतो बहिर्मिथः ।
समाः सहस्रं व्यगमन् महीपते सप्राणयोश्चित्रममंसतामराः ॥ २९ ॥
ततो गजेन्द्रस्य सहोबलौजसां कालेन दीर्घेण महानभूद् व्ययः ।
विकृष्यमाणस्य जलेऽवसीदतो विपर्ययोऽभूत् सकलं जलौकसः ॥ ३० ॥

---

१. सुकण्टकं केतकवेणुवेत्रवद्..... ❋ २. व्याळमृगाश्च खड्गाः ❋ ३. वृकाः ❋
४. वृतः स्वयूथेन ❋ ५. अथाद्रवत् ❋ * अयं श्लोकः प्राचीनकोशेषु नास्ति । ६. यदृच्छयैतद् ❋

इत्थं गजेन्द्रः स यदाऽऽप सङ्कटं प्राणस्य देही विवशो[1] यदृच्छया ।
अपारयन्नात्मविमोक्षणे चिरं दक्षामिमां[2] बुद्धिमथाभ्यपद्यत ॥ ३१ ॥
न मामिमे ज्ञातय आतुरं गजाः कुतः करिण्यः प्रभवन्ति मोचितुम्[3] ।
ग्राहेण पाशेन विधातुरावृतोऽप्यहं[4] च तं यामि परं परायणम् ॥ ३२ ॥
यः कश्चनेशो बलिनोऽन्तकोरगात् प्रचण्डवेगादभिधावतो भृशम् ।
भीतं प्रपन्नं परिपाति यद्भयान्मृत्युः प्रधावत्यरणं तमीमहि ॥ ३३ ॥

**॥ इति श्रीमद्भागवते अष्टमस्कन्धे द्वितीयोऽध्यायः ॥**

---

**श्रीशुक उवाच**

एवं व्यवसितो बुद्ध्या समाधाय मनो हृदि । जजाप परमं जाप्यं प्राग्जन्मन्यनुशिक्षितम् ॥ १ ॥

**गजेन्द्र उवाच**

ओं नमो भगवते तस्मै यत एतच्चिदात्मकम् । पुरुषायादिबीजाय परेशाय हि धीमहि ॥ २ ॥
यस्मिन्निदं यतश्चेदं येनेदं य इदं स्वयम् । योऽस्मात् परस्माच्च परस्तं प्रपद्ये स्वयम्भुवम् ॥ ३ ॥
यः स्वात्मनीदं निजमाययाऽर्पितं क्वचिद् विभातं क्व च तत् तिरोहितम् ।
अविद्धदृक् साक्ष्युभयं तदीक्षते स आत्ममूलोऽवतु मां परात्परः ॥ ४ ॥
कालेन पञ्चत्वमितेषु कृत्स्नशो लोकेषु लीनेषु च सर्वहेतुषु ।
तमस्तदासीद् गहनं गभीरं यस्तस्य पारेऽभिविराजते विभुः ॥ ५ ॥
न यस्य देवा ऋषयः पदं विदुर्जन्तुः पुनः कोऽर्हति गन्तुमीरितुम् ।
यथा नटस्याकृतिभिर्विचेष्टतो दुरत्ययानुक्रमणः स माऽवतु ॥ ६ ॥
दिदृक्षवो यस्य पदं सुमङ्गळं[5] विमुक्तसङ्गा मुनयः सुसाधवः ।
चरन्त्यलोकव्रतमव्रणं वने सर्वात्मभूतः[6] सुहृदः स मे गतिः ॥ ७ ॥
न विद्यते यस्य च जन्म कर्म वा न नामरूपे गुणदोष एव वा ।
तथापि लोकस्य च सम्भवाय यः स्वमायया तान्यनुकालमृच्छति ॥ ८ ॥

---

१. दैवाद् विवशः ❋ २. दध्याविमाम् ३. मोक्षितुम् ❋ ४. विधातुरातुरोऽप्यहम् ❋
५. यस्य पदं हि मङ्गळम् ❋ ६. सर्वात्मभूताः ❋ /सुखात्मभूताः सुखदः ❋

तस्मै नमः परेशाय ब्रह्मणेऽनन्तशक्तये । अरूपायोरुरूपाय नम आश्चर्यकर्मणे ॥ ९ ॥
नम आत्मप्रदीपाय साक्षिणे परमात्मने । नमो गिरां विदूराय मनसश्चेतसामपि ॥ १० ॥
सत्वेन प्रतिलभ्याय नैष्कर्म्येण विपश्चिताम् । नमः कैवल्यनाथाय निर्वाणसुखसंविदे ॥ ११ ॥
नमः शान्ताय घोराय मूढाय गुणकर्मणे । निर्विशेषाय साम्याय नमो ज्ञानघनाय च ॥ १२ ॥
क्षेत्रज्ञाय नमस्तुभ्यं सर्वाध्यक्षाय साक्षिणे । पुरुषायात्ममूलाय मूलप्रकृतये नमः ॥ १३ ॥
सर्वेन्द्रियगुणद्रष्टे सर्वप्रत्ययहेतवे । असत्याच्च विमुक्ताय सदाभासाय ते नमः ॥ १४ ॥

नमो नमस्तेऽखिलकारणाय नारायणायार्तिविनाशनाय ।
सर्वागमाम्नायमहार्णवाय नमोऽपवर्गाय परायणाय ॥ १५ ॥
गुणारणिच्छन्नचिदुष्मपाय तत्क्षोभविस्फूर्जितमानसाय ।
युक्तात्मभिः स्वहृदये परिभाविताय ज्ञानात्मने भगवते नम ईश्वराय ॥ १६ ॥
यं धर्मकामार्थविमुक्तिकामा भजन्त इष्टां गतिमाप्नुवन्ति ।
किञ्चाशिषो रात्यपि देहमव्ययं करोतु मे हृदयग्रन्थिमोक्षणम्[1] ॥ १७ ॥
एकान्तिनो यस्य न किञ्चनार्थं वाञ्छन्ति ये वै[2] भगवत्प्रधानाः ।
अत्यद्भुतं यच्चरितं सुमङ्गलं गायन्त आनन्दसमुद्रमग्नाः ॥ १८ ॥
तमक्षरं ब्रह्मपरं परेशमव्यक्तमाध्यात्मिकयोगगम्यम् ।
अतीन्द्रियं सूक्ष्ममिवातिदूरमनन्तमाद्यं[3] परिपूर्णमीडे ॥ १९ ॥

यस्य ब्रह्मादयो देवा वेदा लोकाश्चराचराः । नामरूपविभेदेन जल्प्या च कलया कृताः ॥ २० ॥

यथाऽर्चिषोऽग्नेः सवितुर्गभस्तयो निर्यान्ति संयान्त्यसकृत् स्वरोचिषः ।
तथा यतोऽयं गुणसम्प्रवाहो बुद्धिर्मनः खानि शरीरसर्गः ॥ २१ ॥
स वै न देवासुरमर्त्यतिर्यङ् न स्त्री न षण्ढो न पुमान् न जन्तुः ।
नायं गुणः कर्म न सन् न चासन् निषेधशेषो जयतादशेषः ॥ २२ ॥
जिजीविषे नाहमिहामुया किमन्तर्बहिश्चावृतयेभयोन्या ।
इच्छामि कालेन न यस्य विप्लवस्तस्यात्मलोकावरणस्य मोक्षणम् ॥ २३ ॥

---

१. करोतु मेऽदभ्रदयो विमोक्षणम्   २. ये ते ❋   ३. अनन्तमीड्यम् ❋

सोऽहं विश्वसृजं विश्वमविश्वं विश्ववेदसम् । विश्वात्मानमजं ब्रह्म प्रणतोऽस्मि परं पदम् ॥ २४ ॥

योगरन्धितकर्माणो हृदि योगविभाविते । योगिनो यं विपश्यन्ति[1] योगेशं तं नतोऽस्म्यहम् ॥ २५ ॥

नमो नमस्तुभ्यमसँह्यवेगशक्तित्रयायाखिलधीगुणाय ।
प्रपन्नपालाय दुरन्तशक्तये बुद्धीन्द्रियाणामनवाप्यवर्त्मने[2] ॥ २६ ॥

नायं वेद स्वमात्मानं यच्छक्त्याऽहंधिया हतः । तं दुरत्ययमाहात्म्यं भगवन्तं नतोऽस्म्यहम् ॥ २७ ॥

**श्रीशुक उवाच**

एवं गजेन्द्रमुपवर्णितनिर्विशेषं ब्रह्मादयो विविधलिङ्गभिदाभिमानाः ।
नैते यदोपससृपुर्निखिलात्मकत्वात् तत्राखिलामरवरो हरिराविरासीत् ॥ २८ ॥

तं तद्वदार्तमुपलभ्य जगन्निवासः स्तोत्रं निशम्य दिविजैः सह संस्तुवद्भिः ।
छन्दोमयेन गरुडेन समुह्यमानश्चक्रायुधोऽभ्यगमदाशु[3] यतो गजेन्द्रः ॥ २९ ॥

सोऽन्तः सरस्युरुबलेन गृहीत आर्तो दृष्ट्वा गरुत्मति हरिं ख उपात्तचक्रम् ।
उत्क्षिप्य साम्बुजकरं गिरमाह कृच्छ्रान्नारायणाखिलगुरो भगवन् नमस्ते ॥ ३० ॥

तं वीक्ष्य पीडितमजः सहसाऽवतीर्य सग्राहमाशु सरसः कृपयोज्जहार ।
ग्राहाद् विपाटितमुखादरिणा गजेन्द्रं सम्पश्यतां हरिरमूमुचदुस्रियाणाम् ॥ ३१ ॥

**॥ इति श्रीमद्भागवते अष्टमस्कन्धे तृतीयोऽध्यायः ॥**

---

**श्रीशुक उवाच**

तदा देवर्षिगन्धर्वा ब्रह्मेशानपुरोगमाः । मुमुचुः कुसुमासारं शंसन्तः कर्म तद्धरेः ॥ १ ॥

नेदुर्दुन्दुभयो दिव्या गन्धर्वा ननृतुर्जगुः । ऋषयश्चारणाः सिद्धास्तुष्टुवुः पुरुषोत्तमम् ॥ २ ॥

योऽसौ ग्राहः स वै सद्यः परमाश्चर्यरूपधृक् । मुक्तो देवलशापेन हूहू गन्धर्वसत्तमः[4] ॥ ३ ॥

प्रणम्य शिरसाऽधीशमुत्तमश्लोकमव्ययम् । अगायत यशोधाम कीर्तन्यगुणसत्कथम् ॥ ४ ॥

सोऽनुकम्पित ईशेन परिक्रम्य प्रणम्य तम् । लोकस्य पश्यतो लोकं स्वमगान्मुक्तकिल्बिषः ॥ ५ ॥

गजेन्द्रो भगवत्स्पर्शाद् विमुक्तोऽज्ञानबन्धनात् । प्राप्तो भगवतो रूपं पीतवासाश्चतुर्भुजः ॥ ६ ॥

---

१. प्रपश्यन्ति २. सर्वेन्द्रियाणामनवाप्यवर्त्मने * ३. ह्यगमदाशु
४. हुहूर्गन्धर्वसत्तमः/हुहू गन्धर्वसत्तमः

स वै पूर्वमभूद्राजा पाण्ड्यो द्रमिळसत्तमः[१] । इन्द्रद्युम्न इति ख्यातो विष्णुव्रतपरायणः ॥ ७ ॥

स एकदाऽऽराधनकाल आत्मवान् गृहीतमौनव्रत ईश्वरं हरिम् ।
जटाधरस्तापस आप्लुतोऽच्युतं समर्चयामास कुलाचलाश्रयः ॥ ८ ॥
यदृच्छया तत्र महायशा मुनिः समागमच्छिष्यगणैः परिश्रितः ।
तं वीक्ष्य तूष्णीमकृतार्हणादिकं रहस्युपासीनमृषिश्चुकोप ह ॥ ९ ॥
तस्मा इमं शापमदादसाधुरयं दुरात्माऽकृतबुद्धिरद्य ।
मद्धेळनात् प्राविशतां तमिस्रं यथा गजः स्तब्धमतिः सदोषः ॥ १० ॥

**श्रीशुक उवाच**

एवं शप्त्वा गतोऽगस्त्यो भगवान् नृप सानुगः । इन्द्रद्युम्नोऽपि राजर्षिर्दिष्टं तदुपधारयन् ॥ ११ ॥
आपन्नः कौञ्जरीं योनिमात्मस्मृतिविनाशनीम् । हर्यर्चनानुभावेन यद् गजत्वेऽप्यनुस्मृतिः ॥ १२ ॥

एवं विमोक्ष्य गजयूथपमब्जनाभस्तेनापि पार्षदगतिं गमितेन[२] युक्तः ।
गन्धर्वसिद्धविबुधैरुपगीयमानकर्माऽद्भुतं स्वभुवनं गरुडासनोऽगात् ॥ १३ ॥
एवं महाराज तवेरितो मया कृष्णानुभावो गजराजमोक्षणम् ।
स्वर्ग्यं यशस्यं कलिकल्मषापहं दुःस्वप्ननाशं कुरुवर्य शृण्वताम् ॥ १४ ॥

अथानुकीर्तयन्त्येतच्छ्रेयस्कामा द्विजातयः । शुचयः प्रातरुत्थाय दुःस्वप्नाद्युपशान्तये ॥ १५ ॥
इदमाह हरिः प्रीतो गजेन्द्रं कुरुसत्तम । शृण्वतां सर्वभूतानां सर्वभूतमयो विभुः ॥ १६ ॥

**श्रीभगवानुवाच**

ये मां त्वां च सरश्चेदं गिरिकन्दरकाननम् । वेत्रकीचकवेणूनां गुल्मानि सुरपादपान् ॥ १७ ॥
शृङ्गाणीमानि धिष्ण्यानि ब्रह्मणो मे शिवस्य च । क्षीरोदं मे प्रियं धाम श्वेतद्वीपं च भास्वरम् ॥ १८ ॥
श्रीवत्सं कौस्तुभं मालां गदां कौमोदकीं मम । सुदर्शनं पाञ्चजन्यं सुपर्णं पतगेश्वरम् ॥ १९ ॥
शेषं च मत्कलां सूक्ष्मां श्रियं देवीं मदाश्रयाम् । ब्रह्माणं नारदमृषिं भवं प्रह्लादमेव च ॥ २० ॥
मत्स्यकूर्मवराहाद्यैरवतारैः कृतानि मे । कर्माण्यनन्तपुण्यानि सूर्यसोमहुताशनान् ॥ २१ ॥
प्रणवं सत्यमव्यक्तं गोविप्रान् धर्ममक्षयम् । दाक्षायणीं धर्मपत्नीं सोमकश्यपयोरपि[३] ॥ २२ ॥
गङ्गां सरस्वतीं नन्दां कालिन्दीं सितवारणम् । ध्रुवं ब्रह्मऋषीन् सप्त पुण्यश्लोकांश्च मानवान् ॥ २३ ॥

---

१. द्रविडसत्तमः २. पार्षदतां गमितेन ❋ ३. सोमकाश्यपयोरपि ❋

उत्थायापररात्रान्ते प्रयताः सुसमाहिताः । स्मरन्ति मम रूपाणि मुच्यन्ते तेंऽहसोऽखिलात् ॥ २४ ॥
ये मां स्तुवन्त्यनेनाङ्ग प्रतिबुद्ध्य निशात्यये । तेषां प्राणात्ययेऽहं वै ददामि विमलां गतिम्[1] ॥ २५ ॥

श्रीशुक उवाच

इत्यादिश्य हृषीकेशः प्राध्माय जलजोत्तमम् । हर्षयन् विबुधानीकमारुरोह खगाधिपम् ॥ २६ ॥

**॥ इति श्रीमद्भागवते अष्टमस्कन्धे चतुर्थोऽध्यायः ॥**

---

श्रीशुक उवाच

राजन्नुदितमेतत् ते हरेः कर्माघनाशनम् । गजेन्द्रमोक्षणं पुण्यं रैवतं त्वन्तरं[2] शृणु ॥ १ ॥
पञ्चमो रैवतो नाम मनुस्तापससोदरः । बलविन्ध्यादयस्तस्य सुता अर्जुनपूर्वकाः ॥ २ ॥
विभुरिन्द्रः सुरगणा राजन् भूतरयादयः । हिरण्यरोमा वेदशिरा ऊर्ध्वबाह्वादयो द्विजाः ॥ ३ ॥
पत्नी विकुण्ठा शुभ्रस्य वैकुण्ठैः सुरसत्तमैः । तयोः स्वकलया जज्ञे वैकुण्ठो भगवान् स्वयम्॥ ४ ॥
वैकुण्ठः कल्पितो येन लोको लोकनमस्कृतः । रमया प्रार्थ्यमानेन देव्या तत्प्रियकाम्यया ॥ ५ ॥
तस्यानुभावः कथितो गुणाश्च परमोदयाः । भौमान् रेणून्[3] स विममे यो विष्णोर्वर्णयेद् गुणान् ॥
षष्ठश्च चक्षुषः पुत्रश्चाक्षुषो नाम वै मनुः । पुत्राः पुरुषसुद्युम्नप्रमुखाश्चाक्षुषात्मजाः ॥ ७ ॥
इन्द्रो मन्द्रद्रुमस्तत्र देवा आप्यादयो गणाः । मुनयस्तत्र वैराजहविष्मद्वीरकादयः ॥ ८ ॥
तत्रापि देवः सम्भूत्यां वैराजस्याभवत् सुतः । अजितो नाम भगवानंशेन जगतः पतिः ॥ ९ ॥
पयोब्धिं येन निर्मथ्य सुराणां साधिता सुधा । भ्रममाणोऽम्भसि धृतः कूर्मरूपेण मन्दरः ॥ १० ॥

राजोवाच

यथा भगवता ब्रह्मन् मथितः क्षीरसागरः । यदर्थं वा यतश्चाद्रिं दधाराम्बुचरात्मना ॥ ११ ॥
यथाऽमृतं सुरैः प्राप्तं किमन्यदभवत् ततः । एतद् भगवतः कर्म वदस्व परमाद्भुतम् ॥ १२ ॥
त्वयेत्थं कथ्यमानेन[4] महिम्ना सात्वतां पते । नातितृप्यति मे चित्तं सुचिरं तापतापितम् ॥ १३ ॥

सूत उवाच

सम्पृष्टो भगवानेवं द्वैपायनसुतो द्विजाः । अभिनन्द्य हरेर्वीर्यमभ्याचष्टुं प्रचक्रमे ॥ १४ ॥

---

१. विपुलां मतिम् ※ २. रैवतं चान्तरम् ※ ३. भौमानणून् ※ ४. त्वया सङ्कीर्त्यमानेन ※

**श्रीशुक उवाच**

यदा युद्धेऽसुरैर्देवा बाध्यमानाः शितायुधैः । गतासवो निपतिता नोत्तिष्ठेरन् स्म भूरिशः[१] ॥ १५ ॥

यदा दुर्वासशापेन सेन्द्रा लोकास्त्रयो नृप । निःश्रीकाश्चाभवंस्तत्र नेशुरिज्यादयः क्रियाः ॥ १६ ॥

निशाम्यैतत् सुरगणा महेन्द्रवरुणादयः । नाध्यगच्छन् स्वयं मन्त्रैर्मन्त्रयन्तो विनिश्चयम् ॥ १७ ॥

ततो ब्रह्मसभां जग्मुर्मेरोर्मूर्द्धनि सर्वशः[२] । सर्वं विज्ञापयाञ्चक्रुः प्रणताः परमेष्ठिने ॥ १८ ॥

स विलोक्येन्द्रवाय्वादीन् निःसत्वान् विगतप्रभान् । लोकानमङ्गळप्रायान् सुरांश्चैव यथा विभुः ॥

समाहितेन मनसा संस्मरन् पुरुषं परम् । उवाचोत्फुल्लवदनो देवान् स भगवान् परः ॥ २० ॥

अहं भवो यूयमथो सुरादयो मनुष्यतिर्यग्द्रुमधर्मजातयः ।
यस्यावतारांशकलाविसर्जिता व्रजाम सर्वे शरणं तमव्ययम् ॥ २१ ॥

न यस्य वध्यो न च रक्षणीयो नोपेक्षणीयादरणीयपक्षः ।
अथापि सर्गस्थितिसंयमार्थं धत्ते रजःसत्वतमांसि काले ॥ २२ ॥

अयं तु तस्य क्षितिपालनक्षणः[३] सत्वं जुषाणस्य भवाय देहिनाम् ।
तस्माद् व्रजामः शरणं जगद्गुरुं स्वानां स नो धास्यति शं सुरप्रियः ॥ २३ ॥

**श्रीशुक उवाच**

इत्याभाष्य सुरान् वेधाः सह देवैररिन्दम । अजितस्य पदं साक्षाज्जगाम तमसः परम् ॥ २४ ॥

तत्रादृष्टस्वरूपाय श्रुतपूर्वाय चाभ्यधात् । स्तुतिमद्भुतदैवीभिर्गीर्भिस्त्ववहितेन्द्रियः ॥ २५ ॥

**ब्रह्मोवाच**

अविक्रियं सत्यमनन्तमाद्यं गुहाशयं निष्कळमप्रतर्क्यम् ।
मनोऽग्रयाणं[४] वचसाऽनिरुक्तं नमामहे देववरं वरेण्यम् ॥ २६ ॥

विपश्चितं प्राणमनोधियात्मनामर्थेन्द्रियाभासमनिद्रमव्रणम् ।
छायातपौ यत्र न गृध्रपक्षौ तमक्षरं खं त्रियुगं व्रजामहे ॥ २७ ॥

अजस्य चक्रं त्वजयेर्यमाणं मनोमयं पञ्चदशारमाशु ।
त्रिणाभि विद्युद्चलमष्टनेमि यदक्षमाहुस्तमृतं प्रपद्ये ॥ २८ ॥

---

१. भूयशः २. मेरोर्वै मूर्ध्नि सर्वशः * ३. स्थितिपालनक्षणः ४. सदा गृणानम् *

यदेकवर्णं तमसः परं सदलोकमव्यक्तमनन्तपारम् ।
आसाञ्चकारोपसुपर्णपत्रमुपासते योगरथेन धीराः ॥ २९ ॥
न यस्य कश्चातिपिपर्ति[1] मायां यया जनो मुह्यति वेदनार्थम्[2] ।
तं निर्जितात्मात्मगुणं परेशं नमामि भूतेषु समं चरन्तम् ॥ ३० ॥
इमे वयं यत्कृपयैव तन्वा सत्वेन सृष्टा बहिरन्तरं विभो[3] ।
गतिं न सूक्ष्मामृषयश्च विद्महे कुतोऽसुराद्या इतरप्रधानाः ॥ ३१ ॥
पादौ महीयं स्वकृतैव यस्य चतुर्विधो यत्र हि भूतसर्गः ।
स वै महापूरुष आत्मतन्त्रः प्रसीदतां ब्रह्म महाविभूतिः ॥ ३२ ॥
अम्भस्तु यद्रेत उदारवीर्यं सिध्यन्ति जीवन्त्युत वर्धमानाः ।
लोकास्त्रयोऽथाखिललोकपालाः प्रसीदतां ब्रह्म महाविभूतिः ॥ ३३ ॥
सोमं मनो यस्य समामनन्ति दिवौकसां वै बलमन्ध आयुः ।
ईशो नगानां प्रजनः[4] प्रजानां प्रसीदतां नः स महाविभूतिः ॥ ३४ ॥
अग्निर्मुखं यस्य तु जातवेदा जातः क्रियाकाण्डनिमित्तजन्मा[5] ।
अन्तः समुद्रे पचतः स्वधातून् प्रसीदता नः स महाविभूतिः ॥ ३५ ॥
यच्चक्षुरासीत् तरणिर्देवयानं त्रयीमयो ब्रह्मण एष धिष्ण्यम् ।
द्वारं च मुक्तेरमृतस्य मृत्योः प्रसीदतां नः स महाविभूतिः ॥ ३६ ॥
प्राणादभूद् यस्य चराचराणां प्राणः सहो बलमोजश्च वायुः ।
अन्वास्म सम्राजमिवानुगा वयं प्रसीदतां नः स महाविभूतिः ॥ ३७ ॥
श्रोत्राद् दिशो यस्य हृदश्च खानि प्रजज्ञिरे खं पुरुषस्य नाभेः ।
प्राणेन्द्रियात्मा स्वशरीरबन्धुः प्रसीदतां नः स महाविभूतिः ॥ ३८ ॥
बलान्महेन्द्रस्त्रिदशाः प्रसादान्मन्योर्गिरीशोऽशरणाद् विरिञ्चः[6] ।
खेभ्यश्च छन्दांस्यृषयो मेढ्रतः कः प्रसीदतां नः स महाविभूतिः ॥ ३९ ॥

---

१. कश्चातितितर्ति ❋ २. वेद नार्थम् ❋ ३. यत्कृपयैव सृष्टाः सत्वेन दृष्टा बहिरन्तराऽपि
४. प्रभवः ❋ ५. क्रियाजातनिमित्तजन्मा ❋ ६. मन्योर्गिरित्रो धिषणाद् विरिञ्चः ❋

श्रीर्वक्षसः पितरश्छाययाऽऽसन् धर्मः स्तनादितरः पृष्ठतोऽभूत् ।
द्यौर्यस्य शीर्ष्णोऽप्सरसो विलासात्[१] प्रसीदतां नः स महाविभूतिः ॥ ४० ॥
विप्रो मुखाद् ब्रह्म च यस्य गुह्यं राजन्य आसीद् भुजयोर्बलं च ।
ऊर्वोर्विशोऽङ्घ्रेरभवंश्च शूद्राः[२] प्रसीदतां नः स महाविभूतिः ॥ ४१ ॥
लोभोऽधरात् प्रीतिरुपर्यभूद् द्युतिर्नस्तः पशव्यं स्पर्शेन कामः ।
भ्रुवोर्यमः पक्ष्मभवस्तु कालः प्रसीदतां नः स महाविभूतिः ॥ ४२ ॥
द्रव्यं वयः कर्मगुणाश्च शेषं यद्योगमायाविहिताः पतन्ति ।
यद् दुर्विभाव्यं प्रबुधावबोधं[३] प्रसीदतां नः स महाविभूतिः ॥ ४३ ॥
नमोऽस्तु तस्मा उपशान्तशक्तये[४] स्वाराज्यलाभपरिपूरितात्मने[५] ।
गुणेषु मायारचितेषु वृत्तिभिर्नसज्जमानाय नमः स्वभूतये ॥ ४४ ॥
स त्वं नो दर्शयात्मानमस्मत्करणगोचरः । प्रयतानां दिदृक्षूणां सस्मितं ते मुखाम्बुजम् ॥ ४५ ॥
तैस्तैः स्वेच्छाकृतै रूपैः कालेकाले स्वयं विभो । कर्म दुर्विषहं यन्नो भगवान् वै करोति हि ॥ ४६ ॥
क्लेशभूर्यल्पसाराणि कर्माणि विफलानि वा । देहिनां विषयार्तानां[६] न तथैवार्पितं त्वयि ॥ ४७ ॥
नाधमः कर्मकल्पोऽपि[७] विफलायेश्वरार्पितः । कल्पते पुरुषस्यैव स ह्यात्मा दयितो हितः ॥ ४८ ॥
यथाहि स्कन्धशाखानां तरोर्मूलावसेचनम् । एवमाराधनं विष्णोः सर्वेषामात्मनश्च हि ॥ ४९ ॥
नमस्तुभ्यमनन्ताय दुर्वितर्क्यात्मकर्मणे । निर्गुणाय गुणेशाय सत्वस्थाय च साम्प्रतम् ॥ ५० ॥

**॥ इति श्रीमद्भागवते अष्टमस्कन्धे पञ्चमोऽध्यायः ॥**

---

**श्रीशुक उवाच**

एवं स्तुतः सुरगणैर्भगवान् हरिरीश्वरः । तेषामाविरभूद् राजन् सहस्रार्कोदयद्युतिः ॥ १ ॥
तेनैव सहसा सर्वे देवाः प्रतिहतेक्षणाः । नापश्यन् खं दिशः क्षोणीमात्मानं चाग्रतो विभुम् ॥ २ ॥
विरिञ्चो भगवान् दृष्ट्वा सह शर्वेण भारत । स्वच्छं मरतकश्यामं पद्मगर्भारुणेक्षणम् ॥ ३ ॥

---

१. विहारात् २. विशो जाङ्घिभवाश्च शूद्राः ❋ ३. प्रबुधावबोधः ❋ ४. उपशान्तमूर्तये ❋
५. स्वराज्यलाभात् प्रतिपूरितात्मने ❋ ६. विषयात्तानम् ❋ ७. नाधमं कर्म कल्पोऽपि

तप्तहेमावदातेन लसत्कौशेयवाससा । प्रसन्नचारुसर्वाङ्गं सुमुखं सुन्दरभ्रुवम् ॥ ४ ॥
महामणिकिरीटेन केयूराभ्यां च भूषितम् । कर्णाभरणनिर्भातकपोलश्रीमुखाम्बुजम् ॥ ५ ॥
काञ्चीकलापवलयहारनूपुरशोभितम् । कौस्तुभाभरणं लक्ष्म बिभ्रतं वनमालिनम् ॥ ६ ॥
सुदर्शनादिभिश्चास्त्रैर्मूर्तिमद्भिरुपासितम् । तुष्टाव देवप्रवर: सशर्व: पुरुषं परम् ।
सर्वामरगणै: साकं सर्वाङ्गैरवनिं गतै: ॥ ७ ॥

**ब्रह्मोवाच**

अजाय जन्मस्थितिसंयमाय गुणाय निर्वाणसुखार्णवाय ।
अणोरणिम्नेऽपरिगण्यधाम्ने महानुभावाय नमो नमस्ते ॥ ८ ॥
रूपं तवैतत् पुरुषर्षभेड्यं श्रेयोऽर्थिभिर्वैदिकतान्त्रिकैश्च ।
योगेन धात: सह नस्त्रिलोकान् पश्याम्यमुष्मिन् भव[1] विश्वमूर्ते ॥ ९ ॥
त्वय्यग्र आसीदिदमात्मतन्त्रे त्वमादिरन्तो जगतोऽस्य मध्यम् ।
घटस्य मृत्स्नेव पर: परस्मात् त्वमेव चाशेषमशेषनामा ॥ १० ॥
त्वं माययाऽऽत्माश्रयया स्वयेदं निर्माय विश्वं तदनुप्रविष्ट: ।
पश्यन्ति युक्ता मनसा मनीषिणो गुणव्यवायेऽप्यगुणं विपश्चित: ॥ ११ ॥
यथाऽग्निमेधस्यमृतं च गोषु भुव्यन्नमम्बूत्खनने तथोर्व्या:[2] ।
योगैर्मनुष्या अधियन्ति हित्वा गुणेषु बुद्ध्या कवयोऽवयन्ति ॥ १२ ॥
तं त्वा वयं नाथ समुज्जिहानं सरोजनाभातिचिरेप्सितार्थम् ।
दृष्ट्वा गता निर्वृतिमद्य सर्वे गजा दवार्ता इव गाङ्गमम्भ: ॥ १३ ॥
स त्वं विधत्स्वाखिललोकपाला वयं यदर्थास्तव पादमूलम् ।
समागतास्ते बहिरन्तरात्मन् किं वाऽद्य विज्ञाप्यमशेषसाक्षिण: ॥ १४ ॥
अहं गिरित्रश्च सुरादयो ये दक्षादयोऽग्नेरिव केतवस्ते ।
किं वा विधेमेश पृथग्विभाविता विधत्स्व शं नो द्विजदेवमित्र ॥ १५ ॥

**श्रीशुक उवाच**

एवं विरिञ्च्यादिभिरीडितस्तद्[3] विज्ञाय तेषां हृदयं यथैव ।
जगाद जीमूतगभीरया गिरा बद्धाञ्जलीन् संवृतसर्वकामान्[4] ॥ १६ ॥

---

१. भुवि❋ २. उत्खननेन चोर्व्या:❋ ३. ईडितस्तु❋ ४. संवृतसर्वकायान्❋

एक एवेश्वरस्तस्मिन्[१] सुरकार्ये सुरेश्वरः । विहर्तुकामस्तानाह समुद्रोन्मथनादिभिः ॥ १७ ॥

श्रीभगवानुवाच

हन्त ब्रह्मन्नहो शम्भो हे देवा मम भाषितम् । शृणुतावहिताः सर्वे श्रेयो वः स्याद् यथा पुरा ॥ १८ ॥

यातुधानैश्च दैतेयैस्तावत् सन्धिर्विधीयताम् । कालेनानुगृहीतैस्तैर्यावद् वो भव आत्मनः ॥ १९ ॥

अरयोऽपि हि सन्धेयाः सति कार्यार्थगौरवे । अहिमूषिकवद् देवा ह्यर्थस्य पदवीं गतैः ॥ २० ॥

अमृतोत्पादने यत्नः क्रियतामविळम्बितम् । यस्य पीतस्य वै जन्तुर्मृत्युग्रस्तोऽमरो भवेत् ॥ २१ ॥

क्षिप्त्वा क्षीरोदधौ सर्वा वीरुत्तृणलतौषधीः । मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम् ॥ २२ ॥

सहायेन मया देवा निर्मन्थध्वमतन्द्रिताः । क्लेशभाजो भविष्यन्ति दैत्या यूयं फलग्रहाः ॥ २३ ॥

यूयं तदनुमोदध्वं यदिच्छन्त्यसुराः सुराः । न संरम्भेण सिद्ध्यन्ति सर्वेऽर्थाः सान्त्वया यथा ॥ २४ ॥

न भेतव्यं काळकूटाद् विषाज्जलधिसम्भवात् । लोभः कार्यो न वो जातु रोषः कामश्च वस्तुषु ॥

श्रीशुक उवाच

इति देवान् समादिश्य भगवान् पुरुषोत्तमः । तेषामन्तर्दधे राजन् स्वच्छन्दगतिरीश्वरः ॥ २६ ॥

अथ तस्मै भगवते नमस्कृत्य पितामहः । भवश्च जग्मतुः स्वं स्वं धाम चेयुर्बलिं सुराः[२] ॥ २७ ॥

दृष्ट्वाऽरीनथ सम्पन्नान् जातक्ष्वेळान्[३] स्वनायकान् । न्यषेधद् दैत्यराडुच्चैः सन्धिविग्रहकालवित् ॥

ते वैरोचनिमासीनं[४] गुप्तं चासुरयूथपैः । श्रिया परमया जुष्टं जिताशेषमुपागमन् ॥ २९ ॥

महेन्द्रः श्लक्ष्णया वाचा सान्त्वयित्वा महामतिः । अभ्यभाषत तत्सर्वं शिक्षितं पुरुषोत्तमात् ॥ ३० ॥

तेऽन्वरोचन्त दैत्यस्य[५] तत्रान्ये येऽसुराधिपाः । शम्बरोऽरिष्टनेमिश्च ये च त्रिपुरवासिनः ॥ ३१ ॥

ततो देवासुराः कृत्वा संविदं कृतसौहृदाः । उद्यमं परमं चक्रुरमृतार्थे परन्तप ॥ ३२ ॥

ततस्ते मन्दरगिरिमोजसोत्पाट्य[६] दुर्मदाः । नदन्त उदधिं निन्युः शक्ताः[७] परिघबाहवः ॥ ३३ ॥

दूरभारोद्वहश्रान्ताः शक्रवैरोचनादयः । अपारयन्तस्तं वोढुं विवशा विजहुः पथि ॥ ३४ ॥

निपतन् स गिरिस्तत्र बहूनमरदानवान् । चूर्णयामास महता[८] भारेण कनकाचलः ॥ ३५ ॥

---

१. एक एवेश्वरः शक्तः ❋ २. स्वं स्वं धामोपेयुस्तथा सुराः ❋

३. दृष्ट्वाऽरीनथ संयत्तान् जातक्षोभान्/ दृष्ट्वाऽरीनप्यसंयत्तान् जातक्षोभान् ❋ ४. वैरोचनमासीनम् ❋

५. दैत्येन्द्राः ❋ ६. अञ्जसोत्पाट्य ❋ ७. शक्त्या ❋ ८. चूर्णयामास सहसा ❋

तांस्तथा भग्नमनसो भग्नबाहूरुकन्धरान् । विज्ञाय भगवांस्तत्र बभूव गरुडध्वजः ॥ ३६ ॥
गिरिपातविनिष्पिष्टान् विलोक्यामरदानवान् । ईक्षया जीवयामास निर्जरान् निर्व्रणान् यथा ॥ ३७ ॥
गिरिं चारोप्य गरुडे हस्तेनैकेन लीलया । आरुह्य प्रययावब्धिं सुरासुरगणैर्वृतः ॥ ३८ ॥
अवरोप्य गिरिं स्कन्धात् सुपर्णः पततां वरः । ययौ जलान्त उत्सृज्य हरिणा स विसर्जितः ॥ ३९ ॥

॥ इति श्रीमद्भागवतेऽष्टमस्कन्धे षष्ठोऽध्यायः ॥

---

श्रीशुक उवाच

ते नागराजमामन्त्र्य फलभागेन वासुकिम् । परिधाय गिरौ तस्मिन् नेत्रमब्धिं मुदान्विताः ॥ १ ॥
आरेभिरे सुरा यत्ता अमृतार्थे[१] कुरूद्वह । हरिः पुरस्ताज्जगृहे पूर्वं देवास्ततोऽभवन् ॥ २ ॥
तन्नैच्छन् दैत्यपतयो महापुरुषचेष्टितम् । न गृह्णीमो वयं पुच्छमहेरङ्गममङ्गलम् ॥ ३ ॥
स्वाध्यायश्रुतसम्पन्नाः प्रख्याता जन्मकर्मभिः । इति तूर्ष्णीं स्थितान् दैत्यान् विलोक्य पुरुषोत्तमः ॥
स्मयमानो विसृज्याग्रं पुच्छं जग्राह सामरः । कृतस्थानविभागास्त एवं कश्यपनन्दनाः[२] ॥ ५ ॥
ममन्थुः परमायत्ता अमृतार्थे पयोनिधिम् । मथ्यमानेऽर्णवे सोऽद्रिरनाधारो ह्यपोऽविशत् ॥ ६ ॥
ध्रियमाणोऽपि बलिभिर्गौरवात् पाण्डुनन्दन । ते सुनिर्विण्णमनसः परिम्लानमुखश्रियः ।
आसन् स्वपौरुषे[३] नष्टे दैवेनातिबलीयसा ॥ ७ ॥

विलोक्य विघ्नेशगतिं तदेश्वरो[४] दुरन्तवीर्योऽवितथाभिसन्धिः ।
कृत्वा वपुः काच्छपमद्भुतं महत् प्रविश्य तोयं गिरिमुज्जहार ॥ ८ ॥
तमुत्थितं वीक्ष्य कुलाचलं पुनः समुद्यता निर्मथितुं सुरासुराः ।
दधार पृष्ठेन स लक्षयोजनप्रस्तारिणा द्वीप इवापरो महान् ॥ ९ ॥
सुरासुरेन्द्रैर्भुजवीर्यवेपितं परिभ्रमन्तं गिरिमङ्ग पृष्ठतः ।
बिभ्रत् तदावर्तनमादिकच्छपो मेनेऽङ्गकण्डूयनमप्रमेयः ॥ १० ॥
तथाऽसुरानाविशदासुरेण रूपेण तेषां बलवीर्यमीरयन् ।
उद्दीपयन् देवगणांश्च विष्णुर्दैवेन नागेन्द्रमबोधरूपः[५] ॥ ११ ॥

---

१. ततो मथितुमारब्धाः अमृतार्थम् ❋ २. काश्यपनन्दनाः ❋
३. आसंश्च पौरुषे ❋ ४. तमीश्वरः ❋ ५. दैवेन नागेन्द्रमथापरेण ❋

उपर्यगेन्द्रं गिरिराडिवान्य आक्रम्य हस्तेन सहस्रबाहुः ।
तस्थौ दिवि ब्रह्मभवेन्द्रमुख्यैरभिष्टुवद्भिः सुमनोभिवृष्टचा[१] ॥ १२ ॥
उपर्यधश्चात्मनि नेत्रगोत्रयोः परेण ते प्राविशता समेधिताः ।
ममन्थुरब्धिं तरसा मदोत्कटा महाद्रिणा क्षोभितनक्रचक्रम् ॥ १३ ॥
अहीन्द्रसाहस्रकराळदिङ्मुखश्वासाग्निधूमाहतवर्चसोऽसुराः ।
पौलोमकालेयबलील्वलादयो दवाग्निदग्धाः सरला इवापतन्[२] ॥ १४ ॥
देवांश्च तच्छ्वासशिखाहतप्रभान् धूम्राम्बरस्रग्वरकञ्चुकाननान् ।
समभ्यवर्षन् भगवद्वशा घना ववुः समुद्रोर्म्युपगूढवायवः ॥ १५ ॥
मथ्यमानात् तदा सिन्धोर्देवासुरवरूथपैः । यदा सुधा न जायेत निर्ममन्थाजितः स्वयम् ॥ १६ ॥
मेघश्यामः कनकपरिधिः कर्णविद्योतविद्युन् मूर्ध्नि भ्राजद्विलुळितवनस्रग्धरो रक्तनेत्रः ।
जैत्रैर्दोर्भिर्जगदभयदैर्दन्दशूकं गृहीत्वा मथ्नन् मथ्ना प्रतिगिरिरिवाशोभताथो धृताद्रिः[३] ॥ १७ ॥
निर्मथ्यमानादुदधेरभूद् विषं महोल्बणं हालहलाह्वमग्रतः ।
सम्भ्रान्तमीनोन्मकराहिकच्छपोत्तिमिद्विपग्राहतिमिङ्गिलाकुलात् ॥ १८ ॥
तदुग्रवेगं दिशि दिश्युपर्यथो विसर्पदुत्सर्पदसँह्यवीर्यम् ।
भीताः प्रजा दुद्रुवुरङ्ग सेश्वरा अरक्ष्यमाणाः[४] शरणं सदाशिवम् ॥ १९ ॥
विलोक्य तं देववरं त्रिलोक्या भवाय देव्याऽभियुतं मुनीनाम् ।
आसीनमद्रावपवर्गहेतोस्तपो जुषाणं स्तुतिभिः प्रणेमुः ॥ २० ॥

**प्रजा ऊचुः**

देवदेव महादेव भूतात्मन् भूतभावन । त्राहि नः शरणापन्नान् त्रैलोक्यदहनाद् विषात् ॥ २१ ॥
त्वमेव सर्वजगतामीश्वरो[५] बन्धमोक्षयोः । तं त्वामर्चन्ति कुशलाः प्रपन्नार्तिहरं गुरुम् ॥ २२ ॥
गुणमय्या स्वशक्त्याऽस्य सर्गस्थित्यप्ययान् विभो । धत्से[६] यदा स्वदृग् भूमन् ब्रह्मविष्णुशिवाभिधाम्॥
त्वं ब्रह्म परमं गुह्यं सदसद्भावभावनम् । नानाशक्तिभिराभासस्त्वमात्मा[७] जगदीश्वरः ॥ २४ ॥

---

१. सुमनोऽभिवृष्टः ❋ २. शलभा इवापतन् ❋ ३. अशोभतार्थो धृताद्रिम् ❋(?)
४. अलक्ष्यमाणाः ५. त्वमेकः सर्वजगत ईश्वरः ❋ ८. धत्ते ❋ ५. ..आभासात् त्वमात्मा ❋

त्वं शब्दयोनिर्जगदादिरात्मा प्राणेन्द्रियद्रव्यगुणस्वभावः ।
कालः क्रतुः सत्यमृतं च धर्मस्त्वय्यक्षरं यत् त्रिवृदामनन्ति ॥ २५ ॥
अग्निर्मुखं तेऽखिलदेवतात्मा क्षितिं विदुर्लोकभवाङ्घ्रिपङ्कजम् ।
कालो गतिस्तेऽखिलदेवतात्मनो दिशश्च कर्णौ रसनं जलेशः ॥ २६ ॥
नाभिर्नभस्ते श्वसनं नभस्वान् सूर्यश्च चक्षूंषि जलं स्म रेतः ।
परावरात्मा द्रुहिणस्तवात्मा सोमो मनो द्यौर्भगवन् शिरस्ते ॥ २७ ॥
कुक्षिः समुद्रा गिरयोऽस्थिसङ्घा रोमाणि सर्वौषधिवीरुधस्ते ।
छन्दांसि साक्षात् तव सप्तधातवस्त्रयीमयात्मन् हृदयं स धर्मः ॥ २८ ॥
मुखानि पञ्चोपनिषत् तवेश यैस्त्रिंशदष्टोत्तरमन्त्रवर्गः ।
यत् तच्छिवाख्यं परमात्मतत्वं देव स्वयञ्ज्योतिरवस्थितिस्ते ॥ २९ ॥
छाया त्वधर्मो मृड यैर्विसर्गो नेत्रत्रयं सत्वरजस्तमांसि ।
साक्षान्मनुः[१] शास्त्रकृतस्तवेक्षा छन्दोमयो देवऋषिः पुराणः ॥ ३० ॥
*न ते गिरित्राखिललोकपालविरिञ्चवैरिञ्चसुरेन्द्रगम्यम् ।
ज्योतिः परं यत्र रजस्तमश्च सत्वं न यद् ब्रह्म निरस्तभेदम् ॥ ३१ ॥
कामाध्वरत्रिपुरकालहराद्यनेकभूतद्रुहः क्षपयतः स्तुतये न तत् ते ।
यत् त्वन्तकाल इदमात्मकृतं स्वनेत्रवह्निस्फुलिङ्गशिखया भसितं तवेश[२] ॥ ३२ ॥
ये त्वात्मरामगुरुभिर्हृदि चिन्तिताङ्घ्रिद्वन्द्वं चरन्तमुमया तपसेऽभितप्तम् ।
कत्थन्त उग्रवपुषं निरतं श्मशाने ते भूतभूतिमविदस्तव हीनलज्जाः ॥ ३३ ॥
तत् तस्य ते सदसतोः परतः परस्य नाञ्जः स्वरूपगमने प्रभवन्ति भूम्नः ।
ब्रह्मादयः किमुत संस्तवने वयं तु तत्सर्गसर्गविषया अपि भक्तिमात्रम् ॥ ३४ ॥
एतत् परं प्रपश्यामो न परं ते महेश्वर । मृडनाय हि लोकस्य व्यक्तिस्तेऽव्यक्तकर्मणः ॥

**श्रीशुक उवाच**

तद् वीक्ष्य व्यसनं तासां कृपया भृशपीडितः । सर्वभूतसुहृद् देव इदमाह सतीं प्रियाम् ॥ ३६ ॥

१. साक्षान्मनः ❋ २. .....शिखयाऽवसितं तवेश ❋

* अयं श्लोकः प्राचीनकोशेषु कुत्रापि नास्ति ।

### शिव उवाच

अहो बत भवान्येतत् प्रजानां पश्य वैशसम् । क्षीरोदमथनोद्भूतात् काळकूटादुपस्थितम् ॥ ३७ ॥

आसां प्राणपरीप्सूनां विधेयमभयं हि मे । एतावान् हि प्रभोरर्थो यद् दीनपरिपालनम् ॥ ३८ ॥

प्राणैः स्वैः प्राणिनः पान्ति साधवः क्षणभङ्गुरैः । बद्धवैरेषु भूतेषु मोहितेष्वात्ममायया ॥ ३९ ॥

पुंसः कृपयतो भद्रे सर्वात्मा प्रीयते हरिः । प्रीते हरौ भगवति प्रीयेऽहं सचराचरः ।

तस्मादिदं गरं भुञ्जे प्रजानां स्वस्तिरस्तु मे ॥ ४० ॥

### श्रीशुक उवाच

एवमामन्त्र्य भगवान् भवानीं विश्वभावनः । तद् विषं जग्धुमारेभे प्रभावज्ञाऽन्वमोदत ॥ ४१ ॥

ततः करतळीकृत्य व्यापि हालाहलं विषम् । अभक्षयन्महादेवः कृपया भूतभावनः ॥ ४२ ॥

तस्यापि दर्शयामास स्ववीर्यं गळकल्मषः । यच्चकार गळे नीलं तच्च साधोर्विभूषणम् ॥ ४३ ॥

तप्यन्ते लोकतापेन साधवः प्रायशो जनाः । परमाराधनं तद्धि पुरुषस्याखिलात्मनः ॥ ४४ ॥

निशाम्य कर्म तच्छम्भोर्देवदेवस्य मीढ्रुषः । प्रजा दाक्षायणी ब्रह्मा वैकुण्ठश्च शशंसिरे ॥ ४५ ॥

प्रस्कन्नं पिबतः पाणेर्यत् किञ्चिज्जगृहुः स्म तत् । वृश्चिकाहिविषौषध्यो दन्दशूकाश्च ये परे ॥ ४६ ॥

**॥ इति श्रीमद्भागवते अष्टमस्कन्धे सप्तमोऽध्यायः ॥**

---

### श्रीशुक उवाच

पीते गरे वृषाङ्केण प्रीतास्तेऽमरदानवाः । ममन्थुस्तरसा सिन्धुं हविर्धानी[१] ततोऽभवत् ॥ १ ॥

तामग्निहोत्रीमृषयो जगृहुर्ब्रह्मवादिनः । यज्ञस्य देवपानस्य मेध्याय हविषे नृप ॥ २ ॥

तत उच्चैःश्रवा नाम हयोऽभूच्चन्द्रपाण्डरः[२] । तस्मिन् बलिः स्पृहां चक्रे नेन्द्र ईश्वरशिक्षया ॥ ३ ॥

तत ऐरावतो नाम वारणेन्द्रो विनिर्गतः । दन्तैश्चतुर्भिः श्वेताभो हरिस्तं तु समग्रहीत्[३] ॥ ४ ॥

ततोऽभवत् पारिजातः सुरलोकविभूषणः । पूरयत्यर्थिनो योऽर्थैः शश्वद् भुवि यथा भवान् ॥ ५ ॥

ततश्चाप्सरसो जाता निष्कग्रीवाः[४] सुवाससः । रमण्यः स्वर्गिणां वल्गुगतिलीलावलोकनैः ॥ ६ ॥

---

१. हविर्धानिः ❋ २. चन्द्रपाण्डुरः

३. चतुर्भिः श्वेताद्रेर्हरन् शृङ्गवतो महीम्/महिम् ❋ ४. निष्ककण्ठ्यः

ततश्चाविरभूत् साक्षाच्छ्री रमा भगवत्प्रिया। रञ्जयन्ती दिशः कान्त्या विद्युत् सौदामिनी यथा ॥ ७॥
तस्यां चक्रुः स्पृहां सर्वे ससुरासुरमानवाः। रूपौदार्यवयोवर्णमहिमाक्षिप्तचेतसः ॥ ८॥
तस्याश्चासनमानिन्ये[१] महेन्द्रो महदद्भुतम्। मूर्तिमत्यः सरिच्छ्रेष्ठा हेमकुम्भैर्जलं शुचि ॥ ९॥
आभिषेचनिका भूमिराहरत् सकलौषधीः। गावः पञ्च पवित्राणि वसन्तो मधु माधवम् ॥ १०॥
ऋषयः कल्पयाञ्चक्रुरभिषेकं यथाविधि। जगुर्भद्राणि गन्धर्वा नार्यश्च ननृतुर्जगुः ॥ ११॥
मेघा मृदङ्गपणवमुरजानकगोमुखान्। व्यनादयन् शङ्खवेणुवीणातुमुलनिस्वनान् ॥ १२॥
ततोऽभिषिषिचुर्देवीं श्रियं पद्मकरां सतीम्। दिगिभाः पूर्णकलशैः सूक्तवाकैर्द्विजेरितैः ॥ १३॥
समुद्रः पीतकौशेयवाससी समुपाहरत्। वरुणः स्रजं वैजयन्तीं मधुना मत्तषट्पदाम् ॥ १४॥
भूषणानि विचित्राणि विश्वकर्मा प्रजापतिः। हारं सरस्वती पद्ममजो नागश्च कुण्डले ॥ १५॥

ततः कृतस्वस्त्ययनोत्पलस्रजं नदद्द्विरेफां परिगृह्य पाणिना।
चचार[२] वक्त्रं सुकपोलकुण्डलं सव्रीळहासं दधती सुशोभनम् ॥ १६॥
स्तनद्वयं चातिकृशोदरी समं निरन्तरं चन्दनकुङ्कुमोक्षितम्।
ततस्ततो नूपुरवल्गुशिञ्जितैर्विसर्पती हेमलतेव[३] सा बभौ ॥ १७॥
विलोकयन्ती निरवद्यमात्मनः पदं ध्रुवं चाव्यभिचारिसद्गुणम्।
गन्धर्वयक्षासुरसिद्धचारणत्रैविष्टपेयादिषु नान्वविन्दत ॥ १८॥
नूनं तपो यस्य न मन्युनिर्जयो ज्ञानं क्वचित् तच्च न सङ्गवर्जितम्।
कश्चिन्महांस्तस्य न कामनिर्जयः स ईश्वरः किं परतो व्यपाश्रयः ॥ १९॥
धर्मः क्वचित् तस्य न भूतसौहृदं त्यागः क्वचित् तच्च[४] न मुक्तिकारणम्।
वीर्यं न पुंसोऽस्त्यजवेगनिष्कृतं न हि द्वितीयो गुणसङ्गवर्जितः ॥ २०॥
क्वचिच्चिरायुर्न हि शीलमङ्गलं क्वचित् तदप्यस्ति न वेद्यमायुषः।
यत्रोभयं कुत्र च सोऽप्यमङ्गलः सुमङ्गलः कश्चन काङ्क्षते हि माम्[५] ॥ २१॥

---

१. तस्या आसनमानिन्ये ❋ २. चचाल ३. हैमलतेव
४. तस्य ❋ ५. काङ्क्षते माम् ❋

**श्रीशुक उवाच**

एवं विमृश्याव्यभिचारिसद्गुणं परं[१] निजैकाश्रयिसद्गुणाश्रयम् ।
वव्रे वरं सर्वगुणैरपेक्षितं रमा मुकुन्दं निरपेक्षमीप्सितम्[२] ॥ २२ ॥

तस्यांसदेश उशतीं नवकञ्जमालां माद्यन्मधुव्रतवरूथगिरोपघुष्टाम् ।
तस्थौ निधाय[३] निकटे तदुरः स्वधाम सव्रीळहासविकसन्नयनेन भीता ॥ २३ ॥

स्वस्याः श्रियस्त्रिजगतो जनको जनन्या वक्षोऽधिवासमकरोत्[४] परमं विभूतेः।
श्रीः स्वाः प्रजाः सकरुणेन निरीक्षणेन यत्र स्थितैधयत साधिपतींस्त्रिलोकान् ॥ २४ ॥

शङ्खतूर्यमृदङ्गानां वादित्राणां पृथक् स्वनः । देवानुगानां सस्त्रीणां नृत्यतां गायतामभूत् ॥ २५ ॥

ब्रह्मरुद्राङ्गिरोमुख्याः सर्वे विश्वसृजो विभुम् । ईडिरेऽवितथैर्मन्त्रैस्तल्लिङ्गैः पुष्पवर्षिणः ॥ २६ ॥

श्रियाऽवलोकिता[५] देवाः सप्रजापतयः प्रजाः । शीलादिगुणसम्पन्ना लेभिरे निर्वृतिं पराम् ॥ २७ ॥

निस्सत्वा लोलुपा राजन् निरुद्योगा गतत्रपाः । यदा चोपेक्षिता लक्ष्म्या बभूवुर्दैत्यदानवाः ॥ २८ ॥

अथासीद् वारुणी देवी कन्या कमललोचना । असुरा जगृहुस्तां वै हरेरनुमतेन ते ॥ २९ ॥

अथोदधेर्मथ्यमानात् काश्यपैरमृतार्थिभिः । उदतिष्ठन् महाराज पुरुषः परमाद्भुतः ॥ ३० ॥

दीर्घपीवरदोर्दण्डः कम्बुग्रीवोऽरुणेक्षणः । श्यामळस्तरुणः स्रग्वी सर्वाभरणभूषितः ॥ ३१ ॥

पीतवासा महोरस्कः सुमृष्टमणिकुण्डलः । नीलकुञ्चितकेशान्तः सुभगः सिंहविक्रमः ॥ ३२ ॥

अमृतस्य पूर्णकलशं बिभ्रद् वलयभूषितः । स वै भगवतः साक्षाद् विष्णोरंशांशसम्भवः ॥ ३३ ॥

धन्वन्तरिरिति ख्यात आयुर्वेददृगिज्यभाक् । तमालोक्यासुराः सर्वे कलशं चामृताहृतम् ॥ ३४ ॥

लिप्सन्तः सर्ववस्तूनि कलशं तरसाऽहरन् । नीयमानेऽसुरैस्तस्मिन् कलशेऽमृतभाजने ॥ ३५ ॥

विषण्णमनसो देवा हरिं शरणमभ्ययुः[६] । इति तद्दैन्यमालोक्य भगवान् भृत्यकामभृत् ।
मा भैष्ट देवा यूयं वै साधयिष्ये यथाऽमृतम्[७] ॥ ३६ ॥

मिथः कलिरभूत् तेषां तदर्थे तर्षचेतसाम्[८] । अहं पूर्वमहं पूर्वं न त्वं न त्वमिति प्रभो[९] ॥ ३७ ॥

---

१. पदम्　२. ईप्सिता ❋　३. निवीय　४. वक्षो निवासमकरोत्
५. श्रिया विलोकिताः　६. शरणमाययुः　७. मा खिद्यत मिथोऽर्थं वः साधयिष्ये स्वमायया ❋
८. रुष्टचेतसाम् ❋　९. पूर्वं नत्वमित्यत्र तेऽब्रुवन् ❋

देवाः स्वभागमर्हन्ति ये तुल्यायासहेतवः । सत्रयाग इवैतस्मिन्नेष[१] धर्मः सनातनः ॥ ३८ ॥
इति स्वान् प्रत्यषेधन् वै दैतेया जातमत्सराः । दुर्बलाः प्रबलान् राजन् गृहीतकलशान् मुहुः ॥ ३९ ॥
एतस्मिन्नन्तरे विष्णुः सर्वोपायदृगीश्वरः[२] । योषिद्रूपमनिर्देश्यं दधार परमाद्भुतम् ॥ ४० ॥
प्रेक्षणीयोत्पलश्यामं सर्वावयवसुन्दरम् । समानकर्णाभरणं सुकपोलोन्नसाननम् ॥ ४१ ॥
नवयौवननिष्पन्दत्स्तनभारकृशोदरम् । मुखामोदानुरक्ताळिहुङ्कारोद्विग्नलोचनम् ॥ ४२ ॥
बिभ्रत् सुकेशभारेण मालामुत्फुल्लमल्लिकाम्[३] । सुग्रीवकण्ठाभरणं सुभुजाङ्गदभूषितम् ॥ ४३ ॥
विरजाम्बरसंवीतं चित्रं वध्वीयशोभया । काञ्च्या प्रविलसद् वल्गुस्फुटच्चरणनूपुरम्[४] ॥ ४४ ॥
[५]सव्रीळस्मितविक्षिप्तभ्रूविलासावलोकनैः । दैत्ययूथपचेतस्सु काममुद्दीपयन् मुहुः ॥ ४५ ॥
तेऽन्योन्यतः सुधापात्रं हरन्तस्त्यक्तसौहृदाः । क्षिपन्तो दस्युधर्मेण[६] आयान्तीं ददृशुः स्त्रियम् ॥
अहो रूपमहो धैर्यं अहो अस्या नवं वयः । इति ते तामभिद्रुत्य पप्रच्छुर्जातहृच्छयाः ॥ ४७ ॥
का त्वं कञ्जपलाशाक्षि कुतो वा किं चिकीर्षसि । कस्यासि वद वामोरु मथ्नतीव मनांसि नः॥ ४८ ॥
न वयं त्वाऽमरैर्दैत्यैः सिद्धगन्धर्वचारणैः । स्पृष्टपूर्वां तु जानीमो लोकेशैश्च[७] कुतो नृभिः ॥ ४९ ॥
नूनं त्वं विधिना सुभ्रु प्रेषिताऽसि शरीरिणाम् । सर्वेन्द्रियमनःप्रीतिं विधातुं सघृणेन किम् ॥ ५० ॥
सा त्वं नः स्पर्धमानानामेकवस्तुनि मानिनि । ज्ञातीनां बद्धवैराणां शं विधत्स्व[८] सुमध्यमे ॥ ५१ ॥
वयं काश्यपदायादा भ्रातरः कृतपौरुषाः । विभजस्व यथान्यायं नैव भेदो यथा भवेत् ॥ ५२ ॥
इत्युपामन्त्रितो दैत्यैर्मायायोषिद्वपुर्हरिः । प्रहस्य रुचिरापाङ्गैर्निरीक्षन्निदमब्रवीत् ॥ ५३ ॥

**श्रीभगवानुवाच**

कथं काश्यपदायादाः पुंश्चल्यां[९] मयि सङ्गताः । विश्वासं पण्डिता[१०] जातु कामिनीषु न यान्ति हि ॥
सालावृकाणां स्त्रीणां च स्वैरिणीनां सुरद्विषः । सख्यान्याहुरनित्यानि नूत्नं नूत्नं विचिन्वताम् ॥ ५५ ॥

**श्रीशुक उवाच**

इति ते क्ष्वेळितैस्तस्या आश्वस्तमनसोऽसुराः । जहसुर्भावगम्भीरं ददुश्चामृतभाजनम् ॥ ५६ ॥

---

१. सत्रयाग इव ह्यस्मिन्नेषः ❋ २. सर्वोपायविदीश्वरः ३. मालामम्लानपङ्कजाम् ❋
४. वल्गुचरणाम्बुजनूपुरम् ❋ ५. सुव्रीळ... ❋ ६. दस्युधर्माणः ७. योगेशैश्च
८. संविधत्स्व ❋ ९. पुंश्चल्या ❋ १०. वञ्चिताः ❋

ततो गृहीत्वाऽमृतभाजनं हरिर्बभाष ईषत्स्मितशोभया गिरा ।
यद्यभ्युपेतं क्व च साध्वसाधु वा कृतं मया वो विभजे सुधामिमाम् ॥ ५७ ॥

इत्यभिव्याहृतं तस्या आकर्ण्यासुरयूथपाः । अप्रमाणविदस्तस्यास्तत् तथेत्यन्वमंसत ॥ ५८ ॥

अथोपोष्य कृतस्नाना हुत्वा च हविषाऽनलम् । दत्वा गोविप्रभूतेभ्यः कृतस्वस्त्ययना द्विजैः॥ ५९ ॥

यथोपदेशं[१] वासांसि परिधायाहतानि ते । कुशेषु प्राविशन् सर्वे प्रागग्रेष्वभिभूषिताः ॥ ६० ॥

प्राङ्मुखेषूपविष्टेषु सुरेषु दितिजेषु च । धूपामोदितशालायां जुष्टायां माल्यदीपकैः ॥ ६१ ॥

तस्यां नरेन्द्र कलभोरुलसद्दुकूलश्रोणीतटालसगतिर्मदविह्वलाक्षी[२] ।
सा कूजती कनकनूपुरशिञ्जितेन कुम्भस्तनी कलशपाणिरथाविवेश ॥ ६२ ॥

तां स्त्रीं सतीं[३] कनककुण्डलचारुकर्णनासाकपोलवदनां परदेवताख्याम् ।
संवीक्ष्य सम्मुमुहुरुत्स्मितवीक्षणेन देवासुरा विगळितस्तनपट्टिकान्ताम् ॥ ६३ ॥

असुराणां सुधादानं सर्पाणामिव दुर्नयम्[४] । मत्वा जातिनृशंसानां न तान् व्यभजदच्युतः ॥ ६४ ॥

कल्पयित्वा पृथक् पङ्क्तीरुभयेषां जगत्पतिः । तांश्चोपवेशयामास स्वासु स्वासु च पङ्क्तिषु ॥ ·

दैत्यान् गृहीतकलशो वञ्चयन्नुपसञ्चरैः । दूरस्थान् पाययामास जरामृत्युहरां सुधाम् ॥ ६६ ॥

ते पालयन्तः समयमसुराः स्वकृतं नृप । तूष्णीमासन् कृतस्नेहाः स्त्रीविवादजुगुप्सया ॥ ६७ ॥

तस्यां कृतातिप्रणयाः[५] प्रणयापायकातराः । बहुमानेन चाबद्धा नोचुः किञ्चन विप्रियम् ॥ ६८ ॥

देवलिङ्गप्रतिच्छन्नः स्वर्भानुर्देवसंसदि । प्रविष्टः सोममपिबच्चन्द्रार्काभ्यां च सूचितः ॥ ६९ ॥

चक्रेण क्षुरधारेण जहार पिबतः शिरः । हरिस्तस्य कबन्धस्तु सुधया प्लावितोऽपतत् ॥ ७० ॥

शिरस्त्वमरतां नीतमजो ग्रहमचीक्लृपत् । यस्तु पर्वणि चन्द्रार्कावभिधावति वैरधीः ॥ ७१ ॥

पीतप्रायेऽमृते देवैर्भगवाँल्लोकभावनः । पश्यतामसुरेन्द्राणां स्वरूपं जगृहे विभुः ॥ ७२ ॥

एवं सुरासुरगणाः समदेशकालहेत्वर्थयोगगतयोऽपि फले विकल्प्याः ।
तत्रामृतं सुरगणाः फलमञ्जसाऽऽपुः यत्पादपङ्कजरजःश्रयणान्न दैत्याः ॥ ७३ ॥

---

१. यथोपजोषम् २. करभोरु..... ❋ ३. तां श्रीमुखीम्
४. दुर्लभम् ❋ ५. कृताभिप्रणयाः ❋

यद्युद्यतेषु च सुकर्ममनोवचोभिर्देवात्मजादिषु नृभिस्तदसत् पुरस्तात् ।
तैरेव तद्[1] भवति यत् क्रियते च तस्मिन् सर्वस्य तद् भवति मूलनिषेचनं यत्।। ७४ ।।

**।। इति श्रीमद्भागवते अष्टमस्कन्धेऽष्टमोऽध्यायः ।।**

---

**श्रीशुक उवाच**

इति दानवदैतेया नाविन्दन्नमृतं नृप । युक्ताः कर्मणि यत्ताश्च वासुदेवपराङ्मुखाः ।। १ ।।
साधयित्वाऽमृतं राजन् पाययित्वाऽमृतं सुरान् । पश्यतां सर्वभूतानां ययौ गरुडवाहनः ।। २ ।।
सपत्नानां परामृद्धिं दृष्ट्वा च दितिनन्दनाः । अमृष्यमाणा उत्पेतुर्देवान् प्रत्युद्यतायुधाः ।। ३ ।।
ततः सुरगणाः सर्वे सुधया पीतयैधिताः । प्रतिसंयुयुधुः शस्त्रैर्नारायणपरायणाः ।। ४ ।।
तत्र देवासुरो नाम रणः परमदारुणः । रोधस्युदन्वतो राजन् तुमुलो रोमहर्षणः ।। ५ ।।
तत्रान्योन्यं सपत्नास्ते संरब्धमनसो रणे । समासाद्यासिभिर्बाणैर्निजघ्नुर्विविधायुधैः ।। ६ ।।
शङ्खतूर्यमृदङ्गानां भेरीडमरुणां महान् । हस्त्यश्वरथपत्तीनां नदतां निस्वनोऽभवत् ।। ७ ।।
रथिनो रथिभिस्तत्र पत्तिभिः सह पत्तयः । हया हयैरिभैश्चेभाः समासज्जन्त संयुगे ।। ८ ।।
उष्ट्रैः केचिद् द्विजैः केचिदपरेऽभिययुः खरैः[2] । केचिद् गौरमृगैर्ऋक्षैर्द्वीपिभिर्हरिभिर्भटाः ।। ९ ।।
गृध्रैः कङ्कैर्बकैरन्ये[3] श्येनभासैस्तिमिङ्गिलैः । शरभैर्महिषैः खड्गैर्गोवृषैर्गवयारुणैः ।। १० ।।
शिवाभिराखुभिः केचित् कृकलासैः शशैर्नरैः । बस्तैरेके कृष्णसारैर्हंसैरन्ये च सूकरैः ।। ११ ।।
अन्ये जलस्थलखगैः सत्त्वैर्विकृतविग्रहैः । सेनयोरुभयो राजन् विविशुस्तेऽग्रतोऽग्रतः ।। १२ ।।
चित्रध्वजपटै राजन्नातपत्रैः सितामलैः । महाधनैर्वज्रदण्डैर्व्यजनैर्बर्हचामरैः ।। १३ ।।
वातोद्धूतोत्तरोष्णीषैः सत्कृतैर्वर्मभूषणैः[4] । स्फुरद्भिर्विविधैः[5] शस्त्रैः सुतरां सूर्यरश्मिभिः ।। १४ ।।
देवदानववीराणां ध्वजिन्यौ पाण्डुनन्दन । रेजतुर्वीचिमालाभिर्यादसामिव सागरे ।। १५ ।।
वैरोचनो बलिः सङ्ख्ये सोऽसुराणां चमूपतिः । यानं वैहायसं नाम कामगं मयनिर्मितम् ।। १६ ।।
सर्वसाङ्ग्रामिकोपेतं सर्वाश्चर्यमयं प्रभो । अप्रतर्क्यमनिर्देश्यं दृश्यमानमदर्शनम् ।। १७ ।।

---

१. सद्
२. उष्ट्रैः केचित् खरैः केचिदपरेऽभिययुर्हयैः ❋
३. गृध्रकङ्कबलैरन्ये❋
४. वातोद्धूतैः कृतोष्णीषैः सुकृतैर्वर्म.... ❋
५. विशदैः

आस्थितस्तद्विमानाग्र्यं सर्वानीकाधिपैर्वृतः । वालव्यजनछत्राद्यै रेजे चन्द्र इवोदितः[१] ॥ १८ ॥
तस्यासन् सर्वतो यानैः पृतनापतयोऽसुराः । नमुचिः शम्बरो बाणो विप्रचित्तिरयोमुखः ॥ १९ ॥
द्विमूर्धा कालनाभोऽथ प्रहेतिर्हेतिरिल्वलः । शकुनिर्भूतसन्तापो वज्रदंष्ट्रो विरोचनः ॥ २० ॥
हयग्रीवः शङ्कुशिराः कपिलो मेघदुन्दुभिः । तारकश्चक्रदृक् शुम्भो निशुम्भो[२] जम्भ उत्कलः ॥ २१ ॥
अरिष्टोऽरिष्टनेमिश्च मयश्च त्रिपुराधिपः । अन्ये पौलोमकालेया निवातकवचादयः ॥ २२ ॥
अलब्धभागाः सोमस्य केवलक्लेशभागिनः । सर्व एते रणमुखे बहुशो निर्जितामराः ॥ २३ ॥
सिंहनादं प्रकुर्वन्तः शङ्खान् दध्मुर्महारवान् । दृष्ट्वा सपत्नानुत्सिक्तान् बलभित् कुपितो भृशम् ॥
ऐरावतं दिक्करिणमारूढो न्यविशत् स्वराट् । यथा स्रवत्प्रस्रवणमुदयाद्रिमहर्पतिः ॥ २५ ॥
तस्यासन् सर्वतो देवा नानावाहध्वजायुधाः । लोकपालाः सह गणैर्वाय्वग्निवरुणादयः ॥ २६ ॥
तेऽन्योन्यमभिसंसृत्य क्षिपन्तो नामभिर्मिथः । आह्वयन्तो विशन्तोऽग्रे युयुधुर्द्वन्द्वयोधिनः ॥ २७ ॥
युयोध बलिरिन्द्रेण तारकेण गुहोऽस्यत[३] । वरुणो हेतिनाऽयुध्यन्मित्रो राजन् प्रहेतिना ॥ २८ ॥
यमस्तु कालनाभेन विश्वकर्मा मयेन वै । शम्बरो युयुधे त्वष्ट्रा सवित्रा तु विरोचनः ॥ २९ ॥
अपराजितेन नमुचिरश्विनौ वृषपर्वणा । सूर्यो बलिसुतैर्देवो बाणज्येष्ठशतेन च ॥ ३० ॥
राहुणा च तथा सोमः पुलोम्ना युयुधेऽनलः । निसुम्भसुम्भयोर्देवी भद्रकाळी तरस्विनी[४] ॥ ३१ ॥
वृषाकपिस्तु जम्भेन महिषेण विभावसुः । इल्वलः सहवातापिर्ब्रह्मपुत्रैररिन्दम ॥ ३२ ॥
कामदेवेन दुर्मर्ष उत्कलो मातृभिः सह । बृहस्पतिस्तूशनसा नरकेण शनैश्चरः ॥ ३३ ॥
मरुतो निवातकवचैः कालेयैर्वसवोऽमराः । विश्वेदेवास्तु पौलोमै रुद्राः क्रोधवशैः सह ॥ ३४ ॥

त एवमाजावसुराः सुरेन्द्रा द्वन्द्वेन संहत्य च युध्यमानाः ।
अन्योन्यमासाद्य निजघ्नुरोजसा जिगीषवस्तीक्ष्णशरासितोमरैः ॥ ३५ ॥
भृशुण्डिभिश्चक्रगदार्ष्टिपट्टिशैः[५] शक्त्युल्मुखैः प्रासपरश्वधैरपि ।
निस्त्रिंशभल्लैः[६] परिघैः समुद्गरैः सभिण्डिपालैश्च[७] शिरांसि चिच्छिदुः ॥ ३६ ॥
गजास्तुरङ्गाः सरथाः पदातयः सारोहवाहा विविधा विखण्डिताः ।
निकृत्तबाहूरुशिरोधराङ्घ्रयश्छिन्नध्वजज्यासतनुत्रभूषणाः ॥ ३७ ॥

---

१. चन्द्र इवोदये २. तारकः शतदृक् सुम्भो निसुम्भः ❋ ३. दिवस्पतिः ❋ ४. नराशनी/नराशिनी
५. मृसृण्ठिभिश्चक्रगदासिपट्टिभिः ❋ ६. निस्त्रिंशफल्लैः ❋ ७. सफिण्डिपालैश्च ❋

तेषां पदाघातरथाङ्गचूर्णितादायोधनादुद्धण उत्थितस्तदा ।
रेणुर्दिशः खं द्युमणिं च छादयन् न्यवर्ततासृक्स्रुतिभिः परिप्लुतः[१] ॥ ३८ ॥
शिरोभिरुद्धूतकिरीटकुण्डलैः संरम्भदृग्भिः परिदष्टदच्छदैः ।
महाभुजैः साभरणैः सहायुधैः सम्प्रास्तृता भूः करभोरुभिर्बभौ ॥ ३९ ॥

कबन्धास्तत्र चोत्पेतुः पतितैः स्वशिरोऽक्षिभिः । उद्यतायुधदोर्दण्डैराधावन्तो[२] भटान् मृधे ॥ ४० ॥
बलिर्महेन्द्रं दशभिस्त्रिभिरैरावतं शरैः । चतुर्भिश्चतुरो वाहानेकेनारोहमार्च्छयत्[३] ॥ ४१ ॥
स तानापततः शक्रस्तावद्भिः शीघ्रविक्रमः । चिच्छेद निशितैर्बाणैरसम्प्राप्तान् हसन्निव ॥ ४२ ॥
तस्य कर्मोत्तमं वीक्ष्य दुर्मर्षः शक्तिमाददे । तां ज्वलन्तीं महोल्काभां हस्तस्थामच्छिनद्धरिः ॥ ४३ ॥
ततः शूलं ततः प्रासं ततस्तोमरमृष्टयः । यद्यच्छस्त्रं समादद्यात् सर्वं तदच्छिनद् विभुः[४] ॥ ४४ ॥
ससर्जाथासुरीं मायामन्तर्धानगतोऽसुरः । ततः प्रादुरभूच्छैलः सुरानीकोपरि प्रभो ॥ ४५ ॥
ततो निपेतुस्तरवो दह्यमाना दवाग्निना । शैला[५] विटङ्कशिखराश्चूर्णयन्तो द्विषद्बलम् ॥ ४६ ॥
महोरगाः समुत्पेतुर्दन्दशूकाः सवृश्चिकाः । सिंहव्याघ्रवराहाश्च मर्दयन्तो महागजाः ॥ ४७ ॥
यातुधान्यश्च शतशः शूलहस्ता विवाससः । छिन्धि भिन्धीति वादिन्यस्तथा रक्षोगणा विभो[६] ॥
ततो महाघना व्योम्नि गम्भीरपरुषस्वनाः । अङ्गारान् मुमुचुर्वातैराहताः स्तनयित्नवः ॥ ४९ ॥
सृष्टो दैत्येन सुमहान् वह्निः पवनसारथिः । सांवर्तक[७] इवात्युग्रो विबुधध्वजनीमधाक् ॥ ५० ॥
ततः समुद्र उद्वेलः समन्तात् प्रत्यदृश्यत । प्रचण्डवातैरुद्धूततरङ्गावर्तभीषणः[८] ॥ ५१ ॥
एवं दैत्यैर्महामायैरलक्ष्यगतिभीषणैः[९] । सृज्यमानासु मायासु विषेदुः सुरसैनिकाः ॥ ५२ ॥
न तत्प्रतिविधिं यत्र विदुरिन्द्रादयो नृप । ध्यातः प्रादुरभूत् तत्र[१०] भगवान् विश्वभावनः ॥ ५३ ॥

ततः सुपर्णांसकृताङ्घ्रिपल्लवः पिशङ्गवासा नवकञ्जलोचनः ।
अदृश्यताष्टायुधबाहुरुल्लसच्छ्रीकौस्तुभानर्घ्यकिरीटकुण्डलः[११] ॥ ५४ ॥

---

१. परिष्कृतः ❋ २. आधावन्त ❋ ३. आरोहमर्पयत् ❋ ४. तत्सर्वं चाच्छिनद् विभुः ❋
५. शिलाः ❋ ६. ततो रक्षोगणाः प्रभो ❋ ७. संवर्तक इव ❋ ८. प्रचण्डवातनिर्धूत...... ❋
९. अलक्ष्यगतिभी रणैः/रणे ❋ १०. तस्मिन् ❋ ११. अदृश्यताष्टायुध.....

तस्मिन् प्रविष्टेऽसुरकूटकर्मजा माया विनेशुर्महतां महीयसि ।
स्वाप्नो यथाऽहिः प्रतिबोध आगते हरिस्मृतिः सर्वविपद्विमोक्षिणी[१] ॥ ५५ ॥
दृष्ट्वा मृधे [२]गरुडवाहमिभारिवाह आविध्य शूलमहिनोदथ कालनेमिः ।
तल्लीलया गरुडमूर्ध्नि पतद् गृहीत्वा तेनाहनन्नृप सवाहमरिं त्र्यधीशः ॥ ५६ ॥
माली सुमाल्यतिबलौ युधि पेततुर्यच्चक्रेण कृत्तशिरसावथ माल्यवांस्तम्[३] ।
आहत्य[४] तिग्मगदयाऽहनदण्डजेन्द्रं तावच्छिरोऽच्छिनदरेर्नदतोऽरिणाऽऽद्यः ॥ ५७ ॥

**॥ इति श्रीमद्भागवतेऽष्टमस्कन्धे नवमोऽध्यायः ॥**

---

**श्रीशुक उवाच**

अथो सुराः प्रत्युपलब्धचेतसः परस्य पुंसः परयाऽनुकम्पया ।
जघ्नुर्भृशं शक्रसमीरणादयस्तांस्तान् रणे यैरभिसङ्गताः पुरा ॥ १ ॥
वैरोचनाय संरब्धो भगवान् पाकशासनः । उदयच्छद् यदा वज्रं प्रजा हाहेति चुक्रुशुः ॥ २ ॥
वज्रपाणिस्तमाहेदं तिरस्कृत्य पुरःस्थितम् । मनस्विनं सुसम्पन्नं विचरन्तं महामृधे ॥ ३ ॥
नटवन्मूढ मायाभिर्मायावी त्वं जिगीषसि । जित्वा बालान् निबद्धाक्षान् नभो[५] हरति तद्धनम् ॥ ४ ॥
आरुरुक्षन्ति मायाभिरुत्सिसृप्सन्ति ये दिवम् । तान् दस्यून् विधुनोम्यज्ञ पूर्वस्माच्च पदादधः ॥ ५ ॥
सोऽहं दुर्मायिनस्तेऽद्य वज्रेण शतपर्वणा । शिरो हरिष्ये मन्दात्मन् घटस्व ज्ञातिभिः सह ॥ ६ ॥

**बलिरुवाच**

सङ्ग्रामे वर्तमानानां कालचोदितकर्मणाम्[६] । कीर्तिर्जयोऽजयो मृत्युः सर्वेषां स्युरनुक्रमात् ॥ ७ ॥
तमिमं कालरशनं जनं पश्यन्ति सूरयः । न हृष्यन्ति न शोचन्ति तत्र यूयमपण्डिताः ॥ ८ ॥
न वयं मन्यमानानामात्मानं तत्र कारणम् । गिरो वः साधु शोच्यानां गृह्णीमो मर्मताडनाः ॥ ९ ॥

**श्रीशुक उवाच**

इत्याक्षिप्य विभुं वीरो नाराचैर्वीरमानदः[७] । आकर्णपूर्णैरहनदाक्षेपैराहतं पुनः ॥ १० ॥

---

१. सर्वविपद्विनाशिनी २. गरुडवाहमिहारिवाहः ३. माल्यवांस्तु ❋ ४. आगत्य ❋
५. नरः ❋ /नटः ६. कालनोदितकर्मणाम् ❋ ७. वीरमर्दनः ❋

एवं निराकृतो देवो वैरिणा तथ्यवादिना । नामृष्यत् तदधिक्षेपं तोत्राहत इव द्विपः ॥ ११ ॥
प्राहरत् कुलिशं तस्मा अमोघं परमर्दनम् । सयानो न्यपतद् भूमौ छिन्नपक्ष इवाचलः ॥ १२ ॥
सखायं पतितं दृष्ट्वा जम्भो बलिसखः सुहृत् । अभ्ययात् सौहृदं सख्युर्हतस्यापि[१] स्वमाचरन् ॥
स सिंहवाह आसाद्य गदामुद्यम्य रंहसा । जत्रावताडयच्छक्रं गजं च सुमहाबलः ॥ १४ ॥
गदाप्रहारव्यथितो भृशं विह्वलितो गजः । जानुभ्यां धरणीं स्पृष्ट्वा कश्मलं परमं ययौ ॥ १५ ॥
ततो रथो मातलिना हयैर्दशशतैर्युतः । आनीतो द्विपमुत्सृज्य रथमारुरुहे विभुः ॥ १६ ॥
तस्य तत् पूजयन् कर्म शत्रोर्दानवसत्तमः । शूलेन ज्वलता तं तु[२] स्मयमानोऽहनन्मृधे ॥ १७ ॥
सेहे रुजं सुदुर्मर्षं सत्वमालम्ब्य मातलिः । इन्द्रो जम्भस्य सङ्क्रुद्धो वज्रेणापाहरच्छिरः ॥ १८ ॥
जम्भं श्रुत्वा हतं तस्य ज्ञातयो नारदादृषेः । नमुचिः सबलः पाकस्तत्रोपेयुस्त्वरान्विताः ॥ १९ ॥
वचोभिः परुषैरिन्द्रमर्दयन्तोऽस्य[३] मर्मसु । शरैरवाकिरन् मेघा धाराभिरिव पर्वतम् ॥ २० ॥
हरीन् दशशतानाजौ हर्यश्वस्य बलः शरैः । तावद्भिरर्दयामास युगपल्लघुहस्तवान् ॥ २१ ॥
शताभ्यां मातलिं पाको रथं सावयवं पृथक्[४] । सकृत्सन्धानमोक्षेण तदद्भुतमभूद् रणे ॥ २२ ॥
नमुचिः पञ्चदशभिः स्वर्णपुङ्खैर्महेषुभिः । आहत्य व्यनदत् सङ्ख्ये सतोय इव तोयदः ॥ २३ ॥
सर्वतः शरकूटेन शत्रुं[५] सरथसारथिम् । छादयामासुरसुराः प्रावृट्सूर्यमिवाम्बुदाः ॥ २४ ॥

अलक्षयन्तस्तमतीव विह्वला विचुक्रुशुर्देवगणाः समाकुलाः[६] ।
अनायकाः शत्रुबलेन निर्जिता[७] वणिक्पथा भिन्ननवो यथार्णवे ॥ २५ ॥
ततस्तुराषाडिषुबद्धपञ्जराद् विनिर्गतः साश्वरथध्वजाग्रणीः ।
बभौ दिशः खं पृथिवीं च रोचयन् स्वतेजसा सूर्य इव क्षपात्यये ॥ २६ ॥

निरीक्ष्य पृतनां देवः परैरभ्यर्दितां रणे । उदयच्छद् रिपुं हन्तुं वज्रं वज्रधरो रुषा ॥ २७ ॥
स तेनैवाष्टधारेण शिरसी बलपाकयोः । ज्ञातीनां पश्यतां राजन् जहार जनयन् भयम् ॥ २८ ॥
नमुचिस्तद्वधं दृष्ट्वा शोकामर्षरुषाऽन्वितः । जिघांसुरिन्द्रं नृपते चकार परमोद्यमम् ॥ २९ ॥
अश्मसारमयं शूलं घण्टावद्धेमभूषणम् । प्रगृह्याभ्यद्रवत् क्रुद्धो हतोऽसीति विसर्जयन् ॥ ३० ॥

---
१. सख्यं हतस्यापि ❋ २. शूलेन ज्वलमानेन ❋ ३. इन्द्रं घट्टयन्तोऽस्य मर्मसु ❋
४. रथं चावयवशः पृथक् ❋ ५. शक्रम् ❋ ६. सहानुगाः ❋ ७. शत्रुबले विसर्जिताः ❋

प्राहिणोद् देवराजाय विनदन्[१] मृगराडिव ॥ ३१ ॥

तदापतद् गगनतळे महाजवं[२] निचिच्छिदे हरिरिषुभिः सहस्रधा ।
तमाहनन् नृप कुलिशेन कन्धरे रुषाऽन्विततत्रिदशपतिः शिरो हरन् ॥ ३२ ॥
ततोऽस्य न त्वचमपि वज्र ऊर्जितो बिभेद यः सुरपतिनौजसेरितः ।
तदद्भुतं परमभिवीक्ष्य वृत्रभित्[३] तिरस्कृतो नमुचिशिरोधरत्वचा ॥ ३३ ॥

तस्मादिन्द्रो बिभेच्छत्रोर्वज्रः प्रतिहतो यतः । किमिदं दैवयोगेन भूतं लोकविमोहनम्[४] ॥ ३४ ॥
येन मे पूर्वमद्रीणां पक्षच्छेदः प्रजाक्षये । कृतो निविशतां भारैः पतत्त्रैः पततां भुवि ॥ ३५ ॥
तपःसारमयं त्वाष्ट्रं[५] वृत्रो येन विपाटितः । अन्ये चापि बलोपेताः सर्वास्त्रैरक्षतत्वचः ॥ ३६ ॥
सोऽयं प्रतिहतो वज्रो मया मुक्तोऽसुरेऽल्पके । नाहं तदाददे वज्रं ब्रह्मतेजोऽप्यकारणम् ॥ ३७ ॥
इति शक्रं विषीदन्तमाह वागशरीरिणी । नायं शुष्कैरथो नार्द्रैर्वधमर्हति दानवः ॥ ३८ ॥
मयास्मै यद् वरो दत्तो मृत्युर्वै नार्द्रशुष्कयोः । अतोऽन्यश्चिन्तनीयस्ते उपायो मघवन् रिपोः ॥ ३९ ॥
तां दैवीं गिरमाकर्ण्य मघवान् सुसमाहितः । ध्यायन् फेनमथापश्यदुपायमुभयात्मकम् ॥ ४० ॥
न शुष्केण नचार्द्रेण जहार नमुचेः शिरः । तं तुष्टुवुर्मुनिगणा माल्यैश्चावाकिरन् विभुम् ॥ ४१ ॥
गन्धर्वमुख्यौ जगतुर्विश्वावसुपरावसू । देवदुन्दुभयो नेदुर्नर्तक्यो ननृतुर्मुदा ॥ ४२ ॥
अन्येऽप्येवं प्रतिद्वन्द्वान्[६] वाय्वग्निवरुणादयः । सूदयामासुरस्त्रौघैर्मृगान् केसरिणो यथा ॥ ४३ ॥
ब्रह्मणा प्रेषितो देवान् देवर्षिर्नारदो नृप । वारयामास विबुधान् दृष्ट्वा दानवसङ्क्षयम् ॥ ४४ ॥

**नारद उवाच**

भवद्भिरमृतं प्राप्तं नारायणभुजाश्रयैः । श्रिया समेधिताः सर्वे उपारमत विग्रहात् ॥ ४५ ॥

**श्रीशुक उवाच**

संयम्य मन्युसंरम्भं मानयन्तो मुनेर्वचः । सङ्गीयमानानुचरैर्ययुः सर्वे त्रिविष्टपम् ॥ ४६ ॥
येऽवशिष्टा रणे तस्मिन् नारदानुमतेन ते । बलिं विपन्नमादाय अस्तं गिरिमुपागमन् ॥ ४७ ॥
तत्रापि नष्टावयवान् भिद्यमानशिरोधरान् । उशना जीवयामास सञ्जीविन्या[७] स्वविद्यया ॥ ४८ ॥

---

१. निनदन्  २. महाजवम्  ३. परमतिवीर्यवृत्रभित्  ४. लोकं विमोहयन् ❋
५. तपस्सारमयस्त्वाष्ट्रः ❋  ६. प्रतिद्वन्द्वाः ❋  ७. सञ्जीवन्या ❋

बलिश्चोशनसा स्पृष्टः प्रत्यापन्नेन्द्रियस्मृतिः । पराजितोऽपि नाखिद्यल्लोकतत्वविचक्षणः ॥ ४९ ॥

**॥ इति श्रीमद्भागवते अष्टमस्कन्धे दशमोऽध्यायः ॥**

---

**श्रीशुक उवाच**

वृषध्वजो निशम्येदं योषिद्रूपेण दानवान् । मोहयित्वा सुरगणान् हरिः सोममपाययत् ॥ १ ॥

वृषमारुह्य गिरिशः सर्वभूतगणैर्वृतः । सह देव्या ययौ द्रष्टुं यत्रास्ते मधुसूदनः ॥ २ ॥

सभाजितो भगवता सादरं सोमया भवः । सूपविष्ट उवाचेदं प्रतिपूज्य स्मयन् हरिम् ॥ ३ ॥

देवदेव जगद्व्यापिन् जगदीश जगन्मय । सर्वेषामेव भावानां त्वमात्मा हेतुरीश्वरः ॥ ४ ॥

तवैव चरणाम्भोजं श्रेयस्कामा निराशिषः । विसृज्योभयतः सङ्गं मुनयः समुपासते ॥ ५ ॥

त्वं ब्रह्म पूर्णममृतं विगुणं विशोकमानन्दमात्रमविकारमनन्यदन्यत् ।
विश्वस्य हेतुरुदयस्थितिसंयमानामात्मेश्वरश्च तदुपेक्षतयाऽनपेक्षः ॥ ६ ॥

एकस्त्वमेव सदसद् द्वयमद्वयं च स्वर्णं कृताकृतमिवेह न वस्तुभेदः ।
अज्ञानतस्त्वयि जनैर्विहितो विकल्पो[1] यस्माद् गुणव्यतिकरो निरुपाधिकश्च[2] ॥ ७ ॥

त्वां ब्रह्म केचिदवयन्त्युत धर्ममेक एके परं सदसतोः पुरुषं परेशम् ।
अन्ये वदन्ति नवशक्तियुतं[3] परं त्वां केचिन्महापुरुषमव्ययमात्मतन्त्रम् ॥ ८ ॥

नाहं परायुऋषयो न मरीचिमुख्या जानन्ति यद्विरचितं खलु सत्वसर्गाः ।
यन्मायया मुषितचेतस ईशदैत्यमर्त्यादयः किमुत शश्वदभद्रवृत्ताः ॥ ९ ॥

स त्वं समीहसि ततः स्थितिजन्मनाशान् भूतेहितं च जगतो ह्यपि बन्धमोक्षौ ।
वायुर्यथा विशति खं च चराचराख्यं सर्वं त्वदात्मकतयाऽवगमो नुतिस्ते ॥ १० ॥

अवतारा मया दृष्टा रममाणस्य ते गुणैः । सोऽहं तद् द्रष्टुमिच्छामि यत् ते योषिद्वपुर्धृतम् ॥ ११ ॥

येन सम्मोहिता दैत्याः पायिताश्चामृतं सुराः । तद् दिदृक्षव आयाताः परं कौतूहलं हि नः॥ १२ ॥

**श्रीशुक उवाच**

एवमभ्यर्थितो विष्णुर्भगवान् शूलपाणिना । प्रहस्य भावगम्भीरं गिरिशं प्रत्यभाषत ॥ १३ ॥

---

१. विहतो विकल्पः   २. निरुपाधिकस्त्वम् ❋   ३. पुरुशक्तियुतम् ❋

श्रीभगवानुवाच

कौतूहलाय दैत्यानां योषिद्वेषो मया कृतः । पश्यता सुरकार्याणि हृते पीयूषभाजने ॥ १४ ॥

तत् तेऽहं दर्शयिष्यामि दिदृक्षोः सुरसत्तम । तत् कामिनां च मन्तव्यं सङ्कल्पप्रभवोदयम् ॥ १५ ॥

श्रीशुक उवाच

इति ब्रुवाणो भगवांस्तत्रैवान्तरधीयत । सर्वतश्चारयंश्चक्षुर्भव आस्ते सहोमया ॥ १६ ॥

ततो ददर्शोपवने वरस्त्रियं विचित्रपुष्पारुणपल्लवद्रुमे ।
विक्रीडतीं कन्दुकलीलया लसद्दुकूलपर्यस्तनितम्बमेखलाम् ॥ १७ ॥

आवर्तनोद्वर्तनकम्पितस्तनप्रकृष्टहारोरुभरैः पदेपदे ।
विभज्यमानामिव मध्यतश्चलत्पदप्रवाळं नयतीं ततस्ततः ॥ १८ ॥

दिक्षु भ्रमत्कन्दुकचापलैर्भृशं प्रोद्विग्नतारायतलोललोचनाम् ।
स्वकर्णविभ्राजितलोलकुण्डलोल्लसत्कपोलाळकमण्डिताननाम् ॥ १९ ॥

श्लथद्दुकूलां कबरीं च विच्युतां सन्नह्यतीं वामकरेण वल्गुना ।
विनिघ्नतीमन्यकरेण कन्दुकं विमोहयन्तीं जगदात्ममायया ॥ २० ॥

तां वीक्ष्य देव इति कन्दुकलीलयेषद्व्रीळास्मितस्फुटविसृष्टकटाक्षमूढः ।
स्त्रीप्रेक्षणप्रतिसमीक्षणनिर्वृतात्मा नात्मानमन्तिक उमां स्वगणांश्च वेद ॥ २१ ॥

तस्याः कराग्रात् स तु कन्दुको यदा गतो विदूरं तमनुव्रजन्त्याः ।
वासः ससूत्रं लघु मारुतोऽहरद् भवस्य देवस्य किलानुपश्यतः ॥ २२ ॥

एवं तां रुचिरापाङ्गीं दर्शनीयां मनोरमाम् । दृष्ट्वा तस्यां मनश्चक्रे विलज्जन्त्यां[१] भवः किल ॥ २३ ॥

तयाऽपहृतविज्ञानस्तत्कृतस्मरविह्वलः । भवान्या अपि पश्यन्त्या गतह्रीस्तत्पदं ययौ ॥ २४ ॥

सा तमायान्तमालोक्य विवस्त्रा व्रीळिता भृशम् । निलीयमाना वृक्षेषु हसन्ती नान्वतिष्ठत ॥ २५ ॥

तामन्वगच्छद् भगवान् भवः प्रमथितेन्द्रियः । कामस्य च वशं नीतः करेणुमिव यूथपः ॥ २६ ॥

सोऽनुव्रज्यातिवेगेन गृहीत्वाऽनिच्छतीं स्त्रियम् । केशबन्ध उपानीय बाहुभ्यां परिषस्वजे ॥ २७ ॥

सोपगूढा भगवता करिणा करिणी यथा । इतस्ततः प्रसर्पन्ती विप्रकीर्णशिरोरुहा ॥ २८ ॥

आत्मानं मोचयित्वाऽङ्ग सुरर्षभभुजान्तरात् । प्राद्रवत् सा पृथुश्रोणी माया देवविनिर्मिता ॥ २९ ॥

---

१. विषज्जन्त्याम् ❋

तस्यासौ पदवीं रुद्रो विष्णोरद्भुतकर्मणः । प्रत्यपद्यत कामेन वैरिणेव विनिर्जितः[१] ॥ ३० ॥
तस्यानुधावतो रेतश्चस्कन्दामोघरेतसः । शुष्मिणो यूथपस्येव वासितामनुधावतः ॥ ३१ ॥
यत्रयत्रापतन्मह्यां रेतस्तस्य महात्मनः । तानि रुद्रस्य हेम्नश्च क्षेत्राण्यासन् महीपते ॥ ३२ ॥
सरित्सरस्सु शैलेषु वनेषूपवनेषु च । यत्र क्वचासन् ऋषयस्तत्र सन्निहितो भवः[२] ॥ ३३ ॥
स्कन्ने रेतसि सोऽपश्यदात्मानं देवमायया । जडीकृतं नृपश्रेष्ठ सन्न्यवर्तत कश्मलात् ॥ ३४ ॥
अथावगतमाहात्म्य आत्मनो जगदात्मनः । अपरिज्ञेयवीर्यस्य[३] न मेने तदुदाहृतम् ॥ ३५ ॥
तमविक्लबमव्रीळमालक्ष्य मधुसूदनः । उवाच परमप्रीतो बिभ्रत् स्वां पौरुषीं तनुम् ॥ ३६ ॥

**श्रीभगवानुवाच**

दिष्ट्या त्वं विबुधश्रेष्ठ स्वां निष्ठामात्मना स्थितः । यतो दुस्तरया स्वैरं मोहितोऽस्यङ्ग मायया ॥ ३७ ॥
को नु मेऽतितरेन्मायां विषक्तस्त्वदृते पुमान् । तांस्तान् विसृजतीं भावान् दुस्तरामकृतात्मभिः ॥
सेयं गुणमयी माया न त्वामभिभविष्यति । मया समेता कालेन कामरूपेण भागशः ॥ ३९ ॥

**श्रीशुक उवाच**

एवं भगवता राजन् श्रीवत्साङ्केन सत्कृतः । आमन्त्र्य तं परिक्रम्य सगणः स्वालयं ययौ ॥ ४० ॥
*आत्मांशभूतां तां मायां भवानीं भगवान् भवः । शंसतामृषिमुख्यानां प्रीत्या तुष्टामुवाच ह ॥

*अयि व्यपश्यस्त्वमजस्य मायां परस्य पुंसः परदेवतायाः ।
अहं कलानामृषभो विमुह्ये यया वशोऽन्ये किमुतास्वतन्त्राः ॥ ४२ ॥
*यं मामपृच्छस्त्वमुपेत्य योगात् समासहस्रान्त उपारतं वै ।
स एष साक्षात् पुरुषः पुराणो न यत्र कालो विशते न वेदः ॥ ४३ ॥

**श्रीशुक उवाच**

इति तेऽभिहितस्तात विक्रमः शार्ङ्गधन्वनः । सिन्धोर्निर्मथने येन धृतः पृष्ठे महाचलः ॥ ४४ ॥
एतन्मुहुः कीर्तयतोऽनुशृण्वतो न रिष्यते जातु समुद्यमः क्वचित् ।
यदुत्तमश्लोकगुणानुवर्णनं समस्तसंसारपरिश्रमापहम् ॥ ४५ ॥

---

१. वैरिणा च विनिर्जितः ❋ २. हरः ३. अपरिज्ञातवीर्यस्य ❋
* श्लोकत्रयमिदं प्राचीनकोशेषु नास्ति ।

असदविषयमङ्घ्रिं भावगम्यं प्रपन्नानमृतममरवर्यानाशयद् सिन्धुमथ्यम् ।
कपटयुवतिवेषो मोहयन् यः सुरारींस्तमहमुपसृतानां कामपूरं नतोऽस्मि ॥ ४६ ॥

**॥ इति श्रीमद्भागवते अष्टमस्कन्धे एकादशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

मनुर्विवस्वतः पुत्रः श्राद्धदेव इति श्रुतः । सप्तमो वर्तमानो यस्तदपत्यानि मे शृणु ॥ १ ॥
इक्ष्वाकुश्च नभश्चैव धृष्टः शर्यातिरेव च[१] । नरिष्यन्तोऽथ नाभागः सप्तमो दिष्ट उच्यते ॥ २ ॥
करूषश्च पृषध्रश्च[२] दशमो वसुमान् स्मृतः । मनोर्वैवस्वतस्यैते दश पुत्राः परन्तप ॥ ३ ॥
आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः । अश्विनावृभवो राजन्निन्द्रस्तेषां पुरन्दरः ॥ ४ ॥
कश्यपोऽत्रिर्वसिष्ठश्च विश्वामित्रोऽथ गौतमः । जमदग्निर्भरद्वाज इति सप्तर्षयः स्मृताः ॥ ५ ॥
अत्रापि भगवज्जन्म कश्यपाददितेरभूत् । आदित्यानामवरजो विष्णुर्वामनरूपधृक् ॥ ६ ॥
सङ्क्षेपतो मयोक्तानि सप्तमन्वन्तराणि ते । भविष्याण्यथ वक्ष्यामि विष्णोः शक्त्याऽन्वितानि च ॥
विवस्वतश्च द्वे जाये विश्वकर्मसुते उभे । सञ्ज्ञा छाया च राजेन्द्र ये प्रागभिहिते तव ॥ ८ ॥
तृतीया बडवा[३] नाम तासां सञ्ज्ञासुतास्त्रयः। यमो यमी श्राद्धदेवश्छायायाश्च सुतान् शृणु ॥ ९ ॥
सावर्णिस्तपती[४] कन्या भार्या संवरणस्य या । शनैश्चरस्तृतीयोऽभूदश्विनौ बडबात्मजौ ॥ १० ॥
अष्टमेऽन्तर आयाते सावर्णिर्भविता मनुः । निर्मोहविरजस्काद्याः[५] सावर्णेस्तनया नृप ॥ ११ ॥
तत्र देवाः सुतपसो विरजा अमितप्रजाः । तेषां विरोचनसुतो बलिरिन्द्रो भविष्यति ॥ १२ ॥
दत्वेमां याचमानाय विष्णवे यः पदत्रयम् । राद्धमिन्द्रपदं हित्वा ततः सिद्धिमवाप्स्यति ॥ १३ ॥
योऽसौ भगवता बद्धः प्रीतेन सुतळे पुनः । निवेशितोऽधिके स्वर्गादधुनाऽऽस्ते स्वराडिव ॥ १४ ॥
गालवो दीप्तिमान् रामो द्रोणपुत्रः कृपस्तथा । ऋष्यशृङ्गः पिताऽस्माकं भगवान् बादरायणः ॥ १५ ॥
इमे सप्तर्षयस्तस्मिन् भविष्यन्ति स्वयोगतः । इदानीमासते राजन् स्वेस्व आश्रममण्डले ॥ १६ ॥
देवगुह्यात्[६] सरस्वत्यां सार्वभौम इति[७] प्रभुः । स्थानं पुरन्दराद् हत्वा बलये दास्यतीश्वरः ॥ १७ ॥

---

१. शंयातिरेव च ❋ २. वारुणश्च जयन्तश्च ❋ ३. वडवा (एवमुत्तरत्रापि) ४. तपतिः ❋
५. निर्मोकविरजस्काद्याः ❋ ६. देवगुह्याम् ७. सार्वभौमपतिः

नवमो दक्षसावर्णिर्मनुर्वरुणसम्भवः । भूतकेतुर्दीप्तकेतुरित्याद्यास्तत्सुता[1] नृप[2] ॥ १८ ॥
परा मरीचिगर्गाद्या देवा इन्द्रोऽद्भुतः स्मृतः । द्युतिमत्प्रमुखास्तत्र भविष्यन्त्यृषयस्ततः ॥ १९ ॥
आयुष्मतोऽम्बुधारायामृषभो भगवान् किल । भविता येन सन्त्रातो त्रैलोक्यं[3] भोक्ष्यतेऽद्भुतः ॥
दशमो ब्रह्मसावर्णिरुपश्लोकसुतो महान् । तत्सुता भूरिषेणाद्या हविष्मत्प्रमुखा द्विजाः ॥ २१ ॥
तत्रापि जन्म भविता हरेर्विश्वसृजां गृहे । श्रीमूर्तिरिति विख्यातो येनाप्यायेत वै जगत् ॥ २२ ॥
हविष्मान् सुकृतः सत्यो जयो मूर्तिस्तदा[4] द्विजाः । सुवासनविबुद्धाद्या[5] देवाः शम्भुः सुरेश्वरः ॥
विश्वक्सेनो विषूच्यां तु शम्भोः सख्यं करिष्यति । जातः शान्तश्च भगवान् गृहे विश्वसृजां विभुः ॥
मनुर्वै धर्मसावर्णिरेकादशम आत्मवान् । अनागतस्तत्सुताश्च[6] सत्यधर्मादयो दश ॥ २५ ॥
विहङ्गमाः कामगमा निर्वाणरुचयः सुराः । इन्द्रश्च वैधृतिस्तेषामृषयश्चारुणादयः[7] ॥ २६ ॥
आर्यकस्य सुतस्तत्र धर्मसेतुरिति स्मृतः । वैधृतायां हरेरंशस्त्रिलोकीं धारयिष्यति[8] ॥ २७ ॥
भविता मेरुसावर्णी[9] राजन् द्वादशमो मनुः । देववानुपदेवश्च देवश्रेष्ठादयः सुताः ॥ २८ ॥
ऋतधामा च तत्रेन्द्रो देवाश्च हरितादयः[10] । ऋषयश्च तपोमूर्तितपश्चाग्नीध्रकादयः[11] ॥ २९ ॥
स्वधामाख्यो हरेरंशः साधयिष्यति तन्मनोः । अन्तरं सत्यसहसः सूनृतायां सुतो विभुः ॥ ३० ॥
मनुस्त्रयोदशो भाव्यो देवसावर्णिरात्मवान्[12] । चित्रसेनविचित्राद्या देवसावर्णिदेहजाः ॥ ३१ ॥
देवाः सुकर्मसुत्रामसञ्ज्ञा इन्द्रो दिवस्पतिः । निर्मोकतत्त्वदर्शाद्या[13] भविष्यन्त्यृषयस्तदा ॥ ३२ ॥
देवहोत्रस्य तनय उपहर्ता दिवस्पतेः । योगेश्वरो हरेरंशो बृहत्यां सम्भविष्यति ॥ ३३ ॥
मनुर्वा इन्द्रसावर्णिश्चतुर्दशम इष्यते । जन्तुभीरववर्याद्या[14] इन्द्रसावर्णिवीर्यजाः ॥ ३४ ॥
विचित्राश्चाक्षुषा देवाः[15] शुचिरिन्द्रो भविष्यति । अग्निर्बाहुः शुचिः शुद्धो[16] मानसाद्यास्तपस्विनः ॥
सत्रायणस्य तनयो बृहद्भानुस्तदा हरिः । वितानायां महाराज क्रियातन्तून् वितायिता[17] ॥ ३६ ॥

---

१. धृतिकेतुदीप्तिकेतुरित्याद्याः ❋ २. नृपाः ❋ ३. त्रिलोकीम्
४. हविष्मान् सुकृतिः सभ्यो जडो मूर्तिस्तदा ❋ ५. सुदामानो विबुद्धाद्याः ❋ ६. अनागतास्तत्सुताश्च ❋
७. वैधृतस्तेषाम्..... ❋ ८. तारयिष्यति ❋ ९. रुद्रसावर्णिः ❋ १०. हरिणादयः ❋
११. तपोमूर्तितपसश्चाग्निकादयः ❋ १२. वेदसावर्णिः...(एवमुत्तरत्रापि) १३.निर्मोकविरजस्काद्याः ❋
१४. उरुगम्भीरबुद्ध्यद्याः ❋ १५. वसित्राश्चाक्षुषा देवाः ❋ १६. शुक्रः ❋ १७. वितानिता ❋

राजन् चतुर्दशैतानि त्रिकालानुगतानि ते । प्रोक्तान्येभिर्मितः कल्पो युगसाहस्रपर्ययः ॥ ३७ ॥

**॥ इति श्रीमद्भागवतेऽष्टमस्कन्धे द्वादशोऽध्यायः ॥**

---

**राजोवाच**

मन्वन्तरेषु भगवान् यथा मन्वादयस्त्विमे । यस्मिन् कर्मणि ये येन[१] नियुक्तास्तद्वदस्व मे ॥ १ ॥

**ऋषिरुवाच**

मनवो मनुपुत्राश्च मुनयश्च महीपते । इन्द्राः सुरगणाश्चैव सर्वे पुरुषशासनाः ॥ २ ॥

यज्ञादयो याः कथिताः पौरुष्यस्तनवो नृप । मन्वादयो जगद्यात्रां नयन्त्याभिः प्रचोदिताः ॥ ३ ॥

चतुर्युगान्ते कालेन ग्रस्ताञ्छ्रुतिगणान् यथा । तपसा ऋषयोऽपश्यन् यतो धर्मः सनातनः ॥ ४ ॥

ततो धर्मं चतुष्पादं मनवो हरिणोदिताः[२] । युक्ताः सञ्चारयन्त्यद्धा स्वेस्वे काले महीनृपाः ॥ ५ ॥

पालयन्ति प्रजापाला यावदन्तं विभागशः । यज्ञभागभुजो देवा ये च तत्रानुकीर्तिताः ॥ ६ ॥

इन्द्रो भगवता दत्तां त्रैलोक्यश्रियमूर्जिताम् । भुञ्जानः पाति लोकांस्त्रीन् कामं लोके प्रवर्षति ॥ ७ ॥

ज्ञानं चातुर्युगं ब्रूते हरिः सिद्धस्वरूपधृक् । ऋषिरूपधरः कर्म योगं योगेशरूपधृक् ॥ ८ ॥

सर्गं प्रजेशरूपेण दस्यून् हन्ति स्वराड्वपुः । कालरूपेण सर्वेषामभवाय पृथग्गुणः ॥ ९ ॥

स्तूयमानो जनैरेभिर्मायया ऽनामरूपया[३] । विमोहितात्मभिर्नानादर्शनैर्न च दृश्यते ॥ १० ॥

एतत् कल्पविकल्पस्य प्रमाणं परिकीर्तितम् । यत्र मन्वन्तराण्याहुश्चतुर्दश पुराविदः ॥ ११ ॥

**॥ इति श्रीमद्भागवते अष्टमस्कन्धे त्रयोदशोऽध्यायः ॥**

---

**राजोवाच**

बलेः पदत्रयं भूमेः कस्माद्धरिरयाचत । [४]भूतेश्वरः कृपणवल्लब्धार्थोऽपि बबन्ध तम् ॥ १ ॥

एतद् वेदितुमिच्छामो महत् कौतूहलं हि नः । याञ्चेश्वरस्य पूर्णस्य बन्धनं वाऽप्यनागसः ॥ २ ॥

**श्रीशुक उवाच**

पराजितश्रीरसुभिश्च हापितो हीन्द्रेण राजन् भृगुभिः स जीवितः ।
सर्वात्मना तानभजद् भृगून् बलिः शिष्यो महान् स्वार्थनिवेदनेन ॥ ३ ॥

---

१. कर्मणि योगेन ❋ २. हरिणेरिताः ❋ ३. मायया चानुरूपया ❋ ४. भूत्वेश्वरः

तं ब्राह्मणा भृगवः प्रीयमाणा अयाजयन् विश्वजिता त्रिलोकम् ।
जिगीषमाणं विधिनाऽभिषिच्य महाभिषेकेण महानुभावाः ॥ ४ ॥
ततो रथः काञ्चनपट्टनद्धो हयाश्च हर्यश्वतुरङ्गवर्णाः ।
ध्वजश्च सिंहेन विराजमानो हुताशनादास हविर्भिरिद्धात् ॥ ५ ॥
धनुश्च दिव्यं पुरटोपनद्धं तूणावरिक्तौ कवचं च दिव्यम् ।
पितामहस्तस्य ददौ च मालामम्लानपुष्पां[१] जलजं च शुक्रः ॥ ६ ॥
एवं स विप्रार्जितयोधनार्थस्तैः[२] कल्पितस्वस्त्ययनोऽथ विप्रान् ।
प्रदक्षिणीकृत्य कृतप्रणामः प्रह्लादमामन्त्र्य नमश्चकार ॥ ७ ॥

अथारुह्य रथं दिव्यं भृगुदत्तं महारथः । सुस्रग्धरोऽथ सन्नद्धो धन्वी[३] खड्गी धृतेषुधिः ॥ ८ ॥
हेमाङ्गदलसद्बाहुः स्फुरन्मकरकुण्डलः । रराज रथमारूढो धिष्ण्यस्थ इव हव्यवाट् ॥ ९ ॥
तुल्यैश्वर्यबलश्रीभिः सरथैर्दैत्ययूथपैः । पिबद्भिरिव खं दृग्भिर्दहद्भिः परिधीनिव[४] ॥ १० ॥
वृतो विकर्षन् महतीमासुरीं ध्वजिनीं विभुः । ययाविन्द्रपुरीमृद्धां कम्पयन्निव रोदसी ॥ ११ ॥
रम्यामुपवनोद्यानैः श्रीमद्भिर्नन्दनादिभिः । कूजद्विहङ्गमिथुनैर्गायन्मत्तमधुव्रतैः ॥ १२ ॥
प्रवाळफलपुष्पोरुभारशाखामरद्रुमैः । हंससारसचक्राह्वकारण्डवकुलाकुलाः ॥ १३ ॥
नळिन्यो यत्र क्रीडन्ति प्रमदाः सुरसेविताः । आकाशगङ्गया देव्या वृतां परिखभूतया ॥ १४ ॥
प्राकारेणाग्निवर्णेन साट्टालेनोन्नतेन च । रुग्मपट्टकपाटैश्च द्वारैः स्फटिकगोपुरैः ॥ १५ ॥
जुष्टां विभक्तप्रपथां विश्वकर्मविनिर्मिताम् । सभाचत्वररथ्याढ्यां विमानैर्न्यर्बुदैर्युताम् ॥ १६ ॥
भृङ्गाटकैर्मणिमयैर्वज्रविद्रुमवेदिभिः । यत्र नित्यवयोरूपाः श्यामा विरजवाससः ।
भ्राजन्ते पुरुषाः स्त्रीभिरर्चिर्भिरिव वह्नयः ॥ १७ ॥

सुरस्त्रीकेशविभ्रष्टनवसौगन्धिकस्रजाम् । यत्रामोदमुपादाय[५] मार्ग आवाति[६] मारुतः ॥ १८ ॥
हेमजालाक्षनिर्गच्छद्धूमेनागरुगन्धिना । पाण्डरेण प्रतिच्छन्नमार्गे यान्ति सुरस्त्रियः ॥ १९ ॥
मुक्तावितानैर्मणिहेमकेतुभिर्नानापताकावलभीभिरावृताम्[७] ।
शिखण्डिपारावतभृङ्गनादितां वैमानिकस्त्रीकळगीतमङ्गलाम् ॥ २० ॥

---

१. आम्लानपद्माम् ❋ २. विप्रार्पितयोधनार्थः ❋ ३. स्रग्धरोऽथ सुसन्नह्य धन्वी ❋
४. वारिधीनिव ❋ ५. यदामोदमुपादाय ❋ ६. आयाति ❋ ७. नानापताकावळिभिः समावृताम् ❋

मृदङ्गशङ्खानकदुन्दुभिस्वनैः सताळवीणामुरजैश्च वेणुभिः ।
नृत्यैः[१] सवाद्यैरुपदेवगीतकैर्मनोरमां स्वप्रभया जितग्रहाम् ॥ २१ ॥
*यां न व्रजन्त्यधर्मिष्ठाः खला भूतद्रुहः शठाः । मानिनः कामिनो लुब्धा एभिर्हीना व्रजन्त्युत ॥
*तां देवधानीं स वरूथिनीपतिर्बहिः समन्ताद् रुरुधे पृतन्यया ।
आचार्यदत्तं जलजं महास्वनं दध्मौ प्रयुञ्जन् भयमिन्द्रयोषिताम् ॥ २३ ॥
मघवांस्तदभिप्रेत्य बलेः परममुद्यमम् । सर्वदेवगणोपेतो गुरुमेतदुवाच ह ॥ २४ ॥
भगवन्नुद्यमो भूयान् बलेर्नः पूर्ववैरिणः । अविषँह्यमिमं मन्ये केनासीत् तेजसा समः[२] ॥ २५ ॥
नैनं कश्चित् कुतो वापि प्रतिवोढुमधीश्वरः । पिबन्निव मुखेनेदं लिहन्निव दिशो दश ।
दहन्निव नभो दृग्भिः[३] सांवर्ताग्निरिवोत्थितः ॥ २६ ॥
ब्रूहि कारणमेतस्य दुर्धर्षत्वस्य मद्रिपोः । ओजः सहो बलं तेजो यत एष समुद्यमः ॥ २७ ॥

**गुरुरुवाच**

जानामि मघवन् शत्रोरुन्नतेरस्य कारणम् । शिष्यायोपभृतं तेजो गुरुभिर्ब्रह्मवादिभिः ॥ २८ ॥
नास्य कश्चित् क्षणमपि स्थातुं शक्नोति सम्मुखे[४] । भवद्विधो भवान् वापि वर्जयित्वेश्वरं हरिम् ॥ २९ ॥
तस्मान्निलयमुत्सृज्य यूयं सर्वे त्रिविष्टपम् । यात कालं प्रतीक्षध्वं[५] यतः शत्रोर्विपर्ययः ॥ ३० ॥
एष विप्रबलोदर्कः सम्प्रत्यूर्जितविक्रमः । एषामेवावमानेन सानुबन्धो विनङ्क्ष्यति ॥ ३१ ॥
एवं सुमन्त्रितार्थास्ते गुरुणाऽर्थानुदर्शिना । हित्वा त्रिविष्टपं जग्मुर्गीर्वाणाः कामरूपिणः ॥ ३२ ॥
देवेष्वतिविलीनेषु बलिर्वैरोचनः पुरीम् । देवधानीमधिष्ठाय वशं निन्ये जगत्त्रयम् ॥ ३३ ॥
तं तु विश्वजितं[६] शिष्यं भृगवः शिष्यवत्सलाः । शतेन हयमेधानामनुव्रतमयाजयन् ॥ ३४ ॥
ततस्तदनुभावेन[७] भुवनत्रयविस्तृताम् । कीर्तिं दिक्षु वितन्वानः स रेज उडुराडिव ॥ ३५ ॥
बुभुजे च श्रियं ऋद्धां[८] द्विजदेवोपलम्भिताम् । कृतकृत्यमिवात्मानं मन्यमानो महामनाः ॥ ३६ ॥

**॥ इति श्रीमद्भागवते अष्टमस्कन्धे चतुर्दशोऽध्यायः ॥**

---

१. नृत्तैः ❋ * श्लोकद्वयमिदं प्राचीनतमे कोशे नास्ति । २. समम् ❋/तेजसोर्जितः
३. दहन्निव नभो दृष्ट्या ❋ ४. नास्य शक्तः पुरःस्थातुं कृतान्तस्य यथा जनाः ५. प्रतीक्षन्तः ❋
६. तं विश्वजयिनम् ❋ ७. तदेतदनुभावेन ❋ ८. शुद्धाम् ❋

### श्रीशुक उवाच

एवं पुत्रेषु नष्टेषु देवमाताऽदितिस्तदा । हृते त्रिविष्टपे दैत्यैः पर्यतप्यदनाथवत् ॥ १ ॥

एकदा काश्यपस्तस्या आश्रमं भगवानगात् । निरुत्सवं निरानन्दं समाधेर्विरतश्चिरात् ॥ २ ॥

स पत्नीं दीनवदनां कृतासनपरिग्रहः । सभाजितो यथान्यायमिदमाह कुरूद्वह ॥ ३ ॥

अप्यभद्रं न विप्राणां भद्रे लोकेऽधुनाऽऽगतम् । न धर्मस्य न लोकस्य मृत्योश्छन्दानुवर्तिनः ॥ ४ ॥

अपि वाऽकुशलं किञ्चिद् गृहेषु गृहमेधिनि । धर्मस्यार्थस्य कामस्य यत्र योगो ह्ययोगिनाम् ॥ ५ ॥

अपि वाऽतिथयोऽभ्येत्य कुटुम्बासक्तया त्वया । गृहादपूजिता याताः प्रत्युत्थानेन वा क्वचित् ॥ ६ ॥

गृहेषु येष्वतिथयो नार्चिताः सलिलैरपि । यदि निर्यान्ति ते नूनं प्रेतराजगृहोपमाः ॥ ७ ॥

अथाग्नयस्तु वेळायां न हुता हविषा सति । त्वयोद्विग्नधिया भद्रे प्रोषिते मयि कर्हिचित् ॥ ८ ॥

यत्पूजया कामदुघान् यान्ति लोकान् गृहान्विताः । ब्राह्मणोऽग्निश्च वै विष्णोः सर्वदेवात्मनो मुखम् ॥

अपि सर्वे कुशलिनस्तव पुत्रा मनस्विनि । लक्षयेऽस्वस्थमात्मानं भवत्या लक्षणैरहम् ॥ १० ॥

### अदितिरुवाच

भद्रं द्विजगवां ब्रह्मन् धर्मस्यास्य जनस्य च । त्रिवर्गस्य परं क्षेत्रं गृहमेधिन् गृहा इमे ॥ ११ ॥

अग्नयोऽतिथयो भृत्या भिक्षवो ये च लिप्सवः । सर्वं भगवतो ब्रह्मन्ननुध्यानान्न रिष्यति ॥ १२ ॥

को नु मे भगवन् कामो न सम्पद्येत मानसः । यस्या भवान् प्रजाध्यक्ष एवं धर्मान् प्रभाषते ॥ १३ ॥

तवैव मारीच मनःशरीरजाः प्रजा इमाः सत्वरजस्तमोजुषः ।
मनोरथं तासु सुरादिषु प्रभो यथाविभागं भजते महेश्वरः ॥ १४ ॥

तस्मादंशं भजन्त्या मे श्रेयश्चिन्तय सुव्रत । हृतश्रियो हृतस्थानान् सपत्नैः पाहि नः प्रभो ॥ १५ ॥

परैर्विवासिता साऽहं मग्ना व्यसनसागरे । ऐश्वर्यं श्रीर्यशः स्थानं हृतानि प्रबलैर्मम ॥ १६ ॥

यथा तानि पुनः साधो प्रपद्येरन् ममात्मजाः । तथा विधेहि कल्याणं धिया कल्याणकृत्तम ॥ १७ ॥

### श्रीशुक उवाच

एवमभ्यर्थितोऽदित्या मुनिराह[८] स्मयन्निव । अहो मायामयं विष्णोः स्नेहबन्धमिदं जगत् ॥ १८ ॥

क्व देहो भौतिकोऽनात्मा क्व चात्मा प्रकृतेः परः । कस्य के पतिपुत्राद्या मोह एव हि कारणम् ॥

---

१. आम्लानपद्माम् ❋ २. विप्रार्पितयोधनार्थः ❋ ३. स्रग्धरोऽथ सुसन्नह्य धन्वी ❋ ४. वारिधीनिव ❋
५. यदामोदमुपादाय ❋ ६. आयाति ❋ ७. नानापताकावळिभिः समावृताम् ❋ ८. कस्तामाह

उपतिष्ठस्व पुरुषं भगवन्तं जनार्दनम् । सर्वभूतगुहावासं वासुदेवं जगद्गुरुम् ॥ २० ॥

स विधास्यति ते कामान् हरिर्दीनानुकम्पनः । अमोघा भगवत्सेवा नेतरेति[१] मतिर्मम ॥ २१ ॥

**अदितिरुवाच**

केनाहं विधिना ब्रह्मन्नुपस्थास्ये जगत्पतिम् । यथा मे सत्यसङ्कल्पो विदध्यात् स मनोरथम्॥ २२ ॥

आदिश त्वं द्विजश्रेष्ठ विधिं तदुपधावनम् । आशु तुष्यति मे देवः सीदन्त्याः सह पुत्रकैः ॥ २३ ॥

**काश्यप उवाच**

एतन्मे भगवन् पृष्टः प्रजाकामस्य पद्मजः । यदाह ते प्रवक्ष्यामि व्रतं केशवतोषणम् ॥ २४ ॥

फाल्गुनस्यामले पक्षे द्वादशाहं पयोव्रतः । अर्चयेदरविन्दाक्षं भक्त्या परमयाऽन्वितः ॥ २५ ॥

सिनीवाल्यां मृदाऽऽलिप्य स्नायात् क्रोडविदीर्णया । यदि लभ्येत वै स्रोत एतं मन्त्रमुदीरयेत् ॥

त्वं देव्यादिवराहेण रसायाः स्थानमिच्छता । उद्धृताऽसि नमस्तुभ्यं पाप्मानं मे प्रणाशय ॥२७ ॥

निर्वर्तितात्मनियमो देवमर्चेत् समाहितः । अर्चायां स्थण्डिले सूर्ये जले वह्नौ गुरावपि ॥२८ ॥

नमस्तुभ्यं भगवते पुरुषाय महीयसे । सर्वभूतनिवासाय वासुदेवाय साक्षिणे ॥२९ ॥

नमोऽव्यक्ताय सूक्ष्माय प्रधानपुरुषाय च । चतुर्विंशगणज्ञाय गुणसंस्थानहेतवे ॥३० ॥

नमो द्विशीर्ष्णे त्रिपदे चतुःशृङ्गाय तन्तवे । सप्तहस्ताय यज्ञाय त्रयीविद्यात्मने नमः ॥३१ ॥

नमः शिवाय रुद्राय नमस्ते योगहेतवे[२] । *सर्वविद्याधिपतये भूतानां पतये नमः ॥३२ ॥

*नमो हिरण्यगर्भाय प्राणाय जगदात्मने । योगैश्वर्यशरीराय नमस्ते योगहेतवे ॥३३ ॥

नमस्त आदिदेवाय देवदेवाय ते नमः । नारायणाय ऋषये नराय हरये नमः ॥३४ ॥

नमो मरतकश्यामवपुषेऽधिगतश्रिये । केशवाय नमस्तुभ्यं नमस्ते पीतवाससे ॥३५ ॥

त्वं सर्ववरदः पुंसां वरेण्य वरदर्षभ । अतस्ते श्रेयसे[३] धीराः पादरेणुमुपासते ॥३६ ॥

अन्ववर्तन्त यं देवाः श्रीविनिर्जितपद्मयोः । स्पृहयन्त इवामोदं भगवन् मे प्रसीदताम् ॥३७ ॥

एतैर्मन्त्रैर्हृषीकेशमावाहनपुरस्सरम् । अर्चयेच्छ्रद्धया युक्तः पाद्योपस्पर्शनादिभिः ॥३८ ॥

अर्चितं गन्धमाल्याद्यैः पयसा स्नापयेद् विभुम् । वस्त्रोपवीताभरणपाद्योपस्पर्शनैस्ततः ॥३९ ॥

गन्धधूपादिभिश्चार्चेत् द्वादशाक्षरविद्यया । शृतं पयसि नैवेद्यं शाल्यन्नं विभवे सति ॥४० ॥

ससर्पिः सगुडं दत्वा जुहुयान्मूलविद्यया । निवेदितं तद्भक्ताय दद्यात् भुञ्जीत वा स्वयम् ॥४१ ॥

---

१. भगवद्भक्तिर्नेतरेति   २. नमः शक्तिधराय च   ३. तपसा   * सार्धश्लोकोऽयं प्राचीनकोशेषु नास्ति ।

दत्वाऽऽचमनमर्चित्वा ताम्बूलं च निवेदयेत् । जपेदष्टोत्तरशतं स्तुवीत स्तुतिभिः प्रभुम् ॥४२ ॥
कृत्वा प्रदक्षिणं भूमौ प्रणमेद् दण्डवन्मुदा । कृत्वा शिरसि तच्छेषं देवमुद्वासयेत् ततः ॥ ४३ ॥
द्व्यवरान् भोजयेद् विप्रान् पायसेन यथोचितम् । भुञ्जीत तैरनुज्ञातो हुतशेषं सभाजितैः ॥ ४४ ॥
ब्रह्मचार्यथ तद्रात्र्यां श्वोभूते प्रथमेऽहनि । प्रातः शुचिर्यथोक्तेन विधिना सुसमाहितः ॥ ४५ ॥
पयसा स्नापयित्वाऽर्चेद् यावद् व्रतसमापनम् । पयोभक्षो व्रतमिदं चरेद् विष्ण्वर्चनादृतः ॥ ४६ ॥
पूर्ववज्जुहुयादग्निं ब्राह्मणांश्चापि भोजयेत् । एवं त्वहरहः कुर्याद् द्वादशाहं पयोव्रतम् ॥ ४७ ॥
हरेराराधनं होममर्हणं द्विजतर्पणम् । प्रतिपद्दिनमारभ्य यावच्छुक्लत्रयोदशी ॥ ४८ ॥
ब्रह्मचर्यमधःस्वापं[1] स्नानं त्रिषवणं चरेत् । वर्जयेदसदालापं भोगानुच्चावचांस्तथा ॥ ४९ ॥
अहिंस्रः सर्वभूतानां नारायणपरायणः । त्रयोदश्यामथो विष्णोः स्नापनं स्नापकैर्विभोः ॥ ५० ॥
कारयेच्छास्त्रदृष्टेन विधिना विधिकोविदैः । पूजां च महतीं कुर्याद् वित्तशाठ्यविवर्जितः ॥ ५१ ॥
चरुं निरूप्य पयसि शिपिविष्टाय विष्णवे । शृतेन तेन पुरुषं यजेत सुसमाहितः ॥ ५२ ॥
नैवेद्यं चापि गुणवद् दद्यात् पुरुषतुष्टिदम् ॥ ५३ ॥
आचार्यं ज्ञानसम्पन्नं वस्त्राभरणधेनुभिः । तोषयेद् ऋत्विजश्चैव तद् विध्याराधनं हरेः ॥ ५४ ॥
भोजयेत् तान् गुणवता सदन्नेन शुचिस्मिते । अन्यांश्च ब्राह्मणान् युक्तान्[2] ये च तत्र समागताः ॥
दक्षिणां गुरवे दद्याद् ऋत्विग्भ्यश्च यथाऽर्हतः । अन्नाद्येनाश्वपाकांश्च प्रीणयेत् समुपागतान्॥ ५६ ॥
भुक्तवत्सु च विप्रेषु दीनान्धकृपणादिषु । विष्णोस्तत्प्रीणनं विद्वान् सह भुञ्जीत बन्धुभिः ॥ ५७ ॥
नृत्तवादित्रगीतैश्च स्तुतिभिः स्वस्तिवाचकैः । कारयेत् तत्कथाभिश्च पूजां भगवतोऽन्वहम् ॥ ५८ ॥
एतत् पयोव्रतं नाम पुरुषाराधनं परम् । पितामहेनाभिहितं मम ते समुदाहृतम् ॥ ५९ ॥
त्वं चानेन महाभागे सम्यक् चीर्णेन केशवम् । आत्मना शुद्धभावेन भजनीयं भजाव्ययम् ॥ ६० ॥
अयं वै सर्वयज्ञाख्यो सर्वव्रतमिदं स्मृतम् । तपःसारमिदं भद्रे दानं चेश्वरतर्पणम् ॥ ६१ ॥
त एव नियमाः साक्षात् त एव च यमोत्तमाः । तपो दानं व्रतं यज्ञो येन तुष्यत्यधोक्षजः ॥ ६२ ॥
तस्मादेतद्व्रतं भद्रे प्रयता श्रद्धया चर । भगवानपि तुष्टस्ते वरानाशु विधास्यति ॥ ६३ ॥

**॥ इति श्रीमद्भागवते अष्टमस्कन्धे पञ्चदशोऽध्यायः ॥**

---

१. अधःस्वप्नम् ❋ २. शक्त्या

**श्रीशुक उवाच**

इत्युक्ता साऽदिती राजन् स्वभर्त्रा काश्यपेन वै । अन्वतिष्ठत् व्रतमिदं द्वादशाहमतन्द्रिता ॥ १ ॥
चिन्तयन्त्येकया बुद्ध्या महापुरुषमीश्वरम्[१] । प्रगृह्येन्द्रियदुष्टाश्वान् मनसा बुद्धिसारथिः ॥ २ ॥
मनश्चैकाग्रया बुद्ध्या भगवत्यखिलात्मनि । वासुदेवे समाधाय चचार ह पयोव्रतम् ॥ ३ ॥
तस्याः प्रादुरभूत् तत्र भगवानादिपूरुषः । पीतवासाश्चतुर्बाहुः शङ्खचक्रगदाधरः ॥ ४ ॥
तं नेत्रगोचरं वीक्ष्य सहसोत्थाय सादरम् । ननाम भुवि कायेन दण्डवत् प्रीतिविह्वला ॥ ५ ॥

सोत्थाय बद्धाञ्जलिरीडितुं स्थिता न सेह आनन्दजलाकुलेक्षणा ।
बभूव तूष्णीं पुळकाकुलाकृतिस्तद्दर्शनात्युत्सवगात्रवेपथुः ॥ ६ ॥
प्रीत्या शनैर्गद्गदया गिरा हरिं तुष्टाव सा देव्यदितिः कुरूद्वह ।
उद्वीक्षती सा पिबतीव चक्षुषा रमापतिं यज्ञपतिं जगत्पतिम् ॥ ७ ॥

**अदितिरुवाच**

यज्ञेश यज्ञपुरुषाच्युत तीर्थपाद तीर्थश्रवः श्रवणमङ्गळनामधेय ।
आपन्नलोकवृजिनोपशमोदयाद्य शं नः कृधीश भगवन्नवसन्ननाथ ॥ ८ ॥
विश्वाय विश्वभवनस्थितिसंयमाय स्वैरं गृहीतपुरुशक्तिगुणाय भूम्ने ।
स्वच्छाय शश्वदुपबृंहितपूर्णबोधव्यापादितात्मतमसे हरये नमस्ते ॥ ९ ॥
आयुः परं वपुरभीष्टमतुल्यलक्ष्मीर्द्यौर्भूरसाः सकलयोगगुणास्त्रिवर्गः ।
ज्ञानं च केवलमनन्त भवन्ति तुष्टात् त्वत्तो नृणां किमुपसन्नजनाधिनाशः ॥ १० ॥

**श्रीशुक उवाच**

अदित्यैवं स्तुतो राजन् भगवान् पुष्करेक्षणः । क्षेत्रज्ञः सर्वभूतानामिति होवाच भारत ॥ ११ ॥

**श्रीभगवानुवाच**

देवमातर्भवत्या मे विज्ञातं चिरकाङ्क्षितम् । यत्सपत्नैर्हृतश्रीणां बाधितानां स्वधामतः ॥ १२ ॥
तान् विनिर्जित्य समरे दुर्मदानसुरर्षभान् । प्रतिलब्धजयश्रीभिः पुत्रैरिच्छस्युपासितुम् ॥ १३ ॥
इन्द्रज्येष्ठैश्च तनयैर्हतानां युधि विद्विषाम् । स्त्रियो रुदन्तीरासाद्य द्रष्टुमिच्छसि दुःखिताः ॥ १४ ॥
आत्मजान् सुसमृद्धांस्त्वं प्रत्याहृतयशःश्रियः । नाकपृष्ठमधिष्ठाय क्रीडतो द्रष्टुमिच्छसि ॥ १५ ॥

---

१. भगवन्तमधोक्षजम्

प्रायोऽधुना तेऽसुरयूथनाथा अवारणीया इति देवि मे मतिः ।
यत् तेऽनुकूलेश्वरविप्रगुप्ता न विक्रमस्तत्र सुखं ददाति ॥ १६ ॥
अथाप्युपायो मम देवि चिन्त्यः सन्तोषितस्य व्रतचर्यया ते ।
ममार्चनं नार्हति गन्तुमन्यथा श्रद्धानुरूपं फलहेतुकत्वात् ॥ १७ ॥
त्वयाऽर्चितश्चाहमपत्यगुप्तये पयोव्रतेनानुगुणं समीडितः ।
स्वांशेन पुत्रत्वमुपेत्य ते सुतान् पातास्मि मारीचतपस्यवस्थितः ॥ १८ ॥
उपधाव पतिं भद्रे प्रजापतिमकल्मषम् । मां च भावय तेऽपत्यमेवंरूपमवस्थितम् ॥ १९ ॥
नैतत् परस्मा आख्येयं देवगुह्यं कथञ्चन । सर्वं सम्पद्यते देवि देवगुह्यात् सुसंवृतात् ॥ २० ॥

**श्रीशुक उवाच**

एतावदुक्त्वा भगवान् तत्रैवान्तरधीयत । अदितिर्दुर्लभं लब्ध्वा हरेर्जन्मात्मनि प्रभोः ॥ २१ ॥
उपाधावत् पतिं भक्त्या परया कृतकृत्यवत् । स वै समाधियोगेन काश्यपस्तदबुद्ध्यत ॥ २२ ॥
प्रविष्टमात्मनि हरेरंशं ह्यवितथेक्षणः । सोऽदित्यां वीर्यमाधत्त तपसा चिरसम्भृतम्[1] ॥ २३ ॥
समाहितमना राजन् दारुण्यग्निं यथाऽनिलः । अदित्यां निहितं गर्भं भगवन्तं सनातनम् ।
हिरण्यगर्भो विज्ञाय समीडे गुह्यनामभिः ॥ २४ ॥

**ब्रह्मोवाच**

जयोरुगाय भगवन्नुरुक्रम नमोऽस्तु ते । नमो ब्रह्मण्यदेवाय त्रियुगाय नमोऽस्तु ते ॥ २५ ॥
नमोऽस्तु पृश्निगर्भाय वेदगर्भाय वेधसे । त्रिगुणाय त्रिपृष्ठाय शिपिविष्टाय विष्णवे ॥ २६ ॥
त्वमादिरन्तो भुवनस्य मध्यमनन्तशक्तिं पुरुषं यमाहुः ।
कालो भवानाक्षिपतीह[2] विश्वं स्रोतो यथाऽम्भःपतितं गभीरम् ॥ २७ ॥
त्वं वै प्रजानां स्थिरजङ्गमानां प्रजापतीनामसि सम्प्रविष्टः ।
दिवौकसां देव दिवश्च्युतानां परायणं नौरिव मज्जतोऽप्सु ॥ २८ ॥

**॥ इति श्रीमद्भागवते अष्टमस्कन्धे षोडशोऽध्यायः ॥**

---

१. चिरसञ्चितम्  २. आक्षिपतीश

श्रीशुक उवाच

इत्थं विरिञ्चस्तुतकर्मवीर्यः प्रादुर्बभूवामृतभूरदित्याम् ।
चतुर्भुजः शङ्खगदाब्जचक्रः पिशङ्गवासा नळिनायतेक्षणः ॥ १ ॥
श्यामावदातो झषराजकुण्डलत्विषोल्लसच्छ्रीवदनाम्बुजः पुमान् ।
श्रीवत्सवक्षा वलयाङ्गदोल्लसत्किरीटकाञ्चीगुणचारुनूपुरः ॥ २ ॥
मधुव्रतव्रातविघुष्टया स्वया विराजितश्रीवनमालया हरिः ।
प्रजापतेर्वेश्मतमः स्वरोचिषा विनाशयन् कण्ठनिविष्टकौस्तुभः ॥ ३ ॥
दिशः प्रसेदुः सलिलाशयास्तदा प्रजाः प्रहृष्टा ऋतवो गुणान्विताः ।
द्यौरन्तरिक्षं क्षितिरग्निजिह्वा गावो द्विजाः सञ्जहृषुर्नगाश्च ॥ ४ ॥
श्रोणायां श्रवणद्वादश्यां मुहूर्तेऽभिजिति प्रभुः । सर्वे नक्षत्रताराद्याश्चक्रुस्तज्जन्म दक्षिणम् ॥ ५ ॥
द्वादश्यां सविता तिष्ठन् मध्यन्दिनगतो नृप । विजया नाम सा प्रोक्ता यस्यां जन्म विदुर्हरेः ॥ ६ ॥
शङ्खदुन्दुभयो भेर्यो मृदङ्गपणवानकाः । चित्रवादित्रतूर्याणां निर्घोषस्तुमुलोऽभवत् ॥ ७ ॥
प्रीताश्चाप्सरसोऽनृत्यन् गन्धर्वप्रवरा जगुः । तुष्टुवुर्मुनयो देवा मनवः पितरोऽग्नयः ॥ ८ ॥
सिद्धविद्याधरगणाः सकिम्पुरुषकिन्नराः । चारणा यक्षरक्षांसि सुपर्णभुजगोत्तमाः ॥ ९ ॥
गायन्तोऽभिप्रशंसन्तो नृत्यन्तो विबुधा नराः । अदित्या आश्रमपदं कुसुमैः समवाकिरन् ॥ १० ॥
दृष्ट्वाऽदितिस्तं निजगर्भसम्भवं परं पुमांसं मुदमाप विस्मिता ।
गृहीतदेहं निजयोगमायया प्रजापतिश्चाह जयेति विस्मितः ॥ ११ ॥
यत् तद् वपुर्भाति विभूषणायुधैरव्यक्तवद् व्यक्तमधारयद्धरिः ।
बभूव तेनैव स वामनो वटुः सम्पश्यतोर्दिव्यगतिर्यथा नटः ॥ १२ ॥
तं वटुं वामनं दृष्ट्वा मोदमाना महर्षयः । कर्माणि कारयामासुः पुरस्कृत्य प्रजापतिम् ॥ १३ ॥
तस्योपनीयमानस्य सावित्रीं सविताऽब्रवीत् । बृहस्पतिर्ब्रह्मसूत्रं मेखलां कश्यपो ददौ[1] ॥ १४ ॥
ददौ कृष्णाजिनं भूमिर्दण्डं सोमो वनस्पतिः । कौपीनाच्छादनं माता द्यौश्छत्रं जगतः पतेः ॥ १५ ॥
कमण्डलुं वेदगर्भः कुशान् सप्तर्षयो ददुः । अक्षमालां महाराज सरस्वत्यक्षयात्मनः ॥ १६ ॥
तस्मा इत्युपनीताय यक्षराट् पात्रिकामदात् । भिक्षां भगवती साक्षादुमाऽदादम्बिका सती ॥ १७ ॥
स ब्रह्मवर्चसेनैव सभां सम्भावितो वटुः । ब्रह्मर्षिगणसञ्जुष्टामत्यरोचत मारिषः ॥ १८ ॥

---
१. काश्यपोऽददात् ❋

समिद्धमाहितं वह्निं कृत्वा परिसमूहनम् । परिस्तीर्य समभ्यर्च्य समिद्भिरजुहोद् विभुः[1] ॥ १९ ॥

श्रुत्वाऽश्वमेधैर्यजमानमूर्जितं बलिं भृगूणामुपकल्पितैस्ततः ।
जगाम तत्राखिलसारसम्भृतो भारेण गां सन्नमयन् पदेपदे ॥ २० ॥

तं नर्मदायास्तट उत्तरे बलेर्यज्ञर्त्विजस्ते भृगुवत्ससञ्ज्ञके ।
प्रवर्तयन्तो भृगवः क्रतूत्तमं व्यचक्षतारादुदितं यथा रविम् ॥ २१ ॥

तत्रर्त्विजो[2] यजमानः सदस्या हृतत्विषो वामनतेजसा नृप ।
सूर्यः किमायात्यथवा विभावसुः सनत्कुमारोऽथ दिदृक्षया क्रतोः ॥ २२ ॥

इत्थं सशिष्येषु भृगुष्वनेकधा वितर्क्यमाणो भगवान् स वामनः ।
सदण्डछत्रं सजलं कमण्डलुं विवेश बिभ्रद् हयमेधवाटम् ॥ २३ ॥

मौञ्ज्या मेखलयाऽऽवीतमुपवीताजिनोत्तरम् । जटिलं वामनं विप्रं मायामाणवकं हरिम् ॥ २४ ॥

प्रविष्टं वीक्ष्य भृगवः सशिष्यास्ते सहाग्निभिः । प्रत्यगृह्णन् समुत्थाय सङ्क्षिप्तास्तस्य तेजसा ॥ २५ ॥

यजमानः प्रमुदितो दर्शनीयं मनोरमम् । रूपानुरूपावयवं तस्मा आसनमाहरत् ॥ २६ ॥

स्वागतेनाभिनन्द्याथ पादौ भगवतो बलिः । अवनिज्यार्चयामास मुक्तसङ्गमनोरमौ ॥ २७ ॥

तत्पादशौचं कलिकल्मषापहं स धर्मविन्मूर्ध्न्यदधात्[3] सुमङ्गळम् ।
यद् देवदेवो गिरिशश्चन्द्रमौळिर्दधार मूर्ध्ना परया च भक्त्या ॥ २८ ॥

**बलिरुवाच**

स्वागतं ते नमस्तुभ्यं ब्रह्मन् किं करवाम ते । ब्रह्मर्षीणां तपः साक्षान्मन्ये त्वाऽऽर्य वपुर्धरम् ॥ २९ ॥

अद्य नः पितरस्तृप्ता अद्य नः पावितं कुलम् । अद्य स्विष्टः क्रतुरयं यद् भवानागतो गृहान् ॥ ३० ॥

अद्याग्नयो मे सुहुता यथाविधि द्विजात्मज त्वच्चरणावनेजनैः ।
हतांहसो वार्भिरियं च भूमिरह्वा पुनीता तनुभिः पदैस्तव ॥ ३१ ॥

यद् यद् वटो वाञ्छसि तत् प्रतीच्छ मे त्वामर्थिनं विप्रसुतानुतर्कये ।
गां काञ्चनं गुणवद् वाऽथ धाम मृष्टं तथाऽन्नमुत वा विप्र कन्याम्[4] ।
ग्रामान् समृद्धान् तुरगान् गजान् वा रथानथार्हत्तम सम्प्रतीच्छ ॥ ३२ ॥

**॥ इति श्रीमद्भागवतेऽष्टमस्कन्धे सप्तदशोऽध्यायः ॥**

---

१. द्विजः   २. तं ऋत्विजः ❃   ३. स्वधर्मवित् ❃   ४. उत ते विप्र कन्याम् ❃

श्रीशुक उवाच

इति वैरोचनेर्वाक्यं धर्मयुक्तं स सूनृतम्। निशम्य भगवान् प्रीतः प्रतिनन्द्येदमब्रवीत् ॥ १ ॥

श्रीभगवानुवाच

वचस्तवैतज्जनदेव सूनृतं कुलोचितं धर्मयुतं यशस्करम्।
यस्य प्रमाणं भृगवः साम्पराये पितामहः कुलवृद्धः प्रशान्तः ॥ २ ॥

न ह्येतस्मिन् कुले कश्चिन्निस्सत्वः कृपणः पुमान्। प्रत्याख्याता प्रतिश्रुत्य यो वाऽदाता द्विजातये ॥

न सन्ति तीर्थे युधि वाऽर्थिनाऽर्थिताः पराङ्मुखा ये त्वमनस्विनो नृप।
युष्मत्कुले यद् यशसाऽमलेन प्रह्लाद उद्भाति यथोडुपः खे ॥ ४ ॥

यतो जातो हिरण्याक्षश्चरन्नेक इमां महीम्। प्रतिवीरं दिग्विजये नाविन्दत गदायुधः ॥ ५ ॥

यं विनिर्जित्य कृच्छ्रेण विष्णुः क्ष्मोद्धार आगते। नात्मानं जयिनं मेने तद्वीर्यं भूर्यनुस्मरन् ॥ ६ ॥

निशम्य तद्वधं भ्राता हिरण्यकशिपुः पुरा। हन्तुं भ्रातृहणं क्रुद्धो जगाम निलयं हरेः ॥ ७ ॥

तमापतन्तमालोक्य शूलपाणिं कृतान्तवत्। चिन्तयामास कालज्ञो विष्णुर्मायाविनां वरः ॥ ८ ॥

यतो यतोऽहं तत्रासौ मृत्युः प्राणभृतामिव। अतोऽहमस्य हृदये[१] प्रवेक्ष्यामि पराग्दृशः ॥ ९ ॥

एवं स निश्चित्य रिपोः शरीरमाधावतो निर्विविशेऽसुरेन्द्र।
श्वासानिलान्तर्हितसूक्ष्मदेहस्तद्घ्राणरन्ध्रेण विपन्नचेताः[२] ॥ १० ॥

स तन्निकेतं परिमृश्य[३] शून्यमपश्यमानः कुपितो ननाद।
क्ष्मां द्यां दिशः खं विवरान् समुद्रान् विष्णुं विचिन्वन् न ददर्श वीरः ॥ ११ ॥

अपश्यन्निति होवाच मयाऽन्विष्टमिदं[४] जगत्। भ्रातृहा मे गतो नूनं यतो नावर्तते पुनः[५] ॥ १२ ॥

वैरानुबन्ध एतावानामृत्योरिह देहिनाम्। अज्ञानप्रभवो मन्युरहम्मानोपबृंहितः ॥ १३ ॥

पिता प्रह्लादपुत्रस्ते तद्विद्वान् द्विजवत्सलः। स्वमायुर्द्विजलिङ्गेभ्यो देवेभ्योऽदात् स याचितः ॥

भवानाचरिता धर्मानास्थितान् गृहमेधिभिः। ब्राह्मणैः पूर्वजैः शूरैरन्यैश्चोद्दामकीर्तिभिः ॥ १५ ॥

तस्मात् त्वत्तो महीमीषद् वृणेऽहं वरदर्षभ। पदानि त्रीणि दैत्येन्द्र सम्मितानि पदा मम ॥ १६ ॥

नान्यत् ते कामये राजन् वदान्याज्जगदीश्वरात्। नैनः प्राप्नोति वै विद्वान् यावदर्थपरिग्रहात् ॥ १७ ॥

---

१. हृदयम् २. विविग्नचेताः ३. परिसृत्य * ४. मया दृष्टमिदम् ५. पुमान्

**बलिरुवाच**

अहो ब्राह्मणदायाद वाचस्तेऽवृद्धसम्मताः। त्वं बालो बालिशमतिः स्वार्थं प्रत्यबुधो यथा॥ १८॥
मां वचोभिः समाराध्य लोकानामेकमीश्वरम्। पदत्रयं वृणीते योऽबुद्धिमानिव दाशुषम् ॥ १९॥
न पुमान् मामुपव्रज्य भूयो याचितुमर्हति। तस्माद् वृत्तिकरीं भूमिं वटो कामं प्रतीच्छ मे ॥ २०॥

**श्रीभगवानुवाच**

यावन्तो विषयाः प्रेष्ठास्त्रिलोक्यामजितेन्द्रियम्। न शक्नुवन्ति ते सर्वे प्रतिपूरयितुं नृप ॥ २१॥
त्रिभिः क्रमैरसन्तुष्टो द्वीपेनापि न पूर्यते। नववर्षसमेतेन सप्तद्वीपधरेच्छया ॥ २२॥
सप्तद्वीपाधिपतयो नृपा वैन्यगयादयः। अर्थैः कामैर्गता नान्तं तृष्णाया इति नः श्रुतम् ॥ २३॥
यदृच्छयोपपन्नेन सन्तुष्टो वर्तते सुखम्। नासन्तुष्टस्त्रिभिर्लोकैरजितात्मोपसादितैः ॥ २४॥
पुंसोऽयं संसृतेर्हेतुरसन्तोषोऽर्थकामयोः। यदृच्छयोपपन्नेन सन्तोषो मुक्तये स्मृतः ॥ २५॥
यदृच्छालाभतुष्टस्य तेजो विप्रस्य वर्धते। तत् प्रशाम्यत्यसन्तोषादम्भसेवाशुशुक्षणिः ॥ २६॥
तस्मात् त्रीणि पदान्येव वृणे त्वद् वरदर्षभात्। एतावतैव सिद्धोऽहं वित्तं यावत्प्रयोजनम् ॥ २७॥

**श्रीशुक उवाच**

इत्युक्तः स हसन्नाह वाञ्छितं प्रतिगृह्यताम्। वामनाय महीं दातुं जग्राह जलभाजनम् ॥ २८॥
विष्णवे क्ष्मां प्रदास्यन्तमुशना असुरेश्वरम्। जानंश्चिकीर्षितं विष्णोः शिष्यं प्राह विदां वरः॥ २९॥

**उशना उवाच**

एष वैरोचने साक्षाद् भगवान् विष्णुरव्ययः। कश्यपाददितेर्जातो देवानां कार्यसाधकः ॥ ३०॥
प्रतिश्रुतं त्वयैतस्मै यदनर्थमजानता। न साधु मन्ये दैत्यानां महानुपगतोऽनयः[१] ॥ ३१॥
एष ते स्थानमैश्वर्यं श्रियं तेजो यशः श्रुतम्। दास्यत्याच्छिद्य शक्राय मायामाणवको हरिः॥ ३२॥
त्रिभिः क्रमैरिमाँल्लोकान् विश्वकायः क्रमिष्यति। सर्वस्वं विष्णवे दत्वा मूढ वर्तिष्यसे कथम्॥ ३३॥
क्रमतो गां पदैकेन द्वितीयेन दिवं विभो। खं च कायेन महता तार्तीयस्य कुतो गतिः ॥ ३४॥
निष्ठान्तं नरकं मन्ये ह्यप्रदातुः प्रतिश्रुतम्। प्रतिश्रुतस्य योऽनीशः प्रतिपादयितुं भवान् ॥ ३५॥
न तद्दानं प्रशंसन्ति येन वृत्तिर्विपद्यते। दानं यज्ञस्तपः कर्म लोकवृत्तिमतो यतः ॥ ३६॥
धर्माय यशसेऽर्थाय कामाय स्वजनाय च। पञ्चधा विभजन् वित्तमिहामुत्र च मोदते ॥ ३७॥

---

१.महानुपगतो व्ययः ❋

अत्रापि बह्वृचैर्गीतं शृणुष्वासुरसत्तम । सत्यमोमिति यत् प्रोक्तं यन्नेत्याहानृतं हि तत् ॥ ३८ ॥
सत्यं पुष्पफलं विद्यादात्मवृक्षस्य जीवतः । वृक्षेऽजीवति तन्न स्यादनृतं मूलमात्मनः ॥ ३९ ॥
तद् यथा वृक्ष उन्मूलः शुष्यत्युद्वर्ततेऽचिरात् । एवं नष्टानृतः सद्य आत्मा शुष्येन्न संशयः ॥ ४० ॥
पराग् रिक्तमपूर्णं वा अक्षरं यत् तदोमिति । तद् यत् किञ्चोमिति ब्रूयान्न स रिष्येत वै पुमान् ॥ ४१ ॥
भिक्षवे सर्वमोङ्कुर्वन्नालं कामेभ्य आत्मनः । अथैतत् पूर्णमभ्यात्मं यच्च नेत्यनृतं वचः ॥ ४२ ॥
सर्वं नेत्यथितिं ब्रूयात् स दुष्कीर्तिः श्वसन्मृतः । स्त्रीषु नर्मे विवाहे च वृत्त्यर्थे प्राणसङ्कटे ।
गोब्राह्मणार्थे हिंसायां नानृतं स्याज्जुगुप्सितम् ॥ ४३ ॥

**॥ इति श्रीमद्भागवते अष्टमस्कन्धे अष्टादशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

बलिरेवं गृहपतिः कुलाचार्येण भाषितः । तूष्णीं भूत्वा क्षणं राजन्नुवाचावहितो गुरुम् ॥ १ ॥

**बलिरुवाच**

सत्यं भगवता प्रोक्तं धर्मोऽयं गृहमेधिनाम् । अर्थं कामं यशो वृत्तिं यो न बाधेत कर्हिचित् ॥ २ ॥
स चाहं वित्तलोभेन प्रत्याचक्षे कथं द्विजम् । प्रतिश्रुत्य ददानीति प्राह्लादिः कितवो यथा ॥ ३ ॥
*न ह्यसत्यात् परोऽधर्म इति होवाच भूरियम् । सर्वं वोढुमलं मन्ये ऋतेऽलीकपरं नरम् ॥ ४ ॥
*नाहं बिभेमि निरयान्नाधर्म्यादसुखार्णवात् । न स्थानच्यवनान्मृत्योर्यथा विप्रप्रलोभनात् ॥ ५ ॥
*यद् यद् हास्यति लोकेऽस्मिन् सम्परेतो धरादिकम् । तस्यात्यागे निमित्तं[1] किं विप्रस्तुष्येत तेन चेत् ॥
श्रेयः कुर्वन्ति भूतानां साधवो दुस्त्यजासुभिः । दध्यङ्शिबिप्रभृतयः को विकल्पो धरादिषु ॥ ७ ॥
यैरियं बुभुजे ब्रह्मन् दैत्येन्द्रैरनिवर्तिभिः । तेषां कालोऽग्रसील्लोकान् न यशोऽधिगतं भुवि ॥ ८ ॥
सुलभा युधि विप्रर्षे ह्यनिवृत्तास्तनुत्यजः । न तथा तीर्थ आयाते श्रद्धया ये धनत्यजः ॥ ९ ॥
मनस्विनः कारुणिकस्य शोभनं यदर्थकामोपनयेन दुर्गतिः ।
कुतः पुनर्ब्रह्मविदां भवादृशां ततो वटोरस्य ददामि वाञ्छितम् ॥ १० ॥
यजन्ति यज्ञैः क्रतुभिर्यमादृता भवन्त आम्नायविधानकोविदाः ।
स एष विष्णुर्वरदोऽस्तु वा परो दास्याम्यमुष्मै क्षितिमीप्सितां मुने ॥ ११ ॥

---

* चतुर्थपञ्चमश्लोकौ षष्ठस्य पूर्वार्धं च प्राचीनकोशेषु न सन्ति । विजयध्वजसम्मतं चेदम् । १. तस्यात्यागनिमित्तम्*

यद्यप्यसावधर्मेण मां बध्नीयादनागसम् । तथाप्येनं न हिंसिष्ये भीतं ब्रह्मतनुं रिपुम् ॥ १२ ॥
एष वा उत्तमश्लोको न जिहासति यद् यशः । हत्वा मैनां हरेद् युद्धे शयीत निहतो मया ॥ १३ ॥

**श्रीशुक उवाच**

एवमश्रद्धिनं शिष्यमनादेशकरं गुरुः । शशाप दैवप्रहितः सत्यसन्धं मनस्विनम् ॥ १४ ॥
दृढं पण्डितमान्यज्ञ स्तब्धोऽस्यस्मदुपेक्षया । मच्छासनातिगो यस्त्वमचिराद् भ्रश्यसे श्रियः ॥ १५ ॥
एवं शप्तः स्वगुरुणा सत्यान्न चलितो महान् । वामनाय ददावेतामर्चित्वोदकपूर्वकम् ॥ १६ ॥
विन्ध्यावळिस्तदागत्य पत्नी जालकमालिनी । आनिन्ये कलशं हैममवनेजन्यपां भृतम् ॥ १७ ॥
यजमानः स्वयं तस्य श्रीमत्पादयुगं मुदा । अवनिज्यावहन्मूर्ध्नि तदपो विश्वपावनीः ॥ १८ ॥

तदाऽसुरेन्द्रं दिवि देवतागणा गन्धर्वविद्याधरसिद्धचारणाः ।
तत्कर्म सर्वेऽभिगृणन्त आर्यं प्रसूनवर्षैः ववृषुर्मुदाऽन्विताः ॥ १९ ॥
नेदुर्मुहुर्दुन्दुभयः सहस्रशो गन्धर्वकिम्पूरुषकिन्नरा जगुः ।
मनस्विनाऽनेन कृतं सुदुष्करं विद्वानदाद् यद् रिपवे जगत्त्रयम् ॥ २० ॥
तद् वामनं रूपमवर्धताद्भुतं हरेरनन्तस्य गुणत्रयात्मकम् ।
भूः खं दिशो द्यौर्विवराः पयोधयस्तिर्यङ्नृदेवा ऋषयो यदासन् ॥ २१ ॥
काये बलिस्तस्य महाविभूतेः सहर्त्विगाचार्यसदस्य एतत् ।
ददर्श विश्वं त्रिगुणं गुणात्मके भूतेन्द्रियार्थाशयजीवयुक्तम् ॥ २२ ॥
रसामचष्टाङ्घ्रितळेऽथ पादयोः महीं महीध्रान् पुरुषस्य जङ्घयोः ।
पतत्रिणो जानुनि विश्वमूर्तेरूर्वोर्गणं मरुतामिन्द्रसेनः ॥ २३ ॥
सन्ध्यां विभोर्वाससि गुह्य ऐक्षत् प्रजापतिं[1] जघने स्वात्ममुख्यम्[2] ।
नाभ्यां नभः कुक्षिषु सप्तसिन्धूनुरुक्रमस्योरसि ऋक्षमालाम्[3] ॥ २४ ॥
हृद्यङ्ग धर्मं स्तनयोर्मुरारेर्ऋतं च सत्यं च मनस्यथेन्दुम् ।
श्रियं च वक्षस्यरविन्दहस्तां कण्ठे च सामानि समस्तरेफान्[4] ॥ २५ ॥
इन्द्रप्रधानानमरान् भुजेषु तत्कर्णयोः ककुभो द्यां च मूर्ध्नि ।
केशेषु मेघान् श्वसनं नासिकायामक्ष्णोश्च सूर्यं वदने च वह्निम् ॥ २६ ॥

---

१. प्रजापतीन् २. स्वात्ममुख्यान् ३.चर्षिमालाम् ❋ ४. समस्तरेभान् ❋

वाण्यां च छन्दांसि रसे जलेशं भ्रुवोर्निषेधं च विधिं च पक्ष्मसु ।
अहश्च रात्रिं च परस्य पुंसो मन्युं ललाटेऽधर एव लोभम् ॥ २७ ॥
स्पर्शे च कामं नृप रेतस्यम्भः पृष्ठे त्वधर्मं क्रमणेषु यज्ञम् ।
छायासु मृत्युं हसिते च मायां तनूरुहेष्वौषधिवीरुधश्च ॥ २८ ॥
नदीश्च नाडीषु शिला नखेषु बुद्धावजं देवगणानृषींश्च ।
प्राणेषु गात्रे स्थिरजङ्गमानि सर्वाणि भूतानि समस्तलोकान्[१] ॥ २९ ॥
सर्वात्मनीदं भुवनं निरीक्ष्य सर्वेऽसुराः कश्मलमापुरङ्ग ।
सुदर्शनं चक्रमसँह्यतेजो धनुश्च शार्ङ्गं स्तनयित्नुघोषम् ॥ ३० ॥
पर्जन्यघोषो जलजः पाञ्चजन्यः कौमोदकी विष्णुगदा तरस्विनी ।
वैद्याधरोऽसिः शतचन्द्रयुक्तस्तूणोत्तमावक्षयसायकौ च ।
सुपर्णमुख्या उपतस्थुरीशं स्वपार्षदमुख्याः सहलोकपालाः ॥ ३१ ॥
स्फुरत्किरीटाङ्गदमीनकुण्डलश्रीवत्सरत्नोत्तममेखलाम्बरैः[२] ।
मधुव्रतस्रग्वनमालया वृतो रराज राजन् भगवानुरुक्रमः ॥ ३२ ॥
क्षितिं पदैकेन बलेर्विचक्रमे नभः शरीरेण दिशश्च बाहुभिः ।
पदं द्वितीयं क्रमतस्त्रिविष्टपं न वै तृतीयस्य तदीयमण्वपि ।
उरुक्रमस्याङ्घ्रिरुपर्यधो दिवो महर्जनाभ्यां तपसः परं गतः ॥ ३३ ॥

**॥ इति श्रीमद्भागवते अष्टमस्कन्धे एकोनविंशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

स तं समीक्ष्याब्जभवो[३] नखेन्दुभिर्हतस्वधामद्युतिरावृतो[४]ऽभ्यगात् ।
मरीचिमिश्रा ऋषयो बृहद्व्रताः सनन्दनाद्या नरदेव योगिनः ॥ १ ॥
वेदोपवेदा निगमा नयान्वितास्तर्केतिहासाङ्गपुराणसंहिताः ।
ये वा परे योगसमीरदीपितज्ञानाग्निना रन्धितकर्मकल्मषाः ॥ २ ॥

---

१. क्षणार्धमात्रेण विवृद्धमूर्तेः २. ....अङ्गदचारुकुण्डल.... ❋ ३. स तन्निरीक्ष्याब्जभवः ❋
४. हृतस्वधामद्युतिः ❋

ववन्दिरे यत्स्मरणानुभावतः स्वायम्भुवं धाम गता अकर्मकम् ।
अथाङ्घ्रये प्रोन्नमिताय विष्णोरुपाहरत् पद्मभवोऽर्हणादिकम् ॥ ३ ॥
अभ्यर्च्य भक्त्याऽभ्यगृणाच्छुचिश्रवा यन्नाभिपङ्केरुहसम्भवः स्वयम् ॥ ४ ॥
धातुः कमण्डलुजलं तदुरुक्रमस्य पादावनेजनपवित्रतया नरेन्द्र ।
स्वर्धुन्यभून्नभसि सा पतती निमार्ष्टि[1] लोकत्रयं भगवतो विशदेव कीर्तिः ॥ ५ ॥

ब्रह्मादयो लोकनाथाः स्वनाथाय समादृताः । सानुगा बलिमाजह्रुरसङ्क्षिप्तात्मभूतये ॥ ६ ॥
तोयैः समर्हणैः स्रग्भिर्दिव्यगन्धानुलेपनैः । धूपैर्दीपैः सुरभिभिर्लाजाक्षतफलाङ्कुरैः ॥ ७ ॥
स्तवनैर्जयशब्दैश्च कीर्तिभिर्महिमाङ्कितैः । नृत्तवादित्रगीतैश्च शङ्खदुन्दुभिनिस्वनैः ॥ ८ ॥
जाम्बवान् ऋक्षराजस्तु[2] भेरीशब्दैर्मनोजवः । विजयं दिक्षु सर्वासु महोत्सवमघोषयत् ॥ ९ ॥
महीं सर्वां हृतां दृष्ट्वा त्रिपदव्याजयाञ्चया । ऊचुः स्वभर्तुरसुरा दीक्षितस्यात्यमर्षिताः ॥ १० ॥
न वा अयं ब्रह्मबन्धुर्विष्णुर्मायाविनां वरः । द्विजरूपप्रतिच्छन्नो देवकार्यं चिकीर्षति ॥ ११ ॥
अनेन याचमानेन शत्रुणा वटुरूपिणा । सर्वस्वं नो हृतं भर्तुर्न्यस्तदण्डस्य बर्हिषि ॥ १२ ॥
सत्यव्रतस्य सततं दीक्षितस्य विशेषतः । नानृतं भाषितुं शक्यं ब्रह्मण्यस्य दयावतः ॥ १३ ॥
तस्मादस्य वधो धर्मो भर्तुः शुश्रूषणं च नः । इत्यायुधानि जगृहुर्बलेरनुचरासुराः ॥ १४ ॥
ते सर्वे वामनं हन्तुं शूलपट्टिसपाणयः[3] । अनिच्छतो बले राजन् प्राद्रवन् जातमन्यवः ॥ १५ ॥
तानभिद्रवतो दृष्ट्वा दितिजानीकपान् नृप । प्रहस्यानुचरा विष्णोः प्रत्यषेधन्नुदायुधाः ॥ १६ ॥
नन्दः सुनन्दोऽथ जयो विजयः प्रबलो बलः । कुमुदः कुमुदाक्षश्च विष्वक्सेनः पतत्रिराट् ॥ १७ ॥
जयन्तः श्रुतदेवश्च पुष्पदन्तोऽथ सात्वतः । सर्वे नागायुतप्राणाः स्वांस्वां ते जघ्नुरासुरीम् ॥ १८ ॥
हन्यमानान् स्वकान् दृष्ट्वा पुरुषानुचरैर्बलिः । वारयामास संरब्धान् काव्यशापमनुस्मरन् ॥ १९ ॥
हे विप्रचित्ते हे राहो हे हेते श्रूयतां वचः । मा युध्यत निवर्तध्वं न नः कालोऽयमर्थकृत् ॥ २० ॥
यः प्रभुः सर्वभूतानां सुखदुःखोपपत्तये । तं नातिवर्तितुं दैत्याः पौरुषैरीश्वरः पुमान् ॥ २१ ॥
यो नो भवाय प्रागासीदभवाय दिवौकसाम् । स एष भगवानद्य वर्तते तद्विपर्ययम् ॥ २२ ॥
बलेन सचिवैर्बुद्ध्या दुर्गमन्त्रौषधादिभिः । सामादिभिरुपायैश्च कालं नात्येति वै जनः ॥ २३ ॥

---

१. पतिता निमार्ष्टि ❋ २. ऋक्षाधिपतिः ❋ ३. शूलपट्टसपाणयः❋/शूलपट्टिशपाणयः

भवद्भिर्निर्जिता ह्येते बहुशोऽनुचरा हरेः । दैवेनर्द्धास्त एवाद्य युधि जित्वा नदन्ति वः[१] ॥ २४ ॥
एतान् वयं विजेष्यामो यदि दैवं प्रसीदति । तस्मात् कालं प्रतीक्षध्वं यो नोऽर्थत्वाय कल्पते॥ २५ ॥

श्रीशुक उवाच

पत्युर्निगदितं श्रुत्वा दैत्यदानवयूथपाः । रसां निर्विविशू राजन् विष्णुपार्षदार्दिताः[२] ॥ २६ ॥
अथ तार्क्ष्यसुतो ज्ञात्वा विराट् प्रभुचिकीर्षितम् । बबन्ध वारुणैः पाशैर्बलिं सूत्येऽहनि क्रतोः[३] ॥
हाहाकारो महानासीद् रोदस्योः सर्वतो दिशम् । निगृह्यमाणेऽसुरपतौ विष्णुना प्रभविष्णुना ॥
तं बद्धं वारुणैः पाशैर्भगवानाह वामनः । नष्टश्रियं स्थिरप्रज्ञमुदारयशसं नृप ॥ २९ ॥

वामन उवाच

पदानि त्रीणि दत्तानि भूमेर्मह्यं त्वयाऽसुर । द्वाभ्यां क्रान्ता मही सर्वा तृतीयमुपकल्पय ॥ ३० ॥
यावत् तपत्यसौ गोभिर्यावदिन्दुः सहोडुभिः । यावद् वर्षति पर्जन्यस्तावती[४] भूरियं तव ॥ ३१ ॥
पदैकेन मया क्रान्तो भूर्लोको विवरैः सह । स्वर्लोकस्तु द्वितीयेन पश्यतस्ते मयाऽऽत्मना[५]॥ ३२ ॥
प्रतिश्रुतमदातुस्ते निरये वास इष्यते । विशस्व निरयं तस्माद् गुरुणा चानुमोदितः ॥ ३३ ॥
विप्राय प्रति यो श्रुत्य न तदर्पयते क्वचित् । मृषा मनोरथस्तस्य दूरं स्वर्गात् पतत्यधः ॥ ३४ ॥
विप्रलब्धो ददानीति त्वयाऽहं चाढ्यमानिना[६] । तद् व्यलीकफलं भुङ्क्ष्व निरयं कतिचित् समाः* ॥

**॥ इति श्रीमद्भागवते अष्टमस्कन्धे विंशोऽध्यायः ॥**

---

श्रीशुक उवाच

एवं विप्रकृतो राजन् बलिर्भगवताऽसुरः । भिद्यमानोऽप्यभिन्नात्मा प्रत्याहाविक्लबं वचः ॥ १ ॥

बलिरुवाच

यद्युत्तमश्लोक भवान् ममेरितं वचो व्यलीकं सुरर्षभ मन्यसे ।
करोम्यृतं तन्न भवेत् प्रलम्भनं पदं तृतीयं कुरु शीर्ष्णि मे निजम् ॥ २ ॥
बिभेमि नाहं निरयात् पदच्युतो न पाशबन्धाद् व्यसनाद् दुरत्ययात् ।
नैवार्थकृच्छ्राद् भवतो विनिग्रहादसाधुवादाद् भृशमुद्विजे यथा ॥ ३ ॥

---

१. नः २. विष्णुपार्षदताडिताः ३. सौत्येऽहनि क्रतोः ४. यावदग्निः सपर्जन्यस्तावती ❋
५. खमात्मना ❋ ६. चाद्य मानिना ❋ *विंशाध्यायस्य प्राचीनकोशेष्वत्र न समाप्तिः । उत्तरत्रानुवर्तते सः।

पुंसां श्लाघ्यतमं मन्ये दण्डमर्हत्तमार्पितम् । यं न माता पिता भ्राता सुहृदश्चादिशन्ति हि ॥ ४ ॥
त्वं नूनमसुराणां नः पारोक्ष्यं परमो गुरुः[१] । यो नोऽनेकमदान्धानां तद्भ्रंशं चक्षुरादिशत् ॥ ५ ॥
यस्मिन् वैरानुबन्धेन रूढेन विबुधेतराः । बहवो लेभिरे सिद्धिं यामिहैकान्तयोगिनः ॥ ६ ॥
तेनाहं निगृहीतोऽपि भवता भूरिकर्मणा । बद्धश्च वारुणैः पाशैर्नातिव्रीडे न च व्यथे[२] ॥ ७ ॥

पितामहो मे भवदीयसम्मतः प्रह्लाद आविष्कृतसाधुवादः ।
भवद्विपक्षेण विचित्रवैशसं सम्प्रापितस्त्वत्परमः स्वपित्रा ॥ ८ ॥
किमात्मनाऽनेन जहाति यो मुदं किं रिक्थहारैः स्वजनाख्यदस्युभिः ।
किं जायया संसृतिहेतुभूतया मर्त्यस्य गेहैर्यदिहायुषो व्ययः ॥ ९ ॥
इत्थं विनिश्चित्य पितामहो महानगाधबोधो भवतः पादपद्मम् ।
ध्रुवं प्रपेदे ह्यकुतोभयं जनाद् भीतः स्वपक्षक्षपणस्य सत्तम ॥ १० ॥
अथाहमप्यात्मरिपोस्तवान्तिकं दैवेन नीतः प्रसभं त्याजितश्रीः ।
इदं कृतान्तान्तिकवर्ति जीवितं ययाऽध्रुवं[३] स्तब्धमतिर्न बुद्ध्यते ॥ ११ ॥

**श्रीशुक उवाच**

तस्येत्थं भाषमाणस्य प्रह्लादो भगवत्प्रियः । आजगाम कुरुश्रेष्ठ राकापतिरिवोत्थितः ॥ १२ ॥

तमिन्द्रसेनः स्वपितामहं श्रिया विराजमानं नळिनायतेक्षणम् ।
प्रांशुं पिशङ्गाम्बरमञ्जनत्विषं प्रलम्बबाहुं सुभगं समैक्षत ॥ १३ ॥
तस्मै बलिर्वारुणपाशयन्त्रितः समर्हणं नोपजहार पूर्ववत् ।
ननाम मूर्ध्नाऽश्रुविलोललोचनः सव्रीळनीचीनमुखो बभूव ह ॥ १४ ॥
स तत्र हासीनमुदीक्ष्य सत्पतिं सुनन्दनन्दाद्यनुगैरुपासितम् ।
उपेत्य भूमौ तरसा महामना ननाम मूर्ध्ना पुळकाश्रुविक्लबः ॥ १५ ॥

**प्रह्लाद उवाच**

त्वयैव दत्तं पदमैन्द्रमर्चितं[४] हृतं तदेवाद्य[५] तथैव शोभनम् ।
मन्ये महानस्य कृतो ह्यनुग्रहो विभ्रंशितो यच्छ्रिय आत्ममोहनात् ॥ १६ ॥

---

१. पारोक्ष्येण परो गुरुः❋ २. नानुव्रीडे/ननु व्रीडे न विव्यथे ३. यथाऽध्रुवम्❋
४. ऐन्द्रमूर्जितम् ५. त्वयैवाद्य

यया हि विद्वानपि मुह्यते जनस्तत्कोऽभिचष्टे गतिमात्मनो यथा ।
तस्मै नमस्ते जगदीश्वराय नारायणायाखिललोकसाक्षिणे ॥ १७ ॥

**श्रीशुक उवाच**

बद्धं वीक्ष्य पतिं साध्वी तत्पत्नी भयविह्वला । प्राञ्जलिः प्रणतोपेन्द्रं बभाषेऽश्रुमुखी[१] नृप ॥ १८ ॥

**विन्ध्यावलिरुवाच**

क्रीडार्थमात्मन इदं त्रिजगत् कृतं ते स्वाम्यं तु तत्र कुधियोऽपर ईश कुर्युः[२] ।
कर्तुः प्रभोस्तव किमस्य त आवहन्ति त्यक्तह्रियस्त्वदवरोपितकर्तृवादाः ॥ १९ ॥

**श्रीशुक उवाच**

तस्यानुशृण्वतो राजन् प्रह्लादस्य कृताञ्जलेः । हिरण्यगर्भो भगवानुवाच मधुसूदनम् ॥ २० ॥

**ब्रह्मोवाच**

भूतभावन भूतेश देवदेव जगन्मय । मुञ्चैनं हृतसर्वस्वं नायमर्हति निग्रहम् ॥ २१ ॥
कृत्स्ना तेऽनेन दत्ता भूर्लोकाः कर्मार्जिताश्च ये । निवेदितं च सर्वस्वमात्मा चाविक्लबया[३] धिया ॥
यत्पादयोरशठधीः सलिलं प्रदाय दूर्वाङ्कुरैरपि विधाय सतीं सपर्याम् ।
दिव्युत्तमां गतिमसौ भजते त्रिलोकीं दत्वा नविक्लबमनाः कथमार्तिमृच्छेत् ॥ २३ ॥

**श्रीभगवानुवाच**

ब्रह्मन् यमनुगृह्णामि तद्वित्तं विधुनोम्यहम् । यन्मदः पुरुषः स्तब्धो लोकं मां चावमन्यते ॥ २४ ॥
यदा कदाचिज्जीवात्मा संसरन् निजकर्मभिः[४] । नानायोनिष्वनीशोऽयं पौरुषीं गतिमाव्रजेत्॥ २५ ॥
जन्मकर्मवयोरूपविद्यैश्वर्यधनादिभिः । यद्यस्य न भवेत् स्तम्भस्तत्रायं मदनुग्रहः ॥ २६ ॥
मानस्तम्भनिमित्तानां जन्मादीनां समन्ततः । सर्वश्रेयःप्रतीपानां हन्त मुह्येन्न मत्परः ॥ २७ ॥
एष दानवदैत्यानामग्रणीः कीर्तिवर्धनः । अजैषीदजयां मायां सीदन्नपि न मुह्यति ॥ २८ ॥
क्षीणो[५] विभ्रंशितः स्थानात् क्षिप्तो बद्धश्च शत्रुभिः । ज्ञातिभिश्च परित्यक्तो यातनामनुयापितः ॥
गुरुणा भत्सितः शप्तो जहौ सत्यं न सुव्रतः । छलैरुक्तो मया धर्मो नायं त्यजति सत्यवाक्[६] ॥ ३० ॥

---

१.बभाषेऽवाङ्मुखी २. अपरमीश कुर्युः ❋ ३. आत्माऽविक्लवया
४. संसरन्निह कर्मभिः ❋ ५. क्षणात् ६. सत्पथम् ❋

एवं मे प्रापितः स्थानं दुष्प्रापममरैरपि । सावर्णेरन्तरस्यायं भवितेन्द्रो मदाश्रयः ॥ ३१ ॥

तावत् सुतळमध्यास्तां विश्वकर्मविनिर्मितम् । यत्राधयो व्याधयश्च क्लमस्तन्द्री पराभवः[१] ।
नोपसर्गा निवसतां सम्भवन्ति ममेच्छया ॥ ३२ ॥

इन्द्रसेन महाराज याहि भो भद्रमस्तु ते । सुतळं स्वर्गिभिः प्रार्थ्यं ज्ञातिभिः परिवारितः ॥ ३३ ॥

न त्वामभिभविष्यन्ति लोकेशाः किमुतापरे । त्वच्छासनातिगान् दैत्यान् चक्रं मे सूदयिष्यति ॥

रक्षिष्ये सर्वतोऽहं त्वां सानुगं सपरिच्छदम् । सदा सन्निहितं वीर तत्र मां द्रक्ष्यते भवान् ॥ ३५ ॥

तत्र दानवदैत्यानां सङ्गात् ते भाव आसुरः। दृष्ट्वा मदनुभावं वै सद्यः कुण्ठोऽवनङ्क्ष्यति[२] ॥ ३६ ॥

**॥ इति श्रीमद्भागवते अष्टमस्कन्धे एकविंशोऽध्यायः* ॥**

---

**श्रीशुक उवाच**

इत्युक्तवन्तं पुरुषं सनातनं महानुभावोऽखिलसाधुसम्मतः ।
बद्धाञ्जलिर्बाष्पकळाकुलेक्षणो भक्त्युत्कलो[३] गद्गदया गिराऽब्रवीत् ॥ १ ॥

**बलिरुवाच**

अहो प्रसादोऽस्य कृतः समुद्यतः प्रपन्नभक्तार्थविधौ समाहितः ।
यल्लोकपालैस्तदनुग्रहोऽमरैरलब्धपूर्वोऽपशदेऽसुरेऽर्पितः ॥ २ ॥

**श्रीशुक उवाच**

इत्युक्त्वा हरिमानम्य ब्रह्माणं सभवं ततः । विवेश सुतळं प्रीतो बलिर्मुक्तः सहासुरैः ॥ ३ ॥

एवमिन्द्राय भगवान् प्रीत्याऽऽनीय त्रिविष्टपम् । पूरयित्वाऽदितेः काममशासत् सकलं जगत्॥ ४ ॥

लब्धप्रसादनिर्मुक्तं[४] पौत्रं वंशधरं बलिम् । निशाम्य भक्तिप्रवणं[५] प्रह्लाद इदमब्रवीत् ॥ ५ ॥

**प्रह्लाद उवाच**

नेमं विरिञ्चो लभते प्रसादं न श्रीर्न शर्वः किमुतापरे ते ।
यन्नोऽसुराणामसि दुर्गपालो विश्वाभिवन्द्यैरभिवन्दिताङ्घ्रिः ॥ ६ ॥

---

१. क्लमस्तम्भपराभवाः ❋ २. कुण्ठो विनङ्क्ष्यति ❋ ३. भक्त्युज्ज्वलः ❋

* प्राचीनकोशेष्वत्र विंशाध्यायसमाप्तिः । ४. लब्धप्रसादं निर्मुक्तम् ❋ ५. भक्तिप्रवणः

यत्पादपद्ममकरन्दनिषेवणेन ब्रह्मादयः शरणदाश्नुवते विभूतीः[1] ।
कस्माद् वयं कुसृतयः खलयोनयस्ते दाक्षिण्यदृष्टिपदवीं भगवन्[2] प्रणीताः ॥ ७ ॥
चित्रं तवेहितमहोऽमितयोगमायालीलाविसृष्टभुवनस्य[3] विशारदस्य ।
सर्वात्मनः समदृशो विषमस्वभावो भक्तप्रियो यदसि कल्पतरुस्वभावः ॥ ८ ॥

**श्रीभगवानुवाच**

वत्स प्रह्लाद भद्रं ते प्रयाहि सुतळालयम् । मोदमानः स्वपौत्रेण ज्ञातीनां सुखमावह ॥ ९ ॥
नित्यं द्रष्टासि मां तत्र गदापाणिमवस्थितम् । मद्दर्शनमहाह्लादध्वस्तकर्मनिबन्धनः ॥ १० ॥

**श्रीशुक उवाच**

आज्ञां भगवतो राजन् प्रह्लादो बलिना सह । बाढमित्यमलप्रज्ञो मूध्न्यार्धाय कृताञ्जलिः ॥ ११ ॥
परिक्रम्यादिपुरुषं सर्वासुरचमूपतिः । प्रणतस्तदनुज्ञातः प्रविवेश महाबिलम् ॥ १२ ॥
अथाहोशनसं राजन् हरिर्नारायणोऽन्तिके । आसीनमृत्विजां मध्ये सदसि ब्रह्मवादिनाम् ॥ १३ ॥
ब्रह्मन् सन्तनु शिष्यस्य कर्मच्छिद्रं वितन्वतः । यत् तत् कर्म सुवैषम्यं ब्रह्मदृष्टं समं भवेत् ॥ १४ ॥

**शुक्र उवाच**

कुतस्तत्कर्मवैषम्यं यस्य कर्मेश्वरो भवान् । यज्ञेश्वरो यज्ञपुरुषः सर्वभावेन पूजितः ॥ १५ ॥
मन्त्रतस्तन्त्रतश्छिद्रं देशकालार्हवस्तुतः । सर्वं करोति निश्छिद्रमनुसङ्कीर्तनं तव ॥ १६ ॥
तथापि वदतो भूमन् करिष्याम्यनुशासनम् । एतच्छ्रेयः परं पुंसां यत् तवाज्ञानुपालनम् ॥ १७ ॥
प्रतिनन्ध हरेराज्ञामुशना भगवानिति । यज्ञच्छिद्रं समतनोद् बलेर्विप्रर्षिभिः सह ॥ १८ ॥
एवं बलेर्महीं राजन् भिक्षित्वा वामनो हरिः । ददौ भ्रात्रे महेन्द्राय त्रिदिवं यत् परैर्हृतम् ॥ १९ ॥
प्रजापतिपतिर्ब्रह्मा देवर्षिपितृभूमिपैः । दक्षभृग्वङ्गिरोमुख्यैः कुमारेण भवेन च ॥ २० ॥
कश्यपस्यादितेः प्रीत्यै सर्वभूताभयाय च[4] । लोकानां लोकपालानामकरोद् वामनं पतिम् ॥ २१ ॥
वेदानां सर्वदेवानां धर्मस्य यशसः श्रियः । मङ्गळानां व्रतानां च कल्यं स्वर्गापवर्गयोः ॥ २२ ॥
उपेन्द्रं कल्पयाञ्चक्र इति सर्वविभूतये[5] । तदा सर्वाणि भूतानि भृशं मुमुदिरे नृप ॥ २३ ॥
ततस्त्विन्द्रः पुरस्कृत्य देवयानेन वामनम् । लोकपालैर्दिवं निन्ये ब्रह्मणा चानुमोदितः ॥ २४ ॥

---

१. अश्नुवतेऽनुभूतीः २. भवतः ३. ....लीलावसृष्टभुवनस्य ❋
४. सर्वभूतभवाय च ५. चक्रे पतिं सर्वविभूतये

प्राप्य त्रिभुवनं चेन्द्र उपेन्द्रभुजपालितम् । श्रिया परमया जुष्टो मुमुदे गतसाध्वसः ॥ २५ ॥
ब्रह्मा शर्वः कुमारश्च भृग्वाद्या मुनयो नृप । पितरः सर्वभूतानि सिद्धा वैमानिकाश्च ये ॥ २६ ॥
सुमहत् कर्म तद् विष्णोर्गायन्तः परमाद्भुतम् । धिष्ण्यानि स्वानि ते जग्मुरदितिं च शशंसिरे ॥ २७ ॥
सर्वमेतन्मयाख्यातं भवतः कुलनन्दन । उरुक्रमस्य चरितं श्रोतॄणामघमोचनम् ॥ २८ ॥
पारं महिम्न उरुविक्रमतो मुरारेर्यः पार्थिवानि विममेऽपि रजांसि मर्त्यः ।
किं जायमान उत जात उपैति मर्त्य इत्याह मन्त्रदृगृषिः पुरुषस्य यस्य ॥ २९ ॥
य इदं देवदेवस्य हरेरद्भुतकर्मणः । अवतारानुचरितं शृण्वन् याति परां गतिम् ॥ ३० ॥
क्रियमाणे कर्मणीदं दैवे पित्र्येऽथ मानुषे । यत्रयत्रानुकीर्त्येत तत् तेषां सुकृतं विदुः ॥ ३१ ॥

**॥ इति श्रीमद्भागवते अष्टमस्कन्धे द्वाविंशोऽध्यायः* ॥**

---

## राजोवाच

भगवन् श्रोतुमिच्छामि हरेरद्भुतकर्मणः । अवतारकथामन्यां[१] मायामत्स्यविडम्बनाम् ॥ १ ॥
यदर्थमदधाद् रूपं मात्स्यं लोकजुगुप्सितम् । तमःप्रकृति दुर्मर्षं कर्मग्रस्त इवेश्वरः ॥ २ ॥
एतन्नो भगवन् सर्वं यथावद् वक्तुमर्हसि । उत्तमश्लोकचरितं सर्वलोकसुखावहम् ॥ ३ ॥

## सूत उवाच

इत्युक्तो विष्णुरातेन भगवान् बादरायणिः । उवाच चरितं विष्णोर्मत्स्यरूपेण यत् कृतम् ॥ ४ ॥

## श्रीशुक उवाच

गोविप्रसुरसाधूनां छन्दसामपि चेश्वरः । रक्षामिच्छंस्तनूर्धत्ते धर्मस्यार्थस्य चैव हि ॥ ५ ॥
उच्चावचेषु भूतेषु चरन् वायुरिवेश्वरः । नोच्चावचत्वं भजते निर्गुणत्वाद् धियो गुणैः ॥ ६ ॥
आसीदतीतकल्पान्ते ब्राह्मो नैमित्तिको लयः । समुद्रोपप्लुतास्तत्र[२] लोका भूरादयोऽनघ[३] ॥ ७ ॥
कालेनागतनिद्रस्य धातुः शिशयिषोर्जले[४] । मुखतो निःसृतान् वेदान् हयग्रीवोऽन्तिकेऽहरत्॥ ८ ॥
ज्ञात्वा तद् दानवेन्द्रस्य हयग्रीवस्य चेष्टितम् । दधार शफरीरूपं भगवान् हरिरीश्वरः ॥ ९ ॥
तत्र राजऋषिः कश्चिन्नाम्ना सत्यव्रतो महान् । नारायणपरोऽतप्यत् तपस्तत्सलिलाशये[५] ॥ १० ॥

---

* प्राचीनकोशेष्वत्र एकविंशाध्यायसमाप्तिः । १. ...कथामाद्याम् २. समुद्रावप्लुतास्तत्र ❋
३. भूरादयो नृप ❋ ४.शिशयिषोर्बली ५. तपः स सलिलाशनः ❋

योऽसावस्मिन् महाकल्पे तनयः स विवस्वतः । श्राद्धदेव इति ख्यातो मनुत्वे हरिणाऽर्पितः ॥ ११ ॥
एकदा कृतमालायां कुर्वतो जलतर्पणम् । तस्याञ्जल्युदके काचित् शफर्येकाऽभ्यपद्यत ॥ १२ ॥
सत्यव्रतोऽञ्जलिगतां सह तोयेन भारत । उत्ससर्ज नदीतोये शफरीं द्रमिळेश्वरः ॥ १३ ॥
तमाह साऽतिकरुणं महाकारुणिकं नृपम् । यादोभ्यो ज्ञातिघातिभ्यो दीनां मां दीनवत्सल ।
कथं विसृजसे राजन् भीतामस्मिन् सरिज्जले ॥ १४ ॥

**श्रीशुक उवाच**

तमात्मनोऽनुग्रहार्थं[१] प्रीत्या मत्स्यवपुर्धरम् । अजानन् रक्षणार्थाय शफर्याः स मनो दधे ॥ १५ ॥
तस्या दीनतरं वाक्यमाश्रुत्य स महीपतिः । कलशाप्सु निधायैनां दयालुर्निन्य आश्रमम् ॥ १६ ॥
सा तु तत्रैकरात्रेण वर्द्धमाना कमण्डलौ । अलब्धात्मावकाशं वा इदमाह महीपतिम् ॥ १७ ॥
नाहं कमण्डलावस्मिन् कृच्छ्रं वस्तुं नृपोत्सहे । कल्पयौकः सुविपुलं यत्राहं निवसे सुखम् ॥ १८ ॥
स एनां तत आदाय न्यधादौदञ्चनोदके । तत्र क्षिप्ता मुहूर्तेन हस्तत्रयमवर्धत ॥ १९ ॥

**मीन उवाच**

न म एतदलं राजन् सुखं वस्तुमुदञ्चनम् । पृथु देहि पदं मह्यं यत् त्वाऽहं शरणं गता ॥ २० ॥

**श्रीशुक उवाच**

तत आदाय सा राज्ञा क्षिप्ता राजन् सरोवरे । तदावृत्यात्मना सर्वं महामीनोऽभ्यवर्द्धत ॥ २१ ॥

**मीन उवाच**

नैतन् मे स्वस्तये राजन्नुदकं सलिलौकसः । निधेहि राजन् योगेन ह्रदे मामविदासिनि ॥ २२ ॥
इत्युक्तः सोऽनयन्मत्स्यं तत्र तत्राविदासिनि । जलाशयेऽसम्मितं तं समुद्रे प्राक्षिपज्झषम् ॥ २३ ॥
क्षिप्यमाणस्तमाहेदमिह मां मकरादयः । अदन्त्यतिबला वीर मां नेहोत्स्रष्टुमर्हसि ॥ २४ ॥
एवं विमोहितस्तेन वदता वल्गुभारतीम् । तमाह को भवानस्मान् मत्स्यरूपेण मोहयन् ॥ २५ ॥
नैवंवीर्यो जलचरो दृष्टोऽस्माभिः श्रुतोऽपि वा । यो भवान् योजनशतमह्नाय व्यानशे[२] सरः॥ २६ ॥
नूनं त्वं भगवान् साक्षाद् हरिर्नारायणोऽव्ययः । अनुग्रहाय भूतानां धत्से रूपं जलौकसाम्॥ २७ ॥
नमस्ते पुरुषश्रेष्ठ स्थित्युत्पत्त्यप्ययेश्वर । भक्तानां नः प्रपन्नानां मुख्यो ह्यात्मा गतिर्विभो ॥ २८ ॥
सर्वे लीलावतारास्ते भूतानां भूतिहेतवे । ज्ञातुमिच्छाम्यदो रूपं यदर्थं भवता धृतम् ॥ २९ ॥

---

१. स आत्मनो... ❋ २. व्यापसे ❋

न तेऽरविन्दाक्ष पदोपसर्पणं मुधा भवेत् सर्वसुहृत्प्रियात्मनः ।
यथेतरेषां पृथगात्मनां सतामदीदृशो यद् वपुरद्भुतं हि नः ॥ ३० ॥
इति ब्रुवाणं नृपतिं जगत्पतिः सत्यव्रतं मत्स्यवपुर्युगक्षये ।
विहर्तुकामः प्रळयार्णवेऽब्रवीच्चिकीर्षितं कान्तजनप्रियः प्रभुः ॥ ३१ ॥

**श्रीभगवानुवाच**

सप्तमेऽद्यतनादूर्ध्वमहन्येतदरिन्दम । निमङ्क्ष्यत्यप्ययाम्भोधौ[1] त्रैलोक्यं भूर्भुवादिकम् ॥ ३२ ॥
त्रिलोक्यां[2] लीयमानायां संवर्ताम्भसि वै तदा । उपस्थास्यति नौः काचिद् विशाला त्वां मयेरिता ॥
त्वमादायौषधीः सर्वा बीजान्युच्चावचानि च । सप्तर्षिभिः परिवृतः सर्वसत्वोपबृंहितः ॥ ३४ ॥
आरुह्य बृहतीं नावं विचरिष्यस्यविक्लबः । एकार्णवे निरालोके ऋषीणामेव वर्चसा ॥ ३५ ॥
दोधूयमानां तां नावं समीरेण बलीयसा । उपस्थितस्य मे भृङ्गे निबध्नीहि महाहिना ॥ ३६ ॥
अहं त्वामृषिभिः साकं सहनावमुदन्वति । विकर्षन् विचरिष्यामि यावद् ब्राह्मी निशा प्रभो ॥ ३७ ॥
मदीयं महिमानं च परं ब्रह्मेति शब्दितम् । वेत्स्यस्यनुगृहीतं मे सम्प्रश्नैर्विवृतं हृदि ॥ ३८ ॥

**श्रीशुक उवाच**

इत्थमादिश्य राजानं हरिरन्तरधीयत । सोऽन्ववैक्षत तं कालं हृषीकेशो यमादिशत् ॥ ३९ ॥
आस्तीर्य दर्भान् प्राक्कूलान् राजर्षिः प्रागुदङ्मुखः । निषसाद हरेः पादौ चिन्तयन् मत्स्यरूपिणः ॥
ततः समुद्र उद्वेलः सर्वतः प्लावयन् महीम् । वर्धमानो महामेघैर्वर्षद्भिः समदृश्यत ॥ ४१ ॥
ध्यायन् भगवदादेशं ददृशे नावमागताम् । तामारुरोह विप्रेन्द्रैरादायौषधिवीरुधः ॥ ४२ ॥
तमूचुर्मुनयः प्रीता राजन् ध्यायस्व केशवम् । स वै नः सङ्कटादस्मादविनाशं विधास्यति ॥ ४३ ॥
सोऽनुध्यातस्तदा राज्ञा प्रादुरासीन्महार्णवे । एकभृङ्गधरो मत्स्यो हैमो नियुतयोजनः ॥ ४४ ॥
निबध्य नावं तच्छृङ्गे यथोक्तो हरिणा पुरा । वरत्रेणाहिना तुष्टस्तुष्टाव मधुसूदनम् ॥ ४५ ॥

**राजोवाच**

अनाद्यविद्योपहतात्मसंविदस्तन्मूलसंसारपरिश्रमातुराः ।
यदृच्छयेहोपसृता यमाप्नुयुर्विमुक्तिदो नः परमो गुरुर्भवान् ॥ ४६ ॥
जनोऽबुधोऽयं निजकर्मबन्धनः सुखेच्छया कर्म समीहतेऽसुखम् ।
यत्सेवया तां विधुनोत्यसन्मतिं ग्रन्थिं स भिन्द्याद् हृदये स नो गुरुः ॥ ४७ ॥

---

१. विनङ्क्ष्यत्यप्ययाम्भोधौ ❋ २. त्रैलोक्याम् ❋

यत्सेवयाऽग्नेरिव रुद्ररोदनं पुमान् विजह्यान्मलमात्मनस्तमः ।
भजेत वर्णं निजमेष सोऽव्ययो भूयात् स ईशः परमो गुरोर्गुरुः ॥ ४८ ॥
न यत्प्रसादायुतभागलेशमन्ये च देवा गुरवो जनाः स्वयम् ।
कर्तुं समेताः प्रभवन्ति पुंसस्तमीश्वरं त्वां शरणं प्रपद्ये ॥ ४९ ॥
सचक्षुरन्धस्य यथाऽग्रणीः कृतस्तथा जनस्याविदुषो बुधो गुरुः ।
त्वमर्थदृक् सर्वदृशां समीक्षणो वृतो गुरुर्नः सुगतिं बुभुत्सताम् ॥ ५० ॥
जनो जनस्यादिशतेऽसतीं गतिं यया प्रपद्येत दुरत्ययं तमः ।
त्वमव्ययं[१] ज्ञानममोघमञ्जसा प्रपद्यते येन जनो निजं पदम् ॥ ५१ ॥
त्वं सर्वलोकस्य सुहृत् प्रियेश्वरो ह्यात्मा गुरुर्ज्ञानमभीष्टसिद्धिः ।
तथापि लोको न भवन्तमन्धधीर्जानाति सन्तं हृदि बद्धकामः ॥ ५२ ॥
तं त्वामहं देववरं वरेण्यं प्रपद्य ईशं प्रतिबोधनाय ।
छिन्ध्यर्थदीपैर्भगवन् वचोभिर्ग्रन्थिं[२] हृदय्यां विवृणु स्वमोकः ॥ ५३ ॥

इत्युक्तवन्तं नृपतिं भगवानादिपूरुषः । मत्स्यरूपी महाम्भोधौ विहरंस्तत्वमब्रवीत् ॥ ५४ ॥
पुराणसंहितां दिव्यां साङ्ख्ययोगक्रियावतीम् । सत्यव्रतस्य राजर्षेरात्मगुह्यमशेषतः ॥ ५५ ॥
अश्रौषीद् ऋषिभिः साकमात्मतत्वमसंशयम् । नाव्यासीनो भगवता प्रोक्तं ब्रह्म सनातनम् ॥ ५६ ॥
अतीते प्रळयापाय उत्थिताय च वेधसे । हत्वाऽसुरं हयग्रीवं वेदान् प्रत्याहरद् हरिः ॥ ५७ ॥
स तु सत्यव्रतो राजा ज्ञानविज्ञानसंयुतः । विष्णोः प्रसादात् कल्पेऽस्मिन्नासीद् वैवस्वतो मनुः ॥
सत्यव्रतस्य राजर्षेर्मायामत्स्यस्य शार्ङ्गिणः । संवादं महदाख्यानं श्रुत्वा मुच्येत किल्बिषात् ॥ ५९ ॥
अवतारं हरेर्योऽमुं कीर्तयेदन्वहं नरः । सङ्कल्पा अस्य सिद्ध्यन्ति प्रयाति च परां गतिम् ॥ ६० ॥

प्रळयपयसि धातुः सुप्तशक्तेर्मुखेभ्यः श्रुतिगणमपनीतं प्रत्युपादत्त हत्वा ।
दितिजमकथयच्च ब्रह्म सत्यव्रताय तमजमखिलहेतुं जिह्ममीनं नतोऽस्मि ॥ ६१ ॥

**॥ इति श्रीमद्भागवते महापुराणे वैयासक्यामष्टादशसाहस्र्यां पारमहंस्यां संहितायामष्टमस्कन्धे त्रयोविंशोऽध्यायः* ॥**

## ॥ समाप्तश्चाष्टमस्कन्धः ॥

---

१. त्वं त्वव्ययम् ❋ २. वचोभिर्ग्रन्धिम् ❋ * प्राचीनकोशेष्वत्र द्वाविंशाध्यायसमाप्तिः ।

# ॥ अथ नवमस्कन्धः ॥

### राजोवाच

मन्वन्तराणि सर्वाणि त्वयोक्तानि श्रुतानि मे । वीर्याण्यनन्तवीर्यस्य हरेस्तत्र कृतानि च ॥ १ ॥
योऽसौ सत्यव्रतो नाम राजर्षिर्द्रमिळेश्वरः[१] । ज्ञानं योऽतीतकल्पान्ते लेभे पुरुषसेवया ॥ २ ॥
स वै विवस्वतः पुत्रो मनुरासीदिति श्रुतम् । त्वया तस्य सुताश्चोक्ता इक्ष्वाकुप्रमुखा नृपाः ॥ ३ ॥
तेषां वंशं पृथग् ब्रह्मन् वंशानुचरितानि च । कीर्तयस्व महाभाग नित्यं शुश्रूषतां हि नः ॥ ४ ॥
ये भूता ये भविष्याश्च भवन्त्यद्यतनाश्च ये । तेषां नः पुण्यकीर्तीनां पूर्वेषां वद विक्रमान् ॥ ५ ॥

### सूत उवाच

एवं परीक्षिता राज्ञा सदसि ब्रह्मवादिनाम् । पृष्टः प्रोवाच भगवान् शुकः परमधर्मवित् ॥ ६ ॥

### श्रीशुक उवाच

श्रूयतां मानवो वंशः प्राचुर्येण[२] परन्तप । न शक्यते विस्तरतो वक्तुं वर्षशतैरपि ॥ ७ ॥
परावरेषां भूतानामात्मा यः पुरुषः परः । स एवासीदिदं विश्वं कल्पान्तेऽन्यन्न किञ्चन ॥ ८ ॥
तस्य नाभेरुदस्तात् स पद्मकोशो[३] हिरण्मयः । यस्मिन् जज्ञे महाराज स्वयम्भूश्चतुराननः ॥ ९ ॥
मरीचिर्मानसस्तस्य[४] जज्ञे तस्यापि कश्यपः । दाक्षायण्यां ततोऽदित्यां विवस्वानभवत् सुतः ॥ १० ॥
ततो मनुः श्राद्धदेवः सञ्ज्ञायामास भारत । श्रद्धायां जनयामास दश पुत्रान् स आत्मवान् ॥ ११ ॥
इक्ष्वाकुनृगशर्यातिदिष्टधृष्टकरूशकान्[५] । नरिष्यन्तं पृषध्रं[६] च नाभागं च नभं विभुम्[७] ॥ १२ ॥
अप्रजस्य मनोः पूर्वं वसिष्ठो भगवान् किल । मित्रावरुणयोरिष्टिं प्रजार्थमकरोद् विभुः ॥ १३ ॥
तत्र श्रद्धा मनोः पत्नी होतारं समयाचत । दुहित्रर्थं उपागम्य प्रणिपत्य पयोव्रता ॥ १४ ॥
प्रेषितोऽध्वर्युणा होता दध्यौ तत् सुसमाहितः । गृहीते तेन हविषि[८] वषट्कारं गृणान् द्विजः ॥ १५ ॥
होतुस्तद्व्यभिचारेण कन्येळा नाम साऽभवत् । तां विलोक्य मनुः प्राह नातिहृष्टमना गुरुम् ॥ १६ ॥

---

१. द्रविडेश्वरः २. सङ्क्षेपेण ३. नाभेः समभवत् पद्मकोशः ❋ ४. मनसस्तस्य ❋
५. इक्ष्वाकुनृगसंयाति.. ❋। शर्यातिशब्दस्थाने प्राचीनकोशेषु सर्वत्र संयातिरिति शंयातिरिति वा पठ्यते । एवमग्रेऽपि
६. अयं शब्दः प्राचीनकोशेषु सर्वत्र पृषध्र इति नवीनेषु वृषध्र इति च पठ्यते ।
७. नाभागं च कविं विभुः ८. गृहीते हविषि चरौ ❋

भगवन् किमिदं जातं कर्म वो ब्रह्मवादिनाम् । विपरीतमहो कष्टं मैवं स्याद् ब्रह्मविक्रिया ॥ १७ ॥
यूयं मन्त्रविदो युक्तास्तपसा दग्धकिल्बिषाः । कुतः सङ्कल्पवैषम्यमनृतं विबुधेष्विव ॥ १८ ॥
तन्निशम्य वचस्तस्य भगवान् प्रपितामहः[१] । होतुर्व्यतिक्रमं ज्ञात्वा बभाषे रविनन्दनम् ॥ १९ ॥
एतत् सङ्कल्पवैषम्यं होतुस्ते व्यभिचारतः । तथापि साधयिष्येऽहं सुप्रजास्त्वं स्वतेजसा ॥ २० ॥
एवं व्यवसितो राजन् भगवान् स महायशाः । अस्तौषीदादिपुरुषमिळायाः पुंस्त्वकाम्यया ॥ २१ ॥
तस्मै कामवरं तुष्टो भगवान् हरिरीश्वरः । ददाविळाऽभवत् तेन सुद्युम्नः पुरुषर्षभः ॥ २२ ॥
स एकदा महाराज विचरन् मृगयां वने । वृतः कतिपयामात्यैरश्वमारुह्य सैन्धवम् ॥ २३ ॥
प्रगृह्य रुचिरं चापं शरांश्च परमाद्भुतान् । दंसितोऽनुमृगं वीरो जगाम दिशमुत्तराम् ॥ २४ ॥
सुकुमारवनं[२] मेरोरधस्तात् प्रविवेश ह । यत्रास्ते भगवान् शर्वो रममाणः सहोमया ॥ २५ ॥
तस्मिन् प्रविष्ट एवासौ सुद्युम्नः परवीरहा । अपश्यत् स्त्रियमात्मानमश्वं च वडवां[३] नृप ॥ २६ ॥
तथा तदनुगाः सर्व आत्मलिङ्गविपर्ययम् । दृष्ट्वा विमनसोऽभूवन् वीक्ष्यमाणाः परस्परम् ॥ २७ ॥

**॥ इति श्रीमद्भागवते नवमस्कन्धस्य प्रथमोऽध्यायः ॥**

---

**राजोवाच**

कथमेवंगुणो[४] देशः केन वा भगवन् कृतः । प्रश्नमेतं समाचक्ष्व परं कौतूहलं हि नः ॥ १ ॥

**श्रीशुक उवाच**

एकदा गिरिशं द्रष्टुमृषयस्तत्र सुव्रताः । दिशो वितिमिरा भासा कुर्वन्तस्तमुपागमन् ॥ २ ॥
तान् विलोक्याम्बिका देवी विवस्त्रा व्रीळिता भृशम् । भर्तुरङ्कात् समुत्थाय नीवीमाश्वथ पर्यधात् ॥ ३ ॥
ऋषयोऽपि तयोर्वीक्ष्य प्रसङ्गं रममाणयोः । निवृत्ताः प्रययुस्तस्मान्नरनारायणाश्रमम् ॥ ४ ॥
तदैवं[५] भगवानाह प्रियायाः प्रियकाम्यया । स्थानं यः प्रविशेदेतत् स वै योषिद् भवेदिति ॥ ५ ॥
तत ऊर्ध्वं वनं तद् वै पुरुषा वर्जयन्ति हि । सा चानुचरसंयुक्ता विचचार वनाद् वनम् ॥ ६ ॥
अथ तामाश्रमाभ्याशे चरन्तीं प्रमदोत्तमाम् । स्त्रीभिः परिवृतां वीक्ष्य चकमे भगवान् बुधः ॥ ७ ॥

---

१. भगवान् नः पितामहः ❋ २. स कुमारवनम् ❋ ३. बडबाम् ❋
४. कथमेवंविधः ❋ ५. तदेदम् ❋

साऽपि तं चकमे सुभ्रूः सोमराजसुतं पतिम् । स तस्यां जनयामास पुरूरवसमात्मजम् ॥ ८ ॥
एवं स्त्रीत्वमनुप्राप्तः सुद्युम्नो मानवो नृपः । सस्मार स्वकुलाचार्यं वसिष्ठमिति शुश्रुमः ॥ ९ ॥
स तस्य तां दशां दृष्ट्वा कृपया भृशपीडितः । सुद्युम्नस्याशयन्[१] पुंस्त्वमुपाधावत शङ्करम् ॥ १० ॥
तुष्टः स तस्मै भगवान् ऋषये प्रियमावहन्[२] । स्वां च वाचमृतां कुर्वन्निदमाह विशाम्पते ॥ ११ ॥
मासं पुमान् स भविता स्त्री मासं तपसा तव । इत्थं व्यवस्थया कामं सुद्युम्नोऽवतु मेदिनीम् ॥ १२ ॥

**श्रीशुक उवाच**

आचार्यानुग्रहात् कामं लब्ध्वा पुंस्त्वं व्यवस्थया । पालयामास जगतीं नाभ्यनन्दन् स्म तं प्रजाः ॥
तस्योत्कलो गयो राजन् विमलश्च सुतास्त्रयः । दक्षिणापथराजानो बभूवुर्धर्मवत्सलाः ॥ १४ ॥
ततः परिणतः काले प्रतिष्ठानपतिः प्रभुः । पुरूरवस उत्सृज्य गां पुत्राय गतो वनम् ॥ १५ ॥

**॥ इति श्रीमद्भागवते नवमस्कन्धस्य द्वितीयोऽध्यायः ॥**

---

**श्रीशुक उवाच**

एवं गतेऽथ सुद्युम्ने मनुर्वैवस्वतः सुते । पुत्रकामस्तपस्तेपे यमुनायां शतं समाः ॥ १ ॥
ततोऽयजन्मनुर्देवमपत्यार्थं हरिं प्रभुम् । इक्ष्वाकुपूर्वजान् पुत्रान् लेभे स्वसदृशान् दश ॥ २ ॥
पृषध्रस्तु मनोः पुत्रो गोपालो गुरुणा कृतः । पालयामास गा यत्नात्[३] रात्र्यां वीरासनव्रतः ॥ ३ ॥
एकदा प्राविशद् गोष्ठं शार्दूलो निशि वर्षति । शयाना गाव उत्थाय भीतास्ता बभ्रमुर्व्रजे ॥ ४ ॥
एकां जग्राह बलवान् सा चुक्रोश भयातुरा । तस्यास्तु क्रन्दितं श्रुत्वा पृषध्रोऽभिससार ह ॥ ५ ॥
खड्गमादाय तरसा प्रलीनोडुगणे निशि । अजानन्नच्छिनद्[४] बभ्रोः शिरः शार्दूलशङ्कया ॥ ६ ॥
व्याघ्रो विवृक्णश्रवणो निस्त्रिंशाग्रहतस्ततः । निश्चक्राम भृशं भीतो रक्तं पथि समुत्सृजन् ॥ ७ ॥
मन्यमानो हतं व्याघ्रं वृषध्रः परवीरहा । अद्राक्षीत् स्वहतां बभ्रुं व्युष्टायां निशि दुःखितः ॥ ८ ॥
तं शशाप कुलाचार्यः कृतागसमकामतः । न क्षत्रबन्धुः शूद्रस्त्वं कर्मणा भविताऽमुना ॥ ९ ॥
एवं शप्तः स्वगुरुणा प्रत्यगृह्णात् कृताञ्जलिः । अधारयद् व्रतं वीर ऊर्ध्वरेता मुनिप्रियम् ॥ १० ॥

---

१. सुद्युम्नस्यार्थयन् ॐ २. प्रीतिमावहन् ३. यत्तः ४. अजानन्नहनद्

वासुदेवे भगवति सर्वात्मन्यमले परे[१] । एकान्तित्वं गतो भक्त्या सर्वभूतसुहृत्तमः[२] ॥ ११ ॥
विमुक्तसङ्गः शान्तात्मा संयताक्षोऽपरिग्रहः । यदृच्छयोपपन्नेन कल्पयन् वृत्तिमात्मनः ॥ १२ ॥
आत्मन्यात्मानमाधाय ज्ञानतृप्तः समाहितः । विचचार महीमेतां जडान्धबधिराकृतिः ॥ १३ ॥
एवंवृत्तो[३] वनं गत्वा दृष्ट्वा दावाग्निमुत्थितम् । तेनोपयुक्तकरणो ब्रह्म प्राप परं मुनिः[४] ॥ १४ ॥

कविस्तदाऽयं[५] विषयेषु निःस्पृहो विसृज्य सङ्गं सह बन्धुभिर्वनम् ।
निवेश्य चित्ते पुरुषं स्वरोचिषं विवेश कैशोरवयाः परं गतः ॥ १५ ॥

करूशान्मानवादासन् कारूशाः क्षत्रजातयः । उत्तरापथगोप्तारो ब्रह्मण्या धर्मवत्सलाः ॥ १६ ॥
धृष्टाद्धार्ष्टमभूत् क्षत्रं ब्रह्मभूतं[६] गतं क्षितौ । मानवाच्च नृगात् स्वातिस्ततो ज्योतिस्ततो वसुः ॥ १७ ॥
वसोः प्रतीकस्तत्पुत्र ओघवानोघवत्स्वसा । कन्या चोघवती नाम सुदर्शन उवाह ताम् ॥ १८ ॥
चित्रसेनो नरिष्यन्ताद् दक्षस्तस्य सुतोऽभवत् । तस्य मीढ्वांस्ततः कूर्च इन्द्रसेनस्तु तत्सुतः ॥ १९ ॥
वीतिहोत्रस्त्विन्द्रसेनात् तस्य सत्यश्रवा अभूत् । उरुश्रवाः सुतस्तस्य देवदत्तस्ततोऽभवत् ॥ २० ॥
देवदत्तस्य भगवानग्निः स्वयमभूत् सुतः । कानीन इति विख्यातो जातूकर्ण्यो महानृषिः ॥ २१ ॥
ततो ब्रह्मकुलं जातमाग्निवेश्यायनं नृप । नरिष्यन्तान्वयः प्रोक्तो दिष्टवंशमतः शृणु ॥ २२ ॥
नाभागो दिष्टपुत्रोऽन्यः कर्मणा वैश्यतां गतः । हलन्दनः[७] सुतस्तस्य वत्सप्रीतिर्हलन्दनात् ॥ २३ ॥
वत्सप्रीतेः सुतः प्रांशुस्तत्सुतः प्रमतिर्विभुः[८] । खनित्रः प्रमतेस्तस्माच्चाक्षुषोऽथ विविंशतिः ॥
विविंशतिसुतो रंहः[९] खनमित्रोऽस्य[१०] धार्मिकः । करन्धमो महाराज तस्यासीदात्मजो नृपः ॥
तस्यावीक्षित् सुतो यस्य मरुत्तश्चक्रवर्त्यभूत् । संवर्तोऽयाजयद् यं वै महायोग्यङ्गिरस्सुतः ॥ २६ ॥
मरुत्तस्य यथा यज्ञो न तथाऽन्योऽस्ति कश्चन । सर्वं हिरण्मयं त्वासीद् यज्ञवस्त्वतिशोभनम्॥ २७ ॥
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः । मरुतः परिवेष्टारो विश्वेदेवाः सभासदः ॥ २८ ॥
मरुत्तस्य दमः पुत्रस्तस्यासीद् राजवर्धनः[११] । सुधृतिस्तत्सुतो जज्ञे सौधृतेयो नरः सुतः ॥ २९ ॥

---

१. सर्वात्मनि परेऽमले * २. सुहृत् समः ३. एवंव्रतः
४. ब्रह्म दध्यौ परं मुनिः */तत्त्वं प्राप परं मुनिः ५. कविः कनीयान् * ६. ब्रह्मभूयम् *
७. भलन्दन इत्यर्वाचीनकोशेषु । ८. प्रमितिरित्यर्वाचीनकोशेषु । ९. रम्भः
१०. खनिनेत्रोऽस्य ११. राज्यवर्धनः

तत्सुतः केवलस्तस्माद् बन्धुमान् वेगवांस्ततः । बुधस्तस्याभवद्[1] यस्य तृणबिन्दुर्महीपतिः ॥

यं भेजेऽलम्बुसा देवी भजनीयगुणालयम् । वराप्सरा यतः पुत्राः कन्या चैळिबिळाऽभवत् ॥ ३१ ॥

यस्यामुत्पादयामास विश्रवाश्च धनाधिपम् । प्रदाय विद्यां परमामृषिर्योगेश्वरः पितुः ॥ ३२ ॥

विशालः शून्यबन्धुश्च धूम्रकेशश्च[2] तत्सुताः । विशालो वंशकृद् राजा वैशालीं निर्ममे पुरीम् ॥

हेमचन्द्रः सुतस्तस्य धूम्राक्षस्तस्य चात्मजः । तत्पुत्रः सहदेवस्तु कृशाश्वः सहदेवजः ॥ ३४ ॥

कृशाश्वात् सोमदत्तोऽभूद् सोऽश्वमेधैरिडस्पतिम् । इष्ट्वा पुरुषमापाग्र्यां गतिं योगेश्वराश्रिताम् ॥ ३५॥

सोमदत्तात् तु[3] सुमतिस्तत्सुतो जनमेजयः । एते वैशालभूपालास्तृणबिन्दोर्यशोधराः ॥ ३६ ॥

**॥ इति श्रीमद्भागवते नवमस्कन्धे तृतीयोऽध्यायः ॥**

---

**श्रीशुक उवाच**

शर्यातिर्मानवो[4] राजा[5] ब्रह्मिष्ठः सम्बभूव ह । यो वा अङ्गिरसां सत्रे द्वितीयमहरध्यगात् ॥ १ ॥

सुकन्या नाम तस्यासीत् कन्या कमललोचना । तया सार्धं वनगतो ह्यगमच्च्यवनाश्रमम् ॥ २ ॥

सा सखीभिः परिवृता विचिन्वन्त्यङ्घ्रिपान् वने । वल्मीकरन्ध्रे ददृशे खद्योते इव ज्योतिषी ॥ ३ ॥

सा दैवचोदिता बाला ज्योतिषी कण्टकेन वै । अविध्यन्मुग्धभावेन सुस्रावासृक् ततो बहु ॥ ४ ॥

शकृन्मूत्रनिरोधोऽभूत् सैनिकानां च तत्क्षणात् । राजर्षिस्तमुपालभ्य पुरुषान् विस्मितोऽब्रवीत् ॥ ५॥

अप्यभद्रं न युष्माभिर्भार्गवस्य विचेष्टितम् । व्यक्तं केनापि नस्तस्य कृतमाश्रमदूषणम् ॥ ६ ॥

सुकन्या प्राह पितरं भीता किञ्चित् कृतं मया । द्वे ज्योतिषी अजानन्त्या निर्भिण्णे कण्टकेन ते[6] ॥

दुहितुस्तदघं श्रुत्वा शर्यातिर्जातसाध्वसः । मुनिं प्रसादयामास वल्मीकान्तर्हितं शनैः ॥ ८ ॥

तदभिप्रायमाज्ञाय प्रादाद् दुहितरं मुनेः । कृच्छ्रान्मुक्तस्तमामन्त्र्य पुरं प्रायात् सहानुगः ॥ ९ ॥

सुकन्या च्यवनं प्राप्य पतिं परमकोपनम् । प्रीणयामास चित्तज्ञा अप्रमत्ताऽनुवृत्तिभिः ॥ १० ॥

कस्यचित् त्वथ कालस्य नासत्यावाश्रमं गतौ[7] । सम्पूजयित्वा प्रोवाच वयो मे दत्तमीश्वरौ ॥ ११ ॥

ग्रहं गृहीष्ये सोमस्य यज्ञे वामप्यसोमयोः । क्रियतां मे वयो रूपं प्रमदानां यदीप्सितम् ॥ १२ ॥

---

१. बन्धुस्तस्याभवत् २. धूमकेतुश्च ३. सौमदत्तिस्तु ४. शंयातिर्मानवः/संयातिर्मानवः ❋
५. राजन् ६. मे ❋ ७. आश्रमागतौ ❋

बाढमित्यूचतुर्विप्रमभिनन्द्य भिषक्तमौ । निमज्जतां भवानस्मिन् ह्रदे सिद्धविनिर्मिते ॥ १३ ॥

इत्युक्तो जरया ग्रस्तदेहो धमनिसन्ततः । ह्रदं प्रवेशितोऽश्विभ्यां स्वयं चामज्जतां ह्रदे[१] ॥ १४ ॥

पुरुषास्त्रय उत्तस्थुरावीच्या वनिताप्रियाः । पद्मस्रजः कुण्डलिनस्तुल्यरूपाः सुवाससः ॥ १५ ॥

तान्निरीक्ष्य वरारोहा सरूपान् सूर्यवर्चसः । अजानती पतिं साध्वी अश्विनौ शरणं ययौ ॥ १६ ॥

दर्शयित्वा पतिं तस्यै पातिव्रत्येन तोषितौ । ऋषिमामन्त्र्य ययतुर्विमानेन त्रिविष्टपम् ॥ १७ ॥

यक्ष्यमाणोऽथ शर्यातिश्च्यवनस्याश्रमं गतः । ददर्श दुहितुः पार्श्वे पुरुषं सूर्यवर्चसम् ॥ १८ ॥

राजा दुहितरं प्राह कृतपादाभिवन्दनाम्[२] । आशिषो न प्रयुञ्जानो नातिप्रीतमना इव ॥ १९ ॥

चिकीर्षितं ते किमिदं पतिस्त्वया प्रलम्भितो लोकनमस्कृतो मुनिः ।
या त्वं जराग्रस्तमसत्यसम्मतं विहाय जारं भजसेऽमुमध्वगम् ॥ २० ॥

कथं मतिस्तेऽम्ब गताऽन्यथाऽसतां मार्गं त्वियं मत्कुलदूषणं त्विदम्[३] ।
बिभर्षि जारं यदपत्रपा कुलं पितुः स्वभर्तुश्च नयस्यधस्तमः ॥ २१ ॥

एवं ब्रुवाणं पितरं स्मयमाना शुचिस्मिता । उवाच तात जामाता तवैष भृगुनन्दनः ॥ २२ ॥

शशंस पित्रे तत्सर्वं वयोरूपाभिलम्भनम् । विस्मितः परमप्रीतस्तनयां परिषस्वजे ॥ २३ ॥

सोमेन याजयन् वीरः ग्रहं सोमस्य चाग्रहीत् । असोमयोरप्यश्विनोश्च्यवनः स्वेन तेजसा ॥ २४ ॥

हन्तुं तमाददे वज्रं सद्योमन्युरमर्षितः[४] । सवज्रं स्तम्भयामास भुजमिन्द्रस्य भार्गवः ॥ २५ ॥

अन्वजानंस्ततः सर्वे ग्रहं सोमस्य चाश्विनोः । भिषजाविति यत् पूर्वं सोमाहुत्या बहिष्कृतौ ॥ २६ ॥

उत्तानबर्हिरानर्तो भूरिषेण इति त्रयः । शर्यातेरभवन् पुत्रा आनर्ताद् रेवतोऽभवत् ॥ २७ ॥

सोऽन्तःसमुद्रे नगरीं विनिर्माय कुशस्थलीम् । आस्थितोऽभुङ्क्त विषयानानर्तादीनरिन्दमः ॥ २८ ॥

तस्य पुत्रशतं जज्ञे ककुद्मिज्येष्ठमुत्तमम् । रेवतो[५] रेवतीं कन्यां स्वामादाय विभुं गतः ॥ २९ ॥

पुत्र्या वरं परिप्रष्टुं ब्रह्मलोकमपावृतम् । आवर्तमाने गान्धर्वे स्थितोऽलब्धक्षणः क्षणम् ॥ ३० ॥

तदन्त आद्यमानम्य स्वाभिप्रायं न्यवेदयत् । तच्छ्रुत्वा भगवान् ब्रह्मा प्रहस्य तमुवाच ह ॥ ३१ ॥

अहो राजन् निरुद्धास्ते कालेन हृदि ये कृताः । तत्पुत्रपौत्रनप्तॄणां गोत्राणि च न शृण्महे ॥ ३२ ॥

---

१. अश्विभ्यां वलीपलितविप्रियः ❋
२. कृतपादाभिवन्दिताम् ❋
३. अन्यथा सतां कूलप्रसूते कुलदूषणं त्विदम् ❋
४. शतमन्युरमर्षितः ❋
५. रैवतः ❋

मुहूर्तं शृण्वतोऽश्राव्यं[1] प्रतियातस्य तेऽनघ । कालो यातस्त्रिनवभिः चतुर्युगविकल्पितः[2] ॥ ३३ ॥
तद् गच्छ देवदेवांशो बलदेवो महाबलः । कन्यारत्नमिदं राजन् नररत्नाय देहि भो ॥ ३४ ॥
भुवो भारावताराय भगवान् भूतभावनः । अवतीर्णो निजांशेन पुण्यश्रवणकीर्तनः ॥ ३५ ॥
इत्यादिष्टोऽभिवन्द्याजं पुनः स्वपुरमागतः । त्यक्तां पुण्यजनत्रासाद् भ्रातृभिर्दिक्ष्ववस्थितैः ॥ ३६ ॥
सुतां दत्वाऽनवद्याङ्गीं बलाय बलशालिने । बदर्याख्यं ययौ राजा तप्तुं नारायणाश्रमम् ॥ ३७ ॥

**॥ इति श्रीमद्भागवते नवमस्कन्धे चतुर्थोऽध्यायः ॥**

---

**श्रीशुक उवाच**

नाभागोन्यस्ततः प्राज्ञो यं मत्वा भ्रातरः कविम् । यविष्ठं व्यभजन् दायं ब्रह्मचारिणमाह सः ॥ १ ॥
भ्रातरोऽभाङ्क्त किं मह्यं भजान पितरं तव । किं म आर्यास्तताभाङ्क्षुर्मा पुत्रक तदादृथाः ॥ २ ॥
इम अङ्गिरसः[3] सत्रमासतेऽद्य सुमेधसः[4] । षष्ठं षष्ठमुपेत्याहः कवे मुह्यन्ति कर्मणि ॥ ३ ॥
तांस्त्वं शंसय सूक्ते द्वे वैश्वदेवे महात्मनः । ते स्वर्यन्तो धनं सत्रपरिशेषितमात्मनः ॥ ४ ॥
दास्यन्ति तेऽथ तान् गच्छ तथा स कृतवान् यथा । तस्मै दत्वा ययुः स्वर्गं ते सत्रपरिवेषणम्॥ ५ ॥
तं कश्चित् स्वीकरिष्यन्तं पुरुषः कृष्णदर्शनः । उवाचोत्तरतोऽभ्येत्य ममेदं वास्तुकं[5] वसु ॥ ६ ॥
ममेदमृषिभिर्दत्तमिति तर्हि स्म मानव । स्यान्नौ ते पितरि प्रश्नः स गतः पितरं तथा ॥ ७ ॥
यज्ञवास्तुगतं सर्वमुच्छिष्टमृषयः क्वचित् । चक्रुर्हि भागं रुद्राय स देवः सर्वमर्हति ॥ ८ ॥
नाभागस्तं प्रणम्याह तवेश किल वास्तुगम् । इत्याह मे पिता ब्रह्मन् शिरसा त्वां प्रसादये ॥ ९ ॥
यत् ते पिताऽवदद् धर्मं त्वं च सत्यं[6] प्रभाषसे । ददामि ते मन्त्रदृशो ज्ञानं ब्रह्म सनातनम् ॥ १० ॥
गृहाण द्रविणं दत्तं यत् सत्रपरिवेषितम् । इत्युक्त्वाऽन्तर्दधे रुद्रो भगवान् सत्यवत्सलः ॥ ११ ॥
य एतद् संस्मरेत् प्रातः सायं च सुसमाहितः । कविर्भवति मन्त्रज्ञो गतिं चैति तथाऽऽत्मनः ॥ १२ ॥

**॥ इति श्रीमद्भागवते नवमस्कन्धे पञ्चमोऽध्यायः ॥**

---

१. शृण्वतः श्राव्यम् ❋ २. कालोऽभियातस्त्रिनवचतुर्युगविकल्पितः ❋
३. आङ्गिरसः ❋ ४. सुवेधसः ❋ ५. वास्तुगम् ❋ ६. सर्वम् ❋

श्रीशुक उवाच

नाभागादम्बरीषोऽभून्महाभागवतः कृती । नास्पृशद् ब्रह्मशापोऽपि चक्रप्रतिहतः कचित् ॥ १ ॥

राजोवाच

भगवन् श्रोतुमिच्छामः राजर्षेस्तस्य धीमतः । न प्रायाद्[1] यत्र निर्मुक्तो ब्रह्मदण्डो दुरत्ययः ॥ २ ॥

श्रीशुक उवाच

अम्बरीषो महाभागः सप्तद्वीपवतीं महीम् । अव्ययां च श्रियं लब्ध्वा विभवं चातुलं भुवि ॥ ३ ॥

मेनेऽतिदुर्लभं पुंसां सर्वं तत् स्वप्नसम्मितम् । विद्वान् विभवनिर्वाणं तमो विशति यत् पुमान् ॥ ४ ॥

वासुदेवे भगवति तद्भक्तेषु च साधुषु । प्राप्तो भावं परं विश्वं येनेदं लोष्टवत् स्मृतम् ॥ ५ ॥

स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने ।
करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये ॥ ६ ॥

मुकुन्दलिङ्गालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गम् ।
घ्राणं च तत्पादसरोजसौरभश्रीमत्तुळस्यां[2] रसनां तदर्पिते ॥ ७ ॥

पादौ हरेः क्षेत्रपथानुसर्पणे[3] शिरो हृषीकेशपदाभिवन्दने ।
कामं तु दास्ये न तु कामकाम्यया तथोत्तमश्लोकजनाश्रयां रतिम् ॥ ८ ॥

एवं सदा कर्मकलापमात्मनः परेऽधियज्ञे भगवत्यधोक्षजे ।
सर्वात्मभावं विदधन्महीमिमां तन्निष्ठविप्राभिहितः शशास ह ॥ ९ ॥

ईजेऽश्वमेधैरधियज्ञमीश्वरं महाविभूत्योपचिताङ्गदक्षिणैः ।
[4]ततैर्वसिष्ठासितगौतमादिभिर्विद्वानभिस्रोतमसौ सरस्वतीम् ॥ १० ॥

यस्य क्रतुषु गीर्वाणाः[5] सदस्या ऋत्विजो जनाः ।
तुल्यरूपाश्चानिमिषा[6] व्यदृश्यन्त सुवाससः ॥ ११ ॥

स्वर्गो न प्रार्थितो यस्य मनुजैरमरप्रियः । शृण्वद्भिरुपगायद्भिरुत्तमश्लोकचेष्टितम् ॥ १२ ॥

समृद्धा यस्य[7] नो कामाः स्वाराज्यपरिभाविताः । दुर्लभा अपि सिद्धानां मुकुन्दं हृदि पश्यतः[8] ॥

---

१. प्राभूत्  २. तुळस्याः ❋  ३. क्षेत्रपदानुसर्पणे  ४. श्रुतैर्वसिष्ठासित...... ❋
५. गीर्वाणैः  ६. अनिमिषैः ❋  ७. समृद्धा अपि ❋  ८. पश्यताम् ❋

स इत्थं भक्तियोगेन तपोयुक्तेन पार्थिवः[१] । स्वधर्मेण हरिं प्रीणन् सङ्गान् सर्वाञ्छनैर्जहौ[२]॥ १४ ॥

गृहेषु दारेषु सुतेषु बन्धुषु द्विपोत्तमस्यन्दनवाजिपत्तिषु ।
अक्षय्यरत्नाभरणायुधादिष्वनन्तभोगेष्वकरोदसन्मतिम्[३] ॥ १५ ॥

तस्मा अदाद्धरिश्चक्रं प्रत्यनीकभयावहम् । एकान्तभक्तियोगेन[४] प्रीतो भूताभिरक्षणम्[५] ॥ १६ ॥
आरिराधयिषुर्विष्णुं महिष्या तुल्यशीलया । युक्तः सांवत्सरं वीरो दधार द्वादशीव्रतम् ॥ १७ ॥
व्रतान्ते कार्त्तिके मासि त्रिरात्रं स उपोषितः । स्नातः कदाचित् कालिन्द्यां हरिं मधुवनेऽर्चयत् ॥ १८ ॥
महाभिषेकविधिना सर्वोपस्करसम्पदा । अभिषिच्य वराकल्पैर्गन्धमाल्यार्हणादिभिः ॥ १९ ॥
तद्गतान्तरभावेन पूजयामास केशवम् । ब्राह्मणांश्च महाभागान् सिद्धार्थानपि भक्तितः ॥ २० ॥
गवां रुग्मविषाणीनां रूप्याङ्घ्रीणां सुवाससाम् । पयःशीलवयोरूपवत्सोपस्करसम्पदाम् ॥ २१ ॥
प्राहिणोत् साधुविप्रेभ्यो गृहेषु न्यर्बुदानि षट् । भोजयित्वा द्विजानग्रे स्वाद्वन्नं गुणवत्तमम् ॥ २२ ॥
लब्धकामैरनुज्ञातः पारणायोपचक्रमे । तस्य तर्ह्यतिथिः साक्षाद् दुर्वासा भगवानभूत् ॥ २३ ॥
तमानर्च्यातिथिं भूयः प्रत्युत्थानासनार्हणैः । ययाचेऽभ्यवहाराय पादमूलमुपागतः ॥ २४ ॥
प्रतिनन्द्य स तद्याञ्चां कर्तुमावश्यकं गतः । निममज्ज बृहद् ध्यायन् कालिन्दीसलिले शुचौ ॥ २५ ॥
मुहूर्तार्धावशिष्टायां द्वादश्यां पारणं प्रति । चिन्तयामास धर्मज्ञो नृपस्तद्धर्मसङ्कटे ॥ २६ ॥
ब्राह्मणातिक्रमे दोषो द्वादश्यामप्यपारणे । यत् कृत्वा साधु मे भूयादधर्मो मां न संस्पृशेत् ॥ २७ ॥
आहुरब्भक्षणं विप्रा ह्यशितं नाशितं च यत् । अम्भसा केवलेनाथ[६] करिष्ये व्रतपारणम् ॥ २८ ॥
इत्यपः प्राश्य राजर्षिश्चिन्तयन् मनसाऽच्युतम् । प्रत्याचष्ट कुरुश्रेष्ठ द्विजागमनमेव सः ॥ २९ ॥
दुर्वासा यमुनाकूलात् कृतावश्यक आगतः । राज्ञाऽभिनन्दितस्तस्य[७] बुबुधे चेष्टितं धिया ॥ ३० ॥
मन्युना प्रचलद्गात्रो भ्रुकुटीकुटिलाननः । बुभुक्षितश्च सुतरां कृताञ्जलिमभाषत ॥ ३१ ॥
अहो अस्य नृशंसस्य श्रिया मत्तस्य[८] पश्यत । धर्मव्यतिक्रमं विष्णोरभक्तस्येष्टमानिनः ॥ ३२ ॥
यो माममतिथिमायातमातिथ्येन निमन्त्र्य च । अदत्वा भुक्तवांस्तस्य सद्यस्ते दर्शये फलम् ॥ ३३ ॥

---

१. पार्थिव २. समान् सर्वान् शनैर्जहौ ? ❋ ३. अनन्तकोशेष्वकरोद्.. ❋
४. एकान्तभक्तिभावेन ❋ ५. भूत्वाऽभिरक्षणम् ६. केवलेनाद्य
७. अभिच्छन्दितस्तस्य ८. श्रियोन्मत्तस्य

एवं ब्रुवाण उत्कृत्य जटां रोषविदीपितः। तया स निर्ममे तस्मै कृत्यां कालानलोपमाम् ॥ ३४ ॥

तामापतन्तीं ज्वलतीमसिहस्तां पदा भुवम्। वेपयन्तीं समुद्वीक्ष्य न चचाल पदान्नृपः ॥ ३५ ॥

आदिष्टं भृत्यरक्षायां[१] पुरुषेण महात्मना। ददाह कृत्यां तां चक्रं क्रुद्धाहिमिव पावकः ॥ ३६ ॥

तदभिद्रवदुद्वीक्ष्य स्वप्रयासं च निष्फलम्। दुर्वासा दुद्रुवे भीतो दिक्षु प्राणपरीप्सया ॥ ३७ ॥

तं त्वन्वधावद् भगवद्रथाङ्गं दवाग्निरुद्धूतशिखो[२] यथाहिम्।
तथाऽनुषक्तं मुनिरीक्षमाणो गुहां विविक्षुः प्रससार मेरोः ॥ ३८ ॥

दिशो नभः क्ष्मां विवरान् समुद्रान् सलोकपालांस्त्रिदिवं गतः सः।
यतोयतो धावति तत्र तत्र सुदर्शनं दुष्प्रसहं ददर्श ॥ ३९ ॥

अलब्धनाथः स यदा कुतश्चित्[३] सन्त्रस्तचित्तोऽरणमेषमाणः।
देवं विरिञ्चं समगाद् विधातस्त्राह्यात्मयोनेऽजिततेजसो माम् ॥ ४० ॥

श्रीब्रह्मोवाच

स्थानं मदीयं सह विश्वमेतत् क्रीडावसाने द्विपरार्धसञ्ज्ञे।
भ्रूभङ्गमात्रेण हि सन्दिधक्षोः कालात्मनः पश्यति को भविष्यत् ॥ ४१ ॥

अहं भवो दक्षभृगुप्रधानाः प्रजेशभूतेशसुरेशमुख्याः।
सर्वे वयं यन्नियमं प्रपन्ना मूर्ध्नाऽर्पितं लोकहितं वहामः ॥ ४२ ॥

श्रीशुक उवाच

प्रत्याख्यातो विरिञ्चेन विष्णुचक्रोपतापितः। दुर्वासाः शरणं यातः शर्वं कैलासवासिनम् ॥ ४३ ॥

श्रीशङ्कर उवाच

वयं न तात प्रभवाम भूम्नो भवन्ति काले न भवन्ति हीदृशाः।
यस्मिन् परेऽन्येऽप्यजजीवकोशाः सहस्रशो यत्र वयं भ्रमामः[४] ॥ ४४ ॥

अहं सनत्कुमारश्च नारदो भगवानजः। कपिलोऽपान्तरतमो देवलो धर्म आसुरिः ॥ ४५ ॥

मरीचिप्रमुखाश्चान्ये सिद्धेशाः पारदर्शिनः। विदाम न वयं सर्वे यन्मायां माययाऽऽवृताः ॥ ४६ ॥

---

१. भक्तरक्षायाम्  २. उद्धूतशिखः  ३. स यथाकुतश्चित् ❋

४. वयं न तात प्रभवाम भूम्नो यस्मिन् परेऽन्येप्यजजीवकोशाः।
भवन्ति काले न भवन्ति हीदृशाः सहस्रशो यत्र वयं भ्रमामः ❋

तस्य विश्वेश्वरस्येदं शस्त्रं दुर्विषहं हि नः । तमेव शरणं याहि हरिस्ते शं विधास्यति ॥ ४७ ॥

ततो निराशो दुर्वासाः पदं भगवतो ययौ । वैकुण्ठाख्यं यदध्यास्ते श्रीनिवासः श्रिया सह ॥ ४८ ॥

सन्दह्यमानोऽजितशस्त्रवह्निना तत्पादमूले पतितः सवेपथुः ।
आहाच्युतानन्त सदीप्सित प्रभो कृतागसं मामव विश्वभावन ॥ ४९ ॥

अजानता ते परमानुभावं कृतं मयाऽघं भवतः प्रियाणाम् ।
विधेहि तस्यापचितिं विधातर्मुच्येत यन्नाम्न्युदिते नारकोऽपि ॥ ५० ॥

**श्रीभगवानुवाच**

अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज । तमेव शरणं याहि नाभागतनयं मुने ॥ ५१ ॥

साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः । नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना ॥ ५२ ॥

श्रियं चात्यन्तिकीं ब्रह्मन् येषां गतिरहं परा । ये दारागारपुत्राप्तान्[१] प्राणान् वित्तमिदं परम् ॥ ५३ ॥

हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे । मयि निर्बद्धहृदयाः साधवः समदर्शिनः ॥ ५४ ॥

वशे कुर्वन्ति[२] मां भक्त्या सत्स्त्रियः सत्पतिं यथा । मत्सेवायाः प्रतीपं ते[३] सालोक्यादिचतुष्टयम् ॥

नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत् कालविप्लुतम् । साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् ॥ ५६ ॥

मदन्यत् ते न जानन्ति नाहं तेभ्यो मनागपि । उपायं कथयिष्यामि तव विप्र शृणुष्व तत्* ॥ ५७ ॥

अयं ह्यात्माभिचारस्ते यतस्तं याहि[४] वै भवान् । साधुषु प्रहितं तेजः प्रहर्तुः कुरुते भयम्[५] ॥

तपो विद्या च विप्राणां निश्रेयसकरे उभे । त एव दुर्विनीतस्य कल्पेते[६] कर्तुरन्यथा ॥ ५९ ॥

ब्रह्मंस्तद् गच्छ भद्रं ते नाभागतनयं नृपम् । क्षमापय महाभागं ततः शान्तिर्भविष्यति ॥ ६० ॥

**श्रीशुक उवाच**

एवं भगवताऽऽदिष्टो दुर्वासाश्चक्रतापितः । अम्बरीषमुपावृत्य तत्पादौ दुःखितोऽग्रहीत् ॥ ६१ ॥

तस्य तद् व्यसनं वीक्ष्य पादस्पर्शविलज्जितः । अस्तावीत् तद्धरेरस्त्रं कृपया पीडितो भृशम् ॥ ६२ ॥

**अम्बरीष उवाच**

त्वमग्निर्भगवान् सूर्यस्त्वं सोमो ज्योतिषां पतिः । त्वमापस्त्वं क्षितिर्व्योम वायुर्मात्रेन्द्रियाणि च ॥

सुदर्शन नमस्तुभ्यं सहस्राराच्युतप्रिय । सर्वास्त्रघातिन् विप्राय स्वस्ति भूयादिडस्पते ॥ ६४ ॥

---

१. दारागारपुत्रादीन् २. वशीकुर्वन्ति ३. मत्सेवया प्रदिष्टं च
*. श्लोकार्धमिदं प्राचीनकोशेषु नास्ति । ४. यातु ५. कुरुतेऽप्रियम् ❋ ६. कल्प्येते ❋

त्वं धर्मस्त्वं धृतिः सत्यं त्वं यज्ञोऽखिलयज्ञभुक् । त्वं लोकपालः सर्वात्मा त्वं तेजः पौरुषं परम् ॥

नमः सुनाभाखिलधर्मसेतवे अधर्मशीलासुरधूमकेतवे ।
त्रैलोक्यगोपाय विशुद्धवर्चसे मनोजवायाद्भुतकर्मणेऽस्तु ते ॥ ६६ ॥

यदा विसृष्टस्त्वमनञ्जनेन वै बलं प्रविश्योर्जितदैत्यदानवम् ।
बाहूदरोर्वङ्घ्रिशिरोधराणि वृक्णन्नजस्रं[१] प्रधने विराजसे ॥ ६७ ॥

त्वत्तेजसा धर्ममयेन संहृतं[२] तमः प्रकाशश्च दृशोर्महात्मनाम् ।
दुरत्ययस्ते महिमा गिराम्पते त्वद्रूपमेतत् सदसत् परावरम्[३] ॥ ६८ ॥

स त्वं जगत्त्राणखलप्रहाणये निरूपितः सर्वसहो गदाभृता ।
विप्रस्य[४] चास्मत्कुलदैवहेतवे विधेहि भद्रं तदनुग्रहो हि नः ॥ ६९ ॥

यद्यस्ति दत्तमिष्टं वा स्वधर्मो वा स्वनुष्ठितः । कुलं नो विप्रदैवं चेद् द्विजो भवतु विज्वरः ॥ ७० ॥

यदि मे भगवान् प्रीत एकः सर्वगुणाश्रयः । सर्वभूतात्मभावेन द्विजो भवतु विज्वरः ॥ ७१ ॥

**श्रीशुक उवाच**

इति संस्तुवतो राज्ञो विष्णुचक्रं सुदर्शनम् । अशाम्यत् सर्वतो विप्रं प्रदहद् राजयाच्ञया ॥ ७२ ॥

स मुक्तोऽस्त्राग्नितापेन दुर्वासाः स्वस्तिमांस्ततः । प्रशशंस तमुर्वीशं युञ्जानः परमाशिषः ॥ ७३ ॥

**दुर्वासा उवाच**

अहो अनन्तदासानां महित्वं दृष्टमद्य मे । कृतागसोऽपि यद् राजन् मङ्गळानि समीहसे ॥ ७४ ॥

दुष्करं किन्नु साधूनां[५] दुस्त्यजं वा महात्मनाम् । यैःसङ्गृहीतो भगवान् सात्वतामृषभो हरिः ॥७५॥

यन्नामश्रुतिमात्रेण पुमान् भवति निर्मलः । तस्य तीर्थपदः किं वा दासानामवशिष्यते ॥ ७६ ॥

राजन्ननुगृहीतोऽहं त्वयाऽतिकरुणात्मना । ममाघं पृष्ठतः कृत्वा प्राणा यन्मेऽभिरक्षिताः ॥ ७७ ॥

राजाऽमुमकृताहारं[६] प्रत्यागमनकाङ्क्षया । चरणावुपसङ्गृह्य प्रसाद्य समभोजयत् ॥ ७८ ॥

सोऽशित्वाऽऽदृतमानीतमातिथ्यं सार्वकामिकम् । तृप्तात्मा नृपतिं प्राह भुज्यतामिति सादरम् ॥

प्रीतोऽस्म्यनुगृहीतोऽस्मि तव भागवतस्य वै । दर्शनस्पर्शनालापैरातिथ्येनात्ममेधसा ॥ ८० ॥

---

१. नुदन्नजस्रम् ❋　२. सम्भृतम् ❋　३. परापरम्　४. विप्राय
५. दुष्करः को नु साधूनाम् ❋　६. राजा तमकृताहारः

कर्मावदातमेतत् ते गायन्ति स्वःस्त्रियो मुहुः[1] । कीर्तिं परमपुण्यां च कीर्तयिष्यति भूरियम्।। ८१ ।।

**श्रीशुक उवाच**

एवं सङ्कीर्त्य राजानं दुर्वासाः परितोषितः । ययौ विहायसाऽऽमन्त्र्य ब्रह्मलोकमहैतुकम् ।। ८२ ।।

संवत्सरोऽत्यगात् तावत् यावत्तं[2] नागतो गतः । मुनिस्तद्दर्शनाकाङ्क्षी राजाऽब्भक्षो बभूव ह ।।

गतेऽथ दुर्वाससि सोऽम्बरीषो द्विजोपयोगातिपवित्रमाहरन्[3] ।
ऋषेर्विमोक्षं व्यसनाच्च बुद्ध्वा मेने स्ववीर्यं च परानुभावम् ।। ८४ ।।

एवंविधानेकगुणः स राजा परात्मनि ब्रह्मणि वासुदेवे ।
क्रियाकलापैः समुवाह भक्तिं यया विरिञ्चादिमधश्चकार ।। ८५ ।।

अथाम्बरीषस्तनयेषु राज्यं समानशीलेषु विसृज्य धीरः ।
वनं विवेशात्मनि वासुदेवे मनो दधद् ध्वस्तगुणप्रवाहः ।। ८६ ।।

इत्येतत् पुण्यमाख्यानमम्बरीषस्य भूपतेः । सङ्कीर्तयन्ननुध्यायन् भक्तो भगवतो भवेत् ।। ८७ ।।

**।। इति श्रीमद्भागवते नवमस्कन्धे षष्ठोऽध्यायः ।।**

---

**श्रीशुक उवाच**

विरूपः केतुमाञ्छम्भुरम्बरीषसुतास्त्रयः । विरूपात् पृषदश्वोऽभूत् तत्पुत्रस्तु रथीतरः ।। १ ।।

रथीतरस्याप्रजस्य भार्यायां तन्तवेऽर्थितः[4] । अङ्गिरा जनयामास ब्रह्मवर्चस्विनः सुतान् ।। २ ।।

एते क्षत्रप्रसूता वै पुनश्चाङ्गिरसः स्मृताः । रथीतराणां प्रवराः क्षत्रोपेता द्विजातयः ।। ३ ।।

क्षुवतस्तु मनोर्जज्ञे इक्ष्वाकुर्घ्राणतः सुतः । तस्य पुत्रशतज्येष्ठा विकुक्षिनिमिदण्डकाः ।। ४ ।।

तेषां पुरस्तादभवन् आर्यावर्ते नृपा नृप । पञ्चविंशति पश्चाच्च त्रयो मध्येऽपरेऽन्यतः ।। ५ ।।

स एकदाऽष्टकाश्राद्ध इक्ष्वाकुः सुतमादिशत् । मांसमानीयतां मेध्यं विकुक्षे गच्छ माचिरम् ।। ६ ।।

तथेति स वनं गत्वा मृगान् हत्वा क्रियार्हकान्[5] । श्रान्तो बुभुक्षितो वीरः शशमाददपस्मृतिः ।। ७ ।।

शेषं निवेदयामास पित्रे तेन च तद्गुरुः । चोदितः प्रोक्षणायाह दुष्टमेतदकर्मकम् ।। ८ ।।

---

१. प्रगायन्ति भुवो मुहुः ❋ ८. यावता ❋ ३. द्विजोपभोगाति.....
४. भार्यायास्तन्तवे ❋ ५. क्रियार्हणान्

ज्ञात्वा पुत्रस्य तत्कर्म गुरुणाऽभिहितं नृपः। देशान्निस्सारयामास सुतं त्यक्तविधिं रुषा ॥ ९ ॥
स तु विप्रेण संवादं जापकेन समाचरन्। त्यक्त्वा कळेबरं योगी स तेनावाप यत्परम् ॥ १० ॥
पितर्युपरतेऽभ्येत्य विकुक्षिः पृथिवीमिमाम्। शासन्नीजे हरिं यज्ञैः शशाद इति विश्रुतः* ॥ ११ ॥
पुरञ्जयस्तस्य सुत इन्द्रवाह इतीरितः। ककुत्स्थ इति वाऽप्युक्तः शृणु नामानि कर्मभिः ॥ १२ ॥
कृतान्त आसीत् समरो देवानां सह दानवैः। पार्ष्णिग्राहो वृतो धीरो देवैर्दैत्यपराजितैः ॥ १३ ॥
वचनाद्देवदेवस्य विष्णोर्विश्वात्मनः प्रभोः। वाहनत्वे वृतस्तस्य बभूवेन्द्रो महावृषः ॥ १४ ॥
स सन्नद्धो धनुर्दिव्यमादाय विशिखान् शितान्। स्तूयमानस्तमारुह्य युयुत्सुः ककुदि स्थितः ॥ १५ ॥
तेजसा व्यापितो विष्णोः पुरुषस्य महात्मनः। प्रतीच्यां दिशि दैत्यानां न्यरुणत् त्रिदशैः पुरम् ॥
तैस्तस्य चासीत् तुमुलं प्रधनं रोमहर्षणम्। यमाय फल्लैरनयद् दैत्यान् येऽभिययुर्मृधे ॥ १७ ॥
तस्येषुपाताभिमुखं युगान्ताग्निमिवोद्बणम्। विसृज्य दुद्रुवुर्दैत्या हन्यमानाः स्वमालयम् ॥ १८ ॥
जित्वा पुरुधनं सर्वमयच्छद् वज्रपाणये[१]। प्रत्ययच्छत् स राजर्षिरिति नामभिराहुतः ॥ १९ ॥
पुरञ्जयस्य पुत्रोऽभूदनेनास्तत्सुतः पृथुः। विश्वगन्धिस्ततश्चन्द्रो[२] युवनाश्वस्तु तत्सुतः ॥ २० ॥
[३]शाबस्तिस्तत्सुतो येन शाबस्ती निर्मिता पुरी। बृहदश्वस्तु शाबस्तेस्ततः कुवलयाश्वकः ॥ २१ ॥
यः प्रियार्थमुदङ्कस्य धुन्धुनामासुरं बली। सुतानामेकविंशत्या सहस्रैरहनद् वृतः ॥ २२ ॥
धुन्धुमार इति ख्यातस्तत्सुतास्तेऽथ जज्वलुः[४]। धुन्धोर्मुखाग्निना सर्वे त्रय एवावशेषिताः ॥ २३ ॥
दृढाश्वः कपिलाश्वश्च भद्राश्व इति भारत। दृढाश्वपुत्रो हर्यश्वो निकुम्भस्तत्सुतः स्मृतः ॥ २४ ॥
बर्हिणाश्वो[५] निकुम्भस्य कृशाश्वोऽप्यस्य सेनजित्। युवनाश्वोऽभवत् तस्य सोऽनपत्यो वनं गतः ॥
भार्याशतेन निर्विण्ण ऋषयोऽस्य कृपाळवः। इष्टिं स्म वर्तयाश्चक्रुरैन्द्रीं ते सुसमाहिताः ॥ २६ ॥
राजा तद्यज्ञसदनं प्रविष्टो निशि तर्षितः। दृष्ट्वा शयानान् विप्रांस्तान् पपौ मन्त्रजलं स्वयम्[६] ॥ २७ ॥
उत्थितास्ते निशाम्याथ व्युदकं कलशं प्रभो। पप्रच्छुः कस्य कर्मेदं पीतं पुंसवनं जलम् ॥ २८ ॥
राज्ञा पीतं विदित्वा तु ईश्वरप्रहितेन ते। ईश्वराय नमश्चक्रुरहो दैवबलं बलम् ॥ २९ ॥
ततः काल उपावृत्ते कुक्षिं निर्भिद्य दक्षिणम्। युवनाश्वस्य तनयश्चक्रवर्ती जजान ह ॥ ३० ॥

---

* प्राचीनकोशमात्रस्थमिदं श्लोकार्धम्। १. सर्वं सश्रीकं वज्रपाणये २. विश्वगान्धिः सुतश्चन्द्रः ❋
३. शावस्तिरित्यर्वाचीनपाठः ४. ते प्रजज्वलुः ५. बर्हणाश्वः ६. मन्त्रजलं शुचि ❋

कं धास्यतिकुमारोऽयं स्तन्यो रोरूयते भृशम् । मां धाता वत्स[१] मा रोदीरितीन्द्रो देशिनीमदात् ॥

न ममार पिता तस्य विप्रदेवप्रसादतः । युवानाश्वोऽथ तत्रैव तपसा सिद्धिमभ्यगात् ॥ ३२ ॥

त्रसद्दस्युरितीन्द्रोऽङ्ग विदधे नाम तस्य वै । यस्मात् त्रसन्ति ह्युद्विग्रा दस्यवो वारणादयः[२] ॥ ३३ ॥

यौवनाश्वोऽथ मान्धाता चक्रवर्त्यवनीं प्रभुः । सप्तद्वीपवतीमेकः शशासाच्युततेजसा ॥ ३४ ॥

ईजे च यज्ञं क्रतुभिरात्मविद् भूरिदक्षिणैः । सर्वदेवमयं देवं सर्वात्मकमतीन्द्रियम् ॥ ३५ ॥

द्रव्यं मन्त्रो विधिर्यज्ञो यजमानस्तथर्त्विजः । धर्मो देशश्च कालश्च सर्वमेतद् यदात्मकम् ॥ ३६ ॥

यावत् सूर्य उदेति स्म यावच्चन्द्रः प्रतिष्ठति । सर्वं तद् यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥ ३७ ॥

शशबिन्दोर्दुहितरि बिन्दुमत्यामधान्नृपः । पुरुकुत्समम्बरीषं च मुचुकुन्दं च योगिनम् ॥ ३८ ॥

तेषां स्वसारः पञ्चाशत् सौभरिं वव्रिरे पतिम् ॥ ३९ ॥

यमुनान्तर्जले मग्नस्तप्यमानः परं तपः । निर्वृतिं मीनराजस्य वीक्ष्य मैथुनधर्मिणः ॥ ४० ॥

जातस्पृहो नृपं विप्रः कन्यामेकामयाचत । सोऽप्याह गृह्यतां ब्रह्मन् कामं कन्या[३] स्वयंवरे ॥ ४१ ॥

स विचिन्त्याप्रियः[४] स्त्रीणां [५]जरढोऽयमसम्मतः । वलीपलित एजत्क इत्यहं प्रत्युदाहृतः ॥ ४२ ॥

साधयिष्ये तथाऽऽत्मानं सुरस्त्रीणामपीप्सितम् । किं पुनर्मनुजस्त्रीणामिति व्यवसितः प्रभुः ॥ ४३ ॥

मुनिः प्रवेशितः क्षत्त्रा कन्यान्तःपुरमृद्धिमत् । वृतश्च राजकन्याभिरेकः पञ्चाशता वरः ॥ ४४ ॥

तासां कलिरभूद् भूयांस्तदर्थेऽपोह्य सौहृदम् । ममानुरूपो नायं व इति तद्गतचेतसाम् ॥ ४५ ॥

स बह्वृचस्ताभिरवारणीयश्रिया विराजत्सपरिच्छदेषु[६] ।
गृहेषु नानोपवनामलाम्भःप्रसूनसौगन्धिककाननेषु[७] ॥ ४६ ॥

महार्हशय्यासनवस्त्रभूषणस्नानानुलेपाभ्यवहारमाल्यकैः ।
स्वलङ्कृतस्त्रीपुरुषेषु नित्यदा रेमेऽनुगायद्द्विजवृन्दवन्दिषु[८] ॥ ४७ ॥

यद्गार्हस्थ्यं तु संवीक्ष्य सप्तद्वीपवतीपतिः । विस्मितः स्तम्भमजहात् सार्वभौमश्रियाऽन्वितम्[९] ॥

एवं गृहेष्वभिरतो विषयान् विविधैर्मुखैः । सेवमानो न चातृप्यदाज्यस्तोकैरिवानलः ॥ ४९ ॥

---

१. मां धातर्वत्स २. रावणादयः ३. कन्याः ❋ ४. विचिन्त्याप्रियम् ❋ ५. जरठः

६. अवारणीयतपःश्रियाऽनर्घ्यपरिच्छदेषु ❋ ७. अमलाम्भःसरस्सु सौगन्धिककाननेषु ❋

८. द्विजभृङ्गवन्दिषु ❋ ९. .....श्रियाऽन्वितः

स कदाचिदुपासीन आत्मापह्नवमात्मना । ददर्श बह्वृचाचार्यो मीनसङ्गसमुत्थितम् ॥ ५० ॥

अहो इमं पश्यत मे विनाशं तपस्विनः सच्चरितव्रतस्य[१] ।
अन्तर्जले वारिचरप्रसङ्गात् प्रस्रावितं ब्रह्म चिरं धृतं यत् ॥ ५१ ॥

सङ्गं त्यजेत मिथुनव्रजिनान्मुमुक्षुः सर्वात्मना न विसृजेद् बहिरिन्द्रियाणि ।
एकश्चरन् रहसि चित्तमनन्त ईशे युञ्जीत तद्व्रतिषु साधुषु चेत् प्रसङ्गः ॥ ५२ ॥

एकस्तपस्व्यहमथाम्भसि मत्स्यसङ्गात् पञ्चाशताथ सुतपञ्चसहस्रसङ्गः ।
नान्तं व्रजाम्युभयकृत्यमनोरथानां मायागुणैर्हृतमतिर्विषयेऽर्थभावः ॥ ५३ ॥

एवं वसन् गृहे कालं विरक्तो न्यासमास्थितः । वनं जगामानुययुस्तत्पत्न्यः पतिदेवताः ॥ ५४ ॥
तत्र तप्त्वा तपस्तीक्ष्णमात्मकर्शनमात्मवित् । सहैवाग्निभिरात्मानं युयोज परमात्मनि ॥ ५५ ॥
ताश्च पत्युर्महाराज निरीक्ष्याध्यात्मिकीं गतिम् । अन्वीयुस्तत्प्रभावेण शान्तमग्निमिवार्चिषः ॥ ५६ ॥
मान्धातृपुत्रप्रवरो योऽम्बरीषः प्रकीर्तितः । मातामहेन प्रवृतो युवनाश्वस्तु तत्सुतः ॥ ५७ ॥
हरितस्तस्य पुत्रोऽभून्मान्धातृप्रवरा इमे । नर्मदा भ्रातृभिर्दत्ता पुरुकुत्साय चोरगैः ॥ ५८ ॥
तया रसातळं नीतो भुजगेन्द्रप्रयुक्तया । गन्धर्वान् सोऽवधीत् तत्र वध्रचश्वान्[२] विष्णुशक्तिधृक् ॥
नागाल्लब्धवरः सर्पादभयं स्मरतामिमम्[३] । त्रसदस्युः पौरुकुत्सो योऽनरण्यस्य देहकृत् ॥ ६० ॥
हर्यश्वस्तत्सुतस्तस्मादरुणोऽथ[४] त्रिबन्धुरः । तस्य सत्यव्रतः पुत्रस्त्रिशङ्कुरिति विश्रुतः ॥ ६१ ॥
प्राप्तश्चण्डालतां शापाद् गुरोः कौशिकतेजसा । सशरीरो गतः स्वर्गमद्यापि दिवि दृश्यते ॥ ६२ ॥
पातितोऽवाक्शिरा देवैस्तेनैव स्तम्भितो बलात् । त्रैशङ्कवो[५] हरिश्चन्द्रो विश्वामित्रवसिष्ठयोः ॥
यन्निमित्तमभूद् युद्धं पक्षिणोर्बहुवार्षिकम्[६] । सोऽनपत्यो विषण्णात्मा नारदस्योपदेशतः ।
वरुणं शरणं यातः पुत्रो मे जायतां प्रभो ।यदि वीरो महाराज तेनैव त्वां यजे इति[७] ॥ ६४ ॥
तथेति वरुणेनोक्ते पुत्रो जातस्तु रोहितः । जातः सुतस्तेऽनेनाङ्ग मां यजस्वेति सोऽब्रवीत् ॥ ६५ ॥
यदा पशुर्निर्दशः स्यादथ मेध्यो भवेदिति । निर्दशे च समागत्य यजस्वेत्याह सोऽब्रवीत् ॥ ६६ ॥
दन्ताः पशोर्यज्जायेरन्नथ मेध्यो भवेदिति । जाता दन्ता यजस्वेति स एत्याहाथ सोऽब्रवीत्॥ ६७ ॥

---

१. सच्चरितव्रतस्य २. वन्ध्रग्रश्वान् * ३. स्मरतामिदम्* ४. त्र्यरुणोऽथ *
५. त्रिशङ्कुतः * ६. दिव्यवार्षिकम् * ७. यजा इति *

यदा पतन्त्यस्य दन्ता अथ मेध्यो भवेदिति । पशोर्निपतिता दन्ता यजस्वेत्याह सोऽब्रवीत्।। ६८ ।।
यदा पशोः पुनर्दन्ता जायन्तेऽथ पशुः शुचिः । पुनर्जाता यजस्वेति स एत्याहाथ सोऽब्रवीत् ।। ६९ ।।
सान्नाहुको यदा राजन् राजन्योऽथ शुचिः पशुः । इति पुत्रानुरागेण स्नेहयन्त्रितचेतसा ।। ७०।।
कालं वञ्चयता तं तमुक्तो[1] देवस्तमैक्षत । रोहितस्तदभिज्ञाय पितुः कर्म चिकीर्षितम् ।। ७१ ।।
प्राणप्रेप्सुर्धनुष्पाणिररण्यं प्रत्यपद्यत । पितरं वरुणग्रस्तं श्रुत्वा जातमहोदरम् ।। ७२ ।।
रोहितो ग्राममेयाय तमिन्द्रः प्रत्यषेधत । भूमेः पर्यटनं पुण्यं तीर्थक्षेत्रनिषेवणैः ।। ७३ ।।
रोहितायादिशच्छक्रः सोऽप्यरण्येऽचरत् समाः । एवं द्वितीये तृतीये चतुर्थे पञ्चमे तथा ।। ७४ ।।
अभ्येत्याभ्येत्य स्थविरो विप्रो भूत्वाऽऽह[2] वृत्रहा । षष्ठं संवत्सरं तत्र चरित्वा रोहितः पुरीम् ।।
उपव्रजन्नजीगर्तादक्रीणान्मध्यमं सुतम् । शुनःशेपं पशुं पित्रे प्रदाय समवन्दत ।। ७६ ।।
ततः पुरुषमेधेन हरिश्चन्द्रो महायशाः । मुक्तोदरोऽयजद् देवान् वरुणादीन् महाक्रतौ ।। ७७ ।।
विश्वामित्रोऽभवत् तस्मिन् होताऽध्वर्युरथात्मवान् । जमदग्निरभूद् ब्रह्मा वसिष्ठोऽयास्य सामगः ।।
तस्मै तुष्टो ददाविन्द्रः शातकौम्भमयं रथम् । शुनःशेपस्य माहात्म्यमुपरिष्टात् प्रचक्षते ।। ७९ ।।
सत्यसारं धृतिं दृष्ट्वा सभार्यस्य च भूपतेः । विश्वामित्रो भृशं प्रीतो ददावविहतां गतिम् ।। ८० ।।
मनः पृथिव्यां तामद्भिस्तेजसाऽम्भोऽनिलेन तत्[3] । खे वायुं धारयंस्तच्च शब्दादौ तन्महात्मनि ।।
तस्मिन् ज्ञानकलां ध्यात्वा तयाऽज्ञानं विनिर्दहन् । हित्वा तां स्वेन भावेन निर्वाणसुखसंविदा ।
अनिर्देश्याप्रतर्क्येण तस्थौ विध्वस्तबन्धनः ।। ८२ ।।

**।। इति श्रीमद्भागवते नवमस्कन्धे सप्तमोऽध्यायः ।।**

---

**श्रीशुक उवाच**

हरितो रोहितादासीच्चम्पस्तस्माद् विनिर्मिता । चम्पापुरी सुदेवोऽतो विजयो यस्य चात्मजः ।। १ ।।
भरुकस्तत्सुतस्तस्माद् वृकस्तस्यापि बाहुकः । सोऽरिभिर्हृतराज्यस्तु सभार्यो वनमाविशत् ।। २ ।।
वृद्धं तं पञ्चतां प्राप्तं महिष्यनुमरिष्यती । और्वेण जानताऽऽत्मानं प्रजावन्तं निवारिता ।। ३ ।।

---

१. तत्तदुक्तः ❋ २. भूत्वाऽथ ❋ ३. तेजस्यापोऽनिले च तत् ❋

आज्ञायास्यै सपत्नीभिर्गरो दत्तोऽत्र साहसः । सह तेनैव सञ्जातः[१] सगराख्यो महायशाः ॥ ४ ॥
सगरश्चक्रवर्त्यासीत् सागरो यत्सुतैः कृतः[२] । यस्ताळजङ्घान् यवनाञ्छकान् हैहयबर्बरान् ॥ ५ ॥
नावधीद् गुरुवाक्येन चक्रे विकृतवेषिणः । मुण्डान् श्मश्रुधरान् कांश्चिन्मुक्तकेशार्धमुण्डितान् ॥ ६ ॥
अनन्तर्वाससः कांश्चिदबहिर्वाससोऽपरान् । सोऽश्वमेधैरयजत सर्ववेदसुरात्मकम् ॥ ७ ॥
और्वोपदिष्टयोगेन हरिमात्मानमीश्वरम् । तस्योत्सृष्टं पशुं यज्ञे जहाराश्वं पुरन्दरः ॥ ८ ॥
सुमत्यास्तनया दृप्ताः पितुरादेशकारिणः । हयमन्वेषमाणास्ते समन्तान्यखनन्[३] महीम् ॥ ९ ॥
प्रागुदीच्यां दिशि हयं ददृशुः कपिलान्तिके । एष वाजिहरश्चोर आस्ते मीलितलोचनः ॥ १० ॥
हन्यतां हन्यतां पाप इति षष्टिसहस्रिणः । उदायुधा अभिययुरुन्मिमेष तदा मुनिः ॥ ११ ॥
स्वशरीराग्निना तावन्महेन्द्रहृतचेतसः । महद्व्यतिक्रमहता भस्मसादभवन् क्षणात् ॥ १२ ॥

न साधुवादो मुनिकोपभर्जिता नृपेन्द्रपुत्रा इति सत्वधामनि ।
कथं तमो रोषमयं विभाव्यते जगत्पवित्रात्मनि खे रजो भुवः ॥ १३ ॥
यस्येरिता साङ्ख्यमयी दृढेह नौर्यया मुमुक्षुस्तरते दुरत्ययम् ।
भवार्णवं मृत्युपथं विपश्चितः परात्मभूतस्य कथं पृथङ्मतिः ॥ १४ ॥

योऽसमञ्जस इत्युक्तः स केशिन्यां नृपात्मजः । तस्य पुत्रोंऽशुमान् नाम पितामहहिते रतः ॥ १५ ॥
असमञ्जस आत्मानं दर्शयन्नसमञ्जसम् । जातिस्मरः पुरा सङ्गाद् योगी योगाद् विचालितः ॥ १६ ॥
आचरन् गर्हितं लोके ज्ञातीनां कर्म विप्रियम् । सरय्वां क्रीडतो बालान् प्रास्यदुद्वेजयञ्जनम् ॥ १७ ॥
एवंवृत्तः परित्यक्तः पित्रा स्नेहमपोह्य वै । योगैश्वर्येण बालांस्तान् दर्शयित्वा ततो ययौ ॥ १८ ॥
अयोध्यावासिनः सर्वे बालकान् पुनरागतान् । दृष्ट्वा विसिस्मिरे राजन् राजा चाप्यन्वतप्यत॥ १९ ॥
अंशुमांश्चोदितो राज्ञा तुरङ्गान्वेषणे ययौ । पितृव्यखातानुपथं[४] भस्मापि[५] ददृशे हयम् ॥ २० ॥
तत्रासीनं मुनिं वीक्ष्य कपिलाख्यमधोक्षजम् । अस्तौत् समाहितमनाः प्राञ्जलिः प्रयतो[६] महान् ॥

न पश्यति त्वां परमात्मनोऽजनो न बुद्ध्यते[७]ऽद्यापि समाधियुक्तिभिः ।
कुतोऽपरे तस्य मनःशरीरविसर्गसृष्टावयवप्रकाशाः[८] ॥ २२ ॥

---

१. न हतस्तेन सञ्जातः ❋ २. सागरोऽयं सुतैः कृतः ❋ ३. समन्तादखनन् ❋ ४. पितृव्यघातानुपथम् ❋ ५. भस्मान्ति ❋ ६. प्रणतः ७. न यस्य तत्वं परमार्थतोऽजनो विबुद्ध्यते ❋ ८. मनःशरीरधीविसर्ग..❋

ये देहभाजस्त्रिगुणप्रधाना गुणान् विपश्यन्त्युत वा तमश्च ।
यन्मायया मोहितचेतसस्ते विदुः स्वसंस्थं न बहिःप्रकाशाः ॥ २३ ॥
तं त्वामहं ज्ञानघनस्वभावं प्रध्वस्तमायामयभेदमोहैः ।
सनन्दनाद्यैर्मुनिभिर्विभाव्यं कथं विमूढः परिभावयामि ॥ २४ ॥
प्रशान्तमायागुणकर्मलिङ्गमनामरूपं[1] सदसद्विमुक्तम् ।
ज्ञानोपदेशाय गृहीतलिङ्गं नमामहे त्वां पुरुषं पुराणम् ॥ २५ ॥
यन्मायारचिते[2] लोके वस्तुबुद्ध्या गृहादिषु । भ्रमन्ति कामलोभेर्ष्यामोहविभ्रान्तचेतसः ॥ २६ ॥
अद्य नः सर्वभूतात्मन् कामकर्मेन्द्रियाशयः । मोहपाशो दृढश्छिन्नो भगवंस्तव दर्शनात् ॥ २७ ॥

**श्रीशुक उवाच**

इत्थं गीतानुभावस्तं भगवान् कपिलो मुनिः । अंशुमन्तमुवाचेदमनुगृह्य धिया नृप ॥ २८ ॥

**श्रीकपिल उवाच**

अश्वोऽयं नीयतां वत्स पितामहपशुस्तव । इमे च पितरो दग्धा गङ्गाम्भोऽर्हन्ति नेतरत् ॥ २९ ॥
तं परिक्रम्य शिरसा प्रसाद्य हयमानयत् । सगरस्तेन पशुना क्रतुशेषं समापयत् ॥ ३० ॥
राज्यमंशुमति न्यस्य निःस्पृहो मुक्तबन्धनः । और्वोपदिष्टमार्गेण लेभे गतिमनुत्तमाम् ॥ ३१ ॥
अंशुमांश्च तपस्तेपे गङ्गानयनकाम्यया[3] । कालं महान्तं नाशक्नोत् ततः कालेन संस्थितः ॥ ३२ ॥
दिलीपस्तत्सुतः तद्वदशक्तः कालमेयिवान् । भगीरथस्तस्य पुत्रस्तेपे स सुमहत्तपः ॥ ३३ ॥
दर्शयामास तं देवी प्रसन्ना वरदाऽस्मि ते । इत्युक्तः स्वमभिप्रायं शशंसावनतो भृशम् ॥ ३४ ॥

**गङ्गोवाच**

को विधारयिता वेगं पतन्त्या मे महीतळे । अन्यथा भूतळं भित्त्वा नृप यास्ये रसातळम् ॥ ३५ ॥
किं चाहं दुर्गतिं यास्ये नरा मय्यामृजन्त्यघम् । मृजामि तदघं क्रूरं राजंस्तत्र विविच्यताम्[4] ॥

**राजोवाच**

साधवो निराशिषः[5] शान्ता ब्रह्मिष्ठा लोकपावनाः । हरन्त्यघं तेऽङ्गसङ्गाद् ये प्राप्ताः स्वहृदा हरिम् ॥

---

१. मायागुणकामलिङ्ग...... ❋ २. त्वन्मायारचिते ❋ ३. गङ्गागमनकाम्यया
४. विचिन्त्यताम्❋ ५. साधवो न्यासिनः ❋

धारयिष्यति ते वेगं रुद्रस्त्वात्मा शरीरिणाम् । यस्मिन्नोतमिदं प्रोतं विश्वं शाटीव[१] तन्तुषु ॥ ३८ ॥
इत्युक्त्वा स नृपो देवीं तपसाऽतोषयच्छिवम् । कालेनाल्पीयसा राजंस्तस्येशः समतुष्यत[२] ॥
तथेति राज्ञाऽभिहितः सर्वलोकहितः शिवः । दधारावहितो गङ्गां पादपूतजलां हरेः ॥ ४० ॥
भगीरथोऽपि राजर्षिर्निन्ये भुवनपावनीम् । यत्र स्वपितृणां देहा भस्मभूताः[३] स्म शेरते ॥ ४१ ॥
रथेन वायुवेगेन प्रयान्तमनुधावती । देशान् पुनन्ती निर्दग्धानासिञ्चत् सगरात्मजान् ॥ ४२ ॥
यज्जलस्पर्शमात्रेण ब्रह्मदण्डहता अपि । सगरात्मजा दिवं जग्मुः केवलं देहभस्मभिः ॥ ४३ ॥
भस्मीभूताङ्गसङ्गेन[४] स्वर्याताः सगरात्मजाः । किं पुनः श्रद्धया देवीं ये सेवन्ते धृतव्रताः ॥ ४४ ॥
न ह्येतत् परमाश्चर्यं स्वर्धुन्या यदिहोदितम् । अनन्तचरणाम्भोजप्रभूतायाः[५] भवच्छिदः ॥ ४५ ॥
सन्निवेश्य मनो यस्मिन् श्रद्धया मुनयोऽमलाः । त्रैगुण्यं दुस्त्यजं हित्वा सद्यो यातास्तदात्मताम् ॥
श्रुतो भगीरथाज्जज्ञे तस्य नाभोऽपरोऽभवत् । सिन्धुद्वीपस्ततस्तस्मादयुतायुस्ततोऽभवत् ॥ ४७ ॥
ऋतुपर्णो नळसखो योऽश्वविद्यामयान्नळात् । दत्वाऽक्षहृदयं तस्मै सर्वकामस्तु तत्सुतः ॥ ४८ ॥
ततः सुदासस्तत्पुत्रो मदयन्तीपतिर्नृपः । आहुर्मित्रसहं यं वै कल्माषाङ्घ्रिमुत क्वचित्[६] ॥ ४९ ॥
वसिष्ठशापाद् रक्षोऽभूदनपत्यः स्वकर्मणा ॥ ५० ॥

राजोवाच

किन्निमित्तो गुरोः शापः सौदासस्य महात्मनः । एतद् वेदितुमिच्छामः कथ्यतां न रहो यदि ॥ ५१ ॥

श्रीशुक उवाच

सौदासो मृगयां किञ्चिच्चरन् रक्षो जघान ह । शुशोच भ्रातरं सोऽथ गतः प्रतिचिकीर्षया ॥ ५२ ॥
स चिन्तयन्नघं राज्ञः सूदरूपधरो गृहे । गुरवे भोक्तुकामाय पक्त्वा निन्ये नरामिषम् ॥ ५३ ॥
परिवेष्यमाणं भगवान् विलोक्याभक्ष्यमञ्जसा । राजानमशपत् क्रुद्धो रक्षो ह्येवं भविष्यसि ॥ ५४ ॥
रक्षःकृतं तद् विदित्वा चक्रे द्वादशवार्षिकम् । सोऽप्यपोऽञ्जलिनाऽऽदाय गुरुं शप्तुं समुद्यतः ॥ ५५ ॥
वारितो मदयन्त्याऽऽपो रुशतीः पादयोर्जहौ । दिशः खमवनीं सर्वां पश्यन् जीवमयीं नृपः॥ ५६ ॥
राक्षसं भावमापन्नः पादौ कल्माषतां गतौ[७] । व्यवायकाले ददृशे वनौकौ दम्पती द्विजौ ॥ ५७ ॥

---

१. इदं विश्वं राजन् शाटीव ❋ २. राजंस्तपसा चाप्यतुष्यत ❋ ३. भस्मीभूताः ❋
४. भस्मीकृताङ्गसङ्गेन ❋ ५. ...प्रसूतायाः ६. कल्माषाङ्घ्रिस्ततः क्वचित् ❋
७. पादे कल्माषतां गतः ❋

क्षुधार्तो जगृहे विप्रं तत्पत्न्याहाकृतार्थवत् । न भवान् राक्षसः साक्षादिक्ष्वाकूणां महारथः ॥ ५८ ॥
मदयन्त्याः पतिर्वीर नाधर्मं कर्तुमर्हति । देहि मेऽपत्यकामायास्त्वकृतार्थं पतिं द्विजम् ॥ ५९ ॥
देहोऽयं मानुषो राजन् पुरुषस्याखिलार्थदः । तस्मादस्य वधो वीर सर्वार्थवध उच्यते ॥ ६० ॥
एष हि ब्राह्मणो विद्वान् तपःशीलगुणान्वितः । आरिराधयिषुर्ब्रह्म महापुरुषसञ्ज्ञितम् ॥ ६१ ॥
सर्वभूतात्मभावेन भूतेष्वन्तर्हितं गुणैः । सोऽयं ब्रह्मर्षिवर्यस्ते राजर्षिप्रवराद् विभो ॥ ६२ ॥
कथमर्हति धर्मज्ञ वधं पितुरिवात्मजः । तस्य साधोरपापस्य भ्रूणस्य ब्रह्मवादिनः ॥ ६३ ॥
कथं वधं यथा बभ्रोर्मन्यते सम्मतो भवान् । यद्ययं क्रियते भक्ष्यस्तर्हि मां खाद पूर्वतः ॥ ६४ ॥
न जीविष्ये विना येन क्षणं च मृतकं यथा । एवं करुणभाषिण्यां विलपन्त्यामनाथवत्[१] ॥ ६५ ॥
व्याघ्रः पशुमिवाखादत् सौदासः शापमोहितः । ब्राह्मणी वीक्ष्य भर्तारं पुरुषादेन भक्षितम् ॥ ६६ ॥
शोचन्त्यात्मानमुर्वीशमशपत् कुपिता सती । यस्मान्मे भक्षितः पाप कामार्तायाः पतिस्त्वया ॥
तवापि मृत्युरापातादकृतप्रज्ञ[२] दर्शितः । एवं मित्रसहं शप्त्वा पतिलोकपरायणा ॥ ६८ ॥
तदस्थीनि समिद्धेऽग्नौ प्रास्य भर्तुर्गतिं गता । विशापो द्वादशाब्दान्ते मैथुनाय समुद्यतः ॥ ६९ ॥
विज्ञाय ब्राह्मणीशापं महिष्या स निवारितः । तत ऊर्ध्वं स तत्याज स्त्रीमुखं[३] कर्मणा प्रजाम्[४] ॥
वसिष्ठस्तदनुज्ञातो मदयन्त्यां प्रजामधात् । सा वै सप्त समा गर्भमबिभ्रन्न व्यजायत ॥ ७१ ॥
जघ्नेऽश्मनोदरं तस्मात् सोऽश्मकस्तेन कथ्यते । अश्मकान्मूलको जज्ञे यः स्त्रीभिः परिरक्षितः ॥
नारीकवच इत्युक्तो निःक्षत्रे मूलकोऽभवत् । ततो दशरथस्तस्मात् पुत्र ऐळिबिळिः स्मृतः[५] ॥
राजा विश्वसहो यस्य खट्वाङ्गश्चक्रवर्त्यभूत्[६] । यो देवैरर्थितो दैत्यानवधीद् दिवि[७] दुर्जयान् ॥
मुहूर्तमायुर्ज्ञात्वैत्य स्वपुरं सन्दधे मनः । न मे ब्रह्मकुलात् प्राणाः कुलदैवान्न चात्मजाः ॥ ७५ ॥
न श्रियो न मही राज्यं न दाराश्चातिवल्लभाः । न बाल्येऽपि मतिर्मह्यमधर्मे रमते क्वचित् ॥ ७६ ॥
नापश्यमुत्तमश्लोकादन्यत् किञ्चन वस्त्वहम् । देवैः कामवरो दत्तो मह्यं त्रिभुवनेश्वरैः ॥ ७७ ॥
न वृणे ह्यवमं[८] कर्म भूतभावनभावनात् । येऽविक्षिप्तेन्द्रियधियो देवास्ते स्वहृदि स्थितम् ॥ ७८ ॥
न विन्दन्ति प्रियं शश्वदात्मानं किमुतापरे ॥ ७९ ॥

---

१. करुणभाषिण्या विलपन्त्या अनाथवत् २. आधानादकृत.... ३. स्त्रीसुखम्
४. प्रजाः ❋ ५. ऐळिबिळिस्ततः❋ ६. घट्वाङ्गश्चक्र..... ❋ ७. युधि ८. ह्यवरम् ❋

अथेशमायारचितेषु सङ्गं गुणेषु गन्धर्वपुरोपमेषु ।
रूढं प्रकृत्याऽऽत्मनि विश्वभर्तुर्भावेन हित्वा तमहं प्रपद्ये ॥ ८० ॥

इति व्यवसितो बुद्ध्या नारायणगृहीतया । हित्वाऽन्यभावमज्ञानं ततः स्वं भावमास्थितः[१] ॥

यत् तद् ब्रह्म परं सूक्ष्ममशून्यं शून्यकल्पितम् । भगवान् वासुदेवेति यं गृणन्ति हि सात्वताः ॥ ८२ ॥

खट्वाङ्गाद्[२] दीर्घबाहुश्च रघुस्तस्मात् पृथुश्रवाः । अजस्तस्मान्महाराजस्तस्माद् दशरथोऽभवत् ॥

तस्यापि भगवानेष साक्षाद् ब्रह्ममयो हरिः । अंशांशेन चतुर्धाऽगात् पुत्रत्वं प्रार्थितः सुरैः ।
रामलक्ष्मणशत्रुघ्नभरताश्चेति सञ्ज्ञया ॥ ८४ ॥

तस्यानुचरितं राजन् ऋषिभिस्तत्त्वदर्शिभिः । श्रुतं हि वर्णितं भूरि त्वया सीतापतेर्मुहुः ॥ ८५ ॥

गुर्वर्थे त्यक्तराज्यो व्यचरदनुवनं पद्मपद्भ्यां प्रियायाः
पाणिस्पर्शाक्षमाभ्यां मृजितपथिरुजो यो हरीन्द्रानुजाभ्याम् ।
वैरूप्याच्छूर्पणख्याः प्रियविरहरुषाऽऽरोपितभ्रूविजृम्भः
श्रुत्वाऽऽविर्बद्धसेतुः खलदवदहनः कोसलेन्द्रोऽवतीर्णः[३] ॥ ८६ ॥

विश्वामित्राध्वरे येन मारीचाद्या निशाचराः । पश्यतो लक्ष्मणस्यैव हता नैर्ऋतपुङ्गवाः ॥ ८७ ॥

यो लोकवीरसमितौ धनुरैशमुग्रं सीतास्वयंवरमुखे[४] त्रिशतोपनेयम् ।
आदाय बालगजलील इवेक्षुदण्डं[५] सज्जीकृतं नृप विकृष्य बभञ्ज मध्ये ॥ ८८ ॥
जित्वाऽऽत्मरूपगुणशीलवयोनुरूपां सीताभिधां श्रियमुरस्यभिलब्धमानाम् ।
मार्गे व्रजन् भृगुपतेर्व्यनयत्[६] प्ररूढं दर्पं महीं कृतवतो हतराजबीजाम् ॥ ८९ ॥
यः सत्यपाशपरिवीतपितुर्निदेशं स्त्रैणस्य चापि शिरसा जगृहे सभार्यः।
राज्यश्रियं प्रणयिनः सुहृदोऽधिवासं त्यक्त्वा ययौ वनमसूनिव मुक्तसङ्गः ॥ ९० ॥
रक्षःस्वसुर्व्यकृत रूपमशुद्धबुद्धेस्तस्याः खरत्रिशिरदूषणमुख्यबन्धून् ।
जघ्ने चतुर्दशसहस्रमवारणीयकोदण्डपाणिरटमान उवास कृच्छ्रम् ॥ ९१ ॥
सीताकथाश्रवणदीपितहृच्छयेन[७] सृष्टं विलोक्य नृपते दशकन्धरेण ।
जघ्ने कृतैणवपुषा[८]ऽऽश्रमतोऽपकृष्टो मारीचमाशु विशिखेन यथाऽरिमुग्रः ॥ ९२ ॥

---

१. भावमाश्रितः❋ २. घड्वाङ्गाद् ❋ ३. कोसलेन्द्रोऽवतात्रः ४. स्वयम्बरमुखे ❋
५. इक्षुयष्टिम् ६. भृगुपतेरनयत् ❋ ७. ....हृच्छूयेण ❋ ८. जघ्नेऽद्भुतैणवपुषा ❋

रक्षोधमेन वृकवद् विपिनेऽसमक्षं वैदेहराजदुहितर्यपयापितायाम्[१] ।
भ्रात्रा वने कृपणवत् प्रियया वियुक्तः स्त्रीसङ्गिनामिति रतिं प्रथयंश्चचार ॥ ९३ ॥
दग्ध्वाऽऽत्मकृत्यहतकृत्यमहन् कबन्धं सख्यं विधाय कपिभिर्दयितागतिं तैः[२] ।
बुद्ध्वाऽथ वालिनि हते प्लवगेन्द्रसैन्यैर्वेलामगात् स मनुजोऽजभवार्चिताङ्घ्रिः ॥ ९४ ॥
यद्रोषतीव्रपरिवृत्तकटाक्षपातसम्भ्रान्तनक्रमकरो[३] भयगीर्णघोषः।
सिन्धुः शिरस्यर्हणं परिगृह्य रूपी पादारविन्दमुपगम्य बभाष एतत् ॥ ९५ ॥
तं त्वा वयं जडधियो न विदाम भूमन् कूटस्थमादिपुरुषं जगतामधीशम् ।
त्वं सत्त्वतः सुरगणान् रजसः प्रजेशान् मन्योश्च[४] भूतपतयः स भवान् गुणेशः ॥ ९६ ॥
कामं प्रयाहि जहि विश्रवसोऽवमेहं त्रैलोक्यरावणमवाप्नुहि वीर पत्नीम् ।
बध्नीहि सेतुमिह ते यशसो वितत्यै गायन्ति दिग्विजयिनो यमुपेत्य भूपाः ॥ ९७ ॥
बद्ध्वोदधौ रघुपतिर्विविधाद्रिकूटैः सेतुं कपीन्द्रकरकम्पितभूरुहाङ्गैः ।
सुग्रीवनीलहनुमत्प्रमुखैरनीकैर्लङ्कां विभीषणदृशाऽऽविशदाशु दग्धाम् ॥ ९८ ॥
सा वानरेन्द्रबलरुद्धविहारकोष्ठसद्वारगोपुरसदोवळभीविटङ्का ।[५]
[६]निर्भज्यमानधिषणध्वजहेमकुम्भशृङ्गाटका गजकुलैर्ह्रदिनीव घूर्णा ॥ ९९ ॥
रक्षःपतिस्तदवलोक्य निकुम्भकुम्भधूम्राक्षदुर्मुखसुरान्तनरान्तकादीन् ।
पुत्रं[७] प्रहस्तमतिकायविकम्पनादीन् सर्वानुगान् समहिनोदथ कुम्भकर्णम् ॥ १०० ॥
तां यातुधानपृतनामसिशूलचापप्रासर्ष्टिशक्तिशरतोमरखड्गदुर्गाम्[८] ।
सुग्रीवलक्ष्मणमरुत्सुतगन्धमादनीलाङ्गदर्क्षपनसादिभिरन्वितोऽयात् ॥ १०१ ॥
तेऽनीकपा रघुपतेरभिपत्य सर्वे द्वन्द्वं वरूथमिभपत्तिरथाश्वयोधम्[९] ।
जघ्नुर्द्रुमैर्गिरिगदेषुभिरङ्गदाद्याः सीताभिमर्शहतमङ्गलरावणेशम् ॥ १०२ ॥

---

१. अपवाहितायाम्❋ २. दयितागतिं तु ❋ ३. यद्रोषिविभ्रमविवृत्तकटाक्ष...❋
४. त्वन्येन ❋ ५. ...कोष्ठश्रीद्वार... ❋ ६. निर्भिद्यमान.... ❋
७. पुत्रान्..... ८. खड्गजुष्टान् ❋ ९. ... योधैः

रक्ष:पतिः स्वबलनष्टिमवेक्ष्य रुष्ट आरुह्य यानकमथाभिससार रामम् ।
स्वःस्यन्दने द्युमति मातलिनोपनीते विभ्राजमानमहनन्निशितैः क्षुरप्रैः ॥ १०३ ॥
रामस्तमाह पुरुषादपुरीष यन्नः कान्ताऽसमक्षमसताऽपहृता स्वयं ते[१] ।
त्यक्तत्रपस्य फलमद्य जुगुप्सितस्य इच्छामि काल इव कर्तुमलङ्घ्यवीर्यः[२] ॥ १०४ ॥
एवं क्षिपन् धनुषि सन्धितमुत्ससर्ज बाणं स वज्रमिव तद्धृदयं बिभेद ।
सोऽसृग् वमन् दशमुखैर्न्यपतद् विमानाद् हाहेति जल्पति जने सुकृतीव रक्षः ॥ १०५ ॥
ततो निष्क्रम्य लङ्काया यातुधान्यः सहस्रशः । मण्डोदर्या समं तस्मिन् प्ररुदन्त्य उपाद्रवन्॥ १०६ ॥
स्वान् स्वान् बन्धून् परिष्वज्य[३] लक्ष्मणेषुभिरर्दितान् । रुरुदुः सुस्वरं दीना घ्नन्त्य आत्मानमात्मना ॥
हा हताः स्म वयं नाथ लोकरावणरावण । कं यायाच्छरणं लङ्का त्वद्विहीना पराजिता[४] ॥ १०८ ॥
नैव वेद महाभाग भवान् कामवशं गतः । तेजोनुभावं सीताया येन नीतो दशामिमाम् ॥ १०९ ॥
कृतैषा विधवा लङ्का वयं च कुलनन्दन । देहः कृतोऽयं गृध्राणामात्मा नरकहेतवे ॥ ११० ॥

**श्रीशुक उवाच**

स्वानां विभीषणश्चक्रे कोसलेन्द्रानुमोदितः । पितृमेधविधानेन यदुक्तं साम्परायिकम् ॥ १११ ॥
ततो ददर्श भगवानशोकवनिकाश्रमे । क्षामां स्वविरहव्याधेः शिंशुपामूलमाश्रिताम् ॥ ११२ ॥
रामः प्रियतमां भार्यां दीनां वीक्ष्यान्वकम्पत । आत्मनो दर्शनाह्लादविकसन्मुखपङ्कजाम्[५] ॥
आरोप्यारुरुहे यानं भ्रातृभ्यां हनुमद्युतः । विभीषणाय भगवान् दत्वा रक्षोगणेशताम् ॥ ११४ ॥
लङ्कामायुश्च कल्पान्तं ययौ तीर्णव्रतः पुरीम् । अवकीर्यमाणः कुसुमैर्लोकपालार्पितैः पथि ॥ ११५ ॥
उपगीयमानचरितः शतधृत्यादिभिर्मुदा । गोमूत्रयावकं श्रुत्वा भ्रातरं वल्कलाम्बरम् ॥ ११६ ॥
महाकारुणिकोऽतप्यज्जटिलं स्थण्डिलेशयम् । भरतः प्राप्तमाकर्ण्य पौरामात्यपुरोहितैः ॥ ११७ ॥
पादुके शिरसि न्यस्य रामं प्रत्युद्यतोऽग्रजम् । नन्दिग्रामात् स्वशिबिरात्[६] गीतवादित्रनिस्वनैः ॥११८॥
ब्रह्मघोषेण च मुहुः पठद्भिर्ब्रह्मवादिभिः । स्वर्णकक्ष्यैर्गजैश्चापि हैमैश्चित्रध्वजै रथैः ॥ ११९ ॥
सदश्वै रुग्मसन्नाहैर्भटैः पुरटवर्मभिः[७] । श्रेणीभिर्वारमुख्याभिर्भृत्यैश्चागात् सदोद्यतैः ॥ १२० ॥

---

१. अपहृता शुनेव ❋ २. यच्छामि काल इव कर्तुरलङ्घ्यवीर्यः ❋ ३. स्वान् स्वान् परिष्वज्य पतीन् ❋
४. परार्दिता ५. आत्मसन्दर्शनाह्लाद... ६. नन्दिग्रामाच्च शिबिरात् ❋ ७. पटैः पुरटवर्त्मभिः ❋

पारमेष्ठ्यान्युपादाय भाण्डान्युच्चावचानि च[1] । पादयोर्न्यपतत् प्रेम्णा प्रक्लिन्नहृदयेक्षणः ।। १२१ ।।
पादुके न्यस्य पुरतः प्राञ्जलिर्बाष्पलोचनः । तमाश्लिष्य दृढं दोर्भ्यां स्नापयन् नेत्रजैर्जलैः ।। १२२ ।।
रामो लक्ष्मणसीताभ्यां विप्रेभ्यो येऽभवंस्ततः । तेभ्यः स्वयं नमश्चक्रे प्रजाभिश्च नमस्कृतः ।। १२३।।
धुन्वन्त उत्तरासङ्गं पतिं वीक्ष्य चिरागतम् । उत्तराः कोसला माल्यैः किरन्तो ननृतुर्मुदा ।। १२४ ।।
पादुके भरतोऽगृह्णाच्चामरव्यजने शुभे[2] । विभीषणः ससुग्रीवः श्वेतच्छत्रं मरुत्सुतः ।। १२५ ।।
धनुर्निषङ्गाञ्छत्रुघ्नः सीता तीर्थकमण्डलुम् । अबिभ्रदङ्गदः खड्गं हैमं चर्मर्क्षराण्नृप ।। १२६ ।।
पुष्पकस्थैर्वृतस्त्वेभिः स्तूयमानश्च वन्दिभिः । विरेजे भगवान् राजन् ग्रहैरिन्दुरिवोदितः[3] ।।१२७।।
भ्रातृभिर्नन्दितः[4] सोऽपि सोत्सवां प्राविशत् पुरीम् । प्रविश्य राजभवनं गुरुपत्नीं स्वमातरम्[5] ।।
गुरून् वयस्यावरजान् पूजितः प्रत्यपूजयत् । वैदेही लक्ष्मणश्चैव यथावत् समुपेयतुः[6] ।। १२९ ।।
पुत्रांस्तन्मातरस्तावत्[7] प्राणांस्तन्व इवोत्थिताः । आरोप्याङ्केऽभिषिञ्चन्त्यो बाष्पौघैर्विजहुः शुचः।।
जटा निर्मुच्य विधिवत् कुलवृद्धैः समं गुरुः । अभ्यषिञ्चद् यथैवेन्द्रं चतुःसिन्धुजलादिभिः ।। १३१ ।।
एवं कृतशिरःस्नानः सुवासाः सदलङ्कृतः । स्वलङ्कृतैः सुवासोभिर्भ्रातृभिर्भार्यया बभौ ।। १३२ ।।
अग्रहीदासनं भ्रात्रा प्रणिपत्य प्रसादितः । प्रजाः स्वधर्मनिरता वर्णाश्रमसमन्विताः[8] ।। १३३ ।।
जुगोप पितृवद् राजा[9] मेनिरे पितरं च तम् । त्रेतायां वर्तमानायां कालः कृतसमोऽभवत् ।।१३४।।
रामे राजनि धर्मज्ञे सर्वभूतसुखावहे । वनानि नद्यो गिरयो वर्षाणि द्वीपसिन्धवः ।। १३५ ।।
सर्वे कामदुघा आसन् प्रजानां भरतर्षभ । नाधिव्याधिजराक्षुत्तृड्दुःखशोकभयक्लमाः[10] ।। १३६ ।।
मृत्युश्चानिच्छतां नासीद् रामे राजन्यधोक्षजे । एकपत्नीव्रतधरो राजर्षिचरितः शुचिः ।। १३७ ।।
स्वधर्मं गृहमेधीयं शिक्षयन् स्वयमाचरन् । प्रेम्णाऽनुवृत्त्या शीलेन प्रश्रयावनता सती ।
भिया ह्रिया च भावज्ञा भर्तुः सीताऽहरन्मनः ।। १३८ ।।

**।। इति श्रीमद्भागवते नवमस्कन्धे अष्टमोऽध्यायः ।।**

---

१. पण्यान्युच्चावचानि च ❋ २. चामरव्यजनोत्तमे ३. ग्रहैश्चन्द्र इवोदितः ❋
४. भ्रात्राऽभिनन्दितः ❋ ५. गुरुपत्नीश्च मातरम् ६. यथायोग्यं प्रणेमतुः
७. पुत्रान् स्वमातरः ❋ ८. वर्णाश्रमगुणान्विताः ❋ ९. रामः १०. आधिव्याधि... ❋

श्रीशुक उवाच

भगवानात्मनाऽऽत्मानं राजन्नुत्तमकल्पकैः[१]। सर्वदेवमयं देवमीज आचार्यवान् मखैः ॥ १ ॥

होत्रेऽददाद्[२] दिशं प्राचीं ब्रह्मणे दक्षिणां विभुः। अध्वर्यवे प्रतीचीं च उदीचीं सामगाय सः ॥ २ ॥

आचार्यस्य ददौ शेषां[३] यावती भूस्तदन्तरा। मन्यमान इदं कृत्स्नं ब्राह्मणोऽर्हति निःस्पृहः ॥ ३ ॥

इत्यदात् स्वमलङ्कारं[४] वासोभ्यामवशेषितः। तथा राज्ञ्यपि वैदेही सौमङ्गल्यावशेषिता ॥ ४ ॥

ते तु ब्राह्मणदेवस्य वात्सल्यं वीक्ष्य सज्जनाः[५]। प्रीताः क्लिन्नधियस्तस्मै प्रत्यर्प्येदं बभाषिरे ॥ ५ ॥

अप्रत्तं नस्त्वया किन्नु भगवन् भुवनेश्वर। यतोऽन्तर्हृदि संविश्य तमो हंसि स्वरोचिषा ॥ ६ ॥

नमो ब्रह्मण्यदेवाय रामायाकुण्ठमेधसे। उत्तमश्लोकधुर्याय न्यस्ततन्वेऽर्पिताङ्घ्रये[६] ॥ ७ ॥

श्रीशुक उवाच

कदाचिल्लोकजिज्ञासुर्गूढो रात्र्यामलक्षितः। चरन् वचोऽशृणोद् रामो भार्यामुद्दिश्य कस्यचित् ॥ ८ ॥

नाहं बिभर्मि त्वां दुष्टामसतीं परवेश्मगाम्। स्त्रैणो हि[७] बिभृयात् सीतां रामो नाहं भजे पुनः ॥

इति लोकाद् बहुमुखाद् दुराराध्यादसंविदः। श्रुत्वा भीतेन सा त्यक्ता प्राप्ता प्राचेतसाश्रमम् ॥ १० ॥

अन्तर्वत्न्यागते काले यमौ सा सुषुवे सुतौ। कुशो लव इति ख्यातौ तयोश्चक्रे क्रिया मुनिः ॥ ११ ॥

अङ्गदश्चक्रकेतुश्च लक्ष्मणस्यात्मजौ स्मृतौ[८]। तक्षः पुष्कळ इत्यास्तां भरतस्य महीपते ॥ १२ ॥

सुबाहुः श्रुतसेनश्च[९] शत्रुघ्नस्य बभूवतुः। गन्धर्वान् कोटिशो जघ्ने भरतो विजये दिशाम्।
तदीयं धनमादाय[१०] सर्वं राज्ञे न्यवेदयत् ॥ १३ ॥

शत्रुघ्नश्च मधोः पुत्रं लवणं नाम राक्षसम्। हत्वा मधुवनं चक्रे मधुरां नाम वै पुरीम् ॥ १४ ॥

मुनौ निक्षिप्य तनयौ सीता भर्त्रा विवासिता। ध्यायन्ती रामचरणौ विवरं प्रविवेश ह ॥ १५ ॥

तच्छ्रुत्वा भगवान् रामो रुन्धन्नपि धिया शुचः। स्मरंस्तस्या गुणांस्तांस्तान् नाशक्नोद् रोद्धुमीश्वरः ॥

स्त्रीपुम्प्रसङ्ग एतादृक् सर्वत्र त्रासमावहः[११]। अपीश्वराणां किमुत ग्राम्यस्य गृहमेधिनः[१२] ॥ १७ ॥

---

१. राम उत्तमकल्पकैः २. होत्रे ददौ ❋ ३. शेषम् ❋ ४. तदलङ्कारान्
५. सत्सु तत् ❋ ६. न्यस्तदण्डार्पिताङ्घ्रये/न्यस्तदण्डेडिताङ्घ्रये ❋ ७. स्वैरं हि ❋
८. आत्मजावुभौ ❋ ९. शूरसेनश्च ❋ १०. धनमानीय
११. सर्वत्रापि भयावहः/सर्वत्रैव भयावहः❋ १२. गृहचेतसः ❋

तत ऊर्ध्वं ब्रह्मचर्यं धारयन्नजुहोत् प्रभुः । त्रयोदशाब्दसाहस्रमग्निहोत्रमखण्डितम् ॥ १८ ॥

स्मरतां हृदि विन्यस्य बुद्धं पद्ममिवांशुकैः[१] । स्वपादपल्लवं राम आत्मज्योतिरगात् ततः ॥ १९ ॥

नेदं यशो रघुपतेरिह विश्वमूर्तेर्लीलातनोरधिकशान्तविमुक्तधाम्नः[२] ।

रक्षोवधो जलधिबन्धनमस्त्रपाणेः किं तस्य शत्रुहनने कपयः सहायाः ॥ २० ॥

यस्यामलं नृपसदस्सु यशोऽधुनाऽपि गायन्त्यघघ्नमृषयो दिगिभेन्द्रपाते ।

तन्नाकपालवसुपालकिरीटजुष्टपादाम्बुजं रघुपतिं[३] शरणं प्रपद्ये ॥ २१ ॥

स यैः स्पृष्टोऽभिदृष्टो वा संविष्टोऽनुगतोऽपि वा[४] । कोसलास्ते ययुः स्थानं यत्र गच्छन्ति योगिनः ॥

पुरुषो रामचरितं श्रवणैरुपधारयन् । आनृशंस्यपरो राजन् कर्मबन्धैर्विमुच्यते ॥ २३ ॥

**राजोवाच**

कथं स भगवान् रामो भ्रातृबन्धुष्ववर्तत । प्रजास्वौरसवद् रामः कथं वा राम ईश्वरः ॥ २४ ॥

**श्रीशुक उवाच**

अथादिशद् दिग्विजये भ्रातॄंश्च त्रिदशेश्वरः[५] । आत्मानं दर्शयन् स्वानां पुरीमैक्षत सानुगः ॥ २५ ॥

आसिक्तमार्गां गन्धोदैः करिणां मदशीकरैः[६] । स्वामिनं प्राप्तमालोक्य मत्तां वा सुतरामिव ॥

प्रासादगोपुरसभाचैत्यदेवगृहादिषु । विन्यस्तहेमकलशैः पताकाभिश्च मण्डिताम् ॥ २७ ॥

पूगैः सवृन्तै रम्भाभिः पालिकाभिः सुवाससाम् । आदर्शैरंशुकैः स्रग्भिः कृतकौतुकतोरणाम् ॥ २८ ॥

तमुपेयुस्तत्र तत्र[७] पौरा अर्हणपाणयः । आशिषो युयुजुर्देव[८] पाहीमां प्राक् त्वयोद्धृताम् ॥

तं ताः प्रजा वीक्ष्य पतिं चिरागतं दिदृक्षयोत्सृज्य गृहान् स्त्रियो नराः ।

आरुह्य हर्म्याण्यरविन्दलोचनं नतृप्तनेत्राः कुसुमैरवाकिरन् ॥ ३० ॥

अथ प्रविष्टः स्वगृहं जुष्टं स्वैः पूर्वराजभिः । अनन्तगृहकोशाढ्यमनर्घ्योरुपरिच्छदम् ॥ ३१ ॥

विद्रुमोदुम्बरद्वारैर्वैडूर्यस्तम्भपङ्क्तिभिः । स्थलैर्मारकतैः स्वच्छैर्भातं[९] स्फटिकभित्तिभिः ॥ ३२ ॥

---

१. विद्धं दण्डककण्टकैः ❋ २. इह सुयाश्रयाऽऽत्तलीलातनोरधिकसाम्यविमुक्त.... ❋
३. जुष्टं पादाम्बुजं रघुपतेः ४. सृष्टोऽभिसृष्टो वा संविष्टोऽनुगतोऽपि वा ❋ ५. भ्रातॄन् त्रिभुवनेश्वरः ❋
६. मदसीकरैः ७. ततस्तत्र❋ ८. देवम् ❋ ९. मरतकस्वच्छैर्भातम् ❋

चित्रस्रग्भिः पट्टिकाभिर्वासोमणिगणांशुभिः[१] । मुक्तावलम्बैरुल्लासैः[२] कान्तकामोपपत्तिभिः ॥
धूपदीपैः सुरभिभिर्मण्डितं[३] पुष्पमण्डकैः । स्त्रीपुम्भिः सुरसङ्काशैर्जुष्टं भूषणभूषणैः ॥ ३४ ॥
तस्मिन् स भगवान् रामः स्निग्धया प्रिययेष्टया । रेमे स्वारामचाराणामृषभः सीतया सह ॥ ३५ ॥
बुभुजे च यथाकामं कामं धर्ममपीडयन्[४] । वर्षपूगान् बहून् नृणामभिध्येयाङ्घ्रिपल्लवः ॥ ३६ ॥

**॥ इति श्रीमद्भागवते नवमस्कन्धे नवमोऽध्यायः ॥**

---

कुशस्य चातिथिस्तस्मान्निषधस्तत्सुतो नभः । पुण्डरीकोऽथ तत्पुत्रः क्षेमधन्वाऽभवत् ततः ॥ १ ॥
देवानीकस्ततोऽहीनः पारियात्रोऽथ[५] तत्सुतः । ततो बलस्थलस्तस्माद्[६] वज्रनाभोऽर्कसम्भवः ॥
स्वगणस्तत्सुतस्तस्माद् निधृतश्चाभवत् सुतः । ततो हिरण्यनाभोऽभूद् योगाचार्यस्तु जैमिनेः ॥ ३ ॥
शिष्यः सकलमध्यात्मं याज्ञवल्क्योऽध्यगाद् यतः । योगं महोदयमृषिर्हृदयग्रन्थिभेदनम् ॥ ४ ॥
पुष्यो हिरण्यनाभस्य ध्रुवसन्धिस्ततोऽभवत् । सुदर्शनोऽथाग्निवर्णः शीघ्रस्तस्य मरुत् सुतः ॥ ५ ॥
योऽसावास्ते योगसिद्धः कलापग्राममास्थितः । कलेरन्ते सूर्यवंशं नष्टं भावयिता पुनः ॥ ६ ॥
तस्मात् तु सुश्रुतस्तस्य[७] सन्धिस्तस्यापि मर्षणः। महस्वांस्तत्सुतस्तस्माद् विश्वसाह्वो व्यजायत[८] ॥
ततो बृहद्बलो यस्तु पित्रा ते समरे हतः[९] । एते हीक्ष्वाकुभूपाला अतीताः शृण्वनागतान्[१०] ॥
बृहद्बलस्य भविता पुत्रो नाम्ना बृहद्रणः । उरुक्षयः सुतस्तस्य वत्सप्रीतो भविष्यति ॥ ९ ॥
प्रतिष्योमस्ततो भानुर्दिवौको[११] वाहिनीपतिः । सहदेवस्ततो भावी बृहदश्वोऽथ भानुमान् ॥ १० ॥
प्रतीकाश्वो भानुमतः सुप्रतीकोऽथ तत्सुतः । भविता मरुदेवोऽथ[१२] सुनक्षत्रोऽथ रुक्षकः ॥ ११ ॥
तस्यान्तरिक्षस्तत्पुत्रः सुतपास्तदमित्रजित् । बृहद्भ्रोजस्तु[१३] तस्यापि बर्हिस्तस्मात् कृतञ्जयः ॥
रणञ्जयस्तस्य सुतः सञ्जयो भविता ततः । तस्माच्छक्योऽथ[१४] शुद्धोदो लाङ्गलस्तत्सुतः स्मृतः ॥

---

१. मणिगणांशुकैः ❋ २. मुक्ताफलैश्चिदुल्लासैः ❋ ३. मण्डितैः/मण्डनैः
४. कामान् धर्मानपीडयन् ❋ ५. पारियात्रश्च /पारिपात्रश्च ६. ततो बण्डः शलस्तस्मात् ❋
७. तस्मात् प्रसुः सुतस्तस्य ❋ ८. विश्वसाह्वोऽन्वजायत/विश्वसाह्वानजायत ❋ ९. यस्तु भारते समरे हतः❋
१०. ...भूपाला अथ त्वं शृण्वनागतन् ❋ ११. दिवार्कः/दिवौकः ❋ १२. मेरुदेवोऽथ ❋
१३. बृहद्राजस्तु ❋ १४. शक्तोऽथ ❋

ततः प्रसेनजित् तस्माद् कुद्रको[1] भविता ततः। सुमित्रो नाम निष्ठान्तस्त्वेते[2] बार्हद्बला नृपाः ॥
इक्ष्वाकूणामयं वंशः सुमित्रान्तो भविष्यति। यतस्तं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ॥ १५ ॥

**॥ इति श्रीमद्भागवते नवमस्कन्धे दशमोऽध्यायः ॥**

---

**श्रीशुक उवाच**

निमिरिक्ष्वाकुतनयो वसिष्ठमवृतर्त्विजम्। आरभ्य सत्रं सोऽप्याह शक्रेण प्राग् वृतोऽस्मि भोः[3] ॥
तं निर्वर्त्यागमिष्यामि तावन्मां प्रतिपालय। तूष्णीमासीद् गृहपतिः सोऽपीन्द्रस्याकरोन्मखम् ॥ २ ॥
निमिः सत्रविदां विद्वान् सत्रमारभतात्मवान्। ऋत्विग्भिरपरैस्तावद् यावत् तन्नागमद् गुरुः[4] ॥
शिष्यव्यतिक्रमं वीक्ष्य निर्वर्त्य गुरुरागतः। अशपत् पततां देहो निमेः पण्डितमानिनः ॥ ४ ॥
निमिः प्रतिददौ शापं गुरवेऽधर्मवर्तिने। तवापि पततां देहो लोभाद्धर्ममजानतः ॥ ५ ॥
इत्युत्ससर्ज स्वं देहं निमिरध्यात्मकोविदः। मित्रावरुणयोर्जज्ञे ऊर्वश्यां प्रपितामहः।
गन्धवस्तुषु तद्देहं निधाय मुनिसत्तमाः। समाप्ते सत्रयागेऽथ देवानूचुः समागतान् ॥ ६ ॥
राज्ञो जीवतु देहोऽयं[5] प्रसन्नाः प्रभवो यदि[6]। तथेत्युक्ते निमिः प्राह मा भून्मे देहबन्धनम् ॥
यस्य योगं न वाञ्छन्तो वियोगभयकातराः। भजन्ति चरणाम्भोजं मुनयो हरिमेधसः ॥ ८ ॥
देहं नावरुरुत्सेऽहं दुःखशोकभयाश्रयम्। सर्वत्रास्य यतो मृत्युर्मत्स्यानामुदके यथा ॥ ९ ॥

**देवा ऊचुः**

विदेह उष्यतां कामं लोचनेषु शरीरिणाम्। उन्मेषणनिमेषाभ्यां लक्षितोऽध्यात्मसंस्थितः ॥ १० ॥

**श्रीशुक उवाच**

अराजकभयं नृणां मन्यमाना महर्षयः। देहं ममन्थुश्च निमेः कुमारः समजायत ॥ ११ ॥
जननाज्जनकः[7] सोऽभूद् वैदेहस्तु विदेहजः। मिथिलो मथनाज्जातो मिथिला येन निर्मिता ॥ १२॥
तस्मादुदावसुस्तस्य पुत्रोऽभून्नन्दिवर्धनः। ततः सुकेतुस्तस्यापि देवरातो महीपते ॥ १३ ॥
तस्माद् बृहद्रथस्तस्य महावीर्यः सुधृत्पिता। सुधृतेर्धृष्टकेतुर्वै हर्यश्वोऽथ मरुस्ततः ॥ १४ ॥
मरोः प्रतीन्धकस्तस्माज्जातः कृतिरथो यतः। देवमीढस्तस्य सुतो विधृतोऽथ महाधृतिः ॥ १५ ॥

---

१. क्षुद्रकः २. निष्णाते एते ❋ ३. भो ❋ ४. अपरैस्तावन्नागमद् यावता गुरुः❋
५. राज्ञो जीवेत् सुदेहोऽयम् ❋ ६. प्रसन्ना इह वो यदि ❋ ७. जन्मना जनकः ❋

कृतिरातस्ततस्तस्मान्महारोमाऽथ[१] तत्सुतः । स्वर्णरोमा सुतस्तस्य ह्रस्वरोमा व्यजायत[२] ॥
ततः सीरध्वजो जज्ञे यज्ञार्थं कर्षतो महीम् । सीता सीराग्रतो जज्ञे[३] तस्मात् सीरध्वजः स्मृतः ॥
कुशध्वजस्तस्य पुत्रस्ततो धर्मध्वजो नृपः । धर्मध्वजस्य द्वौ पुत्रौ कृतध्वजमितध्वजौ ॥ १८ ॥
कृतध्वजात् केशिध्वजः खाण्डिक्यस्तु मितध्वजात् । कृतध्वजसुतो राजन्नात्मविद्याविशारदः ॥ १९॥
खाण्डिक्यः कर्मतत्त्वज्ञो भीतः केशिध्वजाद् गतः । भानुमांस्तस्य पुत्रोऽभूच्छतद्युम्नस्तु तत्सुतः ॥
शुचिस्तत्तनयस्तस्मात् सनद्वाजस्ततोऽभवत् । ऊर्जकेतुः सनद्वाजादजोऽथ[४] कुरुजित्सुतः ॥ २१ ॥
अरिष्टनेमिस्तस्यापि श्रुतायुस्तत् सुपार्श्वकः[५] । ततश्चित्ररथो यस्य क्षेमापिर्मिथिलाधिपः[६] ॥ २२ ॥
तस्माद्धेमरथस्तस्य[७] सुतः सत्यरथस्ततः । आसीदुपगुरुस्तस्मादुपगुप्तोऽग्निसम्भवः ॥ २३ ॥
वैवस्वतोऽथ[८] तत्पुत्रो युयुधो यत् सुभाषणः[९] ।
श्रुतस्ततो जयस्तस्माद् विजयोऽस्माद् ऋतः सुतः[१०] ॥ २४ ॥
शुनकस्तत्सुतो[११] जज्ञे वीरहव्यो[१२] धृतिस्ततः । बहुळाश्वो धृतेस्तस्य कृतिरस्य[१३] महावशी ॥ २५ ॥
एते वै मिथिला राजन्नात्मविद्याविशारदाः । योगेश्वरप्रसादेन द्वन्द्वैर्मुक्ता गृहेष्वपि ॥ २६ ॥

**॥ इति श्रीमद्भागवते नवमस्कन्धे एकादशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

अथातः श्रूयतां राजन् वंशः सोमस्य पावनः । यस्मिन्नैळादयो भूपाः कीर्त्यन्ते पुण्यकीर्तयः॥ १ ॥
सहस्रशिरसः पुंसो नाभिह्रदसरोरुहात् । जातस्यासीत् सुतो धातुरत्रिः पितृसमो गुणैः ॥ २ ॥
तस्य दृग्भ्योऽभवत् पुत्रः सोमोऽमृतमयः किल । विप्रौषध्यम्बुगर्भाणां ब्रह्मणा कल्पितः पतिः ॥
सोऽयजद् राजसूयेन विजित्य भुवनत्रयम् । पत्नीं बृहस्पतेर्दर्पात् तारां नामाग्रहीद्[१४] बलात् ॥ ४ ॥

---

१. महारोमोऽथ ❋ २. प्रजायत ❋ ३. जाता ४. सनद्वाजादोजोऽथ/सनद्वाजादंशोऽथ ❋
५. सुपर्षकः ❋ ६. क्षेमोऽथ.....❋ ७. क्षेमरथस्तस्य ❋ ८. वस्वनन्तोऽथ ❋
९. तत्पुत्रः सुवर्चा वसुभाषणः ❋ १०. ततः सुतः ❋ ११. सुनन्दस्तत्सुतः ❋
१२. वीतिहव्यः ❋ १३. कृतिरस्मात् ❋ १४. नामाहरत् ❋

यदाऽसौ[१] देवगुरुणा याचितोऽभीक्ष्णशो मदात् । नात्यजत् तत्कृते जज्ञे सुरदानवविग्रहः ॥ ५ ॥

शुक्रो बृहस्पतेर्द्वेषादग्रहीत् सासुरोडुपम् । हरो गुरुं सुतस्नेहात्[२] सर्वभूतगणावृतः ॥ ६ ॥

सर्वदेवगणोपेतो महेन्द्रो गुरुमन्वयात् । सुरासुरविनाशोऽभूत् समरस्तारकामयः ॥ ७ ॥

निवेदितोऽजोऽङ्गिरसा सोमं निर्भर्त्स्य विश्वकृत् । तारां स्वभर्त्रे प्रायच्छदन्तर्वत्नीं बृहस्पतिः ॥ ८ ॥

गर्भं त्यजाशु दुष्प्रज्ञे मत्क्षेत्रादाहितं परैः । नाहं त्वां भस्मसात् कुर्यां स्त्रियं सान्तानिके सति ॥ ९ ॥

तत्याज व्रीळिता तारा कुमारं कनकप्रभम् ॥ १० ॥

स्पृहामाङ्गिरसश्चक्रे कुमारे सोम एव च । ममायं न तवेत्युच्चैस्तस्मिन् विवदमानयोः ॥ ११ ॥

पप्रच्छुर्ऋषयो देवा नावोचद् व्रीळिता तु सा । कुमारो मातरं प्राह कुपितोऽळीकलज्जया ॥ १२ ॥

किं न वोचस्यसद्वृत्ते पितरं मे वदाशु वै । न त्वां तु भस्मसात् कुर्यामात्मावद्यविगूहिनीम् ॥ १३ ॥

ब्रह्मा तं तु विनिर्भर्त्स्य[३] क्षेप्तारं मातुरन्तिके । तामाहूय समप्राक्षीद् रह एव तु सान्त्वयन्[४] ॥१४॥

सोमस्येत्याह शनकैः सोमस्तं तावदग्रहीत् । तस्यात्मयोनिरकृत बुध इत्यभिधां नृप ॥ १५ ॥

बुद्ध्या गम्भीरया येन पुत्रेणापोडुराण् मुदम् । ततः पुरूरवा जज्ञे इळायां य उदाहृतः ॥ १६ ॥

तस्य रूपगुणौदार्यशीलद्रविणविक्रमान् । श्रुत्वोर्वशीन्द्रभवने गीयमानान् सुरर्षिणा ॥ १७ ॥

तदन्तिकमुपेयाय देवी स्मरशरार्दिता । मित्रावरुणयोः शापादापन्ना नरलोकताम् ॥ १८ ॥

निशाम्य पुरुषश्रेष्ठं कन्दर्पमिव रूपिणम् । धृतिं विष्टभ्य[५] ललना उपतस्थे तदन्तिकम् ॥ १९ ॥

स तां विलोक्य नृपतिर्हर्षेणोत्फुल्ललोचनः । उवाच श्लक्ष्णया वाचा देवीं हृष्टतनूरुहः ॥ २० ॥

**राजोवाच**

स्वागतं ते वरारोहे आस्यतां करवाम किम् । संरमस्व मया साकं रतिर्नौ शाश्वतीः समाः ॥ २१ ॥

**उर्वश्युवाच**

कस्यास्त्वयि न सज्जेत मनो दृष्टिश्च सुन्दर[६] । यदङ्गान्न रमा याति स दृष्टो हरिराश्रयः[७] ॥ २२ ॥

एतावुरणकौ राजन् न्यस्तौ रक्षस्व मानद । संरंस्ये भवता साकं श्लाघ्यः स्त्रीणां वरः स्मृतः ॥ २३ ॥

घृतं मे वीर भक्ष्यं स्यान्नेक्षे त्वाऽन्यत्र मैथुनात् । विवाससं तत् तथेति प्रतिपेदे महामनाः ॥ २४ ॥

---

१. यदा सः   २. गुरुसुतस्नेहात्/गुरुं सुरस्नेहात् ❋   ३. विनिर्भर्त्स्य   ४. सान्त्वया

५. विहाय   ६. मानद ❋   ७. यदङ्गान्तरमायाति स दृष्टो हरिराश्रयः/यदङ्गान्तरमासाद्य च्यवते न रिरंसया ❋

अहो रूपमहो भावं नरलोकविमोहनम् । को न सेवेत मनुजो देवीं त्वां[१] स्वयमागताम् ॥ २५ ॥
तया स पुरुषश्रेष्ठो रमयन्त्या यथार्हतः । रेमे सुरविहारेषु कामं चैत्ररथादिषु ॥ २६ ॥
रममाणस्तया देव्या पद्मकिञ्जल्कगन्धया । तन्मुखामोदमुषितो मुमुदेऽब्दगणान् बहून् ॥ २७ ॥
अपश्यन्नूर्वशीमिन्द्रो[२] गन्धर्वान् समचोदयत् । उर्वशीरहितं[३] मह्यमास्थानं नातिशोभते[४] ॥
त उपेत्य महारात्रौ तमसि प्रत्युपस्थिते । ऊर्वश्या उरणौ जह्रुर्न्यस्तौ राजनि जायया ॥ २९ ॥
निशम्याक्रन्दितं[५] देवी पुत्रयोर्नीयमानयोः । हताऽस्म्यहं कुनाथेन नपुंसा वीरमानिना ॥ ३० ॥
यद्विस्रम्भादहं नष्टा हृतापत्या च दस्युभिः । यः शेते निशि सन्त्रस्तो यथा नारी दिवा पुमान् ॥
इति वाक्सायकैर्विद्धः प्रतोदैरिव कुञ्जरः । निशि निस्त्रिंशमादाय विवस्त्रोऽभ्यद्रवद् रुषा ॥ ३२ ॥
ते विसृज्योरणौ तत्र प्राद्योतन्त स्वविद्युता[६] । आदाय मेषावायान्तं नग्नमैक्षत सा पतिम् ॥ ३३ ॥
ऐळोऽपि शयने जायामपश्यन् विमना अभूत् । तच्चित्तो विक्लबः शोचन् बभ्रामोन्मत्तवन्महीम् ॥ ३४ ॥
स तां वीक्ष्य कुरुक्षेत्रे सरस्वत्यां च[७] तत्सखीः । पश्च प्रहृष्टवदनः[८] प्राह सूक्तं पुरूरवाः ॥
अहो जाये तिष्ठतिष्ठ घोरे न त्यक्तुमर्हसि । मन्त्रा अद्याप्यनिवृत्ता वचांसि कृणवावहै[९] ॥ ३६ ॥
सुदेवोऽयं पतत्यत्र देवि दूरं हृतस्त्वया[१०] । खादन्त्येनं वृका गृध्रास्त्वत्प्रसादस्य नास्पदम् ॥ ३७ ॥

उर्वश्युवाच

मा मृथाः पुरुषोऽसि त्वं मा स्म त्वाऽद्युर्वृका[११] इमे । क्वापि सख्यं न वै स्त्रीणां वृकाणां हृदयं यथा॥
स्त्रियो ह्यकरुणाः क्रूरा दुर्मर्षाः प्रियसाहसाः । घ्नन्त्यल्पार्थेऽपि विस्रब्धं पतिं भ्रातरमप्युत ॥ ३९ ॥
विधायाळीकविस्रम्भमज्ञेष्वत्यन्तसौख्यदाः[१२] । नवं नवमभीप्सन्त्यः पुंश्चल्यः स्वैरवृत्तयः ॥ ४० ॥
संवत्सरान्तेऽपि भवानेकरात्रं मयीश्वर[१३] । वत्स्यत्यपत्यानि च ते भविष्यन्त्यपराणि भो ।
अन्तर्वत्नीमुपालक्ष्य देवीं स प्रययौ पुरीम् ॥ ४१ ॥

---

१. ताम् ❋ २. आनेतुमूर्वशीमिन्द्रः ❋ ३. ऊर्वशीरहितम् ❋
४. ऊर्वशीरहितं मह्यं ममास्थानं न शोभते❋ऊर्वशीरहितं मह्यमास्थानं नाभिशोभते ❋
५. निशम्य क्रन्दितम् ❋ ६. प्रद्योतन्त स्म विद्युता ❋ ७. सरस्यन्याश्च ❋ ८. पश्यन् प्रहृष्टवदनः ❋
९. करवामहे ❋ १०. दूरंगतस्त्वया ❋ ११. मा स्म खाद्युः ❋
१२. अज्ञेषु त्यक्तसौहृदाः ❋ १३. मयेश्वर ❋

पुनस्तत्र गतोऽब्दान्ते उर्वशीं वीरमातरम् । उपलभ्य मुदा युक्तः समुवास तया निशाम् ॥ ४२ ॥
अथैनमूर्वशी प्राह कृपणं विरहातुरम् । गन्धर्वानुपधावेमांस्तुभ्यं दास्यन्ति मामिति ॥ ४३ ॥
तस्य संस्तुवतस्तुष्टा अग्निस्थालीं ददुर्नृप । ऊर्वशीं मन्यमानस्तां सोऽबुध्यत चरन् वने ॥ ४४ ॥
स्थालीं न्यस्य वने गत्वा गृहानध्युषितो निशि । त्रेतायां सम्प्रवृत्तायां मनसि त्रय्यवर्तत ॥ ४५ ॥
स्थालीस्थानं गतोऽश्वत्थं शमीगर्भं विलक्ष्य सः । तेन द्वे अरणी कृत्वा उर्वशीलोककाम्यया ॥ ४६ ॥
उर्वशीं मन्त्रतो ध्यायन्नधरारणिमुत्तराम् । आत्मानमुभयोर्मध्ये यत् तत् प्रजननं प्रभुः ॥ ४७ ॥
तस्य निर्मथनाज्जातो जातवेदा विभावसुः । त्रय्या स विद्यया राज्ञा पुत्रत्वे कल्पितस्त्रिवृत् ॥ ४८ ॥
तेनायजत यज्ञेशं भगवन्तमधोक्षजम् । उर्वशीलोकमन्विच्छन् सर्वदेवमयं हरिम् ॥ ४९ ॥
एक एव पुरा वेदः प्रणवः सर्ववाङ्मयः । देवो नारायणो नान्य एकोऽग्निर्वर्ण एव च ॥ ५० ॥
पुरूरवस एवासीत् त्रयी त्रेतामुखे नृप । अग्निना प्रजया राजा लोकं गान्धर्वमेयिवान् ॥ ५१ ॥

**॥ इति श्रीमद्भागवते नवमस्कन्धे द्वादशोऽध्यायः ॥**

---

ऐळस्य चोर्वशीगर्भात् षडासन्नात्मजा नृप । आयुः श्रुतायुः सत्यायू रयोऽथ विजयो जयः ॥ १ ॥
श्रुतायोर्वसुमान् पुत्रः सत्यायोश्च श्रुतञ्जयः । रयस्याद्भुत एकस्तु[1] जयस्य तनयोऽमितः[2] ॥ २ ॥
भीमस्तु विजयस्याथ काञ्चनो होत्रकस्ततः । तस्य जह्नुः सुतो गङ्गां गण्डूषीकृत्य योऽपिबत्॥ ३ ॥
जह्नोस्तु पूरुस्तत्पुत्रो[3] बलाकश्चात्मजोऽजकः[4] । ततः कुशः कुशस्यापि कुशाम्बुस्तनयो वसुः[5] ॥
कुशनाभश्च चत्वारो गाधिरासीत् कुशाम्बुजः । तस्य सत्यवतीं कन्यामृचीकोऽयाचत द्विजः ॥ ५ ॥
वरं विसदृशं मत्वा गाधिर्भार्गवमब्रवीत् । एकतः श्यामकर्णानां हयानां चन्द्रवर्चसाम् ॥ ६ ॥
सहस्रं दीयतां शुल्कं कन्यायाः कुशिकान्वयः[6] । इत्युक्तस्तन्मतं ज्ञात्वा गतः स वरुणान्तिकम् ॥
आनीय दत्वा तानश्वानुपयेमे वराङ्गनाम् । स ऋषिः प्रार्थितः पत्न्या श्वश्र्वा चापत्यकाम्यया ।
श्रपयित्वोभयैर्मन्त्रैश्चरुं स्नातुं गतो मुनिः ॥ ८ ॥

---

१. रयस्य भूत एकस्तु ❋ २. जयस्य तनयो विभुः ❋ ३. जह्नोः सुयन्त्रस्तत्पुत्रः ❋
४. बलाकश्चाश्मको यतः ❋ ५. कुशाम्बोऽसूर्तरयो वसुः ❋ ६. कुशिका वयम् ❋

तावत् सत्यवती मात्रा स्वचरुं याचिता सती । श्रेष्ठं मत्वा तयाऽयच्छन्मात्रे मातुरदात् स्वयम्[१] ॥
तद् विज्ञाय मुनिः प्राह पत्नीं कष्टमकारषीः । घोरो दण्डधरः पुत्रो भ्राता ते ब्रह्मवित्तमः ॥ १० ॥
प्रसादितः सत्यवत्या मैवं भूदिति भार्गवः[२] । अथ तर्हि भवेत् पौत्रो जमदग्निस्ततोऽभवत् ॥ ११ ॥
सा चाभूत् सुमहापुण्या कौशिकी लोकपावनी । रेणोः सुतां रेणुकां वै जमदग्निरुवाह ताम् ॥ १२ ॥
तस्यां वै भार्गवऋषेः सुता वसुमदादयः । यवीयान् जज्ञ एतेषां राम इत्यभिविश्रुतः ॥ १३ ॥
यमाहुर्वासुदेवांशं हैहयानां[३] कुलान्तकम् । त्रिःसप्तकृत्वो य इमां चक्रे निःक्षत्रियां महीम् ॥ १४ ॥
दृप्तं क्षत्रं भुवो भारमब्रह्मण्यमधार्मिकम्[४] । रजस्तमोवृतमहन् फल्गुन्यपि कृतेंऽहसि ॥ १५ ॥

राजोवाच

किं तदंहो भगवतो राजन्यैरजितात्मभिः । कृतं येन कुलं नष्टं क्षत्रियाणामभीक्ष्णशः ॥ १६ ॥

बादरायणिरुवाच

हैहयानामधिपतिरर्जुनः क्षत्रियर्षभः । दत्तं नारायणस्यांशमाराध्य[५] परिकर्मभिः ॥ १७ ॥
बाहून् दशशतं लेभे दुर्धर्षत्वमरातिषु । अव्याहतेन्द्रियौजःश्रीतेजो वीर्यं यशो बलम् ॥ १८ ॥
योगेश्वरत्वमैश्वर्यं गुणा यत्राणिमादयः । चचाराव्याहतगतिर्लोकेषु पवनो यथा ॥ १९ ॥
स्त्रीरत्नैरावृतः[६] क्रीडन् रेवाम्भसि मदोत्कटः । वैजयन्तीं स्रजं बिभ्रद् रुरोध सरितं भुजैः ॥ २० ॥
विप्लावितं स्वशिबिरं प्रतिस्रोतःसरिज्जलैः । नामृष्यत् तस्य तद्वीर्यं वीरमानी दशाननः ॥ २१ ॥
गृहीतो लीलया स्त्रीणां समक्षं कृतकिल्बिषः । माहिष्मत्यां सन्निरुद्धो मुक्तो येन कपिर्यथा ॥ २२ ॥
स एकदा तु मृगयां विचरन् विजने वने । यदृच्छयाऽऽश्रमपदं जमदग्नेरुपाविशत् ॥ २३ ॥
तस्मै स नरदेवाय मुनिरर्हणमाहरत् । ससैन्यामात्यवाहाय हविर्धान्या[७] तपोधनः ॥ २४ ॥
स वीरस्तस्य तद् दृष्ट्वा आत्मैश्वर्यातिशायनम्[८] । तन्नाद्रियन्नग्निहोत्रीं[९] साभिलाषः स हैहयः ॥
हविर्धानीमृषेर्दर्पान्नरान् हर्तुमयोजयत् । तां ते माहिष्मतीं निन्युः सवत्सां क्रन्दतीं बलात् ॥ २६ ॥
अथ राजनि निर्याते राम आश्रममागतः । श्रुत्वा तत् तस्य दौरात्म्यं चुक्रोधाहिरिवाहतः ॥ २७ ॥

---

१. श्रेष्ठं स्वमात्रे प्रायच्छच्चरुं मातुरदात् स्वयम् ❋ २. मैवं भूरिति भार्गवः ❋
३. हेहयानाम्❋एवमुत्तरत्रापि । ४. अब्रह्मण्यमनीनशत्❋ ५. नारायणांशांशमाराध्य ❋
६. स्त्रीरत्नैरन्वितः ❋ ७. हविष्मत्या ❋ ८. अतिशायिनम् ९. अग्निहोत्र्याम् ❋

परशुं योजयामास सतूणं चर्म कार्मुकम् । अन्वधावत दुर्धर्षो मृगेन्द्र इव यूथपम् ॥ २८ ॥

तमापतन्तं भृगुवर्यमोजसा धनुर्धरं बाणपरश्वधायुधम् ।

ऐणेयचर्माम्बरमर्कधामभिर्युतं जटाभिर्ददृशे पुरीं नृपः[१] ॥ २९ ॥

अचोदयद्धस्तिवरांश्च[२] पत्तिभिर्गदासिबाणर्ष्टिशतघ्निशक्तिभिः ।

अक्षौहिणीः सप्तदशातिभीषणास्ता राम एको भगवानसूदयत् ॥ ३० ॥

यतो यतोऽसौ प्रहरन् परश्वधो मनोनिलौजाः परचक्रसूदनः ।

ततस्ततश्छिन्नभुजोरुकन्धरा निपेतुरुर्व्यां हतसूतवाहनाः ॥ ३१ ॥

दृष्ट्वा स्वसैन्यं रुधिरौघकर्दमे रणाजिरे रामकुठारसायकैः ।

विवृक्णचर्मध्वजचापविग्रहं निपातितं हैहय आपतद् रुषा ॥ ३२ ॥

अथार्जुनः पञ्चशतेषु बाहुभिर्धनुष्षु बाणान् युगपत् स सन्दधे[३] ।

रामाय रामोऽस्त्रभृतां[४] समग्रणीस्तानेकबद्धेषुभिरच्छिनत्[५] समम् ॥ ३३ ॥

पुनः स्वहस्तैरचलान् मृधेऽङ्घ्रिपानुत्क्षिप्य[६] वेगादभिधावतो युधि ।

भुजान् कुठारेण कठोरनेमिना चिच्छेद रामः प्रसभं हसन्निव ॥ ३४ ॥

वृक्णबाहोः[७] शिरस्तस्य गिरेः शृङ्गमिवाहरत् । हते पितरि तत्पुत्रा अयुतं दुद्रुवुर्भयात् ॥ ३५ ॥

अग्निहोत्रीमुपावर्त्य सवत्सां परवीरहा । समुपेत्याश्रमं पित्रे परिक्लिष्टां समार्पयत्[८] ॥ ३६ ॥

स्वकर्म तत्कृतं रामः पित्रे भ्रातृभ्य एव च । वर्णयामास तच्छ्रुत्वा जमदग्निरभाषत ॥ ३७ ॥

राम राम महाबाहो भवान् पापमकारषीत् । अवधीन्नरदेवं यत् सर्वदेवमयं वृथा ॥ ३८ ॥

वयं हि ब्राह्मणास्तात क्षमयाऽर्हणतां गताः । यया लोकगुरुर्देवः पारमेष्ठ्यमगात् पदम् ॥ ३९ ॥

क्षमया रोचते लक्ष्मीः ब्राह्मी सौरी यथा प्रभा । क्षमिणामाशु भगवांस्तुष्यते हरिरीश्वरः ॥ ४० ॥

राज्ञो मूर्धावसिक्तस्य[९] वधो ब्रह्मवधाद् गुरुः । तीर्थसंसेवया चांहो जह्यङ्गाच्युतचेतनः ॥ ४१ ॥

**॥ इति श्रीमद्भागवते नवमस्कन्धे त्रयोदशोऽध्यायः ॥**

---

१. पुरीं विशन् ❋ २. अचोदयद्धस्तिरथाश्वपत्रिभिः ❋ ३. सुसन्दधे❋ ४. अस्त्रवताम् ❋
५. तानेव बद्धेषुभिरच्छिनत् ❋ ६. अचलायुधाङ्घ्रिपानुत्क्षिप्य ❋ ७. कृत्तबाहोः
८. समर्पयत् ❋ ९. मूर्धाभिषिक्तस्य ❋

**श्रीशुक उवाच**

पित्रोपशिक्षितो रामस्तथेति कुरुनन्दन । संवत्सरं तीर्थचर्यां चरित्वाऽऽश्रममाव्रजत् ॥ १ ॥
कदाचिद् रेणुका याता गङ्गायां पद्ममालिनम् । गन्धर्वराजं क्रीडन्तमप्सरोभिरपश्यत ॥ २ ॥
विलोकयन्ती क्रीडन्तमुदकार्थं नदीं गता । होमवेळां न सस्मार किञ्चिच्चित्ररथस्पृहा ॥ ३ ॥
कालात्ययं तं विलोक्य मुनेः शापविशङ्किता । आगत्य कलशं तस्थौ पुरोधाय कृताञ्जलिः ॥ ४ ॥
व्यभिचारं मुनिर्ज्ञात्वा पत्न्याः प्रकुपितोऽब्रवीत् । घ्नतैनां पुत्रकाः पापामित्युक्तास्तां न चक्रिरे[1] ॥
रामः सञ्चोदितः पित्रा भ्रातॄन् मात्रा सहावधीत् । प्रभावज्ञो मुनेः सम्यक् समाधेस्तपसश्च सः ॥ ६ ॥
वरेण छन्दयामास प्रीतः सत्यवतीसुतः । वव्रे हतानां रामोऽपि जीवितं चास्मृतिं वधे ॥ ७ ॥
उत्तस्थुस्ते कुशलिनो निद्रापाय इवाञ्जसा । पितुर्विद्वांस्तपोवीर्यं रामश्चक्रे सुहृद्वधम् ॥ ८ ॥
येऽर्जुनस्य सुता राजन् स्मरन्तः स्म पितुर्वधम् । रामवीर्यपराभूता लेभिरे शर्म न क्वचित् ॥ ९ ॥
एकदाऽऽश्रमतो रामे सभ्रातरि वनं गते । वैरं सिसाधयिषवो लब्धच्छिद्रा उपागमन् ॥ १० ॥
दृष्ट्वाऽग्न्यगार आसीनमावेशितधियं मुनिम् । भगवत्युत्तमश्लोके जघ्नुस्ते पापनिश्चयाः ॥ ११ ॥
याच्यमानाः कृपणया राममात्राऽतिदारुणाः । प्रसँह्य शिर उत्कृत्य जग्मुस्ते[2] क्षत्रबन्धवः ॥ १२ ॥
रेणुका दुःखशोकार्ता निघ्नन्त्यात्मानमात्मना । राम रामेति तातेति विचुक्रोशोच्चकैः सती॥ १३ ॥
तमुपश्रुत्य दूरस्था हा रामेत्यार्तवत्स्वरम्[3] । त्वरयाऽश्रममासाद्य ददृशुः पितरं हतम् ॥ १४ ॥
ते दुःखरोषामर्षार्तिशोकवेगविमोहिताः । हा तात साधो धर्मिष्ठ त्यक्त्वाऽस्मान् स्वर्गतो भवान् ॥१५॥
विलप्यैवं पितुर्देहं निधाय भ्रातृषु स्वयम् । प्रगृह्य परशुं रामः क्षत्रान्ताय[4] मनो दधे ॥ १६ ॥
गत्वा माहिष्मतीं रामो ब्रह्मघ्नविहतश्रियम् । तस्यां स शीर्षभी राज्ञां मध्ये चक्रे महागिरिम् ॥ १७ ॥
तद्रक्तेन नदीं घोरामब्रह्मण्यभयावहाम् । हेतुं कृत्वा पितृवधं क्षत्रेऽमङ्गलकारिणि ॥ १८ ॥
त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः । समन्तपञ्चके[5] चक्रे शोणितोदान् ह्रदान् नव ॥
पितुः कायेन सन्धाय शिर आदाय बर्हिषि । सर्वदेवमयं देवमात्मानमयजन्मखैः ॥ २० ॥
ददौ प्राचीं दिशं होत्रे ब्रह्मणे दक्षिणां दिशम् । अध्वर्यवे प्रतीचीं वै उद्गात्रे चोत्तरां दिशम् ॥ २१ ॥

---

१. इत्युक्तास्तत्र चक्रिरे *   २. निन्युस्ते *   ३. आर्तवं स्वरम्(*?)
४. निःक्षत्राय *   ५. स्यमन्तपञ्चक इत्यर्वाचीनेषु सर्वत्र । एवमन्यत्रापि ।

अन्येभ्योऽवान्तरदिशः कश्यपाय च मध्यतः । आर्यावर्तमुपद्रष्ट्रे सदस्येभ्यस्ततः परम् ॥ २२ ॥
ततश्चावभृथस्नानविधूताशेषकिल्बिषः । सरस्वत्यां ब्रह्मनद्यां रेजे व्यभ्र इवांशुमान् ॥ २३ ॥
स्वदेहं जमदग्निस्तु लब्ध्वा सञ्ज्ञानलक्षणम् । ऋषीणां मण्डले सोऽभूत् सप्तमो रामपूजितः ॥ २४ ॥
जामदग्न्योऽपि भगवान् रामः कमललोचनः । आगामिन्यन्तरे राजन् वर्तयिष्यति वै बृहत् ॥ २५ ॥
आस्तेऽद्यापि महेन्द्राद्रौ न्यस्तदण्डः प्रशान्तधीः । उपगीयमानचरितः सिद्धगन्धर्वचारणैः ॥ २६ ॥
एवं भृगुषु विश्वात्मा भगवान् हरिरीश्वरः । अवतीर्य परं भारं भुवोऽहन् बहुशो नृपान्[१] ॥ २७ ॥
गाधेरभून्महातेजाः समिद्ध इव पावकः । तपसा क्षात्रमुत्सृज्य यो लेभे ब्रह्मवर्चसम् ॥ २८ ॥
विश्वामित्रस्य चैवासन् पुत्रा एकशतं नृप । मध्यमस्तु मधुच्छन्दा माधुच्छन्दस एव ते ॥ २९ ॥
पुत्रं कृत्वा शुनःशेपं देवरातं च भार्गवम् । आजीगर्तं सुतानाह ज्येष्ठ एष प्रकल्प्यताम् ॥ ३० ॥
यो वै हरिश्चन्द्रमखे विक्रीतः पुरुषः पशुः । स्तुत्वा देवान् प्रजेशादीन् मुमुचे पाशबन्धनात् ॥ ३१ ॥
यो रातो देवयजने देवैर्गाधिसुताय सः । देवरात इति ख्यातः शुनःशेपस्तु भार्गवः ॥ ३२ ॥
ये मधुच्छन्दसो ज्येष्ठाः कुशलं मेनिरे न तत् । अशपत् तान् मुनिः क्रुद्धो म्लेच्छा भवत दुर्जनाः ॥ ३३ ॥
स होवाच मधुच्छन्दाः सार्धं पञ्चाशता ततः । यन्नो भवान् सञ्जानीते तस्मिंस्तिष्ठामहे वयम् ॥ ३४ ॥
ज्येष्ठं मन्त्रदृशं चक्रुः त्वामन्वञ्चो वयं स्म हि । विश्वामित्रस्तु तानाह वीरवन्तो भविष्यथ ॥ ३५ ॥
ये मानं मेऽनुगृह्णन्तो वीरवन्तमकर्त मा । एष वः कौशिका वीरो देवरातस्तमन्वित[२] ॥ ३६ ॥
अन्ये चाष्टकहारीतजयक्रतुमदादयः । एवं कौशिकगोत्रं तद् वैश्वामित्रैः पृथग्विधम् ॥ ३७ ॥
प्रवरान्तरमापन्नं तद्धीत्येवं प्रकल्पितम् । यः पुरूरवसः पुत्र आयुस्तस्याभवन् सुताः ॥ ३८ ॥
नहुषः क्षत्रवृद्धश्च रजी रम्भश्च[३] वीर्यवान् । अनेना इति राजेन्द्र क्षत्रवृद्धान्वयं शृणु ॥ ३९ ॥
क्षत्रवृद्धसुतस्यासन् सुहोत्रस्यात्मजास्त्रयः । काश्यः कुशो गृत्समद इति गृत्समदादभूत् ॥ ४० ॥
शुनकः शौनको यस्य बह्वृचप्रवरो मुनिः । काश्यस्य काशिस्तत्पुत्रः सुराष्ट्रो दीर्घतमःपिता[४] ॥
धन्वन्तरिर्दीर्घतमस आयुर्वेदप्रवर्तकः । यज्ञभुग् वासुदेवांशः स्मृतमात्रार्तिनाशनः[५] ॥ ४२ ॥
तत्पुत्रः केतुमान् यस्य जज्ञे भीमरथस्ततः[६] । दिवोदासो द्युमांस्तस्मात् प्रतर्दन इति स्मृतः ॥ ४३ ॥

---

१. नृप ❋ २. एष वः कुशिको वीरा देवरातसमन्वितः ❋ ३. राभश्च ❋
४. राष्ट्रो दीर्घतमःपिता ❋ ५. स्मृतिमात्रार्तिनाशनः ६. भीमरजस्ततः ❋

स एव शत्रुजिद्वत्स ऋतध्वज इतीरितः । तथा कुवलयाश्वेति प्रोक्तोऽळर्कादयस्ततः ॥ ४४ ॥
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च । नाळर्कादपरो राजा बुभुजे मेदिनीं युवा[1] ॥ ४५ ॥
अळर्कात् सन्नतिस्तस्मात्[2] सुनीथोऽथ सुकेतनः[3] । धर्मकेतुः सुतस्तस्मात् सत्यकेतुरजायत ॥
धृष्टकेतुस्ततस्तस्मात्[4] सुकुमारः क्षितीश्वरः । वीतिहोत्रोऽस्य भर्गोऽतो भार्गभूमिरभून्नृपः ॥
इतीमे काश्यजा भूपाः क्षत्रवृद्धान्ववायिनः । रम्भस्य[5] रभसः पुत्रो गम्भीरश्चाक्रकस्ततः ॥ ४८ ॥
तस्य क्षेत्रे ब्रह्म जज्ञे शृणु वंशमनेनसः । शुद्धस्ततः शुचिस्तस्मात् त्रिककुब् धर्मसारथिः ॥ ४९ ॥
ततः शान्तरजा जज्ञे कृतकृत्यः स आत्मवान् । रजेः पञ्च शतान्यासन् पुत्राणाममितौजसाम् ॥ ५० ॥
देवैरभ्यर्थितो दैत्यान् हत्वेन्द्रायाददाद् दिवम् । इन्द्रस्तस्मै पुनर्दत्वा गृहीत्वा चरणौ रजेः ॥ ५१ ॥
आत्मानमर्पयामास प्रह्लादात् परिशङ्कितः । पितर्युपरते पुत्रा याचमानाय नो ददुः ॥ ५२ ॥
त्रिविष्टपं महेन्द्राय यज्ञभागान् समाददुः । गुरुणा हूयमानेऽग्नौ बलभित् तनयान् रजेः ॥ ५३ ॥
अवधीद् भ्रंशितान् मार्गान्न कश्चिदवशेषितः । प्रतिक्षत्रः क्षत्रवृद्धात् सञ्जयस्तत्सुतो जयः ॥ ५४ ॥
ततः कृतः कृतस्यापि जज्ञे वीर्यधनो नृपः[6] । सहदेवस्ततोऽहीनो जयत्सेनस्तु तत्सुतः ॥ ५५ ॥
सङ्कृतिस्तस्य च जयः क्षत्रधर्मा महारथः । क्षत्रवृद्धान्वया भूपा इमे शृण्वथ नाहुषान् ॥ ५६ ॥

**॥ इति श्रीमद्भागवते नवमस्कन्धे चतुर्दशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

यतिर्ययातिः संयातिरायातिर्वियतिः कृतिः । षडिमे नहुषस्यासन् इन्द्रियाणीव देहिनः ॥ १ ॥
राज्यं नैच्छद् यतिः पित्रा दत्तं तत्परिणामवित् । यत्र प्रविष्टः पुरुष आत्मानं नावबुध्यते ॥ २ ॥
पितरि भ्रंशिते स्थानादिन्द्राण्या धर्षणाद् द्विजैः । प्रापितेऽजगरत्वं च[7] ययातिरभवन्नृपः ॥ ३ ॥
चतसृष्वादिशद् दिक्षु भ्रातॄन् गोप्तॄन् यवीयसः । कृतदारो जुगोपोर्वीं काव्यस्य वृषपर्वणः ॥ ४ ॥

**राजोवाच**

ब्रह्मर्षिर्भगवान् काव्यः क्षत्रबन्धुश्च नाहुषः । राजन्यविप्रयोः कस्माद् विवाहः प्रातिलोमकः ॥ ५ ॥

---

१. नृप ❋ २. सन्ततिस्तस्मात् ❋ ३. सुदर्शनः ❋
४. धृतकेतुपिता तस्मात् ❋ ५. राभस्य ६. हर्यधनो नृपः ❋ ७. प्रापितोऽजगरत्वं च ❋

## श्रीशुक उवाच

एकदा दानवेन्द्रस्य शर्मिष्ठा नाम कन्यका । सखीसहस्रसंयुक्ता गुरुपुत्र्या च भामिनी ॥ ६ ॥
देवयान्या पुरोद्याने पुष्पितद्रुमसङ्कुले । व्यचरत् कळगीताळिनळिनीपुळिनेऽबला ॥ ७ ॥
जलाशयं समासाद्य[1] कन्याः कमललोचनाः । तीरे न्यस्य दुकूलानि विजह्रुः सिञ्चतीर्मिथः ॥ ८ ॥
वीक्ष्य व्रजन्तं गिरिशं सह देव्या वृषे स्थितम्[2] । सहसोत्तीर्य वासांसि पर्यधुर्व्रीळिताः स्त्रियः ॥ ९ ॥
शर्मिष्ठाऽजानती वासो गुरुपुत्र्याः समव्ययत् । स्वीयं मत्वा प्रकुपिता देवयानीदमब्रवीत् ॥ १० ॥
अहो निरीक्ष्यतां मह्यं दास्याः कर्म ह्यसाम्प्रतम् । अस्मद्धार्यं धृतवती शुनीव हविरध्वरे ॥ ११ ॥
यैरिदं तपसा सृष्टं मुखं पुंसः परस्य वै । धार्यते यैः परञ्ज्योतिः[3] शिवः पन्थाश्च दर्शितः ॥ १२ ॥
येऽपीदमुपतिष्ठन्ते[4] लोकनाथाः सुरेश्वराः । भगवानपि विश्वात्मा पावनः श्रीनिकेतनः ॥ १३ ॥
वयं तत्रापि भृगवः शिष्योऽस्या नः पिताऽसुरः । अस्मद्धार्थं धृतवती शूद्रो वेदमिवासती ॥ १४ ॥
एवं शपन्तीं[5] शर्मिष्ठा गुरुपुत्रीमभाषत । रुषा श्वसन्ती नागीव[6] धर्षिता दष्टदच्छदा ॥ १५ ॥
आत्मवृत्तिमविज्ञाय कत्थसे बहु भिक्षुकि । किं न प्रतीक्षसेऽस्माकं गृहान् बलिभुजो यथा ॥ १६ ॥
एवंविधैः सुपरुषैः क्षिप्त्वाऽऽचार्यसुतां सतीम् । शर्मिष्ठा प्राक्षिपत् कूपे वासस्त्वादाय मन्युना[7] ॥
तस्यां गतायां स्वगृहं ययातिर्मृगयां चरन् । प्राप्तो यदृच्छया कूपे जलार्थी तां[8] ददर्श ह ॥ १८ ॥
दत्वा स्वमुत्तरं वासस्तस्यै राजा विवाससे । गृहीत्वा पाणिना पाणिमुज्जहार दयापरः ॥ १९ ॥
तं वीरमाहौशनसी प्रेमनिर्भरया गिरा । राजंस्त्वया गृहीतो मे पाणिः परपुरञ्जय ।
हस्तग्रहोऽपरो मा भूद् गृहीतायास्त्वया हि मे ॥ २० ॥
एष ईशकृतो वीर सम्बन्धो नौ न पौरुषः । यदिदं कूपमग्नाया[9] भवतो दर्शनं मम ॥ २१ ॥
न ब्राह्मणो मे भविता हस्तग्राहो महाभुज । कचस्य बार्हस्पत्यस्य शापाद् यमशपं पुरा ॥ २२ ॥
ययातिरनभिप्रेतं दैवोपहृतमात्मनः । मनस्तु तद्गतं बुद्ध्वा प्रतिजग्राह तद्वचः ॥ २३ ॥
गते राजनि सा वीरे तत्र स्म रुदती[10] पितुः । न्यवेदयत् ततः सर्वमुक्तं शर्मिष्ठया कृतम् ॥ २४ ॥

---

१. ता जलाशयमासाद्य * २. वृषस्थितम् * ३. स्वयञ्ज्योतिः * ४. य इदं चोपतिष्ठन्ते *
५. क्षिपन्तीम् ६. श्वसन्त्युरङ्गीव * ७. वासश्चादाय सा ययौ *
८. कञ्जाक्षीं ताम् * ९. कूपलग्नायाः * १०. तत्रैव रुदती *

दुर्मना भगवान् काव्यः पौरोहित्यं विगर्हयन् । स्तुवन् वृत्तिं च कापोतीं दुहित्रा स ययौ पुरात् ॥
वृषपर्वा तदाज्ञाय प्रत्यनीकविवक्षितम् । गुरुं प्रसादयन् मूर्ध्ना पादयोः पतितः पथि ॥ २६ ॥
क्षणार्धमन्युर्भगवाञ्छिष्यं व्याचष्ट भार्गवः । कामोऽस्याः क्रियतां राजन् नैनां त्यक्तुमिहोत्सहे ॥
तथेत्यवस्थिते प्राह देवयानी मनोगतम् । पित्रा दत्ता यतो यास्ये सानुगा यातु मामनु ॥ २८ ॥
स्वानां तत् सङ्कटं वीक्ष्य तदर्थस्य च गौरवम् । देवयानीं पर्यचरत् स्त्रीसहस्रेण दासिवत् ॥ २९ ॥
नाहुषाय सुतां दत्वा सह शर्मिष्ठयोशनाः । तमाह राजञ्छर्मिष्ठां मा धास्तल्पे तु कर्हिचित् ॥ ३० ॥
विलोक्यौशनसीं राज्ञीं शर्मिष्ठा सुप्रजां क्वचित् । तमेव वव्रे रहसि सख्याः पतिमृतौ सति ॥ ३१ ॥
राजपुत्र्याऽर्थितोऽपत्ये धर्मं चावेक्ष्य धर्मवित् । स्मरञ्छुक्रवचः काले दिष्टमेवाभ्यपद्यत ॥ ३२ ॥
यदुं च तुर्वसुं[1] चैव देवयानी व्यजायत । द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ॥ ३३ ॥
गर्भसम्भवमासुर्या भर्तुर्विज्ञाय मानिनी[2] । देवयानी पितुर्गेहं ययौ क्रोधविमूर्च्छिता ॥ ३४ ॥
प्रियामनुगतः कामी वचोभिरभिमन्त्रयन् । न प्रसादयितुं शेके पादसंवन्दनादिभिः ॥ ३५ ॥
शुक्रस्तमाह कुपितः स्त्रीकामानृतपूरुष । त्वां जरा विशतं मन्द विरूपकरणी नृणाम् ॥ ३६ ॥

**ययातिरुवाच**

अतृप्तोऽस्म्यद्य कामानां ब्रह्मन् दुहितरि स्म ते । व्यत्यस्यैतां यथाकामं वयसा यो हि दास्यति ॥

**श्रीशुक उवाच**

इति लब्धव्यवस्थानः पुत्रं ज्येष्ठमवोचत । यदो तात प्रतीच्छेमां जरां देहि निजं वयः ॥ ३८ ॥
मातामहकृतां वत्स न तृप्तो विषयेष्वहम् । वयसा भवदीयेन रंस्ये कतिपयाः समाः ॥ ३९ ॥

**यदुरुवाच**

नोत्सहे जरया[3] स्थातुमन्तरा प्राप्तया तव । अविदित्वा सुखं ग्राम्यं वैतृष्ण्यं नैति पूरुषः ॥ ४० ॥
तुर्वशुश्चोदितः पित्रा द्रुह्युश्चानुश्च भारत । प्रत्याचख्युरधर्मज्ञा ह्यनित्ये नित्यबुद्धयः ॥ ४१ ॥
अपृच्छत् तनयं पूरुं वयसोनं गुणाधिकम् । न त्वमग्रजवद् वत्स मां प्रत्याख्यातुमर्हसि[4] ॥ ४२ ॥

**पूरुरुवाच**

को नु लोके मनुष्येन्द्र पितुरात्मकृतः पुमान् । प्रतिकर्तुं क्षमो यस्य प्रसादाद् विन्दते परम् ॥ ४३ ॥
उत्तमश्चिन्तितं कुर्यात् प्रोक्तकारी तु मध्यमः । अधमोऽश्रद्धया कुर्यादकर्तोच्चरितं पितुः ॥ ४४ ॥

---

१. तुर्वशुम् * २. भामिनी * ३. जरसा * ४. वत्स प्रत्याख्यातुं ममार्हसि *

इति प्रमुदितः पूरुः प्रत्यगृह्णाज्जरां पितुः । सोऽपि तद्वयसा कामान् यथावज्जुजुषे नृप ॥ ४५ ॥
सप्तद्वीपपतिः सम्यक् पितृवत् पालयन् प्रजाः । यथोपजोषं विषयान् जुजोषाव्याहतेन्द्रियः ॥ ४६ ॥
देवयान्यप्यनुदिनं मनोवाग्देहवस्तुभिः । प्रेयसः परमां प्रीतिमुवाह प्रेयसी रहः ॥ ४७ ॥
अयजद् यज्ञपुरुषं क्रतुभिर्भूरिदक्षिणैः । सर्वदेवमयं देवं सर्ववेदमयं हरिम् ॥ ४८ ॥
यस्मिन्निदं विरचितं व्योम्नीव जलदावळिः । नानेव भाति नाभाति स्वप्नमायामनोरथः ॥ ४९ ॥
तमेव हृदि विन्यस्य वासुदेवं गुहाशयम् । नारायणमणीयांसं निराशीरयजत् प्रभुः ॥ ५० ॥
एवं वर्षसहस्राणि मनःषष्ठैर्मनःसुखम् । विदधानोऽपि नातृप्यत् सार्वभौमः कदिन्द्रियैः ॥ ५१ ॥

**॥ इति श्रीमद्भागवते नवमस्कन्धे पञ्चदशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

स इत्थमाचरन् कामांस्त्रैणोऽपह्नवमात्मनः । बुद्ध्वा प्रियायै निर्विण्णो[१] गाथामेतामगायत ॥ १ ॥
शृणु भार्गव्यमूं गाथां मद्विधाचरितां भुवि । धीरा यस्यानुशोचन्ति वने ग्रामनिवासिनः ॥ २ ॥
बस्त एको वने कश्चित् विचिन्वन्[२] प्रियमात्मनः । ददर्श कूपे पतितां स्वकर्मवशगामजाम् ॥ ३ ॥
तस्या उद्धरणोपायं बस्तः कामी विचिन्तयन् । विवर्त्य[३] तीर्थ उद्धृत्य[४] विषाणाग्रेण रोधसि ।
सोत्तीर्य कूपात् सुश्रोणी तमेव चकमे किल ॥ ४ ॥
तया वृतं समुद्वीक्ष्य बह्व्योऽजाः कान्तकामिनीः । पीवानं श्मश्रुलं भेजुर्मीढ्वांसं यावकोविदम्[५] ॥
स एकोऽजवृषस्तासां वह्वीनां रतिवर्धनः । रेमे कामग्रहग्रस्त आत्मानं नावबुद्ध्यत ॥ ६ ॥
तमेवं व्रज्यतमया रममाणमजाऽन्यया । विलोक्य रूपसम्पन्ना नामृष्यद् बस्तकर्म तत् ॥ ७ ॥
तं दुर्हृदं सुहृद्वेषं[६] कामिनं क्षणसौहृदम् । इन्द्रियाराममुत्सृज्य स्वामिनं दुःखिता ययौ ॥ ८ ॥
सोऽपि चानुगतः स्त्रैणः कृपणस्तां प्रसादितुम्[७] । कुर्वन् बिळिबिळाकारं नाशक्नोत् पथि सन्धितुम्[८]॥
तस्य तत्र द्विजः कश्चिदजास्वाम्यच्छिनद् रुषा । लम्बन्तं वृषणं भूयः सन्दधेऽर्थाय योगवित्॥ १० ॥

---

१. प्रियार्थैर्निर्विण्णः ❋ २. विचरन् ❋ ३. व्यधत्त ४. तीरमुद्धृत्य ❋
५. यतकोविदम् ❋/ याभकोविदम् । ६. सुहृद्रूपम् ७. स्त्रैणस्तां प्रसादितुमक्षमः ❋
८. परिसान्त्वितुम् ❋

सम्बद्धवृषणः सोऽपि ह्यजया कूपलब्धया । कालं बहुतिथं भद्रे कामैर्नाद्यापि तुष्यति ॥ ११ ॥
तथाऽहं कृपणः सुभ्रु भवत्याः प्रेमयन्त्रितः । आत्मानं नाभिजानामि मोहितस्तव मायया ॥ १२ ॥
यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः । न दुह्यन्ति मनःप्रीतिं पुंसः कामहतस्य ते ॥ १३ ॥
न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ १४ ॥
यदा न कुरुते भावं सर्वभूतेष्वमङ्गलम् । समदृष्टेस्तदा पुंसः[१] सर्वाः सुखमया दिशः ॥ १५ ॥
या दुस्त्यजा दुर्मतिभिर्जीर्यतो या न जीर्यते[२] । तां तृष्णां दुःखनिवहां शर्मकामो द्रुतं त्यजेत् ॥
मात्रा स्वस्रा दुहित्रा वा नाविविक्तासनो भवेत् । बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ १७ ॥
पूर्णं वर्षसहस्रं मे विषयान् सेवतोऽसकृत् । तथापि चानुसवनं तृष्णा तेषूपजायते ॥ १८ ॥
तस्मादेतामहं त्यक्त्वा ब्रह्मण्याधाय मानसम् । निर्द्वन्द्वो निरहङ्कारश्चरिष्यामि मृगैः सह ॥ १९ ॥
दृष्टं श्रुतमसद्[३] विद्वान् नानुध्यायेन्न संविशेत् । संसृतिं चात्मनाशं च तत्र विद्वान् स आत्मदृक् ॥

**श्रीशुक उवाच**

इत्युक्त्वा नाहुषो जायां तदीयं पूरवे वयः । दत्वा स्वजरसं तस्मादाददे विगतस्पृहः ॥ २१ ॥
दिशि दक्षिणपूर्वस्यां द्रुह्युं दक्षिणतो यदुम् । प्रतीच्यां तुर्वशुं चक्रे उदीच्यामनुमीश्वरम् ॥ २२ ॥
भूमण्डलस्य सर्वस्य पूरुमर्हत्तमं विशाम् । अभिषिच्याग्रजांस्तस्य[४] वशे स्थाप्य वनं ययौ ॥ २३ ॥
आम्रेडितं वर्षपूगान् षड्वर्गं विषयेषु सः[५] । क्षणेन मुमुचे नीडं जातपक्ष इव द्विजः ॥ २४ ॥

स तत्र निर्मुक्तसमस्तसङ्ग आत्मानुभूत्या विधुतत्रिलिङ्गः ।
परेऽमले ब्रह्मणि वासुदेवे लेभे गतिं भागवतीं प्रतीतः ॥ २५ ॥

श्रुत्वा गाथां देवयानी मेने प्रस्तोभमात्मनः । स्त्रीपुंसोः स्नेहवैक्लब्यात् परिहासमिवोदितम्[६] ॥
सा संनिवासं सुहृदां प्रपायामिव गच्छताम् । विज्ञायेश्वरतन्त्राणां मायाविरचितं प्रभोः ॥ २७ ॥
सर्वत्र सङ्गमुत्सृज्य स्वप्नौपम्येन भार्गवी । कृष्णे मनः समावेश्य व्यधुनोल्लिङ्गमात्मनः ॥ २८ ॥
नमस्तुभ्यं भगवते वासुदेवाय वेधसे । सर्वभूताधिवासाय शान्ताय बृहते नमः ॥ २९ ॥

**॥ इति श्रीमद्भागवते नवमस्कन्धे षोडशोऽध्यायः ॥**

---

१. समदृष्टेस्तथा पुंसः * २. जीर्यति * ३. दृष्टश्रुतमसद् *
४. अभिषिञ्च्या.... * ५. षड्वर्गविषयेषु सः * ६. परिहासमिवेरितम् *

श्रीशुक उवाच

पूरोर्वंशं[1] प्रवक्ष्यामि यत्र जातोऽसि भारत । यत्र राजर्षयो वंश्या ब्रह्मवंश्याश्च जज्ञिरे ॥ १ ॥

जनमेजयोऽभवत्[2] पूरोः प्रचिन्वांस्तत्सुतस्ततः । प्रवीरोऽथ नमस्युर्वै तस्माच्चारुपदोऽभवत् ॥ २ ॥

तस्य सुद्युरभूत् पुत्रस्तस्माद् बहुगवस्ततः । शंयातिस्तस्य हंयाती रौद्राश्वस्तत्सुतः स्मृतः ॥ ३ ॥

ऋतेयुस्तस्य कक्षेयुः स्थण्डिलेयुः कृतेयुकः[3] । जलेयुः सन्तनेयुश्च धर्मसत्यव्रतेयवः[4] ॥ ४ ॥

दशैतेऽप्सरसः पुत्रा वनेयुश्चावमः स्मृतः । घृताच्यामिन्द्रियाणीव[5] मुख्यस्य जगदात्मनः ॥ ५ ॥

ऋतेयो रन्तिनारोऽभूत् त्रयस्तस्यात्मजा नृप । सुमतिर्ध्रुवोऽप्रतिरथः कण्वोऽप्रतिरथात्मजः ॥ ६ ॥

तस्य मेधातिथिस्तस्मात् प्रस्कण्वाद्या द्विजातयः । पुत्रोऽभूत् सुमते रैभ्यो दुष्यन्तस्तत्सुतो मतः ॥ ७ ॥

दुष्यन्तो मृगयां यातः कण्वाश्रमपदं गतः । तत्रासीनां स्वप्रभया मण्डयन्तीं रमामिव ॥ ८ ॥

विलोक्य मुमुहे सद्यो देवमायामिव स्त्रियम् । बभाषे तां[6] वरारोहां भटैः कतिपयैर्वृतः ॥ ९॥

तद्दर्शनप्रमुदितः सन्निवृत्तपरिश्रमः । पप्रच्छ कामसन्तप्तः प्रहसन् श्लक्ष्णया गिरा ॥ १० ॥

का त्वं कमलगर्भाभे कस्यासि हृदयङ्गमे । किं वा चिकीर्षितं त्वत्र भवत्या निर्जने[7] वने ॥ ११ ॥

व्यक्तं राजन्यतनयां वेद्म्यहं त्वां सुमध्यमे । न हि चेतः पौरवाणामधर्मे रमते क्वचित् ॥ १२ ॥

शकुन्तळोवाच

विश्वामित्रात्मजैवाहं त्यक्ता मेनकया वने । वेदैतद् भगवान् कण्वो वीर किं करवाम ते ॥ १३ ॥

आस्यतामरविन्दाक्ष गृह्यतामर्हणं च नः । भुज्यतां सन्ति नीवारा उष्यतां यदि रोचते ॥ १४ ॥

दुष्यन्त उवाच

उपपन्नमिदं सुभ्रु जातायाः कुशिकान्वये । स्वयं हि वृणुते राज्ञां कन्यकाः सदृशं वरम् ॥ १५ ॥

श्रीशुक उवाच

ओमित्युक्ते यथाधर्ममुपयेमे शकुन्तळाम् । गान्धर्वविधिना राजा देशकालविधानवित् ॥ १६ ॥

अमोघवीर्यो राजर्षिर्महिष्यां वीर्यमादधे । श्वोभूते स्वपुरं यातः[8] कालेनासूत सा सुतम् ॥ १७ ॥

---

१. पुरोर्वंशम् ❋ २. ह्यभूत् ३. कृतेयवः/कृतेयकः/कृतेपवः ❋

४. ...व्रतेपवः ❋ । अत्र सर्वत्र युस्थाने पु वर्तते । ५. धृताच्या इन्द्रियाणीव ❋ ६. वव्रे स ताम् ❋

७. विजने ८. नगरं यातः ❋

कण्वः कुमारस्य वने चक्रे समुदिताः क्रियाः । बद्ध्वा मृगेन्द्रांस्तरसा क्रीडति स्म स बालकः ॥ १८ ॥
तं दुरत्ययविक्रान्तमादाय प्रमदोत्तमा । हरेरंशांशसम्भूतं भर्तुरन्तिकमागमत् ॥ १९ ॥
यदा न जगृहे राजा भार्यापुत्रावनिन्दितौ । शृण्वतां सर्वभूतानां खे वागाहाशरीरिणी ॥ २० ॥
माता भस्त्रा पितुः पुत्रो यस्माज्जातः स एव सः । भरस्व पुत्रं दौष्यन्तिं मावमंस्थाः शकुन्तळाम् ॥
रेतोधाः पुत्रं नयति नरदेव यमक्षयम् । त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तळा ॥ २२ ॥
पितर्युपरते सोऽभूच्चक्रवर्ती महायशाः । महिमा गीयते तस्य हरेरंशभुवो भुवि ॥ २३ ॥
चक्रं दक्षिणहस्तेऽस्य पद्मकोशश्च[१] पादयोः । ईजे महाभिषेकेण सोऽभिषिक्तोऽधिराट् प्रभुः[२] ॥
पञ्चपञ्चाशतैर्मेध्यैर्गङ्गायामनु वाजिभिः । दीर्घतमसं पुरोधाय यमुनायामनु प्रभुः ॥ २५ ॥
अष्टसप्तति मेध्याश्वान् बबन्ध प्रददे वसु[३] । भरतस्य तु दौष्यन्तेरग्निः साचीगुणे चितः ॥ २६ ॥
सहस्रं वद्वशो[४] यस्मिन् ब्राह्मणा गा विभेजिरे । त्रयस्त्रिंशच्छतं ह्यश्वान् बद्ध्वा विस्मापयन् नृपान् ।
दौष्यन्तिरत्यगान्मायां देवानां पुरुमायया ॥ २७ ॥
मृगान् शुक्लदतः कृष्णान् हिरण्येन परिष्कृतान् । अदात् कर्मणि मष्णारे नियुतानि चतुर्दश ॥ २८ ॥
भरतस्य महत्कर्म न पूर्वे नापरे नृपाः । नोदायुर्नैव प्राप्स्यन्ति[५] बाहुभ्यां त्रिदिवं यथा ॥ २९ ॥
किरातहूणान् यवनानन्ध्रान्[६] कङ्कान् कषान् शकान्[७] ।
अब्रह्मण्यान् नृपांश्चाहन् म्लेच्छान् दिग्विजयेऽखिलान् ॥ ३० ॥
जित्वा पुराऽसुरान् देवा येन स्वौकांसि भेजिरे । देवस्त्रियो रसां नीताः पणिभिः पुनराहरत् ॥ ३१ ॥
सर्वकामान् दुदुहतुः प्रजानां तस्य रोदसी । समास्त्रिनवसाहस्रीर्दिक्षु चक्रमवर्तयत् ॥ ३२ ॥
स सम्राट् लोकपालानामैश्वर्यमधिराट्श्रियम्[८] । चक्रं चास्खलितं प्राणान् मृषेत्युपरराम ह ॥ ३३ ॥
तस्यासन् नृप वैदर्भ्यः पत्न्यस्तिस्रः सुसम्मताः । जघ्नुस्त्यागभयात् पुत्रान् नानुरूपा इतीरिते ॥ ३४ ॥
तस्यैवं वितथे वंशे तदर्थं यजतः सुतम्[९] । मरुत्स्तोमेन मरुतो भरद्वाजमुपाददुः ॥ ३५ ॥
अन्तर्वत्न्या भ्रातृपत्न्या[१०] मैथुनाय बृहस्पतिः । प्रवृत्तो वारितो गर्भं शप्त्वा वीर्यमवासृजत् ॥ ३६ ॥

---

१. पद्मकोशोऽस्य ❋ २. विभुः ❋ ३. प्रददद् वसु ❋ ४. बहुशः ❋
५. नोदापुर्नैव यास्यन्ति ❋ ६. यवनानौढ्रान्/यवनान् चोळान् ❋ ७. कुत्सान् कशान् शुकान् ❋
८. लोकपालाख्यमैश्वर्य.....। ❋ ९. सुरान् ❋ १०. अन्तर्वत्न्यां भ्रातृपत्न्याम् ❋

तं त्यक्तुकामां ममतां भर्तृत्यागविशङ्किताम् । नामनिर्वचनं तस्य श्लोकमेतं जगुः सुराः ॥ ३७ ॥
मूढे भर द्वाजमिमं भरद् वाजं बृहस्पते । त्राता तु[1] दुःखात् पितरौ भरद्वाजस्ततस्त्वयम् ॥ ३८ ॥
चोद्यमाना सुरैरेवं मत्वा तं देवमात्मजम्[2] । व्यसृजन्मरुतोऽबिभ्रन् दत्तोऽयं वितथेऽन्वये ॥ ३९ ॥

**॥ इति श्रीमद्भागवते नवमस्कन्धे सप्तदशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

वितथस्य [3]सुतान्मन्योर्बृहत्क्षेत्रो जयस्ततः । महावीर्यो नरो गर्गः सङ्कृतिस्तु नरात्मजः ॥ १ ॥
गुरुश्च रन्तिदेवश्च सङ्कृतेः पाण्डुनन्दन । रन्तिदेवस्य च यश इहामुत्र च गीयते ॥ २ ॥
वीतवित्तस्य ददतो लब्धं लब्धं बुभुक्षतः । निष्किञ्चनस्य धीरस्य सकुडुम्बस्य सीदतः ॥ ३ ॥
व्यतीयुरष्टचत्वारिंशदहान्यपिबतः[4] किल । घृतपायससंयावं तोयं प्रातरुपस्थितम् ॥ ४ ॥
कृच्छ्रप्राप्तकुडुम्बस्य क्षुत्तृड्भ्यां जातवेपथोः । अतिथिर्ब्राह्मणः काले भोक्तुकामस्य चागमत् ॥ ५ ॥
तस्मै संव्यभजत् सोऽन्नमाहृत्य श्रद्धयाऽन्वितः । हरिं सर्वत्र सम्पश्यन् स भुक्त्वा प्रययौ द्विजः ॥ ६ ॥
अथान्यो भोक्ष्यमाणस्य विभक्तस्य महीपतेः । विभक्तं व्यभजत् तस्मै वृषळाय हरिं स्मरन् ॥ ७ ॥
याते शूद्रे तमभ्यागादतिथिः[5] श्वभिरावृतः । राजन् मे दीयतामन्नं सगणाय बुभुक्षते ॥ ८ ॥
स आतिथ्यावशिष्टं[6] यद् बहुमानपुरस्सरम्[7] । तच्च[8] दत्वा नमश्चक्रे श्वभ्यः श्वपतये विभुः ॥
पानीयमात्रमुच्छेषं तच्चैकपरितर्पणम् । पास्यतः पुल्कसोऽभ्यागादपो देह्यशुभस्य मे ॥ १० ॥
तस्यातिकरुणां वाचं निशम्य विपुलश्रमाम्[9] । कृपया भृशसन्तप्त इदमाहामृतं वचः ॥ ११ ॥

न कामयेऽहं गतिमीश्वराणां महर्द्धियुक्तामपुनर्भवं वा ।
आर्तिं प्रपद्येऽखिलदेहभाजामन्तःस्थितां येन भवन्त्यदुःखाः ॥ १२ ॥
क्षुत्तृट्श्रमो गात्रपरिभ्रमश्च दैन्यं क्लमः शोकविषादमोहाः ।
सर्वे निवृत्ताः कृपणस्य जन्तोर्जिजीविषोर्जीवजलार्पणेन ॥ १३ ॥

---

१. त्राता च ❋ २. सुरैरेवं ममता जातमात्मजम् ❋ ३. सुतो मन्युः ❋
४. सप्तचत्वारिंशदहान्य.......❋ ५. तमन्योऽगादतिथिः ❋ ६. आदत्यावशिष्टम् ❋
७. बहुमानपुरस्कृतम् ❋ ८. तस्य ❋ ९. तस्यातिकरुणा वाचो निशम्य विपुलश्रमः ❋

एवं प्रभाष्य पानीयं म्रियमाणः पिपासया । पुल्कसायाददाद् धीरो निसर्गकरुणो नृपः ॥ १४ ॥
तस्य त्रिभुवनाधीशाः फलदाः फलमिच्छताम् । आत्मानं दर्शयाञ्चक्रुर्माया विष्णुविनिर्मिताम् ॥
स वै तेभ्यो नमस्कृत्य निःसङ्गो विगतस्पृहः । वासुदेवे भगवति भक्त्या चक्रे मनः परम् ॥ १६ ॥
ईश्वरालम्बनं[1] चित्तं कुर्वतोऽनन्यराधसः । माया गुणमयी राजन् स्वप्नवत् प्रत्यलीयत ॥ १७ ॥
तत्प्रसङ्गानुभावेन रन्तिदेवानुवर्तिनः । अभवन् योगिनः सर्वे नारायणपरायणाः ॥ १८ ॥
गर्गाच्छिनिस्ततो गार्ग्यात् क्षत्राद् ब्रह्म ह्यवर्तत । दुरितक्षयो महावीर्यात् तस्य त्रय्यारुणिः कविः ॥
पुष्कलारुणिरित्यत्र[2] ये ब्राह्मणगतिं गताः । बृहत्क्षेत्रस्य होत्रो[3]ऽस्माद्धस्ती यद् हस्तिनापुरम् ॥
अजमीढो द्विमीढश्च पुरुमीढश्च हस्तिनः । अजमीढस्य वंश्याः स्युः प्रियमेधादयो द्विजाः ॥ २१ ॥
अजमीढाद् बृहदिषुस्तस्य पुत्रो बृहद्धनुः । बृहत्कायस्ततस्तस्य[4] पुत्र आसीज्जयद्रथः ॥ २२ ॥
तत्सुतो विशदस्तस्य श्येनजित् समजायत । रुचिराश्वो दृढधनुः काश्यो वत्सश्च तत्सुताः ॥ २३ ॥
रुचिराश्वसुतो याजः[5] पृथुसेनस्तदात्मजः । पारस्तत्तनयो नीपस्तस्य पुत्रशतं त्वभूत् ॥ २४ ॥
अणुहो नाम यस्तेषां ज्येष्ठो सत्यात्मको नृप । स कृत्व्यां शुककन्यायां ब्रह्मदत्तमजीजनत्* ॥ २५ ॥
योगेशो गवि भार्यायां विश्वक्सेनमधात् सुतम् । जैगीषव्योपदेशेन योगतन्त्रं चकार ह ॥ २६ ॥
उदक्सेनस्ततस्तस्माद् भल्लादो[6] बार्हदीषवः । यवीनरो द्विमीढस्य कृतिमांस्तत्सुतस्ततः ॥ २७ ॥
नाम्ना सत्यधृतिर्यस्माद् दृढनेमिः सुपार्श्वकृत् । सुपार्श्वात् सुमतिस्तस्य पुत्रः सन्ततिमांस्ततः ॥ २८ ॥
कृतिर्हिरण्यनाभाद् यो योगं प्राप्य जगौ द्विषट् । संहिताः प्राच्यसाम्नां वै नीपो ह्युग्रायुधस्ततः[7] ॥
तस्य क्षेम्यः सुवीरोऽथ सुवीरस्य रिपुञ्जयः[8] । ततो बहुरथो नाम पुरुमीढोऽप्रजोऽभवत् ॥ ३० ॥
नळिन्यामजमीढस्य नीळः शान्तिस्तु तत्सुतः । शान्तेः सुशान्तिस्तत्पुत्रः पुराजोऽर्कस्ततोऽभवत्[9]॥
हर्म्याश्वस्तत्सुतस्तस्य पञ्चासन् मुद्गलादयः । यवीनरो बृहदिषुः काम्पिल्यः सञ्जयस्ततः[10] ॥ ३२ ॥
हर्म्याश्वः प्राह पुत्रा मे पञ्चानां रक्षणाय हि । विषयाणामलमिमे इति पञ्चालसञ्ज्ञिताः ॥ ३३ ॥

---

१. ईश्वरालम्बितम् ❋ २. पुष्करारुणिः ❋ ३. ब्रह्मक्षत्रात् सुहोत्रः ❋
४. बृहत्कर्मा ततस्त्वस्य ❋ ५. .... सुतः पाकः ❋ * अयं श्लोकः प्राचीनकोशेषु नास्ति ।
६. फल्लाटः ❋ ७. ह्युग्रायुधस्ततः ❋ ८. पुरञ्जयः ❋ ९. पौराजोऽर्कः ❋ १०. सृञ्जयस्ततः ❋

मुद्गलाद् ब्रह्म निर्वृत्तं[1] गोत्रं मौद्गल्यसञ्ज्ञितम् । मिथुनं मुद्गलाचार्याद्[2] दिवोदासः पुमानभूत् ॥
अहल्या कन्यका यस्यां शतानन्दस्तु गौतमात् । तस्य शतधृतिः[3] पुत्रो धनुर्वेदविशारदः ॥ ३५ ॥
शरद्वांस्तत्सुतो यस्मादुर्वशीदर्शनात् किल । शरस्तम्बेऽपतद् रेतो मिथुनं तदभूच्छुभम् ॥ ३६ ॥
तद् दृष्ट्वा कृपयाऽगृह्णाच्छन्तनुर्मृगयां चरन् । कृपः कुमारः कन्या च द्रोणपत्न्यभवत् कृपी ॥ ३७ ॥

**॥ इति श्रीमद्भागवते नवमस्कन्धे अष्टादशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

मित्रायुश्च दिवोदासाच्च्यवनस्तत्सुतो नृप[4] । सुदासः सहदेवोऽथ सोमको जन्तुजन्मकृत् ॥ १ ॥
तस्य पुत्रशतं तेषां यवीयान् पृषतःस्मृतः । द्रुपदो द्रौपदी तस्य धृष्टद्युम्नादयः सुताः ॥ २ ॥
धृष्टद्युम्नाद् धृष्टकेतुर्हर्म्याः पाञ्चालका इमे । योऽजमीढसुतो ह्यन्य ऋक्षः संवरणस्ततः ॥ ३ ॥
तपत्यां सूर्यकन्यायां कुरुक्षेत्रपतिः कुरुः । परीक्षित् सुधनुर्जह्नुर्निषधश्च[5] कुरोः सुताः ॥ ४ ॥
सुहोत्रोऽभूत् सुधनुषश्च्यवनस्तत्सुतः कृती[6] । वसुस्तस्योपरिचरो बृहद्रथमुखास्ततः ॥ ५ ॥
कुशाम्बुमत्स्यप्रत्यग्रवेदिषाद्याश्च[7] चेदिपाः । बृहद्रथात् कुशाग्रोऽभूद्[8] ऋषभस्तस्य तत्सुतः ॥
जज्ञे सत्यहितोऽपत्यं पुष्पवांस्तत्सुतो जहुः । अन्यस्यामपि भार्यायां शकले द्वे बृहद्रथात् ॥ ७ ॥
ते मात्रा बहिरुत्सृष्टे जरया चाभिसन्धिते । जीव जीवेति क्रीडन्त्या जरासन्धोऽभवत् सुतः ॥ ८ ॥
ततश्च सहदेवोऽभूत् सोमापिर्यच्छतश्रवाः[9] । परीक्षिदनपत्योऽभूत् सुरथो नाम जाह्नवः ॥ ९ ॥
ततो विदूरथस्तस्मात् सार्वभौमस्ततोऽभवत् । जयत्सेनस्तत्तनयो राचीकोऽतो[10] द्युमानभूत् ॥
ततश्चाक्रोधनस्तस्माद् देवातिथिरमुष्य च । ऋक्षस्तस्य दिलीपोऽभूत् प्रतीपस्तस्य चात्मजः ॥ ११ ॥
देवापिः शन्तनुस्तस्य बाह्लीक इति चात्मजाः । पितृराज्यं समुत्सृज्य[11] देवापिस्तु वनं गतः ॥
अभवच्छन्तनू राजा प्राङ् महाभिषसञ्ज्ञितः । यं यं कराभ्यां स्पृशति जीर्णं यौवनमेति सः[12] ॥

---

१. ब्रह्म यद् वृत्तम् ❋ २. मुद्गलाद् धार्म्यात् ❋ ३. सत्यधृतिः ❋ ४. तत्सुतोऽभवत् ❋
५. निषधाश्वः ❋ ६. च्यवनोऽथ ततः कृतिः ❋ ७. .....वेदिकाद्याश्च ❋ ८. कुशाश्वोऽभूत् ❋
९. श्रुतश्रवाः १०. राचिकोऽतः ❋ ११. परित्यज्य ❋ १२. यौवनमेष्यति ❋

शान्तिमाप्नोति चैवाग्र्यां कर्मणा तेन शन्तनुः । समा द्वादश तद्राष्ट्रे न ववर्ष यदा विभुः ॥ १४ ॥
शन्तनुर्ब्राह्मणैरुक्तः परिवेत्ताऽयमग्रभुक् । राज्यं देह्यग्रजायाशु पुरराष्ट्रविवृद्धये ॥ १५ ॥
एवमुक्तो द्विजैर्ज्येष्ठं छन्दयामास सोऽब्रवीत् । तन्मन्त्रिप्रहितैर्विप्रैर्वेदाद् विभ्रंशितो गिरा ।
वेदवादातिवादान् वै[१] ततो देवो ववर्ष ह ॥ १६ ॥
देवापिर्योगमास्थाय कलापग्राममाश्रितः । सोमवंशे कलौ नष्टे कृतादौ स्थापयिष्यति ॥ १७ ॥
बाह्लीकात् सोमदत्तोऽभूद् भूरिर्भूरिश्रवास्ततः । शलश्च शन्तनोरासीद् गङ्गायां भीष्म आत्मवान् ॥
सर्वधर्मविदां श्रेष्ठो महाभागवतः कविः । वीरयूथाग्रणीर्येन रामोऽपि युधि तोषितः ॥ १९ ॥
शन्तनोर्दाशकन्यायां जज्ञे चित्राङ्गदस्ततः । विचित्रवीर्योऽवरजो नाम्ना चित्राङ्गदो हतः ॥ २० ॥
यस्यां पराशरात् साक्षादवतीर्णो हरेः कला । वेदगुप्त्यै[२] मुनिः कृष्णो यतोऽहमिदमध्यगाम् ॥
हित्वा स्वशिष्यान् पैलादीन् भगवान् बादरायणः । मह्यं पुत्राय शान्ताय परं गुह्यमिदं जगौ ॥ २२ ॥
विचित्रवीर्योऽथोवाह काशिराजसुते बलात् । स्वयंवरादुपानीते अम्बिकाम्बालिके स तु[३] ॥ २३ ॥
तयोरासक्तहृदयो गृहीतो यक्ष्मणा मृतः ॥ २४ ॥
क्षेत्रेऽप्रजस्य वै भ्रातुर्मात्रोक्तो बादरायणः । धृतराष्ट्रं च पाण्डुं च विदुरं चाप्यजीजनत् ॥ २५ ॥
गान्धार्यां धृतराष्ट्रस्य जज्ञे सुतशतं नृप । तत्र[४] दुर्योधनो ज्येष्ठो दुःशळा चापि कन्यका ॥ २६ ॥
शापान्मैथुनरुद्धस्य पाण्डोः कुन्त्यां महारथाः । जाता धर्मानिलेन्द्रेभ्यो युधिष्ठिरमुखास्त्रयः ॥ २७ ॥
नकुलः सहदेवश्च माद्र्यां नासत्यदस्रयोः । द्रौपद्यां[५] पञ्च पञ्चभ्यः पुत्रास्ते पितरोऽभवन् ॥ २८ ॥
युधिष्ठिरात् प्रतिविन्ध्यः श्रुतसेनो[६] वृकोदरात् । अर्जुनाच्छ्रुतकीर्तिस्तु शतानीकस्तु नाकुलिः ॥
सहदेवसुतो राजन् श्रुतकर्मा तथाऽपरे[७] । युधिष्ठिरात्तु पौरव्यां देवकोऽथ घटोत्कचः ॥ ३० ॥
भीमसेनाद् हिडिम्बायां काळ्यां शर्वगतस्ततः[८] । सहदेवात् सुहोत्रं तु विजयाऽसूत पार्वती ॥
करेणुमत्यां नकुलो निरमित्रं तथाऽर्जुनः । इरावन्तमुलूप्यां वै सुतायां बभ्रुवाहनम् ॥ ३२ ॥
मणलूरपतेः[९] सोऽपि तत्पुत्रः पुत्रिकासुतः । तव तातः सुभद्रायामभिमन्युरजायत ॥ ३३ ॥

---

१. वेदवादातिवादाद्यैः ❋ २. वेदगुप्तौ ❋ ३. उभे ४. तेषाम् ५. द्रौपद्याः ❋
६. सुतसोमः ❋ ७. श्रुतकीर्तिस्तथाऽपरे ८. काळी शर्वगतं ततः ❋ ९. मणिपूरपतेः ❋

सर्वातिरथजिद् वीर उत्तरायां ततो भवान् । परिक्षीणेषु कुरुषु द्रौणेर्ब्रह्मास्त्रतेजसा ॥ ३४ ॥
त्वं तु कृष्णानुभावेन सजीवो मोचितोऽन्तकात् । तवेमे तनयास्तात जनमेजयपूर्वकाः ॥ ३५ ॥
श्रुतसेनो भीमसेन उग्रसेनश्च वीर्यवान् । जनमेजयस्त्वां विदित्वा तक्षकान्निधनं गतम् ॥ ३६ ॥
सर्पान् वै सर्पयागाग्नौ स होष्यति रुषाऽन्वितः । कावषेयं पुरोधाय तुरं[१] तुरगमेधया[२] ॥ ३७ ॥
समन्तात् पृथिवीं सर्वां जित्वा यक्ष्यति चाध्वरैः[३] । तस्य पुत्रः शतानीको याज्ञवल्क्यात् त्रयीं पठन् ॥
अस्त्रज्ञानं क्रियाज्ञानं शौनकात् परमेष्यति । सहस्रानीकस्तत्पुत्रस्ततश्चैवाश्वमेधजः ॥ ३९ ॥
विस्रम्भकृष्णस्तस्यापि[४] नेमिचक्रस्तु तत्सुतः[५] । गजाह्वये हृते नद्या कौशाम्ब्यां साधु वत्स्यति ॥
उक्तस्ततश्चित्ररथस्तस्माच्छुचिरथः सुतः । तस्माच्च धृष्टिमांस्तस्य सुषेणोऽथ महीपतिः ॥ ४१ ॥
सुनीथस्तस्य भविता नृचक्षुर्यत् सुखीनलः । पारिप्लवः[६] सुतस्तस्मान्मेधावी सुनयात्मजः ॥ ४२ ॥
नृपञ्जयस्ततो दुर्वस्तिमिस्तस्माज्जनिष्यते[७] । ततो बृहद्रथस्तस्माच्छतानीकः[८] सुदासजः[९] ॥ ४३ ॥
शतानीकाद् दुर्दमनस्तस्यापत्यं वहीनरः । दण्डपाणिर्निमिस्तस्य क्षेमको भविता ततः[१०] ॥ ४४ ॥
ब्रह्मक्षत्रस्य वै योनिर्वंशो[११] देवर्षिसत्कृतः । क्षेमकं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ॥ ४५ ॥
अथ मागधराजानो भाविनो ये वदामि ते ॥ ४६ ॥
भविता सहदेवस्य सोमापिर्यच्छुतश्रवाः[१२] । ततोऽयुतायुस्तस्यापि निरमित्रोऽथ तत्सुतः ॥ ४७ ॥
सुनक्षत्रः सुनक्षत्राद् बृहत्सेनोऽथ कर्मजित् । ततः श्रुतञ्जयो विप्रः[१३] शुचिस्तस्य भविष्यति ॥
क्षेमोऽथ सुव्रतस्तस्माद् धर्मसत्रः शमस्ततः[१४] । द्युढसेनोऽथ[१५] सुमतिः सुबलो जनिता ततः ॥
सुनीथः सत्यजिदथ विश्वजिद् यद् रिपुञ्जयः । बार्हद्रथाश्च[१६] भूपाला भाव्याः साहस्रवत्सरम् ॥

**॥ इति श्रीमद्भागवते नवमस्कन्धे एकोनविंशोऽध्यायः ॥**

---

१. मुनिम् ❋ २. तुरगमेधसा ❋ ३. चाध्वरे ❋ ४. असीमकृष्णस्तस्यापि ❋
५. निचक्रस्तत्सुतः स्मृतः ❋ ६. परिप्लवः ❋ ७. तिग्मस्तस्माज्जनिष्यते ❋
८. तिग्मेर्बृहद्रथ...❋ ९. सुतः समः ❋ १०. नृपः ❋ ११. ब्रह्मक्षत्रस्य योनिर्यो वंशः❋
१२. सोमवीर्यः श्रुतश्रवाः ❋ १३. श्रुतञ्जयाद् विप्रात् ❋ १४. कर्मसूत्रः श्रमस्ततः ❋
१५. द्रुमत्सेनोऽथ ❋ १६. बार्हद्रथस्य ❋

श्रीशुक उवाच

अनोः सभानरश्चक्षुः[१] परेक्षुश्च त्रयः सुताः । सभानरात्[२] कालनरः सञ्जयस्तत्सुतस्ततः[३] ॥ १ ॥

जनमेजयस्तस्य पुत्रो महाशीलो[४] महामनाः । उशीनरस्तितिक्षुश्च महामनस आत्मजौ ॥ २ ॥

शिबिर्वनः शमिर्दक्षश्चत्वारोशीनरात्मजाः[५] । वृषदर्भः सुवीरश्च मद्रः कैकय आत्मजाः[६] ॥ ३ ॥

शिबेश्चत्वार एवासन् तितिक्षोश्च पृषद्रथः[७] । ततो हेमोऽथ सुतपा बलिः सुतपसोऽभवत् ॥ ४ ॥

अङ्गवङ्गकलिङ्गाद्याः सुह्मपुण्ड्रान्ध्रसञ्ज्ञिताः[८] । जज्ञिरे दीर्घतमसो बलेः क्षेत्रे महीक्षितः ॥ ५ ॥

चक्रुः स्वनाम्ना विषयान् षडिमान् प्राच्यकानिह[९] । खनपानोऽङ्गतो जज्ञे तस्माद् दिविरथस्ततः ॥

सुतो धर्मरथो यस्य जज्ञे मित्ररथोऽप्रजः[१०] । रोमपाद इति ख्यातस्तस्मै दशरथः सखा ।

शान्तां स्वकन्यां[११] प्रायच्छद् ऋष्यशृङ्ग उवाह ताम् ॥ ७ ॥

देवेऽवर्षति यं रामा आनिन्युर्हरिणीसुतम् । नाट्यसङ्गीतवादित्रैर्विभ्रमालिङ्गनार्हणैः[१२] ॥ ८ ॥

स तु राज्ञोऽनपत्यस्य निरूप्येष्टिं मरुत्पतेः । प्रजामदाद् दशरथो येन लेभेऽप्रजः प्रजाः ॥ ९ ॥

चतुरङ्गो रोमपादात् पृथुलाक्षस्तु तत्सुतः । बृहद्रथो बृहत्कर्मा बृहद्भानुश्च तत्सुताः ॥ १० ॥

ततो बृहन्मनास्तस्माज्जयद्रथ उदाहृतः । विजयस्तस्य सम्भूत्यां ततो धृतिरजायत ॥ ११ ॥

ततो धृतव्रतस्तस्य सद्धर्माऽधिरथस्ततः[१३] । योऽसौ गङ्गातटे क्रीडन् मञ्जूषान्तर्गतं शिशुम् ॥ १२ ॥

कुन्त्याऽपविद्धं कानीनमनपत्योऽकरोत् सुतम् । वृषसेनः सुतस्तस्य कर्णस्य जगतीपते ॥ १३ ॥

द्रुह्योश्च तनयो बभ्रुः सेतुस्तस्यात्मजस्ततः । आरब्धस्तस्य गान्धारस्तस्य धर्मस्ततो धृतः[१४] ॥ १४ ॥

धृतस्य कर्दमस्तस्मात् प्रचेताः प्राचेतसः शतम् । म्लेच्छाधिपतयोऽभूवन्नुदीचीं दिशमाश्रिताः ॥ १५॥

तुर्वशोस्तु सुतो वह्निर्वह्नेर्भर्गोऽथ भानुमान्[१५] । नृभानुस्तत्सुतो[१६]ऽस्यापि करन्धम उदारधीः ॥

---

१. सहानरश्चक्षुः ❋ २. सहानरात् ❋ ३. सृञ्जय.....❋ ४. महाशालः ❋
५. शिबिर्नरः कृतिर्देवः ❋ ६. वृषादर्भिः सुनीरश्च मद्रः केकयः ❋ ७. रुशद्रथः ❋
८. ब्रह्मपुण्ड्राण्ड्रसञ्ज्ञिताः ❋ ९. प्राच्यकान् स्म ह ❋ १०. चित्ररथोऽप्रजः ❋
११. शान्तां च कन्याम् ❋ १२. विलोभ्यालिङ्गनार्हणैः ❋ १३. सत्यकोऽधिरथस्ततः ❋
१४. घर्मस्ततो धृतः ❋ १५. भर्गोऽथ भानुमान् ❋ १६. त्रिसानुस्तत्सुतो.. ❋

मरुत्तस्तत्सुतोऽपुत्रः पुत्रं पौरवमन्वभूत् । दुष्यन्तं स पुनर्भेजे स्वयं साम्राज्यकामुकः ॥ १७ ॥
ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशं नरर्षभ । वर्णयामि महापुण्यं सर्वपापहरं नृप ॥ १८ ॥
यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते । यत्रावतीर्णो भगवान् परमात्मा नराकृतिः ॥ १९ ॥
यदोः सहस्रजित् क्रोष्टुर्नळो रिपुरिति श्रुताः । चत्वारः सूनवस्तस्य शतजित् प्रथमात्मजः ॥ २० ॥
महाहयो वेणुहयो हैहयश्चेति[१] तत्सुताः । धर्मस्तु हैहयसुतो नेत्रः कुन्तेः पिता ततः ॥ २१ ॥
सोहञ्जिरभवत् कुन्तेर्महिष्मान् भद्रसेनकः । दुर्मदो[२] भद्रसेनस्य धनकः कृतवीर्यकः[३] ॥ २२ ॥
कृत्याग्निः[४] कृतवर्मा च कृतौजा धनकात्मजाः । अर्जुनः कृतवीर्यस्य सप्तद्वीपेश्वरोऽभवत् ॥ २३ ॥
दत्तात्रेयाद् हरेरंशात् प्राप्तयोगमहागुणः । न नूनं कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः ॥ २४ ॥
यज्ञदानतपोयोगैः श्रुतवीर्यजयादिभिः । पञ्चाशीतिसहस्राणि ह्यव्याहतबलः समाः ॥ २५ ॥
अनष्टविष्णुस्मरणो बुभुजेऽक्षय्यषड्वसु । तस्य पुत्रसहस्राणां[५] पञ्चैवोर्वरिता मृधे ॥ २६ ॥
जयध्वजः शूरसेनो ऋषभो मधुरूर्जितः । जयध्वजात् ताळजङ्घस्तस्य पुत्रशतं त्वभूत् ॥ २७ ॥
क्षत्रं यत् ताळजङ्घाख्यमौर्वतेजोपसंहृतम् । तेषां ज्येष्ठो वीतिहोत्रो वृष्णिः पुत्रो मधोः स्मृतः ॥
तस्य पुत्रशतं त्वासीद् वृष्णिज्येष्ठं यतः कुलम् । माधवा वृष्णयो राजन् यादवाश्चेति सञ्ज्ञितम्[६] ॥
यदुपुत्रस्य च क्रोष्टोः पुत्रो व्रजिनवांस्ततः । वाहिस्ततो रुशेकुर्वै[७] तस्य चित्ररथस्ततः ॥ ३० ॥
शशबिन्दुर्महायोगी महाभोजो महानभूत् । चतुर्दशमहारत्नश्चक्रवर्त्यपराजितः ॥ ३१ ॥
तस्य पत्नीसहस्राणां दशासन् सुमहायशाः । दशलक्षसहस्राणि पुत्राणां तास्वजीजनत् ॥ ३२ ॥
तेषां तु षट्प्रधानानां[८] पृथुश्रवस आत्मजः । धर्मो नामोशनास्तस्य हयमेधशतस्य याट् ॥ ३३ ॥
तत्सुतो रुचकस्तस्य पञ्चासन्नात्मजाः शृणु । पुरुजिद्रुग्मरुग्मेषुपृथुज्यामघसञ्ज्ञिताः ॥ ३४ ॥
ज्यामघस्त्वप्रजोऽप्यन्यां भार्यां शैब्यापतिर्भयात् । नाविन्दच्छत्रुभवनात् कन्यां भ्रष्टामहारषीत् ॥
रथस्थां तां निरीक्ष्याह शैब्या पतिममर्षिता । केयं कुहक मत्स्थानं रथमारोपितेति वै ॥
स्नुषा तवेत्यभिहिता स्मयन्ती पतिमब्रवीत् । अहं वन्ध्याऽसपत्नी च स्नुषा युज्येत मे कथम् ॥ ३७ ॥
जनयिष्यसि यं राज्ञि तस्येयमुपपत्स्यते । अन्वमोदन्त तद् विश्वेदेवाः पितर एव च ॥ ३८ ॥

---

१. हेहयश्चेति ❋ २. दुर्दमः ❋ ३. कृतवीर्यभूः ❋ ४. कृताग्निः ❋
५. पुत्रसहस्रस्य ❋ ६. सञ्ज्ञिताः ❋ ७. स्वाहितोऽतो रुशङ्कुर्वै ❋ ८. तेषां त्वष्टप्रधानानाम् ❋

शैब्या गर्भमधात् काले कुमारं सुषुवे शुभम् । स विदर्भ इति प्रोक्त उपयेमे स्नुषां सतीम् ॥ ३९ ॥

**॥ इति श्रीमद्भागवते नवमस्कन्धे विंशोऽध्यायः ॥**

---

तस्यां विदर्भोऽजनयत् पुत्रौ नाम्ना कुशक्रथौ । तृतीयं रोमपादं च वैदर्भकुलनन्दनम् ॥ १ ॥

रोमपादसुतो बभ्रुर्बभ्रोः कृतिरजायत । उशिकस्तत्सुतस्तस्माच्चेदिश्चैद्यादयो यतः[१] ॥ २ ॥

क्रथस्य कुन्तिः पुत्रोऽभूद् बलिस्तस्याथ[२] निर्वृतिः । ततो दशार्हनामाऽथ[३] तस्य व्योमः सुतस्ततः ॥

जीमूतो विकृतिस्तस्य यस्य भीमरथः सुतः । ततो नवरथः पुत्रो जातो दशरथस्ततः ॥ ४ ॥

करम्भिः[४] शकुनेः पुत्रो देवरातस्तदात्मजः । देवक्षत्रस्ततस्त्वस्य मधुः कुरुवशादनुः[५] ॥ ५ ॥

पुरुहोत्रस्त्वनोः पुत्रस्तस्यायुः सात्वतस्ततः[६] । भजमानो भजिर्दिव्यो वृष्णिर्देवावृधोऽन्धकः ॥

सात्वतस्य[७] सुताः सप्त महाभोजश्च मारिष । भजमानस्य निम्लोचिः किङ्किणो धृष्टिरेव च ॥ ७ ॥

एकस्यामात्मजाः पत्न्यामन्यस्यां च त्रयः सुताः । शताजिच्च सहस्राजिदयुताजिदिति प्रभो ॥ ८ ॥

बभ्रुर्देवावृधसुतस्तयोः श्लोकौ पठन्त्यमू[८] ॥ ९ ॥

यथैव शृणुमो दूरात् सम्पश्यामस्तथाऽन्तिकात् । बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधः समः ॥ १० ॥

पुरुषाः पञ्चषष्टिश्च षट्सहस्राणि चाष्ट च । येऽमृतत्वमनुप्राप्ता बभ्रोर्देवावृधादपि ॥ ११ ॥

महाभोजोऽतिधर्मात्मा भोजा आसन् तदन्वये ॥ १२ ॥

वृष्णेः सुमित्रः पुत्रोऽभूद् युधाजिच्च परन्तप । शिनिस्तस्यानमित्रश्च निम्नोऽभूदनमित्रतः[९] ॥ १३ ॥

सत्राजितः[१०] प्रसेनश्च निम्नस्याप्यासतुः[११] सुतौ । अनमित्रसुतो योऽन्यः शिनिस्तस्य च सत्यकः ॥

युयुधानः सात्यकिर्वै जयस्तस्य कुणिस्ततः । युगन्धरोऽनमित्रस्य पृश्निः पुत्रोऽपरस्ततः ॥ १५ ॥

श्वफल्कश्चित्ररथश्चैव[१२] गान्दिन्यां तु श्वफल्कतः । अक्रूरप्रमुखा आसन् पुत्रा द्वादश विश्रुताः ॥

आसङ्गः सारमेयश्च मृदुरो मृदुविद्गिरिः । धर्मो विधृष्टकर्मा च क्षेत्रोपेक्षोऽरिमर्दनः ॥ १७ ॥

---

१. चेदिश्चैद्या यतो नृपाः ❋ २. धृष्टिस्तस्याथ ❋ ३. दशार्हो नाम्ना तु ❋ ४. करम्भः ❋
५. मधुः कुकुरुकस्ततः ❋ ६. तस्याभूत् सत्वतस्ततः ❋ ७. सत्वतस्य ❋ ८. श्लोकं पठन्त्यमुम् ❋
९. निघ्नोऽभूत् ❋ १०. सत्राजिच्च ❋ ११. निघ्नस्य.... ❋ १२. श्वफल्कश्चित्रकश्चैव ❋

शत्रुघ्नो गन्धमोदाह्वः[1] प्रतिबाहुश्च द्वादश । तेषां स्वसा सुसाराख्या द्वावक्रूरसुतावपि ॥ १८ ॥
देववानुपदेवश्च तथा चित्ररथात्मजाः । पृथुविपृथुनामाद्या[2] बहवो वृष्णिनन्दनाः ॥ १९ ॥
कुकुरो[3] भजमानश्च शुचिः कम्बळबर्हिषः । कुकुरस्य सुतो धृष्णुर्विलोमा[4] तनयस्ततः ॥ २० ॥
कपोतरोमा तस्यानुः सखा यस्य च तुम्बुरुः । अनोश्च दुन्दुभिस्तस्य परिद्योतः[5] पुनर्वसुः ॥ २१ ॥
तस्याहुकश्चाहुकी च कन्या द्वावाहुकात्मजौ । देवकश्चोग्रसेनश्च चत्वारो देवकात्मजाः ॥ २२ ॥
देववानुपदेवश्च सुदेवो देववर्धनः । तेषां स्वसारः सप्तासन् धृतदेवादयो नृप ॥ २३ ॥
शान्तिदेवोपदेवा च श्रीदेवा देवरक्षिता । सहदेवा देवकी च वसुदेव उवाह ताः ॥ २४ ॥
कंसः सुनामा न्यग्रोधः कङ्कः शङ्कुः सुभूस्तथा[6] । राष्ट्रपालोऽब्दसृष्टिश्च तुष्टिमानौग्रसेनयः ॥ २५ ॥
कंसा कंसवती कङ्का सुरभू[7] राष्ट्रपालिका । औग्रसेना दुहितरो वसुदेवानुजस्त्रियः ॥ २६ ॥
शूरो विडूरथादासीद् भजमानसुतात् ततः । शिनिस्तस्मात् स्वयम्भोजो हृदिकस्तत्सुतो मतः ॥२७॥
देवबाहुः शतधनुः[8] कृतवर्मेति तत्सुताः । देवमीढस्य शूरस्य मारिषा नाम पत्न्यभूत् ॥ २८ ॥
तस्यां सञ्जनयामास दशपुत्रानकल्मषान् । वसुदेवं देवभागं देवश्रवसमानकम् ॥ २९ ॥
सृञ्जयं श्यामकं कङ्कमनीकं वत्सकं वृकम् । देवदुन्दुभयो नेदुरानका यस्य जन्मनि ॥ ३० ॥
वसुदेवं हरेः स्थानं वदन्त्यानकदुन्दुभिम् । पृथा च श्रुतदेवा च श्रुतकीर्तिः श्रुतश्रवाः ॥ ३१ ॥
राजाधिदेवी चैतेषां भगिन्यः पञ्च कन्यकाः । कुन्तेः सख्युः पिता शूरो ह्यपुत्रस्य पृथामदात्॥३२॥
सा च दुर्वाससो विद्यां देवहूतीं[9] प्रतोषितात् । तस्या वीर्यपरीक्षार्थमाजुहाव रविं शुचिः ॥ ३३ ॥
तदैवोपगतं देवं वीक्ष्य विस्मितमानसा । प्रत्ययार्थं प्रयुक्ताया याहि देव क्षमस्व मे ॥ ३४ ॥
अमोघं देवसन्दर्शमाधास्ये त्वयि चात्मजम् । योनिर्यथा न दुष्येत कर्ताऽहं ते सुमध्यमे ॥ ३५ ॥
इति तस्यां समाधाय गर्भं सूर्यो दिवं गतः । सद्यः कुमारः सञ्जज्ञे द्वितीय इव भास्करः ॥ ३६ ॥
तं साऽत्यजन्नदीतोये कृच्छ्राल्लोकस्य बिभ्यती । प्रपितामहस्तामुवाह पाण्डुर्वै सत्यविक्रमः ॥ ३७ ॥
श्रुतदेवां तु कारूशो वृद्धशर्मा समग्रहीत् । यस्यामभूद् दन्तवक्र ऋषिशप्तो[10] दितेः सुतः ॥ ३८ ॥

---

१. गन्धमादाह्वः ❋ २. पृथुविपृथुधान्याद्याः ❋ ३. कुकुरः ❋ ४. वृष्णिर्विलोमा ❋
५. दविद्योतात् ❋ ६. कह्वः शङ्कुः सुहूस्ततः ❋ ७. सुर[illegible] [illegible]शतधनुः ❋
९. देवहूताम् ❋ १०. इति शप्तः ❋

केकयो[१] धृष्टकेतुश्च श्रुतकीर्तिमविन्दत । सन्तर्दनादयस्तस्याः पञ्चासुः[२] कैकयाः सुताः ॥ ३९ ॥
राजाधिदेव्यामावन्त्यौ जयत्सेनोऽजनिष्ट ह । दमघोषश्चेदिराजः श्रुतश्रवसमग्रहीत् ॥ ४० ॥
शिशुपालः सुतस्तस्य कथितस्तस्य सम्भवः । देवभागस्य कंसायां चित्रकेतुबृहद्बलौ ॥ ४१ ॥
कंसवत्यां देवश्रवसः सुवीर इषुमांस्तथा । कङ्कायामानकाज्जातः सत्यजित् पुरुजित् तथा ॥ ४२ ॥
सृञ्जयो राष्ट्रपाल्यां तु वृषदुर्मर्षणादिकान् । हरिकेशहिरण्याक्षौ सुरभूम्यां[३] तु श्यामकः ॥ ४३ ॥
मित्रकेश्यामप्सरसि वृकादीन् वत्सकस्तथा[४] । तक्षपुष्करशालादीनुर्वश्यां वृक आदधे ॥ ४४ ॥
सुमित्रार्जुनबाणादीननीकात् तु सुदामनी[५] । कङ्कश्च कर्णिकायां वै[६] ऋतधामजयावपि ॥ ४५ ॥
पौरवी रोहिणी भद्रा मदिरा रोचना इळा । देवकीप्रमुखा आसन् पत्न्य आनकदुन्दुभेः ॥ ४६ ॥
बलं गदं सारणं च दुर्मदं विपुलं ध्रुवम् । वसुदेवस्तु रोहिण्यां कृतधीरुदपादयत्[७] ॥ ४७ ॥
सुभद्रो भद्रबाहुश्च दुर्मदो भद्र एव च । पौरव्यास्तनया ह्येते भूताद्या द्वादशाभवन् ॥ ४८ ॥
नन्दोपनन्दकृतकशूराद्या मदिरात्मजाः । भद्राख्या केशिनं त्वेकमसूत कुलनन्दनम् ॥ ४९ ॥
रोचनायां ततो जाता हस्तहेमाङ्गदादयः । इळायां पुरुवल्कादीन्[८] यदुमुख्यानजीजनत् ॥ ५० ॥
त्रिपृष्ठो धृतदेवायां[९] जात आनकदुन्दुभेः । शान्तिदेवात्मजा राजन् प्रशमप्रश्रितादयः ॥ ५१ ॥
राजानः[१०] कल्पवर्षाद्या उपदेव्याः सुता दश । वसुहंससुधन्वाद्याः श्रीदेवायाश्च षट् सुताः ॥ ५२ ॥
देवरक्षितया लब्धा नव चात्र गदादयः । वसुदेवः सुतानष्टावादधे सहदेवया ॥ ५३ ॥
पुरुविश्रुतमुख्यांस्तु साक्षाद्धर्मो वसूनिव । वसुदेवस्तु देवक्यामष्टपुत्रानजीजनत् ॥ ५४ ॥
कीर्तिमन्तं सुषेणं च भद्रसेनमुदारधीः । ऋजुं सम्मर्दनं भद्रं सङ्कर्षणमहीश्वरम् ॥ ५५ ॥
अष्टमस्तु तयोरासीत् स्वयमेव हरिः किल । सुभद्रा च महाभागा तव राजन् पितामही ॥ ५६ ॥
यदायदा हि धर्मस्य क्षयो वृद्धिश्च पाप्मनः । तदा तु भगवानीश आत्मानं सृजते हरिः ॥ ५७ ॥
न ह्यस्य जन्मनो हेतुः कर्मणां वा[११] महीपते । आत्ममायां विनेशस्य परस्य द्रष्टुरात्मनः ॥ ५८ ॥
यन्मायाचेष्टितं पुंसः स्थित्युत्पत्त्यप्ययाय हि । अनुग्रहस्तन्निवृत्तेरात्मलाभाय चेष्यते ॥ ५९ ॥

---

१. कैकेयः ❋ २. पञ्चासन् ❋ ३. शूरभूम्याम् ❋ ४. वृषादीन् वत्सदानकः ❋
५. सुमालिनी ❋ ६. गण्डूषः कर्णिकायां वै ❋ ७. कृतादीनुदपादयत् ❋ ८. उरुवल्कादीन् ❋
९. धृतदेवायाः ❋ १०. राजकः ❋ ११. कर्मणो वा ❋

अक्षोहिणीनां पतिभिरसुरैर्नृपलाञ्छनैः । भुव आक्रम्यमाणाया अभावाय कृतोद्यमः ॥ ६० ॥
कर्माण्यपरिमेयानि मनसाऽपि सुरेश्वरैः । सहसङ्कर्षणश्चक्रे भगवान् मधुसूदनः ॥ ६१ ॥
कलौ जनिष्यमाणानां दुःखशोकतमोनुदम् । अनुग्रहाय भूतानां सुपुण्यं व्यतनोद् यशः ॥ ६२ ॥
यस्मिन् सत्कर्णपीयूषे यशस्तीर्थवरेऽसकृत् । श्रोत्राञ्जलिरुपस्पृश्य धुनुते कर्मवासनाः ॥ ६३ ॥
भोजवृष्ण्यन्धकमधुशूरसेनदशार्हकैः । श्लाघनीयेहितः शश्वत् कुरुसृञ्जयपाण्डुभिः ॥ ६४ ॥
स्निग्धस्मितेक्षितोदारैर्वाक्यैर्विक्रमलीलया[1] । नृलोकं रमयामास मूर्त्या सर्वाङ्गरम्यया ॥ ६५ ॥

यस्याननं मकरकुण्डलचारुकर्णभ्राजत्कपोलसुभगं सविलासहासम् ।
नित्योत्सवं न ततृपुर्दृशिभिः पिबन्त्यो नार्यो नराश्च मुदिताः कुपिता निमेश्च[2] ॥ ६६ ॥

जातो गतः पितृगृहाद् व्रजमेधितोऽत्र[3] हत्वा रिपून् सुतशतानि कृतोरुदारः ।
उत्पाद्य तेषु पुरुषः क्रतुभिः समीजे आत्मानमात्मनिगमं प्रथयन् जनेषु ॥ ६७ ॥

पृथ्व्याः स वै गुरुभरं क्षपयन् कुरूणामन्तःसमुत्थकलिना युधि भूपबन्धम् ।
दृष्ट्या विधूय विजये जयमुद्विघुष्य प्रोच्योद्धवाय च वरं[4] समगात् स्वधाम ॥ ६८ ॥

**॥ इति श्रीमद्भागवते महापुराणे वैयासक्यामष्टादशसाहस्र्यां पारमहंस्यां संहितायां नवमस्कन्धे एकविंशोऽध्यायः ॥**

## ॥ समाप्तश्च नवमस्कन्धः ॥

---

१. ...स्मितेक्षणोदारैः ❋
२. नार्योऽशपन् प्रमुदिता रुषिता निमेश्च ❋
३. व्रज एधितोऽत्र ❋
४. उद्धवाय च परम्/ उद्धवाय परमम् ❋

## ॥ अथ दशमस्कन्धः ॥

### राजोवाच

कथितो वंशविस्तारो भवता सोमसूर्ययोः । राज्ञां चोभयवंश्यानां चरितं परमाद्भुतम् ॥ १ ॥
यदोश्च धर्मशीलस्य नितरां मुनिसत्तम । तत्रांशेनावतीर्णस्य विष्णोर्वीर्याणि शंस नः ॥ २ ॥
अवतीर्य यदोर्वंशे भगवान् भूतभावनः । कृतवान् यानि विश्वात्मा तानि नो वद विस्तरात् ॥ ३ ॥

निवृत्ततर्षैरुपगीयमानाद् भवौषधाच्छ्रोत्रमनोभिरामात् ।
क उत्तमश्लोकगुणानुवादात् पुमान् विरज्येत विनाऽतिमुग्धात् ॥ ४ ॥
पितामहा मे समरेऽमरञ्जयैर्देवव्रताद्यातिरथैस्तिमिङ्गिलैः ।
दुरत्ययं कौरवसैन्यसागरं कृत्वाऽतरन् वत्सपदं स्म यत्प्लवाः ॥ ५ ॥
द्रौण्यस्त्रविप्लुष्टमिदं मदङ्गं सन्तानबीजं कुरुपाण्डवानाम् ।
जुगोप कुक्षिं गत आत्तचक्रो मातुश्च मे यः शरणं गतायाः ॥ ६ ॥
वीर्याणि तस्याखिलदेहभाजामन्तर्बहिः पूरुषकालरूपैः ।
प्रयच्छतो मृत्युमनामयं च मायामनुष्यस्य वदस्व विद्वन् ॥ ७ ॥

रोहिण्यास्तनयः प्रोक्तो रामः सङ्कर्षणस्त्वया । देवक्या गर्भसम्बन्धः कुतो देहान्तरं विना ॥ ८ ॥
कस्मान्मुकुन्दो भगवान् पितुर्गेहाद् व्रजं गतः । क वासं ज्ञातिभिः सार्धं कृतवान् सात्वतां पतिः ॥ ९ ॥
व्रजे वसन् किमकरोन्मधुपुर्यां च केशवः । भ्रातरं चावधीत् कंसं मातुरद्धाऽतदर्हणम् ॥ १० ॥
देहं मानुषमाश्रित्य कति वर्षाणि वृष्णिभिः । यदुपुर्यामिहावात्सीत् पत्न्यः कत्यभवन् विभोः ॥
एतदन्यच्च सर्वं मे मुने कृष्णविचेष्टितम् । वक्तुमर्हसि धर्मज्ञ[1] श्रद्दधानाय विस्तरात्[2] ॥ १२ ॥
नैषाऽतिदुस्सहा क्षुन्मां त्यक्तोदमपि बाधते । पिबन्तं त्वन्मुखाम्भोजात् सृतं हरिकथामृतम् ॥ १३ ॥

### सूत उवाच

एतन्निशम्य भृगुनन्दन साधुवादं वैयासकिः स भगवानथ विष्णुरातम् ।
प्रत्यर्च्य कृष्णचरितं कलिकल्मषघ्नं व्याहर्तुमारभत भागवतप्रधानः ॥ १४ ॥

### श्रीशुक उवाच

सम्यग् व्यवसिता बुद्धिस्तव राजर्षिसत्तम । वासुदेवकथायां ते यज्जाता नैष्ठिकी रतिः ॥ १५ ॥

---

१. सर्वज्ञ २. विस्तृतम्

वासुदेवकथाप्रश्नः पुरुषांस्त्रीन् पुनाति हि । वक्तारं पृच्छकं श्रोतॄंस्तत्पादसलिलं यथा ॥ १६ ॥
भूमिर्दृप्तनृपव्याजदैत्यानीकशतायुतैः । आक्रान्ता भूरिभारेण ब्रह्माणं शरणं ययौ ॥ १७ ॥
गौर्भूत्वाऽश्रुमुखी खिन्ना रुदन्ती करुणं यथा[1] । उपस्थिताऽन्तिके तस्मै व्यसनं समवोचत॥ १८ ॥
ब्रह्मा तदुपधार्याथ सह देवैस्तया सह । जगाम सत्रिनयनस्तीरं क्षीरपयोनिधेः ॥ १९ ॥
तत्र गत्वा जगन्नाथं देवदेवं वृषाकपिम् । पुरुषं पुरुषसूक्तेन उपतस्थे[2] समाहितः ॥ २० ॥

गिरं समाधौ गगने समीरितां निशम्य वेधास्त्रिदशानुवाच ह ।
गां पौरुषीं मे शृणुतामराः पुनर्विधीयतामाशु तथैव माचिरम् ॥ २१ ॥
पुरैव पुंसाऽवधृतो धराज्वरो भवद्भिरंशैर्यदुषूपजन्यताम् ।
स यावदुर्व्या भरमीश्वरेश्वरः स्वकालशक्त्या क्षपयंश्चरेद् भुवि ॥ २२ ॥

वसुदेवगृहे साक्षाद् भगवान् पुरुषः परः । जनिष्यते तत्प्रियार्थं[3] सम्भवन्तु सुरस्त्रियः ॥ २३ ॥
वासुदेवकलाऽनन्तः सहस्रवदनः स्वराट् । अग्रतो भविता देवो हरेः प्रियचिकीर्षया ॥ २४ ॥
योगमाया[4] भगवती यया सम्मोहितं जगत् । आदिष्टा प्रभुणांऽशेन कार्यार्थे सम्भविष्यति ॥ २५ ॥

**श्रीशुक उवाच**

इत्यादिश्यामरगणान् प्रजापतिपतिर्विभुः । आश्वास्य च महीं गीर्भिः स्वधाम परमं ययौ ॥ २६ ॥
शूरसेनो यदुपतिर्मधुरामावसन्[5] पुरीम् । माधुरान् शूरसेनांश्च विषयान् बुभुजे स्वराट् ॥ २७ ॥
राजधानी ततः साऽसीत् सर्वयादवभूभुजाम् । मधुरा भगवान् यत्र नित्यं सन्निहितो हरिः ॥ २८ ॥
तस्यां तु कर्हिचिच्छौरिर्वसुदेवः कृतोद्वहः । देवक्या भार्यया सार्धं प्रयाणे रथमारुहत् ॥ २९ ॥
उग्रसेनसुतः कंसः स्वसुः प्रियचिकीर्षया । रश्मीन् हयानां जगृहे रौग्मै रथशतैर्वृतः ॥ ३० ॥
चतुश्शतं पारिबर्हं गजानां हेममालिनाम् । अश्वानामयुतं सार्धं रथानां च त्रिषट्शतम्[6] ॥ ३१ ॥
दासीनां सुकुमारीणां[7] द्वे शते समलङ्कृते । दुहित्रे देवकः प्रादाद् याने दुहितृवत्सलः ॥ ३२ ॥
शङ्खतूर्यमृदङ्गानि नेदुर्दुन्दुभयः समम् । प्रयाणप्रक्रमे तात वरवध्वोः सुमङ्गलम् ॥ ३३ ॥
पथि प्रग्रहिणं कंसमाभाष्याहाशरीरवाक् । अस्यास्त्वामष्टमो गर्भो हन्ता यां नयसेऽबुध ॥ ३४ ॥

---

१. करुणं विभो ❋ २. पुरुषसूक्ताद्यैरुपतस्थे ❋ ३. तत्पूजार्थम् ❋ ४. विष्णोर्माया ❋
५. आवसत् ❋ ६. रथानां चापि षट्शतम् ❋ ७. निष्ककण्ठीनाम् ❋

इत्युक्तः स खलः पापो भोजानां कुलपांसनः। भगिनीं हन्तुमारब्धः खड्गपाणिः कचेऽग्रहीत् ॥
तं जुगुप्सितकर्माणं नृशंसं निरपत्रपम्। वसुदेवो महाभाग उवाच परिसान्त्वयन् ॥ ३६ ॥

**वसुदेव उवाच**

श्लाघनीयगुणः शूरैर्भवान् भोजयशस्करः। स कथं भगिनीं हन्याः स्त्रियमुद्वाहपर्वणि ॥ ३७ ॥
मृत्युर्जन्मवतां वीर देहेन सह जायते। अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्रणिनां ध्रुवः ॥ ३८ ॥
देहे पञ्चत्वमापन्ने देही कर्मानुगोऽवशः। देहान्तरमनुप्राप्य प्राक्तनं त्यजते वपुः ॥ ३९ ॥
व्रजंस्तिष्ठन् पदैकेन यथैवैकेन गच्छति। यथा तृणजळूकैवं देही कर्मगतिं गतः ॥ ४० ॥

स्वप्ने यथा पश्यति देहमीदृशं मनोरथेनाभिनिविष्टचेतनः।
दृष्टश्रुताभ्यां मनसाऽनुचिन्तयन् प्रपद्यते तत् किमपि ह्यपस्मृतिः ॥ ४१ ॥
यतोयतो धावति दैवचोदितं मनो विकारात्मकमात्मपञ्चसु।
गुणेषु मायारचितेषु देह्यसौ प्रपद्यमानः सह तेन जायते ॥ ४२ ॥
ज्योतिर्यथैवोदकपार्थिवेष्वदः समीरवेगानुगतं विभाव्यते।
एवं स्वमायारचितेष्वसौ पुमान् गुणेषु रागानुगतो विमुह्यति ॥ ४३ ॥

तस्मान्न कस्यचिद् द्रोहमाचरेत् स तथाविधः। आत्मनः क्षेममन्विच्छन् द्रोग्धुर्वै परतो भयम् ॥
एषा तवानुजा बाला कृपणा पुत्रिकोपमा। हन्तुं नार्हसि कल्याणीमिमां त्वं दीनवत्सल ॥ ४५ ॥

**श्रीशुक उवाच**

एवं स सामभिर्भेदैश्चोद्यमानोऽपि[१] दारुणः। न न्यवर्तत कौरव्य पुरुषादाननुव्रतः ॥ ४६ ॥
निर्बन्धं तस्य तं ज्ञात्वा विचिन्त्यानकदुन्दुभिः। प्राप्तकालं प्रतिव्योढुमिदं तत्रान्वपद्यत[२] ॥ ४७ ॥
मृत्युर्बुद्धिमताऽपोह्यो यावद्बुद्धिबलोदयम्। यद्यसौ न निवर्तेत नापराधोऽस्ति देहिनः ॥ ४८ ॥
प्रत्यर्प्य मृत्यवे पुत्रान् मोचये कृपणामिमाम्। सुता मे यदि जायेरन् मृत्युर्वा न म्रियेत चेत् ॥ ४९ ॥
विपर्ययो वा किं न स्याद् गतिर्धातुर्दुरत्यया। उपस्थितो निवर्तेत निवृत्तः पुनरापतेत् ॥ ५० ॥

अग्नेर्यथा दारुवियोगयोगयोरदृष्टतोऽन्यन्न निमित्तमस्ति।
एवं हि जन्तोरपि दुर्विभाव्यः शरीरसंयोगवियोगहेतुः ॥ ५१ ॥

एवं विमृश्य तं पापं यावदात्मनि दर्शनम्। सान्त्वयामास वै शौरिर्बहुमानपुरस्सरम् ॥ ५२ ॥
प्रत्यग्रवदनाम्भोजो नृशंसं निरपत्रपम्। मनसा दूयमानेन प्रहसन्निदमब्रवीत् ॥ ५३ ॥

---

१. बोध्यमानोऽपि २. इदमेवान्वपद्यत ❋

### वसुदेव उवाच

न ह्यस्यास्ते भयं सौम्य यद् वै त्वाऽऽहाशरीरवाक् । पुत्रान् समर्पयिष्येऽस्या यतस्ते भयमुत्थितम् ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे प्रथमोऽध्यायः ॥**

---

### श्रीशुक उवाच

स्वसुर्वधान्निववृते कंसस्तद्वाक्यसारवित् । वसुदेवोऽपि तं प्रीतः प्रशस्य प्राविशद् गृहम् ॥ १ ॥
अथ काल उपावृत्ते देवकी सर्वदेवता । पुत्रान् प्रसुषुवे चाष्टौ कन्यां चैवानुवत्सरम् ॥ २ ॥
कीर्तिमन्तं प्रथमजं कंसायानकदुन्दुभिः । अर्पयामास कृच्छ्रेण सोऽनृतादतिविह्वलः ॥ ३ ॥
किं दुस्सहं नु साधूनां विदुषां किमपेक्षितम् । किमकार्यं कदर्याणां दुस्त्यजं किम् ऋतात्मनाम् ॥ ४ ॥
दृष्ट्वा समत्वं तच्छौरेः सत्ये चैव व्यवस्थितिम् । कंसस्तुष्टमना राजन् प्रहसन्निदमब्रवीत् ॥ ५ ॥
प्रतियातु कुमारोऽयं न ह्यस्मादस्ति मे भयम् । अष्टमाद् युवयोः पुत्रान्मृत्युर्मे विहितः किल ॥ ६ ॥
तथेति सुतमादाय ययावानकदुन्दुभिः । नाभ्यनन्दत तद्वाक्यमसतोऽविजितात्मनः ॥ ७ ॥
नन्दाद्या ये व्रजे गोपा याश्चामीषां च योषितः । वृष्णयो वसुदेवाद्या देवक्याद्या यदुस्त्रियः ॥ ८ ॥
सर्वे वै देवताप्राया उभयोरपि भारत । ज्ञातयो बन्धुसुहृदो ये च कंसमनुव्रताः ॥ ९ ॥
असुराः सर्व एवैते लोकोपद्रवकारिणः । *गतेऽथ वसुदेवे तु देवकार्यार्थमुद्यतः ॥ १० ॥
एतत् कंसाय भगवान् शशंसाभ्येत्य[१] नारदः । भूमेर्भारावतरणं[२] दैत्यानां च वधोद्यमम् ॥ ११ ॥
ऋषेर्विनिर्गमे कंसो यदून् मत्वा सुरानिति ' देवक्या गर्भसम्भूतं विष्ण्वंशं[३] स्ववधं प्रति ॥ १२ ॥
देवकीं वसुदेवं च निगृह्य निगळेऽग्रहीत्[४] । जातज्ञातमहन् पुत्रं तयोरजनशङ्कया ॥ १३ ॥
मातरं पितरं भ्रातॄन् पुत्रांश्च सुहृदः सखीन् । घ्नन्ति ह्यसुतृपो[५] लुब्धा राजानः प्रायशो भुवि॥ १४ ॥
आत्मानमिह सञ्जातं जानन् प्राग् विष्णुना हतम् । महासुरं कालनेमिं यदुभिः स व्यरुध्यत॥ १५ ॥
उग्रसेनं च पितरं यदुभोजान्धकाधिपम् । स्वयं निगृह्य बुभुजे शूरसेनान् महाबलः ॥ १६ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे द्वितीयोऽध्यायः ॥**

---

* इदं श्लोकार्धं प्राचीनकोशेषु नास्ति । १. शंसयामास २. भूमेर्भारायमाणानाम्
३. विष्णुं च ४. निगडे गृहे ५. निघ्नन्त्यसुतृपः

श्रीशुक उवाच

प्रलम्बबकचाणूरतृणावर्तमहाशनैः । मुष्टिकारिष्टविविद[1]पूतनाकेशिधेनुकैः ॥ १ ॥

अन्यैश्चासुरभूपालैर्बाणभौमादिभिर्वृतः । यदूनां कदनं चक्रे बली मागधसंश्रयः ॥ २ ॥

ते पीडिता निविविशुः कुरुपाञ्चालकेकयान् । साल्वान् विदर्भान् निषधान् विदेहान् कोसलानपि ॥

केचित्[2] तमनुरुन्धाना ज्ञातयः पर्युपासते । *मधुरायां स्थिताश्चैव येऽक्रूराद्या विशाम्पते ॥ ४ ॥

हतेषु षट्सु बालेषु देवक्या औग्रसेनिना । सप्तमो वैष्णवं धाम यमनन्तं प्रचक्षते ।

गर्भो बभूव देवक्या हर्षशोकविवर्धनः ॥ ५ ॥

भगवानपि विश्वात्मा विदित्वा कंसजं भयम् । यदूनां निजनाथानां योगमायां समादिशत् ॥ ६ ॥

गच्छ देवि व्रजं भद्रे गोपगोभिरलङ्कृतम् । रोहिणी वसुदेवस्य भार्याऽऽस्ते नन्दगोकुले ॥ ७ ॥

अन्याश्च कंससंविग्ना विवरेषु वसन्ति हि । देवक्या जठरे गर्भं शेषाख्यं धाम मामकम् ॥ ८ ॥

तत् संविकृष्य रोहिण्या उदरे सन्निवेशय । अथाहं स्वांशभागेन देवक्याः पुत्रतां शुभे ॥ ९ ॥

प्राप्स्यामि त्वं यशोदायां नन्दपत्न्यां भविष्यसि । अर्चिष्यन्ति मनुष्यास्त्वां सर्वकामवरेश्वरीम् ॥

नानोपहारबलिभिः सर्वकामवरप्रदाम् । नामधेयानि कुर्वन्ति स्थानानि च नरा भुवि ॥ ११ ॥

दुर्गेति भद्रकाळीति विजया वैष्णवीति च । कुमुदा चण्डिका कृष्णा माधवी कन्यकेति च ॥ १२ ॥

माया नारायणीशाना शारदेत्यम्बिकेति च ॥ १३ ॥

गर्भसङ्कर्षणात् तं वै ब्रूयुः सङ्कर्षणं भुवि । रामेति लोकरमणाद् बलभद्रं बलोच्छ्रयात् ॥ १४ ॥

श्रीशुक उवाच

सन्दिष्टैवं भगवता तथेत्योमिति तद्वचः । प्रतिगृह्य परिक्रम्य गां गता तत् तथाऽकरोत् ॥ १५ ॥

गर्भे प्रणीते देवक्या रोहिणीं योगनिद्रया । अहो विस्रंसितो गर्भ इति लोका[3] विचुक्रुशुः ॥ १६ ॥

भगवानपि विश्वात्मा भक्तानामभयङ्करः । आविवेशांशभागेन मन आनकदुन्दुभेः ॥ १७ ॥

स बिभ्रत् पौरुषं धाम राजमानो यथा रविः । दुरासदोऽतिदुर्धर्षो भूतानां सम्बभूव ह ॥ १८ ॥

ततो जगन्मङ्गलमच्युतांशं समाहितं शूरसुतेन देवी ।

दधार[4] सर्वात्मकमात्मभूतं काष्ठा यथाऽऽनन्दकरं नभस्तः ॥ १९ ॥

---

१. ....द्विविद..... (एवमुत्तरत्रापि)  २. एके  * इदं श्लोकार्धं प्राचीनकोशेषु नास्ति ।

३. पौराः  ४. बभार *

सा देवकी सर्वजगन्निवासनिवासभूता नितरां न रेजे[१] ।
भोजेन्द्रगेहेऽग्निशिखेव रुद्धा सरस्वती द्यूतखले यथा सती[२] ॥ २० ॥
तां वीक्ष्य कंसः प्रभयाऽजितम्भरां विरोचयन्तीं भवनं शुचिस्मिताम् ।
आहैष मे प्राणहरो हरिर्गुहां ध्रुवं श्रितो यन्न पुरेयमीदृशी ॥ २१ ॥
किमद्य तस्मिन् घटनीयमाशु मे यथाऽर्थतन्त्रो न विहन्ति विक्रमम् ।
स्त्रियः स्वसुर्गुरुमत्या वधोऽयं यशः श्रियं हन्त्यनुकूलमायुः ॥ २२ ॥
स एष जीवन् खलु सम्परेतो वर्तेत योऽत्यन्तनृशंसितेन ।
देहे मृते तमनु ह्यर्थकामौ यशोऽमलं गौरभिमानिनो ध्रुवम्[३] ॥ २३ ॥
इति घोरतमाद् भावात् सन्निवृत्तः स्वयं प्रभुः । आस्ते प्रतीक्षंस्तज्जन्म हरेर्वैरानुबन्धवित् ॥ २४ ॥
आसीनः संविशंस्तिष्ठन् भुञ्जानः पर्यटन् पिबन् । चिन्तयानो हृषीकेशमपश्यत् तन्मयं जगत् ॥
ब्रह्मा भवश्च तत्रैत्य मुनिभिर्नारदादिभिः । देवैः सानुचरैः सार्धं गीर्भिर्विष्णुमथास्तुवत् ॥ २६ ॥

**ब्रह्मभवावूचतुः -**

सत्यव्रतं सत्यपरं त्रिसत्यं सत्यस्य योनिं निहितं च सत्ये ।
सत्यस्य सत्यमुत सत्यनेत्रं सत्यात्मकं त्वां शरणं प्रपन्नाः ॥ २७ ॥
एकायनोऽसौ द्विफलस्त्रिमूलश्चतूरसः पञ्चशिफः षडात्मा ।
सप्तत्वगष्टविटपो नवाक्षो दशच्छदी द्विखगो ह्यादिवृक्षः ॥ २८ ॥
त्वमेक एवास्य सतः प्रसूतिः स्थानं निधानं तदनुग्रहश्च ।
त्वन्मायया संवृतचेतसस्त्वां पश्यन्ति नाना नविपश्चितो ये ॥ २९ ॥
बिभर्षि रूपाण्यवबोध आत्मन् क्षेमाय लोकस्य चराचरस्य ।
सत्वोपपन्नानि सुखावहानि सतामभद्राणि मुहुः खलानाम् ॥ ३० ॥
त्वय्यम्बुजाक्षाखिलसत्वधाम्नि समाधिनाऽऽवेशितचेतसो ये ।
त्वत्पादपोतेन महत्कृतेन कुर्वन्ति गोवत्सपदं भवाब्धिम् ॥ ३१ ॥
स्वयं समुत्तीर्य सुदुस्तरं द्युमन् भवार्णवं भीममदभ्रसौहृदाः ।
भवत्पदाम्भोरुहनावमत्र ते निधाय याताः सदनुग्रहो भवान् ॥ ३२ ॥

---

१. नितरां विरेजे ❋ २. द्यूतखले यथा वा ❋ ३. यशोऽमलं गामनु मानिनो ध्रुवम् ❋

येऽन्येऽरविन्दाक्ष विमुक्तमानिनः त्वय्यस्तभावादविशुद्धबुद्धयः ।
आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः ॥ ३३ ॥
तथा न ते माधव तावकाः क्वचिद् भ्रश्यन्ति मार्गात् त्वयि बद्धसौहृदाः।
त्वयाऽभिगुप्ता विचरन्ति निर्भया विनायकानीकपमूर्धसु प्रभो ॥ ३४ ॥
सत्त्वं विशुद्धं श्रयते भवान् स्थितौ शरीरिणां श्रेयउपायनं वपुः ।
वेदक्रियायोगतपःसमाधिभिस्तवार्हणं येन जनः समीहते ॥ ३५ ॥
सत्त्वं न चेद् धातरिदं निजं भवेद् विज्ञानमज्ञानभिदापमार्जनम् ।
गुणप्रकाशैरनुमीयते भवान् प्रकाशते यस्य च येन वाऽगुणः ॥ ३६ ॥
न नामरूपे गुणजन्मकर्मभिः निरूपितव्ये तव तस्य साक्षिणः ।
मनोवचोभ्यामनुमेयवर्त्मनो देवक्रियायाः प्रतियन्त्यथापि हि ॥ ३७ ॥
शृण्वन् गृणन् संस्मरयंश्च चिन्तयन् नामानि रूपाणि च मङ्गलानि ते[१] ।
क्रियासु यस्त्वच्चरणारविन्दयोराविष्टचित्तो न भवाय कल्प्यते[२] ॥ ३८ ॥
दिष्ट्या हरेऽस्या भवतः पदो भुवो भारोऽपनीतस्तव जन्मनेशितुः ।
दिष्ट्याऽङ्कितां त्वत्पदकैः सुशोभनैर्द्रक्ष्याम गां द्यां च तवानुकम्पिताम् ॥ ३९ ॥
न तेऽभवस्येश भवस्य कारणं विना विनोदं बत तर्कयामहे ।
भवो निरोधः स्थितिरप्यविद्यया कृता यतस्त्वय्यभवाश्रयात्मनि ॥ ४० ॥
मत्स्याश्वकच्छपनृसिंहवराहहंसराजन्यविप्रविबुधेषु कृतावतारः ।
त्वं पासि नस्त्रिभुवनं च तथाऽधुनेश भारं भुवो हर यदूत्तम वन्दनं ते ॥ ४१ ॥
दिष्ट्याऽम्ब ते कुक्षिगतः परः पुमान् अंशेन साक्षाद् भगवान् भवाय नः ।
मा भूद् भयं भोजपतेर्मुमूर्षोः गोप्ता यदूनां भविता तवात्मजः ॥ ४२ ॥
इत्यभिष्टूय पुरुषं यद्रूपमनिदं यथा[३] । ब्रह्मेशानौ पुरोधाय देवाः प्रतिययुर्दिवम् ॥ ४३ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे तृतीयोऽध्यायः ॥

---

१. शृण्वन् गृणन् गृणयन् चिन्तयंस्ते नामानि रूपाणि च मङ्गळानि । ❋ २. कल्पते ❋
३. यद्रूपमनिदं तथा ❋

## श्रीशुक उवाच

अथ सर्वगुणोपेतः कालः परमशोभनः । यर्ह्येवाजनजन्मर्क्षः[१] शान्तर्क्षग्रहतारकः ॥ १ ॥

दिशः प्रसेदुर्गगनं निर्मलोडुगणोदयम् । मही मङ्गलभूयिष्ठपुरग्रामव्रजाकरा ॥ २ ॥

नद्यः प्रसन्नसलिला ह्रदा जलरुहश्रियः । द्विजालिकुलसन्नादस्तबका वनराजयः ॥ ३ ॥

ववौ वायुः सुखस्पर्शः पुण्यगन्धवहः शुचिः । अग्नयश्च द्विजातीनां शान्तास्तत्र समिन्धत ॥ ४ ॥

मनांस्यासन् प्रसन्नानि साधूनामपरद्रुहाम् । जायमाने ह्यजे तस्मिन् नेदुर्दुन्दुभयो दिवि ॥ ५ ॥

जगुः किन्नरगन्धर्वास्तुष्टुवुः सिद्धचारणाः । विद्याधराश्च ननृतुरप्सरोभिः समं मुदा[२] ॥ ६ ॥

मुमुचुर्मुनयो देवाः सुमनांसि मुदान्विताः । मन्दंमन्दं जलधरा जगर्जुरनुसागरम् ।

निशीथे तम उद्भूते जायमाने जनार्दने ॥ ७ ॥

देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाश्रयः । आविरासीद्[३] यथा प्राच्यां दिशीन्दुरिव पुष्कळः॥ ८ ॥

तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदाद्युदायुधम् ।
श्रीवत्सलक्ष्मं गळशोभिकौस्तुभं पीताम्बरं सान्द्रपयोदसौभगम् ॥ ९ ॥

महार्हवैडूर्यकिरीटकुण्डलत्विषा परिष्वक्तसहस्रकुन्तळम् ।
उद्दामकाञ्च्यङ्गदकङ्कणादिभिर्विरोचमानं वसुदेव ऐक्षत ॥ १० ॥

स विस्मयोत्फुल्लविलोचनो हरिं सुतं विलोक्यानकदुन्दुभिस्तदा ।
कृष्णावतारोत्सवसम्भ्रमोऽस्पृशन्मुदा द्विजेभ्योऽयुतमाप्लुतो गवाम् ॥ ११ ॥

अथैनमस्तौदवधार्य पूरुषं परं नताङ्गः कृतधीः कृताञ्जलिः ।
स्वरोचिषा भारत सूतिकागृहं विरोचयन्तं गतभीः प्रभाववित् ॥ १२ ॥

## वसुदेव उवाच

विदितोऽसि भवान् साक्षात् पुरुषः प्रकृतेः परः । केवलानुभवानन्दस्वरूपः सर्वबुद्धिदृक् ॥ १३ ॥

स एव स्वप्रकृत्येदं सृष्ट्वाऽग्रे त्रिगुणात्मकम् । तदनु त्वं ह्यप्रविष्टः प्रविष्ट इव भाव्यसे[४] ॥ १४ ॥

य एतेऽविकृता भावाः सप्त ते विकृतैः सह । नानावीर्याः पृथग्भूता विराजं शयनं तव ॥ १५ ॥

सन्निपत्य समुत्पाद्य दृश्यन्तेऽनुगता इव । प्रागेव विद्यमानत्वान्न तेषामिह सम्भवः ॥ १६ ॥

---

१. यर्ह्येव तस्य जन्मर्क्षः ❋ २. तदा ❋ ३. प्रादुरासीत् ४. भाव्यते ❋

एवं भवान् बुद्ध्यनुमेयलक्षणो ग्राह्यैर्गुणैः सन्नपि तद्गुणग्रहः[१]।
अनावृतत्वाद् बहिरन्तरं न ते सर्वस्य सर्वात्मन आत्मवस्तुनः ॥ १७ ॥
यदात्मनो दृश्यगुणेषु सन्निधेर्व्यवस्यसेऽस्वव्यतिरेकतोऽबुधैः।
विनाऽनुवादं न च तन्मनीषितं सम्यग् वचो व्यक्तमुपाददत् पुमान् ॥ १८ ॥
त्वत्तोऽस्य जन्मस्थितिसंयमान् विभो वदन्त्यनीहादगुणादविक्रियात्।
त्वयीश्वरे ब्रह्मणि नो विरुध्यते तदाश्रयत्वादुपचर्यसे गुणैः ॥ १९ ॥
सत्त्वं त्रिलोकस्थितये स्वमायया बिभर्षि शुक्लं खलु वर्णमात्मनः।
सर्गाय रक्तं रजसोपबृंहितं कृष्णं च वर्णं तमसा जनात्यये ॥ २० ॥
त्वमस्य लोकस्य विभो रिरक्षिषुर्गृहेऽवतीर्णोऽसि ममाखिलेश्वर।
राजन्यसञ्ज्ञासुरकोटियूथपैर्निर्व्यूह्यमानां निहनिष्यसे चमूम् ॥ २१ ॥
अयं तमस्यस्तव जन्म मे गृहे श्रुत्वाऽग्रजांस्ते न्यहनत् सुरेश्वर।
स तेऽवतारं पुरुषैः समर्पितं श्रुत्वाऽधुनैवाभिसरत्युदायुधः ॥ २२ ॥

**श्रीशुक उवाच**

अथैनमात्मजं वीक्ष्य महापुरुषलक्षणम्। देवकी तमुपाधावत् कंसाद् भीता सुविस्मिता[२] ॥ २३ ॥

**देवक्युवाच**

रूपं यत् तत् प्राहुरव्यक्तमाद्यं ब्रह्म ज्योतिर्निर्गुणं निर्विकारम्।
सत्तामात्रं निर्विशेषं निरीहं स त्वं साक्षाद् विष्णुरध्यात्मदीपम्[३] ॥ २४ ॥
नष्टे लोके द्विपरार्धावसाने महाभूतेष्वादिभूतं गतेषु।
व्यक्तेऽव्यक्तं कालवेगेन याते भवानेकः शिष्यतेऽशेषसञ्ज्ञः ॥ २५ ॥
योऽयं कालस्तस्य तेऽव्यक्तबन्धो चेष्टामाहुश्चेष्टते येन विश्वम्।
निमेषादिर्वत्सरान्तो महीयान् तं त्वेशानं[४] क्षेमधाम प्रपद्ये ॥ २६ ॥
मर्त्यो मृत्युव्यालभीतः पलायन् लोकान् सर्वान् निर्भयं नाध्यगच्छत्।
त्वत्पादाब्जं प्राप्य यदृच्छयाऽद्य स्वस्थः शेते मृत्युरस्मादपैति ॥ २७ ॥

---

१. तद्गुणाग्रहः  २. शुचिस्मिता  ३. अध्यात्मदीपः ❋  ४. तं त्वीशानम् ❋

स त्वं घोरादुग्रसेनात्मजान्नः त्राहि त्रस्तान् भृत्यवित्रासहाऽसि[1] ।
रूपं चेदं पौरुषं ध्यानधिष्ण्यमप्रत्यक्षं मादृशां त्वं कृषीष्ठाः ॥ २८ ॥

जन्म ते मय्यसौ पापो मा विद्यान्मधुसूदन । समुद्विजे भवद्धेतोः कंसादहमधीरधीः ॥ २९ ॥

उपसंहर विश्वात्मन्नदो रूपमलौकिकम् । शङ्खचक्रगदापद्मश्रिया जुष्टं चतुर्भुजम् ॥ ३० ॥

विश्वं यदेतत् स्वतनौ निशान्ते यथावकाशं पुरुषः परो भवान् ।
बिभर्ति सोऽयं मम गर्भजोऽभूदहो[2] नृलोकस्य विडम्बनं तत्[3] ॥ ३१ ॥

**श्रीभगवानुवाच**

त्वमेव पूर्वसर्गेऽभूः पृश्निः स्वायम्भुवी[4] सति । तदाऽयं सुतपा नाम प्रजापतिरकल्मषः ॥ ३२ ॥

युवां वै ब्रह्मणाऽऽदिष्टौ प्रजासर्गे यदा ततः । सन्नियम्येन्द्रियग्रामं तेपाथे परमं तपः ॥ ३३ ॥

वर्षवातातपहिमघर्मकालगुणाननु । सहमानौ श्वासरोधविनिर्धूतमनोमलौ ॥ ३४ ॥

शीर्णपर्णानिलाहारावुपशान्तेन चेतसा । मत्तः कामानभीप्सन्तौ मदाराधनमीहतुः ॥ ३५ ॥

एवं मां तप्यतोर्भद्रे तपः परमदुष्करम् । दिव्यवर्षसहस्राणि द्वादशेयुर्महात्मनोः[5] ॥ ३६ ॥

तदा वां परितुष्टोऽहममुना वपुषाऽनघे । तपसा श्रद्धया नित्यं भक्त्या च हृदि भावितः ॥ ३७ ॥

प्रादुरासं वरदराड् युवयोः काम्यदित्सया । व्रियतां वर इत्युक्ते मादृशो वां वृतः सुतः ॥ ३८ ॥

अजुष्टग्राम्यविषयावनपत्यौ च दम्पती । न वव्राथेऽपवर्गं मे मोहितौ मम मायया ॥ ३९ ॥

गते मयि ततो लब्ध्वा वरं मत्सदृशं सुतम् । ग्राम्यान् भोगानभुञ्जाथां युवां प्राप्तमनोरथौ ॥ ४० ॥

अदृष्ट्वाऽन्यतमं लोके शीलौदार्यगुणैः समम् । अहं सुतो वामभवं पृश्निगर्भ इति स्मृतः ॥ ४१ ॥

तयोर्वां पुनरेवाहमदित्यामास[6] काश्यपात् । उपेन्द्र इति विख्यातो वामनत्वाच्च वामनः ॥ ४२ ॥

तृतीयेऽस्मिन् भवेऽहं वै तेनैव वपुषाऽथ वाम्[7] । जातो भूयस्तयोरेव[8] सत्यं मे व्याहृतं सति ॥ ४३ ॥

एतद् वां दर्शितं रूपं प्राग्जन्मस्मरणाय मे । नान्यथा मद्भवज्ञानं मर्त्यलिङ्गेन जायते[9] ॥ ४४ ॥

युवां मां पुत्रभावेन ब्रह्मभावेन चासकृत् । चिन्तयन्तौ कृतस्नेहौ यास्येथे मद्गतिं पराम् ॥ ४५ ॥

---

१. मृत्युवित्रासहाऽसि ❋ २. गर्भगोऽभूदहो ३. विडम्बनं महत् ४. स्वायम्भुवे
५. मदात्मनोः ❋ ६. अदित्यामथ ❋ ७. वपुषाऽनघे ८. तयोरेवम् ९. जन्यते

**श्रीशुक उवाच**

इत्युक्त्वाऽऽसीद् हरिस्तूष्णीं भगवानात्ममायया। पित्रोः सम्पश्यतोः सद्यो बभूव प्राकृतः शिशुः ॥

ततश्च शौरिर्भगवत्प्रचोदितः सुतं समादाय स सूतिकागृहात्।
यदा बहिर्गन्तुमियेष तर्ह्यजा या योगमायाऽजनि नन्दजायया ॥ ४७ ॥

तया हृतप्रत्ययसर्ववृत्तिषु द्वाःस्थेषु पौरेषु च यापितेष्वथ।
द्वारश्च सर्वाः पिहिता दुरत्यया बृहत्कपाटायसकीलशृङ्खलैः ॥ ४८ ॥

ताः कृष्णवाहे वसुदेव आगते स्वयं व्यशीर्यन्त यथा तमो रवेः।
ववर्ष पर्जन्य उपांशु गर्जितः शेषोऽन्वगाद् वारि निवारयन् फणैः ॥ ४९ ॥

मघोनि वर्षत्यसकृद् यमानुजा गम्भीरतोयौघजवोर्मिफेनिला[1]।
भयानकावर्तशताकुला नदी मार्गं ददौ सिन्धुरिव श्रियः पतेः ॥ ५० ॥

नन्दव्रजं शौरिरुपेत्य तत्र तान् गोपान् सुषुप्तानुपलभ्य निद्रया।
शिशुं यशोदाशयने निधाय तत्सुतामथादाय[2] पुनर्गृहानगात् ॥ ५१ ॥

देवक्याः शयने न्यस्य वसुदेवोऽथ दारिकाम्। शृङ्खलां पादयोः कृत्वाऽऽस्ते[3] पूर्ववदावृतः ॥ ५२ ॥

यशोदा नन्दपत्नी च जातं परमबुध्यत। न तल्लिङ्गं परिश्रान्ता निद्रयाऽपगतस्मृतिः ॥ ५३ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे चतुर्थोऽध्यायः ॥**

---

**श्रीशुक उवाच**

बहिरन्तः पुरद्वारः सर्वाः पूर्ववदावृताः। ततो बालध्वनिं श्रुत्वा गृहपालाः समुत्थिताः ॥ १ ॥

ते तु तूर्णमभिद्रुत्य देवक्या गर्भजन्म तत्। आचख्युर्भोजराजाय यदुद्विग्नः प्रतीक्षते ॥ २ ॥

स तल्पात् तूर्णमुत्थाय कालोऽयमिति विह्वलः। सूतीगृहमगाच्छीघ्रं प्रस्खलन् मुक्तमूर्धजः ॥ ३ ॥

तमाह भ्रातरं देवी कृपणा करुणं सती। स्नुषेयं तव कल्याण स्त्रियं मा हन्तुमर्हसि ॥ ४ ॥

बहवो हिंसिता भ्रातः शिशवः पावकोपमाः। त्वया दैवनिसृष्टेन पुत्रिकैका प्रदीयताम् ॥ ५ ॥

नन्वहं ते ह्यवरजा दीना हतसुता प्रभो। दातुमर्हसि मन्दाया अङ्गेमां चरमां प्रजाम्[4] ॥ ६ ॥

---

१. गभीरतोयौघ...... ❋
२. उपादाय
३. प्रतिमुच्य पर्दोलोहमास्ते
४. चरमप्रजाम् ❋

**श्रीशुक उवाच**

उपगुह्यात्मजामेवं रुदन्त्या दीनदीनवत् । याचितस्तां विनिर्भर्त्स्य[1] हस्तादाचिच्छिदे खलः ॥ ७ ॥
तां गृहीत्वा चरणयोर्जातमात्रां स्वसुः सुताम् । अपोथयच्छिलापृष्ठे स्वार्थोन्मूलितसौहृदः ॥ ८ ॥
सा तद्धस्तात् समुत्प्लुत्य सद्यो देव्यम्बरं गता । अदृश्यतानुजा विष्णोः सायुधाष्टमहाभुजा ॥ ९ ॥
दिव्यस्रगम्बरालेपरत्नाभरणभूषिता । धनुःशूलेषुचर्मासिशङ्खचक्रगदाधरा ॥ १० ॥
सिद्धचारणगन्धर्वैरप्सरःकिन्नरोरगैः । उपाहृतोरुबलिभिः स्तूयमानेदमब्रवीत् ॥ ११ ॥
किं मया हतया मन्द जातः खलु तवान्तकृत्[2] । यत्र क्वचित् पूर्वशत्रुर्मा हिंसीः कृपणां वृथा ॥ १२ ॥
इति प्रभाष्य तं देवी माया भगवती भुवि । बहुनामनिकेतेषु[3] बहुनामा बभूव ह ॥ १३ ॥
तयाऽभिहितमाकर्ण्य कंसः परमविस्मितः । देवकीं वसुदेवं च विमुच्य प्रश्रितोऽब्रवीत् ॥ १४ ॥
अहो भगिन्यहो भाम मया वां बत पाप्मना । पुरुषादैरिवाभ्येत्य बहवो हिंसिताः सुताः ॥ १५ ॥
स त्वहं त्यक्तकारुण्यस्त्यक्तज्ञातिसुहृत् खलः । हा कान् लोकान्[4] गमिष्यामि ब्रह्महेव मृतः श्वसन् ॥
दैवमप्यनृतं वक्ति न मर्त्या एव केवलम् । यद्विस्रम्भादहं पापः स्वसुर्निहतवान् शिशून् ॥ १७ ॥
मा शोचेथां महाभागावात्मजान् स्वकृतम्भुजः । जन्तवो न सदैकत्र दैवाधीनाः सहासते ॥ १८ ॥
भुवि भौमानि भूतानि यथाऽऽयान्त्यपयान्ति च । नायमात्मा तथैतेषु विपर्येति यथैव भूः ॥ १९ ॥
यतोऽनेकविधोऽभेदो यत आत्मविपर्ययः । देहयोगवियोगश्च संसृतिर्नतु वास्तवी[5] ॥ २० ॥
तस्माद् भद्रे स्वतनयान् मया व्यापादितानपि । माऽनुशोच यतः सर्वः स्वकृतं विन्दतेऽवशः ॥ २१ ॥
यावद् हतोऽस्मि हन्तास्मीत्यात्मानं मन्यतेऽस्वदृक् । तावत् तदभिमान्यज्ञो बाध्यबाधकतामियात् ॥
क्षमध्वं मम दौरात्म्यं[6] साधवो बन्धुवत्सलाः । इत्युक्त्वाऽश्रुमुखः पादौ श्यालस्वस्रोरथाग्रहीत् ॥
मोक्षयामास निगळाद् विस्रब्धः कन्यकागिरा । देवकीं वसुदेवं च दर्शयन्नात्मसौहृदम् ॥ २४ ॥
भ्रातुः समनुतप्तस्य[7] क्षान्त्वा रोषं च देवकी । व्यसृजद् वसुदेवश्च प्रहस्य तमुवाच ह ॥ २५ ॥
एवमेतन्महाराज यथा वदसि देहिनाम् । अज्ञानप्रभवा हन्ति स्वपरेति भिदा यतः ॥ २६ ॥
शोकहर्षभयद्वेषलोभमोहमदान्विताः । मिथो घ्नन्तो[8] न पश्यन्ति भावैर्भावान् पृथग्दृशः ॥ २७ ॥

---

१. विनिर्भर्त्स्य ❋ २. तवान्तकः ३. बहुग्रामनिकेतेषु ❋ ४. यांस्तु लोकान् ❋
५. संसृतिर्न निवर्तते ६. क्षमध्वं मे तद्दौरात्म्यम् ❋ ७. भ्रातुर्वचनमाश्रुत्य ८. मिथो घ्नन्तम् ❋

कंस एवं प्रसन्नाभ्यां विस्रब्धः प्रतिभाषितः[१] । देवकीवसुदेवाभ्यामनुज्ञातोऽविशद् गृहम् ॥ २८ ॥
तस्यां रात्र्यां व्यतीतायां कंस आहूय मन्त्रिणः । तेभ्य आचष्ट तत् सर्वं यदुक्तं योगनिद्रया ॥ २९ ॥
आकर्ण्य भर्तुर्गदितं तमूचुर्देवशत्रवः । देवान् प्रति कृतामर्षा दैतेया नातिकोविदाः ॥ ३० ॥
एवं चेत् तर्हि भोजेन्द्र पुरग्रामव्रजादिषु । अनिर्दशान् निर्दशांश्च हनिष्यामोऽद्य वै शिशून् ॥ ३१ ॥
किमुद्यमैः करिष्यन्ति देवाः समरभीरवः । नित्यमुद्विग्नमनसो ज्याघोषैर्धनुषस्तव ॥ ३२ ॥
अस्यतस्ते शरव्रातैर्हन्यमानाः समन्ततः । जिजीविषव उत्सृज्य पलायनपरा ययुः ॥ ३३ ॥
केचित् प्राञ्जलयो भीता न्यस्तशस्त्रा दिवौकसः । मुक्तकच्छशिखाः केचिद् भीताः स्म इति वादिनः॥
न त्वं विस्मृतशस्त्रास्त्रान् विरथान् भयसन्नतान् । हंस्यन्यासक्तविमुखान्[२] भग्नचापानविध्यतः[३] ॥
किं क्षेमशूरैर्विबुधैरसंयुगविकत्थनैः । रहोजुषा किं हरिणा शम्भुना वा वनौकसा[४] ॥ ३६ ॥
किमिन्द्रेणाल्पवीर्येण ब्रह्मणा वा तपस्यता । तथापि देवाः सापत्न्यान्नोपेक्ष्या इति मन्महे ।
ततस्तन्मूलखनने नियुङ्क्ष्वास्माननुव्रतान् ॥ ३७ ॥
यथाऽऽमयोऽङ्गे समुपेक्षितो नृभिर्न शक्यते[५] रूढपदश्चिकित्सितुम् ।
यथेन्द्रियग्राम उपेक्षितस्तथा रिपुर्महान् लब्धबलो[६] न चाल्यते ॥ ३८ ॥
मूलं विष्णुर्हि देवानां यत्र धर्मः सनातनः । तस्य च ब्रह्मगोविप्रास्तपोयज्ञाः सदक्षिणाः ॥ ३९ ॥
तस्मात् सर्वात्मना राजन् ब्राह्मणान् ब्रह्मवादिनः । तपस्विनो यज्ञशीलान् गाश्च हन्मो हविर्दुघाः[७] ॥
विप्रा गावश्च वेदाश्च तपः सत्यं दमः शमः । श्रद्धा दया तितिक्षा च क्रतवश्च हरेस्तनूः[८] ॥ ४१ ॥
स हि सर्वसुराध्यक्षो ह्यसुरद्विड् गुहाशयः[९] । तन्मूला देवताः सर्वाः सेश्वराः सचतुर्मुखाः ॥ ४२ ॥
एवं दुर्मन्त्रिभिः कंसः सह सम्मन्त्र्य दुर्मतिः । ब्रह्महिंसां हितं मेने कालपाशावृतोऽसुरः ॥ ४३ ॥
सन्दिश्य साधुलोकस्य कदने कदनप्रियान् । कामरूपधरान् दिक्षु दानवान् गृहमाविशत् ॥ ४४ ॥
ते वै रजःप्रकृतयस्तमसा मूढचेतसः । सतां विद्वेषमाचेरुरारादागतमृत्यवः ॥ ४५ ॥
आयुः श्रियं यशो धर्मं लोकानाशिष एव च । हन्ति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः ॥ ४६ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे पञ्चमोऽध्यायः ॥**

---

१. परिभाषितः ❋ २. अन्यासक्तमनसः ३. अयुध्यतः/भग्नचापान् न विद्ध्यसे ❋ ४. दिवौकसा ❋
५. शक्ष्यते ❋ ६. बद्धबलः ❋ ७. हविर्दुहः ❋ ८. हरेस्तनुः ❋ ९. गुहाचरः

**श्रीशुक उवाच**

नन्दस्त्वात्मज उत्पन्ने जाताह्लादो महामनाः। आहूय विप्रान् वेदज्ञान् स्नातः शुचिरलङ्कृतः॥ १॥
वाचयित्वा स्वस्त्ययनं जातकर्मात्मजस्य वै। कारयामास विधिना पितृदेवार्चनं तथा ॥ २॥
धेनूनां नियुते[1] प्रादाद् विप्रेभ्यः समलङ्कृते[2]। तिलाद्रीन् सप्त रत्नौघान् शातकुम्भान्तरावृतान्॥ ३॥
*कालेन स्नानशौचाभ्यां संस्कारैस्तपसेज्यया। शुद्ध्यन्ति दानैः सन्तुष्ट्या द्रव्याण्यात्माऽऽत्मविद्यया॥
सौमङ्गल्यगिरो विप्राः सूतमागधबन्दिनः। गायकाश्च जगुर्नेदुर्भेर्यो दुन्दुभयो मुहुः ॥ ५॥
प्रजाः सम्मृष्टसंसिक्तद्वाराजिरगृहान्तराः। चित्रध्वजपताकास्रक्चैलपल्लवतोरणाः ॥ ६॥
गावो वृषाश्च वत्साश्च हरिद्रातैलरूषिताः। विचित्रधातुबर्हस्रग्वस्त्रकाञ्चनमालिनः ॥ ७॥
महार्हवस्त्राभरणकञ्चुकोष्णीषभूषणाः। गोपाः समाययू राजन् नानोपायनपाणयः ॥ ८॥
गोप्यश्चाकर्ण्य मुदिता यशोदायाः सुतोद्भवम्। आत्मानं भूषयाञ्चक्रुर्वस्त्राकल्पाञ्जनादिभिः ॥ ९॥
नवकुङ्कुमकिञ्जल्कमुखपङ्कजभूतयः। बलिभिस्त्वरितं जग्मुः पृथुश्रोण्यश्चलत्कुचाः ॥ १०॥

गोप्यः सुमृष्टमणिकुण्डलनिष्ककण्ठ्यः चित्राम्बराः पथि शिखाच्युतमाल्यवर्षाः।
नन्दालयं सवलया[3] व्रजतीर्विरेजुः व्यालोलकुण्डलपयोधरहारशोभाः ॥ ११॥

ता आशिषः प्रयुञ्जानाश्चिरं पाहीति बालके। हरिद्राचूर्णतैलाद्भिः सिञ्चन्त्योऽजनमुज्जगुः ॥ १२॥
अवाद्यन्त विचित्राणि वादित्राणि महोत्सवे। कृष्णे विश्वेश्वरेंऽशेन[4] नन्दव्रजमुपेयुषि ॥ १३॥
गोपाः परस्परं हृष्टा दधिक्षीरघृताम्बुभिः। आसिञ्चन्तो विलिम्पन्तो[5] नवनीतैश्च चिक्षिपुः ॥ १४॥
नन्दो महामनास्तेभ्यो वासोलङ्कारगोधनैः। सूतमागधबन्दिभ्यो येऽन्ये विद्योपजीविनः ॥ १५॥
तैस्तैः कामैरदीनात्मा यथोचितमपूजयत्। विष्णोराराधनार्थाय स्वपुत्रस्योदयाय च ॥ १६॥
रोहिणी च महाभागा नन्दगोपाभिनन्दिता। व्यचरद् दिव्यवासःस्रक्कण्ठाभरणभूषिता ॥ १७॥
तत आरभ्य नन्दस्य व्रजः सर्वसमृद्धिमान्। हरेर्निवासानुगुणै रमाक्रीडमभूऩ्नृप[6] ॥ १८॥
गोपान् गोकुलरक्षायां निरूप्य मधुरां गतः। नन्दः कंसस्य वार्षिक्यं करं दातुं कुरूद्वह ॥ १९॥
वसुदेव उपश्रुत्य भ्रातरं नन्दमागतम्। ज्ञात्वा दत्तकरं राज्ञे ययौ तदवलोकनः ॥ २०॥

---

१. नियुतम् ❋ २. समलङ्कृतम् ❋ * अयं श्लोकः प्राचीनकोशेषु नास्ति। ३. सबलयः ❋
४. विश्वेश्वरेऽनन्ते ❋ ५. विमुञ्चन्तः ❋ ६. रमाक्रीड अभून्नृप

तं दृष्ट्वा सहसोत्थाय देहः प्राणमिवागतम् । प्रीतः प्रियतमं दोर्भ्यां सस्वजे प्रेमविह्वलः ॥ २१ ॥
पूजितः सुखमासीनः पृष्ट्वाऽनामयमादृतः । प्रसक्तधीः स्वात्मजयोरिदमाह[१] विशाम्पते ॥ २२ ॥
दिष्ट्या भ्रातः प्रवयस इदानीमप्रजस्य ते । प्रजाशाया निवृत्तस्य प्रजा यत् समजायत ॥ २३ ॥
दिष्ट्या संसारचक्रेऽस्मिन् वर्तमानः पुनर्भवे । उपलब्धो भवानद्य दुर्लभं प्रियदर्शनम् ॥ २४ ॥
नैकत्र प्रियसंवासः सुहृदां चित्रकर्मणाम् । ओघेन व्यूह्यमानानां प्लवानां स्रोतसो यथा ॥ २५ ॥
कच्चित् पशव्यं निरुजं भूर्यम्बुतृणवीरुधम् । बृहद्वनं तदधुना यत्रास्से त्वं सुहृद्वृतः ॥ २६ ॥
भ्रातर्मम सुतः कच्चिन्मात्रा सह भवद्व्रजे । तातं भवन्तं मन्वानो भवद्भ्यामुपलालितः ॥ २७ ॥
पुंसस्त्रिवर्गो विहितः सुहृदां ह्यनुभावतः । न तेषु क्लिश्यमानेषु त्रिवर्गोऽर्थाय कल्पते[२] ॥ २८ ॥

नन्द उवाच

अहो ते देवकीपुत्राः कंसेन बहवो हताः । एकाऽवशिष्टाऽवरजा कन्या सापि दिवं गता ॥ २९ ॥
नूनं हि दृष्टनिष्ठोऽयं नादृष्टपरमो जनः । अदृष्टमात्मनस्तत्वं यो वेद न स मुह्यति ॥ ३० ॥

वसुदेव उवाच

करो वै वार्षिको दत्तो राज्ञे दृष्टा वयं च वः । नेह स्थेयं बहुदिनं सन्त्युत्पाताश्च गोकुले ॥ ३१ ॥

श्रीशुक उवाच

इति नन्दादयो गोपाः प्रोक्तास्ते शौरिणा ययुः । अनोभिरनडुद्युक्तैस्तमनुज्ञाय[३] गोकुलम्॥ ३२ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे षष्ठोऽध्यायः ॥

---

श्रीशुक उवाच

नन्दः पथि वचः शौरेर्न मृषेति विचिन्तयन् । हरिं जगाम शरणमुत्पातागमशङ्कितः ॥ १ ॥
कंसेन प्रहिता घोरा पूतना बालघातिनी । शिशूंश्चचार निघ्नन्ती पुरग्रामव्रजादिषु ॥ २ ॥
न यत्र श्रवणादीनि रक्षोघ्नानि स्वकर्मसु । कुर्वन्ति सात्वतां भर्तुर्यातुधान्यश्च तत्र हि ॥ ३ ॥
स खेचर्येकदाऽभ्येत्य पूतना नन्दगोकुलम् । गोपित्वा माययाऽऽत्मानं प्राविशत् कामचारिणी ॥

तां केशपाशव्यतिषक्तमल्लिकां[४] बृहन्नितम्बस्तनकृच्छ्रमध्यमाम् ।
सुवाससं कम्पितकर्णभूषणत्विषोल्लसत्कुन्तळमण्डिताननाम् ॥ ५ ॥

---

१. आत्मजयोरिदमाह ❋ २. कल्प्यते ❋ ३. तमनुज्ञाप्य ४. केशबन्धव्यतिषिक्त.... ❋

वल्गुस्मितापाङ्गविसर्गवीक्षितैर्मनो हरन्तीं वनितां व्रजौकसः ।
अमंसताम्भोजकरेण रूपिणीं[1] गोप्यः श्रियं द्रष्टुमिवागतां पतिम् ॥ ६ ॥
बालग्रही तत्र विचिन्वती शिशून् यदृच्छया नन्दगृहेऽसदन्तकम् ।
बालं प्रतिच्छन्ननिजोरुतेजसं ददर्श तल्पेऽग्निमिवाहितं भसि ॥ ७ ॥
विबुध्य तां बालकमारिकाग्रहं चराचरात्मा स निमीलितेक्षणः ।
मही सुरत्वेऽपि च[2] बालभावं विभावयन् किञ्चिदुवाच न प्रभुः ॥ ८ ॥
अजानमानाऽथ निशाचरी हरिं निसर्गविज्ञातजगद्विचेष्टितम् ।
अनन्तमारोपयदङ्कमन्तकं यथोरगं सुप्तमबुद्धिरज्जुधीः[3] ॥ ९ ॥
तां तीक्ष्णचित्तामतिवामचेष्टितां वीक्ष्यान्तराकोशपरिच्छदासिवत् ।
वरस्त्रियं तत्प्रभया च धर्षिता निरीक्षमाणा जननी अतिष्ठत्[4] ॥ १० ॥
तस्मिन् स्तनं दुर्जरवीर्यमुल्बणं घोराऽङ्कमादाय शिशोर्ददावथ ।
गाढं कराभ्यां भगवान् प्रपीड्य तत्प्राणैः समं रोषसमन्वितोऽपिबत् ॥ ११ ॥
सा मुञ्चमुञ्चालमिति प्रभाषिणी निपीड्यमानाऽखिलजीवमर्षिणी[5] ।
विवृत्य नेत्रे चरणौ भुजौ मुहुर्विक्लिन्नगात्रा[6] क्षिपती रुराव ह ॥ १२ ॥
तस्याः स्वनेनातिगभीररंहसा साद्रिर्मही द्यौश्च चचाल सग्रहा ।
रसा दिशश्च प्रतिनेदिरे जनाः पेतुः क्षितौ वज्रनिपातशङ्कया ॥ १३ ॥
निशाचरीत्थं व्यथिता व्यसुः क्षितौ विकीर्य केशांश्चरणौ भुजावपि ।
प्रसार्य गोष्ठे निजरूपमास्थिता वज्राहतो वृत्र इवापतन्नृप ॥ १४ ॥
पतमानोऽपि तद्देहस्त्रिगव्यूत्यन्तरद्रुमान् । चूर्णयामास राजेन्द्र महदासीत् तदद्भुतम् ॥ १५ ॥
ईषामात्रोग्रदंष्ट्रास्यं गिरिकन्दरनासिकम् । गण्डशैलस्तनं रौद्रं प्रकीर्णारुणमूर्धजम् ॥ १६ ॥
अन्धकूपगभीराक्षं पुलिनारोहभीषणम्[7] । बद्धसेतुभुजोर्वङ्घ्रि शून्यतोयह्रदोदरम् ॥ १७ ॥

---

१. अमंसताम्भोरुहरेणुरूषिताम् ❋ २. महीश्वरत्वेऽपि ❋ ३. अबुद्धरज्जुधीः ❋
४. जननी अतिष्ठत ❋/जननी अतिष्ठताम् ५. ....मर्षणी ❋/अखिलजीवमर्मणि
६. विक्षिप्तगात्रा ❋ ७. प्रपीनारोहभीषणम् ❋

सन्तत्रसुः स्म तद् वीक्ष्य गोपा गोप्यः कळेबरम् । पूर्वं तु तन्निस्वनितभिन्नहृत्कर्णमस्तकाः[१] ॥
बालं च तस्या उरसि[२] क्रीडन्तमकुतोभयम् । गोप्यस्तूर्णं समभ्येत्य जगृहुर्जातसम्भ्रमाः ॥ १९ ॥
यशोदारोहिणीभ्यां ताः समं बालस्य सर्वतः । रक्षां विदधिरे सम्यग्[३] गोपुच्छभ्रमणादिभिः ॥ २० ॥
गोमूत्रेण स्नापयित्वा पुनर्गोरजसाऽर्भकम् । रक्षां चक्रुर्गोशकृता द्वादशाङ्गेषु नामभिः ॥ २१ ॥
गोप्यः संस्पृष्टसलिला अङ्गेषु करयोः पृथक् । न्यस्यात्मन्यथ बालस्य बीजन्यासमकुर्वत ॥ २२ ॥

अव्यादजोऽङ्घ्रिमणिमांस्तव जान्वथोरू[४] यज्ञोऽच्युतः कटितटं जठरं हयास्यः ।
हृत् केशवस्त्वदुर ईश इनस्तु कण्ठं विष्णुर्भुजं मुखमुरुक्रम ईश्वरः कम् ॥ २३ ॥
चक्र्यग्रतः सहगदो[५] हरिरस्तु पश्चात् त्वत्पार्श्वयोर्धनुरसी मधुहाऽजनश्च ।
कोणेषु शङ्ख उरुगाय उपर्युपेन्द्रस्तार्क्ष्यः क्षितौ हलधरः पुरुषः समन्तात् ॥ २४ ॥

इन्द्रियाणि हृषीकेशः प्राणान् नारायणोऽवतु । श्वेतद्वीपपतिश्चित्तं मनो योगेश्वरोऽवतु ॥ २५ ॥
पृश्निगर्भस्तु ते बुद्धिमात्मानं भगवान् परः । क्रीडन्तं पातु गोविन्दः शयानं पातु माधवः ॥ २६ ॥
व्रजन्तमव्याद् वैकुण्ठ आसीनं त्वां श्रियः पतिः । भुञ्जानं यज्ञभुक् पातु सर्वग्रहभयङ्करः ॥ २७ ॥
डाकिन्यो यातुधान्यश्च कूष्माण्डा येऽर्भकग्रहाः । भूतप्रेतपिशाचाश्च यक्षरक्षोविनायकाः ॥ २८ ॥
कोटरारेवतीज्येष्ठापूतनामातृकादयः । उन्मादा ये ह्यपस्मारा देहप्राणेन्द्रियग्रहाः[६] ॥ २९ ॥
स्वप्नदृष्टा महोत्पाता बृहद्बालग्रहाश्च ये[७] । सर्वे नश्यन्तु ते विष्णोर्नामग्रहणभीरवः ॥ ३० ॥
इति प्रणयबद्धाभिर्गोपीभिः कृतरक्षणम् । पाययित्वा स्तनं माता सन्न्यवीविशदात्मजम् ॥ ३१ ॥
तावन्नन्दादयो गोपा मधुराया व्रजं गताः । विलोक्य पूतनादेहं बभूवुरतिविस्मिताः ॥ ३२ ॥
नूनं बत ऋषिर्जातो योगेशो वा समासतः । स एव दृष्टो ह्युत्पातो यथाऽऽहानकदुन्दुभिः ॥ ३३ ॥
कळेबरं परशुभिश्छित्त्वा[८] तत् ते व्रजौकसः । दूरे क्षिप्त्वाऽवयवशो ददहुः काष्ठवेष्टितम् ॥ ३४ ॥
दह्यमानस्य देहस्य धूमश्चागरुसौरभः । उत्थितः कृष्णनिर्भुक्तसपद्याहतपाप्मनः[९] ॥ ३५ ॥
पूतना लोकबालघ्नी राक्षसी रुधिरासवा[१०] । जिघांसयाऽपि हरये स्तनं दत्त्वाऽऽप सद्गतिम् ॥ ३६ ॥

---

१. तन्निष्टनितभिन्न.... ❋ २. उपरि ❋ ३. रक्षां विद्धुरीशस्य ❋ ४. अथोरुम् ❋
५. चक्र्यग्रतस्तु सगदः ❋ ६. देहप्राणेन्द्रियद्रुहः ❋ ७. वृद्धबालग्रहाश्च ये ❋ ८. भित्त्वा ❋
९. कृष्णनिमुक्तसम्पदा हतपाप्मनः ❋ १०. रुधिराशना ❋

किं पुनः श्रद्धया भक्त्या कृष्णाय परमात्मने । यच्छन् प्रियतमं किञ्चिद् रक्तस्तन्मातरो यथा ॥
पद्भ्यां भक्तहृदिस्थाभ्यां वन्द्याभ्यां लोकवन्दितः । अङ्गं यस्याः समाक्रम्य भगवानपिबत् स्तनम्॥
यातुधान्यपि सा स्वर्गमवाप जननीगतिम् । कृष्णभुक्तस्तनक्षीराः किमु गावो नु मातरः ॥ ३९ ॥
पयांसि यासामपिबत् पुत्रस्नेहस्नुतान्यलम् । भगवान् देवकीपुत्रः कैवल्याद्यखिलार्थदः ॥ ४० ॥
यासामविरतं[१] कृष्णे कुर्वन्तीनां सुतेक्षणम् । न पुनः कल्पते राजन् संसारोऽज्ञानसम्भवः ॥ ४१ ॥
कटधूमस्य सौरभ्यमवघ्राय व्रजौकसः । किमिदं कुत एवेति वदन्तो व्रजमाययुः ॥ ४२ ॥
ते तत्र वर्णितं गोपैः पूतनागमनादिकम् । श्रुत्वा तन्निधनं स्वस्ति शिशोश्चासन् सुविस्मिताः ॥ ४३ ॥
नन्दः स्वपुत्रमादाय प्रोष्यागत उदारधीः । मूर्ध्न्युपाघ्राय परमां मुदं लेभे कुरूद्वह ॥ ४४ ॥
य एतत् पूतनामोक्षं कृष्णस्यार्भकचेष्टितम् । निशम्य श्रद्धया मर्त्यो गोविन्दे लभते रतिम् ॥ ४५ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे सप्तमोऽध्यायः ॥**

---

**श्रीशुक उवाच**

एवं स ववृधे विष्णुर्नन्दगेहे जनार्दनः । कुर्वन्ननिशमानन्दं गोपालानां सयोषिताम् ॥ १ ॥

**राजोवाच**

येनयेनावतारेण भगवान् हरिरीश्वरः । करोति कर्णरम्याणि[२] मनोज्ञानि च नः प्रभुः ॥ २ ॥

यच्छृण्वतोऽपैत्यरतिर्वितृष्णा सत्वं विशुद्ध्यत्यचिरेण पुंसः ।
भक्तिर्हरौ[३] तत्पुरुषेषु सख्यं तदेव सारं[४] वद मन्यसे चेत् ॥ ३ ॥

अथान्यदपि कृष्णस्य तोकाचरितमद्भुतम् । मानुषं देहमासाद्य तज्जातिमनुरुन्धतः[५] ॥ ४ ॥
विस्तरेणेह कारुण्यात् सर्वपापप्रणाशनम् । वक्तुमर्हसि धर्मज्ञ दयालुस्त्वमिति प्रभो ॥ ५ ॥

**श्रीशुक उवाच**

कदाचिदौत्थानिककौतुकाप्लवे[६] जन्मर्क्षयोगे समवेतयोषिताम् ।
वादित्रगीतद्विजमन्त्रवाचकैश्चकार सूनोरभिषेचनं सती ॥ ६ ॥

---

१. तासामविरतम् २. कर्णरंस्यानि ❋ ३. रतिर्हरौ ❋ ४. तदेव भूयः ❋
५. अनुकुर्वतः ❋ ६. उत्थापनकौतुकाप्लवे ❋

नन्दस्य पत्नी कृतमज्जनादिकं विप्रैः कृतस्वस्त्ययनं सुपूजितैः ।
अन्नाद्यवासःस्रगभीष्टधेनुभिः सञ्जातनिद्राक्षमशीशयच्छनैः ॥ ७ ॥
औत्थानिकौत्सुक्यमना[१] मनस्विनी समागतान् पूजयती व्रजौकसः ।
नैवाशृणोद् वै रुदितं सुतस्य सा रुदन् स्तनार्थी चरणावुदक्षिपत् ॥ ८ ॥
अनः शयानस्य शिशोरथाल्पकप्रवाळमृद्वङ्घ्रिहतं व्यवर्तत ।
विध्वस्तनानारसकुप्यभाजनं व्यत्यस्तचक्राक्षविभिन्नकूबरम् ॥ ९ ॥
दृष्ट्वा यशोदाप्रमुखा व्रजस्त्रिय औत्थानिके कर्मणि याः समागताः ।
नन्दादयश्चाद्भुतदर्शनाकुलाः कथं स्वयं वै शकटं विपर्यगात् ।
इति ब्रुवन्तोऽतिविषादमोहिता जनाः समन्तात् परिवव्रुरार्तवत् ॥ १० ॥
ऊचुस्तदाऽव्यक्तमतीन् गोपान् गोपीश्च बालकाः । रुदताऽनेन पादेन क्षिप्तमेतन्न संशयः ॥ ११ ॥
न ते श्रद्दधिरे गोपा बालभाषितमित्युत । अनन्तस्याप्रमेयस्य बलं तस्य न वै विदुः[२] ॥ १२ ॥
रुदन्तं पुत्रमादाय यशोदा ग्रहशङ्किता । कृतस्वस्त्ययनं विप्रैः सूक्तैः स्तनमपाययत् ॥ १३ ॥
पूर्ववत् स्थापितं गोपैर्बलिभिः सपरिच्छदम् । विप्रा हुत्वाऽर्चयाञ्चक्रुर्दध्यक्षतकुशाम्बुभिः ॥ १४ ॥
ये स्तेयानृतडम्भेर्ष्याहिंसामानविवर्जिताः । न तेषां सत्यशीलानामाशिषो विफलाः क्वचित्[३] ॥ १५ ॥
इति बालकमादाय सामर्ग्यजुरुपाकृतैः । जलैः पवित्रौषधिभिरभिषिञ्चद्[४] द्विजोत्तमैः ॥ १६ ॥
वाचयित्वा स्वस्त्ययनं नन्दगोपः समाहितः । हुत्वा चाग्निं द्विजातिभ्यः प्रादादन्नं महागुणम् ॥
गाश्च सर्वगुणोपेता वासःस्रग्रुग्ममालिनीः । पुत्रस्याभ्युदयार्थाय प्राग्जातेश्चान्वयुञ्जत ॥ १८ ॥
विप्रा मन्त्रविदो युक्तास्तैर्याः प्रोक्तास्तथाऽऽशिषः । ता निष्फला भविष्यन्ति न कदाचिदपि स्फुटम् ॥
एकदाऽऽरोहमारूढं लाळयन्ती सुतं सती । गरिमाणं शिशोर्वोढुं न सेहे गिरिकूटवत् ॥ २० ॥
भूमौ निधाय तं गोपी विस्मिता भारपीडिता । महापुरुषमादध्यौ जगामाशु च कर्मसु[५] ॥ २१ ॥
दैत्यो नाम्ना[६] तृणावर्तः कंसभृत्यः प्रचोदितः । चक्रवातस्वरूपेण जहारासीनमर्भकम् ॥ २२ ॥
गोकुलं सर्वमावृण्वन् मुष्णंश्चक्षूंषि रेणुभिः । ईरयन् सुमहाघोरशब्देन[७] प्रदिशो दिशः ॥ २३ ॥

---

१. उत्थानकौत्सुक्यमनाः * २. अप्रमेयबलं तस्य बालकस्य न ते विदुः । * ३. विफलाः कृताः *
४. अभिषिच्य * ५. जगतामास कर्मसु * ६. नाम * ७. सुमहाघोरः शब्देन *

मुहूर्तमभवद् गोष्ठं रजसा तमसाऽऽवृतम् । सुतं यशोदा नापश्यत् तस्मिन् न्यस्तवती यतः ॥ २४ ॥

नापश्यत् कश्चनात्मानं[१] परं चापि विमोहितः[२] । तृणावर्तनिसृष्टाभिः शर्कराभिरुपद्रुतः[३] ॥ २५ ॥

इति खरपवनचक्रपांसुवर्षे सुतपदवीमबलाऽविचक्षमाणा ।
अतिकरुणमनुस्मरन्त्यशोचद् भुवि पतिता मृतवत्सका यथा गौः ॥ २६ ॥

रुदितमनुनिशम्य तत्र गोप्यो[४] भृशमनुतप्तधियोऽश्रुपूर्णमुख्यः ।
रुरुदुरनुपलभ्य नन्दसूनुं पवन उपारतपांसुवर्षवेगे ॥ २७ ॥

तृणावर्तः शान्तरयो वात्यारूपधरो हरन् । कृष्णं नभोगतो गन्तुं[५] नाशक्नोद् भूरिभारभृत् ॥ २८ ॥

तमश्मानं मन्यमान आत्मनो गुरुमत्तया । गळे गृहीत उत्स्रष्टुं नाशक्नोदद्भुतार्भकम् ॥ २९ ॥

गळग्रहणनिश्चेष्टो दैत्यो निर्गतलोचनः । अव्यक्तवाक्यो न्यपतत् सहबालो व्यसुर्व्रजे ॥ ३० ॥

तमन्तरिक्षात् पतितं शिलायां विशीर्णसर्वावयवं कराळम् ।
पुरं यथा रुद्रशरेण विद्धं स्त्रियो रुदन्त्यो ददृशुः समेताः ॥ ३१ ॥

आदाय मात्रे प्रतिहृत्य[६] विस्मिताः कृष्णं च तस्योपरि लम्बमानम् ।
तं स्वस्तिमन्तं पुरुषादनीतं विहायसा मृत्युमुखात्[७] प्रमुक्तम् ॥ ३२ ॥

गोप्यः सगोपाः किल नन्दमुख्या[८] लब्ध्वा पुनः प्रापुरतीव मोदम् ।
अहो बतात्यद्भुतमेष रक्षसा बालो निवृत्तिं गमितोऽभ्यगात् पुनः ॥ ३३ ॥

हिंस्रः स्वपापेन[९] विहिंसितः खलः साधुः समत्वेन भयाद् विमुच्यते ।
किं नस्तपश्चीर्णमधोक्षजार्चनं पूर्तेष्टदत्तं किमु भूतसौहृदम्[१०] ।
यः सम्परेतः पुनरेव बालको दिष्ट्या स्वबन्धून् प्रणयन्नुपस्थितः ॥ ३४ ॥

दृष्ट्वाऽद्भुतानि बहुशो नन्दगोपो बृहद्वने । वसुदेववचो भूयो मानयामास विस्मितः ॥ ३५ ॥

एकदाऽर्भकमादाय स्वाङ्कमारोप्य भामिनी । प्रस्नुतं पाययामास स्तनं स्नेहपरिप्लुता ॥ ३६ ॥

---

१. नापश्यन् कश्चनात्मानम् ❋ २. विमोहिताः ❋ ३. उपद्रुताः ❋
४. ....निशम्य गोपगोप्यः ❋ ५. नभोगतिं गन्तुम् ❋ ६. आदाय तत्र प्रतिसृत्य ❋
७. मृत्युपथात् ❋ ८. गोपाश्च गाप्योऽखिलनन्दमुख्याः ❋ ९. स्वरूपेण ❋
१०. ....दत्तमुतभूतसौहृदम् ❋

पीतप्रायस्य जननी सुतस्य रुचिरस्मितम् । मुखं लाळयती राजन् जृम्भतो ददृशे इदम् ॥ ३७ ॥

खं रोदसी ज्योतिरनीकमाशाः[१] सूर्येन्दुवह्निश्वसनाम्बुधींश्च ।

द्वीपान् नगांस्तद्दुहितॄर्वनानि भूतानि यानि स्थिरजङ्गमानि ॥ ३८ ॥

सा वीक्ष्य विश्वं सहसा राजन् सञ्जातवेपथुः । सम्मील्य मृगशाबाक्षी नेत्रे आसीत् सुविस्मिता ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे अष्टमोऽध्यायः ॥**

---

**श्रीशुक उवाच**

गर्गः पुरोहितो राजन् यदूनां सुमहातपाः । व्रजं जगाम नन्दस्य वसुदेवप्रचोदितः ॥ १ ॥

तं दृष्ट्वा परमप्रीतः प्रत्युत्थाय कृताञ्जलिः । आनर्चाधोक्षजधिया[२] प्रणिपातपुरस्सरम् ॥ २ ॥

सूपविष्टं कृतातिथ्यं गिरा सूनृतया मुनिम् । नन्दयित्वाऽब्रवीद् ब्रह्मन् पूर्णस्य करवाम किम् ॥ ३ ॥

महद्विचलनं नृणां गृहिणां दीनचेतसाम् । निश्रेयसाय भगवान् कल्पते[३] नान्यथा क्वचित् ॥ ४ ॥

ज्योतिषामयनं साक्षाद् यत्तज्ज्ञानमतीन्द्रियम् । प्रणीतं भवता येन पुमान् वेद परावरम् ॥ ५ ॥

त्वं हि ब्रह्मविदां श्रेष्ठः संस्कारान् कर्तुमर्हसि । बालयोरनयोर्नृणां जन्मतो[४] ब्राह्मणो गुरुः ॥ ६ ॥

**गर्ग उवाच**

यदूनामहमाचार्यः ख्यातश्च भुवि सर्वतः । सुतं मया संस्कृतं ते मन्यते देवकीसुतम् ॥ ७ ॥

कंसः पापमतिः सख्यं तव चानकदुन्दुभेः । देवक्या अष्टमो गर्भो न स्त्री भवितुमर्हति ॥ ८ ॥

इति सञ्चिन्तयन् श्रुत्वा देवकीदारिकावचः । अपि हन्ता गताशङ्कस्तर्हि तन्नोऽनयो महान् ॥ ९ ॥

**नन्द उवाच**

अलक्षितेऽस्मिन् रहसि मामकैरपि गोव्रजे । कुरु द्विजातिसंस्कारं स्वस्तिवाचनपूर्वकम् ॥ १० ॥

**श्रीशुक उवाच**

एवं सम्प्रार्थितो विप्रः स्वचिकीर्षितमेव तत् । चकार नामकरणं गूढो रहसि बालयोः ॥ ११ ॥

अयं हि रोहिणीपुत्रो रमयन् सुहृदो गुणैः । आख्यास्यते राम इति बलाधिक्याद् बलं विदुः ।

यदूनामपृथग्भावात् सङ्कर्षणमुशन्त्युत ॥ १२ ॥

---

१. ज्योतिरनीकमास्ये ❋ २. आनर्च्याधोक्षजधिया ❋ ३. कल्प्यते ❋ ४. जन्मना

आसन् वर्णास्त्रयो ह्यस्य[1] गृह्णतोऽनुयुगं तनूः । शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः ॥ १३ ॥
प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजः । वासुदेव इति श्रीमानभिज्ञाः सम्प्रचक्षते ॥ १४ ॥
बहूनि सन्ति नामानि रूपाणि च सुतस्य ते । गुणकर्मानुरूपाणि तान्यहं वेद नो जनाः[2] ॥ १५ ॥
एष वः श्रेय आधास्यद् गोपगोकुलनन्दनः । अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ ॥ १६ ॥
पुराऽनेन व्रजपते साधवो दस्युपीडिताः । अराजकेऽरक्ष्यमाणा जिग्युर्दस्यून् समेधिताः ॥ १७ ॥
य एतस्मिन् महाभागाः प्रीतिं कुर्वन्ति मानवाः । नारयोऽभिभवन्त्येतान् विष्णुपक्षानिवासुराः ॥
तस्मान्नन्दात्मजोऽयं ते नारायणसमो गुणैः । श्रिया कीर्त्याऽनुभावेन गोपायस्व समाहितः ॥ १९ ॥
इत्यात्मानं समादिश्य गर्गे च स्वगृहं गते । नन्दः प्रमुदितो मेने आत्मानं पूर्णमाशिषाम् ॥ २० ॥
कालेन व्रजताऽल्पेन[3] गोकुले रामकेशवौ । जानुभ्यां सह पाणिभ्यां रिङ्गमाणौ विचेरतुः[4] ॥ २१ ॥

तावङ्घ्रियुग्ममनुकृष्य सरीसृपन्तौ घोषप्रघोषरुचिरव्रजकर्दमेषु ।
तन्नादहृष्टमनसावनुसृत्य लोकं मुग्धप्रभीतवदुपेयतुरन्ति मात्रोः ॥ २२ ॥

तन्मातरौ निजसुतौ घृणया स्रवन्त्यौ[5] पङ्काङ्गरागरुचिरावुपगृह्य दोर्भ्याम् ।
दत्वा स्तनं प्रपिबतोः स्म मुखं निरीक्ष्य मुग्धस्मिताल्पदशनं ययतुः प्रमोदम् ॥ २३ ॥

यर्ह्यागताऽतिरमणीयकुमारलीलावन्तर्व्रजे तदबलाः प्रगृहीतपुच्छैः ।
वत्सैरितस्तत उभावनुकृष्यमाणौ प्रेक्षन्त्य उत्स्मृतगृहा जगृहुर्हसन्त्यः ॥ २४ ॥

शृङ्ग्यग्निदंष्ट्र्यसिजलद्विजकण्टकेभ्यः क्रीडापरावतिचलौ[6] स्वसुतौ निषेद्धुम् ।
गृह्याणि कर्तुमपि यत्र न तज्जनन्यौ शेकात आपतुरलं मनसोऽनवस्थाम् ॥ २५ ॥

कालेनाल्पेन राजर्षे रामः कृष्णश्च गोकुले । अघृष्टजानुभिः पद्भिर्विचक्रमतुरञ्जसा ॥ २६ ॥
ततस्तु भगवान् कृष्णो वयस्यैर्व्रजबालकैः । सहरामो व्रजस्त्रीणां चिक्रीडे जनयन् मुदम् ॥ २७ ॥
कृष्णस्य गोप्यो रुचिरादीनकौमारचापलाः । शृण्वन्त्याः किल तन्मातुरिति होचुः समागताः ॥
वत्सान् मुञ्चन् क्वचिदसमयान्[7] क्रोशसञ्जातहासः स्तेयं[8] स्वाद्वत्त्यथ दधि पयः कल्पितैः स्तेययोगैः ।
मर्कं भोक्ष्यन्[9] विभजति स चेन्नास्ति भाण्डं भिनत्ति द्रव्यालाभे सुभृशकुपितो यात्यनुक्रोश्य तोकान्[10] ॥

---

१. त्रयो यस्य ❋ २. जनः ❋ ३. व्रजता तत्र ❋ ४. विजहतुः ❋ ५. स्रुवन्त्यौ ❋
६. अतिबलौ ७. क्वचिदसमये ❋ ८. स्तेयैः ❋ ९. मर्कान् भोक्ष्यन् ❋ १०. बालान् ❋

हस्ताग्राह्ये रचयति विधिं पीठकोलूखलाद्यैश्छिद्रं ह्यन्तर्निहितवयुने शिक्यभाण्डेषु तद्वत् ।
ध्वान्तागारे धृतमणिगणं स्वाङ्गमर्थप्रदीपं काले गोप्यो यर्हि गृहकृत्येषु सुव्यग्रचित्ताः ॥ ३० ॥
एवं धार्ष्ट्यार्द्द्‌ विशति कुरुते मेहनादीनि वास्तौ स्तेयोपायैर्विरचितकृतिः सुप्रतीको यथाऽऽस्ते ।
इत्थं स्त्रीभिः सभयनयनश्रीमुखालोकिनीभिर्व्याख्यातार्था प्रहसितमुखी न ह्युपालब्धुमैच्छत् ॥ ३१ ॥
एकदा क्रीडमानास्ते रामाद्या गोपबालकाः[१] । कृष्णो मृदं भक्षितवानिति मात्रे न्यवेदयन् ॥ ३२ ॥
सा गृहीत्वा करे कृष्णमुपालभ्य[२] हितैषिणी । यशोदा भयसम्भ्रान्तप्रेक्षणाक्षमभाषत ॥ ३३ ॥
कस्मान्मृदमदीनात्मन्[३] भवान् भक्षितवान् रहः[४] । वदन्ति तावका ह्येते कुमारास्तेऽग्रजोऽप्ययम् ॥

श्रीकृष्ण उवाच

नाहं भक्षितवानम्ब सर्वे मिथ्याभिशंसिनः । यदि सत्यगिरस्तर्हि[५] समक्षं पश्य मे मुखम् ॥ ३५ ॥
यद्येवं तर्हि व्यादेहीत्युक्तः स भगवान् हरिः । व्यादत्ताव्याहतैश्वर्यः क्रीडामनुजबालकः ॥ ३६ ॥
सा तत्र ददृशे विश्वं जगत् स्थास्नु च खं दिशः । साद्रिद्वीपाब्धिभूगोळं सवाय्वग्नीन्दुतारकम् ॥ ३७ ॥
ज्योतिश्चक्रं जलं तेजो नभः स्वर्वियदेव च । वैकारिकाणीन्द्रियाणि मनो मात्रा गुणास्त्रयः ॥ ३८ ॥

एतद् विचित्रं सहजीवकालस्वभावकर्माशयलिङ्गभेदम्[६] ।
सूनोस्तनौ वीक्ष्य विदारितास्ये व्रजं सहात्मानमवाप शङ्काम् ॥ ३९ ॥
किं स्वप्न एतदुत देवमाया किं वा मदीयो बत बुद्धिमोहः ।
अथो अमुष्यैव ममार्भकस्य[७] यः कश्चनौत्पत्तिक आत्मयोगः ॥ ४० ॥
अदो यथा तन्न वितर्कगोचरं चेतोमनःकर्मवचोभिरञ्जसा ।
यदाश्रयं येन यतः प्रतीयते सुदुर्विभाव्यं प्रणताऽस्मि तत्पदम् ॥ ४१ ॥
अहं ममासौ पतिरेष मे सुतो व्रजेश्वरस्याखिलवित्तपा सती ।
गोप्यश्च गोपाः सहगोधनाश्च ये[८] यन्माययेत्थं कुमतिः स मे गतिः ॥ ४२ ॥

इत्थं विदिततत्त्वायां गोपिकायां स ईश्वरः । वैष्णवीं व्यतनोन्मायां प्रजास्नेहमयीं विभुः ॥ ४३ ॥
सद्यो नष्टस्मृतिर्गोपी आरोप्यारोहमात्मजम् । प्रवृद्धस्नेहकलिलहृदया सा यथा पुरा[९] ॥ ४४ ॥

---

१. गोपदारकाः ❋ २. पुत्रमुपालभ्य ❋ ३. मृदमदास्तात? ❋ ४. मुहुः ❋
५. सत्यं गिरस्तर्हि ❋ ६. सहजीवलोकं स्वभाव.... ❋ ७. ममात्मजस्य ❋
८. सहगोधनाश्च मे ❋ ९. ... हृदयाऽऽसीत् यथा पुरा ❋

त्रय्या चोपनिषद्भिश्च साङ्ख्ययोगैश्च सात्त्वतैः । उपगीयमानमाहात्म्यं हरिं साऽमन्यतात्मजम् ॥

राजोवाच

नन्दः किमकरोद् ब्रह्मन् श्रेय एवं महोदयम् । यशोदा च महाभागा पपौ यस्याः स्तनं हरिः ॥ ४६ ॥

पितरौ नान्वविन्देतां कृष्णरामार्भकेहितम् । गायन्त्यद्यापि कवयो यल्लोकशमलापहम् ॥ ४७ ॥

श्रीशुक उवाच

द्रोणो वसूनां प्रवरो धरया सह भार्यया । करिष्यमाण आदेशं[१] ब्रह्मणस्तमुवाच ह ॥ ४८ ॥

जातयोर्नौ महादेवे भुवि विश्वेश्वरे हरौ । भक्तिः स्यात् परमा लोके ययाऽञ्जो दुरितं तरेत् ॥ ४९ ॥

अस्त्वित्युक्तः स एतेन व्रजे द्रोणो महायशाः । जज्ञे नन्द इति ख्यातो यशोदा सा धराऽभवत् ॥

ततो भक्तिर्भगवति पुत्रीभूते[२] जनार्दने । दम्पत्योर्नितरामासीद् गोपगोपीषु भारत ॥ ५१ ॥

कृष्णो ब्रह्मण आदेशं सत्यं कर्तुं व्रजे विभुः । सहरामो वसंश्चक्रे तेषां प्रीतिं स्वलीलया ॥ ५२ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे नवमोऽध्यायः ॥

श्रीशुक उवाच

एकदा गृहदासीषु यशोदा नन्दगेहिनी । कर्मान्तरनियुक्तासु निर्ममन्थ स्वयं दधि ॥ १ ॥

यानियानीह गीतानि तद्बालचरितानि च । दधिनिर्मन्थने काले स्मरन्ती तान्यगायत ॥ २ ॥

क्षौमंवासः पृथुकटितटे बिभ्रती सूत्रनद्धं पुत्रस्नेहस्नुतकुचयुगं जातकम्पं च सुभ्रूः ।

रज्ज्वाकर्षश्रमभुजचलत्कङ्कणौ कुण्डले च स्विन्नं वक्त्रं कबरविगळन्मालती निर्ममन्थ ॥ ३ ॥

तां स्तन्यकाम आसाद्य मथ्नन्तीं जननीं हरिः । गृहीत्वा दधिमन्थानं न्यषेधत्[३] प्रीतिमावहन् ॥ ४ ॥

तमङ्कमारूढमपाययत् स्तनं स्नेहस्नुतं सस्मितमीक्षती मुखम् ।
अतृप्तमुत्सृज्य जवेन सा ययावुत्सिच्यमाने पयसि त्वधिश्रिते ॥ ५ ॥

सञ्जातकोपः स्फुरितारुणाधरं सन्दश्य दद्भिर्दधिमण्डभाजनम् ।
भित्त्वा मृषाश्रुर्दृषदश्मना रहो जघास हैयङ्गवमन्तरं गतः[४] ॥ ६ ॥

उत्तार्य गोपी सुभृतं[५] पयः पुनः प्रविश्य सन्दृश्य च दध्यमत्रकम् ।
भग्नं विलोक्य स्वसुतस्य कर्म तज्जहास तं चापि न तत्र पश्यती ॥ ७ ॥

---

१. आदेशान् ❋ २. पुत्रभूते ❋ ३. न्यषेधीत् ❋ ४. गतम् ❋ ५. सुसृतम् ❋

उलूखलाङ्घ्रेरुपरि व्यवस्थितं मर्काय कामं ददतं यथेप्सितम्[१] ।
हैयङ्गवं चौर्यविशङ्कितेक्षणं निरीक्ष्य पश्चात् सुतमागमच्छनैः ॥ ८ ॥

तामात्तयष्टिं प्रसमीक्ष्य सत्वरस्ततोऽवरुह्याभिससार[२] भीतवत् ।
गोप्यन्वधावन्न यमाप योगिनां क्षमं प्रवेष्टुं तपसेरितं मनः ॥ ९ ॥

अन्वञ्चमाना जननी बृहच्चलच्छ्रोणीभराक्रान्तगतिः सुमध्यमा ।
जवेन विस्रंसितकेशबन्धनच्युतप्रसूनानुगतिः परामृशत् ॥ १० ॥

कृतागसं तं प्ररुदन्तमक्षिणी कषन्तमञ्जन्मषिणी स्वपाणिना ।
उद्वीक्षमाणं भयविह्वलेक्षणं हस्ते गृहीत्वा भिषयन्त्यवागुरत् ॥ ११ ॥

त्यक्त्वा यष्टिं सुतं भीतं विज्ञायार्भकवत्सला । इयेष किल तं बद्धुं दाम्नाऽतद्वीर्यकोविदा ॥ १२ ॥

न चान्तर्न बहिर्यस्य न पूर्वं नापि चापरम् । पूर्वापरं बहिश्चान्तर्जगतो यो जगन्मयः[३] ॥ १३ ॥

तं मत्वाऽर्भकमव्यक्तं मर्त्यलिङ्गमधोक्षजम् । गोपिकोलूखले दाम्ना बबन्ध प्राकृतं यथा ॥ १४ ॥

तद् दाम बध्यमानस्य स्वार्भकस्य कृतागसः । द्व्यङ्गुलोनमभूत् तेन सन्दधेऽन्यच्च गोपिका ॥ १५ ॥

यदाऽऽसीत् तदपि न्यूनं तेनान्यदपि सन्दधे । तदपि द्व्यङ्गुलं न्यूनं यद्यदादत्त बन्धनम् ॥ १६ ॥

एवं स्वगेहदामानि यशोदा सन्दधत्यपि । गोपीनां सुस्मयन्तीनां स्मयन्ती विस्मिताऽभवत् ॥ १७ ॥

स्वमातुः स्विन्नगात्राया विस्रस्तकबरस्रजः । दृष्ट्वा परिश्रमं कृष्णः कृपयाऽऽसीत् स्वबन्धने ॥

एवं सन्दर्शिता ह्यङ्ग हरिणा भक्तवश्यता । स्ववशेनापि कृष्णेन यस्येदं सेश्वरं वशे ॥ १९ ॥

नेमं विरिञ्चिर्न[४] भवो न श्रीरप्यङ्गसंश्रया । प्रसादं लेभिरे गोप्यो यत् तत् प्राप विमुक्तिदात्[५] ॥ २० ॥

नायं सुखाप्यो भगवान् देहिनां गोपिकासुतः । ज्ञानिनां चात्मपोतानां यथा भक्तिमतामिह ॥ २१ ॥

कृष्णस्तु गृहकृत्येषु व्यग्रायां मातरि प्रभुः । अद्राक्षीदर्जुनौ पूर्वं गुह्यकौ धनदात्मजौ ॥ २२ ॥

पुरा नारदशापात् तौ[६] वृक्षतां प्रापितौ मदात् । नळकूबरमणिग्रीवाविति ख्यातौ श्रियाऽन्वितौ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे दशमोऽध्यायः ॥

---

१. शुचिस्मिता ❋ २. अवरुह्याथ ससार ❋ ३. जगतो यो जगच्च यः ❋
४. नेमं विरिञ्चो न ❋ ५. यं तं प्रापुर्विमुक्तिदात् ❋ ६. नारदशापेन ❋

## राजोवाच

कथ्यतां भगवन्नेतत् तयोः शापस्य कारणम्। यत् तद् विगर्हितं कर्म येन देवर्षेस्तमः ॥ १ ॥

## श्रीशुक उवाच

रुद्रस्यानुचरौ भूत्वा[1] सुदृप्तौ धनदात्मजौ। कैलासोपवने रम्ये मन्दाकिन्यां मदोत्कटौ ॥ २ ॥
वारुणीं मदिरां पीत्वा मदाघूर्णितलोचनौ। स्त्रीजनैरनुगायद्भिश्चेरतुः पुष्पिते वने ॥ ३ ॥
अन्तः प्रविश्य गङ्गायामम्भोजवनराजिनि। चिक्रीडतुर्युवतिभिर्गजाविव करेणुभिः ॥ ४ ॥
यदृच्छया च देवर्षिर्भगवांस्तत्र कौरव। अपश्यन्नारदो देवौ क्षीबाणौ समबुद्ध्यत ॥ ५ ॥
तं दृष्ट्वा व्रीळिता देव्यो विवस्त्राः शापशङ्किताः। वासांसि पर्यधुः शीघ्रं विवस्त्रौ नैव गुह्यकौ ॥ ६ ॥
तौ दृष्ट्वा मदिरामत्तौ श्रीमदान्धौ सुरात्मजौ। तयोरनुग्रहार्थाय शापं दास्यन्निदं जगौ ॥ ७ ॥

## नारद उवाच

न ह्यन्यो जुषतो जोष्याद् बुद्धिभ्रंशो रजोगुणः। श्रीमदादाभिजात्यादिर्यत्र स्त्रीद्यूतमासवम्[2] ॥ ८ ॥
हन्यन्ते पशवो यत्र निर्दयैरजितात्मभिः। मन्यमानैरिमं देहमजरामृत्यु नश्वरम् ॥ ९ ॥
देवसञ्ज्ञितमप्यन्ते कृमिविड्भस्मसञ्ज्ञितम्। भूतध्रुक् कुरुते स्वार्थं किं वेद निरयो यतः ॥ १० ॥
देहः किमन्नदातुः स्वान्निषेक्तुर्मातुरेव वा। मातुः पितुर्वा विक्रेतुर्बलिनोऽग्नेः[3] शुनोऽपि वा॥ ११ ॥
एवं साधारणं देहमव्यक्तप्रभवाप्ययम्। को विद्वानात्मसात् कृत्वा हन्ति जन्तून् ऋतेऽसतः ॥ १२ ॥
असतः श्रीमदान्धस्य दारिद्र्यं परमाञ्जनम्। आत्मौपम्येन भूतानि दरिद्रः परमीक्षते ॥ १३ ॥
यथा कण्टकविद्धाङ्गो जन्तोर्नेच्छति तां व्यथाम्। जीवसाम्यं गतो लिङ्गैर्न तथाऽविद्धकण्टकः ॥
दरिद्रो निरहंस्तम्भो मुक्तः सर्वमदैरिह। कृच्छ्रं यदृच्छयाऽऽप्नोति तद्धि तस्य परं तपः ॥ १५ ॥
नित्यं क्षुत्क्षामदेहस्य दरिद्रस्यान्नकाङ्क्षिणः। इन्द्रियाण्यनुशुष्यन्ति हिंसाऽपि विनिवर्तते ॥ १६ ॥
दरिद्रस्यैव युज्यन्ते साधवः समदर्शिनः। सद्भिः क्षिणोति तत्तर्षं तत आराच्च सिद्ध्यति ॥ १७ ॥
साधूनां समचित्तानां मुकुन्दचरणैषिणाम्। उपेक्ष्यैः किं धनस्तम्भैरसद्भिरसदाश्रयैः ॥ १८ ॥
तदहं मत्तयोर्माध्व्या वारुण्या श्रीमदान्धयोः। तमोमदं हनिष्यामि स्त्रैणयोरजितात्मनोः ॥ १९ ॥
यदिमौ लोकपालस्य पुत्रौ भूत्वा तमःप्लुतौ। न विवाससमात्मानं विजानीतः सुदुर्मदौ ॥ २० ॥

---

१. भूतौ ❋ २. स्त्रीद्यूतमासवः ❋ ३. पितुर्वा क्रेतुर्वा बलिनोऽग्नेः ❋

अतोऽर्हतः स्थावरतां नैवं स्यातां यथा पुनः । स्मृतिः स्यान्मत्प्रसादेन[१] तत्रापि मदनुग्रहात् ॥ २१ ॥
वासुदेवस्य सान्निध्यं लब्ध्वा दिव्यशरच्छते । वृत्ते स्वर्लोकतां भूयो लब्ध्वा भक्तौ भविष्यतः ॥ २२ ॥

श्रीशुक उवाच

स एवमुक्त्वा देवर्षिर्गतो नारायणाश्रमम् । नळकूबरमणिग्रीवावासतुर्यमळार्जुनौ ॥ २३ ॥
तद् भागवतमुख्यस्य सत्यं कर्तुं वचो हरिः । जगाम शनकैस्तत्र यत्रास्तां यमळार्जुनौ ॥ २४ ॥
देवर्षिर्मे प्रियतमो यदिमौ धनदात्मजौ । तत् तथा साधयिष्यामि यद् गीतं तन्महात्मना ॥ २५ ॥
इत्यन्तरेणार्जुनयोः कृष्णस्तु यमयोर्ययौ । आत्मनिर्वेशमात्रेण तिर्यग्गतमुलूखलम् ॥ २६ ॥
बालेन निष्कृष्टमुलूखलं तद् दामोदरेण तरसोत्कलिताङ्घ्रिबन्धौ ।
निष्पेततुः पवनविक्रमितातिवेलस्कन्धप्रवाळविटपौ कृतचण्डशब्दौ ॥ २७ ॥
तत्र श्रिया परमया ककुभः स्फुरन्तौ सिद्धावुपेत्य कुजयोरिव जातवेदौ ।
कृष्णं प्रणम्य शिरसाऽखिललोकनाथं बद्धाञ्जली विरजसाविदमूचतुः स्म ॥ २८ ॥

यक्षावूचतुः

कृष्णकृष्ण महायोगिन् त्वमाद्यः पुरुषः परः । व्यक्ताव्यक्तमिदं विश्वं रूपं ते ब्राह्मणा विदुः ॥
त्वमेकः सर्वभूतानां देह आत्मेन्द्रियेश्वरः । त्वमेव कालो भगवान् विष्णुरव्यय ईश्वरः ॥ ३० ॥
त्वं महान् प्रकृतिः सूक्ष्मा रजस्सत्त्वतमोमयी । त्वमेव पुरुषोऽध्यक्षः सर्वक्षेत्रविकारवित् ॥ ३१ ॥
गृह्यमाणस्त्वमग्राह्यो विकारैः प्राकृतैर्गुणैः । को न्विहार्हति विज्ञातुं प्राक् सिद्धं गुणसंस्थितेः ॥
तस्मै तुभ्यं भगवते वासुदेवाय वेधसे । आत्मद्योतैर्गुणैश्छन्नमहिम्ने ब्रह्मणे नमः ॥ ३३ ॥
यस्यावतारा ज्ञायन्ते शरीरेष्वशरीरिणः । तैस्तैरतुल्यातिशयैस्तिर्यग्योनिष्वसङ्गतैः[२] ॥ ३४ ॥
स भवान् सर्वलोकस्य भवाय प्रभवाय च[३] । अवतीर्णोऽशभागेन[४] साम्प्रतं पतिराशिषाम् ॥ ३५ ॥
नमः परमकल्याण नमस्ते विश्वमङ्गळ[५] । वासुदेवाय शान्ताय यदूनां पतये नमः ॥ ३६ ॥
अनुजानीहि नौ भूमन् सदाऽनुचरकिङ्करौ[६] । दर्शनं नौ भगवत ऋषेरासीदनुग्रहात् ॥ ३७ ॥
वाणी गुणानुकथने श्रवणौ कथायां हस्तौ च कर्मसु मनस्तव पादयोर्नौ ।
स्मृत्यां शिरस्तव सुरप्रवर प्रणामे दृष्टिः सतां[७] दर्शनेऽस्तु भवत्तनूनाम् ॥ ३८ ॥

---

१. मत्प्रसादात् तु ❋ २. तैर्यग्योनिष्वसङ्गतैः ❋ ३. विभवाय च ४. अवतीर्णोऽसि भागेन ❋
५. विश्वभावन ❋ ६. भूमंस्तवानुचरकिङ्करौ ❋ ७. दृष्टिः सती ❋

**श्रीशुक उवाच**

इत्थं सङ्कीर्तितस्ताभ्यां भगवान् गोकुलेश्वरः । दाम्ना चोलूखले बद्धः प्रहसन्नाह गुह्यकौ ॥ ३९ ॥

**श्रीभगवानुवाच**

ज्ञातं मया[1] पुरैवैतद् ऋषिणा करुणात्मना । यच्छ्रीमदान्धयोर्वाग्भिः शापः सानुग्रहः कृतः ॥ ४० ॥

साधूनां समचित्तानां सुतरां मत्कृतात्मनाम् । दर्शनान्नो भवेद्[2] बन्धः पुंसोऽक्ष्णोः सवितुर्यथा ॥

तद् गच्छतं मत्परमौ नरवाहनिकेतनम् । सञ्जातो मयि भावो वामीप्सितः परमोत्सवः ॥ ४२ ॥

**श्रीशुक उवाच**

इत्युक्तौ तौ परिक्रम्य[3] प्रणम्य च पुनःपुनः । बद्धोलूखलमामन्त्र्य जग्मतुर्दिशमुत्तराम् ॥ ४३ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे एकादशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

गोपा नन्दादयः श्रुत्वा द्रुमयोः पततो रवम् । तत्राजग्मुः कुरुश्रेष्ठ निर्घातरवशङ्किताः ॥ १ ॥

भूम्यां निपतितौ तत्र ददृशुर्यमळार्जुनौ । बभ्रमुस्तदविज्ञाय लक्ष्यं पतनकारणम् ॥ २ ॥

उलूखलं विकर्षन्तं दाम्ना बद्धं च बालकम् । कस्येदं कुत आश्चर्यमुत्पातभयकातराः[4] ॥ ३ ॥

बाला ऊचुरनेनेति तिरश्चीनमुलूखलम् । विकर्षता मध्यगेन पुरुषावप्यचक्ष्महि[5] ॥ ४ ॥

न ते तदुक्तं जगृहुर्न घटेतेति तस्य तत् । बालस्योत्पाटनं तर्वोः केचित् सन्दिग्धचेतसः ॥ ५ ॥

उलूखलं विकर्षन्तं दाम्ना बद्धं स्वमात्मजम्[6] । विलोक्य नन्दः प्रहसद्वदनो विमुमोच ह ॥ ६ ॥

गोपीभिः स्तोभितोऽनृत्यद्[7] भगवान् बालवत् क्वचित् । उद्गायति क्वचिन्मुग्धस्तद्वशो दारुयन्त्रवत्॥

बिभर्ति क्वचिदाज्ञप्तः पीठकोन्मानपादुकम्[8] । बाहुक्षेपं च कुरुते स्वानां च[9] प्रीतिमावहन् ॥ ८ ॥

दर्शयंस्तद्विदां लोक आत्मनो भक्तवश्यताम् । व्रजस्योद्वाहयन् हर्षं भगवान् बालचेष्टितैः ॥ ९ ॥

गोपवृद्धा महोत्पाताननुभूय बृहद्वने । नन्दादयः समागम्य व्रजकार्यममन्त्रयन्[10] ॥ १० ॥

---

१. ज्ञातं मम * २. दर्शनान्तो भवेद् * ३. तं परिक्रम्य * ४. उत्पात इति कातराः *
५. पुरुषावध्यचक्ष्महि * ६. बद्धं च बालकम् * ७. स्तोभितो नृत्यन् *
८. पीठिकोन्मान.... * ९. कुरुते गोपीनाम् * १०. अचिन्तयन् *

तत्रोपानन्दनामाऽऽह गोपो ज्ञानवयोधिकः । देशकालार्थतत्त्वज्ञः प्रियकृद् रामकृष्णयोः ॥ ११ ॥
उत्थातव्यमितोऽस्माभिर्गोकुलस्य हितैषिभिः । आयान्त्यत्र महोत्पाताः प्रजानां नाशहेतवः ॥
मुक्तः कथञ्चिद् राक्षस्या बालघ्न्या बालको ह्यसौ । हरेरनुग्रहान्नूनमनश्चोपरि नापतत् ॥ १३ ॥
चक्रवातेन नीतोऽयं दैत्येन वियदूह्यता । शिलायां पतितस्तत्र परित्रातः सुरेश्वरैः ॥ १४ ॥
यन्न म्रियेत द्रुमयोरन्तरं प्राप्य बालकः । असावन्यतमो वाऽपि तच्चाप्यच्युतरक्षणम् ॥ १५ ॥
यावदौत्पातिकोऽरिष्टो व्रजं नाभिभवेदितः । तावद् बालानुपादाय यास्यामोऽद्यैव सानुगाः॥ १६ ॥
वनं वृन्दावनं नाम पशव्यं नवकाननम् । गोपगोपीगवां सेव्यं पुण्याद्रितृणवीरुधम् ॥ १७ ॥
तत् तत्राद्यैव[१] यास्यामः शकटान् युङ्ध्व[२] माचिरम् । गोधनान्यग्रतो यान्तु भवतां यदि रोचते ॥
*तच्छ्रुत्वैकधियो गोपास्सर्वे नन्दपुरोगमाः । उपनन्दवचो राजन् प्रतिनन्द्य गृहान् ययुः ॥ १९ ॥
*सरित्तीरगतं कृष्णं भग्नार्जुनमथाह्वयन् । रामं च रोहिणी देवी क्रीडन्तौ बालकैर्भृशम् ॥ २० ॥
*नोपेयातां यदाऽऽहूतौ क्रीडासङ्गेन पुत्रकौ । यशोदां प्रेषयामास रोहिणी पुत्रवत्सला ॥ २१ ॥
*क्रीडन्तं स्वसुतं[३] बालैरतिवेलं सहाग्रजम् । यशोदाऽजोहवीद् वीक्ष्य पुत्रस्नेहस्नुतस्तनी ॥ २२ ॥
*कृष्ण कृष्णारविन्दाक्ष एहि तात स्तनं पिब । अलं विहारैः क्षुत्क्षान्तस्तद् भवान् भोक्तुमर्हति ॥
*हे रामागच्छ ताताशु सानुजः कुलनन्दन । प्रातरेव कृताहारः क्रीडाश्रान्तोऽसि पुत्रक ॥ २४ ॥
*प्रतीक्षते त्वां दाशार्हो भोक्ष्यमाणो व्रजाधिपः । एह्यावयोः प्रियं धेहि स्वगृहान् यात बालकाः ॥
*जन्मर्क्षं तेऽद्य भविता विप्रेभ्यो देहि गाः शुचिः[४] । धूळिधूसरिताङ्गस्त्वं तात मज्जनमावह ॥ २६ ॥
*पश्य पश्य वयस्यांस्ते मातृमृष्टान् स्वलङ्कृतान् । त्वं च स्नातः कृताहारो विहरस्व स्वलङ्कृतः ॥

*इत्थं यशोदा तमशेषशेखरं[५] मत्वा सुतं स्नेहनिबद्धधीर्नृप ।
हस्ते गृहीत्वा सहराममच्युतं नीत्वा स्ववाटं कृतवत्यथोदयम् ॥ २८ ॥

*अथ नन्दः समाहूय गोपानिदमभाषत । श्वोऽतो वृन्दावनं यामो यत्ता भवत माचिरम् ॥ २९ ॥
तच्छ्रुत्वैकधियो गोपाः साधुसाध्विति वादिनः । व्रजात्[६] स्वान्स्वान् समायुज्य ययू रूढपरिच्छदाः ॥
वृद्धान् बालान् स्त्रियो राजन् सर्वोपस्करणानि च । अनस्स्वारोप्य गोपाला यत्ता आत्तशरासनाः[७] ॥

---

१. तत् तत्रैवाद्य ❋ २. युङ्क्त ❋ * एते श्लोकाः केषुचन प्राचीनकोशेषु न सन्ति । ३. सा सुतम् ❋
४. शुचीः ❋ ५. तमशेषनाथम् ❋ ६. रथान् ❋ ७. यत्ताः स्वात्तशरासनाः ❋

गोधनानि पुरस्कृत्य शृङ्गाण्यापूर्य सर्वतः । तूर्यघोषेण महता ययुः सहपुरोहिताः ॥ ३२ ॥
गोप्यो रूढरथा नृत्यत्कुचकुङ्कुमकान्तयः । कृष्णलीला जगुः प्रीताः स्निग्धकण्ठ्यः सुवाससः ॥
तथा यशोदारोहिण्यावेकं शकटमास्थिते । रेजतुः कृष्णरामाभ्यां तत्कथाश्रवणोत्सुके ॥ ३४ ॥
वृन्दावनं सम्प्रविश्य सर्वकालसुखावहम् । तत्र चक्रुर्व्रजावासं शकटैरर्धचन्द्रवत् ॥ ३५ ॥
वृन्दावनं गोवर्धनं यमुनापुळिनानि च । वीक्ष्यासीदुत्तमा प्रीती रामकेशवयोर्नृप[१] ॥ ३६ ॥
एवं व्रजौकसां प्रीतिं यच्छन्तौ बालचेष्टितैः । कळवाक्यैश्च कालेन वत्सपालौ बभूवतुः ॥ ३७ ॥
अविदूरे व्रजभुवः सह गोपालदारकैः । पालयामासतुर्वत्सान्[२] नानाक्रीडापरिच्छदौ ॥ ३८ ॥
क्वचिद् वादयतो वेणून् क्षेपणैः क्षिपतः क्वचित् । क्वचित् पदैः किङ्किणीभिः क्वचित् कृत्रिमगोवृषैः ॥
वृषायमाणौ नर्दन्तौ युयुधाते परस्परम् । अनुकृत्य रुतैर्जन्तून् चेरतुः प्राकृतौ यथा ॥ ४० ॥
कदाचिद् यमुनातीरे वत्सान् चारयतोऽर्भकैः[३] । वयस्यैः कृष्णबलयोर्जिघांसुर्दैत्य आगमत्॥ ४१ ॥
तं वत्सरूपिणं वीक्ष्य वत्सयूथगतं हरिः । दर्शयन् बलदेवाय शनैर्मुग्ध इवासदत्[४] ॥ ४२ ॥
गृहीत्वाऽपरपादाभ्यां सहलाङ्गूलमच्युतः । भ्रामयित्वा कपित्थाग्रे प्राहिणोद् गतजीवितम् ॥ ४३ ॥
स कपित्थैर्महाकायः पात्यमानैः पपात ह । तं वीक्ष्य विस्मिता बालाः शशंसुः साधुसाध्विति ॥
देवाश्चोपरि सन्तुष्टा बभूवुः पुष्पवर्षिणः[५] ॥ ४५ ॥
तौ वत्सपालकौ भूत्वा सर्वलोकैकपालकौ । सप्रातराशौ गोवत्सान् चारयन्तौ विचेरतुः ॥ ४६ ॥
स्वं स्वं वत्सकुलं सर्वे पालयिष्यन्त एकदा । गत्वा जलाशयाभ्याशं पाययित्वा पपुर्जलम् ॥ ४७ ॥
ते तत्र ददृशुर्बाला महासत्त्वमवस्थितम् । तत्रसुर्वज्रसंभिन्नगिरेः[६] शृङ्गमिव च्युतम् ॥ ४८ ॥
स वै बको नाम महानसुरो बकरूपधृक् । आगत्य तरसा[७] कृष्णं तीक्ष्णतुण्डोऽग्रसद् बली॥ ४९ ॥
कृष्णं महाबकग्रस्तं दृष्ट्वा रामादयोऽर्भकाः । बभूवुरिन्द्रियाणीव विना प्राणं विचेतसः[८] ॥ ५० ॥
तं तालुमूलं प्रदहन्तमग्निवद् गोपालसूनुं पितरं जगद्गुरोः ।
चच्छर्द सद्योऽतिरुषाऽक्षतं बकस्तुण्डेन हन्तुं पुनरभ्यपद्यत ॥ ५१ ॥

---

१. राममाधवयोर्नृप ❋ २. चारयामासतुर्वत्सान् ❋ ३. चारयतोः स्वकैः ❋ ४. इवाभवत् ❋
५. ववृषुः पुष्पसन्ततिम् ❋ ६. वज्रभिन्नात् तु गिरेः ❋ ७. सहसा ❋ ८. विना प्राणैर्विचेतसः ❋

तमापतन्तं स निगृह्य तुण्डयोर्दोर्भ्यां बकं कंससखं सतां पतिः ।
पश्यत्सु बालेषु ददार लीलया मुदावहो वीरणवद् दिवौकसाम् ॥ ५२ ॥
तदा बकारिं सुरलोकवासिनः समाकिरन् नन्दनमल्लिकादिभिः ।
समीडिरे चानकशङ्खसंस्तवैस्तद् वीक्ष्य गोपालसुता विसिस्मिरे ॥ ५३ ॥
मुक्तं बकास्यादुपलभ्य निर्वृता रामादयः प्राणमिवैन्द्रियो गणः ।
स्थानागतं तं परिरभ्य निर्भयाः[१] प्रणीय वत्सान् व्रजमेत्य तज्जगुः ॥ ५४ ॥
तच्छ्रुत्वा विस्मिता गोपा गोप्यश्चातिप्रियादृताः । प्रेत्यागतमिवौत्सुक्यादैक्षन्त तृषितेक्षणाः ॥ ५५ ॥
अहो बतास्य बालस्य बहवो मृत्यवोऽभवन् । अप्यासीद् विप्रियं तेषां कृतं पूर्वं यतो भयम् ॥ ५६ ॥
अथाप्यभिभवन्त्येनं नैवेते[२] घोरदर्शनाः । जिघांसयैनमासाद्य नश्यन्त्यग्नौ पतङ्गवत् ॥ ५७ ॥
अहो ब्रह्मविदां वाचो नासत्याः सन्ति कर्हिचित् । गर्गो यदाह भगवानन्वभावि तथैव तत् ॥ ५८ ॥
इति नन्दादयो गोपा रामकृष्णकथां मुदा[३] । कुर्वन्तो रममाणाश्च नाविन्दन् भववेदनाम् ॥ ५९ ॥
एवं विहारैः कौमारैः कौमारं जहतुर्व्रजे । निलायनैः सेतुबन्धैर्मर्कटोत्प्लवनादिभिः ॥ ६० ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे द्वादशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

ततश्च पौगण्डवयःश्रितौ व्रजे बभूवतुस्तौ पशुपालसम्मतौ ।
गाश्चारयन्तौ सखिभिः समं पदैर्वृन्दावनं पुण्यमतीव चक्रतुः ॥ १ ॥
तन्माधवो वेणुमुदीरयन् वृतो गोपैर्गृणद्भिः स्वयशो बलान्वितः ।
पशून् पुरस्कृत्य पशव्यमाविशद् विहर्तुकामः कुसुमाकरं वनम् ॥ २ ॥
तन्मञ्जुघोषालिमृगद्विजाकुलं महन्मनःप्रख्यपयःसरस्वता ।
वातेन जुष्टं शतपत्रगन्धिना निरीक्ष्य रन्तुं भगवान् मनो दधे ॥ ३ ॥
स तत्रतत्रारुणपल्लवश्रिया फलप्रसूनोरुभरेण पादयोः ।
स्पृशच्छिखान् वीक्ष्य वनस्पतीन् मुदा स्मयन्निवाहाग्रजमादिपूरुषः ॥ ४ ॥

---

१. निर्वृताः ❋ २. न ह्येते ❋ ३. कृष्णरामकथां मुदा ❋

**श्रीभगवानुवाच**

अहो अमी देववरामरार्चितं पादाम्बुजं ते सुमनःफलार्हणम् ।
नमन्त्युपादाय शिखाभिरात्मनस्तमोपहत्यै तरुजन्म यत्कृतम् ॥ ५ ॥
एतेऽळिनस्तव यशोऽखिललोकतीर्थं गायन्त आदिपुरुषानुपथं भजन्ते ।
प्रायो अमी मुनिगणा भवदीयमुख्या गूढं वनेऽपि न जहत्यमरात्मदैवम् ॥ ६ ॥
नृत्यन्त्यमी शिखिन ईड्य मुदा हरिण्यः कुर्वन्ति गोप्य इव ते प्रियमीक्षणेन ।
सूक्तैश्च कोकिलगणा गृहमागताय धन्या वनौकस इयान् हि सतां निसर्गः ॥ ७ ॥

**श्रीशुक उवाच**

एवं वृन्दावनं कृष्णः श्रीमत्[1] प्रीतमनाः पशून् । रेमे सञ्चारयन्नद्रेः सरिद्रोधस्सु सानुगः ॥ ८ ॥
क्वचिद् गायति गायत्सु मदान्धाळिष्वनुव्रतैः । उपगीयमानचरितः सखिसङ्कर्षणान्वितः ॥ ९ ॥
क्वचिच्च कळहंसानामनुकूजति कूजितम् । अभिनृत्यति नृत्यन्तं बर्हिणं हासयन् क्वचित् ॥ १० ॥
मेघगम्भीरया वाचा नामभिर्दूरगान् पशून् । क्वचिदाह्वयति प्रीत्या गोगोपालमनोज्ञया ॥ ११ ॥
चकोरक्रौञ्चचक्राह्वभारद्वाजाळिबर्हिणाम् । अनुरौति स्म सत्वानां भीतवद् व्याघ्रसिंहयोः ॥ १२ ॥
क्वचित् क्रीडापरिश्रान्तं गोपोत्सङ्गोपबर्हणम् । स्वयं विश्रामयत्यार्यं पादसंवाहनादिभिः ॥ १३ ॥
नृत्यतो गायतो वाऽपि वल्गतो युध्यतो मिथः । गृहीतहस्तौ गोपालान् हसन्तौ प्रशशंसतुः ॥ १४ ॥
क्वचित् पल्लवतल्पेषु नियुद्धश्रमकर्शितः । वृक्षमूलाश्रयः शेते गोपोत्सङ्गोपबर्हणः ॥ १५ ॥
पादसंवाहनं चक्रुः केचित् तस्य महात्मनः । अपरे हतपाप्मनो व्यजनैः समवीजयन् ॥ १६ ॥
अन्ये तदनुरूपाणि मनोज्ञानि महात्मनः । गायन्ति स्म महाराज स्नेहक्लिन्नधियः शनैः ॥ १७ ॥

एवं निगूढात्ममतिः स्वमायया गोपात्मजत्वं चरितैर्विडम्बयन् ।
रेमे रमालाळितपादपल्लवो ग्राम्यैः समं ग्राम्यवदीशचेष्टितम् ॥ १८ ॥
धन्येयमद्य धरणी तृणवीरुधस्तत्पादस्पृशो द्रुमलताः करजाभिमृष्टाः ।
नद्योऽद्रयः खगमृगाः सदयावलोकैर्गोप्योऽन्तरेण भुजयोरपि यत्स्पृहा श्रीः ॥ १९ ॥

श्रीदामा नाम गोपालो रामकेशवयोः सखा । सुबलाशोककृष्णाद्यान् गोपान् प्रेम्णेदमब्रवीत् ॥ २० ॥
रामराम महासत्त्व[2] कृष्ण दुष्टनिबर्हण । इतोऽविदूरे सुमहद्वनं ताळाळिसङ्कुलम् ॥ २१ ॥

---

१. एवं वृन्दावनवनं श्रीमान् ॐ    २. रामराम महाबाहो

फलानि तत्र भूरीणि पतन्ति पतितानि च । सन्ति किन्त्ववरुद्धानि धेनुकेन दुरात्मना ॥ २२ ॥
सोऽतितीव्रोऽसुरो राम हे कृष्ण खररूपधृक् । आत्मतुल्यबलैरन्यैर्ज्ञातिभिर्बहुभिर्वृतः ॥ २३ ॥
तस्मात् कृतनराहाराद् भीतैर्नृभिरमित्रहन् । न सेव्यते पशुगणैः पक्षिसङ्घैर्विवर्जितम् ॥ २४ ॥
विद्यन्तेऽभुक्तपूर्वाणि फलानि सुरभीणि च । एष वै सुरभिर्गन्धो विषूचीनो विगृह्यते ॥ २५ ॥
प्रयच्छ तानि नः कृष्ण गन्धलोभितचेतसाम् । वाञ्छाऽऽसीन्महती राम गम्यतां यदि रोचते ॥ २६ ॥
एवं सुहृद्वचः श्रुत्वा सुहृत्प्रियचिकीर्षया । प्रहस्य जग्मतुर्गोपैर्वृतौ ताळवनं प्रभू ॥ २७ ॥
बलः प्रविश्य बाहुभ्यां ताळान् सम्परिकम्पयन् । फलानि पातयामास मतङ्गज इवौजसा ॥ २८ ॥
फलानां पततां शब्दं निशम्यासुररासभः । अभ्यधावत् क्षितितळं सनगं परिकम्पयन् ॥ २९ ॥
समेत्य तरसाऽऽवृत्य द्वाभ्यां पद्भ्यां बलं बली । निहत्योरसि काशब्दं मुञ्चन् पर्यचरद् बलम् ॥ ३० ॥
पुनरासाद्य संरब्ध उपक्रोष्टुं पराक् स्थितः । चरणावपरौ राजन् बलाय प्राहिणोद् रुषा ॥ ३१ ॥
स तं गृहीत्वाऽथ पदोर्भ्रामयित्वैकपाणिना । चिक्षेप तृणराजाग्रे भ्रामणत्यक्तजीवितम् ॥ ३२ ॥
तेनाहतो महाताळः पतमानो बृहच्छिराः । पार्श्वस्थं कम्पयन् भग्नः स चान्यं सोऽपि चापरम् ॥
बलस्य लीलयोत्सृष्टखरदेहहताहताः । ताळाश्चकम्पिरे सर्वे महावातेरिता इव ॥ ३४ ॥
नैतच्चित्रं भगवति ह्यनन्ते जगदीश्वरे । ओतप्रोतमिदं यस्मिन् तन्तुष्वङ्ग यथा पटः ॥ ३५ ॥
ततः कृष्णं च रामं च ज्ञातयो धेनुकस्य ये । क्रोष्टारोऽभ्यद्रवन् सर्वे संरब्धा हतबान्धवाः ॥ ३६ ॥
तांस्तानापततः कृष्णो रामश्च नृप लीलया । गृहीतपश्चाच्चरणान् प्राहिणोत् तृणराजसु ॥ ३७ ॥
फलप्रकरसङ्कीर्णा दैत्यदेहैर्गतासुभिः । रराज भूः सताळाग्रैर्घनैरिव नभस्तळम् ॥ ३८ ॥
तयोस्तत् सुमहत्कर्म निशाम्य विबुधादयः । मुमुचुः पुष्पवर्षाणि चक्रुर्वाद्यानि तुष्टुवुः ॥ ३९ ॥
अथ ताळफलान्यादन् मनुष्या गतसाध्वसाः । तृणं च पशवश्चेरुर्हतधेनुककानने ॥ ४० ॥
कृष्णः कमलपत्राक्षः पुण्यश्रवणकीर्तनः । स्तूयमानोऽनुगैर्गोपैः साग्रजो व्रजमाव्रजत् ॥ ४१ ॥

तं गोरजश्छुरितकुन्तळबद्धबर्हवन्यप्रसूनरुचिरेक्षणचारुहासम् ।
वेणुं क्वणन्तमनुगैरुपगीतकीर्तिं गोप्यो दिदृक्षितदृशोऽभ्यगमन् समेताः ॥ ४२ ॥
पीत्वा मुकुन्दमुखसारघमक्षिभृङ्गैस्तापं जहुर्विरहजं व्रजयोषितोऽह्नि ।
तत्सत्कृतिं समधिगम्य विवेश गोष्ठं सव्रीडहासविगमो यदपाङ्गमोक्षः ॥ ४३ ॥

तदा[१] यशोदारोहिण्यौ पुत्रयोः पुत्रवत्सले । यथाकालं यथाकामं[२] व्यधत्तां परमाशिषः ॥ ४४ ॥

---

१. तयोः ❋  २. यथाकालं यथायोगम् ❋

विगताध्वश्रमौ तत्र[1] मज्जनोन्मर्दनादिभिः । नीवीं वसित्वा रुचिरां दिव्यस्रग्गन्धमण्डितौ ॥ ४५ ॥
जनन्युपहृतं प्राश्य स्वाद्वन्नमुपलाळितौ । संविश्य मृदुशय्यायां सुखं सुषुपतुर्व्रजे ॥ ४६ ॥
एवं स भगवान् कृष्णो वृन्दावनचरः क्वचित् । ययौ राममृते राजन् काळिन्दीं सखिभिर्वृतः ॥ ४७ ॥
अथ गावश्च गोपाश्च निदाघातपपीडिताः । दुष्टं जलं पपुस्तस्यास्तृषार्ता विषदूषितम् ॥ ४८ ॥
विषाम्भस्तदुपस्पृश्य दैवोपहतचेतसः । निपेतुर्व्यसवः सर्वे मूर्च्छिता वै कुरूद्वह ॥ ४९ ॥
वीक्ष्य तान् वै तथाभूतान् कृष्णो योगेश्वरेश्वरः । ईक्षयाऽमृतवर्षिण्या स्वनाथान् समजीवयत् ॥ ५० ॥
ते सम्प्रतीतस्मृतय उत्थाय च जलान्तिकात् । आसन् सुविस्मिताः सर्वे वीक्षमाणाः परस्परम् ॥
अन्वमंसत तद् राजन् गोविन्दानुग्रहेक्षितम् । पीत्वा विषं परेतस्य पुनरुत्थानमात्मनः ॥ ५२ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे त्रयोदशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

विलोक्य दूषितां कृष्णां कृष्णः कृष्णाहिना विभुः । तस्या विशुद्धिमन्विच्छन् सर्पं तमुदवासयत् ॥ १ ॥

**राजोवाच**

कथमन्तर्जलेऽगाधे न्यगृह्णाद् भगवानहिम् । स वै बहुयुगावासी यथासीद् विप्र कथ्यताम् ॥ २ ॥
ब्रह्मन् भगवतस्तस्य भूम्नः स्वच्छन्दवर्तिनः । गोपालोदारचरितं कस्तृप्येतामृतं जुषन् ॥ ३ ॥

**श्रीशुक उवाच**

काळिन्द्यां काळियस्यासीद् ह्रदः कश्चिद् विषाग्निना । श्रप्यमाणपयो यस्मिन् पतन्त्युपरिगाः खगाः ॥
विप्रुष्मता विषोदोर्मिमारुतेनाभिमर्शिताः । म्रियन्ते तीरगा यस्य प्राणिनः स्थिरजङ्गमाः ॥ ५ ॥

तं चण्डवेगविषवीर्यमवेक्ष्य तेन दुष्टां नदीं च खलसंयमनावतारः ।
कृष्णः कदम्बमधिरुह्य ततोऽतितुङ्गाद् आस्फोटय गाढरशनो न्यपतद् विषोदे ॥ ६ ॥
सार्पह्रदः पुरुषसारनिपातवेगसङ्क्षोभितोरगविषोच्छ्वसिताम्बुराशिः ।
पर्युत्प्लुतो[2] विषकषायविभीषणोर्मिभीमो धनुःशतमनन्तबलस्य किं तत् ॥ ७ ॥
तस्मिन् ह्रदे विहरतो भुजदण्डघूर्णवार्घोषमङ्ग वरवारणविक्रमस्य ।
आश्रुत्य तत् स्वसदनाभिभवं ससैन्यश्चक्षुःश्रवाः समसरत् तममृष्यमाणः ॥ ८ ॥

---

१. ततो ध्वस्तश्रमौ तत्र ❋ २. पर्यक्प्लुतः

तं प्रेक्षणीयसुकुमारघनावदातं श्रीवत्सपीतवसनं स्मितसुन्दरास्यम् ।
क्रीडन्तमप्रतिभयं कमलोदराङ्घ्रिं सन्दश्य मर्मसु रुषा भुजगश्छाद ॥ ९ ॥
तं नागभोगपरिवीतमदृष्टचेष्टमालोक्य तत्प्रियसखाः पशुपा भृशार्ताः ।
कृष्णेऽर्पितात्मसुहृदर्थकळत्रकामा दुःखानुशोकभयमूढधियो निपेतुः ॥ १० ॥
गावो वृषा वत्सतर्यः क्रन्दमानाः सुदुःखिताः । कृष्णे न्यस्तेक्षणा भीता रुदन्त्य इव तस्थिरे॥ ११ ॥
अथ व्रजे महोत्पातास्त्रिविधा ह्यतिदारुणाः । उत्पेतुर्दिवि भुव्यात्मन्यासन्नभयशंसिनः ॥ १२ ॥
तानालक्ष्य भयोद्विग्ना गोपा नन्दपुरोगमाः । विना रामेण गाः कृष्णं ज्ञात्वा चारयितुं गतम् ॥ १३ ॥
तैर्दुर्निमित्तैर्निधनं मत्वा प्राप्तमतद्विदः । तत्प्राणास्तन्मनस्काश्च दुःखशोकभयातुराः ॥ १४ ॥
आबालवृद्धवनिताः सर्वेऽङ्ग पशुवृत्तयः । निर्जग्मुर्गोकुलाद् दीनाः कृष्णदर्शनलालसाः ॥ १५ ॥
तांस्तथा कातरान् वीक्ष्य भगवान् माधवो बलः । प्रहस्य किञ्चिन्नोवाच प्रभावज्ञोऽनुजस्य सः ॥ १६ ॥
तेऽन्वेषमाणा दयितं कृष्णं सूचितया पदैः । भगवल्लक्षणैर्जग्मुः पदव्या यमुनातटम् ॥ १७ ॥
ते तत्र तत्राब्जयवाङ्कुशाशनिध्वजोपपन्नानि पदानि विश्पतेः ।
मार्गे गवामन्यपदान्तरान्तरे निरीक्षमाणा ययुरङ्ग सत्वराः ॥ १८ ॥
अन्तर्ह्रदे भुजगभोगपरीतमारात् कृष्णं निरीहमुपलक्ष्य जलाशयान्ते ।
गोपांश्च मूढधिषणान् परितः पशूंश्च सङ्क्रन्दतः परमकश्मलमापुरार्ताः ॥ १९ ॥
गोप्योऽनुरक्तमनसो भगवत्यनन्ते तत्सौहृदस्मितविलोकगिरः स्मरन्त्यः।
ग्रस्तेऽहिना प्रियतमे भृशदुःखतप्ताः शून्यं प्रियव्यतिहृतं ददृशुस्त्रिलोकम् ॥ २० ॥
ताः कृष्णमातरमपत्यमनुप्रविष्टां तुल्यव्यथाः समनुगृह्य शुचः स्रवन्त्यः ।
त्रस्ता व्रजप्रियकथाः कथयन्त्य आसन् कृष्णाननेऽर्पितदृशो मृतकप्रतीकाः ॥ २१ ॥
कृष्णप्राणान् निर्विशतो नन्दादीन् वीक्ष्य तं ह्रदम्[१] । प्रत्यषेधत् स भगवान् रामः कृष्णानुभाववित् ॥
इत्थं स्वगोकुलमनन्यगतिं निरीक्ष्य सस्त्रीकुमारमतिदुःखितमात्महेतोः ।
आज्ञाय मर्त्यपदवीमनुवर्तमानः स्थित्वा मुहूर्तमुदतिष्ठदुरङ्गबन्धात् ॥ २३ ॥
तत्प्रथ्यमानवपुषा व्यथितात्मभोगस्त्यक्त्वोन्नमय्य कुपितः स्वफणान् भुजङ्गः ।
तस्थौ श्वसन् श्वसनरन्ध्रविषाम्बरीषस्तब्धेक्षणोल्मुकमुखो हरिमीक्षमाणः ॥ २४ ॥

१. तद्ध्रदम् ❋

तं जिह्वया द्विशिखया परिलेलिहानं द्वे सृक्किणी अतिकराळविषाग्निदृष्टिम् ।
क्रीडन्नमुं परिससार यथा खगेन्द्रो बभ्राम सोऽप्यपसरन् प्रसमीक्षमाणः ॥ २५ ॥
एवं परिभ्रमहतौजसमुन्नतांसमानम्य तत्पृथुशिरस्स्वधिरूढ आद्यः ।
तन्मूर्धरत्ननिकरस्पर्शातिताम्रपादाम्बुजोऽमृतकलाधिगुरुर्ननर्त ॥ २६ ॥
तं नर्तुमुद्यतमवेक्ष्य[१] तदा तदीयगन्धर्वसिद्धसुरचारणदेववध्वः ।
प्रीत्या मृदङ्गपणवानकवाद्यगीतपुष्पोपहारनुतिभिः सहसोपसेदुः ॥ २७ ॥
यद्यच्छिरो न नमते गरकाळशीर्ष्णस्तत्तन्ममर्द खलदण्डधरोऽङ्घ्रिपातैः ।
क्षीणे बले भगवतोल्बणमाशु[२] वक्त्राद् रक्तं वमन् परमकश्मलमाप नागः ॥ २८ ॥
तस्याक्षिभिर्गरळमुद्वमतः शिरस्सु यद्यत् समुन्नमति निःश्वसतो रुषोच्चैः ।
नृत्यन् पदाऽनुनमयन् स यदा बभूव पुष्पैः स्तुतोऽथ भगवान् पुरुषः पुराणः[३] ॥ २९ ॥
तच्चित्रताण्डवविरुग्णफणातपत्रो[४] रक्तं मुखैरुरु वमन् नृप भग्नगात्रः[५] ।
स्मृत्वा चराचरगुरुं पुरुषं पुराणं नारायणं तमरणं मनसा जगाम ॥ ३० ॥
कृष्णस्य गर्भजगतोऽतिभरावसन्नपार्ष्णिप्रहारपरिरुग्णफणातपत्रम् ।
दृष्ट्वाऽहिराजमुपसेदुरमुष्य पत्न्य आर्ताः श्लथद्वसनभूषणकेशबन्धाः ॥ ३१ ॥
तं ता विपन्नमनसोऽथ पुरस्कृतार्हाः कायं निधाय भुवि भूतपतिं प्रणेमुः ।
साध्व्यः कृताञ्जलिपुटाः परमस्य भर्तुर्मोक्षेच्छवः शरणदं शरणं प्रपन्नाः ॥ ३२ ॥

-नागपत्न्य ऊचुः

न्याय्यो हि दण्डः कृतकिल्बिषेऽस्मिन् तवावतारः खलनिग्रहाय ।
रिपोः सुतानामपि तुल्यदृष्टेः धत्से दमं फलमेवानुशंस्यम्[६] ॥ ३३ ॥
अनुग्रहोऽयं भवता कृतो हि नो दण्डो[७]ऽसतां ते खलु कल्मषापहः ।
यद् दन्दशूकत्वममुष्य देहिनः क्रोधोऽपि तेऽनुग्रह एव सम्मतः ॥ ३४ ॥

---

१. उद्यतमवेत्य ❋ २. भगवतोद्बणमाशु ❋ ३. भगवान् स पुमान् पुराणः ❋
४. ....फणासहस्रः ❋ ५. भुग्नगात्रः ❋ ६. आनृशंस्यम् ❋/आनुशंस्यम् ❋
७. भवता कृतो हि दण्डः ❋

तपः सुतप्तं किमनेन पूर्वं निरस्तमानेन च मानदेन ।
कस्यानुभावोऽस्य न देव विद्महे तवाङ्घ्रिरेणुस्पर्शाधिकारः ॥ ३५ ॥

यद्वाञ्छया श्रीरमला[१]ऽचरत् तपो विहाय कामान् सुचिरं धृतव्रता ॥ ३६ ॥

न नाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा वाञ्छन्ति यत्पादरजःप्रपन्नाः[२] ॥३७ ॥

तदीशनाथाप दुरापमन्यैः तमोजनिः क्रोधवशोऽप्यनीशः ।
संसारचक्रे भ्रमतः शरीरिणो यदीप्सितं स्याद्धि भवत्समक्षम् ॥ ३८ ॥

नमस्तुभ्यं भगवते पुरुषाय महात्मने । भूतावासाय भूताय पराय परमात्मने ॥ ३९ ॥

ज्ञानविज्ञाननिधये ब्रह्मणेऽनन्तशक्तये । अगुणायाविकाराय नमस्तेऽप्राकृताय च ॥ ४० ॥

कालाय कालनाभाय कालावयवसाक्षिणे । विश्वाय तदुपद्रष्ट्रे तत्कर्त्रे विश्वहेतवे ॥ ४१ ॥

भूतमात्रेन्द्रियप्राणमनोबुद्ध्याशयात्मने । निर्गुणेनाभिमानेन गूढस्वात्मानुभूतये ॥ ४२ ॥

नमोऽनन्ताय सूक्ष्माय कूटस्थाय विपश्चिते । नानावादानुरोधाय वाच्यवाचकशक्तये ॥ ४३ ॥

नमः प्रमाणमूलाय कवये शास्त्रयोनये । प्रवृत्ताय निवृत्ताय निगमाय नमो नमः ॥ ४४ ॥

नमः कृष्णाय रामाय वसुदेवसुताय च । प्रद्युम्नायानिरुद्धाय सात्वतां पतये नमः ॥ ४५ ॥

नमो गुणप्रदीपाय गुणात्मस्थोदयाय च । गुणप्रत्युपलक्ष्याय[३] गुणद्रष्ट्रे स्वसंविदे ॥ ४६ ॥

अव्याहतविहाराय सर्वव्याहतसिद्धये । हृषीकेश नमस्तेऽस्तु मुनये मौनशालिने ॥ ४७ ॥

परावरगतिज्ञाय सर्वाध्यक्षाय ते नमः । अविश्वाय च विश्वाय तद्द्रष्ट्रे तस्य हेतवे[४] ॥ ४८ ॥

त्वं ह्यस्य जन्मस्थितिसंयमान् विभो गुणैरनीहोऽकृतकालशक्तिधृक् ।
तस्मात् स्वभावात् प्रतिबोधयस्व नः समीक्षयाऽमोघविहार ईहसे[५] ॥ ४९ ॥

तस्यैव तेऽमूस्तनवस्त्रिलोक्यां शान्ता अशान्ता उत मूढयोनयः ।
शान्ताः प्रियास्ते ह्यधुनाऽवितुः सतां स्थातुश्च ते कर्मपरीप्सयेहतः ॥ ५० ॥

अपराधः सकृद् भर्त्रा[६] सोढव्यः स्वप्रजाकृतः । क्षन्तुमर्हसि शान्तात्मन् मूढस्य त्वामजानतः ॥ ५१ ॥

---

१. श्रीर्ललना २. त्वत्पादरजःप्रपन्नाः ३. गुणवृत्त्युपलक्ष्याय ❋ ४. विश्वहेतवे ❋
५. ईयसे ❋ ६. भर्तः ❋

अनुगृह्णीष्व भगवन् प्राणांस्त्यजति पन्नगः । स्त्रीणां नः साधुशोच्यानां पतिप्राणः[१] प्रदीयताम् ॥
विधेहि ते किङ्करीणामनुष्ठेयं तवाज्ञया । यच्छ्रद्धयाऽनुतिष्ठन् वै मुच्यते स पुमान् भयात् ॥ ५३ ॥

श्रीशुक उवाच

इत्थं स नागपत्नीभिर्भगवान् समभिष्टुतः । मूर्च्छितं भुग्नशिरसं[२] विससर्जाङ्घ्रिकुट्टनैः ॥ ५४ ॥
प्रतिलब्धेन्द्रियप्राणः कालियः शनकैर्हरिम् । कृच्छ्रात् समुच्छ्वसन् दीनः कृष्णं प्राह कृताञ्जलिः ॥
वयं खलाः सहोत्पत्त्या तामसा दीर्घमन्यवः । स्वभावो दुस्त्यजो नाथ भूतानां यदसद्ग्रहः ॥ ५६ ॥
त्वया सृष्टमिदं विश्वं धातुर्गुणविसर्जनम् । नानास्वभाववीर्यौजोयोनिबीजाशयाकृति ॥ ५७ ॥
वयं च तत्र भगवन् सर्पा जात्युरुमन्यवः[३] । कथं त्यजामस्त्वन्मायां दुस्त्यजां मोहिताः प्रभो ॥ ५८ ॥
भवान् हि कारणं तत्र सर्वज्ञ जगदीश्वर । अनुग्रहं निग्रहं वा मन्यसे तद् विधेहि नः ॥ ५९ ॥

श्रीशुक उवाच

इत्याकर्ण्य वचः प्राह भगवान् कार्यमानुषः । नात्र स्थेयं त्वया सर्प समुद्रं याहि माचिरम् ॥ ६० ॥
सज्ञात्यपत्यदाराद्यैर्गोनृभिर्भुज्यते[४] नदी । य एतत् संस्मरेन्मर्त्यस्तुभ्यं मदनुशासनम् ॥ ६१ ॥
कीर्तयन्नुभयोः[५] सन्ध्योर्न युष्मद्भयमाप्नुयात् । योऽस्मिन् स्नात्वा ममाक्रीडे देवादींस्तर्पयेज्जलैः ॥
उपोष्य मां स्मरन्नर्चेत् सर्वपापैः प्रमुच्यते । द्वीपं रमणकं हित्वा ह्रदमेतमुपाश्रितः ॥ ६३ ॥
यद्भयात् स सुपर्णस्त्वां नाद्यान्मत्पादलाञ्छनम् । एवमुक्तो भगवता कृष्णेनाद्भुतकर्मणा ॥ ६४ ॥
तं पूजयामास मुदा नागपत्न्यश्च सादरम् । दिव्याम्बरस्रङ्मणिभिः परार्घ्यैरपि भूषणैः ॥ ६५ ॥
दिव्यगन्धानुलेपैश्च महत्योत्पलमालया । पूजयित्वा जगन्नाथं प्रसाद्य गरुडध्वजम् ॥ ६६ ॥
नागराजोऽभ्यनुज्ञातः परिक्रम्य प्रणम्य च । सकलत्रसुहृत्पुत्रो द्वीपमब्धेर्जगाम ह ॥ ६७ ॥
तदैव साऽमृतजला यमुना निर्विषाऽभवत् । अनुग्रहाद् भगवतः क्रीडामनुजरूपिणः ॥ ६८ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे चतुर्दशोऽध्यायः ॥**

---

राजोवाच

नागालयं रमणकं कस्मात् तत्याज कालियः । कृतं हि वा सुपर्णस्य तेनैकेनासमञ्जसम् ॥ १ ॥

---

१. पतिः प्राणः  २. भग्नशिरसम् ❋  ३. सर्पजात्योरुमन्यवः ❋  ४. .....दाराद्य....
५. कीर्तयंस्तूभयोः ❋

**श्रीशुक उवाच**

उपहार्यैः सर्पजनैर्मासि मासीह यो बलिः । वानस्पत्यो महाबाहो नागानां प्राङ् निरूपितः ॥ २ ॥
स्वं स्वं भागं प्रयच्छन्ति नागाः पर्वणि पर्वणि । गोपीथायात्मनः सर्वे सुपर्णाय महात्मने ॥ ३ ॥
विषवीर्यमदाविष्टः काद्रवेयस्तु काळियः । कदर्थीकृत्य गरुडं स्वयं तां बुभुजे[१] बलिम् ॥ ४ ॥
तच्छ्रुत्वा कुपितो राजन् भगवान् भगवत्प्रियः । विजिघांसुर्महावीर्यः[२] काळियं समुपाद्रवत् ॥ ५ ॥

तमापतन्तं तरसा विषायुधः प्रत्यभ्ययादुद्धृतनैकमस्तकः ।
दद्भिः सुपर्णं व्यदशद् ददायुधः कराळजिह्वोच्छ्वसितोग्रलोचनः ॥ ६ ॥
तं तार्क्ष्यपुत्रः स निरस्य मन्युमान् प्रचण्डवेगो मधुसूदनासनः ।
पक्षेण सव्येन हिरण्यरोचिषा जघान कद्रोः सुतमुग्रविक्रमः ॥ ७ ॥

सुपर्णपक्षाभिहतः काळियोऽतीवविह्वलः । ह्रदं विवेश काळिन्द्यास्तदगम्यं दुरासदम् ॥ ८ ॥
तत्रैकदा जलचरं गरुडो भक्ष्यमीप्सितम् । निवारितः सौभरिणा प्रसँह्य क्षुधितोऽहरत् ॥ ९ ॥
मीनान् सुदुःखितान् दृष्ट्वा दीनान् मीनपतौ हते । कृपया सौभरिः प्राह तत्र तत्क्षेममाचरन् ॥ १० ॥
अत्र प्रविश्य गरुडो यदि मत्स्यान् स खादति । सद्यः प्राणैर्वियुज्येत सत्यमेतद् ब्रवीम्यहम् ॥ ११ ॥
तत् काळियः परं वेद नान्यः कश्चित् स लेलिहा । अवात्सीद् गरुडाद् भीतः कृष्णेन च विवासितः ॥
कृष्णं ह्रदाद् विनिष्क्रान्तं दिव्यस्रग्गन्धवाससम्[३] । महामणिगणाकीर्णं जाम्बूनदपरिष्कृतम् ॥ १३ ॥
उपलभ्योत्थिताः सर्वे लब्धप्राणा इव प्रजाः । प्रमोदनिभृतात्मानो गोपाः प्रीत्याऽभिरेभिरे ॥ १४ ॥
यशोदा रोहिणी नन्दो गोपा गोप्यश्च कौरव । कृष्णं समेत्य लब्धेहा आसँल्लब्धमनोरथाः ॥ १५ ॥
रामश्चाच्युतमालिङ्ग्य जहासास्यानुभाववित् । नरा गावो वृषा वत्सा लेभिरे परमां मुदम् ॥ १६ ॥
नन्दं विप्राः समागम्य गुरवः सकळत्रकाः । ऊचुस्ते काळियग्रस्तो दिष्ट्या मुक्तस्तवात्मजः ॥ १७ ॥
यशोदा च महाभागा नष्टलब्धप्रजा सती । परिष्वज्याङ्कमारोप्य मुमोचाश्रुकणान् बहून् ॥ १८ ॥
*ततश्चास्तंगते भानौ कृष्णो वासमकल्पयत् । सरामः सहगोपालैर्मात्रा पित्रा सगोधनैः ॥ १९ ॥
तां रात्रिं तत्र राजेन्द्र क्षुत्तृड्भ्यां श्रमकर्शिताः । ऊषुर्व्रजौकसो गावः काळिन्द्या उपकूलतः ॥ २० ॥
एतस्मिन्नेव काले तु व्रजे कौरवसत्तम । घोरः शुचिबलोद्भूतो दवाग्निः[४] सर्वतो वृतः ।
सुप्तान् निशीथ आवृत्य प्रदग्धुमुपचक्रमे ॥ २१ ॥

---

१. तं बुभुजे ❋ २. महावीर्यम् ३. स्रग्गन्धमण्डितम् * अयं श्लोकः प्राचीनकोशेषु नास्ति ।
४. दावाग्निः

तत उत्थाय सम्भ्रान्ता दह्यमाना व्रजौकसः । कृष्णं ययुस्ते शरणं मायामनुजमीश्वरम् ॥ २२ ॥
कृष्णकृष्ण महाभाग हे रामामितविक्रम । एष घोरतमो वह्निस्तावकान् ग्रसते हि नः ॥ २३ ॥
सुदुस्तरात् स्वान् नः पाहि कालाग्नेः सुहृदः प्रभो । न शक्नुमस्त्वच्चरणं सन्त्यक्तुमकुतोभयम् ॥
इत्थं स्वजनवैक्लब्यं निरीक्ष्य जगदीश्वरः । तमग्निमपिबत् तीव्रमनन्तोऽनन्तशक्तिधृक् ॥ २५ ॥
अथ कृष्णः परिवृतो ज्ञातिभिर्मुदितात्मभिः । अनुगीयमानो न्यविशद् व्रजं गोकुलमण्डितम् ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे पञ्चदशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

व्रजे विक्रीडतोरेवं गोपालच्छद्मरूपिणोः । ग्रीष्मो नामर्तुरभवन्नातिप्रेयान् शरीरिणाम् ॥ १ ॥
स च वृन्दावनगुणैर्वसन्त इव लक्षितः । यत्रास्ते भगवान् साक्षाद् रामेण सह केशवः ॥ २ ॥
यत्र निर्झरनिर्ह्रादनिवृत्तस्वनझिल्लिकम् । शश्वत् तच्छीकरैर्जुष्टं द्रुमपिप्पलमण्डितम्[१] ॥ ३ ॥

सरित्सरःप्रस्रवणोर्मिवायुना कह्लारकञ्जोत्पलरेणुहारिणा ।
न विद्यते यत्र वनौकसां दवो निदाघवह्न्यर्कभवोऽतिशाद्वले[२] ॥ ४ ॥
अगाधतोयह्रदिनीतटोर्मिभिर्द्रवत्पुरीष्याः पुलिनैः समन्ततः ।
न यत्र चण्डांशुकरा विषोल्बणा भुवो रसं शाद्वलितं[३] निगृह्णते ॥ ५ ॥

श्रीमद् वनं कुसुमितं[४] नदच्चित्रमृगद्विजम् । गायन्मयूरभ्रमरं कूजत्कोकिलसारसम् ॥ ६ ॥
क्रीडिष्यमाणस्तत् कृष्णो भगवान् बलसंयुतः । वेणुं विरणयन् गोपैर्गोधनैः संवृतोऽविशत् ॥ ७ ॥
प्रवाळबर्हस्तबकस्रग्धातुकृतभूषणाः । रामकृष्णादयो गोपा ननृतुर्युयुधुर्जगुः ॥ ८ ॥
कृष्णस्य नृत्यतः केचिज्जगुः केचिदवादयन् । वेणुं पाणितळैः शृङ्गैः प्रशशंसुरथापरे ॥ ९ ॥
गोपजातिप्रतिच्छन्ना देवा गोपालरूपिणः । ईडिरे कृष्णरामौ च नटा इव नटं नृप ॥ १० ॥
भ्रामणैर्लङ्घनैः क्षेपैरास्फोटनविकर्षणैः । चिक्रीडतुर्नियुद्धेन काकपक्षधरावुभौ ॥ ११ ॥
क्वचिन्नृत्यत्सु चान्येषु गायकौ वादकौ स्वयम् । शशंसतुर्महाराज साधुसाध्विति वादिनौ ॥ १२ ॥
क्वचिद् बिल्वैः क्वचित् कुम्भैः क्वचामलकशुक्तिभिः[५] । अस्पृश्यनेत्रबन्धाद्यैः क्वचिन्मृगखगेहया ॥

---

१. तच्छीकारैर्जोषद् द्रुम... ❃ २. अतिषाड्वले ❃ ३. षाड्वलितम् ❃
४. वनं कुसुमितं श्रीमत् ❃ ५. क्वचामलकमुष्टिभिः ❃

क्वचिच्च दर्दुरप्लावैर्विविधैरुपगायकैः[१]। क्वचित् करान्दोळिकया[२] कर्हिचिन्नृपचेष्टया ॥ १४ ॥
एवं तौ लोकसिद्धाभिः क्रीडाभिश्चेरतुर्वने। नद्यद्रिद्रोणिकुञ्जेषु पुळिनेषु[३] सरस्सु च ॥ १५ ॥
पशूंश्चारयतोर्गोपैस्तद्वने कृष्णरामयोः। गोपरूपी प्रलम्बोऽगादसुरस्तज्जिघांसया ॥ १६ ॥
तं विद्वानपि दाशार्हो भगवान् सर्वदर्शनः। अन्वमोदत तत्सख्यं वधं तस्य विचिन्तयन् ॥ १७ ॥
तत्रोपाहूय गोपालान् कृष्णः प्राह विहारवित्। हे गोपा विहरिष्यामो द्वन्द्वीभूय यथायथम्[४] ॥ १८ ॥
तत्र चक्रुः परिवृढौ गोपा रामजनार्दनौ। कृष्णसङ्घट्टिनः केचिद् गोपा रामस्य चापरे ॥ १९ ॥
आचेरुर्विविधाः क्रीडा वाह्यवाहकलक्षणाः। तत्रारोहन्ति जेतारो वहन्ति च पराजिताः ॥ २० ॥
वहन्तो वाह्यमानाश्च चारयन्तश्च गोधनम्। भाण्डीरकं नाम वटं जग्मुः कृष्णपुरोगमाः ॥ २१ ॥
रामसङ्घट्टिनो ये तु[५] श्रीदामवृषभादयः। क्रीडायां जयिनस्तांस्तानूहुः कृष्णादयो नृप ॥ २२ ॥
उवाह कृष्णो भगवान् श्रीदामानं पराजितः। वृषभं भद्रसेनस्तु प्रलम्बो रोहिणीसुतम् ॥ २३ ॥
अविषँह्यं मन्यमानः कृष्णं दानवपुङ्गवः। वहन् द्रुततरं प्रागादवरोहणतः परम्[६] ॥ २४ ॥

तमुद्वहन् धरणिधरेन्द्रगौरवं महासुरो विगतरयो निजं वपुः।
स आस्थितः पुरटपरिच्छदो बभौ तटिद्द्युमानुडुपतिमानिवाम्बुदः ॥ २५ ॥
निरीक्ष्य तद्वपुरलमम्बरेचरं प्रदीप्तदृग् भ्रूकुटितटोग्रदंष्ट्रकम्।
ज्वलच्छिखं कटककिरीटकुण्डलत्विषाऽद्भुतं हलधर ईषदत्रसत् ॥ २६ ॥
अथागतस्मृतिरभयो रिपुं बलो विहायसोर्ध्वं च हरन्तमात्मनः।
रुषाऽहनच्छिरसि दृढेन मुष्टिना सुराधिपो गिरिमिव वज्ररंहसा ॥ २७ ॥
स आहतः सपदि विशीर्णशीर्षको[७] मुखाद् वमन् रुधिरमपस्मृतोऽसुरः।
महारवं व्यसुरपतत् समीरयन् गिरिर्यथा मघवत आयुधाहतः ॥ २८ ॥

दृष्ट्वा प्रलम्बं निहतं बलेन बलशालिना। गोपाः सुविस्मिता आसन् साधुसाध्विति राविणः ॥ २९ ॥
आशिषोऽभिगृणन्तस्ते प्रशशंसुस्तदर्हणम्। प्रेत्यागतमिवालिङ्ग्य प्रेमविह्वलचेतसः ॥ ३० ॥
पापे प्रलम्बे निहते देवाः परमनिर्वृताः। अभ्यवर्षन् बलं माल्यैः शशंसुः साधुसाध्विति ॥ ३१ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे षोडशोऽध्यायः ॥**

---

१. उपहासकैः　२. तथान्दोलिकया　३. काननेषु ✻　४. यथा यथा ✻
५. ये हि ✻　६. अवरोहणतत्परम् ✻　७. विशीर्णशीर्षः ✻

**श्रीशुक उवाच**

क्रीडासक्तेषु गोपेषु तद्गावो दूरचारिणीः । स्वैरं चरन्त्यो विविशुस्तृणलोभेन गह्वरम् ॥ १ ॥

अजा गावो महिष्यश्च निविशन्त्यो[1] वनाद् वनम् । मुञ्जाटवीं निविविशुः[2] क्रन्दन्त्यो दावतर्षिताः ॥

तेऽपश्यन्तः पशून् गोपाः कृष्णरामादयस्तदा । जातानुतापा न विदुर्विचिन्वन्तो गवां गतिम्[3] ॥

तृणैस्तत्खुरदच्छिन्नैर्गोष्पदैरङ्कितैर्गवाम् । मार्गमन्वगमन् सर्वे नष्टजीवा विचेतसः ॥ ४ ॥

मुञ्जाटव्यां भ्रष्टमार्गं क्रन्दमानं स्वगोधनम् । अप्राप्य तृषिताः श्रान्तास्ततस्ते सन्न्यवर्तयन् ॥ ५ ॥

ता आहूता भगवता मेघगम्भीरया गिरा । स्वनाम्ना निनदं श्रुत्वा प्रतिनेदुः प्रहर्षिताः ॥ ६ ॥

ततः समन्ताद् वनधूमकेतुर्यदृच्छयाऽभूत् क्षयकृद् वनौकसाम् ।
समीरितः सारथिनोद्बणोल्मुकैर्विलेलिहानः स्थिरजङ्गमान् महान् ॥ ७ ॥

तमापतन्तं परितो दवाग्निं गोपाश्च गावः[4] प्रसमीक्ष्य भीताः ।
ऊचुः स्म कृष्णं सबलं प्रपन्ना यथा हरिं मृत्युभयार्दिता जनाः[5] ॥ ८ ॥

कृष्णकृष्ण महावीर्य हे रामामोघविक्रम । दवाग्निना दह्यमानान् प्रपन्नांस्त्रातुमर्हथः ॥ ९ ॥

नूनं त्वद्बान्धवाः कृष्ण न चार्हन्त्यवसीदितुम्[6] । वयं हि सर्वधर्मज्ञ त्वन्नाथास्त्वत्परायणाः॥ १० ॥

**श्रीशुक उवाच**

वचो निशम्य कृपणं बन्धूनां भगवान् हरिः । निमीलयत मा भैष्ट लोचनानीत्यभाषत ॥ ११ ॥

तथेति मीलिताक्षेषु भगवानग्निमुद्बणम् । पीत्वा मुखेन तान् कृच्छ्राद् योगाधीशो व्यमोचयत् ॥

ततश्च तेऽक्षीण्युन्मील्य पुनर्भाण्डीरमाश्रिताः । निशाम्य विस्मिता आसन्नात्मानं गाश्च मोचिताः ॥

कृष्णस्य योगवीर्यं तद् योगमायानुभावितम् । दवाग्नेरात्मनः क्षेमं वीक्ष्य ते मेनिरेऽमरम् ॥ १४ ॥

गाः सन्निवर्त्य सायाह्ने सहरामो जनार्दनः । वेणुं विरणयन् गोष्ठमगाद् गोपैरभिष्टुतः ॥ १५ ॥

गोपीनां परमानन्द आसीद् गोविन्ददर्शने । क्षणं यथा युगशतं यासां येन विनाऽभवत् ॥ १६ ॥

तयोस्तदद्भुतं कर्म दवाग्नेर्मोक्षमात्मनः । गोपाः स्त्रीभ्यः समाचख्युः प्रलम्बवधमेव च ॥ १७ ॥

गोपवृद्धाश्च गोप्यश्च तदुपाकर्ण्य विस्मिताः । मेनिरे देवप्रवरौ कृष्णरामौ व्रजं गतौ ॥ १८ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे सप्तदशोऽध्यायः ॥**

---

१. निर्विशन्त्यः ❋ २. निर्विविशुः ३. गवां पदम् ❋
४. गोपाः सगावः ❋ ५. मृत्युभयार्दितो जनः ❋ ६. अवसादितुम् ❋

**श्रीशुक उवाच**

ततः प्रावर्तत प्रावृट् सर्वसत्वसमुद्भवा । विद्योतमानपरिधिर्विस्फूर्जितनभःस्थला ॥ १ ॥
सान्द्रनीलाम्बुदैर्व्योम सविद्युत्स्तनयित्नुभिः । अस्पष्टज्योतिराच्छन्नं ब्रह्मेव सगुणं बभौ ॥ २ ॥
अष्टौ मासान् निपीतं यद् भूम्यामुदमयं वसु । स्वगोभिर्मोक्तुमारेभे पर्जन्यः काल आगते ॥ ३ ॥
तडित्वन्तो[१] महामेघाश्चण्डश्वसनवेपिताः । प्राणिनां जीवनं ह्यम्बु मुमुचुः करुणा इव ॥ ४ ॥
तपःकृशा देवमीढा आसीद् वर्षीयसी मही । यथैव काम्यतपसस्तनुः सम्प्राप्य तत्फलम् ॥ ५ ॥
निशामुखेषु खद्योतास्तमसा भान्ति न ग्रहाः । यथा पापेन पाषण्डा[२] न हि वेदाः कलौ युगे॥ ६ ॥
श्रुत्वा पर्जन्यनिनदं मण्डूका व्यसृजन् गिरः । तूर्ष्णीं शयानाः प्राग् यद्वद् ब्राह्मणा नियमात्यये ॥
आसन्नुत्पथवाहिन्यः क्षुद्रनद्योऽनु शुष्यतीः । पुंसो यथाऽस्वतन्त्रस्य देहो द्रविणसम्पदा ॥ ८ ॥
हरिता हरिभिः शष्पैरिन्द्रगोपैश्च लोहिताः । उच्छिलीन्ध्रकृतच्छाया नृणां श्रीरिव भूरभूत् ॥ ९ ॥
क्षेत्राणि सस्यसम्पद्भिः कर्षकाणां मुदं ददुः । मानिनामनुतापं वा विपत्तिं तदजानताम् ॥ १० ॥
जलस्थलौकसः सर्वे नववारिनिषेवया । अबिभ्रन् रुचिरं रूपं यथा हरिनिषेवया ॥ ११ ॥
सरिद्भिः सङ्गतः सिन्धुश्चुक्षोभ श्वसनोर्मिमान् । अपक्वयोगिनश्चित्तं कामार्तं गुणयुग् यथा ॥ १२ ॥
गिरयो वर्षधाराभिर्हन्यमाना न विव्यथुः । अभिभूयमाना व्यसनैर्यथाऽधोक्षजचेतसः ॥ १३ ॥
मार्गा बभूवुः सन्दिग्धास्तृणैश्छन्ना असंश्रिताः । नाभ्यस्यमानाः श्रुतयो द्विजैः कालहता इव ॥ १४ ॥
लोकबन्धुषु मेघेषु विद्युतश्चलसौहृदाः । स्थैर्यं न चक्रुः कामिन्यः पुरुषेषु गुणिष्विव ॥ १५ ॥
धनुर्वियति माहेन्द्रं निर्गुणं च गुणिन्यभात् । व्यक्ते गुणव्यतिकरेऽगुणवान् पुरुषो यथा ॥ १६ ॥
न रराजोडुपश्छन्नः स्वज्योत्स्नाराजितैर्घनैः । अहंमत्या भासितया स्वभासा पुरुषो यथा ॥ १७ ॥
मेघागमोत्सवा[३] हृष्टाः प्रत्यनन्दन् शिखण्डिनः । गृहेषु तप्ता निर्विण्णा यथाऽच्युतजनागमे ॥ १८ ॥
पीत्वाऽपः पादपाः पद्भिरासन् नम्रात्ममूर्तयः । प्राक् क्षामास्तपसा श्रान्ता यथा कामानुसेवया ॥
सरस्स्वशान्तरोधस्सु ह्यूषुरङ्गापि सारसाः । गृहेष्वशान्तकृत्येषु ग्राम्या इव दुराशयाः ॥ २० ॥
जलौघैर्निरभिद्यन्त सेतवो वर्षतीश्वरे । पाखण्डवामशैवाद्यैर्वेदमार्गाः[४] कलौ युगे ॥ २१ ॥
व्यमुञ्चन् वायुभिर्नुन्ना भूतेभ्यो ह्यमृतं घनाः । यथा विशो विट्पतयः[५] कालेकाले द्विजेरिताः ॥

१. तटित्वन्तः ❋ २. पाखण्डा इति सर्वत्रार्वाचीनकोशेषु । ३. मेघागमोत्सवे
४. पाषण्ड.... ❋ ५. विश्पतयः ❋

एवं वनं तद् वर्षिष्ठं पक्वखर्जूरजम्बुमत् । गोगोपालैर्वृतो रन्तुं सबलः प्राविशद् हरिः ॥ २३ ॥
धेनवो मन्दगामिन्य ऊधोभारेण भूयसा । ययुर्भगवताऽऽहूता द्रुतं प्रीताः[१] स्नुतस्तनीः ॥ २४ ॥
वनौकसः प्रमुदिता वनराजीर्मधुश्च्युतः । गिरेर्गम्भीरसन्नादसन्नादा ददृशुर्गुहाः ॥ २५ ॥
क्वचिद् वनस्पतिक्रोडे गुहायां चाभिवर्षति । निर्विशन् भगवान् रेमे कन्दमूलफलाशनैः ॥ २६ ॥
दध्योदनमुपानीतं शिलायां सलिलान्तिके । सम्भोजनीयैर्बुभुजे गोपैः सङ्कर्षणान्वितः ॥ २७ ॥
शाद्वलोपरि[२] संविश्य चर्वतो मीलितेक्षणान्[३] । तृप्तान् वृषान् वत्सतरान् गाश्च स्वोधोभरश्रमाः ॥
प्रावृट्श्रियं च तां वीक्ष्य सर्वभूतमुदावहाम् । भगवान् पूजयाञ्चक्रे आत्मशक्त्युपबृंहिताम् ॥ २९ ॥
एवं निवसतोस्तत्र रामकेशवयोर्व्रजे । शरत् समभवद् व्यभ्रा स्वच्छाम्बुष्ुषितानिला ॥ ३० ॥
शारद्या नीरजोत्पत्त्या नीराणि प्रकृतिं ययुः । भ्रष्टानामिव चेतांसि पुनर्योगनिषेवया ॥ ३१ ॥
व्योम्नोऽब्दमभ्रशाबल्यं[४] भुवः पङ्कमपां मलम् । शरज्जहाराश्रमिणां कृष्णभक्तिर्यथाऽशुभम्॥ ३२ ॥
सर्वस्वं जलदा हित्वा विरेजुः शुभ्रवर्चसः । यथा त्यक्तैषणाः शान्ता मुनयो मुक्तकल्मषाः॥ ३३ ॥
गिरयो मुमुचुस्तोयं क्वचिन्न मुमुचुः शिवम् । यथा ज्ञानामृतं काले ज्ञानिनो ददते न वा ॥ ३४ ॥
नैवाविदन् क्षीयमाणं जलं गाधजलेचराः । यथाऽऽयुरन्वहं क्षय्यं नरा मूढाः कुटुम्बिनः[५] ॥ ३५ ॥
गाधवारिचरास्तापमविन्दन् शरदर्कजम् । यथा दरिद्रः कृपणः कुटुम्ब्यविजितेन्द्रियः ॥ ३६ ॥
शनैश्शनैर्जहुः पङ्कं स्थलान्यामसंश्च वीरुधः । यथाऽहम्ममतां धीराः शरीरादिष्वनात्मसु ॥ ३७ ॥
निश्चलाम्बुरभूत् तूष्णीं समुद्रः शरदागमे । आत्मन्युपरते यद्वन्मुनिर्व्युपरतागमः[६] ॥ ३८ ॥
केदारेभ्यस्त्वपोऽगृह्णन् कर्षका दृढसेतुभिः । यथा प्राणैः स्वविज्ञानं तन्निरोधेन योगिनः ॥ ३९ ॥
शरदर्कांशुजं तापं भूतानामुडुपोऽहरत् । देहाभिमानजं बोधो मुकुन्दो व्रजयोषिताम् ॥ ४० ॥
खमशोभत निर्मेघं शरद्विमलतारकम् । सत्त्वयुक्तं यथा चित्तं शब्दब्रह्मार्थदर्शनम् ॥ ४१ ॥
अखण्डमण्डलं[७] व्योम्नि रराजोडुगणैः शशी । यथा यदुपतिः कृष्णो वृष्णिचक्रावृतो भुवि॥ ४२ ॥
आश्लिष्य समशीतोष्णं प्रसूनवनमारुतम् । जनास्तापं जहुर्गोप्यो न कृष्णाहृतचेतसः ॥ ४३ ॥
गावो मृगाः खगा नार्यः पुष्पिण्यः शरदाऽभवन् । अन्वीयमाना ऋषभैः[८] फलैरीषत्क्रिया इव ॥

१. प्रीत्या २. शाड्वलोपरि ❋३. सर्वतो मीलितेक्षणान् ❋ ४. शाबल्यम् ❋ ५ कुडुम्बिनः ❋ ६. मुनिर्ह्युपरतागमः ❋ ७. अखण्डमण्डलः ❋ ८. वृषभैः ❋

उदहृष्यन् वारिजानि सूर्येण कुमुदं विना । राज्ञा तु निर्भयो लोको यथा दस्यून् विना नृप ।। ४५ ।।
पुरग्रामेष्वाश्रमिणामिन्द्रयागमहोत्सवैः । बभौ भूः पक्वसस्याढ्या कलाभ्यां नितरां हरेः ।। ४६ ।।
वणिजो नगरात् स्वीयान्निर्गत्यार्थान्[1] प्रपेदिरे । वर्षरुद्धा यथा सिद्धाः स्वपिण्डान् काल आगते ।।

**।। इति श्रीमद्भागवते दशमस्कन्धे अष्टादशोऽध्यायः ।।**

---

**श्रीशुक उवाच**

इत्थं शरत्स्वच्छजलं पद्माकरसुगन्धिना । न्यविशद् वायुना वीतं सगोगोपालकोऽच्युतः ।। १ ।।
कुसुमितवनराजि शुष्मिभृङ्गद्विजकुलघुष्टसरस्सरिन्महीध्रम् ।
मधुपतिरवगाह्य चारयन् गाः सहपशुपालबलश्चुकूज वेणुम् ।। २ ।।
तद् व्रजस्त्रिय आश्रुत्य वेणुगीतं महोदयम् । काश्चित् परोक्षं कृष्णस्य स्वसखीभ्यो न्यवेदयन्[2] ।। ३ ।।
तद् वर्णयितुमारब्धाः स्मरन्त्यः कृष्णचेष्टितम् । नाशकन् स्मरवेगेन विक्षिप्तमनसो नृप ।। ४ ।।
बर्हापीडं नटवरवपुः कर्णयोः कर्णिकारं बिभ्रद् वासः कनककपिशं वैजयन्तीं च मालाम् ।
रन्ध्रान् वेणोरधरसुधया पूरयन् गोपवृन्दैर्वृन्दारण्यं स्वपदरमणं प्राविशद् गीतकीर्तिः ।। ५ ।।
बर्हापिच्छो[3] वनचरवपुः कर्णयोः कर्णिकारः सव्ये बाहौ निहितवदनः सव्यमन्यत्र हस्ते ।
भ्रूविन्यासाङ्गुलिभि रणयन् गापयन्[4] गोपवृन्दान् भूतग्रामं तर्हि रमयन् ब्रह्म गान्धर्वमेव ।। ६ ।।
इति वेणुरवं राजन् सर्वभूतमनोहरम् । श्रुत्वा व्रजस्त्रियः सर्वा वर्णयन्त्योऽभिरेभिरे ।। ७ ।।

**गोप्य ऊचुः**

अक्षण्वतां फलमिदं न परं विदामः सख्यः पशूनभिनिवेशयतोर्वयस्यैः[5] ।
वक्त्रं व्रजेशसुतयोरनुवेणु जुष्टं यैर्यैर्निपीतमनुरक्तकटाक्षमोक्षम् ।। ८ ।।
चूतप्रवाळबर्हस्तबकोत्पलाब्जमालानुरक्तपरिधानविचित्रवेषौ ।
मध्ये विरेजतुरलं पशुपालगोष्ठ्यां रङ्गे यथा नटवरौ क्व च गायमानौ ।। ९ ।।
गोप्यः किमाचरदयं कुशलं स्म वेणुर्दामोदराधरसुधासरसाग्र्यगेयम्[6] ।
भुङ्क्ते स्वयं यदवशिष्टरसौघमार्गे हृष्टत्वचोऽश्रु मुमुचुस्तरवः सदर्भाः ।। १० ।।

---

१. निर्गम्यार्थान् * २. व्यवर्णयन् * ३. बर्हापीडाः * ४. गाययन् *
५. अनुनिवेशयतोर्वयस्यैः * ६. दामोदराधररसं सरसाग्र्यगेयम्

वृन्दावनं सखि भुवो वितनोति कीर्तिं यद् देवकीसुतपदाम्बुजलब्धलक्ष्मि ।
गोविन्दवेणुमनु मत्तमयूरनृत्तं[1] प्रेक्ष्याद्रितानुचरितान्यसमस्तसत्वम् ॥ ११ ॥
धन्याः सुमूढमतयोऽपि हरिण्य एता यन्नन्दनन्दनमुपात्तविचित्रवेषम् ।
आपीय वेणुरचितं च सकृष्णसाराः पूजां दधुर्विरचितां प्रणयावलोकैः ॥ १२ ॥
कृष्णं निरीक्ष्य वनितोत्सवरूपसारं श्रुत्वा च तत्क्वणितवेणुविचित्रगीतम् ।
देव्यो विमानगतयः स्मरनुन्नसारा भ्रश्यत्प्रसूनकबरा मुमुहुर्विनीव्यः ॥ १३ ॥
गावश्च कृष्णमुखनिर्गतवेणुगीतपीयूषमुत्तभितकर्णपुटैः पिबन्त्यः ।
सानन्दनम्रतनवः कबलाः[2] स्म तस्थुर्गोविन्दमात्मनि दृशाऽश्रुकणान् स्रवन्त्यः ॥ १४ ॥
प्रायो बताम्ब मुनयो विहगा वनेऽस्मिन् कृष्णेक्षणास्तदुदितं कलवेणुगीतम्।
आरुह्य ये द्रुमभुजान् रुचिरप्रवाळान् शृण्वन्त्यमीलितदृशो[3] विगतान्यवाचः ॥ १५ ॥
नद्यस्तदा तदुपधार्य मुकुन्दगीतमावर्तलक्षितमनोभवभग्नवेगाः ।
आलिङ्गनप्रमुदितोर्मिभुजैर्मुरारेर्गृह्णन्ति पादयुगळं कमलोपहाराः ॥ १६ ॥
दृष्ट्वाऽऽतपे व्रजपशून् सह रामगोपैः सञ्चारयन्तमनु वेणुमुदीरयन्तम् ।
प्रेमप्रवृद्धहृषितः कुसुमावलीभिः सख्युर्व्यधात् स्ववपुषाऽम्बुद आतपत्रम् ॥ १७ ॥
पूर्णाः पुळिन्द्य उरुगायपदाब्जरागश्रीकुङ्कुमेन दयितास्तनमण्डितेन ।
तद्दर्शनस्मररुजस्तृणरूषितेन लिम्पन्त्य आननकुचेषु जहुस्तदाधिम् ॥ १८ ॥
हन्तायमद्रिरबला हरिदासवर्यो यद् रामकृष्णचरणस्पर्शप्रमोदः ।
मानं तनोति सहगोगणयोस्तयोर्यत् पानीयसूयवसकन्दरकन्दमूलैः ॥ १९ ॥
गा गोपकैरनुवनं नयतोरुदारवेणुस्वनैः कळपदैस्तनुभृत्सु सख्यम् ।
अस्पन्दनं गतिमतां पुळकं तरूणां निर्योगपाशकृतलक्षणयोर्विचित्रम् ॥ २० ॥
एवंविधा भगवतो या वृन्दावनचारिणः । वर्णयन्त्यो मिथो गोप्यः क्रीडास्तन्मयतां ययुः ॥ २१ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे एकोनविंशोऽध्यायः ॥**

---

१. मत्तमयूरनृत्यम् २. शावाः सुतस्तनपयःकबलाः/शावस्रुतस्तनपयःकवलाः/शाबस्मृतस्रुतपयःकबळाः ❋
३. शृण्वन्ति मीलितदृशः ❋

श्रीशुक उवाच

हेमन्ते प्रथमे मासि नन्दव्रजकुमारिकाः । चेरुर्हविष्यं भुञ्जानाः कात्यायन्यर्चनव्रतम् ॥ १ ॥

आप्लुत्याम्भसि कालिन्द्या जलान्ते चोदितेऽरुणे । कृत्वा प्रतिकृतिं देवीमानर्चुर्नृप सैकतीम् ॥ २ ॥

गन्धैर्माल्यैः सुरभिभिर्बलिभिर्धूपदीपकैः । उच्चावचैश्चोपचारैः प्रवाळफलतण्डुलैः ॥ ३ ॥

कात्यायनि महामाये महायोगिन्यधीश्वरि । नन्दगोपसुतं देवि पतिं मे कुरु ते नमः ॥ ४ ॥

इति मन्त्रं जपन्त्यस्ताः पूजां चक्रुः कुमारिकाः ॥ ५ ॥

उषस्यभ्येत्य ताः स्वैरमन्योन्याबद्धबाहवः । कृष्णमुच्चैर्जगुर्यान्त्यः कालिन्द्यां स्नातुमन्वहम् ॥ ६ ॥

एवं मासव्रतं चेरुः कुमार्यः कृष्णचेतसः । भद्रकाळीं समानर्चुर्भूयां नन्दसुषा इति ॥ ७ ॥

नदीं[1] कदाचिदागत्य तीरे निक्षिप्य पूर्ववत् । वासांसि कृष्णं गायन्त्यो विजह्रुः सलिले मुदा ॥ ८ ॥

भगवांस्तदभिप्रेत्य कृष्णो योगेश्वरेश्वरः । वयस्यैरागतस्तत्र वृतस्तत्कर्मसिद्धये ॥ ९ ॥

तासां वासांस्युपादाय नीपमारुँह्य सत्वरः । हसद्भिः प्रहसन् बालैः परिहासमुवाच ह ॥ १० ॥

अत्रागत्याबलाः कामं स्वंस्वं वासः प्रगृह्यताम् । सत्यं ब्रवाणि नो नर्म यद् यूयं व्रतकर्शिताः ॥ ११ ॥

न मयोदितपूर्वं वा अनृतं तदिमे विदुः । एकैकशः प्रतीच्छन्तु सहैवोत सुमध्यमाः ॥ १२ ॥

तस्य तत् क्ष्वेळितं श्रुत्वा[2] गोप्यः प्रेमपरिप्लुताः । व्रीळिताः प्रेक्ष्य चान्योन्यं जातहासा न निर्ययुः ॥

एवं ब्रुवति गोविन्दे नर्मणाऽऽक्षिप्तचेतसः । आकण्ठमग्नाः शीतोदे वेपमानास्तमब्रुवन् ॥ १४ ॥

मानयन्त्यो वयं त्वां तु नन्दराजसुतं प्रियम् । जानीमोऽङ्ग व्रजश्लाघ्यं देहि वासांसि वेपिताः ॥ १५ ॥

स्याम सुन्दर ते दास्यः करवाम तवोदितम् । देहि वासांसि धर्मज्ञ वेपितानां महाबल ।

शीतार्दितानां बालानां नो चेद् राज्ञे ब्रुवामहे ॥ १६ ॥

श्रीभगवानुवाच

भवन्त्यो यदि मे दास्यो मयोक्तं वा करिष्यथ । अत्रागत्य स्ववासांसि प्रतीच्छत सुमध्यमाः ।

नो चेन्नाहं प्रदास्ये किं क्रुद्धो राजा करिष्यति ॥ १७ ॥

ततो जलाशयात् सर्वा दारिकाः शीतवेपिताः । पाणिभ्यां योनिमाच्छाद्य प्रोत्तेरुस्तीरमङ्गनाः ॥

भगवानथ ता वीक्ष्य मुग्धभावप्रसादितः । स्कन्धे निधाय वासांसि प्रीतः प्रोवाच सस्मितः ॥ १९ ॥

---

१. नद्याम् *    २. दृष्ट्वा *

यूयं विवस्त्रा यदपो धृतव्रता व्यगाहतैतद् तदु देवहेळनम्[१] ।
बद्ध्वाऽञ्जलिं मूर्ध्न्यपनुत्तयेंऽहसः कृत्वा नमो वो वसनं प्रगृह्यताम् ॥ २० ॥
इत्यच्युतेनाभिहिता व्रजाबला मत्वा विवस्त्राप्लवनं व्रतच्युतिम् ।
तत्पूर्तिकामास्तदशेषकर्मणां साक्षात्कृतं नेमुरवद्यमुज्झितुम् ॥ २१ ॥
[२]तास्तथाऽवनता दृष्ट्वा भगवान् देवकीसुतः । वासांसि ताभ्यः प्रायच्छत् करुणः स्नेहतोषितः ॥
दृढं प्रलब्धास्त्रपया च हापिताः प्रस्तोभिताः क्रीडनवच्च कारिताः ।
वस्त्राणि चैवापहृतान्यथाप्यमुं ता नाभ्यसूयन्[३] प्रियसङ्गनिर्वृताः ॥ २३ ॥
परिधाय स्ववासांसि प्रेष्ठसङ्गमसज्जिताः[४] । गृहीतचित्ता नोचेलुस्तस्मिँल्लज्जेषितेक्षणाः ॥ २४ ॥
तासां विज्ञाय भगवान् स्वपादस्पर्शकाम्यया । धृतव्रतानां सङ्कल्पमाह दामोदरोऽबलाः ॥ २५ ॥
सङ्कल्पो विदितः साध्व्यो भवतीनां मदर्चनें[५] । मयाऽनुमोदितः सोऽसौ सत्यो भवितुमर्हति ॥ २६ ॥
न मय्यावेशितधियां कामः कामाय कल्पते । भर्जिता क्वथिता धाना प्रायो बीजाय नेष्यते ॥ २७ ॥
याताबला व्रजं सिद्धा मयेमा रंस्यथ क्षपाः । यदुद्दिश्य व्रतमिदं चरथार्यार्चनं सतीः[६] ॥ २८ ॥

**श्रीशुक उवाच -**

इत्यादिष्टा भगवता लब्धकामाः कुमारिकाः । ध्यायन्त्यस्तत्पदाम्भोजं कृच्छ्रान्निर्विविशुर्व्रजम्[७] ॥
अथ गोपैः परिवृतो भगवान् देवकीसुतः । वृन्दावनाद् गतो दूरं चारयन् गाः सहाग्रजः ॥ ३० ॥
निदाघार्कातपे तिग्मे[८] छायाभिः स्वाभिरात्मनः । आतपत्रायितान् वीक्ष्य द्रुमानाह व्रजौकसः ॥
हे स्तोभवृष हे अंशो श्रीदामन् सुबलार्जुन । विशालर्षभ तेजस्विन्[९] देवप्रस्थ वरूथप ॥ ३२ ॥
पश्यतैतान् महाभागान् परार्थैकान्तजीविनः । वातवर्षातपहिमान् सहन्तो वारयन्ति नः ॥ ३३ ॥

---

१. देवहेडनम् २. इतः पूर्वं त्रयः श्लोकाः प्रायः प्रक्षिप्ताः केषुचिदेव कोशेषु दृश्यन्ते । तद्यथा- एकेन पाणिना नेमुरेकेनाच्छाद्य चाङ्गनाः । ता वीक्ष्योवाच भगवान् भूयो धर्म्यमिदं वचः । एकेन पाणिना योऽसौ प्रणमेद् देवमच्युतम् । तस्य दण्डः करच्छेद इति धर्मविदो विदुः । तस्मादुभाभ्यां पाणिभ्यां प्रणमेद् स्वामिनं नरः । तथा च यूयं कुरुत तन्नः प्रियतरं भवेत् । - इति । ३. नैवाभ्यसूयन् ४. प्रेष्ठसङ्गमलज्जिताः ❋
५. मदर्चनम् ❋ ६. चेरुरार्यार्चनं सतीः ❋ ७. निविविशुर्व्रजम् ❋
८. निदाघकाले वै तिग्मे ❋ ९. विशालवृषभौजस्विन् ❋

अहो एषां वरं जन्म सर्वप्राण्युपजीवनम् । सुजनस्येव येषां वै विमुखा यान्ति नार्थिनः ॥ ३४ ॥

पत्रपुष्पफलच्छायामूलवल्कलदारुभिः । गन्धनिर्यासभस्मास्थितोक्मैः[१] कामान् वितन्वते ॥ ३५ ॥

एतावज्जन्मसाफल्यं देहिनामिह देहिषु । प्राणैरर्थैर्धिया वाचा श्रेयआचरणं सदा ॥ ३६ ॥

इति प्रवाळस्तबकफलपुष्पदलोत्करैः । तरूणां नम्रशाखानां मध्येन यमुनां गताः[२] ॥ ३७ ॥

तत्र गाः पाययित्वाऽपः सुमृष्टाः शीतळाः शिवाः । ततो नृप स्वयं गोपाः कामं स्वादु पपुर्जलम् ॥

तस्या उपवने कामं चारयन्तः पशून् नृप । कृष्णरामावुपागम्य क्षुधार्ता इदमब्रुवन् ॥ ३९ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे विंशोऽध्यायः ॥**

---

**गोपाः ऊचुः**

रामराम महाबाहो कृष्ण दुष्टनिबर्हण । एषा वै बाधते क्षुन्नस्तच्छान्तिं कर्तुमर्हथः ॥ १ ॥

इति विज्ञापितो गोपैर्भगवान् जगदीश्वरः । भक्ताया विप्रभार्यायाः प्रसीदन्निदमब्रवीत्[३] ॥ २ ॥

प्रयात देवयजनं ब्राह्मणा ब्रह्मवादिनः । सत्रमाङ्गिरसं नाम ह्यासते स्वर्गकाम्यया ॥ ३ ॥

तत्र गत्वौदनं गोपा याचतास्मद्विसर्जिताः । कीर्तयन्तो भगवत आर्यस्य मम चाभिधाम् ॥ ४ ॥

इत्यादिष्टा भगवता गत्वाऽयाचन्त ते तथा । कृताञ्जलिपुटा विप्रान् दण्डवत् पतिता भुवि ॥ ५ ॥

हे भूमिदेवाः शृणुत कृष्णस्यादेशकारिणः । प्राप्तान् जानीत भद्रं वो गोपान् नो रामचोदितान् ॥ ६ ॥

गाश्चारयन्तावविदूर ओदनं रामाच्युतौ वो लषतो बुभुक्षितौ ।
तयोर्द्विजा ओदनमर्थिनोर्यदि श्रद्धा च वो यच्छत धर्मवित्तमाः ॥ ७ ॥

दीक्षायाः पशुसंस्थायाः सौत्रामण्याश्च सत्तमाः । अन्यत्र दीक्षितस्यापि नान्नमश्नन् हि दुष्यति ॥

इति ते भगवद्याश्चां शृण्वन्तोऽपि न शुश्रुवुः । क्षुद्राशा भूरिकर्माणो बालिशा वृद्धमानिनः ॥ ९ ॥

देशः कालः पृथग्द्रव्यं मन्त्रतन्त्रर्त्विजोऽग्नयः[४] । देवता यजमानश्च क्रतुर्धर्मश्च यन्मयः ॥ १० ॥

तं ब्रह्म[५] परमं साक्षाद् भगवन्तमधोक्षजम् । मनुष्यदृष्ट्या दुष्प्रज्ञा मर्त्यात्मानो न मेनिरे ॥ ११ ॥

न ते यदोमिति प्रोचुर्न नेति च परन्तप । गोपा निराशाः प्रत्येत्य तथोचुः कृष्णरामयोः ॥ १२ ॥

---

१. ...भस्मास्थितोकैः ✻ २. यमुनाऽऽगता ✻ ३. प्रसन्न इदमब्रवीत् ✻
४. मन्त्रतन्त्रर्त्विगग्नयः ✻ ५. तद् ब्रह्म ✻

तदुपाकर्ण्य भगवान् प्रहस्य जगदीश्वरः। व्याजहार पुनर्गोपान् दर्शयन् लौकिकीं गतिम् ॥ १३ ॥
मां ज्ञापयत पत्नीभ्यः ससङ्कर्षणमागतम्। दास्यन्ति काममन्नं वः स्निग्धा मय्युषिता धिया॥ १४ ॥
गत्वाऽथ पत्नीशालायां दृष्ट्वाऽऽसीनाः स्वलङ्कृताः। नत्वा द्विजसतीर्गोपाः प्रश्रिता इदमब्रुवन् ॥
नमो वो द्विजपत्नीभ्यो निबोधत वचांसि नः। इतोऽविदूरे चरता कृष्णेन प्रेषिता वयम् ॥ १६ ॥
गाश्चारयन् स गोपालैः सरामो दूरमागतः। बुभुक्षितस्य तस्यान्नं सानुगस्य प्रदीयताम् ॥ १७ ॥
श्रुत्वाऽच्युतमुपायान्तं नित्यं तद्दर्शनोत्सुकाः। तत्कथाक्षिप्तमनसो बभूवुर्जातसम्भ्रमाः ॥ १८ ॥
चतुर्विधं बहुगुणमन्नमादाय भाजनैः। अभिसस्रुः प्रियं सर्वाः समुद्रमिव निम्नगाः ॥ १९ ॥
निषिध्यमानाः पतिभिर्भ्रातृभिर्बन्धुभिः[१] सुतैः। भगवत्युत्तमश्लोके दीर्घश्रुतभृताशयाः[२] ॥ २० ॥
यमुनोपवनेऽशोकनवपल्लवमण्डिते। प्रचरन्तं वृतं गोपैर्ददृशुः साग्रजं स्त्रियः ॥ २१ ॥

श्यामं हिरण्यपरिधिं वनमाल्यबर्हधातुप्रवालनटवेषमनुव्रतांसे।
विन्यस्तहस्तमितरेण धुनानमब्जं कर्णोत्पलाळककपोलमुखाब्जहासम् ॥ २२ ॥
दीर्घश्रुतप्रियतमोदयकर्णपूरैर्यस्मिन् निमग्नमनसस्तमथाक्षिरन्ध्रैः।
अन्तः प्रवेश्य सुचिरं परिरभ्य तापं प्राज्ञा यथाऽभिमतयो विजहुर्नरेन्द्र ॥ २३ ॥

तास्तथा त्यक्तसर्वाशाः प्राप्ता आत्मदिदृक्षया। विज्ञायाखिलदृग् दृष्ट्या प्राह प्रहसिताननः ॥ २४ ॥

**श्रीभगवानुवाच**

स्वागतं वो महाभागा आस्यतां करवाम किम्। यन्नो दिदृक्षयाऽभ्येता उपपन्नमिदं हि वः ॥ २५ ॥
न श्रद्धामधिकुर्वन्ति कुशलार्थनिदर्शनाः[३]। अहैतुक्यव्यवहितां भक्तिमात्मप्रिये यथा ॥ २६ ॥
प्राणबुद्धिमनःस्वात्मदारापत्यधनादयः। यत्सम्पर्कात् प्रिया आसंस्ततः कोन्वपरः प्रियः ॥ २७ ॥
तद् यात साध्व्यो यजनं पतयो वो द्विजातयः। स्वसत्रं पारयिष्यन्ति युष्माभिर्गृहमेधिनः ॥ २८ ॥

**यज्ञपत्न्य ऊचुः**

मैवं विभोऽर्हति भवान् गदितुं नृशंसं सत्यं कुरुष्व निगमं तव पादमूलम्।
प्राप्ता वयं तुळसिदाम पदाऽवसृष्टं केशैर्निवोढुमतिलङ्घ्य समस्तबन्धून् ॥ २९ ॥
गृह्णन्ति नो न पतयः पितरौ सुता वा[४] न भ्रातृबन्धुसुहृदः कुत एव चान्ये।
तस्मात् प्रसीद पदयोः पतितात्मनां नो नान्या भवेद् गतिररिन्दम तद् विधेहि ॥ ३० ॥

---

१. भ्रातृभिः पितृभिः ❋ २. दीर्घश्रुतधृताशयाः ❋ ३. कुशलाः स्वार्थदर्शनाः ❋ ४. पितरः सुता वा ❋

**श्रीभगवानुवाच**

पतयो नाभ्यसूयेरन् नित्यं भ्रातृसुतादयः । लोकाश्च[1] वो मयोपेता देवा अप्यनुमन्वते ॥ ३१ ॥

न प्रीतयेऽनुरागाय ह्यङ्गसङ्गो नृणामिह । तन्मनो मयि युञ्जाना अचिरान्मामवाप्स्यथ[2] ॥ ३२ ॥

**श्रीशुक उवाच**

इत्युक्ता द्विजपत्न्यस्ता यज्ञवाटं पुनर्गताः । ते चानसूयवस्ताभिः स्त्रीभिः सत्रमपारयन् ॥ ३३ ॥

तत्रैका विधृता भर्त्रा भगवन्तं यथाश्रुतम् । हृदोपगुह्य विजहौ देहं कर्मानुबन्धनम् ॥ ३४ ॥

भगवानपि गोविन्दस्तेनैवान्नेन गोपकान् । चतुर्विधेनाशयित्वा स्वयं च बुभुजे प्रभुः ॥ ३५ ॥

एवं लीलानरवपुर्नृलोकमनुशीलयन्[3] । रेमे गोगोपगोपीनां रमयन् नृप वाक्कृतैः ॥ ३६ ॥

अथानुस्मृत्य विप्रास्ते अन्वतप्यन् कृतागसः । यद् विश्वेश्वरयोर्याञ्चामहनन् नृविडम्बयोः ॥ ३७ ॥

दृष्ट्वा स्त्रीणां भगवति कृष्णे भक्तिमलौकिकीम् । आत्मानं च तया हीनमनुतप्ता व्यगर्हयन्॥ ३८ ॥

धिग् जन्म नस्तु धिग् बुद्धिं धिग् वृत्तं[4] धिग् बहुज्ञताम् ।
धिक् कुलं धिक् क्रियादाक्ष्यं विमुखा ये त्वधोक्षजे ॥ ३९ ॥

नूनं भगवतो माया मायिनामपि मोहिनी । यद् वयं गुरवो नृणां स्वार्थे मुह्यामहे द्विजाः ॥ ४० ॥

अहो पश्यत नारीणामपि कृष्णे जगद्गुरौ । दुरन्तभावं यश्छिन्द्यान्मृत्युपाशान् गृहाभिधान् ॥ ४१ ॥

नासां द्विजातिसंस्कारो न निवासो गुरावपि । न तपो नात्ममीमांसा न शौचं न क्रियाः शुभाः ॥ ४२ ॥

अथापि ह्युत्तमश्लोके कृष्णे योगेश्वरेश्वरे । भक्तिर्दृढा[5] न चास्माकं संस्कारादिमतामपि ॥ ४३ ॥

ननु स्वार्थविमूढानां प्रमत्तानां गृहेहया । अहो नः स्मारयामास गोपवाक्यैः सतां गतिः ॥ ४४ ॥

अन्यथा पूर्णकामस्य कैवल्याद्याशिषां पतेः । ईशितव्यैः किमस्माभिरीशस्यैतद् विडम्बनम् ॥ ४५ ॥

हित्वाऽन्यान् भजते यं श्रीः पादस्पर्शाशयाऽसकृत् । स्वात्मदोषापवर्गेण तद्याञ्चा जनमोहिनी ॥

देशः कालः पृथग्द्रव्यं मन्त्रतन्त्रर्त्विजोऽग्नयः । देवता यजमानश्च क्रतुर्धर्मश्च यन्मयः ॥ ४७ ॥

स एष भगवान् साक्षाद् विष्णुर्योगेश्वरेश्वरः । जातो भुवीति शृण्वाना ये विमूढा न विद्महे ॥ ४८ ॥

नमस्तुभ्यं भगवते कृष्णायाकुण्ठमेधसे । यन्मायामोहितदृशो भ्रमामः कर्मवर्त्मसु ॥ ४९ ॥

स वै न आद्यः पुरुषः स्वमायामोहितात्मनाम् । अविज्ञातानुभावानां क्षन्तुमर्हत्यतिक्रमम् ॥ ५० ॥

---

१. लोकांश्च * २. नचिरात्मामवाप्स्यथ * ३...वपुर्नृलोके गाः स पालयन् *
४. धिग् व्रतम् * ५. भक्तिर्दृष्टा *

इति कृष्णमनुस्मृत्य विप्रास्ते कृतहेळनाः। दिदृक्षवोऽप्यच्युतयोः कंसाद् भीता न चाचलन् ॥ ५१ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे एकविंशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

भगवानपि तत्रैव बलदेवेन संयुतः। अपश्यन्निवसन् गोपानिन्द्रयागकृतोद्यमान् ॥ १ ॥

तदभिज्ञोऽपि भगवान् सर्वात्मा सर्वदर्शनः। प्रश्रयावनतोऽपृच्छद् वृद्धान्[१] नन्दपुरोगमान् ॥ २ ॥

कथ्यतां मे पितः कोऽयं सम्भ्रमो व उपागतः। किं फलं कस्य चोद्देशः केन वा साध्यते मखः ॥ ३ ॥

एतद् ब्रूहि महान् कामो मह्यं शुश्रूषवे पितः। न हि गोप्यं हि साधूनां कीर्त्यं सर्वात्मना त्विह ॥ ४ ॥

[२]अस्त्यस्वपरदृष्टीनाममित्रोदासविद्विषाम्। उदासीनोऽरिवद् वर्ज्य आत्मवत् सुहृदुच्यते ॥ ५ ॥

ज्ञात्वाऽज्ञात्वा च कर्माणि जनोऽयमनुतिष्ठते। विदुषः कर्मसिद्धिः स्यात् तथा[३] नाविदुषो भवेत् ॥

तत्र तावत् क्रियायोगा भवता किं विचारिताः। अथवा लौकिकास्तन्मे पृच्छतः साधु भण्यताम् ॥

**नन्द उवाच**

पर्जन्यो भगवानिन्द्रो मेघास्तस्यात्ममूर्तयः। अभिवर्षन्ति भूतानां प्राणनं जीवनं पयः ॥ ८ ॥

तत् तात वयमन्ये च वार्मुचां पतिमीश्वरम्। द्रव्यैस्तद्रेतसा सिद्धैर्यजन्ते क्रतुभिर्नराः ॥ ९ ॥

तच्छेषेणोपजीवन्ति त्रिवर्गफलहेतवे। पुंसां पुरुषकाराणां पर्जन्यः फलभावनः ॥ १० ॥

य एवं विसृजेद् धर्मं पारम्पर्यागतं नरः। कामाल्लोभाद् भयाद् द्वेषात् स वै नाप्नोति शोभनम् ॥ ११ ॥

**श्रीबादरायणिरुवाच**

वचो निशम्य नन्दस्य तथाऽन्येषां व्रजौकसाम्। इन्द्राय मन्युं जनयन् पितरं प्राह केशवः ॥ १२ ॥

**श्रीभगवानुवाच**

कर्मणा जायते जन्तुः कर्मणैव प्रमीयते। सुखं दुःखं भयं क्षेमं कर्मणैवाभिपद्यते ॥ १३ ॥

अस्ति चेदीश्वरः कश्चित् फलरूपः स कर्मणः। कर्तारं भजते सोऽपि न ह्यकर्तुः प्रभुर्हि सः ॥ १४ ॥

किमिन्द्रेणेह भूतानां स्वस्वकर्मानुवर्तिनाम्[४]। अनीशेनान्यथाकर्तुं स्वभावविहितं नृणाम् ॥ १५ ॥

स्वभावतन्त्रो हि जनः स्वभावमनुवर्तते। स्वभावस्थमिदं सर्वं सदेवासुरमानुषम् ॥ १६ ॥

---

१. गोपान् ❋ २. अस्तस्वपरदृष्टीनाम् ❋ ३. यथा ❋ ४. स्वं स्वं कर्मानुवर्तिनाम् ❋

देहानुच्चवचान् जन्तुः प्राप्योत्सृजति कर्मणा । शत्रुर्मित्रमुदासीनः कर्मैव गुरुरीश्वरः ॥ १७ ॥
तस्मात् सम्पूजयेत् कर्म स्वभावस्थः स्वकर्मकृत् । अञ्जसा येन वर्तेत तदेवास्य हि दैवतम् ॥ १८ ॥
वर्तेत ब्रह्मणा विप्रो राजन्यो रक्षया भुवः । वैश्यस्तु वार्तया जीवेच्छूद्रस्तु द्विजसेवया ॥ १९ ॥
कृषिवाणिज्यगोरक्षाः कुसीदं तुर्यमुच्यते । वार्ता चतुर्विधा तत्र वयं गोवृत्तयोऽनिशम् ॥ २० ॥
सत्त्वं रजस्तम इति स्थित्युत्पत्त्यन्तहेतवः । रजसोत्पद्यते विश्वमन्योन्यं विविधं जगत् ॥ २१ ॥
रजसा चोदिता मेघा वर्षन्त्यम्बूनि सर्वतः । प्रजास्तैरेव सिद्ध्यन्ति महेन्द्रः किं करिष्यति ॥ २२ ॥
न नः पुरो जनपदा न ग्रामगृहिणो वयम् । वनौकसस्तात नित्यं काननाद्रिनिवासिनः ॥ २३ ॥
आजीव्यैकतरं भावं यस्त्वन्यमुपधावति । न तस्माद् विन्दते क्षेमं जारं[1] नार्यसती यथा ॥ २४ ॥
तस्माद् गवां ब्राह्मणानामद्रेश्चारभ्यतां मखः । य इन्द्रयागसम्भारास्तैरयं साध्यतां मखः ॥ २५ ॥
पच्यतां विविधाः पाकाः सूपान्धःपायसादयः । संयावापूपशष्कुल्यः सर्वदोहश्च गृह्यताम् ॥ २६ ॥
हूयन्तामग्नयः सम्यग् ब्राह्मणैर्ब्रह्मवादिभिः । अन्नं बहुगुणं तेभ्यो दीयतां धेनुदक्षिणाः ॥ २७ ॥
अन्येभ्यश्चाश्वचण्डालपतितेभ्यो यथार्हतः । यवसं च गवां दत्वा गिरये दीयतां बलिः ॥ २८ ॥
स्वलङ्कृता भुक्तवन्तः स्वनुलिप्ताः सुवाससः । प्रदक्षिणं च कुरुत गोविप्रानलपर्वतान् ॥ २९ ॥
एतन्मम मतं तात क्रियतां यदि रोचते । अयं गोब्राह्मणाद्रीणां मह्यं च दयितो मखः ॥ ३० ॥

**श्रीशुक उवाच**

कालात्मना भगवता शक्रदर्पजिघांसया । प्रोक्तं निशम्य नन्दाद्याः साध्वगृह्णन्त तद्वचः ॥ ३१ ॥
तथा च विदधुः सर्वे यथाऽऽह मधुसूदनः । वाचयित्वा स्वस्त्ययनं द्रव्यैर्गोविप्रभूभृताम् ॥ ३२ ॥
उपहृत्य बलीन् सर्वानादृता यवसं गवाम् । गोधनानि पुरस्कृत्य गिरिं चक्रुः प्रदक्षिणम् ॥ ३३ ॥
अनांस्यनडुद्युक्तानि ते चारुह्य स्वलङ्कृताः । गोप्यश्च कृष्णवीर्याणि गायन्तः सद्विजाशिषः ॥ ३४ ॥
कृष्णस्त्वन्यतमं रूपं गोपविस्रम्भणं गतः । शैलोऽस्मीति ब्रुवन् भूरि बलिमादद् बृहद्वपुः ॥ ३५ ॥
तस्मै नमो व्रजजनैः स चक्रे ह्यात्मनाऽऽत्मने[2] । अहो पश्यत शैलोऽसौ रूपी नोऽनुग्रहं व्यधात् ॥
एषोऽवजानतो मर्त्यान् कामरूपी वनेचरः । हन्ति ह्यस्मै नमस्यामः शर्मणे आत्मनो[3] गवाम् ॥
इत्यद्रिगोद्विजमखं वासुदेवप्रचोदिताः । यथा विधाय गोपालाः सहकृष्णा व्रजं ययुः ॥ ३८ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे द्वाविंशोऽध्यायः ॥**

---

१. जारात् ❋ २. स ह चक्रेऽत्मनाऽऽत्मने ❋ ३. ह्यात्मनः ❋

**श्रीशुक उवाच**

इन्द्रस्तदात्मनः पूजां विज्ञाय विहतां नृप । गोपेभ्यः कृष्णनाथेभ्यो नन्दादिभ्यश्चुकोप ह ॥ १ ॥
गणं सांवर्तकं नाम[1] मेघानां चान्तकारिणाम् । इन्द्रः प्राचोदयत् क्रुद्धो वाक्यं चाहेशमन्युना ॥ २ ॥
अहो श्रीमदमाहात्म्यं गोपानां काननौकसाम् । कृष्णं मर्त्यमुपाश्रित्य ये चक्रुर्देवहेळनम् ॥ ३ ॥
यथाऽदृढैः कर्ममयैः कुप्लवैर्ज्ञानमानिनः । विद्यामान्वीक्षिकीं हित्वा तितीर्षन्ति भवार्णवम् ॥ ४ ॥
वाचाळं मानिनं मत्तमज्ञं पण्डितमानिनम् । कृष्णं मर्त्यमुपाश्रित्य गोपा मे चक्रुरप्रियम् ॥ ५ ॥
एषां श्रियाऽवलिप्तानां कृष्णेनाप्यायितात्मनाम् । धुनुत श्रीमदस्तम्भं पशून् नयत सङ्क्षयम् ॥ ६ ॥
अहं चैरावतं नागमारुह्यानुव्रजे व्रजम् । मरुद्गणैर्महावेगैर्नन्दगोष्ठजिघांसया । ॥ ७ ॥
इत्थं मघवताऽऽज्ञप्ता मेघा निर्मुक्तबन्धनाः । नन्दगोकुलमासारैः पीडयामासुरोजसा ॥ ८ ॥
विद्योतमाना विद्युद्भिर्नदन्तः स्तनयित्नुभिः । तीव्रैर्मरुद्गणैर्नुन्ना ववृषुर्जलशर्कराः ॥ ९ ॥
स्थूणास्थूला वर्षधारा मुञ्चत्स्वभ्रेष्वभीक्ष्णशः । जलौघैः प्लाव्यमाना भूर्नादृश्यत नतोन्नतम् ॥ १० ॥
अत्यासारातिवातेन पशवो जातवेपनाः । गोपा गोप्यश्च शीतार्ता गोविन्दं शरणं ययुः ॥ ११ ॥
शिरस्सुतान् स्वकायेन प्रच्छाद्यासारपीडिताः । वेपमाना भगवतः पादमूलमुपाययुः[2] ॥ १२ ॥
कृष्णकृष्ण महाभाग त्वन्नाथं गोकुलं प्रभो । त्रातुमर्हसि देवान्नः कुपिताद् भक्तवत्सल ॥ १३ ॥
शीतवर्षातिवातेन हन्यमानमचेतनम् । निरीक्ष्य भगवान् मेने कुपितेन्द्रकृतं हरिः ॥ १४ ॥
अपर्त्वत्युद्बणं वर्षमतिवातं शिलामयम् । स्वयागे[3] विहतेऽस्माभिरिन्द्रो नाशाय वर्षति ॥ १५ ॥
तत्र प्रतिविधिं सम्यगात्मयोगेन साधये । लोकेशमानिनो मौढ्याद् हरिष्ये श्रीमदं तमः ॥ १६ ॥
न हि मद्भावयुक्तानां सुराणामीशविस्मयः । मत्तः सतां मानभङ्गः प्रशमायोपपद्यते[4] ॥ १७ ॥
तस्मान्मच्छरणं गोष्ठं मन्नाथं मत्परिग्रहम् । गोपाये स्वात्मयोगेन सोऽयं मे व्रत आहितः ॥ १८ ॥
इत्युक्त्वैकेन हस्तेन कृत्वा गोवर्धनाचलम् । दधार लीलया कृष्णश्छत्राकमिव[5] बालकः ॥ १९ ॥
अथाह भगवान् गोपान् हेऽम्ब तात व्रजौकसः । यथोपजोषं विशत गिरिगर्तं सगोधनाः ॥ २० ॥
न त्रास इह वः कार्यो मद्धस्ताद्रिनिपातनात् । वातवर्षभयं चालं[6] तत्त्राणं विहितं हि वः ॥ २१ ॥

---

१. संवर्तकं नाम * २. पादमूलमुपागताः * ३. तन्मखे * ४. प्रशमायोपकल्प्यते *
५. विष्णुश्छत्राकमिव * ६. वातवर्षभयेनालम् *

तथा निर्विविशुर्गर्तं[१] कृष्णाश्वासितमानसाः । यथावकाशं सधनाः सप्रजाः सोपजीवनाः ॥ २२ ॥
क्षुत्तृड्व्यथां सुखापेक्षां हित्वा तैर्व्रजवासिभिः । वीक्ष्यमाणो दधाराद्रिं सप्ताहं नाचलत् पदात् ॥
कृष्णयोगानुभावं तं निशाम्येन्द्रोऽतिविस्मितः । निस्स्तम्भो भ्रष्टसङ्कल्पः स्वान् मेधान् सन्न्यवर्तयत्[२]॥
खं व्यभ्रमुदितादित्यं वातवर्षं च दारुणम् । निशाम्योपरतं गोपान् गोवर्धनधरोऽब्रवीत् ॥ २५ ॥
निर्यात त्यजत त्रासं गोपाः सस्त्रीधनार्भकाः । उपारतं वातवर्षं व्युदप्रायाश्च निम्नगाः ॥ २६ ॥
ततस्ते निर्ययुर्गोपाः स्वंस्वमादाय गोधनम् । शकटाटोपकरणं स्त्रीबालस्थविराः शनैः ॥ २७ ॥
भगवानपि तं शैलं स्वस्थाने पूर्ववत् प्रभुः । पश्यतां सर्वभूतानां स्थापयामास लीलया ॥ २८ ॥

तं प्रेमवेगान्निभृता व्रजौकसो यथा समीयुः परिरम्भणादिभिः ।
गोप्यश्च सस्नेहमपूजयन् मुदा दध्यक्षताद्भिर्युयुजुस्तथाऽऽशिषः ॥ २९ ॥

यशोदा रोहिणी नन्दो रामश्च बलिनां वरः । कृष्णमालिङ्ग्य युयुजुराशिषः स्नेहकातराः ॥ ३० ॥
दिवि देवगणाः सर्वे सिद्धगन्धर्वचारणाः । तुष्टुवुर्मुमुचुस्तुष्टाः पुष्पवर्षाणि भारत[३] ॥ ३१ ॥
शङ्खदुन्दुभयो नेदुर्दिवि देवप्रचोदिताः । जगुर्गन्धर्वपतयस्तुम्बुरुप्रमुखा नृप ॥ ३२ ॥

ततोऽनुरक्तैः पशुपैः परिश्रितो राजन् स गोष्ठं सबलोऽविशद् हरिः ।
तथाविधान्यस्य कृतानि गोपिका गायन्त्य ईयुर्मुदिता हृदिस्पृशः ॥ ३३ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे त्रयोविंशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

एवंविधानि कर्माणि गोपाः कृष्णस्य वीक्ष्य ते । नतद्वीर्यविदः प्रोचुः समुपेत्य सुविस्मिताः ॥ १ ॥
बालकस्य यदेतानि कर्माण्यत्यद्भुतानि वै । कथमर्हत्यसौ जन्म ग्राम्येष्वात्मजुगुप्सितम् ॥ २ ॥
यः सप्तहायनो बालः करेणैकेन लीलया । कथं बिभ्रद् गिरिवरं पुष्करं गजराडिव ॥ ३ ॥
तोकेनामीलिताक्षेण पूतनाया महौजसः । पीतः स्तनः[४] सह प्राणैः कालेनेव वयस्तनोः[५] ॥ ४ ॥
हिन्वतोऽधश्शयानस्य मास्यस्य चरणावुदक् । अनोऽपतद् विपर्यस्तं रुदतः प्रपदाहतम् ॥ ५ ॥

---

१. निविविशुर्गर्तम् ❋ २. सन्न्यवारयत् ३. पार्थिव ❋ ४. पीतं स्तनम् ❋
५. महातनोः? ❋

एकहायन आसीनो ह्रियमाणो विहायसा । दैत्येन यस्तृणावर्तमहन् कण्ठग्रहातुरम् ॥ ६ ॥
कचिद् हैयङ्गवस्तैन्ये मात्रा बद्ध उलूखले । गच्छन्नर्जुनयोर्मध्ये बाहुभ्यां तावपातयत् ॥ ७ ॥
वने सञ्चारयन् वत्सान् सरामो बालकैर्वृतः । हन्तुकामं बकं दोर्भ्यां मुखतोऽरिमपाटयत् ॥ ८ ॥
वत्सेषु वत्सरूपेण प्रविशन्तं जिघांसया । हत्वा न्यपातयत् तेन कपित्थानि च लीलया ॥ ९ ॥
हत्वा रासभदैतेयं तद्बन्धूंश्च बलान्वितः । चक्रे ताळवनं क्षेमं परिपक्वफलोचितम्[1] ॥ १० ॥
प्रलम्बं घातयित्वोग्रं बलेन बलशालिना । अमोचयद् व्रजपशून् गोपांश्चारण्यवह्नितः ॥ ११ ॥
आशीविषं महारौद्रं दमित्वा विमदं ह्रदात् । प्रसँह्योद्वास्य यमुनां चक्रेऽसौ निर्विषोदकाम् ॥ १२ ॥
दुस्त्यजश्चानुरागोऽस्मिन् सर्वेषां नो व्रजौकसाम् । नन्द ते तनयेऽस्मासु तस्याप्यौत्पत्तिकः कथम् ॥
क सप्तहायनो बालः क महाद्रिविधारणम् । ततो नो जायते शङ्का व्रजनाथ तवात्मजे ॥ १४ ॥

**नन्द उवाच**

श्रूयतां मे[2] वचो गोपा व्येतु शङ्का च वोऽर्भके । एतं कुमारमुद्दिश्य गर्गो मे यदुवाच ह ॥ १५ ॥
वर्णास्त्रयः किलास्यासन् गृह्णतोऽनुयुगं तनूः । शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः ॥ १६ ॥
प्रागयं वसुदेवस्य कचिज्जातस्तवात्मजः । वासुदेव इति श्रीमानभिज्ञाः सम्प्रचक्षते ॥ १७ ॥
बहूनि सन्ति नामानि रूपाणि च सुतस्य ते । गुणकर्मानुरूपाणि तान्यहं वेद नो जनाः[3] ॥ १८ ॥
एष वः श्रेय आधास्यद् गोपगोकुलनन्दनः । अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ ॥ १९ ॥
पुराऽनेन व्रजपते साधवो दस्युपीडिताः । अराजकेऽरक्ष्यमाणा जिग्युर्दस्यून् समेधिताः ॥ २० ॥
य एतस्मिन् महाभागे प्रीतिं कुर्वन्ति मानवाः । नारयोऽभिभवन्त्येतान् विष्णुपक्षानिवासुराः ॥
तस्मान्नन्द कुमारोऽयं नारायणसमो गुणैः । श्रिया कीर्त्याऽनुभावेन तत्कर्मसु न विस्मयः ॥ २२ ॥
इत्यद्धा मां समादिश्य गर्गे च स्वगृहं गते । मन्ये नारायणस्यांशं कृष्णमक्लिष्टकारिणम् ॥ २३ ॥

**श्रीशुक उवाच**

इति नन्दवचः श्रुत्वा गर्गगीतं व्रजौकसः । दृष्टश्रुतानुभावास्ते कृष्णस्यामिततेजसः ।
मुदिता नन्दमानर्चुः कृष्णं च गतविस्मयाः ॥ २४ ॥

---

१. परिपक्वफलान्वितम् ❋ २. श्रूयतां नः ❋ ३. नो जनः ❋

देवे वर्षति यज्ञविप्लवरुषा वज्राश्मवर्षानिलैः
सीदद्बालपशु[1] स्त्रियाऽऽत्मशरणं दृष्ट्वाऽनुकम्प्युत्स्मयः[2] ।
उत्पाटचैककरेण शैलमबलो लीलोच्छिलीन्ध्रं यथा
बिभ्रद् गोष्ठमपान्महेन्द्रमदभित् प्रीयान्न[3] इन्द्रो गवाम् ॥ २५ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे चतुर्विंशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

गोवर्धने धृते शैले आसाराद् रक्षिते व्रजे । गोलोकादाव्रजत् कृष्णं सुरभिः शक्र एव च ॥ १ ॥
विविक्त उपसङ्गम्य व्रीळितः कृतहेळनः । पस्पर्श पादयोरेनं किरीटेनार्कवर्चसा ॥ २ ॥
दृष्टश्रुतानुभावोऽस्य कृष्णस्यामिततेजसः । नष्टत्रिलोकेशमद इदमाह कृताञ्जलिः ॥ ३ ॥
विशुद्धसत्त्वं तव धाम शान्तं तपोमयं ध्वस्तरजस्तमस्कम् ।
मायामयोऽयं गुणसम्प्रवाहो न विद्यते तेऽग्रहणानुबन्धः ॥ ४ ॥
कुतो नु तद्धेतव ईश मन्युलोभादयो येऽबुधलिङ्गभावाः ।
अथापि दण्डं भगवान् बिभर्ति धर्मस्य गुप्त्यै खलनिग्रहाय ॥ ५ ॥
पिता गुरुस्त्वं जगतामधीशो दुरत्ययः काल उपात्तदण्डः ।
हिताय चेच्छातनुभिः समीहते मानं विधुन्वन् जगदीशमानिनाम् ॥ ६ ॥
ये मद्विधाः स्युर्जगदीश मानिनस्त्वां वीक्ष्य कालेऽभयमाशु तं मदम् ।
हित्वाऽऽर्यमार्गं प्रभजन्त्यपस्मया ईहा खलानामपि तेऽनुशासनम् ॥ ७ ॥
स त्वं ममैश्वर्यमदप्लुतस्य कृतागसस्तेऽविदुषः प्रभावम् ।
क्षन्तुं प्रभोऽथार्हसि मूढचेतसो मैवं पुनर्भून्मतिरीश मेऽसती ॥ ८ ॥
तवावतारोऽयमधोक्षजेह भुवो भराणामुरुभारजन्मनाम् ।
चमूपतीनामभवाय देव भवाय युष्मच्चरणानुवर्तिनाम् ॥ ९ ॥
नमस्तुभ्यं भगवते पुरुषाय महात्मने । वासुदेवाय कृष्णाय सात्वतां पतये नमः ॥ १० ॥

---

१. सीदत्पालपशु ❋ २. उत्स्मयन् ❋ ३. पायान्नः

स्वच्छन्देनात्तदेहाय[1] विशुद्धज्ञानमूर्तये । सर्वस्मै सर्वबीजाय सर्वभूतात्मने नमः ॥ ११ ॥
मयेदं भगवन् गोष्ठनाशायासारवायुभिः । चेष्टितं विहते यज्ञे मानिना तीव्रमन्युना ॥ १२ ॥
त्वयेशानुगृहीतोऽस्मि ध्वस्तस्तम्भो वृथोद्यमः । ईश्वरं गुरुमात्मानं त्वामहं शरणं गतः ॥ १३ ॥

**श्रीशुक उवाच**

एवं सङ्कीर्तितः कृष्णो मघोना भगवानमुम् । मेघगम्भीरया वाचा प्रहसन्निदमब्रवीत् ॥ १४ ॥

**श्रीभगवानुवाच**

मया तेऽकारि मघवन् मखभङ्गोऽनुगृह्णता । मदनुस्मृतये नित्यं मत्तस्येन्द्रश्रिया भृशम् ॥ १५ ॥
मामैश्वर्यश्रीमदान्धो दण्डपाणिं न पश्यति । तं भ्रंशयामि सम्पद्भ्यो यस्य चेच्छाम्यनुग्रहम्॥ १६ ॥
गम्यतां शक्र भद्रं ते[2] क्रियतां मेऽनुशासनम् । स्थीयतां स्वाधिकारेषु युक्तैर्विस्रम्भवर्जितैः ॥ १७ ॥

**श्रीशुक उवाच**

अथाह सुरभिः कृष्णमभिवन्द्य[3] मनस्विनी । स्वसन्तानैरुपामन्त्र्य गोपरूपिणमीश्वरम् ॥ १८ ॥

**सुरभिरुवाच**

कृष्णकृष्ण महायोगिन् विश्वात्मन् विश्वसम्भव । भवता लोकनाथेन सनाथा वयमच्युत ॥ १९ ॥
त्वं नः परमकं दैवं त्वं न इन्द्रो जगत्पते । भवाय भव गोविप्रदेवानां[4] ये च साधवः ॥ २० ॥
इन्द्रं नस्त्वाभिषेक्ष्यामो ब्रह्मणा चोदिता वयम् । अवतीर्णोऽसि विश्वात्मन् भूमेर्भारापनुत्तये ॥ २१ ॥

**श्रीशुक उवाच**

एवं कृष्णमुपामन्त्र्य सुरभिः पयसाऽऽत्मनः । जलैश्चाकाशगङ्गाया ऐरावतकरोद्धृतैः ॥ २२ ॥
इन्द्रः सुरर्षिभिः साकं चोदितो देवमातृभिः । अभ्यषिञ्चत दाशार्हं गोविन्द इति चाभ्यधात् ॥ २३ ॥

तत्रागतास्तुम्बुरुनारदादयो गन्धर्वविद्याधरसिद्धचारणाः ।
जगुर्यशो लोकमलापहं हरेः सुराङ्गनाः सन्ननृतुर्मुदाऽन्विताः ॥ २४ ॥
तं तुष्टुवुर्देवनिकायकेतवो व्यवाकिरंश्चाद्भुतपुष्पवृष्टिभिः ।
लोकाः परां निर्वृतिमाप्नुवंस्त्रयो गावस्तदा गामनयन् पयोद्रुताम् ॥ २५ ॥

नानारसौघाः सरितो वृक्षा आसन् मधुस्रवाः । अकृष्टपच्यौषधयो गिरयोऽबिभ्रदुन्मणीन् ॥ २६ ॥

---

१. स्वच्छन्दोपात्तदेहाय ❃ २. भद्रं वः ❃ ३. कृष्णमभिनन्द्य ❃
४. भवाय भव गोविन्द देवानाम् ❃

कृष्णेऽभिषिक्त एतानि सर्वाणि कुरुनन्दन । निर्वैराण्यभवंस्तात क्रूराण्यपि निसर्गतः ॥ २७ ॥
इति गोगोकुलपतिं गोविन्दमभिषिच्य सः । अनुज्ञातो ययौ शक्रो वृतो देवादिभिर्दिवम् ॥ २८ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे पञ्चविंशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

एकादश्यां निराहारः समभ्यर्च्य जनार्दनम् । स्नातुं नन्दस्तु कालिन्द्या द्वादश्यां जलमाविशत् ॥ १ ॥
तं गृहीत्वाऽनयद् भृत्यो[१] वरुणस्यासुरोऽन्तिकम् । अविज्ञायासुरीं वेळां प्रविष्टमुदकं निशि ॥ २ ॥
गोपालास्तमपश्यन्तः कृष्ण रामेति चुक्रुशुः । भगवांस्तदुपश्रुत्य पितरं वरुणाहृतम् ॥ ३ ॥
तदन्तिकं गतो राजन् स्वानामभयदो विभुः । प्राप्तं वीक्ष्य हृषीकेशं लोकपालः सपर्यया ।
महत्या पूजयित्वाऽऽह तद्दर्शनमहोत्सवः ॥ ४ ॥

**वरुण उवाच**

अद्य मे विधृतो देह अद्यार्थोऽधिगतः प्रभो । यत्पादभाजो भगवन्नवापुः पारमध्वनः ॥ ५ ॥
नमस्तुभ्यं भगवते ब्रह्मणे परमात्मने । न यत्र श्रूयते माया लोकदृष्टिविकल्पना ॥ ६ ॥
अजानता मामकेन मूढेनाकार्यवेदिना । आनीतोऽयं तव पिता तत् प्रभो क्षन्तुमर्हसि ॥ ७ ॥
गोविन्द नीयतामेष पिता ते पितृवत्सल । ममाप्यनुग्रहं कृष्ण कर्तुमर्हस्यशेषदृक्* ॥ ८ ॥

**श्रीशुक उवाच**

एवं प्रसादितः कृष्णो भगवानखिलेश्वरः । आदायागात् स्वपितरं बन्धूनामावहन्मुदम् ॥ ९ ॥
नन्दस्त्वतीन्द्रियं दृष्ट्वा लोकपालमहोदयम् । कृष्णे च सन्नतिं तेषां ज्ञातिभ्यो विस्मितोऽब्रवीत् ॥
ते त्वौत्सुक्यधियो राजन् मत्वा गोपास्त्वधीश्वरम्[२] । अपि नः स्वगतिं[३] सूक्ष्मामुपाधास्यदधीश्वरः॥
इति स्वानां स भगवान् विज्ञायाखिलदृक् स्वयम् । सङ्कल्पसिद्धये तेषां कृपयेदमचिन्तयत् ॥ १२ ॥
जनो वै लोक एतस्मिन्नविद्याकामकर्मभिः । उच्चावचासु गतिषु न वेद स्वगतिं भ्रमन् ॥ १३ ॥
इति सञ्चिन्त्य भगवान् महाकारुणिकः प्रभुः । दर्शयामास लोकं स्वं [४]गोपानां तमसः परम् ॥ १४ ॥

---

१. अनयद् दूतः ❋ * इदं श्लोकार्धं प्राचीनकोशेषु नास्ति । २. गोपास्तमीश्वरम् ❋
३. स्वां गतिम् ❋ ४. गोपान् स्वांस्तमसः परम् ❋

सत्यं ज्ञानमनन्तं यद् ब्रह्म ज्योतिः सनातनम् । यद् हि पश्यन्ति मुनयो गुणापाये समाहितम्[१] ॥
ते तु ब्रह्महृदं नीता मग्नाः कृष्णमचक्षत । ददृशुर्ब्रह्मणो लोकं[२] यत्राक्रूरोऽध्यगात् पुरा ॥ १६ ॥
नन्दादयस्तु तं दृष्ट्वा परमानन्दनिर्वृताः । कृष्णं च तत्र छन्दोभिः स्तूयमानं सुविस्मिताः ॥ १७ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे षड्विंशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

भगवानपि तां रात्रिं शारदोत्फुल्लमल्लिकाम् । वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रितः[३] ॥ १ ॥

तदोडुराजः ककुभः करैर्मुखं प्राच्या विलिम्पन्नरुणेन शन्तमैः ।
स चर्षणीनामुदगाच्छुचो मृजन् प्रियः प्रियाया इव दीर्घदर्शनः ॥ २ ॥

दृष्ट्वा मुकुन्दस्तमखण्डमण्डलं रमाननाभं नवकुङ्कुमारुणम्[४] ।
वनं च तत्कोमलगोभिररञ्जितं जगौ कलं वामदृशां मनोरमम् ॥ ३ ॥

निशम्य गीतं तदनङ्गवर्धनं व्रजस्त्रियः कृष्णविषक्तमानसाः ।
आजग्मुरन्योन्यमलक्षितोद्यमाः स यत्र कान्तो जवलोलकुण्डलाः ॥ ४ ॥

दुहन्त्योऽभिययुः काश्चिद् दोहं हित्वा समुत्सुकाः । पयोऽधिश्रित्य संयावमनुद्वास्यापरा ययुः ॥ ५ ॥

परिवेशयन्त्यस्तद् हित्वा पाययन्त्यः शिशून् पयः[५] ।
शुश्रूषन्त्यः पतीन् काश्चिदश्नन्त्योऽपास्य भोजनम् ॥ ६ ॥

लिम्पन्त्यः प्रमृजन्त्योऽन्या अञ्जन्त्यः काश्च लोचने ।
व्यत्यस्तवस्त्राभरणाः काश्चित् कृष्णान्तिकं ययुः ॥ ७ ॥

ता वार्यमाणाः पतिभिः पितृभिर्भ्रातृबन्धुभिः । गोविन्दापहृतात्मानो न न्यवर्तन्त मोहिताः ॥ ८ ॥
अन्तर्गृहगताः काश्चिद् गोप्योऽलब्धविनिर्गमाः । कृष्णं तद्भावनायुक्ता दध्युर्मीलितलोचनाः ॥ ९ ॥
दुःसहप्रेष्ठविरहतीव्रतापधुताशुभाः । ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गलाः ॥ १० ॥
तमेव परमात्मानं जारबुद्ध्यापि सङ्गताः । जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः ॥ ११ ॥

---

१. समाहिताः ❋ २. ब्रह्मणो रूपम् ❋ ३. योगमायां समाश्रितः ❋ ४. वरकुङ्कुमारुणम् ❋
५. शिशूनलम् ❋

राजोवाच

कृष्णं विदुः परं कान्तं न तु ब्रह्मतया मुने । गुणप्रवाहोपरमस्तासां गुणधियां कथम् ॥ १२ ॥

श्रीशुक उवाच

उक्तं पुरस्तादेतत् ते चैद्यः सिद्धिं यथा गतः । द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रियाः ॥ १३ ॥

नृणां निश्रेयसार्थाय व्यक्तिर्भगवतो नृप । अव्यक्तस्याप्रमेयस्य निर्गुणस्य गुणात्मनः ॥ १४ ॥

कामं क्रोधं भयं स्नेहं मैत्रीं सौहृदमेव वा । नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते ॥ १५ ॥

न चैवं विस्मयः कार्यो[1] भवता भगवत्यजे । योगेश्वरेश्वरे कृष्णे यत एतद् विमुच्यते ॥ १६ ॥

ता दृष्ट्वाऽन्तिकमायाता भगवान् व्रजयोषितः । अवदद् वदतां श्रेष्ठो वाचःपाशैर्विमोहयन् ॥ १७ ॥

श्रीभगवानुवाच

स्वागतं वो महाभागाः प्रियं किं करवाणि वः । व्रजस्यानामयं कच्चिद् ब्रूतागमनकारणम् ॥ १८ ॥

रजन्येषा घोररूपा घोरसत्वनिषेविता । प्रतियात व्रजं नेह स्थेयं स्त्रीभिः सुमध्यमाः ॥ १९ ॥

मातरः पितरः पुत्रा भ्रातरः पतयश्च वः । विचिन्वन्तो ह्यपश्यन्तो मा कृध्वं बन्धुसाध्वसम् ॥ २० ॥

दृष्टं वनं कुसुमितं राकेशकररञ्जितम् । यमुनानिलनीरैजत्तरुपल्लवशोभितम् ॥ २१ ॥

तद्यात माचिरं गोष्ठं शुश्रूषध्वं पतीन् सतीः । क्रन्दन्ति वत्सा बालाश्च तान् पाययत दुह्यत ॥ २२ ॥

अथवा मदभिस्नेहाद् भवत्यो यन्त्रिताशयाः । आगता ह्युपपन्नं तत् प्रीयन्ते मम जन्तवः ॥ २३ ॥

भर्तुः शुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया । तद् बन्धूनां च कल्याणं प्रजानां चानुपोषणम् ॥ २४ ॥

दुश्शीलो दुर्भगो वृद्धो जडो[2] रोग्यधनोऽपि वा । पतिः स्त्रीभिर्न हातव्यो लोके शुचिरपातकी ॥

अस्वर्ग्यमयशस्यं च फल्गु कृच्छ्रं भयावहम् । जुगुप्सितं च सर्वत्र औपपत्यं कुलस्त्रियः ॥ २६ ॥

श्रवणाद् दर्शनाद् ध्यानान्मयि भावोऽनुकीर्तनात् । न तथा सन्निकर्षेण प्रतियात ततो गृहान् ॥ २७ ॥

श्रीशुक उवाच

इति विप्रियमाकर्ण्य गोप्यो गोविन्दभाषितम् । विषण्णा भग्नसङ्कल्पाश्चिन्तामापुर्दुरत्ययाम् ॥ २८ ॥

न्यक्कृत्य वक्त्रवनजान्यतितापशुष्यद्बिम्बाधराणि चरणेन महीं लिखन्त्यः ।
आस्रैरुपात्तमषिभिः कुचकुङ्कुमानि तस्थुर्मृजन्त्य उरुदुःखभराः स्म तूष्णीम् ॥ २९ ॥

प्रेष्ठं प्रियेतरमिव प्रतिभाषमाणं कृष्णं तदर्थविनिवर्तितसर्वकामाः ।
नेत्रे विमृज्य रुदितोपहते स्म किञ्चित्संरम्भगद्गदपदो[3]ऽब्रुवतानुरक्ताः ॥ ३० ॥

---

१. तदेवं विस्मयोऽकार्यः ❋ २. जळः ❋ ३. संरम्भगद्गदगिरा/संरम्भगद्गदगिरः ❋

**गोप्य ऊचुः**

मैवं विभोऽर्हति[१] भवान् गदितुं नृशंसं सन्त्यज्य सर्वविषयांस्तव पादमूलम् ।
भक्त्या भजेम दुरवग्रह मा त्यजास्मान् देवो यथाऽऽदिपुरुषो भजतो मुमुक्षून् ॥ ३१ ॥
यत्पत्यपत्यसुहृदामनुवृत्तिरङ्ग स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम् ।
अस्त्येव तत्[२] तदपि देव वरे त्वयीशे प्रेष्ठो भवांस्तनुभृतां किल बान्धवात्मा[३] ॥ ३२ ॥
कुर्वन्ति हि त्वयि रतिं कुशलाः स्व आत्मन् नित्यप्रियैः पतिसुतादिभिरार्तिदैः किम् ।
तन्नः प्रसीद वरदेश्वर मा स्म छिन्द्या आशां धृतां त्वयि परामरविन्दनेत्र ॥ ३३ ॥
चित्तं सखे न भवताऽपहृतं गृहेषु यन्निर्विशत्युत करावपि गृह्यकृत्ये ।
पादौ पदं न चलतस्तव पादमूलाद् यामः कथं व्रजमथो करवाम किंवा ॥ ३४ ॥
सिञ्चाङ्ग नस्त्वदधरामृतपूरकेण हासावलोककळगीतजहृच्छयाग्निम् ।
नो चेद् वयं विरहजाग्न्युपयुक्तदेहा ध्यानेन याम पदयोः पदवीं सखे ते ॥ ३५ ॥
यर्ह्यम्बुजाक्ष तव पादतळं रमाया दत्तक्षणं क्वचिदरण्यजनप्रियस्य ।
अस्प्राक्ष्म तत्प्रभृति नान्यसमक्षमङ्ग स्थातुं त्वया विरहिता बत पारयामः ॥ ३६ ॥
श्रीर्यत्पदाम्बुजरजश्चकमे तुळस्या लब्ध्वाऽपि वक्षसि पदं किल भृत्यजुष्टम् ।
यस्याः स्ववीक्षणकृतोऽन्यसुरप्रयासस्तद्वद् वयं च तव पादरजः प्रपन्नाः ॥ ३७ ॥
तन्नः प्रसीद व्रजिनार्दन तेऽङ्घ्रिमूलं प्राप्ता विसृज्य वसतीस्त्वदुपासनाशाः।
त्वत्सुन्दरस्मितनिरीक्षणतीव्रकामतप्तात्मनां[४] पुरुषभूषण देहि दास्यम् ॥ ३८ ॥
वीक्ष्याळकावृतमुखं तव कुण्डलश्रीगण्डस्थलाधरसुधं हसितावलोकम् ।
दत्ताभयं च भुजदण्डयुगं विलोक्य वक्षः श्रियैकरमणं च भवाम दास्यः ॥ ३९ ॥
का स्त्र्यङ्ग ते कळपदामृतवेणुगीतसम्मोहिताऽऽर्यचरितान्न चलेत् त्रिलोक्याम्।
त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं यद् गोद्विजद्रुममृगाः पुळकान्यबिभ्रन् ॥ ४० ॥
व्यक्तं भवान् व्रजभयार्तिहरोऽभिजातो देवो यथाऽऽदिपुरुषः सुरलोकगोप्ता ।
तन्नो निधेहि[५] करपङ्कजमार्तबन्धो तप्तस्तनेषु च शिरस्सु च किङ्करीणाम् ॥ ४१ ॥

---

१. विभोऽर्हसि ❋ २. अस्त्येव मे ❋ ३. बन्धुरात्मा ४. त्वं सुन्दर.... ❋
५. विधेहि ❋

### श्रीशुक उवाच

इति विक्लबितं तासां श्रुत्वा योगेश्वरेश्वरः । प्रहस्य सदयं गोपीरात्मारामो न्यरीरमत् ॥ ४२ ॥

ताभिः समेताभिरुदारचेष्टितः प्रियेक्षणोत्फुल्लमुखीभिरच्युतः ।

उदारहासद्विजकुन्ददीधितिर्व्यरोचतैणाङ्क इवोडुभिर्वृतः[1] ॥ ४३ ॥

उपगीयमान उद्गायन् वनिताशतयूथपः[2] । मालां बिभ्रद् वैजयन्तीं व्यचरन्मण्डयन् वनम् ॥ ४४ ॥

नद्याः पुळिनमाविश्य गोपीभिर्हिमवाळुकम् । रेमे तत्तरळानन्दिकुमुदामोदवायुना ॥ ४५ ॥

बाहुप्रसारपरिरम्भकरालकोरुनीवीस्तनालभननर्मकराग्रपातैः[3] ।

क्ष्वेळावलोकहसितैर्व्रजसुन्दरीणामुत्तम्भयन् रतिपतिं रमयाञ्चकार ॥ ४६ ॥

एवं भगवतः कृष्णाल्लब्धमाना महात्मनः । स्वात्मानं मेनिरे स्त्रीणां मानिन्योऽभ्यधिकं भुवि[4] ॥

तासां तत्सौभगमदं वीक्ष्य मानं च केशवः । प्रशमाय प्रसादाय तत्रैवान्तरधीयत ॥ ४८ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे सप्तविंशोऽध्यायः ॥**

---

### श्रीशुक उवाच

अन्तर्हिते भगवति सहसैव व्रजाङ्गनाः । अतप्यंस्तमचक्षाणाः करिण्य इव यूथपम् ॥ १ ॥

गत्याऽनुरागस्मितरञ्जितेक्षितैर्मनोरमालापविहारविभ्रमैः ।

आक्षिप्तचित्ताः प्रमदा रमापतेस्तास्ता विचेष्टा जगृहुस्तदात्मिकाः ॥ २ ॥

गतिस्मितप्रेक्षणभाषणादिषु प्रियाः प्रियस्य प्रतिरूढमूर्तयः ।

असावहं न्वित्यबलास्तदात्मिका नावेदिषुः कृष्णविहारविभ्रमाः ॥ ३ ॥

गायन्त्य उच्चैरमुमेव सङ्गता विचेरुरुन्मत्तकवद् वनाद् वनम् ।

पप्रच्छुराकाशवदन्तरं बहिर्भूतेषु सन्तं पुरुषं वनस्पतीन् ॥ ४ ॥

दृष्टो वः कच्चिदश्वत्थ प्लक्ष न्यग्रोध किंशुक । नन्दसूनुरिहागात्[5] किं सह हासावलोकनैः ॥ ५ ॥

कच्चित् कुरबकाशोक नाग पुन्नाग चम्पक । रामानुजो मानिनीनां दोग्धा नन्दस्य चात्मजः ॥ ६ ॥

---

१. इवोडुभिर्नृप ❋ २. वनिताशतयूथगः ❋ ३. बाहू प्रसार्य परिरम्भ.... ❋
४. स्त्रीणामाधिक्याभ्यधिकं भुवि ❋ ५. इहायात् ❋

कच्चित् तुळसि कल्याणि गोविन्दचरणप्रिये । सह त्वाऽळिकुलैर्बिभ्रद् दृष्टस्तेऽतिप्रियोऽच्युतः ॥ ७ ॥

मालत्यदर्शि वः कच्चिन्मल्लिके जातियूथिके । प्रीतिं वो जनयन् यातः करस्पर्शेन माधवः ॥ ८ ॥

चूतप्रियाळपनसासनकोविदारजम्ब्वर्कबिल्वबकुळाम्रकदम्बनीपाः[1] ।

येऽन्ये परार्थभविनो यमुनोपकूलाः[2] शंसन्तु कृष्णपदवीं रहितात्मनां नः ॥ ९ ॥

किं ते कृतं क्षिति शुभं बत केशवाङ्घ्रिस्पर्शोत्सवोत्पुळकिताऽङ्गरुहैर्विभासि ।

अप्यङ्घ्रिसम्भव उरुक्रमविक्रमाद् वा आहो वराहवपुषा परिरम्भणेन ॥ १० ॥

अप्येणपत्न्युपगतः प्रिययेह गात्रैस्तन्वन् दृशां सखि सुनिर्वृतिमीश्वरो वः ।

कान्ताङ्गसङ्गकुचकुङ्कुमरञ्जितायाः कुन्दस्रजः कुलपतेरिह वाति गन्धः ॥ ११ ॥

बाहुं प्रियांस उपधाय गृहीतपद्मो रामानुजस्तुळसिकाळिकुलैर्मदान्धैः ।

अन्वीयमान इह वस्तरवः प्रणामं किं वाऽभिनन्दति चरन् प्रणयावलोकैः ॥ १२ ॥

पश्यतेह लता बाहूनप्याश्लिष्टा वनस्पतेः । नूनं तत्करजस्पर्शाद् बिभ्रत्युत्पुळकान्यहो ॥ १३ ॥

एवं कृष्णं पृच्छमाना वृन्दावनलतास्तरून्[3] । व्यचक्षत वनोद्देशे पदानि परमात्मनः ॥ १४ ॥

पदानि व्यक्तमेतानि नन्दसूनोर्महात्मनः । लक्ष्यन्ते हि ध्वजाम्भोजवज्राङ्कुशलतादिभिः ॥ १५ ॥

तैस्तैः पदैस्तत्पदवीमन्विच्छन्त्योऽग्रतोऽबलाः । वध्वाः पदैः सुपृक्तानि विलोक्यार्ताः समब्रुवन् ॥

कस्याः पदानि चैतानि यातायाः नन्दसूनुना । अंसे न्यस्तप्रकोष्ठायाः करिण्याः करिणा यथा ॥

अनयाऽऽराधितो नूनं भगवान् हरिरीश्वरः । यन्नो विहाय गोविन्दः प्रीतो यामनयद् रहः ॥ १८ ॥

धन्या अहो अमी आळ्यो गोविन्दाङ्घ्र्यब्जरेणवः । यान् ब्रह्मेशौ[4] रमादेवी दधुर्मूर्ध्ना तदूतये ॥ १९ ॥

तस्या अमूनि नः क्षोभं कुर्वन्त्युच्चैः पदानि यत् । एकाऽपहृत्य गोपीनां रहो भुङ्क्तेऽच्युताधरम् ॥

न लक्ष्यन्ते पदान्यत्र तस्या नूनं तृणाङ्कुरैः । खिद्यत्सुजाताङ्घ्रितळामुन्निन्ये प्रेयसीं प्रियः ॥ २१ ॥

इमान्यधिकमग्नानि पदानि वहतो वधूम् । गोप्यः पश्यत कृष्णस्य भाराक्रान्तानि मानिनः ॥ २२ ॥

अत्रावरोपिता कान्ता पुष्पहेतोर्महात्मना ॥ २३ ॥

अत्र प्रसूनापचयः प्रियार्थे प्रेयसा कृतः । प्रपदाक्रमणे ह्येते पश्यतासकले पदे ॥ २४ ॥

केशप्रसाधनं त्वत्र कामिन्याः कामिना कृतम् । तानि चूडयता कान्तामुपविष्टमिह ध्रुवम् ॥ २५ ॥

---

१. जम्ब्वक्षविल्व... ❋ २. यमुनोपकूले ❋ ३....लतातरून् ❋ ४. यद् ब्रह्मेशौ ❋

रेमे तया चात्मरत आत्मारामोऽप्यखण्डितः ॥ २६ ॥

इत्येवं प्रलपन्त्यस्ताश्चेरुर्गोप्योऽविचेतनाः । कामिनां दर्शयन् दैन्यं स्त्रीणां चैव दुरात्मताम् ॥ २७ ॥

यां गोपीमनयत् कृष्णो विहायान्याः स्त्रियो वने । सा च मेने तदाऽऽत्मानं वरिष्ठं सर्वयोषिताम् ॥

हित्वा गोपीः कामयाना मामसौ भजतेति ह । ततो गत्वा वनोद्देशं दृप्ता केशवमब्रवीत् ॥ २९ ॥

न पारयेऽहं चलितुं नय मां यत्र ते मनः । एवमुक्तः प्रियामाह स्कन्ध आरुह्यतामिति ॥ ३० ॥

ततश्चान्तर्दधे कृष्णः सा वधूरन्वतप्यत । हा नाथ रमण प्रेष्ठ क्वासिक्वासि महाभुज ॥ ३१ ॥

अन्विच्छन्त्यो भगवतो मार्गं गोप्योऽविदूरतः । ददृशुः प्रियविश्लिष्टां मोहितां दुःखितां सखीम् ॥

तया कथितमाकर्ण्य मानप्राप्तिं च माधवात् । अवमानं च दौरात्म्याद् विस्मयं परमं ययुः ॥ ३३ ॥

गत्वा वनाद् वनं चन्द्रज्योत्स्ना यावद् विभाव्यते । तमः प्रविष्टमालक्ष्य ततो निववृतुः स्त्रियः ॥ ३४ ॥

तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिकाः[1] । तद्गुणानेव गायन्त्यो नात्मागाराणि सस्मरुः ॥

पुनः पुळिनमागत्य काळिन्द्याः कृष्णभावनाः । समवेता जगुः कृष्णं तदागमनकाङ्क्षिणीः ॥ ३६ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे अष्टाविंशोऽध्यायः ॥**

---

**गोप्य ऊचुः**

जयति तेऽधिकं जन्मना व्रजः श्रयत इन्दिरा साधु तत्र हि ।
दयित दृश्यतां त्वां दिदृक्षतां[2] त्वयि गतासवस्त्वा[3] विचिन्वते ॥ १ ॥

व्रजजनार्तिहन् वीर योषितां निजजनस्मयध्वंसनस्मित ।
भज सखे भवे किङ्करीः स्म नो जलरुहाननं चारु दर्शयन् ॥ २ ॥

शरदुदाशये साधुजातसत्सरसिजोदरश्रीमुषा दृशा ।
सुरतनाथ तेऽशुल्कदासिका वरद निघ्नतो नेह किं वधः ॥ ३ ॥

विषजलाशयाद् व्याळराक्षसाद् वर्षमारुताद् वैद्युतानलात् ।
वृषमयाद् भयाद् विश्वतोमुखाद् वृषभ ते वयं रक्षिता मुहुः ॥ ४ ॥

स खलु गोपिकानन्दनो भवानखिलदेहिनामन्तरात्मदृक् ।
विखनसार्चितो विश्वगुप्तये सख उदेयिवान् सात्वतां कुले ॥ ५ ॥

---

१. तदात्मकाः ❋ २. त्वा दिदृक्षताम् ❋ ३. धृतासवस्त्वा ❋

विरचिताभयं वृष्णिवर्य ते शरणमीयुषां संसृतेर्भयात् ।
करसरोरुहं कान्त कामदं शिरसि धेहि नः श्रीकरग्रहम् ॥ ६ ॥
प्रणतदेहिनां पापकर्शनं तृणचरानुगं श्रीनिकेतनम् ।
फणिफणार्पितं ते पदाम्बुजं कृणु कुचेषु नः कृन्धि हृच्छयम् ॥ ७ ॥
मधुरया गिरा वल्गुवाक्यया बुधमनोज्ञया पुष्करेक्षण ।
विधिकरीरिमा वीर मुह्यतीरधरसीधुना[१]ऽऽप्याययस्व नः ॥ ८ ॥
तव कथामृतं तप्तजीवनं कविभिरीडितं[२] कल्मषापहम् ।
श्रवणमङ्गळं श्रीमदाततं भुवि गृणन्ति ये[३] भूरिदा जनाः ॥ ९ ॥
प्रहसितं प्रिय प्रेमवीक्षणं[४] विहरणं च ते ध्यानमङ्गळम् ।
रहसि संविदो या हृदिस्पृशः कुहक नो मनः क्षोभयन्ति हि ॥ १० ॥
चलसि यद् व्रजाच्चारयन् पशून् नळिनसुन्दरं नाथ ते पदम् ।
शिलतृणाङ्कुरैः सीदतीति नः कलिलतां मनः कान्त गच्छति ॥ ११ ॥
दिनपरिक्षये नीलकुन्तळैर्वनरुहाननं बिभ्रदावृतम् ।
वनरजस्वलं दर्शयन् मुहुर्मनसि नः स्मरं वीर यच्छसि[५] ॥ १२ ॥
प्रणतकामदं पद्मजार्चितं धरणिमण्डनं ध्येयमापदि ।
चरणपङ्कजं शन्तमं च ते रमण नः स्तनेष्वर्पयाधिहन् ॥ १३ ॥
सुरतवर्धनं शोकनाशनं स्वरितवेणुना सुष्ठु चुम्बितम् ।
इतररागविस्मारणं नृणां वितर वीर नस्तेऽधरामृतम् ॥ १४ ॥
अटति यद् भवानह्नि काननं त्रुटि युगायते त्वामपश्यताम् ।
कुटिलकुन्तळं श्रीमुखं च ते जडवदीक्षतां पक्ष्मनुदृशाम् ॥ १५ ॥
पतिसुतान्वयभ्रातृबान्धवानतिविलङ्घ्य ते ह्यच्युतागताः ।
गतिविदस्तवोद्गीतमोहिताः कितव योषितः कस्त्यजेन्निशि ॥ १६ ॥

---

१. अधरशीथुना ❋ २. कविभिरादृतम् ❋ ३. ते ४. प्रेमवीक्षितम् ❋
५. स्मरं वरद यच्छसि ❋

रहसि संविदं हृच्छयोदयं प्रहसिताननं प्रेमवीक्षणम् ।
बृहदुरःश्रियो वीर वीक्ष्य ते मुहुरतिस्पृहा मुह्यते मनः ॥ १७ ॥
व्रजवनौकसां व्यक्तिरङ्ग ते व्रजिनहन्त्र्यलं विश्वमङ्गळम् ।
भज मनाक् च नस्त्वत्स्पृहात्मनां स्वजनहृद्रुजां यन्निषूदनम्[1] ॥ १८ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे एकोनत्रिंशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

इति गोप्यः प्रगायन्त्यः प्रलपन्त्यश्च चित्रधा । रुरुदुः सुस्वरं राजन् कृष्णदर्शनलालसाः ॥ १ ॥
तासामाविरभूच्छौरिः स्मयमानमुखाम्बुजः । पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः ॥ २ ॥
तं विलोक्यागतं प्रेष्ठं प्रीत्युत्फुल्लदृशोऽबलाः । उत्तस्थुर्युगपत् सर्वास्तन्वः प्राणमिवागतम् ॥ ३ ॥
काचित् कराम्बुजं शौरेर्जगृहेऽञ्जलिना मुदा । काचिद् दधार तद्बाहुमंसे चन्दनरूषितम् ॥ ४ ॥
काचिदञ्जलिनाऽगृह्णात् तन्वी ताम्बूलचर्वितम् । एका तदङ्घ्रियुगळं सन्तप्तस्तनयोरधात् ॥ ५ ॥
एका भ्रुकुटिमाबध्य प्रेमसंरम्भविह्वला । प्रत्यवैक्षत् कटाक्षेण निर्दष्टदशनच्छदा ॥ ६ ॥
अपराऽनिमिषं दृग्भ्यां जुषाणा तन्मुखाम्बुजम् । आपीतमपि नातृप्यत् सन्तस्तच्चरणं यथा ॥ ७ ॥
तं काचिन्नेत्ररन्ध्रेण हृदिकृत्य निमील्य च । पुळकाङ्ग्युपगुह्यास्ते योगीवानन्दनिर्भरा ॥ ८ ॥
सर्वास्ताः केशवालोकपरमोत्सवनिर्वृताः । जहुर्विरहजं तापं प्राज्ञं प्राप्य यथा जनः ॥ ९ ॥
ताभिर्विधूतशोकाभिर्भगवानच्युतो[2] नृप । व्यरोचताधिकं तात पुरुषः शक्तिभिर्यथा ॥ १० ॥
ताः समादाय काळिन्द्या निर्विश्य[3] पुळिनं विभुः । विकसत्कुन्दमन्दारसुरभ्यनिलषट्पदम्[4] ॥ ११ ॥
शरच्चन्द्रांशुसन्दोहध्वस्तदोषतमः शिवम् । कृष्णेहायस्ततरळाचितकोमळवाळुकम्[5] ॥ १२ ॥

तद्दर्शनाह्लादविधूतहृद्रुजो मनोरथान्तं श्रुतयो यथा ययुः ।
स्वैरुत्तरीयैः कुचकुङ्कुमाङ्कितैरचीक्ऌपन्नासनमात्मबन्धवे ॥ १३ ॥
तत्रोपविष्टो भगवान् स ईश्वरो योगेश्वरान्तर्हृदि कल्पितासनः ।
चकास गोपीपरिषद्गतोऽर्चितस्त्रैलोक्यलक्ष्म्यैकपदं वपुर्दधत् ॥ १४ ॥

---

१. निसूदनम् ❋ २. विधूतक्लेशाभिः... ❋ ३. निविश्य ❋
४. ...मन्दारसुरतानिल... ❋ ५. कृष्णाया हस्ततरलार्चितकोमलवालुकम्❋

सभाजयित्वा तमनङ्गदीपनं सहासलीलेक्षणविभ्रमभ्रुवः ।
संस्पर्शनोत्काङ्ककृताङ्गहृच्छयं संस्तभ्य[१] ईषत्कुपिता बभाषिरे ॥ १५ ॥

**गोप्य ऊचुः**

भजतोऽनुभजन्त्येक एक एतद्विपर्ययम् । नोभयांश्च भजन्त्यन्य एतन्नो ब्रूहि साधु भोः[२] ॥ १६ ॥

**श्रीभगवानुवाच**

मिथो भजन्ति ये सख्यः स्वार्थैकान्तोद्यमा हि ते । न तत्र सौहृदं धर्मः स्वार्थं तद् वित्त नान्यथा ॥१७॥
भजन्त्यभजतो ये वै करुणाः पितरो यथा । धर्मो निरपवादोऽत्र सौहृदं च सुमध्यमाः ॥ १८ ॥
भजतोऽपि न वै केचिद् भजन्त्यभजतः कुतः । आत्मारामा ह्याप्तकामा ह्यकृतज्ञा गुरुद्रुहः॥ १९ ॥
नाहं तु सख्यो भजतोऽपि जन्तून् भजाम्यमीषामनुवृत्तये यथा ।
तथैव मत्तः फलसम्पदः स्युरुच्चावचाः कल्पतरोरिवार्थिनाम् ॥ २० ॥
यथाऽधनो लब्धधने विनष्टे तच्चिन्तयाऽन्यं निभृतं न वेद ।
एवं मदर्थार्पितलोकवेदस्वानां हि वो मय्यनुवृत्तयोऽबलाः ॥ २१ ॥
मया परोक्षं भजता तिरोहितं सासूयितुं नार्हथ मां प्रियं प्रियाः[३] ॥ २२ ॥
न पारयेऽहं निरवद्यसंयुजां सुसाधुकृत्यं विबुधायुषाऽपि वः ।
यो मां भजेद् दुर्जरदेहशृङ्खलाः संवृश्च्य वृद्धिं प्रतियाति[४] सोऽधुना ॥ २३ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे त्रिंशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

इत्थं भगवतो गोप्यः श्रुत्वा वाचः सुपेशलाः । जहुर्विरहजं तापं तत्सङ्गोपचिताशिषः ॥ १ ॥
तत्रारभत गोविन्दो रासक्रीडामनुव्रतैः । स्त्रीरत्नैरन्वितः प्रीतैरन्योन्याबद्धबाहुभिः ॥ २ ॥
रासोत्सवः सम्प्रवृत्तो गोपीमण्डलमण्डितः । योगेश्वरेण तन्मध्यं प्रविष्टेन[५] द्वयोर्द्वयोः ।
प्रविष्टेन गृहीतानां कण्ठे स्वनिकटं स्त्रियः[६] ॥ ३ ॥

---

१. संस्तंभ्य ❋ २. भो ❋ ३. माऽसूयितुं माऽर्हथ तत् प्रियं प्रियाः
४. सिद्धिं प्रतियाति ❋ ५. योगेश्वरेण कृष्णेन तासां मध्ये ६. स्वनिकटस्त्रियः ❋

यं मन्येरन्[१] नभस्तावद् विमानशतसङ्कुलम् । दिवौकसां सदाराणामौत्सुक्यनिभृतात्मनाम् ॥ ४ ॥
ततो दुन्दुभयो नेदुः खात् पेतुः पुष्पवृष्टयः । जगुर्गन्धर्वपतयः सस्त्रीकास्तद्यशोऽमलम् ॥ ५ ॥
वलयानां नूपुराणां किङ्किणीनां च योषिताम् । सप्रियाणामभूच्छब्दस्तुमुलो रासमण्डले ॥ ६ ॥
तत्रापि शुशुभे ताभिर्भगवान् देवकीसुतः । मध्ये मणीनां हैमानां महामरकतो यथा[२] ॥ ७ ॥

पादन्यासैर्भुजविधुतिभिः [३]सुस्मितैर्भ्रूविलासैर्भज्यन्मध्यैश्चलकुचपटैः[४] कुण्डलैर्गण्डलोलैः ।
स्विद्यन्मुख्यः कबररशनाग्रन्थयः कृष्णवध्वो गायन्त्यस्तं तडित इव[५] ता मेघचक्रे विरेजुः ॥ ८ ॥

उच्चैर्जगुः कृतमदा रक्तकण्ठ्यो रतिप्रियाः । कृष्णाभिमर्शमुदिता यद्गीतेनेदमावृतम् ॥ ९ ॥
काचित् समं मुकुन्देन स्वरजातीरमिश्रिताः । उन्निन्ये पूजिता तेन प्रीयता साधुसाध्विति ॥ १० ॥
तदेव ध्रुवमुन्निन्ये तस्यै मानं च बह्वदात् ॥ ११ ॥
काचिद् रासपरिश्रान्ता पार्श्वस्थस्य गदाभृतः । जग्राह बाहुना स्कन्धं स्रवत्कबरमल्लिका ॥ १२ ॥
तत्रैकांसगतं बाहुं कृष्णस्योत्पलसौरभम् । चन्दनालिप्तमाघ्राय हृष्टरोमा चुचुम्ब ह ॥ १३ ॥
कस्याश्चिन्नाट्यविक्षिप्तकुण्डलत्विषभूषितम्[६] । गण्डं गण्डे[७] सन्दधत्या आदात् ताम्बूलचर्वितम् ॥
नृत्यती गायती काचित् कूजन्नूपुरमेखला । पार्श्वस्थाच्युतहस्ताब्जं श्रान्ताऽधात् स्तनयोः शिवम् ॥
गोप्यो लब्ध्वाऽच्युतं कान्तं श्रिय एकान्तवल्लभम् । गृहीतकण्ठ्यस्तद्दोर्भ्यां[८] गायन्त्यस्तं विजह्रिरे ॥

कर्णोत्पलालककविटङ्ककपोलघर्मवक्त्रश्रियो वलयनूपुरघोषवाद्यैः ।
गोप्यः समं भगवता ननृतुः स्म केशस्रस्तस्रजो[९] भ्रमरगायकरासगोष्ठ्याम् ॥ १७ ॥
एवं परिष्वङ्गकराभिमर्शस्निग्धेक्षणोद्दामविलासहासैः ।
रेमे रमेशो व्रजकामिनीभिर्यथा स्वतन्त्रः प्रतिघं विडम्बयन् ॥ १८ ॥
तदङ्गसङ्गप्रमदाकुलेन्द्रियाः केशान् दुकूलं कुचपट्टिकां वा ।
त्यक्तुं पतिं वोढुमलं व्रजस्त्रियो विस्रस्तमाल्याभरणाः कुरूद्वह ॥ १९ ॥

कृष्णविक्रीडितं वीक्ष्य व्यमुह्यन्त सुरस्त्रियः । कामार्दिताः शशाङ्कश्च सगणो विस्मितोऽभवत् ॥ २० ॥

---

१. यं मन्येत ❋ २. महामरतको यथा ❋ ३. सस्मितभ्रूविलासैः... ❋
४. चलकुचतटैः ❋ ५. तटित इव ❋ ६. कुण्डलत्विषमण्डिते ❋
७. गण्डषण्डे ❋ ८. तं दोर्भ्याम् ❋ ९. ननृतुः सुकेश्यः स्रस्तस्रजः ❋

कृत्वा तावन्तमात्मानं यावतीर्गोपयोषितः । रराम भगवांस्ताभिरात्मारामोऽपि लीलया ॥ २१ ॥
तासां रतिविहारेण श्रान्तानां वदनानि सः । प्रामृजत् करुणः प्रेम्णा शन्तमेनाङ्ग पाणिना॥ २२ ॥

गोप्यः स्फुरन्मकरकुण्डलकुन्तळत्विड्गण्डश्रिया सुरतहासनिरीक्षणेन ।
मानं दधत्य ऋषभस्य जगुः कृतानि पुण्यानि तत्कररुहस्पर्शप्रमोदाः ॥ २३ ॥
ताभिर्ययौ श्रममपोहितुमङ्गसङ्गध्वस्तस्रजः सुकुचकुङ्कुमरञ्जिता याः ।
गन्धर्वपालिभिरनुद्रुत[1] आविशद् वाः श्रान्तो गजीभिरिभराडिव भिन्नसेतुः ॥ २४ ॥
सोऽन्तर्जले युवतिभिः परिषिच्यमानः प्रेमेक्षितप्रहसिताभिरभिष्टुताङ्गः ।
वैमानिकैः कुसुमवर्षिभिरीडचमानो रेमे स्वयं स्वरतिरत्र गजेन्द्रलीलः ॥ २५ ॥
ततश्च कृष्णोपवने जलस्थलप्रसूनगन्धानिलजुष्टदिक्तटे ।
चचार भृङ्गप्रमदागणावृतो यथा मदच्युद् द्विरदः करेणुभिः ॥ २६ ॥
एवं शशाङ्कांशुविराजिता निशाः स सत्यकामोऽनुरताबलागणः ।
सिषेव आत्मन्यवरुद्धसौभगः सर्वाः शरत्काव्यकथारसाश्रयाः ॥ २७ ॥

**राजोवाच**

संस्थापनाय धर्मस्य प्रशमायेतरस्य च । अवतीर्णो हि भगवानंशेन जगदीश्वरः ॥ २८ ॥
स कथं धर्मसेतूनां वक्ता कर्ताऽभिरक्षिता । प्रतीपमाचरद् ब्रह्मन् परदाराभिमर्शनम् ॥ २९ ॥
आत्मारामो यदुपतिः कृतवान् वै जुगुप्सितम् । किमभिप्राय एतं नः संशयं छिन्धि सुव्रत ॥ ३० ॥

**श्रीशुक उवाच**

धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम्[2] । तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ॥ ३१ ॥
नैतत् समाचरेज्जातु मनसाऽपि ह्यनीश्वरः । नश्यत्याश्वाचरन् मौढ्याद् यथा रुद्रोऽपिबद् विषम् ॥
ईश्वराणां वचः सत्यं तथैवाचरितं क्वचित् । तेषां यत् स्ववचोयुक्तं बुद्धिमान् नैतदाचरेत् ॥ ३३ ॥
कुशलाचरितेनैषामिह चार्थो न विद्यते । विपर्ययेण चानर्थो निरहङ्कारिणां प्रभो ॥ ३४ ॥
किमुताखिलसत्वानां तिर्यङ्मर्त्यदिवौकसाम् । ईशितुश्चेशितव्यानां कुशलाकुशलान्वयः ॥ ३५ ॥

यत्पादपङ्कजपरागनिषेवतृप्ता योगप्रभावविधुताखिलकर्मबन्धाः ।
स्वैरं चरन्ति मुनयोऽपि न नह्यमानास्तस्येच्छयाऽऽत्तवपुषः कुत एव बन्धः ॥ ३६ ॥

---

१. गन्धर्वपाळिभिः ❋ २. साहसः ❋

गोपीनां तत्पतीनां च सर्वेषामपि देहिनाम् । योऽन्तश्चरति सोऽध्यक्ष एष क्रीडनदेहभाक् ॥ ३७ ॥
अनुग्रहाय भक्तानां मानुषं देहमाश्रितः । भजते तादृशीं क्रीडां यां श्रुत्वा तत्परो भवेत् ॥ ३८ ॥
नासूयन् नृप[1] कृष्णाय मोहितास्तस्य मायया । मन्यमानाः स्वपार्श्वस्थान् स्वान्स्वान् दारान् व्रजौकसः॥
ब्रह्मरात्र उपावृत्ते वासुदेवानुमोदिताः । अनिच्छन्त्यो ययुर्गोप्यः स्वगृहान् भगवत्प्रियाः ॥ ४० ॥
विक्रीडितं व्रजवधूभिरिदं च विष्णोः श्रद्धान्वितोऽनुशृणुयादथ वर्णयेद् यः ।
भक्तिं परां भगवति प्रतिलभ्य कामं हृद्रोगमाश्वपहिनोत्यचिरेण धीरः ॥ ४१ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे एकत्रिंशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

एकदा देवयात्रायां गोपाला जातकौतुकाः । अनोभिरनडुद्युक्तैः प्रययुस्तेऽम्बिकावनम् ॥ १ ॥
तत्र स्नात्वा सरस्वत्यां देवं पशुपतिं प्रभुम् । आनर्चुरर्हणैर्भक्त्या देवीं च नृपतेऽम्बिकाम् ॥ २ ॥
गावो हिरण्यं वासांसि मधु मध्वन्नमादृताः । ब्राह्मणेभ्यो ददुः सर्वे देवो नः प्रीयतामिति ॥ ३ ॥
ऊषुः सरस्वतीतीरे जलं प्राश्य यतव्रताः । रजनीं तां महाभाग नन्दसन्नन्दकादयः ॥ ४ ॥
कश्चिन्महानहिस्तस्मिन् विपिनेऽतिबुभुक्षितः । यदृच्छयाऽऽगतो नन्दं शयानमुरगोऽग्रसीत् ॥ ५ ॥
स चुक्रोशाहिना ग्रस्तः कृष्णकृष्ण महानयम् । सर्पो मां ग्रसते तात प्रपन्नं परिमोचय ॥ ६ ॥
तस्य चाक्रन्दितं श्रुत्वा गोपालाः सहसोत्थिताः । ग्रस्तं च दृष्ट्वा सम्भ्रान्ताः सर्पं विव्यधुरुल्मुकैः[2]॥
अलातैर्दह्यमानोऽपि नामुञ्चत् तमुरङ्गमः । तमस्पृशत् पदाऽभ्येत्य भगवान् सात्वताम्पतिः ॥ ८ ॥
स वै भगवतः श्रीमत्पादस्पर्शहताशुभः । भेजे सर्पवपुर्हित्वा रूपं विद्याधरार्चितम् ॥ ९ ॥
तमपृच्छद् हृषीकेशः प्रणतं समुपस्थितम् । दीप्यमानेन वपुषा पुरुषं हेममालिनम् ॥ १० ॥
को भवान् परया लक्ष्म्या रोचतेऽद्भुतदर्शनः । कथं जुगुप्सितामेतां गतिं वा प्रापितोऽवशः॥ ११ ॥

**सर्प उवाच**

अहं विद्याधरः कश्चित् सुदर्शन इति श्रुतः । श्रिया स्वरूपसम्पत्त्या विमानेनाचरं दिशः ॥ १२ ॥
ऋषीन् विरूपानङ्गिरसः प्राहसं रूपदर्पितः । तैरिमां प्रपितो योनिं प्रलब्धः स्वेन पाप्मना ॥ १३ ॥
शापो मेऽनुग्रहायैव कृतस्तैः करुणात्मभिः । यदहं लोकगुरुणा पादस्पृष्टो हताशुभः ॥ १४ ॥

---

१. नासूयन् खलु *     २. विव्यथुरुल्मुकैः *

तं त्वाऽहं भवभीतानां प्रपन्नानां भयापहम् । आपृच्छे शापनिर्मुक्तः पादस्पर्शादमीवहन् ॥ १५ ॥
प्रपन्नोऽस्मि महायोगिन् महापुरुष सत्पते । अनुजानीहि मां कृष्ण सर्वलोकेश्वरेश्वर ।
ब्रह्मदण्डाद् विमुक्तोऽहं सद्यस्तेऽच्युतदर्शनात् ॥ १६ ॥
यन्नाम गृह्णन्नखिलान् श्रोतॄनात्मानमेव च । सद्यः पुनाति किं भूयस्तस्य स्पृष्टः पदा हि ते ॥ १७ ॥

**श्रीशुक उवाच**

इत्यनुज्ञाप्य दाशार्हं परिक्रम्याभिवाद्य च । सुदर्शनो दिवं यातः कृच्छ्रान्नन्दश्च मोक्षितः[१] ॥ १८ ॥
निशाम्य कृष्णस्य तदात्मवैभवं व्रजौकसो विस्मितचेतसस्ततः ।
समाप्य तस्मिन् नियमं पुनर्व्रजं नृपाययुस्तत् कथयन्त आदृताः ॥ १९ ॥
कदाचिदथ गोविन्दो रामश्चाद्भुतविक्रमः । विजह्रतुर्वने रात्र्यां मध्यगौ व्रजयोषिताम्[२] ॥ २० ॥
उपगीयमानौ ललितं स्त्रीजनैर्बद्धसौहृदैः । स्वलङ्कृतानुलिप्ताङ्गौ स्रग्विणौ विरजाम्बरौ ॥ २१ ॥
निशामुखं मानयन्तावुदितोडुपतारकम् । मल्लिकागन्धमत्तालि जुष्टं कुमुदवायुना ॥ २२ ॥
जगतुः सर्वभूतानां मनःश्रवणमङ्गलम् । तौ कल्पयन्तौ युगपत् स्वरमण्डलमूर्च्छनाम्[३] ॥ २३ ॥
गोप्यस्तद्गीतमाकर्ण्य मूर्च्छिता नाविदन् नृप । श्लथद्दुकूलमात्मानं[४] स्रस्तकेशस्रजं ततः ॥ २४ ॥
एवं विक्रीडतोः स्वैरं गायतोः सम्प्रमत्तवत् । शङ्खचूड इति ख्यातो धनदानुचरोऽभ्यगात् ॥ २५ ॥
तयोर्निरीक्षतोरेव तन्नाथं प्रमदाजनम् । क्रोशन्तं कालयामास दिश्युदीच्यामशङ्कितः ॥ २६ ॥
क्रोशन्तं कृष्ण रामेति विलोक्य स्वपरिग्रहम् । यथा गा दस्युना ग्रस्ता भ्रातरावन्वधावताम् ॥ २७ ॥
मा भैष्टेत्यभयारावौ ताळहस्तौ मनस्विनौ । आसेदतुस्तं तरसा त्वरितं गुह्यकाधमम् ॥ २८ ॥
स वीक्ष्य तावनुप्राप्तौ कालमृत्यू इवोद्विजन् । विसृज्य स्त्रीजनं मूढः प्राद्रवज्जीवनेच्छया ॥ २९ ॥
तमन्वधावद् गोविन्दो यत्रयत्र स धावति । जिहीर्षुस्तच्छिरोरत्नं तस्थौ रक्षन् स्त्रियो बलः ॥ ३० ॥
अविदूर इवाभ्येत्य शिरस्तस्य दुरात्मनः । जहार मुष्टिनैवाङ्ग सहचूडामणिं विभुः ॥ ३१ ॥
शङ्खचूडं निहत्यैवं मणिमादाय भासुरम् । अग्रजायाददात् प्रीत्या पश्यन्तीनां च योषिताम्॥ ३२ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे द्वात्रिंशोऽध्यायः ॥**

---

१. मोचितः ❃ २. मध्ये गोव्रजयेषिताम् ❃
३. स्वरमण्डलमूर्च्छितम् ❃ ४. स्रंसद्दुकूलमात्मानम् ❃

**श्रीशुक उवाच**

गोप्यः कृष्णे वनं याते तमनुद्रुतचेतसः । कृष्णलीलां प्रगायन्त्यो निन्युर्दुःखेन वासरान् ॥ १ ॥

**गोप्य ऊचुः**

वामबाहुकृतवामकपोलो वल्गितभ्रुरधरार्पितवेणुम्[१] ।
कोमळाङ्गुलिभिराश्रितमार्गं[२] गोप्य ईरयति यत्र मुकुन्दः ॥ २ ॥
व्योमयानवनिताः सह सिद्धैर्विस्मितास्तदुपधार्य सलज्जाः ।
काममार्गणसमर्पितचित्ताः कश्मलं ययुरपस्मृतनीव्यः ॥ ३ ॥
हन्त चित्रमबलाः शृणुतेदं हारभास उरसिस्थितविद्युत् ।
नन्दसूनुरयमार्तजनानां शर्मदो यर्हि कूजितवेणुः ॥ ४ ॥
वृन्दशो व्रजवृषा मृगगावो वेणुवाद्यहृतचेतस एत्य ।
दन्तदष्टकबळा धृतकर्णा निद्रिता लिखितचित्रमिवासन् ॥ ५ ॥
बर्हिणः स्तबकधातुपलाशैर्बद्धमल्लपरिबर्हविडम्बः ।
कर्हिचित् सबल आळि स गोपैर्गाः समाह्वयति यत्र मुकुन्दः ॥ ६ ॥
तर्हि भुग्नगतयः सरितो वै तत्पदाम्बुजरजोऽनिलनीतम् ।
आमृशन् पयसि वा बहुपुण्याः प्रेमवेपितभुजा हतवेगाः ॥ ७ ॥
अनुचरैः समनुवर्णितवीर्य आदिपूरुष इवाचलभूतिः ।
वनचरो गिरितटेषु[३] चरन्तीर्वेणुनाऽऽह्वयति गाः स यदा हि ॥ ८ ॥
वनलतास्तरव आत्मनि विष्णुं व्यञ्जयन्त इव पुष्पफलाढ्याः ।
प्रणतभारविटपा मधुधाराः प्रेमहृष्टतनवः ससृजुः स्म ॥ ९ ॥
दर्शनीयविकचोत्पलमालादिव्यगन्धतुळसीमधुमत्तैः ।
अळिकुलैरलघुगीतमभीष्टमाद्रियद् यर्हि सन्धितवेणुः ॥ १० ॥
सरसि सारसहंसविहङ्गाश्चारुगीतहृतचेतस एत्य ।
हरिमुपासत ते यतचित्ता हन्त मीलितदृशो धृतमौनाः ॥ ११ ॥

---

१. अधरार्पितवेणुः *  २. आस्तृतमार्गः *  ३. निशितेषु *

सहबलः स्रगवतंसविलासः सानुषु क्षितिभृतो व्रजदेव्यः ।
आह्वयद्[1] यर्हि वेणुरवेण जातहर्ष उपरम्भति विश्वम् ॥ १२ ॥
महदतिक्रमणशङ्कितचेता मन्दमन्दमनुगर्जति मेघः ।
सुहृदमभ्यवर्षत् सुमनोभिश्छायया च विदधे वितपत्रम् ॥ १३ ॥
विविधगोपचरणेषु विदग्धो वेणुवाद्यमधुरां निजशिक्षाम् ।
तव सुतः सति यदाऽधरबिम्बे दत्तवेणुरनयत् स्वरजातीः ॥ १४ ॥
सुमनसस्तदुपधार्य सुरेशाः शक्रशर्वपरमेष्ठिपुरोगाः ।
कवय आनतकन्धरगात्रा विस्मयं[2] ययुरनिश्चिततत्त्वाः ॥ १५ ॥
निजपदाब्जदळैर्ध्वजवज्रनीरजाङ्कुशविचित्रललामैः ।
व्रजभुवः प्रशमयन् खुरतोदं वर्ष्मधुर्यगतिरीरितवेणुः ॥ १६ ॥
व्रजमितेन वयं सविलासवीक्षणार्पितमनोभववेगाः ।
व्रजगतिं गमिता न विदामः कश्मलेन कबरं वसनं वा ॥ १७ ॥
मणिधरः क्वचिदागमयन् गा मालया दयितगन्धतुळस्याः ।
प्रणयिनोऽनुचरस्य कदांऽसे[3] प्रक्षिपन् भुजमगायत यत्र ॥ १८ ॥
क्वणितवेणुमुप वञ्चितचित्ताः कृष्णमीयुरनु कृष्णगृहिण्यः ।
गुणगणार्णमनुगम्य हरिण्यो गोपिका इव विमुक्तगृहेशाः ॥ १९ ॥
कुन्ददामकृतकौतुकवेषो गोपगोधनवृतो यमुनायाम् ।
नन्दसूनुरनघे तव वत्सो नर्मदः प्रणयिनां विजहार ॥ २० ॥
मन्दवायुरुपवात्यनुकूलं मानयन् मलयजस्पर्शेन ।
वन्दिनस्तमुपदेवगणा[4] ये वाद्यगीतबलिभिः परिवव्रुः ॥ २१ ॥
वत्सलो व्रजगवां यदगाधो वन्द्यमानचरणः पथि वृद्धैः ।
कृत्स्नगोधनमपोह्य दिनान्ते गीतवेणुरनुगोद्धृतकीर्तिः ॥ २२ ॥
उत्सवं श्रममपोह्य दृशीनामुद्वहन् खुररजश्छुरितस्रक् ।
दित्सयैति सुहृदाशिष एष देवकीजठरभूरुडुराजः ॥ २३ ॥

---

१. आह्वयन् ❋ २. कश्मलम् ❋ ३. यदांऽसे ❋ ४. बन्दिनः.... ❋

मदविघूर्णितलोचन ईषन्मानदः स्वसुहृदां वनमाली ।
बदरपाण्डुवदनो मृदुगण्डं मण्डयन् कनककुण्डललक्ष्म्या ॥ २४ ॥
यदुपतिर्द्विरदराजविहारो यामिनीपतिरिवैष दिनान्ते ।
मुदितवक्त्र उपयाति दुरन्तं मोचयन् व्रजगवां दिनतापम् ॥ २५ ॥

**श्रीशुक उवाच**

एवं व्रजस्त्रियो राजन् कृष्णलीला नु गायतीः । रेमिरेऽहस्सु तच्चित्तास्तन्मनस्का महोदयाः ॥ २६ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे त्रयस्त्रिंशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

अथ तर्ह्यागतो गोष्ठमरिष्टो वृषभासुरः । महीं महाककुत्कायः कम्पयन् खुरविक्षताम् ॥ १ ॥
रवमाणः खरतरं पदा च विलिखन् महीम् । उद्यम्य पुच्छमभ्राणि विषाणाग्रेण चोद्धरन् ॥ २ ॥
किञ्चित्किञ्चिच्छकृन्मुञ्चन् मूत्रयन् स्तब्धलोचनः । यस्य निर्ह्रादितेनाङ्ग निष्ठुरेण गवां नृणाम् ॥ ३ ॥
पतन्त्यकालतो गर्भाः स्रवन्ति च भयेन वै । निर्विशन्ति घना यस्य ककुद्यचलशङ्कया ॥ ४ ॥
तं तीक्ष्णशृङ्गमुद्वीक्ष्य गोप्यो गोपाश्च[1] तत्रसुः । पशवो दुद्रुवुर्भीता राजन् सन्त्यज्य गोकुलम् ॥ ५ ॥
कृष्णकृष्णेति ते सर्वे गोविन्दं शरणं ययुः ॥ ६ ॥
भगवानथ तद् वीक्ष्य गोकुलं भयविद्रुतम् । मा भैष्टेति गिराऽऽश्वास्य वृषासुरमुपाह्वयत् ॥ ७ ॥
सपालैः पशुभिर्मन्द त्रासितैः किमसत्तम । बलदर्पहाऽहं दुष्टानां त्वद्विधानां दुरात्मनाम् ॥ ८ ॥
इत्यास्फोटयाच्युतोऽरिष्टं तळशब्देन कोपयन् । सख्युरंसे भुजाभोगं प्रसार्यावस्थितो हरिः ॥ ९ ॥
सोऽप्येवं कोपितोऽरिष्टः खुरेणावनिमुल्लिखन् । उद्यत्पुच्छभ्रमन्मेघः क्रुद्धः कृष्णमुपाद्रवत् ॥ १० ॥
अग्रन्यस्तविषाणाग्रः स्तब्धासृग्लोचनोऽच्युतम् । कटाक्षिप्याद्रवत्[2] तूर्णमिन्द्रमुक्तोऽशनिर्यथा ॥
गृहीत्वा शृङ्गयोस्तं वा अष्टादशपदानि सः । प्रत्यपोवाह भगवान् गजःप्रतिगजं यथा ॥ १२ ॥
सोऽपविद्धो भगवता पुनरुत्थाय सत्वरः । आपतत् स्विन्नसर्वाङ्गो निःश्वसन् क्रोधमूर्च्छितः[3] ॥
तमापतन्तं स निगृह्य शृङ्गयोः पदा समाक्रम्य निपात्य भूतळे ।
निष्पीडयामास यथाऽऽर्द्रमम्बरं कृत्वा विषाणेन जघान सोऽपतत् ॥ १४ ॥

---

१. गोगोपालाश्च ❋ २. कटाक्षित्वाऽभ्यद्रवत् ❋ ३. कोपमूर्च्छितः ❋

असृग् वमन् मूत्रशकृत् समुत्सृजन् क्षिपंश्च पादाननिमीलितेक्षणः ।
जगाम कृच्छ्रं निरृतेरथ क्षयं पुष्पैः किरन्तो हरिमीडिरे सुराः ॥ १५ ॥

एवं ककुद्मिनं हत्वा स्तूयमानः स्वजातिभिः । विवेश भगवान् गोष्ठं[1] गोपीनां नयनोत्सवः ॥ १६ ॥

अरिष्टे निहते गोष्ठे कृष्णेनाद्भुतकर्मणा । कंसाय प्राह भगवान् नारदो देवदर्शनः ॥ १७ ॥

यशोदायाः सुतां कन्यां देवक्याः कृष्णमेव च । रामं च रोहिणीपुत्रं वसुदेवेन बिभ्यता ।
न्यस्तौ स्वमित्रे नन्दे वै याभ्यां ते पुरुषा हताः ॥ १८ ॥

निशम्य तद् भोजपतिः कोपात् प्रचलितेन्द्रियः । निशातमसिमादत्त वसुदेवजिघांसया ॥ १९ ॥

निवारितो नारदेन तत्सुतौ मृत्युमात्मनः । ज्ञात्वा लोहमयैः पाशैर्बबन्ध सह भार्यया ॥ २० ॥

प्रतियाते तु देवर्षौ कंस आशास्य केशिनम् । प्रेषयामास हन्येतां भवता रामकेशवौ ॥ २१ ॥

ततो मुष्टिकचाणूरछलकोसलकादिकान् । अमात्यान् हस्तिपांश्चैव समाहूयाह भोजराट् ॥ २२ ॥

भोभो निशम्यतामेतद् वीरचाणूरमुष्टिकौ[2] । नन्दव्रजे किलासाते सुतावानकदुन्दुभेः ॥ २३ ॥

रामकृष्णौ तु तौ मह्यं[3] मृत्यू कालनिदर्शितौ । भवद्भ्यामिह सम्प्राप्तौ हन्येतां मल्ललीलया ॥ २४ ॥

मञ्चाः क्रियन्तां विविधा मल्लरङ्गपरिश्रिताः । पौरा जानपदाः सर्वे पश्यन्तु स्वैरसंयुगम् ॥ २५ ॥

महामात्र निबोधेदं वचो मम महामते । गजः कुवलयापीडः प्रभिन्नकरटामुखः ॥ २६ ॥

संस्थाप्यो द्वारि रङ्गस्य करारोपितमुद्गरः । तेन तौ तत्र[4] हन्तव्यौ सुतावानकदुन्दुभेः ॥ २७ ॥

सोऽथाकुलमतिः[5] प्राह निहन्तव्यौ कथं मया । स्वस्रीयौ भोजराजस्य कंसस्य जगतीपतेः ॥ २८ ॥

इत्युक्तस्तेन[6] कंसस्तु महामात्रेण दुर्मतिः । उवाच भूयो वचनं समेतान् श्रावयन् नृप ॥ २९ ॥

शृणुध्वमेतद् वचनं मयोदितं निशम्य सर्वे हृदि धारयन्तु तत् ।
येनाहमेतेष्वसुहृत्त्वमादितश्चरामि बन्धुष्वपि तस्य कारणम् ॥ ३० ॥

माता मम महाभागा कदाचित् कमलेक्षणा । विचचार[7] गृहोद्याने मन्दमारुतवीजिते ॥ ३१ ॥

प्रोत्फुल्लाशोकबकुलपूगपुन्नागशोभिते[8] । भ्रमद्भ्रमरसङ्घाते कूजत्कोकिलसङ्कुले ॥ ३२ ॥

नृत्यच्छिखण्डिनिवहे मर्कटाटोपसुन्दरे । वसन्तसमये रम्ये सालमण्डलमण्डिते ॥ ३३ ॥

---

१. विवेश गोष्ठं सबलः ❋ २. वीर चाणूर मुष्टिक ❋ ३. रामकृष्णौ तु तौ मह्यम् ❋
४. तेन ते तत्र ❋ ५. सोऽप्याकुलमतिः ❋ ६. इत्युक्ते तेन ❋ ७. विचरन्ती ❋ ८. ...वकुळ... ❋

चरन्ती तत्र मे माता चिन्तयामास सुव्रता। भर्तारं कामसन्तप्ता ऋतुस्नाता स्वलङ्कृता ॥ ३४ ॥
तत्रैव कश्चिद् गन्धर्वो द्रुमिलो नाम[1] नामतः। चरन्नन्तर्हितः काले दृष्ट्वा तामेकचारिणीम्॥ ३५ ॥
विज्ञाय चिन्तितं तस्याः सर्वसत्त्वाशयार्थवित्। औग्रसेनं वपुर्बिभ्रत् सस्मितालापवीक्षितम्॥ ३६ ॥
तामाससाद कामार्तः कामयानां पतिव्रताम्। अजानमाना साऽभ्येत्य रेमे तेन समं वने ॥ ३७ ॥

सा तं विदित्वा रमणेतरं सती नितान्तखेदाविललोचनाशया।
उवाच कस्त्वं कितवार्यगर्हितं दुरात्मना येन कृतं त्वयेदृशम् ॥ ३८ ॥
इति ब्रुवन्तीं परिसान्त्वयन् शनैः स दीर्घबाहुर्द्रुमिलोऽभ्यभाषत।
वयं हि गन्धर्वकुलोद्भवाः प्रिये गीर्वाणतुल्यामरवल्लभानुगाः ॥ ३९ ॥
भवादृशीनां मनुजाङ्गनानां जानीहि भद्रे सुलभा वयं न च।
जराविनाशाद्यखिलाधिभागिनां नृणां सुराणां महदन्तरं प्रिये ॥ ४० ॥

इति ब्रुवन्तं सा भूयः प्राह क्रोधाकुलेन्द्रिया। किं मां सान्त्वयसे भूयः कृत्वेत्थं दुष्टचेष्टितम् ॥ ४१ ॥

इमानतिक्रम्य जलाग्निमेदिनीसमीरणाकाशनिशेशसूर्यान्।
दिक्कालधर्मानवधार्य येन[2] दुरात्मनेत्थं मलिनीकृताऽहम् ॥ ४२ ॥

गजेनेव मदान्धेन पद्मिनी वनमध्यगा। विशृङ्खलेन विमला येनाहं मलिनीकृता।
स त्वं किमिति मां भूयः सान्त्वयस्यमराधम ॥ ४३ ॥
इति ब्रुवन्तीं प्रोवाच स भूयः शापशङ्कितः। अनुलोमः सरोजाक्षि मनुष्यासु दिवौकसाम् ॥ ४४ ॥
नराणां देवकान्तासु प्रतिलोमो हि सङ्गमः। जानीहि नाहमागस्कृत् तेन पङ्कजगन्धिनि ॥ ४५ ॥
तस्मात् ते जायते पुत्रो मद्वीर्यं न वृथा भवेत्। श्रीमान् धीमान् महोत्साहो न मे वाग् जायते मृषा[3] ॥
इत्येवंवादिनं क्रुद्धा मम माता यशस्विनी। प्राह सन्त्यज्य सन्तप्ता पातिव्रत्यं सुदुर्लभम् ॥ ४७ ॥
निस्सेतोर्भिन्नवृत्तस्य पापस्योन्मार्गवर्तिनः। क्रूरस्ते तनयो भूयात् साहसी निर्दयोऽघृणः ॥ ४८ ॥
नानुग्राह्यो देवतानां द्विजानां च तपस्विनाम्। इत्थं वदन्त्यां तस्यां स क्रुद्धायां शापशङ्कितः॥ ४९ ॥
तावकानां भवेच्छत्रुरित्युक्त्वान्तरधीयत। गते तस्मिन् गृहोद्यानान्माता मम तपस्विनी[4] ॥ ५० ॥
केनाप्यज्ञातवृत्तान्ता गृहानेवाभ्यपद्यत। ततः सा गर्भमालम्ब्य कालेनैव सुषाव माम् ॥ ५१ ॥

---

१. द्रमिळो नाम ❋ एवमग्रेऽपि। २. अवधीर्य येन ❋ ३. जायतां मृषा ❋ ४. यशस्विनी ❋

इति मे नारदः प्राह कदाचिद् भगवान् ऋषिः । ततः प्रभृत्यहं द्वेष्मि तानेतान् बन्धुदुर्जनान् ॥ ५२ ॥
यूयं तत्र प्रमाणं हि द्विषन्त्येतेऽपि मां सदा । उग्रसेनं च दुर्बुद्धिमाहुकं च[१] दुराशयम् ॥ ५३ ॥
वसुदेवं च कितवमन्यांश्च तदुपाश्रयान् । हत्वा न जायते दोषो मम गन्धर्वजन्मनः ॥ ५४ ॥
तेनादेक्ष्यामि परुषं हन्येतामिति तावहम् । ताभ्यां हताभ्यां बालाभ्यां कुञ्जरेण बलीयसा ॥ ५५ ॥
कृत्वा पारत्रिकीं पूजां यान्तु तत्पदवीमिमे । वसुदेवोग्रसेनौ च तथाऽन्यौ नन्ददेवकौ ॥ ५६ ॥
गोपाला यादवाश्चैव ये चान्येताननुव्रताः । पश्यन्तु निभृतैर्नेत्रैर्हन्यमानौ[२] स्वदारकौ ॥ ५७ ॥
आहूयन्तां जनपदाः पश्यन्तु मम पौरुषम् ॥ ५८ ॥
महामात्र त्वया भद्र रङ्गद्वार्युपनीयताम् । द्विपः कुवलयापीडो जहि तेन ममाहितौ ॥ ५९ ॥
आरभ्यतां धनुर्यागश्चतुर्दश्यां यथाविधि । विशसन्तु पशून् मेध्यान् भूतराजाय मीढुषे[३] ॥ ६० ॥
इत्याज्ञाप्यार्थतत्त्वज्ञमाहूय यदुपुङ्गवम् । गृहीत्वा पाणिना पाणिं तत्राक्रूरमुवाच ह ॥ ६१ ॥
भोभो दानपते मह्यं क्रियतां मैत्रमादृतः[४] । नान्यस्त्वत्तो हिततमो विद्यते भोजवृष्णिषु ॥ ६२ ॥
अतस्त्वामाश्रितः सौम्य कार्यगौरवसाधनम् । यथेन्द्रो विष्णुमाश्रित्य स्वार्थमध्यगमद् विभुः ॥ ६३ ॥
गच्छ नन्दव्रजं तत्र सुतावानकदुन्दुभेः । आसाते ताविहानेन रथेनानय माचिरम् ॥ ६४ ॥
निसृष्टः किल मे मृत्युर्देवैर्वैकुण्ठसंश्रयैः । तावानय समं गोपैर्नन्दाद्यैः साभ्युपायनैः ॥ ६५ ॥
घातयिष्य इहानीतौ कालकल्पेन हस्तिना । यदि मुक्तौ ततो मल्लैर्घातये वैद्युतोपमैः ॥ ६६ ॥
तयोर्निहतयोस्तप्तान् वसुदेवपुरोगमान् । तद्बन्धून् निहनिष्यामि वृष्णिभोजदशार्हकान् ॥ ६७ ॥
उग्रसेनं मत्पितरं स्थविरं राज्यकामुकम् । तद्भ्रातरं देवकं च ये चान्ये विद्विषो मम ॥ ६८ ॥
ततश्चैषा मही मित्र भवित्री नष्टकण्टका । जरासन्धो मम गुरुर्द्विविदो दयितः सखा ॥ ६९ ॥
शम्बरो नरको बाणो मय्येव कृतसौहृदाः । तैरहं सुरपक्षीयान् हत्वा भोक्ष्ये महीं नृपान् ॥ ७० ॥
एतज्ज्ञात्वाऽऽनय क्षिप्रं रामकृष्णाविहार्भकौ । धनुर्यागनिरीक्षार्थं[५] द्रष्टुं यदुपुरश्रियम्[६] ॥ ७१ ॥

**अक्रूर उवाच**

राजन् मनीषितं सम्यक् तव चावद्यमार्जनम् । सिद्ध्यसिद्ध्योः समं कुर्याद्[७] दैवं हि फलभावनम् ॥

---

१. दुर्बुद्धिं देवकं च ❋ २. विवृतैर्नेत्रैर्हन्यमानौ ❋ ३. मीढ्वुळे ❋ ४. मैत्रमादृतम् ❋
५. धनुर्महनिरीक्षार्थम् ❋ ६. यदुपुरस्त्रियः ❋ ७. समः कुर्यात् ❋

मनोरथान् करोत्युच्चैर्जनो दैवहतानपि । युज्यते हर्षशोकाभ्यां तथाप्याज्ञां[१] करोमि ते ॥ ७३ ॥

**श्रीशुक उवाच**

एवमादिश्य चाक्रूरं मन्त्रिणश्च विसृज्य सः । प्रविवेश गृहं कंसस्तथाऽक्रूरः स्वमालयम् ॥ ७४ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे चतुस्त्रिंशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

केशी तु कंसप्रहितः खुरैर्महीं महाहयो निर्दरयन् मनोजवः ।
सटावधूताभ्रविमानसङ्कुलं[२] कुर्वन् नभो हेषितभीषिताखिलः[३] ॥ १ ॥

विशालनेत्रो विकटास्यकोटरो बृहद्गळो नीलमहाम्बुदोपमः ।
दुराशयः कंसहितं चिकीर्षुर्व्रजं स नन्दस्य जगाम कम्पयन् ॥ २ ॥

तं त्रासयन्तं भगवान् स्वगोकुलं स्वहेषितैर्वालविघूर्णिताम्बुदम्[४] ।
आत्मानमाजौ मृगयन्तमग्रणीरुपाह्वयत् स व्यनदन् मृगेन्द्रवत् ॥ ३ ॥

स तं निशम्याभिमुखो मुखेन खं[५] पिबन्निवाभ्यद्रवदत्यमर्षणः ।
जघान पद्भ्यामरविन्दलोचनं दुरासदश्चण्डजवो दुरत्ययः ॥ ४ ॥

तद् वञ्चयित्वा तमधोक्षजो रुषा प्रगृह्य दोर्भ्यां परिविध्य पादयोः[६] ।
सावज्ञमुत्सृज्य धनुःशतान्तरे यथोरगं तार्क्ष्यसुतो व्यवस्थितः ॥ ५ ॥

स लब्धसञ्ज्ञः पुनरुत्थितो मुखं[७] व्यादाय केशी तरसाऽऽपतद् हरिम् ।
सोऽप्यस्य वक्त्रे भुजमुत्तरं स्मयन्[८] प्रवेशयामास यथोरगं बिले ॥ ६ ॥

दन्ता निपेतुर्भगवद्भुजस्पृशस्ते केशिनस्तप्तमयस्पृशो यथा ।
बाहुश्च तद्देहगतो महात्मनो यथाऽऽमयः संववृधे उपेक्षितः ॥ ७ ॥

समेधमानेन स कृष्णबाहुना निरुद्धवायुश्चरणांश्च विक्षिपन् ।
प्रस्विन्नगात्रः परिवृत्तलोचनः पपात लण्डं विसृजन् क्षितौ व्यसुः ॥ ८ ॥

---

१. अथाप्याज्ञाम् * २. सटाविधूताभ्र... * ३. हेषितभीषिताखिलः * ४. स्वहेषितैर्बाल.... *
५. अभिमुखो नभस्तळम् * ६. परिपीड्य पादयोः * ७. उत्थितो रुषा * ८. भुजमुत्तमं स्मयन् *

तद्देहतः कर्कटिकाफलोपमाद्[1] व्यसोरपाकृष्य भुजं महाभुजः ।
अविस्मितोऽयं निहतारिरुस्रियैः प्रसूनवर्षैर्ववृषद्भिरीडितः ॥ ९ ॥

देवर्षिरुपसङ्गम्य भगवत्प्रवरो नृप[2] । कृष्णमक्लिष्टकर्माणं रहस्येतदभाषत ॥ १० ॥

कृष्णकृष्णाप्रमेयात्मन् योगेश जगदीश्वर । वासुदेवाखिलावास सात्वतां प्रवर प्रभो ॥ ११ ॥

त्वमात्मा सर्वभूतानामेको ज्योतिरिवैधसाम् । गूढो गुहाशयः साक्षी महापुरुष ईश्वरः ॥ १२ ॥

आत्मनाऽऽत्माश्रयः पूर्वं मायया सृजसे गुणान् । तैरिदं सत्यसङ्कल्पः सृजस्यत्स्यवसीश्वरः ॥ १३ ॥

स त्वं भूभारभूतानां दैत्यप्रमथरक्षसाम् । अवतीर्णो विनाशाय साधूनां रक्षणाय च ॥ १४ ॥

दिष्ट्या ते निहतो दैत्यो लीलयाऽयं हयाकृतिः । अस्य[3] हेषितसन्त्रस्तास्त्यजन्त्यनिमिषा दिवम् ॥

चाणूरं मुष्टिकं चैव मल्लानन्यांश्च हस्तिनम् । कंसं च निहतं द्रक्ष्ये परश्वोऽहनि ते विभो ॥ १६ ॥

तस्यानु शङ्खयवनमुराणां नरकस्य च । पारिजातस्य हरणमिन्द्रस्य च पराजयम् ॥ १७ ॥

उद्वाहं वीरकन्यानां वीर्यशुल्कादिलक्षणम् । नृगस्य मोक्षणं पश्चाद्[4] द्वारकायां जगत्पते ॥ १८ ॥

स्यमन्तकस्य च मणेरादानं सह भार्यया । मृतपुत्रप्रदानं च[5] ब्राह्मणस्य स्वधामतः ॥ १९ ॥

पौण्ड्रकस्य वधं पश्चात् काशिपुर्याश्च दीपनम् । दन्तवक्रस्य निधनं चैद्यस्य च महाक्रतौ ॥ २० ॥

यानि चान्यानि वीर्याणि द्वारकामावसन् भवान् । कर्ता द्रक्ष्याम्यहं तानि गेयानि कविभिर्भुवि ॥ २१ ॥

अथ ते कालरूपस्य क्षपयिष्णोरमुष्य वै । अक्षोहिणीनां निधनं द्रक्ष्याम्यर्जुनसारथेः ॥ २२ ॥

विशुद्धविज्ञानघनं स्वसंस्थया समाप्तसर्वार्थममोघवर्तिनम् ।
स्वतेजसा नित्यनिवृत्तमायागुणप्रवाहं भगवन्तमीमहि ॥ २३ ॥

त्वामीश्वरं स्वाश्रयमात्ममायया विनिर्मिताशेषविशेषकल्पनम् ।
क्रीडार्थमाद्यन्त मनुष्यविग्रहं नतोऽस्मि धुर्यं यदुवृष्णिसात्त्वताम् ॥ २४ ॥

**श्रीशुक उवाच**

एवं यदुपतिं कृष्णं भगवत्प्रवरो मुनिः[6] । प्रणिपत्याभ्यनुज्ञातो ययौ तद्दर्शनोत्सवः ॥ २५ ॥

भगवानपि गोविन्दो हत्वा केशिनमाहवे । पशूनपालयत् पालैः प्रीतैर्व्रजसुखावहः ॥ २६ ॥

---

१. कर्कटकीफलोपमात् ❋ २. भागवतप्रवरो नृप ❋ ३. अस्य हेषित.... ❋ ४. पापात् ❋
५. मृतपुत्रोपादानं च ❋ ६. भागवतप्रवरो मुनिः ❋

एकदा ते पशून् पालाश्चारयन्तोऽद्रिसानुषु । चक्रुर्निलायनक्रीडां[१] चोरपालापदेशतः ॥ २७ ॥
तत्रासन् कतिचिच्चोराः पालाश्च कतिचिन्नृप । मेषायिताश्च तत्रैके विजह्रुरकुतोभयाः ॥ २८ ॥
मयपुत्रो महामायो व्योमो गोपालवेषधृक्[२] । मेषायितानपोवाह प्रायश्चोरायितो बहून् ॥ २९ ॥
गिरिदर्यां विनिक्षिप्य नीतंनीतं[३] महासुरः । शिलया पिदधे द्वारं चतुःपञ्चावशेषिताः ॥ ३० ॥
तस्य तत् कर्म विज्ञाय कृष्णः शरणदः सताम् । गोपान् नयन्तं जग्राह वृकं हरिरिवौजसा ॥ ३१ ॥
स निजं रूपमास्थाय गिरीन्द्रसदृशं बली । इच्छन् विमोक्तुमात्मानं नाशक्नोद् ग्रहणातुरः[४] ॥ ३२ ॥
तं निगृह्याच्युतो दोर्भ्यां पातयित्वा महीतळे । पश्यतां दिवि देवानां पशुमारममारयत् ॥ ३३ ॥
गुहापिधानं निर्भिद्य गोपान् निस्सार्य कृच्छ्रतः । स्तूयमानः सुरैर्गोपैः प्रविवेश स्वगोकुलम् ॥ ३४ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे पञ्चत्रिंशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

अक्रूरोऽपि च तां रात्रिं मधुपुर्यां महामतिः । उषित्वा रथमास्थाय प्रययौ नन्दगोकुलम् ॥ १ ॥
गच्छन् पथि महाभागो भगवत्यम्बुजेक्षणे । भक्तिं परामुपगत एतदेवमचिन्तयत् ॥ २ ॥

**अक्रूर उवाच**

किं मयाऽऽचरितं भद्रं किं तप्तं परमं तपः । कि वाऽथाप्यर्हते दत्तं यद् द्रक्ष्याम्यद्य केशवम् ॥ ३ ॥
ममैतद् दुर्लभं मन्ये उत्तमश्लोकदर्शनम् । विषयात्मनो यथा ब्रह्मकीर्तनं शूद्रजन्मनः ॥ ४ ॥
मैवं मामवमंस्यामि स्यादेवाच्युतदर्शनम् । ह्रियमाणः कालनद्यां कचित् तरति कश्चन ॥ ५ ॥
ममाद्यामङ्गळं नष्टं फलवांश्चैव मे भवः । यन्नमस्ये भगवतो योगिध्येयाङ्घ्रिपङ्कजम् ॥ ६ ॥

कंसो बताद्याकृत मेऽत्यनुग्रहं द्रक्ष्येऽङ्घ्रिपद्मं प्रहितोऽमुना हरेः ।
कृतावतारस्य दुरत्ययं तमः पूर्वेऽतरन् यन्नखमण्डलत्विषा ॥ ७ ॥
यदर्चितं ब्रह्मभवादिभिः सुरैः श्रिया च देव्या मुनिभिः ससात्वतैः ।
गोचारणायानुचरैश्चरद् वने[५] यद् गोपिकानां कुचकुङ्कुमाङ्कितम् ॥ ८ ॥

---

१. चक्रुर्निलायनक्रीडाः ❋ २. गोपालरूपधृक् ❋ ३. नीतान् नीतान् ❋
४. गुरुणाऽऽतुरः ❋ ५. अनुचरैः समं वने ❋

द्रक्ष्यामि नूनं सुकपोलनासिकं स्मितावलोकारुणकञ्जलोचनम् ।
मुखं मुकुन्दस्य गुडाळकावृतं प्रदक्षिणं मे प्रचरन्ति वै मृगाः ॥ ९ ॥
अप्यद्य विष्णोर्मनुजत्वमीयुषो भारावताराय भुवो निजेच्छया ।
लावण्यधाम्नो भवितोपलम्भनं मह्यं ननु स्यात् फलमद्य संदृशः ॥ १० ॥
य ईक्षिताऽहंरहितोऽप्यसत्सतोः स्वतेजसाऽपास्ततमोभिदाभ्रमः ।
स्वमाययाऽऽत्मन् रचितेषु तत् सन् प्राणादिभिर्जन्तुषु भाति चित्रधा ॥ ११ ॥
यस्याखिलामीवहभिः सुमङ्गळैर्वाचो विमिश्रा गुणकर्मजन्मभिः ।
प्राणन्ति शुम्भन्ति पुनन्ति वै जगद् यास्तद्विरक्ताः स्युरशोभना मताः ॥ १२ ॥
स चावतीर्णः किल सात्वतान्वये स्वसेतुपालामरवर्यशर्मकृत् ।
यशो वितन्वन् व्रज आस्त ईश्वरो गायन्ति देवास्तदशेषमङ्गळम् ॥ १३ ॥
तं त्वद्य नूनं महतां गतिं गुरुं त्रैलोक्यकान्तं दृशिमन्महोत्सवम् ।
रूपं दधानं श्रिय ईप्सितास्पदं द्रक्ष्ये ममासन्नुषसः सुदर्शनाः ॥ १४ ॥
अप्यङ्घ्रिमूले पतितस्य मे विभुः शिरस्यधास्यन्निजहस्तपङ्कजम् ।
दत्ताभयं कालभुजङ्गरंहसा प्रोद्वेजितानां शरणैषिणां नृणाम् ॥ १५ ॥
समर्हणं यत्र निधाय कौशिकस्तथा बलिश्चाप जगत्त्रयेन्द्रताम् ।
यद् वा विहारे व्रजयोषितां श्रमं स्पर्शेन सौगन्धिकगन्ध्यपानुदत् ॥ १६ ॥
न मय्युपैत्यप्रियबुद्धिमच्युतः कंसस्य भृत्यः प्रहितोऽपि विश्वदृक् ।
योऽन्तर्बहिश्चेतस एतदीहितं क्षेत्रज्ञ ईक्षत्यमलेन चक्षुषा ॥ १७ ॥
अप्यङ्घ्रिमूले पतितं कृताञ्जलिं मामीक्षते सस्मितमार्द्रया दृशा ।
सपद्यपध्वस्तसमस्तकिल्बिषो वोढा मुदं वीतविशङ्क ऊर्जिताम् ॥ १८ ॥
सुहृत्तमं ज्ञातिमनन्यदैवतं दोर्भ्यां बृहद्भ्यां परिरप्स्यतेऽथ माम्[१] ।
आत्मा हि तीर्थीक्रियते तदैव मे बन्धश्च कामात्मक उच्छ्वसित्यतः ॥ १९ ॥
लब्धाङ्गसङ्गं प्रणतं कृताञ्जलिं मां वक्ष्यतेऽक्रूर ततेत्युरुश्रवाः ।
तदा वयं जन्मभृतो महीयसा नैवादृतो यो धिगमुष्य जन्म तत् ॥ २० ॥

---

१. परिरभ्यतेऽथ माम् ❋

न तस्य कश्चिद् दयितः सुहृत्तमो न वाऽप्रियो द्वेष्य उपेक्ष्य एव च ।
तथापि भक्तान् भजते यथायथा[1] वनस्पतिर्यद्वदुपाश्रितार्थदः ॥ २१ ॥
किञ्चाग्रजो माऽवनतं यदूत्तमः[2] स्मयन् परिष्वज्य गृहीतसञ्चितौ[3] ।
गृहं प्रवेश्याप्तसमस्तसत्कृतं सम्प्रक्ष्यते कंसकृतं स्वबन्धुषु ॥ २२ ॥

**श्रीशुक उवाच**

इति सञ्चिन्तयन् कृष्णं श्वफल्कतनयोऽध्वनि । रथेन गोकुलं प्राप्तः सूर्यश्चास्तं गिरिं नृप ॥ २३ ॥
पदानि तस्याखिललोकपालकिरीटचूडामणिपादरेणोः ।
ददर्श गोष्ठे क्षितिकौतुकानि विलक्षितान्यब्जयवाङ्कुशाद्यैः ॥ २४ ॥
तद्दर्शनाह्लादविवृद्धसम्भ्रमः प्रेम्णोत्थरोमाऽश्रुकळाकुलेक्षणः ।
रथादवस्कन्द्य स तेष्ववेष्टत प्रभोरिमान्यङ्घ्रिरजांस्यहो इति ॥ २५ ॥
ददर्श कृष्णं रामं च व्रजे गोदोहनं गतौ । पीतनीलाम्बरधरौ शारदाम्बुरुहेक्षणौ ॥ २६ ॥
किशोरौ श्यामळश्वेतौ श्रीनिकेतौ बृहद्भुजौ । सुमुखौ सुन्दरवरौ बालद्विरदविक्रमौ ॥ २७ ॥
ध्वजवज्राङ्कुशाम्भोजैश्चिह्नितैरङ्घ्रिभिर्व्रजम् । शोभयन्तौ महात्मानौ सानुक्रोशस्मितेक्षणौ ॥ २८ ॥
उदाररुचिरक्रीडौ स्रग्विणौ वनमालिनौ । पुण्यगन्धानुलिप्ताङ्गौ स्नातौ विरजवाससौ ॥ २९ ॥
प्रधानपुरुषावाद्यौ जगद्धेतू जगत्पती । अवतीर्णौ जगत्यर्थे स्वांशेन बलकेशवौ ॥ ३० ॥
दिशो वितिमिरा राजन् कुर्वाणौ प्रभया स्वया । यथा मारकतः शैलो[4] रौप्यश्च कनकाचितौ ॥ ३१ ॥
रथात् तूर्णमवप्लुत्य सोऽक्रूरः स्नेहविह्वलः । पपात चरणोपान्ते दण्डवद् रामकृष्णयोः ॥ ३२ ॥
भगवद्दर्शनाह्लादबाष्पपर्याकुलेक्षणः । पुळकाञ्चिताङ्ग औत्कण्ठ्यात् व्याख्याने[5] नाशकन्नृप ॥
भगवांस्तदभिप्रेत्य रथाङ्गाङ्कितपाणिना । परिरेभेऽभ्युपाकृष्य[6] प्रीतः प्रणतवत्सलः ॥ ३४ ॥
सङ्कर्षणश्च प्रणतमुपगुह्य महामनाः । गृहीत्वा पाणिना पाणिमनयत् सानुजो गृहम् ॥ ३५ ॥
पृष्ट्वाऽथ स्वागतं तस्मै निवेद्य परमासनम् । प्रक्षाळ्य विधिवत् पादौ मधुपर्कार्हमाहरत् ॥ ३६ ॥
निवेद्य गां चातिथये संवाह्य श्रान्तमादृतः । अन्नं बहुगुणं मेध्यं श्रद्धयोपाहरद् विभुः ॥ ३७ ॥

---

१. यथातथा ❋ २. किञ्चाग्रतो माऽवनतं यदूत्तमे (?) ❋ ३. गृहीतमानने ❋
४. मरतकः शैलः ❋ ५. व्याख्यातुम् ६. परिरेभे ह्युपाकृष्य ❋

तस्मै भुक्तवते प्रीत्या रामः परमधर्मवित् । मुखवासैर्गन्धमाल्यैः परां प्रीतिं व्यधात् पुनः ॥ ३८ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे षट्त्रिंशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

सुखोपविष्टः पर्यङ्के रामकृष्णोरुमानितः । लेभे मनोरथान् सर्वान् पथि यान् स चकार ह ॥ १ ॥

किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने । तथापि तत्परा राजन् नैव वाञ्छन्ति किञ्चन ॥ २ ॥

सायन्तनाशनं कृत्वा भगवान् देवकीसुतः । सुहृत्सु वृत्तिं कंसस्य पप्रच्छान्यच्चिकीर्षितम्[१] ॥ ३ ॥

पृष्टो भगवते[२] सर्वं वर्णयामास माधवः । वैरानुबन्धं यदुषु वसुदेववधोद्यमम् ॥ ४ ॥

यत्सन्देशो यदर्थं[३] वा दूतः सम्प्रेषितः स्वयम् । यदुक्तं नारदेनास्य स्वजन्मानकदुन्दुभेः ॥ ५ ॥

श्रुत्वाऽक्रूरवचः कृष्णो बलश्च परवीरहा । प्रहस्य नन्दं पितरं राज्ञाऽऽदिष्टं विजज्ञतुः ॥ ६ ॥

गोपान् समादिशत् सोऽपि गृह्यतां सर्वगोरसः । उपायनानि गृह्णीध्वं युज्यन्तां शकटानि[४] च ॥ ७ ॥

यास्यामः श्वो मधुपुरीं दास्यामो नृपते रसान् । द्रक्ष्यामः सुमहत् पर्व यान्ति जानपदाः किल ।
एवमाघोषयत् क्षत्त्रा नन्दगोपः स्वगोकुले ॥ ८ ॥

गोप्यस्तास्तदुपश्रुत्य बभूवुर्व्यथिताशयाः । रामकृष्णौ पुरीं नेतुमक्रूरं व्रजमागतम् ॥ ९ ॥

काश्चित् तत्कृतहृत्तापश्वासम्लानमुखश्रियः । स्रंसद्दुकूलवलयकेशग्रन्थ्यश्च[५] काश्चन ॥ १० ॥

अन्याश्च तदनुध्याननिवृत्ताशेषवृत्तयः । नाभ्यजानन्निमं लोकमात्मलोकं गता इव ॥ ११ ॥

स्मरन्त्यश्चापराः शौरेरनुरागस्मितेरिताः । हृदिस्पृशश्चित्रपदा गिरः संमुमुहुः स्त्रियः ॥ १२ ॥

गतिं सुललितां चेष्टां स्निग्धहासावलोकनम् । शोकापहानि नर्माणि प्रोद्दामचरितानि च ॥ १३ ॥

चिन्तयन्त्यो मुकुन्दस्य भीता विरहकातराः । समेताः सङ्घशः प्रोचुरश्रुमुख्योऽच्युताशयाः॥ १४ ॥

**गोप्य ऊचुः**

अहो विधातस्तव न क्वचिद् दया संयोज्य मैत्र्या प्रणयेन देहिनः ।
तांश्चाकृतार्थान् वियुनङ्क्ष्यपार्थकं विचेष्टितं तेऽर्भकचेष्टितं यथा ॥ १५ ॥

---

१. पप्रच्छास्य चिकीर्षितम् ❋ २. भगवता ३. यदर्थे ४. युज्यन्तां शकटानि ❋
५. केशग्रन्थ्यश्च ❋

यस्त्वं प्रदर्श्यासितकुन्तळावृतं मुकुन्दवक्त्रं सुकपोलमुन्नसम् ।
शोकापनोदस्मितलेशसुन्दरं करोषि पारोक्ष्यमसाधु ते कृतम् ॥ १६ ॥

क्रूरस्त्वमक्रूरसमाख्यया स्मृतश्चक्षुर्हि दत्तं हरसे बताज्ञवत् ।
येनैकदेशेऽखिलसर्गसौष्ठवं तदीयमद्राक्ष्म वयं मधुद्विषः ॥ १७ ॥

न नन्दसूनुः क्षणभङ्गसौहृदः समीक्षते नः स्वकृतातुरा अपि ।
विहाय गेहान् स्वजनान् सुतान् पतीन् स्वदास्यमद्धोपगता[1] नवप्रियः ॥ १८ ॥

सुखं प्रभाता रजनीयमाशिषः सत्या बभूवुः पुरयोषितां ध्रुवम् ।
याः सम्प्रविष्टस्य मुखं व्रजस्पतेः पास्यन्त्यपाङ्गोत्कलितस्मितासवम्[2] ॥ १९ ॥

तासां मुकुन्दो मधुमञ्जुभाषितैर्गृहीतचित्तः परवान् मनस्व्यपि ।
कथं पुनर्नः प्रतियास्यतेऽबला ग्राम्या अलज्जाः[3] स्मितविभ्रमभ्रुवः ॥ २० ॥

अद्य ध्रुवं तत्र दृशां महोत्सवो दाशार्हभोजान्धकवृष्णिसात्वताम् ।
महोत्सवं श्रीरमणं गुणास्पदं द्रक्ष्यन्ति ये चाध्वनि देवकीसुतम् ॥ २१ ॥

मैतद्विधस्याकरुणस्य नाम भूदक्रूर इत्येतदतीवदारुणः ।
योऽसावनाश्वास्य सुदुःखितं जनं प्रियात् प्रियं नेष्यति पारमध्वनः ॥ २२ ॥

अनार्द्रधीरेष[4] समास्थितो रथं तमन्वमी च त्वरयन्ति दुर्मदाः ।
गोपा अनोभिः स्थविरैरुपेक्षितं दैवं च नोऽद्य प्रतिकूलमीहते ॥ २३ ॥

निवारयामः समुपेत्य माधवं किं नोऽकरिष्यन् कुलवृद्धबान्धवाः ।
मुकुन्दसङ्गान्निमिषार्धदुस्त्यजाद् दैवेन विध्वंशितदीनचेतसाम् ॥ २४ ॥

यस्यानुरागलळितस्मितवल्गुमन्त्रलीलावलोकपरिरम्भणरासगोष्ठ्याम् ।
नीताः स्म नः क्षणमिव क्षणदा विना तं गोप्यः कथं न्वतितरेम तमो दुरन्तम् ॥ २५ ॥

योऽह्नः क्षये व्रजमनन्तसखः परीतो गोपैर्विशन् खुररजश्छुरितालकस्रक् ।
वेणुं क्वणन् स्मितकटाक्षनिरीक्षणेन चित्तं क्षिणोति तमृतेऽम्ब कथं भवेम ॥ २६ ॥

---

१. स्वदास्यमद्धोपगतान् ❋ २. पश्यन्त्यपाङ्गो.... ❋
३. ग्राम्याः सलज्जाः ❋ ४. अनार्तधीरेष ❋

**श्रीशुक उवाच**

एवं ब्रुवाणा विरहातुरा भृशं व्रजस्त्रियः कृष्णविषक्तमानसाः[१] ।
विसृज्य लज्जां रुरुदुः स्म सुस्वरं गोविन्द दामोदर माधवेति ॥ २७ ॥
स्त्रीणामेवं रुदन्तीनामुदिते सवितर्यथ । अक्रूरश्चोदयामास कृतमैत्र्यादिको रथम् ॥ २८ ॥
गोपास्तमन्वसज्जन्त नन्दाद्याः शकटैस्ततः । आदायोपायनं भूरि कुम्भान् गोरससम्भृतान् ॥ २९ ॥
गोप्यश्च दयितं कृष्णमनुव्रज्यानुरञ्जिताः । प्रत्यादेशं भगवतः काङ्क्षन्त्यश्चावतस्थिरे ॥ ३० ॥
तास्तथा तप्यतीर्वीक्ष्य स्वप्रस्थाने यदूत्तमः । सान्त्वयामास सप्रेमैरायास्य इति दौत्यगैः[२] ॥ ३१ ॥
यावदालक्ष्यते केतुर्यावद् रेणू रथस्य च । अनुप्रस्थापितात्मानो लेख्यानीवोपतस्थिरे ॥ ३२ ॥
ता निराशा निववृतुर्गोविन्दविनिवर्तने । विशोका अहनी निन्युर्गायन्त्यः प्रियचेष्टितम् ॥ ३३ ॥
भगवानपि सम्प्राप्तो रामाक्रूरयुतो नृप[३] । रथेन वायुवेगेन कालिन्दीमघनाशिनीम् ॥ ३४ ॥
तत्रोपस्पृश्य पानीयं पीत्वा मृष्टं मणिप्रभम् । वृक्षषण्डमुपव्रज्य सरामो रथमाविशत् ॥ ३५ ॥
अक्रूरस्तावुपामन्त्र्य निवेश्य च रथोपरि । कालिन्द्या ह्रदमागम्य स्नानं विधिवदाचरन् ॥ ३६ ॥
निमज्य तस्मिन् सलिले जपन् ब्रह्म सनातनम् । तावेव ददृशेऽक्रूरो रामकृष्णौ समन्वितौ ॥ ३७ ॥
तौ रथस्थौ कथमिह सुतावानकदुन्दुभेः । तर्हि स्वित् स्यन्दने न स्त इत्युन्मज्य व्यचष्ट सः॥ ३८ ॥
तत्रापि च यथापूर्वमासीनौ पुनरेव सः । न्यमज्जद् दर्शनं यन्मे मृषा किं सलिले तयोः ॥ ३९ ॥
भूयस्तत्रापि सोऽद्राक्षीत् स्तूयमानमहीश्वरम् । सिद्धैर्भुजङ्गपतिभिरसुरैर्नतकन्धरैः ॥ ४० ॥
सहस्रशिरसं देवं सहस्रफणमौळिनम् । नीलाम्बरं बिसश्वेतं शृङ्गैः श्वेतमिव स्थितम् ॥ ४१ ॥
तस्योत्सङ्गे घनश्यामं पीतकौशेयवाससम् । पुरुषं चतुर्भुजं शान्तं पद्मपत्रारुणेक्षणम् ॥ ४२ ॥
चारुप्रसन्नवदनं चारुहासनिरीक्षणम् । सुभ्रून्नसं चारुकर्णं सुकपोलारुणाधरम् ॥ ४३ ॥
प्रलम्बपीवरभुजं तुङ्गांसोरःस्थलश्रियम् । कम्बुकण्ठं निम्ननाभिं वळिमत्पल्लवोदरम् ॥ ४४ ॥
बृहत्कटितटश्रोणिकरभोरुद्वयान्वितम् । चारुजानुयुगं चारुजङ्घायुगळसंयुतम् ॥ ४५ ॥
[४]तुङ्गगुल्फारुणनखव्रातदीधितिभिर्वृतम्[५] । नवाङ्गुल्यङ्गुष्ठदळैर्विलसत्पादपङ्कजम् ॥ ४६ ॥

---

१. कृष्णनिषक्तमानसाः ❋ २. दौत्यकैः/दूत्यकैः ३. रामाक्रूरौ तथा नृप ❋
४. गूढगुल्फारुण... ❋ ५. दीधितिभिर्नृप ❋/दीधितिभिर्युतम्

महार्हमणिविभ्राजत्किरीटकटकाङ्गदैः । कटिसूत्रब्रह्मसूत्रहारनूपुरकुण्डलैः ॥ ४७ ॥
भ्राजमानं पद्मकरं शङ्खचक्रगदाधरम् । श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ॥ ४८ ॥
सुनन्दनन्दप्रमुखैः पार्षदैः सनकादिभिः । सुरेशैर्ब्रह्मरुद्राद्यैर्नवभिश्च द्विजोत्तमैः ॥ ४९ ॥
प्रह्लादनारदवसुप्रमुखैर्भागवतोत्तमैः । स्तूयमानं पृथङ्मार्गैर्वचोभिरमलात्मभिः ॥ ५० ॥
श्रिया पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येळयाऽजया । विद्ययाऽविद्यया शक्त्या मायया च निषेवितम् ॥
विलोक्य सुभृशं प्रीतो भक्त्या परमया युतः । हृष्यत्तनूरुहो भावपरिक्लिन्नात्मलोचनः ॥ ५२ ॥
गिरा गद्गदयाऽस्तौषीत् सत्त्वमालम्ब्य सात्वतः । प्रणम्य मूर्ध्नाऽवहितः कृताञ्जलिपुटः शनैः ॥ ५३ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे सप्तत्रिंशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

एवं दृष्ट्वा तमक्रूरः प्रसन्नहृदयेन्द्रियः । तुष्टाव पुण्डरीकाक्षं भक्त्याऽवनतकन्धरः ॥ १ ॥

**अक्रूर उवाच**

नतोऽस्म्यहं त्वाऽखिलहेतुभूतं[१] नारायणं पूरुषमादिमव्ययम् ।
यन्नाभिजातादरविन्दकोशाद् ब्रह्माऽऽविरासीद् यत एष लोकः[२] ॥ २ ॥

भूस्तोयमग्निः पवनः खमादिर्महानजादिर्मन इन्द्रियाणि ।
सर्वेन्द्रियार्था विबुधाश्च सर्वे ये हेतवस्ते जगतोऽङ्गभूताः[३] ॥ ३ ॥

नैते स्वरूपं विदुरात्मनस्ते अजादयोऽन्यात्मतया गृहीताः ।
अजोऽनुबद्धः स गुणैरजाया गुणात् परं वेद न ते स्वरूपम् ॥ ४ ॥

त्वां योगिनो यजन्त्यद्धा महापुरुषमीश्वरम् । साध्यात्मं साधिभूतं च साधिदैवं च साधवः ॥ ५ ॥
त्रय्या च विद्यया केचित् त्वां वै वैतानिका द्विजाः । यजन्ते विततैर्यज्ञैर्नानारूपामराख्यया ॥ ६ ॥
एके त्वखिलकर्माणि सन्न्यस्योपशमं गताः । ज्ञानिनो ज्ञानयज्ञेन यजन्ति ज्ञानविग्रहम् ॥ ७ ॥
अन्ये तु संस्कृतात्मानो विधिना विहितेन वै । यजन्ति त्वन्मयास्त्वां वै बहुमूर्त्येकमूर्तिकम् ॥ ८ ॥
त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणम् । बह्वाचार्यविभेदेन भगवन् सपुपासते ॥ ९ ॥

---

१. अखिलहेतुहेतुम् ❋ २. यत एव लोकः ३. जगतोंऽशभूताः ❋

सर्व एव यजन्ति त्वां सर्वदेवमहेश्वरम् । ये नानादेवताभक्ता यद्यप्यन्यधियः प्रभो ॥ १० ॥
यथाऽद्रिप्रभवा नद्यः पर्जन्यापूरिता प्रभो । विशन्ति सर्वतः सिन्धुं तद्वत् त्वां गतयोऽन्ततः ॥ ११ ॥
सत्त्वं रजस्तम इति भवन्ति प्रकृतेर्गुणाः । तेषु हि प्राकृताः प्रोता आब्रह्मस्थावरादयः ॥ १२ ॥

तुभ्यं नमस्तेऽस्त्वविषक्तदृष्टये सर्वात्मने सर्वधियां च साक्षिणे ।
गुणप्रवाहोऽयमविद्यया ततः[1] प्रवर्तते देवनृतिर्यगात्मसु ॥ १३ ॥

अग्निर्मुखं तेऽवनिरङ्घ्रिरीक्षणं सूर्यो नभो नाभिरथो दिशः श्रुतिः ।
द्यौः कं सुरेन्द्रास्तव बाहवोऽर्णवाः[2] कुक्षिर्मरुत् प्राणबलं प्रकल्पितम् ॥ १४ ॥

रोमाणि वृक्षौषधयः शिरोरुहा मेघाः परस्यास्थिनखानि तेऽद्रयः ।
निमेषणं रात्र्यहनी प्रजापतिर्मेढ्रं तु[3] वृष्टिस्तव वीर्यमिष्यते ॥ १५ ॥

त्वय्यव्ययात्मन् पुरुषे प्रकल्पिता लोकाः सपाला बहुजीवसङ्कुलाः[4] ।
यथा जले सञ्जिहते जलौकसोऽप्युदुम्बरे वा मशका मनोमये ॥ १६ ॥

यानियानीह रूपाणि क्रीडनार्थं बिभर्षि हि । तैरामृष्टशुचो लोका मुदा गायन्ति ते यशः ॥ १७ ॥
नमः कारणमत्स्याय प्रळयाब्धिचराय च । हयशीर्ष्णे नमस्तुभ्यं मधुकैटभमृत्यवे ॥ १८ ॥
अकूपाराय बृहते नमो मन्दरधारिणे । क्षित्युद्धारविहाराय नमः सूकरमूर्तये ॥ १९ ॥
नमस्तेऽद्भुतसिंहाय साधुलोकभयापह । वामनाय नमस्तुभ्यं क्रान्तत्रिभुवनाय च ॥ २० ॥
नमो भृगूणाम्पतये दृप्तक्षत्त्रवनच्छिदे । नमस्ते रघुवर्याय रावणान्तकराय च ॥ २१ ॥
नमस्ते वासुदेवाय नमः सङ्कर्षणाय च । प्रद्युम्नायानिरुद्धाय सात्वतां पतये नमः ॥ २२ ॥
नमो बुद्धाय शुद्धाय दैत्यदानवमोहिने[5] । म्लेञ्छप्रायक्षत्त्रहन्त्रे नमस्ते कल्किरूपिणे ॥ २३ ॥
भगवान् जीवलोकोऽयं मोहितस्तव मायया । अहं ममेत्यसद्ग्राहो भ्राम्यते कर्मवर्त्मसु ॥ २४ ॥
अहं चात्मात्मजागारदारार्थस्वजनादिषु । भ्रमामि स्वप्नकल्पेषु मूढः सुखधिया विभो ॥ २५ ॥
अनित्यानात्मदुःखेषु विपर्ययमतिर्ह्यहम् । द्वन्द्वारामस्तमोविष्टो न जाने त्वां जगत्पते ॥ २६ ॥
यथाऽबुधो जलं हित्वा प्रतिच्छन्नं तदुद्भवैः । अभ्येति मृगतृष्णां वै हित्वा त्वाऽहं पराङ्मुखः ॥ २७ ॥

---

१. अविद्यया यतः ❋/अविद्ययाऽसकृत्   २. अर्णवः ❋   ३. मेढ्रस्तु ❋
४. बहुजीवसङ्घाः ❋   ५. दैत्यदानवमोहन ❋

नोत्सहेऽहं कृपणधीः कामकर्महतं मनः । रोद्धुं प्रमाथिभिश्चाक्षैर्ह्रियमाणमितस्ततः[१] ॥ २८ ॥

सोऽहं तवाङ्घ्र्युपगतोऽस्म्यसतां दुरापं तच्चाप्यहं[२] भवदनुग्रहमीश मन्ये ।

पुंसो भवेद् यर्हि संसरणापवर्गस्त्वय्यब्जनाभ सदुपासनया मतिः स्यात् ॥ २९ ॥

नमो विज्ञानमात्राय सर्वप्रत्ययहेतवे । पुरुषेशप्रधानाय[३] ब्रह्मणेऽनन्तशक्तये ॥ ३० ॥

नमस्ते वासुदेवाय सर्वभूतक्षयाय च । हृषीकेश नमस्तुभ्यं[४] प्रपन्नं पाहि मां प्रभो ॥ ३१ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे अष्टत्रिंशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

स्तुवतस्तस्य भगवान् दर्शयित्वा जले वपुः । भूयः समाहरत् कृष्णो नटो नाट्यमिवात्मनः ॥ १ ॥

सोऽपि चान्तर्हितं वीक्ष्य जलादुन्मज्य सत्वरः । कृत्वा चावश्यकं सर्वं विस्मितो रथमाविशत् ॥ २ ॥

तमपृच्छद् हृषीकेशः किं ते दृष्टमिहाद्भुतम् । भूमौ वियति तोये वा तथा त्वां लक्षयामहे ॥ ३ ॥

**अक्रूर उवाच**

अद्भुतानीह यावन्ति भूमौ वियति वा जले । त्वयि विश्वात्मके तानि किं मेऽदृष्टं विपश्यतः ॥ ४ ॥

यत्राद्भुतानि सर्वाणि भूमौ वियति वा जले । तं त्वाऽनुपश्यतो ब्रह्मन् किं मे दृष्टमिहाद्भुतम् ॥ ५ ॥

**श्रीशुक उवाच**

इत्युक्त्वा चोदयामास स्यन्दनं गान्दिनीसुतः । मधुरामनयद् रामं कृष्णं चैव दिनात्यये ॥ ६ ॥

मार्गे ग्रामजना राजंस्तत्रतत्रोपसङ्गताः । वसुदेवसुतौ वीक्ष्य प्रीता दृष्टिं न चाददुः ॥ ७ ॥

तावद् व्रजौकसस्तात[५] नन्दगोपादयोऽग्रतः । पुरोपवनमासाद्य प्रतीक्षन्तोऽवतस्थिरे ॥ ८ ॥

तान् समेत्याह भगवानक्रूरं जगदीश्वरः । गृहीत्वा पाणिना पाणिं प्रश्रितं प्रहसन्निव ॥ ९ ॥

भवान् प्रविशतामग्रे सहयानः पुरीं गृहम्[६] । वयं त्विहावमुच्याथ तावद्[७] द्रक्ष्यामहे पुरीम् ॥ १० ॥

**अक्रूर उवाच**

नाहं भवद्भ्यां रहितः प्रवेक्ष्ये मधुरां प्रभो । त्यक्तुं नार्हसि मां नाथ भक्तं ते भक्तवत्सल ॥ ११ ॥

---

१. प्रमाथिभिः स्वाक्षैः.... ❋ २. यच्चाप्यहम् ❋ ३. पुरुषेश्वरप्रधानाय ❋
४. नमस्तेऽस्तु ❋ ५. व्रजौकसस्तत्र ❋ ६. पुरीं प्रति ❋ ७. तात ❋

आगच्छ याम गेहान् नः सनाथान् कुर्वधोक्षज । साग्रजः सह गोपालैः सुहृद्भिश्च सुहृत्तम ॥ १२ ॥
पुनीहि पादरजसा गृहान् नो गृहमेधिनाम् । यच्छौचेनातितृप्यन्ति पितरः साग्रयः सुराः ॥ १३ ॥
अवनिज्याङ्घ्रियुगळमासीच्छ्लाघ्यो बलिर्मखे । ऐश्वर्यमतुलं लेभे गतिं चैकान्तिनां च या[१] ॥ १४ ॥
आपस्तेऽङ्घ्र्यवनेजन्यस्त्रीँल्लोकान्[२] शुचयोऽपुनन् । शिरसाऽधत्त याः शर्वः स्वर्याताः सगरात्मजाः ॥
देवदेव जगन्नाथ पुण्यश्रवणकीर्तन । यदूत्तमोत्तमश्लोक नारायण नमोऽस्तु ते ॥ १६ ॥

**श्रीभगवानुवाच**

आयास्ये भवतो गेहमहमार्यसमन्वितः । यदुवर्गद्रुहं हत्वा वितरिष्ये सुहृत्प्रियम् ॥ १७ ॥

**श्रीशुक उवाच**

एवमुक्तो भगवता सोऽक्रूरो विमना इव । पुरीं प्रविश्य कंसाय कर्मावेद्य गृहं ययौ ॥ १८ ॥
ततोऽपराह्णे भगवान् कृष्णः सङ्कर्षणान्वितः । मधुरां प्राविशद् गोपैर्दिदृक्षुः परिवारितः ॥ १९ ॥

ददर्श तां स्फाटिकतुङ्गगोपुरां बृहत्स्फुरद्धेमकवाटतोरणाम्[३] ।
ताम्रारकोष्ठां परिखादुरासदा[४]मुद्यानरम्योपवनालिशोभिताम् ॥ २० ॥
सौवर्णशृङ्गाटकहर्म्यनिष्कुटैः श्रेणीसभाभिर्भवनैरुपस्कृताम् ।
वैडूर्यवज्रामलनीलविद्रुमैर्मुक्ताहरिद्भिर्वळभीषु वेदिषु ॥ २१ ॥
जुष्टेषु जालामुखरन्ध्रकुट्टिमेष्वाविष्टपारावतबर्हिनादिताम् ।
संसिक्तरथ्यापणमार्गचत्वरां प्रकीर्णमाल्याङ्कुरलाजतण्डुलाम् ॥ २२ ॥
आपूर्णकुम्भैर्दधिचन्दनोक्षितैः प्रसूनदीपावलिभिः सपल्लवैः ।
सवृन्तरम्भाक्रमुकैः सकेतुभिः स्वलङ्कृतद्वारगृहां सपट्टिकैः[५] ॥ २३ ॥
तां सम्प्रविष्टौ वसुदेवनन्दनौ वृतौ वयस्यैर्नरदेववर्त्मना ।
द्रष्टुं समीयुस्त्वरिताः पुरस्त्रियो हर्म्याणि चैवारुरुहुर्नृपोत्सुकाः ॥ २४ ॥
काश्चिद् विपर्यक्कृतवस्त्रभूषणा विस्मृत्य चैकं युगळेष्वथापराः ।
कृतैकवस्त्रश्रवणैकनूपुरा नाङ्क्त्वा द्वितीयं त्वपराश्च लोचनम्[६] ॥ २५ ॥

---

१. तु या ❋ २. अवनेजिन्यस्त्रील्लोकान् ❋ ३. ....कपाटतोरणाम्
४. परिघादुरासदाम् ❋ ५. सपट्टिकाम् ❋ ६. त्वपराः स्वलोचनम् ❋

अश्नन्त्य एकास्तदपास्य सोत्सवा अभ्यज्यमाना अकृतोपमज्जनाः ।
स्वपन्त्य उत्थाय निशम्य निस्वनं निपाययन्त्योऽर्भमपोह्य मातरः ॥ २६ ॥
मनांसि तासामरविन्दलोचनः प्रगल्भलीलाहसितावलोकनैः[१] ।
जहार मत्तद्विरदेन्द्रविक्रमो दृशां ददच्छ्रीरमणो महोत्सवम् ॥ २७ ॥
दृष्ट्वा मुहुः श्रुतमनुद्रुतचेतसस्तं तत्प्रेक्षणोत्स्मितसुधोक्षणलब्धमानाः[२] ।
आनन्दमूर्तिमुपगुह्य दृशाऽऽत्मलब्धं हृष्यत्त्वचो जहुरनन्तमरिन्दमाधिम् ॥ २८ ॥
प्रासादशिखरारूढाः प्रीत्युत्फुल्लमुखाम्बुजाः । अभ्यवर्षन् सौमनस्यैः प्रमदा बलकेशवौ ॥ २९ ॥
दध्यक्षतैः सोदपात्रैः स्रग्गन्धैरभ्युपायनैः । तावानर्चुः प्रमुदितास्तत्रतत्र द्विजातयः ॥ ३० ॥
रजकं कञ्चिदायान्तं रङ्गकारं गदाग्रजः । दृष्ट्वाऽयाचत वासांसि धौतान्यत्युत्तमानि च ॥ ३१ ॥
देह्यावयोः समुचितान्यङ्ग वासांसि चार्हतोः । भविष्यति परं श्रेयो दातुस्ते नात्र संशयः ॥ ३२ ॥
स याचितो भगवता परिपूर्णेन सर्वतः । साक्षेपं रुषितः प्राह भृत्यो राज्ञः सुदुर्मदः ॥ ३३ ॥
ईदृशान्येव वासांसि नित्यं गिरिवनेचराः । परिधत्त किमुद्वृत्ता राजद्रव्याण्यभीप्सथ ॥ ३४ ॥
याताशु बालिशा मैवं प्रार्थ्यं यदि जिजीविषा । बध्नन्ति घ्नन्ति लुम्पन्ति दृप्तं राजकुलानि हि ॥ ३५ ॥
इत्थं[३] विकत्थमानस्य कुपितो देवकीसुतः । रजकस्य कराग्रेण शिरः कायादपाहरत्[४] ॥ ३६ ॥
तस्यानुजीविनः सर्वे वासःकोशान् विसृज्य वै । दुद्रुवुः सर्वतो मार्गे वासांसि जगृहेऽच्युतः ॥ ३७ ॥
वसित्वाऽऽत्मप्रिये वस्त्रे कृष्णः सङ्कर्षणस्तथा । शेषाण्यादत्त गोपेभ्यो विसृज्य भुवि कानिचित् ॥ ३८ ॥
ततस्तु वायकः प्रीतस्तयोर्वेषमकल्पयत् । विचित्रवर्णैः शैलेयैराकल्पैरनुरूपतः ॥ ३९ ॥
नानालक्षणवेषाभ्यां कृष्णरामौ विरेजतुः । स्वलङ्कृतौ बालगजौ पर्वणीव सितेतरौ ॥ ४० ॥
तस्य प्रसन्नो भगवान् प्रादात् सारूप्यमात्मनः । श्रियं च परमां लोके बलैश्वर्यस्मृतीन्द्रियम्[५] ॥ ४१ ॥
ततः सुदाम्नो भवनं मालाकारस्य जग्मतुः । तौ दृष्ट्वा स समुत्थाय ननाम शिरसा भुवि ॥ ४२ ॥
तयोरासनमानीय पाद्यं चार्घ्यार्हणादिभिः । पूजां सानुगयोश्चक्रे स्रक्ताम्बूलानुलेपनैः ॥ ४३ ॥
प्राह नः सार्थकं जन्म पावितं च कुलं प्रभो । पितृदेवर्षयो मह्यं तुष्टा ह्यागमनेन वाम् ॥ ४४ ॥
भवन्तौ किल विश्वस्य जगतः कारणं परम् । अवतीर्णाविहांशेन क्षेमाय च भवाय च ॥ ४५ ॥

---

१. प्रगल्भ्यलीला.... ❋  २. अनुद्रुतचेतसस्तत्प्रेमेक्षितोत्स्मित..... ❋  ३. एवम् ❋
४. अपातयत्  ५. बलैश्वर्यस्मृतीन्द्रियान् ❋

न हि वां विषमा दृष्टिः सुहृदोर्जगदात्मनोः। समयोः सर्वभूतेषु भजन्तं भजतोरपि ॥ ४६ ॥
शाध्याज्ञापय मां भृत्यं किमहं करवाणि वाम्। पुंसोऽत्यनुग्रहो ह्येष भवद्भिर्यन्नियुज्यते ॥ ४७ ॥
इत्यभिप्रेत्य राजेन्द्र सुदामा प्रीतमानसः। शस्तैः सुगन्धैः कुसुमैर्माला विरचिता ददौ ॥ ४८ ॥
ताभिः स्वलङ्कृतौ प्रीतौ कृष्णरामौ सहानुगौ। प्रणताय प्रपन्नाय ददतुर्वरदौ वरान् ॥ ४९ ॥
सोऽपि वव्रेऽचलां भक्तिं तस्मिन्नेवाखिलात्मनि। तद्भक्तेषु च सौहार्दं भूतेषु च दयां पराम् ॥ ५० ॥
इति तस्मै वरं दत्त्वा श्रियं चान्वयवर्धिनीम्। बलमायुर्यशः कान्तिं निर्जगाम सहाग्रजः ॥ ५१ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे एकोनचत्वारिंशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

अथ व्रजन् राजपथेन माधवः स्त्रियं गृहीताङ्गविलेपभाजनाम्।
विलोक्य कुब्जां युवतीं वराननां पप्रच्छ धात्रीं वचसा रसप्रदः[1] ॥ १ ॥
का त्वं वरोर्वेतदिहानुलेपनं कस्याङ्गने नयसि नः कथयस्व साधु।
देह्यावयोरङ्गविलेपमुत्तमं श्रेयस्ततस्ते नचिराद् भविष्यति ॥ २ ॥

**सैरन्ध्र्युवाच**

दास्यस्म्यहं ते सुरवर्य[2] सम्मता त्रिवक्रनाम्नी[3] ह्यनुलेपकर्मणि।
मद्भावितं भोजपतेरतिप्रियं विना युवां[4] कोऽन्यतमस्तदर्हति ॥ ३ ॥
रूपपेशलमाधुर्यहसितालापवीक्षितैः। धर्षितात्मा ददौ सान्द्रमुभयोरनुलेपनम् ॥ ४ ॥
ततस्तावङ्गरागेण स्ववर्णेतरशोभिना[5]। सम्प्राप्तपरभागेन शुशुभातेऽनुरञ्जितौ ॥ ५ ॥
प्रसन्नो भगवान् कुब्जां त्रिवक्रां रुचिराननाम्। ऋज्वीं कर्तुं मनश्चक्रे दर्शयन् दर्शने फलम् ॥ ६ ॥
पद्भ्यामाक्रम्य प्रपदे द्व्यङ्गुलोत्तानपाणिना। प्रगृह्य चिबुके ह्यास्यमुदनीनमदच्युतः ॥ ७ ॥
सा तदर्जुसमानाङ्गी बृहच्छ्रोणिपयोधरा। मुकुन्दस्पर्शनात् सद्यो बभूव प्रमदोत्तमा ॥ ८ ॥
ततो रूपगुणौदार्यसम्पन्ना प्राह केशवम्। उत्तरीयान्तमाकृष्य सस्मयं जातहृच्छया ॥ ९ ॥
एहि वीर गृहं यामो न त्वां त्यक्तुमिहोत्सहे। त्वयोन्मथितचित्तायाः प्रसीद पुरुषर्षभ ॥ १० ॥

---

१. प्रहसन् रसप्रदः ❋ २. दास्याम्यहं सुन्दरवर्य ❋ ३. त्रिवक्रनामा ❋
४. विना नृपात् ❋/विना तु वाम् ❋ ५. सुवर्णेतरशोभिना ❋

एवं स्त्रिया याच्यमानः कृष्णो रामस्य पश्यतः । मुखं वीक्ष्यानुगानां च[१] प्रहसंस्तामुवाच ह ॥ ११ ॥
एष्यामि ते गृहं सुभ्रु पुंसामाधिविकर्शनम् । साधितार्थोऽगृहाणां नः पान्थानां त्वं परायणम् ॥ १२ ॥
विसृज्य माध्व्या वाण्या तां व्रजन् मार्गे वणिक्पथैः । नानोपायनताम्बूलस्रग्गन्धैः साग्रजोऽर्चितः ॥
ततः पौरान् पृच्छमानो धनुषः स्थानमच्युतः । तस्मिन् प्रविष्टो ददृशे धनुरैन्द्रमिवाद्भुतम् ॥ १४ ॥
पुरुषैर्बहुभिर्गुप्तमर्चितं परमर्द्धिमत् । वार्यमाणो नृभिः कृष्णः प्रसँह्य धनुराददे ॥ १५ ॥

करेण वामेन सलीलमुद्धृतं सज्यं च कृत्वा निमिषेण पश्यताम् ।
नृणां विकृष्य प्रबभञ्ज मध्यतो यथेक्षुदण्डं मदकर्युरुक्रमः ॥ १६ ॥

धनुषो भज्यमानस्य शब्दः खं रोदसी दिशः । पूरयामास यं श्रुत्वा कंसस्त्रासमुपागमत् ॥ १७ ॥
तद्रक्षिणः सानुचराः कुपिता आततायिनः । ग्रहीतुकामा आवव्रुर्गृह्यतां बध्यतामिति[२] ॥ १८ ॥
अथ तान् दुरभिप्रायान् विलोक्य बलकेशवौ । क्रुद्धौ धनुष आदाय शकले तांश्च जघ्नतुः ॥ १९ ॥
बलं च कंसप्रहितं हत्वा शालामुखात् ततः । निष्क्रम्य चेरतुर्हृष्टौ निरीक्ष्य पुरसम्पदः ॥ २० ॥
तयोस्तदद्भुतं वीर्यं निशाम्य पुरवासिनः । तेजःप्रागल्भ्यरूपं च मेनिरे विबुधोत्तमौ ॥ २१ ॥
तयोर्विचरतोः स्वैरमादित्योऽस्तमुपेयिवान् । कृष्णरामौ वृतौ गोपैः पुराच्छकटमीयतुः ॥ २२ ॥
अवनिज्याङ्घ्रियुगळं भुक्त्वा क्षीरोपसेचनम् । ऊषतुस्तां सुखं रात्रीं ज्ञात्वा कंसचिकीर्षितम् ॥ २३ ॥
कंसस्तु धनुषो भङ्गं रक्षिणां स्वबलस्य च । वधं निशाम्य गोविन्दरामविक्रीडितं परम् ॥ २४ ॥
दीर्घप्रजागरो भीतो दुर्निमित्तानि दुर्मतिः । बहून्यचष्टोभयथा मृत्योर्दौत्यकराणि च ॥ २५ ॥
अदर्शनं स्वशिरसः प्रतिरूपेषु सत्स्वपि । असत्यपि द्वितीये च द्वैरूप्यं ज्योतिषां तथा ॥ २६ ॥
छिद्रप्रतीतिश्छायायां प्राणघोषानुपश्रुतिः । स्वर्णप्रतीतिर्वृक्षेषु स्वपदानामदर्शनम् ॥ २७ ॥
स्वप्ने प्रेतपरिष्वङ्गः खरयानं बिसादनम् । यायान्नळदमाल्येकस्तैलाभ्यक्तो दिगम्बरः ॥ २८ ॥
अन्यानि चेत्थम्भूतानि स्वप्नजागरितानि च । पश्यन् मरणसन्त्रस्तो निद्रां लेभे न चिन्तया ॥ २९ ॥
व्युष्टायां निशि कौरव्य सूर्ये चाभिसमुत्थिते । कारयामास वै कंसो मल्लक्रीडामहोत्सवम् ॥ ३० ॥
आनर्चुः पुरुषा रङ्गं तूर्यभेर्यश्च जघ्निरे । मञ्चाश्चालङ्कृताः स्रग्भिः पताकाचैलतोरणैः[३] ॥ ३१ ॥
तेषु पौरा जानपदा ब्रह्मक्षत्त्रपुरोगमाः । यथोपजोषं विविशू राजानश्च कृतासनाः ॥ ३२ ॥
कंसः परिवृतोऽमात्यै राजमञ्च उपाविशत् । मण्डलेश्वरमध्यस्थो हृदयेन विदूयता ॥ ३३ ॥

---

१. अनुगानां तु ❋ २. वध्यतामिति ३. पताकाचेलतोरणैः ❋

वाद्यमानेषु तूर्येषु मल्लताळोत्तरेषु च । मल्लाः स्वलङ्कृता दृप्ताः सोपाध्यायाः समाविशन् ॥ ३४ ॥
चाणूरो मुष्टिकः कूटः छलः कोसल एव च । त आसेदुरुपस्थानं वल्गुवाद्यप्रहर्षिताः ॥ ३५ ॥
नन्दगोपादयो गोपा भोजराजसमाहुताः । निवेदितोपायनास्त एकस्मिन् मञ्च आविशन् ॥ ३६ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे चत्वारिंशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

अथ कृष्णश्च रामश्च कृतशौचौ परन्तपौ । मल्लदुन्दुभिनिर्घोषं श्रुत्वा द्रष्टुमुपेयतुः ॥ १॥
रङ्गद्वारं समासाद्य तस्मिन् गजमवस्थितम्[१] । अपश्यत् कुवलयापीडं कृष्णोऽम्बष्ठप्रचोदितम्॥ २ ॥
बद्ध्वा परिकरं शौरिः समुह्य कुटिलाळकान् । उवाच हस्तिपं वाचा मेघनादगभीरया ॥ ३ ॥
अम्बष्ठाम्बष्ठ मार्गं नौ देह्यपक्राम माचिरम् । नो चेत् सकुञ्जरं त्वाऽद्य नयामि यमसादनम् ॥ ४ ॥
एवं निर्भर्त्सितोऽम्बष्ठः[२] कुपितः[३] कोपितं गजम् । चोदयामास कृष्णाय कालान्तकयमोपमम् ॥ ५ ॥
करीन्द्रस्तमभिद्रुत्य करेण तरसाऽग्रहीत् । करादु विगळितः सोऽमुं निहत्याङ्घ्रिष्वलीयत ॥ ६ ॥
सङ्क्रुद्धस्तमचक्षाणो घ्राणदृष्टिः स केशवम् । परामृशत् पुष्करेण स प्रसँह्य[४] विनिर्गतः ॥ ७ ॥
पुच्छे प्रगृह्यातिबलं धनुषः पञ्चविंशतिम्[५] । विचकर्ष यथा नागं सुपर्ण इव लीलया ॥ ८ ॥
स पर्यावर्तमानेन सव्यदक्षिणतोऽच्युतः[६] । बभ्राम भ्राम्यमाणेन गोवत्सेनेव[७] बालकः ॥ ९ ॥
ततोऽभिमुखमभ्येत्य पाणिनाऽऽहत्य वारणम् । प्राद्रवन्[८] यापयामास स्पृश्यमानः पदेपदे ॥ १० ॥
स धावन् क्रीडया भूमौ पतित्वा सहसोत्थितः । तं मत्वा पतितं क्रुद्धो दन्ताभ्यां सोऽहनत् क्षितिम् ॥
स्वविक्रमे प्रतिहते कुञ्जरेन्द्रोऽत्यमर्षितः । चोद्यमानो महामात्रैः कृष्णमभ्यद्रवद् रुषा ॥ १२ ॥
तमापतन्तमासाद्य भगवान् मधुसूदनः । प्रगृह्य पाणिना हस्तं पातयामास भूतळे ॥ १३ ॥
पतितस्य पदाऽऽक्रम्य मृगेन्द्र इव लीलया । दन्तमुत्पाटच्य तेनैव हस्तिपांश्चाहनद् हरिः ॥ १४ ॥
मृतकं द्विपमुत्सृज्य दन्तपाणी विरेजतुः । अंसन्यस्तविषाणासृङ्मदबिन्दुभिरञ्चितौ ।
विरूढस्वेदकणिकवदनाम्बुरुहावुभौ ॥ १५ ॥

---

१. नागमवस्थितम् ❋ २. निर्भर्त्सितोऽम्बष्ठः ❋ ३. क्रुधितः ❋ ४. सम्प्रसह्य ❋
५. पञ्चविंशति ❋ ६. सव्यं दक्षिणतः ❋ ७. गोपुच्छेनेव ❋ ८. प्राद्रवत् ❋

वृतौ गोपैः कतिपयैर्बलदेवजनार्दनौ । रङ्गं विविशतू राजन् गजदन्तवरायुधौ ॥ १६ ॥

मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्तिमान्
गोपानां स्वजनोऽसतां क्षितिभृतां शास्ता स्वपित्रोः शिशुः ।
मृत्युर्भोजपतेर्विधातृविहितस्तत्त्वं परं योगिनां
वृष्णीनां च गतिः[१] सदैव शुशुभे रङ्गेऽच्युतः साग्रजः ॥ १७ ॥

हतं कुवलयापीडं दृष्ट्वा तावपि दुर्जयौ । कंसो मनस्व्यपि तदा भृशमुद्विविजे नृप ॥ १८ ॥

तौ रेजतू रङ्गगतौ महाभुजौ विचित्रवेषाभरणस्रगम्बरौ ।
यथा नटावुत्तमवेषधारिणौ मनः क्षिपन्तौ प्रभया निरीक्षताम् ॥ १९ ॥

निरीक्ष्य तावुत्तमपूरुषौ जना अवस्थिता[२] नागरराष्ट्रका नृप ।
प्रहर्षवेगोत्कलितेक्षणाननाः पपुर्नतृप्ता नयनैस्तदाननम् ॥ २० ॥

पिबन्त इव चक्षुर्भ्यां लिहन्त इव जिह्वया । जिघ्रन्त इव नासाभ्यां श्लिष्यन्त इव बाहुभिः ॥ २१ ॥

ऊचुः परस्परं ते वै यथादृष्टं यथाश्रुतम् । तद्रूपगुणमाधुर्यप्रागल्भ्यस्मारिता इव ॥ २२ ॥

एतौ भगवतः साक्षाद् हरेर्नारायणस्य हि । अवतीर्णाविहांशेन वसुदेवस्य वेश्मनि ॥ २३ ॥

स एष किल देवक्यां जातो नीतश्च गोकुलम् । कालमेतं वसन् गूढो ववृधे नन्दवेश्मनि ॥ २४ ॥

पूतनाऽनेन नीताऽन्तं चक्रवातश्च दानवः । अर्जुनौ धेनुकः केशी गुह्यकोऽन्ये च तद्विधाः ॥ २५ ॥

गावः सपाला एतेन दवाग्नेः परिमोचिताः । काळीयो दमितः सर्पः शक्रश्च विमदः कृतः ॥ २६ ॥

सप्ताहमेकहस्तेन धृतोऽद्रिप्रवरोऽमुना । वर्षवाताशनिभ्यश्च परित्रातं च गोकुलम् ॥ २७ ॥

गोप्योऽस्य नित्यमुदितहसितप्रेक्षणं मुखम् । पश्यन्त्यो विविधांस्तापांस्तरन्ति स्माश्रमं मुदा॥ २८ ॥

वदन्त्यनेन वंशोऽयं यदोः सुबहुविश्रुतः[३] । श्रियं यशो महत्त्वं च लप्स्यते परिरक्षितः ॥ २९ ॥

अयं चास्याग्रजः श्रीमान् रामः कमललोचनः । प्रलम्बो निहतोऽनेन बह्वो धेनुकादयः ॥ ३० ॥

जनेष्वेवं ब्रुवाणेषु तूर्येषु निनदत्सु च । कृष्णरामौ समाभाष्य चाणूरो वाक्यमब्रवीत् ॥ ३१ ॥

हे नन्दसूनो हे राम भवन्तौ वीर्यसम्मतौ । नियुद्धकुशलौ श्रुत्वा राज्ञाऽऽहूतौ दिदृक्षुणा ॥ ३२ ॥

प्रियं राज्ञः प्रकुर्वन्त्यः श्रेयो विन्दन्ति वै प्रजाः । मनसा कर्मणा वाचा विपरीतमतोऽन्यथा ॥ ३३ ॥

नित्यं प्रमुदिता[४] गोपा वत्सपालास्तथा स्फुटम् । वनेषु मल्लयुद्धेन क्रीडन्तश्चारयन्ति गाः ॥ ३४ ॥

---

१. पतिः  २. मञ्चस्थिताः ❋  ३. यदोस्तु बहुविश्रुतः ❋  ४. नित्यप्रमुदिताः ❋

तस्माद् राज्ञः प्रियं यूयं वयं च करवामहे । भूतानि नः प्रसीदन्ति सर्वभूतमयो नृपः ॥ ३५ ॥

तन्निशम्याब्रवीत् कृष्णो देशकालोचितं वचः । नियुद्धमात्मनोऽभीष्टं मन्यमानोऽभिनन्द्य च॥ ३६ ॥

**श्रीभगवानुवाच**

प्रजा भोजपतेर्यूयं[1] वयं चापि वनेचराः । करवाम प्रियं नित्यं तन्नः परमनुग्रहः ॥ ३७ ॥

बाला वयं तुल्यबलैः क्रीडिष्यामो यथोचितम् । भवेन्नियुद्धं माऽधर्मः स्पृशेन्मल्ल सभासदः ॥ ३८ ॥

**चाणूर उवाच**

न बालो न किशोरस्त्वं बलश्च बलिनां वरः । लीलयेभो हतो येन सहस्रद्विपसत्त्वभृत् ॥ ३९ ॥

तस्माद् भवद्भ्यां बलिभिर्योद्धव्यं नानयोऽत्र वै । मया[2] विक्रम वार्ष्णेय बलेन सह मुष्टिकः ॥ ४० ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे एकचत्वारिंशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

एवं चिन्तितसङ्कल्पो भगवान् मधुसूदनः । आससाद ह चाणूरं मुष्टिकं रोहिणीसुतः ॥ १ ॥

हस्ताभ्यां हस्तयोर्बद्ध्वा पद्भ्यामेव च पादयोः । विचकर्षतुरन्योन्यं प्रसँह्य विजिगीषया ॥ २ ॥

अरत्नी द्वे अरत्निभ्यां जानुभ्यां चैव जानुनी । शिरः शीर्ष्णोरसोरस्तावन्योन्यमभिजघ्नतुः ॥ ३ ॥

परिभ्रामणविक्षेपपरिरम्भावपातनैः । उत्सर्पणापसर्पैश्चाप्यन्योन्यं प्रत्ययुध्यताम् ॥ ४ ॥

उत्थापनैरुन्नयनैश्चालनैः[3] स्थापनैरपि । परस्परं जिगीषन्तावन्योन्यमभिचक्रतुः ॥ ५ ॥

तद् बालबलवद्युद्धं समेताः सर्वयोषितः । ऊचुः परस्परं प्रेक्ष्य सानुकम्पा वरूथशः ॥ ६ ॥

महानयं बताधर्म एषां राजसभासदाम् । ये बालबलवद्युद्धं राज्ञोऽन्विच्छन्ति पश्यतः ॥ ७ ॥

क्व वज्रसारसर्वाङ्गौ मल्लौ शैलेन्द्रसन्निभौ । क्वचातिसुकुमाराङ्गौ किशोरौ नाप्तयौवनौ ॥ ८ ॥

धर्मव्यतिक्रमो ह्यस्य समाजस्य ध्रुवं भवेत् । यत्राधर्मः समुत्तिष्ठेन्न स्थेयं तत्र कर्हिचित् ॥ ९ ॥

न सभां प्रविशेत् प्राज्ञः सभ्यदोषाननुस्मरन् । अब्रुवन् विब्रुवन्नज्ञो[4] नरः किल्बिषमश्नुते ॥ १० ॥

वल्गतः शत्रुमभितः कृष्णस्य वदनाम्बुजम् । वीक्ष्यतां श्रमवार्युप्तं[5] पद्मकोशमिवाम्बुभिः ॥ ११ ॥

---

१. भोजपतेरस्य ❋ २. मयि ३. उत्थापनैरुन्नमनैः ❋

४. अब्रुवन् विब्रुवन् वाऽपि ❋ ५. श्रमवार्याप्तम् ❋

किं न पश्यत रामस्य मुखमाताम्रलोचनम् । मुष्टिकं प्रति सामर्षहाससंरम्भशोभनम् ॥ १२ ॥

पुण्या बत व्रजभुवो यदयं नृलिङ्गगूढः पुराणपुरुषो वनचित्रमाल्यः ।
गाश्चारयन् सहबलः क्वणयंश्च वेणुं[1] विक्रीडयाऽञ्चति गिरावमरार्चिताङ्घ्रिः ॥ १३ ॥

गोप्यस्तपः किमचरन् यदमुष्य रूपं लावण्यसारमथनोत्थमनन्यसिद्धम् ।
दृग्भिः पिबन्त्यनुसवाभिनवं दुरापमेकान्तधाम यशसः श्रिय ईश्वरस्य ॥ १४ ॥

या दोहनेऽवहनने मथनोपजल्पप्रेङ्खेङ्खनार्भरुदितोक्षणमज्जनादौ[2] ।
गायन्ति चैनमनुरक्तधियोऽश्रुकण्ठ्यः पुण्या व्रजस्त्रिय उरुक्रमचित्तयामाः ॥ १५ ॥

प्रातर्व्रजाद् व्रजत आविशतश्च सायं गोभिः समं क्वणयतोऽस्य निशम्य वेणुम् ।
निर्गत्य तूर्णमबलाः पथि भूरिपुण्याः पश्यन्ति सस्मितमुखं सदयावलोकम् ॥ १६ ॥

एवं प्रभाषमाणासु स्त्रीषु योगेश्वरो हरिः । शत्रुं हन्तुं मनश्चक्रे भगवान् भरतर्षभ ॥ १७ ॥

तैस्तैर्नियुद्धविधिभिर्विविधैरच्युतेतरौ । युयुधाते तथाऽन्योन्यं तथैव बलमुष्टिकौ ॥ १८ ॥

भगवद्गात्रनिष्पातैर्वज्रनिष्पेषनिष्ठुरैः । चाणूरो भज्यमानाङ्गो[3] मुहुर्ग्लानिमवाप ह ॥ १९ ॥

स श्येनवेग उत्पत्य मुष्टीकृत्य करावुभौ । भगवन्तं वासुदेवं क्रुद्धो वक्षस्यताडयत् ॥ २० ॥

नाचलत् तत्प्रहारेण स्रजा हत इव द्विपः । बाह्वोर्निगृह्य चाणूरं बहुशो भ्रामयन्[4] हरिः ॥ २१ ॥

भूपृष्ठे पोथयामास तरसा क्षीणजीवितम् । विस्रस्ताकल्पकेशस्रगिन्द्रध्वज इवापतत् ॥ २२ ॥

तथैव मुष्टिकः पूर्वं स्वमुष्ट्याऽभिहतेन वै । बलभद्रेण बलिना तळेनाभिहतो भृशम् ॥ २३ ॥

प्रवेपितः स रुधिरमुद्वमन् मुखतोऽर्दितः । व्यसुः पपातोर्व्युपस्थे वाताहत इवाङ्घ्रिपः ॥ २४ ॥

ततः कूटमनुप्राप्तं रामः प्रहरतांवरः । अवधील्लीलया राजन् सावज्ञं वाममुष्टिना ॥ २५ ॥

तथैव हि छलः कृष्णपदापहतशीर्षकः । द्विधा विदीर्णः कोसलक[5] उभावपि निपेततुः ॥ २६ ॥

चाणूरे मुष्टिके कूटे छले कोसलके हते । शेषाः प्रदुद्रुवुर्मल्लाः सर्वे प्राणपरीप्सवः ॥ २७ ॥

गोपान् वयस्यानाकृष्य तैः संसृज्य विजह्रतुः । वाद्यमानेषु तूर्येषु वल्गन्तौ रुतनूपुरौ ॥ २८ ॥

जनाः प्रजहृषुः सर्वे कर्मणा रामकृष्णयोः । ऋते कंसं विप्रमुख्याः साधवः साधुसाध्विति ॥ २९ ॥

हतेषु मल्लवर्येषु विद्रुतेषु च भोजराट् । न्यवारयत् स्वतूर्याणि वाक्यं चेदमुवाच ह ॥ ३० ॥

---

१. क्वणयन् स्म वेणुम् ❋ २. प्रेङ्खेङ्खणाभिरुदितोक्षण.... ❋ ३. भिद्यमानाङ्गः ❋
४. बहुशोऽभ्रामयद् ❋ ५. द्विधाभूतः कोसलकः ❋

निस्सारयत दुर्वृत्तौ वसुदेवात्मजौ पुरात् । धनं हरत गोपानां नन्दं बध्नीत दुर्मतिम् ॥ ३१ ॥
वसुदेवस्तु दुर्मेधा हन्यतामाश्वसत्तमः । उग्रसेनः पिता चापि सानुगः परपक्षगः ॥ ३२ ॥
एवं विकत्थमाने वै कंसे प्रकुपितोऽव्ययः । लघिम्नोत्पत्य तरसा मञ्चमुत्तुङ्गमारुहत् ॥ ३३ ॥
तमापतन्तमालोक्य मृत्युमात्मन आसनात् । मनस्वी सहसोत्थाय जगृहे सोऽसिचर्मणी ॥ ३४ ॥

तं खड्गपाणिं[1] विचरन्तमाशु श्येनं यथा दक्षिणसव्यमम्बरे ।
समग्रहीद् दुर्विषहोग्रतेजा यथोरगं तार्क्ष्यसुतः प्रसँह्य ॥ ३५ ॥
प्रगृह्य केशेषु[2] चलत्किरीटं निपात्य रङ्गोपरि तुङ्गमञ्चात् ।
तस्योपरिष्टात् स्वयमब्जनाभः पपात विश्वाश्रय आत्मतन्त्रः ॥ ३६ ॥
*कंसोऽपि कृष्णेन जगत्त्रयैकनिवासभूतेन निपात्य सोऽधः ।
तेनात्मतन्त्रेण च पीडितोऽसुं तत्याज राजन् निमिषान्तरेण ॥ ३७ ॥
कंसं परेतं विचकर्ष भूमौ हरिर्यथेभं जगतो विपश्यतः ।
हाहेतिशब्दः सुमहांस्तदाऽभूदुदीरितः सर्वजनैर्नरेन्द्र ॥ ३८ ॥
स नित्यदोद्विग्नधिया तमीश्वरं पिबन्नदन् वा विचरन् स्वपन् श्वसन् ।
ददर्श चक्रायुधमग्रतो यतस्तदेव[3] रूपं दुरवापमाप ॥ ३९ ॥

तस्यानुजा भ्रातरोऽष्टौ कङ्कन्यग्रोधकादयः । अभ्यधावन्नतिक्रुद्धा भ्रातुर्निर्वेशकारिणः ॥ ४० ॥
तथाऽतिरभसांस्तांस्तु संयत्तान् रोहिणीसुतः । अहन् परिघमुद्यम्य पशूनिव मृगाधिपः ॥ ४१ ॥
नेदुर्दुन्दुभयो व्योम्नि ब्रह्मेशाद्या विभूतयः । पुष्पैः किरन्तस्तं प्रीताः शशंसुर्ननृतुः स्त्रियः ॥ ४२ ॥
तेषां स्त्रियो महाराज सुहृन्मरणदुःखिताः । तत्राभीयुर्विनिघ्नन्त्यः स्वशीर्षाण्यश्रुलोचनाः ॥ ४३ ॥
शयानान् वीरशय्यायां पतीनालिङ्ग्य शोचतीः । विलेपुः सुस्वरं नार्यो विसृजन्त्यो मुहुः शुचः ॥
हा नाथ प्रिय धर्मज्ञ करुणानाथवत्सल । त्वया हतेन निहता वयं ते सगृहप्रजाः ॥ ४५ ॥
त्वया विरहिता पत्या पुरीयं पुरुषर्षभ । न शोभते वयमिव निवृत्तोत्सवमङ्गळा ॥ ४६ ॥
अनागसां त्वं भूतानां कृतवान् द्रोहमुल्बणम् । तेनेमां हा दशां नीतो भूतध्रुक् को लभेत शम् ॥ ४७ ॥
सर्वेषामिह भूतानामेष हि प्रभवाप्ययः । गोप्ता च तदवध्यायी[4] न क्वचित् सुखमेधते ॥ ४८ ॥

---

१. खड्गपाणिम् ❋ २. निगृह्य केशेषु ❋ * अयं श्लोकः प्राचीनकोशेषु नास्ति । न व्याख्यातश्च विजयध्वजतीर्थैः । ३. अग्रतोऽच्युतं तदेव ❋ ४. गोप्ता च तमवज्ञाय ❋

**श्रीशुक उवाच**

राजयोषित आश्वास्य भगवान् लोकभावनः । यामाहुर्लौकिकीं संस्थां हतानां समकारयत्॥ ४९ ॥
मातरं पितरं चैव मोचयित्वाऽथ बन्धनात् । कृष्णरामौ ववन्दाते शिरसाऽऽस्पृश्य पादयोः॥ ५० ॥
देवकी वसुदेवश्च विज्ञाय जगदीश्वरौ । कृतसंवन्दनौ पुत्रौ सस्वजाते न शङ्कितौ[१] ॥ ५१ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे द्विचत्वारिंशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

पितरावुपलब्धार्थौ विदित्वा पुरुषोत्तमः । मा भूदिति निजां मायां ततान जनमोहिनीम् ॥ १ ॥
उवाच पितरावेत्य साग्रजः सात्वतर्षभः । प्रश्रयावनतः प्रीणन्नम्ब तातेति सादरम् ॥ २ ॥
नास्मत्तो युवयोस्तात नित्योत्कण्ठितयोरपि । बाल्यपौगण्डकैशोराः पुत्राभ्यामगमन् क्वचित् ॥ ३ ॥
न लब्धो दैवहतयोर्वासो नौ भवदन्तिके । यां बालाः[२] पितृगेहस्था विन्दन्ते लाळिता मुदम् ॥ ४ ॥
सर्वार्थसम्भवो देहो जनितः पोषितो यतः[३] । न तयोर्याति निर्वेशं पित्रोर्मर्त्यः शतायुषा ॥ ५ ॥
यस्तयोरात्मजः कल्प[४] आत्मना च धनेन च । वृत्तिं न दद्यात् तं प्रेत्य स्वमांसं खादयन्ति हि ॥ ६ ॥
मातरं पितरं वृद्धं भार्यां साध्वीं सुतं शिशुम् । गुरुं विप्रं प्रपन्नं च कल्पोऽबिभ्रच्छ्वसन्मृतः ॥ ७ ॥
तन्नावकल्पयोः कंसान्नित्यमुद्विग्नचेतसोः । मोघमेते व्यतिक्रान्ता दिवसा वामनर्चतोः ॥ ८ ॥
तत् क्षन्तुमर्हथस्तात मातर्नौ परतन्त्रयोः । अकुर्वतोर्वां शुश्रूषां क्लिष्टयोर्दुर्हृदा भृशम् ॥ ९ ॥
इति मायामनुष्यस्य हरेर्विश्वात्मनो गिरा । मोहितावङ्कमारोप्य परिष्वज्यापतुर्मुदम् ॥ १० ॥
सिञ्चन्तावश्रुधाराभिः स्नेहपाशेन संवृतौ । न किञ्चिदूचतू राजन् बाष्पकण्ठौ विमोहितौ ॥ ११ ॥
एवमाश्वास्य पितरौ भगवान् देवकीसुतः । मातामहं तूग्रसेनं यदूनामकरोन्नृपम् ॥ १२ ॥
आह चास्मान् महाराज प्रजाः स्वाज्ञप्तुमर्हसि । ययातिशापाद् यदुभिर्नासितव्यं नृपासने ॥ १३ ॥
मयि भृत्य उपासीने भवतो विबुधादयः । बलिं हरन्त्यवनताः किमुतान्ये नराधिपाः ॥ १४ ॥
सर्वान् स्वज्ञातिसम्बन्धान् दिग्भ्यः कंसभयाद् गतान् । यदुवृष्ण्यन्धकमधुदाशार्हकुकुरार्हकान्[५] ॥

---

१. सस्वजातेनुशङ्कितौ ❋ २. ये बालाः ❋ ३. पोषितः पुनः ❋
४. कल्यः ❋ एवं सर्वत्र। ५. दाशार्हान् कुकुरार्यकान् ❋

सभाजितान् समाश्वास्य विदेशावासकर्शितान् । न्यवासयत् स्वगेहेषु वित्तैः सन्तर्प्य विश्वसृक् ॥

कृष्णसङ्कर्षणभुजैर्गुप्ता लब्धमनोरथाः । गेहेषु रेमिरे[१] सिद्धाः कृष्णरामहतज्वराः ॥ १७ ॥

वीक्षन्तोऽहरहः प्रीता मुकुन्दवदनाम्बुजम् । नित्यप्रमुदितं श्रीमत्सदयस्मितवीक्षणम् ॥ १८ ॥

तत्र प्रवयसोऽप्यासन् युवानोऽतिबलौजसः । पिबन्तोऽक्षैर्मुकुन्दस्य मुखाम्भोजसुधां मुहुः ॥ १९ ॥

अथ नन्दं समासाद्य भगवान् देवकीसुतः । सङ्कर्षणश्च राजेन्द्र परिष्वज्येदमूचतुः ॥ २० ॥

पितर्युवाभ्यां स्निग्धाभ्यां पोषितौ लाळितौ भृशम् । पित्रोरभ्यधिका प्रीतिरात्मजेष्वात्मनोऽपि हि ॥

स पिता सा च जननी यौ पुष्णीतां[२] स्वपुत्रवत् । शिशून् बन्धुभिरुत्सृष्टानकल्पैः पोषरक्षणे ॥ २२ ॥

यात यूयं व्रजं तात वयं च स्नेहदुःखितान् । ज्ञातीन् नो द्रष्टुमेष्यामो विधाय सुहृदां सुखम् ॥ २३ ॥

एवं सान्त्वय्य भगवान् नन्दं सव्रजमच्युतः[३] । वासोऽलङ्कारकुप्याग्र्यैरर्हयामास सादरम् ॥ २४ ॥

इत्युक्तस्तौ परिष्वज्य नन्दः प्रणयविह्वलः । पूरयन्नश्रुभिर्नेत्रे सह गोपैर्व्रजं ययौ ॥ २५ ॥

अथ शूरसुतो राजन् पुत्रयोः समकारयत् । पुरोधसा ब्राह्मणैश्च यथावद् द्विजसंस्कृतिम् ॥ २६ ॥

तेभ्योऽदाद् दक्षिणां गावो रुग्ममालाः स्वलङ्कृताः । स्वलङ्कृतेभ्यः सम्पूज्य सवत्साः क्षौममालिनीः ॥

याः कृष्णरामजन्मर्क्षे मनोदत्ता महामतिः[४] । ताश्चाददादनुस्मृत्य कंसेनाधर्मतो हृताः ॥ २८ ॥

ततश्च लब्धसंस्कारौ द्विजत्वं प्राप्य सुव्रतौ । गर्गाद् यदुकुलाचार्याद् गायत्रं व्रतमास्थितौ ॥ २९ ॥

प्रभवौ सर्वविद्यानां सर्वज्ञौ जगदीश्वरौ । नान्यसिद्धामलज्ञानं गूहमानौ नरेहितैः ॥ ३० ॥

अथो गुरुकुले[५] वासमिच्छन्तावुपजग्मतुः । काश्यं सान्दीपनिं नाम अवन्तिपुरवासिनम् ॥ ३१ ॥

यथोपसाद्य तौ दान्तौ गुरौ वृत्तिमनिन्दिताम् । ग्राहयन्तावुपेतौ स्म भक्त्या देवमिवादृतौ ॥ ३२ ॥

तयोर्द्विजवरस्तुष्टः शुद्धभावानुवृत्तिभिः । प्रोवाच वेदानखिलान् साङ्गोपनिषदो गुरुः ॥ ३३ ॥

सरहस्यं धनुर्वेदं धर्मन्यायपथांस्तथा । तथा चान्वीक्षिकीं विद्यां राजनीतिं च षड्विधाम् ॥ ३४ ॥

सर्वं तदमरश्रेष्ठौ सर्वविद्याप्रवर्तकौ । सकृन्निगदमात्रेण तौ सञ्जगृहतुर्नृप ॥ ३५ ॥

अहोरात्रैश्चतुःषष्ट्या संयाते तावतीः कलाः । गुरुदक्षिणयाऽऽचार्यं छन्दयामासतुर्नृप ॥ ३६ ॥

द्विजस्तयोस्तं महिमानमद्भुतं संलक्ष्य राजन्नतिमानुषीं मतिम्[६] ।
सम्मन्त्र्य पत्न्या स महार्णवे मृतं बालं प्रभासे वरयाम्बभूव ॥ ३७ ॥

---

१. गृहेषु रेमिरे ❋ २. पुष्णाताम् ❋ ३. भगवान् सदसि व्रजमच्युतः ❋ ४. मनस्विना ❋
५. गुरुकुलावासम् ❋ ६. गतिम्

तथेत्यथारुह्य महारथौ रथं प्रभासमासाद्य दुरन्तविक्रमौ ।
वेलामुपव्रज्य निषीदतुः क्षणं सिन्धुर्विदित्वाऽर्हणमाहरत् तयोः ॥ ३८ ॥
तमाह भगवानाशु गुरुपुत्रः प्रदीयताम् । योऽसाविह त्वया ग्रस्तो बालको महतोर्मिणा ॥ ३९ ॥
तमाह[१] वरुणो देवो विनयावनतः स्थितः । नैवाहार्षमहं देव[२] दैत्यः पञ्चजनाह्वयः ॥ ४० ॥
अन्तर्जलचरः कृष्ण शङ्खरूपधरोऽसुरः । आस्ते तेनाहृतो नूनं तच्छ्रुत्वा सत्वरं प्रभुः ॥ ४१ ॥
जलमाविश्य तं हत्वा नापश्यदुदरेऽर्भकम् । तदङ्गप्रभवं शङ्खमादाय रथमागमत् ॥ ४२ ॥
ततः संयमनीं नाम यमस्य दयितां पुरीम् । गत्वा जनार्दनः शङ्खं प्रदध्मौ सहलायुधः ॥ ४३ ॥
शङ्खनिर्ह्रादमाकर्ण्य प्रजासंयमनो यमः । तयोः सपर्यां महतीं चक्रे भक्त्युपबृंहितः ॥ ४४ ॥
उवाचावनतः कृष्णं सर्वभूताशयालयम् । लीलामनुष्य हे विष्णो[३] युवयोः करवाम किम् ॥ ४५ ॥
*इत्युक्तस्तेन देवेशो देवकीनन्दनोऽब्रवीत् । गुरुपुत्रमिहानीतं निजकर्मनिबन्धनम् ।
आनयस्व महाराज मच्छासनपुरस्कृतः ॥ ४६ ॥
तथेति तेनोपनीतं गुरुपुत्रं यदूत्तमौ । दत्वा स्वगुरवे भूयो वृणीष्वेति तमूचतुः ॥ ४७ ॥
ततः प्रीतमना राजन्निदं वचनमब्रवीत् । सान्दीपनिर्महाभागो रामकृष्णावरिन्दमौ ॥ ४८ ॥
सम्यक् सम्पादिता वत्सौ[४] भवद्भ्यां गुरुनिष्क्रिया । को नु युष्मद्विधगुरोः कामानामवशिष्यते ।
गच्छतं स्वगृहं वीरौ कीर्तिर्वामस्तु पावनी ॥ ४९ ॥
गुरुणैवमनुज्ञातौ रथेनानिलरंहसा । आयातौ[५] स्वपुरं तात पर्जन्यनिनदेन वै ॥ ५० ॥
समनन्दन् प्रजाः सर्वा दृष्ट्वा रामजनार्दनौ । अपश्यन्त्यो बह्वहानि नष्टलब्धधना इव ॥ ५१ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे त्रिचत्वारिंशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

वृष्णीनां प्रवरो मन्त्री कृष्णस्य दयितः सखा । शिष्यो बृहस्पतेः साक्षादुद्धवो बुद्धिसत्तमः[६] ॥ १ ॥
तमाह भगवान् प्रेष्ठं भक्तमेकान्तिनं क्वचित्[७] । गृहीत्वा पाणिना पाणिं प्रपन्नार्तिहरो हरिः ॥ २ ॥

---

१. तदाऽऽह ❋ २. नाहर्षं तमहं देव ❋ ३. लीलामनुष्ययोर्विष्णो ❋ ४. वत्स ❋
* इदं श्लोकार्धं प्राचीनकोशे नास्ति । ५. आयाताम् ❋ ६. बुद्धिमत्तमः ❋ ७. एकान्तिकं क्वचित् ❋

गच्छोद्धव व्रजं सौम्य पित्रोर्नः प्रीतिमावह । गोपीनां मद्वियोगाधिं मत्सन्देशैर्विमोचय ॥ ३ ॥
ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः । मामेव दयितं प्रेष्ठमात्मानं मनसा गताः ॥ ४ ॥
ये त्यक्तलोकधर्माश्च मदर्थे तान् बिभर्म्यहम् । मयि ताः प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः ॥ ५ ॥
स्मरन्त्योङ्ग[1] विमुह्यन्ति विरहौत्कण्ठ्यविक्लबाः । धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान् कथञ्चन ॥
प्रत्यागमनसन्देशैर्वक्तव्या मे मदात्मिकाः[2] । इत्युक्त उद्धवो राजन् सन्देशान् भर्तुरादृतः ॥ ७ ॥
आदाय रथमारुह्य प्रययौ नन्दगोकुलम् । प्राप्तो नन्दव्रजं श्रीमान् निम्लोचति विभावसौ ॥ ८ ॥
छन्नयानः प्रविशतां पशूनां खुररेणुभिः । वाशितार्थे[3] नियुद्ध्यद्भिर्नादितं शुष्मिभिर्वृषैः ॥ ९ ॥
धावन्तीभिश्च वाश्राभिरूधोभारेण वत्सकान् । इतस्ततो विलङ्घद्भिर्गोवत्सैर्मण्डितं सितैः ॥ १० ॥
गोदोहशब्दाभिरवैर्वेणूनां[4] निस्वनेन च । गायन्तीभिश्च कर्माणि शुभानि बलकृष्णयोः ।
स्वलङ्कृताभिर्गोपीभिर्गोपैश्च सुविराजितम् ॥ ११ ॥
अग्र्यर्कातिथिगोविप्रपितृदेवार्चनान्वितैः । धूपदीपैश्च माल्यैश्च गोपावासैर्मनोरमम् ॥ १२ ॥
सर्वतः पुष्पितवनं द्विजाळिकुलनादितम् । हंसकारण्डवाकीर्णैः पद्मषण्डैश्च मण्डितम् ॥ १३ ॥
तमागतं समागम्य कृष्णस्यानुचरं प्रियम् । नन्दः प्रीतः परिष्वज्य वासुदेवधियाऽऽर्चयत् ॥ १४ ॥
भोजितं परमान्नेन संविष्टं कशिपौ सुखम् । गतश्रमं पर्यपृच्छत् पादसंवाहनादिभिः ॥ १५ ॥

**नन्द उवाच**

कच्चिदङ्ग महाभाग सखा नः शूरनन्दनः । आस्ते कुशल्यपत्याद्यैर्युक्तो मुक्तः सुहृद्वृतः ॥ १६ ॥
दिष्ट्या कंसो हतः पापः सानुगः स्वेन पाप्मना । साधूनां धर्मशीलानां यदूनां द्वेष्टि यः सदा ॥ १७ ॥
अपि स्मरति नः कृष्णो मातरः सुहृदः सखीन् । गोपान् व्रजं चात्मनाथं गावो वृन्दावनं गिरिम् ॥
अप्यायास्यति गोविन्दः स्वजनं सकृदीक्षितुम् । तर्हि द्रक्ष्याम तद्वक्त्रं सुनसं सुस्मितेक्षणम् ॥
दवाग्नेर्वातवर्षाच्च वृषात् सर्पाच्च रक्षिताः । दुरत्ययेभ्यो मृत्युभ्यः कृष्णेन सुमहात्मना ॥ २० ॥
स्मरतां कृष्णवीर्याणि लीलापाङ्गनिरीक्षणम् । हसितं भाषितं चाङ्ग सर्वा नः शिथिलाः क्रियाः ॥
सरिच्छैलवनोद्देशान् मुकुन्दपदभूषितान् । आक्रीडानीक्षमाणानां मनो याति तदात्मताम् ॥ २२ ॥
मन्ये कृष्णं च रामं च प्राप्ताविह सुरोत्तमौ । सुराणां महदर्थाय गर्गस्य वचनं यथा ॥ २३ ॥

---
१. स्मरन्त्यङ्ग २. मदात्मकाः ❋ ३. वासितार्थे ४. गोदोहशब्दाभिरामवेणूनाम् ❋

कंसं नागायुतप्राणं मल्लौ गजपतिं तथा । अवधिष्टां[१] लीलयैव पशूनिव मृगाधिपः ॥ २४ ॥
ताळत्रयं महासारं धनुर्यष्टिमिवेभराट् । बभञ्जैकेन हस्तेन सप्ताहमदधाद् गिरिम् ॥ २५ ॥
प्रलम्बो धेनुकोऽरिष्टस्तृणावर्तबकादयः[२] । दैत्याः सुरासुरजितो हता येनेह लीलया ॥ २६ ॥

श्रीशुक उवाच

इति संस्मृत्यसंस्मृत्य नन्दः कृष्णानुरक्तधीः । अश्रुकण्ठोऽभवत् तूष्णीं प्रेमप्रसरविह्वलः ॥ २७ ॥
यशोदा वर्ण्यमानानि पुत्रस्य चरितानि च । शृण्वन्त्यश्रूण्यवास्राक्षीत् स्नेहस्नुतपयोधरा ॥ २८ ॥
तयोरित्थं भगवति कृष्णे नन्दयशोदयोः । वीक्ष्यानुरागं परमं नन्दमाहोद्धवो मुदा ॥ २९ ॥

उद्धव उवाच

युवां श्लाघ्यतमौ नूनं देहिनामिह मानद । नारायणेऽखिलगुरौ यत् कृता मतिरीदृशी ॥ ३० ॥

एतौ हि विश्वस्य च बीजयोनी रामो मुकुन्दः पुरुषः प्रधानम्[३] ।
अन्वीय भूतेषु विलक्षणेषु ज्ञानस्य चेशात[४] इमौ पुराणौ ॥ ३१ ॥

यस्मिन् जनः प्राणवियोगकाले क्षणं समावेश्य मनो विशुद्धम् ।
निगृह्य कर्माशयमाशु याति परां गतिं ब्रह्ममयोऽर्कवर्णः ॥ ३२ ॥

तस्मिन् भवन्तावखिलात्मयोनौ[५] नारायणे कारणमर्त्यमूर्तौ ।
भावं व्यधत्तां नितरां महात्मन् किं वाऽवशिष्टं युवयोः सुकृत्यम् ॥ ३३ ॥

आगमिष्यत्यदीर्घेण कालेन व्रजमच्युतः । प्रियं विधास्यते पित्रोर्भगवान् सात्वताम्पतिः ॥ ३४ ॥
हत्वा कंसं रङ्गमध्ये प्रतीपं सर्वसात्वताम् । यदाह वः समागम्य कृष्णः सत्यं करोति तत् ॥ ३५ ॥
मा खिद्येतां[६] महाभागौ द्रक्ष्यथः कृष्णमन्तिके । अन्तर्हृदि स भूतानामास्ते ज्योतिरिवैधसि ॥ ३६ ॥
न ह्यस्यातिप्रियः कश्चिन्नाप्रियो वाऽस्त्यमानिनः । नोत्तमो नाधमो वाऽपि समानस्य समोऽपि वा[७] ॥
न माता न पिता तस्य न भार्या न सुतादयः । नात्मीयो न परश्चापि न देहो जन्म एव च[८] ॥ ३८ ॥
न चास्य कर्म वा लोके सदसन्मिश्रयोनिषु[९] । क्रीडार्थं सोऽपि साधूनां परित्राणाय कल्पते ॥ ३९ ॥

---

१. अवधीत् तान् ❋ २. प्रलम्बधेनुकारिष्ट... ❋ ३. बीजयोनी इमौ प्रधानं पुरुषः पुराणः ❋/पुरुषः प्रधानः ❋
४. विज्ञाय चेशाते ❋ ५. अखिलात्महेतौ ❋ ६. मा खिद्यतम् ❋
७. समानस्यासमोऽपि वा (?) ❋ ८. न देहो जन्म कर्म वा ❋ ९. लोके जन्म च कर्माणि सद.... ❋

सत्वं रजस्तम इति भजते निर्गुणो महान् । क्रीडन्ननीहोऽनुगुणैः सृजत्यवति हन्त्यजः ॥ ४० ॥
युवयोरेव नैवायमात्मजो भगवान् हरिः । सर्वेषामात्मजो ह्यात्मा पिता माता स ईश्वरः ॥ ४१ ॥
दृष्टं श्रुतं भूतभवद्भविष्यत् स्थास्नुश्चरिष्णुर्महदल्पकं च ।
विनाऽच्युताद् वस्तुतया न चान्यत् स एव सर्वं परमार्थरूपः ॥ ४२ ॥

**श्रीशुक उवाच**

एवं निशा सा ब्रुवतोर्व्यतीता[१] नन्दस्य कृष्णानुचरस्य राजन् ।
गोप्यः समुत्थाय निरूप्य दीपान् वास्तून् समभ्यर्च्य दधीन्यमन्थन् ॥ ४३ ॥
ता दीपदीप्तैर्मणिभिर्विरेजू रज्वाविकर्षद्भुजकङ्कणस्रजः ।
चलन्नितम्बस्तनहारकुण्डलत्विषत्कपोलारुणकुङ्कुमाननाः ॥ ४४ ॥
उद्गायतीनामरविन्दलोचनं व्रजाङ्गनानां दिवमस्पृशद् ध्वनिः ।
दध्नश्च निर्मन्थनशब्दमिश्रितो निरस्यते येन दिशाममङ्गळम् ॥ ४५ ॥
भगवत्युदिते सूर्ये व्रजद्वारि व्रजौकसः । दृष्ट्वा रथं शातकौम्भं कस्यायमिति चाब्रुवन् ॥ ४६ ॥
अक्रूर आगतः किं वा यः कंसस्यार्थसाधकः । येन नीतो मधुपुरीं कृष्णः कमललोचनः ॥ ४७ ॥
किं साधयिष्यत्यस्माभिर्भर्तुः प्रेतस्य निष्कृतिम् । इति स्त्रीणां वदन्तीनामुद्धवोऽगात् कृताह्निकः ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे चतुश्चत्वारिंशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

तं वीक्ष्य कृष्णानुचरं व्रजस्त्रियः प्रलम्बबाहुं नवकञ्जलोचनम् ।
पीताम्बरं पुष्करमालिनं लसन्मुखारविन्दं परिमृष्टकुण्डलम् ॥ १ ॥
सुविस्मिताः[२] कोऽयमतीवदर्शनः कुतश्च कस्याच्युतवेषभूषणः[३] ।
इति स्म सर्वाः परिवव्रुरुत्सुकास्तमुत्तमश्लोकपदाम्बुजाश्रयम् ॥ २ ॥
तं प्रश्रयेणावनताः सुसत्कृतं सव्रीळहासेक्षणसूनृतादिभिः ।
रहस्यपृच्छन्नुपविष्टमासने विज्ञाय सन्देशहरं रमापतेः ॥ ३ ॥

---

१. एवं निशा सा तु यदा व्यतीता ❋ २. सविस्मयाः ❋ ३. कश्चाच्युतवेषभूषणः ❋

जानीमस्त्वां यदुपतेः पार्षदार्यमनुव्रतम् । भर्त्रेह प्रेषितः पित्रोर्भवान् प्रियचिकीर्षया ॥ ४ ॥
अन्यथा गोव्रजे तस्य स्मरणीयं न चक्ष्महे । स्नेहानुबन्धो बन्धूनां मुनेरपि सुदुस्त्यजः ॥ ५ ॥
अन्येष्वर्थकृता मैत्री यावदर्थविडम्बना । पुम्भिः स्त्रीषु कृता यद्वत् सुमनस्स्विव षट्पदैः ॥ ६ ॥
निस्स्वं त्यजन्ति गणिका अकल्यं नृपतिं प्रजाः । अधीतविद्या आचार्यमृत्विजो दत्तदक्षिणम् ॥ ७ ॥
खगा वीतफलं वृक्षं भुक्त्वा चातिथयो गृहम् । दग्धं मृगास्तथाऽरण्यं[१] जारो भुक्त्वा रतां स्त्रियम्[२] ॥
ददर्श गोपीर्गोविन्दमनोवाग्देहचेष्टितैः । कृष्णदूतो व्रजं प्राप्त उद्धवस्त्यक्तलौकिकाः ॥ ९ ॥
गायन्त्यः प्रियकर्माणि रुदन्त्यश्च गतह्रियः । तस्य संस्मृत्यसंस्मृत्य यानि कैशोरबाल्ययोः ॥ १० ॥
काचिन्मधुकरं दृष्ट्वा ध्यायन्ती[३] कृष्णसङ्गमम् । प्रियप्रस्थापितं दूतं कल्पयित्वेदमब्रवीत् ॥ ११ ॥

**गोप्युवाच**

मधुप कितवबन्धो मा स्पृशास्मान् सपत्न्याः कुचविलुळितमालाकुङ्कुमश्मश्रुभिस्त्वम् ।
वहतु मधुपतिस्तन्मानिनीनां प्रसादं यदुसदसि विडम्ब्यं यस्य दूतस्त्वमीदृक् ॥ १२ ॥
सकृदधरसुधां स्वां मोहिनीं[४] पाययित्वा सुमनस इव सद्यः कस्त्यजेन् मां भवादृक् ।
परिचरति कथं तत्पादपद्मं तु पद्मा ह्यपि[५] बत हृतचेता[६] उत्तमश्लोकजल्पैः ॥ १३ ॥
किमिह बहु षडङ्घ्रे गायसि त्वं यदूनामधिपतिमगृहाणामग्रतो नः पुराणम् ।
विजयसखसखीनां गायतां तत्प्रसङ्गः क्षपितकुचरुजस्ते[७] कल्पयन्तीष्टमिष्टाः ॥ १४ ॥
दिवि भुवि च रसायां काः स्त्रियस्तद्दुरापाः कपट रुचिरहासभ्रूविजृम्भस्य[८] याः स्युः ।
चरणरज उपास्ते यस्य भूतिर्वयं का अपि च कृपणपक्षे ह्युत्तमश्लोकशब्दः[९] ॥ १५ ॥
विसृज शिरसि पादं वेद्म्यहं चाटुकारैरलमनुनयसारैर्याहि दौत्ये मुकुन्दम् ।
स्वकृत इह विसृष्टापत्यपत्याप्तलोका व्यसृजदकृतचेताः[१०] किं नु सन्धेयमस्मिन्[११] ॥ १६ ॥
मृगयुरिव कपीन्द्रं विव्यधे[१२] यः किरातः स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम् ।
बलिमपि बलिवासं वेदविद्धर्गवन्ध्यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः ॥ १७ ॥

---

१. यथाऽरण्यम् ❋ २. भुक्त्वा परस्त्रियम् ❋ ३. ध्यायती ❋ ४. मोहनीम् ❋
५. तत्पद्मकिञ्जल्कपादमपि ❋ ६. हृतचित्ताः ❋ ७. तत्प्रसङ्गक्षपितकुचरुजस्ते ८. कपटरुचिरभाव... ❋
९. उत्तमश्लोकशब्दः ❋ १०. अकृतचित्ताः ❋ ११. सन्धेयमस्य ❋ १२. विव्यथे ❋

यदनुचरितलीलाकर्णपीयूषविप्रुट्[1] सकृददनविधूतद्वन्द्वधर्मा विनष्टाः ।
सपदि गृहकुटुम्बं दीनमुत्सृज्य दीना बहव इह विहङ्गा भैक्षचर्यां चरन्ति ॥ १८ ॥
वयमृतमिह जिह्मं व्याहृतं श्रद्दधानाः कुलिकरुतमिवाज्ञाः कृष्णवध्वो हरिण्यः ।
ददृशिम सकृदेतत्तन्नखस्पर्शतीव्रस्तनरुजपरमार्तिं भण्यतामस्य वार्ता ॥ १९ ॥
प्रियसख पुनरागाः प्रेयसा प्रेषितस्त्वं वरय किमनुरुन्धे माननीयोऽसि मेऽङ्ग ।
नयसि कथमिहास्मान्[2] दुस्त्यजं बन्धुपार्श्वं सततमुरसि सौम्य श्रीवधूः साकमास्ते ॥ २० ॥
अपि बत मधुपुर्यामार्यपुत्रोऽधुनाऽऽस्ते स्मरति स पितृगेहं सौम्य बन्धूंश्च गोपान् ।
क्वचिदपि स कथं नः किङ्करीणां गृहीतो भुजमगरुसुगन्धं मूर्ध्न्यधास्यत् कदा नु ॥ २१ ॥

**श्रीशुक उवाच**

अथोद्धवो निशम्यैवं कृष्णदर्शनलालसाः । सान्त्वयन् प्रियसन्देशैर्गोपीरिदमभाषत ॥ २२ ॥
अहो यूयं स्म पूर्णार्था भवत्यो लोकपूजिताः । वासुदेवे भगवति यासामित्यर्पिता मतिः ॥ २३ ॥
दानव्रततपोहोमजपस्वाध्यायसंयमैः । श्रेयोविधिभिरन्यैश्च कृष्णे भक्तिर्हि साध्यते ॥ २४ ॥
भगवत्युत्तमश्लोके भवतीभिरनुत्तमा । भक्तिः प्रवर्तिता दिष्ट्या मुनीनामपि दुर्लभा ॥ २५ ॥
दिष्ट्या पुत्रान् पतीन् देहान् स्वजनान् भवनानि च । हित्वा वृणीत यूयं यत् कृष्णाख्यं पुरुषं परम् ॥
सर्वात्मभावोऽधिगतो भवतीनामधोक्षजे । विरहेण महाभागा महान् वोऽनुग्रहः कृतः ॥ २७ ॥
श्रूयतां प्रियसन्देशो भवतीनां सुखावहः । यमादायागतो भद्रा अहं भर्तुर्हि किङ्करः ॥ २८ ॥

**श्रीभगवानुवाच**

भवतीनां वियोगो मे नहि सर्वात्मना क्वचित् । यथा भूतानि भूतेषु खं वाय्वग्निर्जलं मही ॥ २९ ॥
तथाऽहं च मनःप्राणभूतेन्द्रियगुणाश्रयः[3] । आत्मन्येवात्मनाऽऽत्मानं सृजे हन्म्यनुपालये ॥ ३० ॥
आत्ममायानुभावेन भूतेन्द्रियगुणात्मना । आत्मा ज्ञानमयः शुद्धो व्यतिरिक्तो गुणान्वयः ॥ ३१ ॥
सुषुप्तिस्वप्नजाग्रद्भिर्मायावृत्तिभिरीयते ॥ ३२ ॥
एतदन्तः समाम्नायो योगः साङ्ख्यं मनीषिणाम् । त्यागस्तपो दमः सत्यं[4] समुद्रान्ता इवापगाः ॥
यत्त्वहं भवतीनां वै दूरेवर्त्यपि[5] यो दृशाम् । मनसः सन्निकर्षार्थं मदनुध्यानकाम्यया ॥ ३४ ॥
यथा दूरचरे प्रेष्ठे मन आविश्य वर्तते । स्त्रीणां च न तथा चेतः सन्निकृष्टेऽक्षगोचरे ॥ ३५ ॥

---

१. यदनुरचितलीलाकर्णपीयूषविप्रुट्... ❋ २. कथमिवास्मान् ❋ ३. ...प्राणबुद्धीन्द्रिय... ❋
४. तपो दानसत्यम् ❋ ५. दूरवर्त्यपि

मय्यावेश्य मनः कृत्स्नं विमुक्ताशेषवृत्ति यत् । अनुस्मरन्त्यो मां नित्यमचिरान्मामुपेष्यथ ॥ ३६ ॥
यन्मया क्रीडिता रात्रीर्वनेऽस्मिन् व्रज आस्थिताः । अलब्धावासकल्याणा आपुर्मां मद्विचिन्तया ॥

**श्रीशुक उवाच**

एवं प्रियतमादेशमाकर्ण्य व्रजयोषितः । ता ऊचुरुद्धवं प्रीतास्तत्सन्देशागतस्मृतीः ॥ ३८ ॥

**गोप्य ऊचुः**

दिष्ट्याऽहितो हतः कंसो यदूनां सानुगोऽघकृत् । दिष्ट्याऽप्तैर्लब्धसर्वार्थैः कुशल्यास्तेऽच्युतोऽधुना ॥
कच्चिद् गदाग्रजः सौम्य करोति पुरयोषिताम् । प्रीतिं सुस्निग्धसव्रीळहासोदारेक्षणार्चितः[१] ॥ ४० ॥
कथं रतिविशेषज्ञः प्रियश्च[२] पुरयोषिताम् । नानुबध्येत तद्वाक्यैर्विभ्रमैश्चानुभाजितः ॥ ४१ ॥
अपि स्मरति नः साधो गोविन्दः प्रस्तुते क्वचित् । गोष्ठीमध्ये पुरस्त्रीणां[३] ग्राम्यस्वैरकथान्तरे ॥ ४२ ॥
ताः किं निशाः स्मरति यासु तदा प्रियाभिर्वृन्दावने कुमुदकुन्दशशाङ्करम्ये ।
रेमे क्वणच्चरणनूपुररासगोष्ठ्यामस्माभिरीडितमनोज्ञकथः कदाचित् ॥ ४३ ॥
अप्येष्यतीह दाशार्हस्तप्तं स्वकृतया शुचा । सञ्जीवयन् व्रजं गात्रैर्यथेन्द्रो वनमम्बुदैः ॥ ४४ ॥
कस्मात् कृष्ण इहायाति प्राप्तराज्यो हताहितः । विहृत्य नगरस्त्रीभिः प्रीतः सर्वसुहृद्वृतः ॥ ४५ ॥
किमस्माभिर्वनौकोभिरन्याभिर्वा महात्मनः । श्रीपतेराप्तकामस्य क्रियेतार्थः कृतात्मनः ॥ ४६ ॥
परं सुखं हि नैराश्यं स्वैरिण्यप्याह पिङ्गळा । तज्जानतीनां नः कृष्णे तथाप्याशा दुरत्यया ॥ ४७ ॥
क उत्सहेत सन्त्यक्तुमुत्तमश्लोकसंविदम् । अनिच्छतोऽपि यस्य श्रीरङ्गान्न च्यवते क्वचित् ॥ ४८ ॥
सरिच्छैलवनोद्देशा गावो वेणुरवा इमे । सङ्कर्षणसहायेन कृष्णेनाक्रीडिताः प्रभो ॥ ४९ ॥
पुनःपुनः स्मारयन्ति नन्दगोपसुतं बत । श्रीनिकेते तत्पदके विस्मर्तुं नैव शक्नुमः ॥ ५० ॥
गत्या ललितयोदारहासलीलावलोकनैः । माध्व्या गिरा हृतधियः कथं तद् विस्मराम हे ॥ ५१ ॥
हे नाथ हे रमानाथ व्रजनाथार्तिनाशन । मग्नमुद्धर गोविन्द गोकुलं व्रजिनार्णवात् ॥ ५२ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे पञ्चचत्वारिंशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

ततस्ताः कृष्णसन्देशैर्व्यपेतविरहामयाः । उद्धवं पूजयाञ्चक्रुर्ज्ञात्वा स्निग्धमधोक्षजे ॥ १ ॥
उवास कतिचिन्मासान् गोपीनां विनुदन् शुचः । कृष्णलीलाकथा गायन् रमयामास गोकुलम् ॥ २ ॥

---

१. तत्स्निग्धसव्रीळ.... *  २. प्रीतश्च *  ३. वरस्त्रीणाम् *

यावन्त्यहानि नन्दस्य व्रजेऽवात्सीत् स उद्धवः । व्रजौकसां क्षणप्रायाण्यासन् कृष्णस्य वार्तया ॥

सरिद्वनगिरिद्रोणीर्वीक्षन् कुसुमितान् द्रुमान्[1] । कृष्णं संस्मारयन् रेमे[2] हरिदासो व्रजौकसाम् ॥ ४ ॥

दृष्ट्वैवमादि गोपीनां कृष्णावेशात्मविक्लबम् । उद्धवः परमप्रीतस्ता नमस्यन्निदं जगौ ॥ ५ ॥

एताः परं तनुभृतां भुवि गोपवध्वो गोविन्द एवमखिलात्मनि रूढभावाः ।
वाञ्छन्ति यद् भवभियो मुनयो वयं च किं ब्रह्मजन्मभिरनन्तकथा न यत्र ॥ ६ ॥

क्वेमाः स्त्रियो वनचरा व्यभिचारशीलाः कृष्णे क्व चैष परमात्मनि रूढभावः ।
नन्वीश्वरोऽनुभजतोऽविदुषोऽपि साक्षाच्छ्रेयस्तनोत्यगदराज इवोपयुक्तः ॥ ७ ॥

नायं श्रियो ननु नितान्तरतेः प्रसादः स्वर्योषितां च नळिताङ्गरुचां कुतोऽन्याः ।
रासोत्सवेऽस्य भुजदण्डगृहीतकण्ठलब्धाशिषां य उदगाद् व्रजवल्लवीनाम् ॥ ८ ॥

आसामहो चरणरेणुजुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधीनाम् ।
या दुस्त्यजं स्वजनमार्यपथं च हित्वा भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम् ॥ ९ ॥

या वै श्रियाऽर्चितमजादिभिराप्तकामैर्योगेश्वरैरपि यदात्मनि रासगोष्ठ्याम् ।
कृष्णस्य तद्भगवतश्चरणारविन्दं न्यस्य स्तनेषु विजहुः परिरभ्य तापम् ॥ १० ॥

वन्दे नन्दव्रजस्त्रीणां पादरेणुमभीक्ष्णशः । यासां हरिकथोद्गीतं पुनाति भुवनत्रयम् ॥ ११ ॥

**श्रीशुक उवाच**

अथ गोपीरनुज्ञाप्य यशोदां नन्दमेव च । गोपानामन्त्र्य[3] दाशार्हो यास्यन्नारुरुहे रथम् ॥ १२ ॥

तं निर्गतं समासाद्य नानोपायनपाणयः । नन्दादयोऽनुरागेण प्रावोचन्नश्रुलोचनाः ॥ १३ ॥

मनसो वृत्तयो नः स्युः कृष्णपादाम्बुजाश्रयाः । वाचोऽभिधायिनीर्नाम्नां कायस्तत्प्रवणादिषु[4] ॥

कर्मभिर्भ्राम्यमाणानां यत्र क्वापीश्वरेच्छया । मङ्गळाचरितैर्दानै रतिर्नः कृष्ण ईश्वरे ॥ १५ ॥

एवं सभाजितो गोपैः कृष्णभक्त्या नराधिप । उद्धवः पुनरागच्छन्मधुरां कृष्णपालिताम् ॥ १६ ॥

कृष्णाय प्रणिपत्याह भक्त्युद्रेकं व्रजौकसाम् । वासुदेवाय रामाय राज्ञे चोपायनान्यदात् ॥ १७ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे षट्चत्वारिंशोऽध्यायः ॥**

---

१. कुसुमितद्रुमान् ❋ २. कृष्णक्रीडासमं रेमे ❋/कृष्णक्रीडाः स्मरन् रेमे

३. गोपानन्यांश्च ❋ ४. तत्प्रह्वणादिषु ❋

### श्रीबादरायणिरुवाच

अथ विज्ञाय भगवान् सर्वात्मा सर्वदर्शनः । सैरन्ध्र्याः कामतप्तायाः प्रीतिं यच्छन्[१] गृहं ययौ ॥ १ ॥

महार्होपस्करोपेतं कामोपायोपबृंहितम् । मुक्तादामपताकाभिर्वितानशयनासनैः ॥ २ ॥

धूपैः सुरभिभिर्दीपैः स्रग्गन्धैरपि मण्डितम् ॥ ३ ॥

गृहं तमायान्तमवेक्ष्य साऽऽसनात्[२] सद्यः समुत्थाय च जातसम्भ्रमा ।
यथोपसङ्गम्य सखीभिरच्युतं सभाजयामास सदासनादिभिः ॥ ४ ॥

अथोद्धवः[३] साधु तयाऽभिपूजितो न्यषीदुर्व्यामभिमृश्य चासनम् ।
कृष्णोऽपि दान्तं शयनं महाधनं विवेश लोकाचरितान्यनुव्रतः ॥ ५ ॥

सा मज्जनालेपदुकूलभूषणस्रग्गन्धताम्बूलसुधासवादिभिः ।
प्रसाधितात्मोपससार माधवं सव्रीळलीलोत्स्मितविभ्रमेक्षितैः ॥ ६ ॥

आहूय कान्तां नवसङ्गमह्रिया विशङ्कितां कङ्कणभूषिते करे ।
प्रगृह्य शय्यामधिवेश्य रामया रेमेऽनुलेपार्पणपुण्यलेशया ॥ ७ ॥

साऽनङ्गतप्तकुचयोरुरसस्तथाऽक्ष्णोर्जिघ्रन्त्यनन्तचरणेन रुजो मृजन्ती ।
दोर्भ्यां स्तनान्तरगतं परिरभ्य कान्तमानन्दमूर्तिमजहादतिदीर्घतापम् ॥ ८ ॥

सैवं कैवल्यनाथं तं प्राप्य दुष्प्रापमीश्वरम् । अङ्गरागार्पणेनाहो दुर्भगेदमयाचत ॥ ९ ॥

आहोष्यतामिह प्रेष्ठ दिनानि कतिचिन्मया । रमस्व नोत्सहे त्यक्तुं सङ्गं तेऽम्बुरुहेक्षण ॥ १० ॥

तस्यै कामवरं दत्वा मानयित्वा च मानदः । सहोद्धवेन सर्वेशः स्वधामागमदृद्धिमत् ॥ ११ ॥

दुराराध्यं समाराध्य विष्णुं सर्वेश्वरेश्वरम् । यो वृणीते[४] मनोग्राह्यमसत्वात् कुमनीष्यसौ ॥ १२ ॥

अक्रूरभवनं कृष्णः सहरामोद्धवः प्रभुः । किञ्चिच्चिकीर्षन् स प्रागादक्रूरप्रियकाम्यया ॥ १३ ॥

स तान् नरवरश्रेष्ठानाराद् वीक्ष्य स्वबान्धवान् । प्रत्युत्थाय प्रमुदितः परिष्वज्याभ्यनन्दत ॥ १४ ॥

ननाम कृष्णं रामं च स तैरप्यभिवादितः । पूजयामास विधिवत्कृतासनपरिग्रहान् ॥ १५ ॥

पादावनेजनीरापो धारयन् शिरसा नृप । अर्हणेनाम्बरैर्दिव्यैर्गन्धस्रग्भूषणोत्तमैः ॥ १६ ॥

अर्चित्वा शिरसाऽऽनम्य पादावङ्कगतौ मृजन् । प्रश्रयावनतोऽक्रूरः कृष्णरामावभाषत ॥ १७ ॥

---

१. प्रियमिच्छन्  २. चासनात् ❋  ३. तथोद्धवः ❋  ४. याऽवृणीत ❋

दिष्ट्या पापो हतः कंसः सानुगो वामिदं कुलम्[१] । भवद्भ्यामुद्धृतं कृच्छ्राद् दुरन्ताच्च समेधितम् ॥

युवां प्रधानपुरुषौ जगद्धेतू जगन्मयौ । भवद्भ्यां न विना किञ्चित् परमस्ति न चापरम् ॥ १९ ॥

आत्मसृष्टमिदं विश्वमन्वाविश्य[२] स्वशक्तिभिः । ईयते बहुधा ब्रह्मन् श्रुतिप्रत्यक्षगोचरः ॥ २० ॥

यथा हि भूतेषु चराचरेषु मह्यादयो योनिषु भान्ति नाना ।
एवं भवान् केवल आत्मयोनिष्वात्माऽऽत्मतन्त्रो बहुधा विभाति ॥ २१ ॥

सृजस्यथो लुम्पसि पासि विश्वं रजस्तमस्सत्त्वगुणैः स्वशक्तिभिः[३] ।
न बध्यसे त्वं गुणकर्मभिर्वा ज्ञानात्मनस्ते क्व च नैव हेतुः ॥ २२ ॥

देहाद्युपाधेरनिरूपितत्वाद् भवो हि साक्षान्न चिदात्मनः स्यात् ।
अतो न बन्धस्तव नैव मोक्षः स्यातां निकामस्त्वयि नो विवेकः ॥ २३ ॥

त्वयोदितोऽयं जगतो हिताय यदायदा वेदपथः पुराणः ।
बाध्येत पाषण्डपथैरसद्भिस्तदा भवान् सत्त्वगुणं बिभर्ति ॥ २४ ॥

स त्वं प्रभोऽद्य वसुदेवगृहेऽवतीर्णः स्वांशेन भारमपनेतुमिहासि भूमेः ।
अक्षोहिणीशतवधेन सुरेतराणां राज्ञाममुष्य च कुलस्य यशो वितन्वन् ॥ २५ ॥

अद्येश[४] नो वसतयः खलु भूरिभागा यत् सर्वदेवपितृभूतनृदेवमूर्तिः ।
यत्पादशौचसलिलं त्रिजगत् पुनाति स त्वं जगद्गुरुरधोक्षज याः प्रविष्टः ॥ २६ ॥

कः पण्डितस्त्वदपरं शरणं समीयाद् भक्तप्रियादृतगिरः सुहृदः कृतज्ञात् ।
सर्वान् ददाति सुहृदो भजतोऽभिकामानात्मानमप्युपचयापचयौ[५] न यस्य ॥ २७ ॥

दिष्ट्या जनार्दन भवानिह नः प्रतीतो योगेश्वरैरपि दुरापगतिः सुरेशैः ।
छिन्ध्याशु नः सुतकळत्रधनाप्तगेहदेहाभिमोहरशनां[६] भवदीयमायाम् ॥ २८ ॥

इत्यर्चितः संस्तुतश्च भक्तेन भगवान् हरिः । अक्रूरं सस्मितं प्राह गीर्भिः सम्मोहयन्निव ॥ २९ ॥

**श्रीभगवानुवाच**

त्वं नो गुरुः पितृव्यश्च श्लाघ्यो बन्धुश्च नित्यदा । वयं तु रक्ष्याः पोष्याश्च अनुकम्प्याः प्रजा हि वः ॥

---

१. पावितं कुलम् ❋ २. अन्वावेश्य ❋ ३. गुणैश्च शक्तिभिः ❋ ४. अद्येह ❋
५. भजतोऽपि कामा.... ❋ ६. ...देहादिमोहरशनाम् ❋

भवद्विधा महाभागा निषेव्या अर्हसत्तमाः । श्रेयस्कामैर्नृभिर्नित्यं देवाः स्वार्था न साधवः ॥ ३१ ॥
नह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः । ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥ ३२ ॥
स भवान् सुहृदां वै नः श्रेयान् श्रेयश्चिकीर्षया[१] । जिज्ञासार्थं पाण्डवानां गच्छ स्वगजसाह्वयम्[२] ॥
पितर्युपरते बालाः सह मात्रा सुदुःखिताः । आनीताः स्वपुरं राज्ञा वसन्त इति शुश्रुम ॥ ३४ ॥
तेषु राजाऽम्बिकापुत्रो भ्रातृपुत्रेषु दीनधीः । समो न वर्तते नूनं दुष्पुत्रवशगोऽन्धदृक्[३] ॥ ३५ ॥
गच्छ जानीहि तद्वृत्तमधुना साध्वसाधु वा । विज्ञाय तद् विधास्यामो यथा शं सुहृदां भवेत् ॥ ३६ ॥
इत्यक्रूरं समादिश्य भगवान् हरिरीश्वरः । सङ्कर्षणोद्धवाभ्यां वै ततः स्वभवनं ययौ ॥ ३७ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे सप्तचत्वारिंशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

स गत्वा हस्तिनपुरं पौरवेन्द्रयशोऽङ्कितम् । ददर्श तत्राम्बिकेयं सभीष्मं विदुरं पृथाम्[४] ॥ १ ॥
सहपुत्रं च बाह्लीकं भारद्वाजं सगौतमम् । कर्णं सुयोधनं द्रौणिं पाण्डवान् सुहृदोऽपरान् ॥ २ ॥
यथावदुपसङ्गम्य बन्धुभिर्गान्दिनीसुतः । संपृष्टस्तैः सुहृद्वार्तां स्वयं चापृच्छदव्ययम् ॥ ३ ॥
उवास कतिचिन्मासान् राज्ञो वृत्तविवित्सया । दुष्प्रज्ञस्याल्पसारस्य[५] खलच्छन्दानुवर्तिनः ॥ ४ ॥
तेज ओजो बलं वीर्यं प्रश्रयादींश्च सद्गुणान् । प्रजानुरागं पार्थेषु नसहद्भिश्चिकीर्षितम् ॥ ५ ॥
कृतं च धार्तराष्ट्रैर्यद् गरदानाद्यकौशलम् । आचख्यौ सर्वमेतस्मै पृथा विदुर एव च ॥ ६ ॥
पृथा तु भ्रातरं प्राप्तमक्रूरमुपसृत्य तम् । उवाच जन्मनिलयं स्मरन्त्यश्रुकळेक्षणा ॥ ७ ॥
अपि स्मरन्ति नः सौम्य पितरौ भ्रातरश्च मे । भगिन्यो भ्रातृपुत्राश्च जामयः सख्य एव च ॥ ८ ॥
भ्रात्रीयो भगवान् कृष्णः शरण्यो भक्तवत्सलः । पैतृष्वसेयान् स्मरति रामश्चाम्बुरुहेक्षणः ॥ ९ ॥
सपत्नमध्ये शोचन्तीं वृकाणां हरिणीमिव । सान्त्वयिष्यति मां वाक्यैः पितृहीनांश्च बालकान् ॥
कृष्णकृष्ण महायोगिन् सर्वात्मन् विश्वपालक । प्रपन्नां पाहि गोविन्द शिशुभिश्चावसीदतीम् ॥ ११ ॥
नान्यत् तव पदाम्भोजात् पश्यामि शरणं नृणाम् । बिभ्यतां मृत्युसंसारादीश्वरस्यापवर्गिकात् ॥
नमः कृष्णाय शुद्धाय ब्रह्मणे परमात्मने । योगेश्वराय योगाय त्वामहं शरणं गता ॥ १३ ॥

---

१. नः किञ्चिच्छ्रेयश्चिकीर्षया ❋ २. गच्छस्व गजसाह्वयम् ❋ ३. वशगो ह्यदृक् ❋
४. सभीष्मविदुरं पृथाम् ❋ ५. दुष्प्रजस्याल्पसारस्य ❋

निशातमसिमुद्यम्य सकिरीटं सकुण्डलम् । शम्बरस्य शिरः कायात् ताम्रश्मश्र्वोजसाऽहरत् ॥ २७ ॥
आकीर्यमाणो दिविजैः स्तुवद्भिः कुसुमोत्करैः । भार्ययाऽम्बरचारिण्या पुरं नीतो विहायसा ॥ २८ ॥
अन्तःपुरवरं राजन् ललनाशतसङ्कुलम् । विवेश पत्न्या गगनाद्[1] विद्युतेव बलाहकः ॥ २९ ॥
तं दृष्ट्वा जलदश्यामं पीतकौशेयवाससम् । प्रलम्बबाहुं ताम्राक्षं सुस्मितं रुचिराननम् ॥ ३० ॥
अलङ्कृतमुखाम्भोजं नीलवक्राळकाळिभिः । कृष्णं मत्वा स्त्रियो भीता निलिल्युस्तत्रतत्र ह॥ ३१ ॥
उपधार्य शनैरीशाद्वैलक्षण्येन योषितः । उपजग्मुः प्रमुदिताः सस्त्रीरत्नं शुचिस्मिताः ॥ ३२ ॥
अथ तत्रासितापाङ्गी वैदर्भी वल्गुभाषिणी । अस्मरत् स्वसुतं नष्टं स्नेहस्नुतपयोधरा ॥ ३३ ॥
कोन्वयं नरवैडूर्यः कस्य वा कमलेक्षणः । धृतः कया वा जठरे केयं लब्धाऽथ केन वा ॥ ३४ ॥
मम चाप्यात्मजो नष्टो नीतो वा सूतिकागृहात् । एततुल्यवयोरूपो यदि जीवति कुत्रचित् ॥ ३५ ॥
कथं त्वनेन सम्प्राप्तं सारूप्यं शार्ङ्गधन्वनः । आकृत्याऽवयवैर्गत्या स्वरहासावलोकनैः ॥ ३६ ॥
स एव वा भवेन्नूनं यो मे गर्भे धृतोऽर्भकः । अमुष्मिन् प्रीतिरधिका वामः स्फुरति मे भुजः ॥ ३७ ॥
एवं मीमांसमानायां वैदर्भ्यां देवकीसुतः । देवकीवसुदेवाभ्यां नारदेन महात्मना ॥ ३८ ॥
अन्यैश्च यादवश्रेष्ठैरुत्तमश्लोक आविशत् । विदितार्थोऽपि भगवांस्तूष्णीमास जनार्दनः ॥ ३९ ॥
नारदोऽकथयत् सर्वं शम्बराहरणादिकम् । तच्छ्रुत्वा महदाश्चर्यं कृष्णान्तःपुरयोषितः ॥ ४० ॥
देवकीवसुदेवौ च कृष्णरामौ तथा स्त्रियः । दम्पती तौ परिष्वज्य रुग्मिणी च ययुर्मुदम् ॥ ४१ ॥
नष्टं प्रद्युम्नमायातमाकर्ण्य द्वारकौकसः । अहो मृत इवायातो बालो दिष्ट्येति चाब्रुवन् ॥ ४२ ॥

यं वै मुहुः पितृसरूपनिजेशभावा तन्मातरो मनसिजार्द्रहृदोरुभावाः ।
चित्रं न तत् खलु रमास्पदबिम्बभूते कामे स्मृतेऽक्षविषये[2] किमुतान्यनार्यः ॥ ४३ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे अष्टषष्टितमोऽध्यायः ॥**

---

**श्रीशुक उवाच**

पौण्ड्रको नाम राजा वै तस्मिन् काले कुरूद्वह । द्वारकां वृष्णिनिलयां निरुध्य बहुसैनिकः ॥ १ ॥
मर्दयामास[3] कृष्णेन विदित्वा रहितां निशि । तं कामपालः शैनेयो वसुदेवोद्धवादयः[4] ॥ २ ॥

---

१. भगवान् ❋ २. स्मरेऽक्षविषये ❋ ३. अर्दयामास ४. शैनेयवसुदेवोद्धवादयः ❋

उग्रसेनश्च कौरव्य ये चान्ये यदुपुङ्गवाः । तर्पयामासुरायान्तं[१] कालयोग्यमिवातिथिम् ॥ ३ ॥

राजोवाच

कश्चासौ पौण्ड्रको नाम कस्मिन् देशे महीपतिः । कस्य वा तनयो ब्रह्मन् सर्वमेतद् वदस्व मे ॥ ४ ॥

श्रीशुक उवाच

अपुत्रः काशिराजो वै कन्यां सुतनुसञ्ज्ञिताम् । प्रायच्छद् वसुदेवाय राज्यशुल्कां कुरूद्वह ॥ ५ ॥

तत्र जज्ञे महाबाहुर्दिवाकरसमद्युतिः । कुमारः पौण्ड्रको नाम बलवीर्यमदान्वितः ॥ ६ ॥

वसुदेवसुतत्वाच्च वासुदेवेति शब्दितः । जाते तस्मिन् महाराजो वसुदेवो महाद्युतिः ॥ ७ ॥

राज्यं तस्मिन् समारोप्य सकोशबलवाहनम् । उवाह कंसावरजां देवकीं देवतोपमाम् ॥ ८ ॥

निरुद्धो भोजराजेन कंसेनानकदुन्दुभिः । कदाचिदपि न प्रायात् करवीरपुरीमपि ॥ ९ ॥

असँह्यं मातृसापत्न्यमभ्रातृत्वं तथाऽऽत्मनः । स्मरमाणः स काशीशो यदूनुद्विजतेऽनिशम् ॥ १० ॥

स कृष्णरहितां श्रुत्वा समेत्य द्वारकां निशि । विमृद्य बलभद्रेण शैनेयेनापि निर्जितः ॥ ११ ॥

निहतानेकसाहस्रहयकुञ्जरसैनिकः । जगाम परशर्वर्यां पुरीं वाराणसीं नृप ॥ १२ ॥

प्रभातायां तु शर्वर्यां हरिर्बदरिकाश्रमात् । आययौ तार्क्ष्यमारुह्य द्वारकां रामपालिताम् ॥ १३ ॥

सपताकैः सार्घ्यपाद्यैर्यदुवृष्ण्यन्धकादिभिः । अभिनन्दितवृत्तान्तः[२] प्राविशत् केशवः सभाम् ॥ १४ ॥

कदाचित् पौण्ड्रको नाम काशिराजः प्रतापवान् । वासुदेवोऽहमित्यज्ञो दूतं कृष्णाय प्राहिणोत् ॥

त्वं वासुदेवो भगवानवतीर्णो जगत्पतिः । इति प्रस्तोभितो बालैर्मेने स्वात्मानमच्युतम् ॥ १६ ॥

दूतस्तु द्वारकामेत्य सभायामास्थितं हरिम् । कृष्णं कमलपत्राक्षं राजसन्देशमब्रवीत् ॥ १७ ॥

वासुदेवोऽवतीर्णोऽहमेक एव न चापरः । भूतानामनुकम्पार्थं त्वं तु मिथ्याभिधां त्यज ॥ १८ ॥

यानि त्वमस्मच्चिह्नानि मौढ्याद् बीभर्ष्यभीतवत्[३] । त्यक्त्वैहि मां त्वं शरणं नो चेद् देहि ममाहवम् ॥

कत्थनं तदुपाकर्ण्य पौण्ड्रकस्याल्पमेधसः । उच्चकैरुग्रसेनाद्याः सभ्याः प्रजहसुस्तदा ॥ २० ॥

उवाच दूतं भगवान् परिहासकथामनु । उत्स्रक्ष्ये मूढ चिह्नानि यैस्त्वमेवं विकत्थसे ॥ २१ ॥

मुखं तव विधायाज्ञ कङ्कगृध्रबळैर्वृतम्[४] । शयिष्यसे हतस्तत्र भविता शरणं शुनाम् ॥ २२ ॥

इति दूतस्तदाक्षेपं स्वामिने सर्वमाहरत् । कृष्णोऽपि रथमारुह्य प्रायात् काशीं ससैनिकः ॥ २३ ॥

---

१. अर्पयामासुरायान्तम्   २. अभिवर्णितवृत्तान्तः   ३. बिभर्ष्यभीतवत्   ४. कङ्कगृध्रबकैर्वृतम्

पौण्ड्रकोऽपि तदुद्योगमुपलभ्य महारथः । अक्षोहिणीभिः सहितो निश्चक्राम पुराद् द्रुतम् ॥ २४ ॥
तमायान्तं रथोपस्थे सुवर्णगरुडे स्थितम् । सुवर्णबाहुयुगळमपश्यत् पौण्ड्रकं हरिः ॥ २५ ॥
शङ्खार्यसिगदाशार्ङ्गं श्रीवत्साद्युपलक्षितम्[१] । बिभ्राणं कौस्तुभमणिं वनमालाविभूषितम् ॥ २६ ॥
कौशेयवाससी पीते वसानं गरुडध्वजम् । आमुक्तमाल्याभरणं स्फुरन्मकरकुण्डलम् ॥ २७ ॥
दृष्ट्वा तमात्मना तुल्यं कृत्रिमं वेषमास्थितम् । यथा नटं रङ्गगतं विजहास भृशं हरिः ॥ २८ ॥
क्षणेन तं काशिपतेः सैनिका दृढधन्विनः । शरैराच्छादयामासुर्मेघाः शैलमिवाम्भसा ॥ २९ ॥
केचिद् राजन् रथानश्वानास्थाय रणमूर्धनि । शूलैर्गदाभिः परिघैः शक्त्यृष्टिप्रासतोमरैः ।
असिभिः पट्टसैर्बाणैः[२] प्राहरन्नरयो हरिम् ॥ ३० ॥
तस्य काशिपतेर्मित्रं पार्ष्णिग्राहोऽपरो नृपः । अक्षोहिणीभिस्तिसृभिरुपायान्नृप सङ्गरम् ॥ ३१ ॥
कृष्णस्तु तत्पौण्ड्रककाशिराजयोर्बलं गजस्यन्दनवाजिपत्तिमत् ।
गदासिचक्रेषुभिरार्दयद् भृशं यथा युगान्ते हुतभुक् प्रभाज्वलन् ॥ ३२ ॥
आयोधनं तद् रथवाजिकुञ्जरद्विपत्खरोष्ट्रै रिपुणाऽवखण्डितैः ।
बभौ च तन्मानवहं मनस्विनामाक्रीडनं भूतपतेरिवोद्बणम् ॥ ३३ ॥
अथाह पौण्ड्रकं शौरिर्भोभो पौण्ड्रक यद् भवान् । दूतवाक्येन मामाह तान्यस्त्राण्युत्सृजामि ते ॥
त्याजयिष्येऽभिधानं मे यत् त्वयाऽद्य मृषा कृतम् । व्रजामि शरणं तेऽद्य यदि नेच्छामि संयुगम् ॥ ३५ ॥
इति क्षिप्त्वा शितैर्बाणैर्विरथीकृत्य पौण्ड्रकम् । शिरोऽहरद् रथाङ्गेन वज्रेणेन्द्रो यथा गिरेः ॥ ३६ ॥
तथा काशिपतेः कायाच्छिर उत्कृत्य पत्रिभिः । न्यपातयत् काशिपुर्यां पद्मकोशमिवानिलः ॥ ३७ ॥
एवं मत्सरिणं हत्वा पौण्ड्रकं ससखं हरिः । द्वारकामाविशत् सिद्धैर्गीयमानकथामृतः ॥ ३८ ॥
शिरः पतितमालोक्य राजद्वारि सकुण्डलम् । किमिदं कस्य वा वक्त्रमिति संशयिरे जनाः ॥ ३९ ॥
राज्ञः काशिपतेर्ज्ञात्वा महिष्यः पुत्रबान्धवाः । पौराः शोकहता राजन् नाथनाथेत्युपाद्रवन् ॥ ४० ॥
सुदक्षिणस्तस्य सुतः कृत्वा संस्थाविधिं पितुः । निहत्य पितृहन्तारं यास्याम्यपचितिं पितुः ॥ ४१ ॥
इत्यात्मनाऽभिसन्धाय सोपाध्यायो महेश्वरम् । सुदक्षिणोऽर्चयामास परमेण समाधिना ॥ ४२ ॥
प्रीतोऽविमुक्ते भगवांस्तस्मै वरमदाद् भवः । पितृहन्तुर्वधोपायं स वव्रे वरमीप्सितम् ॥ ४३ ॥

---

१. ...शार्ङ्गं दधत् श्रीवत्सलक्षितम्  २. पट्टिशैर्बाणैः

दक्षिणाग्निं परिचर ब्राह्मणैः सहऋत्विजः । अभिचारविधानेन स चाग्निः प्रमथैर्वृतः ॥ ४४ ॥
साधयिष्यति सङ्कल्पमब्रह्मण्ये प्रयोजितः । इत्यादिष्टस्तथा चक्रे कृष्णायाभिचरन् नृप ॥ ४५ ॥
ततोऽग्निरुत्थितः कुण्डान्मूर्तिमानतिभीषणः । तप्तताम्रशिखाश्मश्रुरङ्गारोद्गारिलोचनः ॥ ४६ ॥
दंष्ट्रोग्रभ्रुकुटीदन्तकठोरास्यः स्वजिह्वया । आलिहन् सृक्किणी[1] रक्ते विधुन्वन् त्रिशिखं ज्वलन् ॥
पद्भ्यां ताळप्रमाणाभ्यां कम्पयन् धरणीतळम् । सोऽभ्यधावद् वृतो भूतैर्द्वारकां प्रदहन् दिशः ॥
तमाभिचारदहनमायान्तं द्वारकौकसः । विलोक्य तत्रसुः सर्वे वनदाहे यथा मृगाः ॥ ४९ ॥
अक्षैः सभायां क्रीडन्तं भगवन्तं भयातुराः । त्राहि त्राहीति लोकेशं वह्नेः प्रदहतः पुरम् ॥ ५० ॥
श्रुत्वा तज्जनवैक्लब्यं दृष्ट्वा स्वानां च सङ्कटम् । शरण्येशः प्रहस्याह मा भैष्टेत्यवितास्म्यहम् ॥ ५१ ॥
सर्वस्यान्तर्बहिः सोऽथ कृत्यां माहेश्वरीं विभुः । विज्ञाय तद्विघातार्थं पार्श्वस्थं चक्रमादिशत् ॥ ५२ ॥

तत् सूर्यकोटिप्रतिमं सुदर्शनं जाज्वल्यमानं प्रळयानलप्रभम् ।
स्वतेजसा खं कुकुभोऽथ रोदसी चक्रं मुकुन्दस्य झटित्यपूरयत् ॥ ५३ ॥
कृत्यानलः प्रतिहतः स रथाङ्गपाणेरस्त्रौजसा नृप विभग्नमुखो निवृत्तः ।
वाराणसीं प्रतिसमेत्य सुदक्षिणं तं सन्निर्जितं समदहत् स्वकृतोभिचारः ॥ ५४ ॥
चक्रं च विष्णोस्तदनु प्रविष्टं वाराणसीं साट्टसभालयापणाम् ।
सगोपुराट्टालककोष्ठतोरणां सकोशहस्त्यश्ववरूथमन्दिराम् ॥ ५५ ॥

दग्ध्वा वाराणसीं सर्वां विष्णुचक्रं सुदर्शनम् । भूयः पार्श्वमुपातिष्ठत् कृष्णस्याक्लिष्टकर्मणः ॥ ५६ ॥
य एतत् श्रावयेन्मर्त्य उत्तमश्लोकविक्रमम् । समाहितो वा शृणुयात् सर्वपापैः प्रमुच्यते ॥ ५७ ॥
तावुभौ सर्वपापेभ्यो ब्रह्महत्यादिभिर्नृप । विमुच्य देहावसाने विष्णुलोकं प्रयास्यतः ॥ ५८ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे एकोनसप्ततितमोऽध्यायः ॥**

---

**श्रीशुक उवाच**

अथैकदा द्वारवत्यां वसतो रामकृष्णयोः । सूर्योपरागः सुमहानासीत् कल्पक्षये यथा ॥ १ ॥
तं ज्ञात्वा मनुजा राजन् पुरस्तादेव सर्वशः । समन्तपञ्चकं[2] क्षेत्रं जग्मुः श्रेयोविधित्सया ॥ २ ॥
निःक्षत्रियां महीं कुर्वन् रामः शस्त्रभृतां वरः । नृपाणां रुधिरौघेण तत्र[3] चक्रे महाह्रदान् ॥ ३ ॥

---

१. स्रकिणी ❋ २. समन्तपञ्चकमित्येव प्राचीनकोशे सर्वत्र । ३. यत्र

ईजे च भगवान् रामो यत्रास्पृष्टोऽपि कर्मणा । लोकस्य सङ्ग्रहायेशो यथाऽन्योऽघापनुत्तये ॥ ४ ॥
महत्यां तीर्थयात्रायां तत्रागुर्भारतीः प्रजाः । कृष्णः षोडशसाहस्रमहिषीशिबिकान्वितः ॥ ५ ॥
पुत्रपौत्रजनानीकैर्वारकान्ताकरेणुभिः । नगरस्त्रीकदम्बैश्च प्रियसार्थैश्च संयुतः ॥ ६ ॥
वृष्णयश्च तथाऽक्रूरवसुदेवगदादयः । ययुर्भारत तत्क्षेत्रं स्वमघं क्षपयिष्णवः ॥ ७ ॥
शठप्रद्युम्नसाम्बाश्च सुवज्रोद्धवसारणाः[१] । आहुकं कृतवर्माणं संस्थाप्य पुररक्षणे ॥ ८ ॥
ते रथैर्देवविख्यातैर्हयैश्च तरळप्रभैः । गजैर्बृहद्भिरभ्राभैर्नृभिर्विद्याधरद्युभिः ॥ ९ ॥
व्यरोचन्त महाभागाः पथि काञ्चनमालिनः । वेदवादित्रनिर्घोषैः शङ्खदुन्दुभिनिस्वनैः ॥ १० ॥
गायन्तः कृष्णकृष्णेति गोविन्देति च सन्ततम् । ककुभः पूरयन् नादैर्जग्मुः सर्वे कुरूद्वह ॥ ११ ॥
समन्तपञ्चकं प्राप्य क्षेत्रं त्रैलोक्यविश्रुतम् । तृणैः पर्णैस्तथा काष्ठैश्चक्रिरे भवनानि च ॥ १२ ॥
कम्बळाजिनवस्त्राणां शिबिराणि महीभृताम् । आसन् विचित्ररूपाणि शतशोऽथ सहस्रशः ॥ १३ ॥
तत्राजग्मुर्नृपानेके ब्राह्मणाश्च सहस्रशः । वैश्याः शूद्राश्च निःसङ्ख्या ये चान्ये वर्णनिन्दिताः ॥ १४ ॥
ऋषयश्च महात्मानो विख्याताः संशितव्रताः[२] । सोपाध्यायाः साग्निहोत्राः स्नातका गृहमेधिनः ॥
अन्धाश्च बधिराश्चैव कुब्जवामनपण्डकाः । व्यङ्गा जडाश्च मूकाश्च कर्मक्षयमभीप्सवः[३] ॥ १६ ॥
गोविन्दचरणाम्भोजरेणुरञ्जितमस्तकाः । कटकाङ्गदकेयूरहारकुण्डलभूषणाः ॥ १७ ॥
स्रग्गन्धदिव्यवसनाः कळत्रैः खेचरा इव । तत्र स्नात्वा महाभागा उपोष्य सुसमाहिताः ॥ १८ ॥
ब्राह्मणेभ्यो ददुर्धेनूर्वासःस्रग्रुग्ममालिनीः । रामह्रदेषु विधिवत् पुनराप्लुत्य वृष्णयः ॥ १९ ॥
ददुरन्नं[४] द्विजाग्रेभ्यः कृष्णे नो भक्तिरस्त्विति । स्वयं च तदनुज्ञाता वृष्णयः कृष्णदेवताः ॥ २० ॥
भुक्त्वोपविविशुः कामं स्निग्धच्छायाङ्घ्रिपाङ्घ्रिषु । तत्रागतांस्ते ददृशुः सुहृत्सम्बन्धिनो नृपान् ॥ २१ ॥
मत्स्योशीनरकौसल्यविदर्भकुरुसृञ्जयान् । काम्बोजकेकयान् मद्रान् कुन्तिगान्धारकेरळान् ॥ २२ ॥
अन्यांश्चैवात्मपक्षीयान् परांश्च शतशो नृपान् । नन्दादीन् सुहृदो गोपान् गोपीश्चोत्कण्ठिताश्चिरम् ॥

अन्योन्यसन्दर्शनहर्षरंहसा प्रोत्फुल्लहृद्वक्त्रसरोरुहश्रियः ।
आश्लिष्य गाढं नयनैः स्रवज्जला हृष्यत्त्वचो रुद्धगिरो ययुर्मुदम् ॥ २४ ॥
स्त्रियश्च संवीक्ष्य मिथोऽतिसौहृदाः सचापलापाङ्गदृशोऽभिरेभिरे ।
स्तनैः स्तनान् कुङ्कुमपङ्करूषितान् निहत्य दोर्भ्यां प्रणयाश्रुलोचनाः ॥ २५ ॥

---

१. सुचन्द्रोद्धवसारणाः ❋ २. शंसितव्रताः ३. कर्मक्षयपरीप्सवः ४. ददुः स्वर्णम्

ततोऽभिवाद्य ते वृद्धान् यविष्ठैरभिवादिताः[1] । स्वागतं कुशलं पृष्ट्वा चक्रुः कृष्णकथां मिथः ॥ २६ ॥
पृथा भ्रातॄन् स्वसॄर्वीक्ष्य तत्पुत्रान् पितरावपि । भ्रातृपत्नीर्मुकुन्दं च जहौ सङ्कथया शुचः ॥ २७ ॥

कुन्त्युवाच

आर्य भ्रातरहं मन्ये आत्मानमकृताशिषम् । यद्वा आपत्सु मद्वार्तां नानुस्मरथ सत्तमाः ॥ २८ ॥
सुहृदो ज्ञातयः पुत्रा भ्रातरः पितरावपि । नानुस्मरन्ति स्वजनं पश्य[2] दैवमदक्षिणम् ॥ २९ ॥

वसुदेव उवाच

अम्ब मास्मानसूयेथा देवक्रीडनकान् नरान् । ईशस्य हि वशे लोकः कुरुते कार्यतेऽथवा ॥ ३० ॥
कंसप्रतापिताः सर्वे वयं याता दिशो दश । एतर्ह्येव पुनः स्थानं दैवेनासादिताः स्वसः ॥ ३१ ॥

श्रीशुक उवाच

वसुदेवोग्रसेनाद्यैर्यदुभिः सेविता नृपाः । आसन्नच्युतसन्दर्शपरमानन्दनिर्वृताः[3] ॥ ३२ ॥
भीष्मो द्रोणोऽम्बिकापुत्रो गान्धारी ससुता तथा । सदाराः पाण्डवाः कुन्ती सञ्जयो विदुरः कृपः ॥
कुन्तिभोजो विराटश्च भीष्मको नग्नजिन्महान् । पुरुजिद् द्रुपदः शैब्यो धृष्टकेतुश्च काशिराट् ॥ ३४ ॥
दमघोषो विशालाक्षो मैथिलो मद्रकैकयाः । युधामन्युः सुशर्मा च ससुता बाह्लिकादयः ॥ ३५ ॥
राजानोऽन्ये च राजेन्द्र युधिष्ठिरमनुव्रताः[4] । श्रीनिकेतवपुः शौरेः सस्त्रीका वीक्ष्य विस्मिताः ॥ ३६ ॥
अथ ते रामकृष्णाभ्यां सम्यक्प्राप्तसमर्हणाः । प्रशशंसुर्मुदा युक्तास्तुष्टाः कृष्णपरिग्रहान् ॥ ३७ ॥
अहो भोजपते यूयं जन्मभाजो नृणामिह । यत् पश्यथासकृत् कृष्णं दुर्दर्शमपि योगिनाम् ॥ ३८ ॥

यन्निःसृतं जगदिदं सकलं पुनाति पादावनेजनपयश्च वचश्च शास्त्रम् ।
भूः कालभर्जितभगाऽपि यदङ्घ्रिपद्मस्पर्शोद्धशक्तिरभिवर्षति नोऽखिलार्थान् ॥ ३९ ॥
तद्दर्शनस्पर्शनानुपथप्रजल्पशय्यासनाशनसयौवनपिण्डबन्धाः ।
येषां गृहे निरयवर्त्मनि वर्ततां च स्वर्गापवर्गविरमः स्वयमास विष्णुः ॥ ४० ॥

नन्दस्तत्र यदून् प्राप्तान् श्रुत्वा कृष्णपुरोगमान् । तत्रागमद् वृतो गोपैस्तरसा तद्दिदृक्षया ॥ ४१ ॥
तं दृष्ट्वा वृष्णयो हृष्टास्तन्वः प्राणमिवोत्थिताः । परिषस्वजिरे गाढं चिरदर्शनकातराः ॥ ४२ ॥
वसुदेवः परिष्वज्य सम्प्रीतः प्रेमविह्वलः । स्मरन् कंसकृतान् क्लेशान् पुत्रन्यासं च गोकुले ॥ ४३ ॥

---

१.यवीयैरभिवादिताः २. यस्य ३. परमानन्दनिर्भराः ४. युधिष्ठिरपुरोगमाः

कृष्णरामौ परिष्वज्य पितरावभिवाद्य च । न किञ्चनोचतुः प्रेम्णा साश्रुकण्ठौ कुरूद्वह ॥ ४४ ॥
तावुत्सङ्गं समारोप्य बाहुभ्यां परिरभ्य च । यशोदा च महाभागा सुतौ विजहतुः शुचः ॥ ४५ ॥
रोहिणी देवकी चैव परिष्वज्य व्रजेश्वरीम् । स्मरन्त्यौ तत्कृतां मैत्रीं बाष्पकण्ठ्यौ समूचतुः॥ ४६ ॥
को विस्मरेत वां मैत्रीमनुवृत्तां व्रजेश्वरि । अप्यवाप्यैन्द्रमैश्वर्यं यस्या नेह प्रतिक्रिया ॥ ४७ ॥

एतावदृष्टपितरौ युवयोः स्म पित्रोः सम्प्रीणनाभ्युदयपोषणपालनानि ।
प्राप्योषतुर्भवति पक्ष्म ह यद्वदक्ष्णोर्न्यस्तावकुत्रचभयौ न सतां परस्तात् ॥ ४८ ॥
गोप्यश्च कृष्णमुपलभ्य चिरादभीष्टं यत्प्रेक्षणे दृशिषु पक्ष्मकृतं शपन्ति ।
दृग्भिर्हृदीकृतमलं[१] परिरभ्य सद्यस्तद्भावमापुरपि नित्ययुजां दुरापम् ॥ ४९ ॥

भगवांस्तास्तथाभूता विविक्त उपसङ्गताः । आश्लिष्यानामयं पृष्ट्वा प्रहसन्निदमब्रवीत् ॥ ५० ॥

**श्रीभगवानुवाच**

अपि स्मरथ नः सख्यः स्वानामर्थचिकीर्षया[२] । गतांश्चिरायितानन्यासङ्गात् कृपणचेतसः॥ ५१ ॥
अवबुद्ध्य यथाऽस्मासु इदमेव विशङ्कये । नूनं भूतानि भगवान् युनक्ति वियुनक्ति च ॥ ५२ ॥
वायुर्यथा घनानीकं तृणतूलरजांसि च । संयोज्य क्षिपते भूयस्तथा भूतानि भूतकृत् ॥ ५३ ॥
मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते । दिष्ट्याऽऽसीन्मयि सुस्नेहो भवतीनां मुदावहः ॥ ५४ ॥
अहं हि सर्वभूतानामादिरन्तोऽन्तरं बहिः । भौतिकानां यथा खं वा भूर्वायुर्ज्योतिरङ्गनाः ॥ ५५ ॥
एवमेतानि भूतानि भूतेष्वात्माऽऽत्मना ततः । उभयं मय्यथ परे पश्यताथ तमक्षरे ॥ ५६ ॥

**श्रीशुक उवाच**

अध्यात्मशिक्षया गोप्य एवं कृष्णेन शिक्षिताः । तदनुस्मरणध्वस्तजीवकोशास्तमध्यगुः ॥ ५७ ॥

नताः स्म ते नाथ पदारविन्दं योगेश्वरैर्हृदि विचिन्त्यमगाधबोधैः ।
संसारकूपपतितोत्तरणावलम्बं गेहञ्जुषामपि मनस्युदियात् सदा नः ॥ ५८ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे सप्ततितमोऽध्यायः ॥**

---

**श्रीशुक उवाच**

तथाऽनुगृह्य भगवान् गोपीनां स गुरुर्गतिः । युधिष्ठिरमथापृच्छत् सर्वांश्च सुहृदोऽव्ययम् ॥ १ ॥

---

१. दृग्भिर्हृदिकृतमलम् २. स्वानामर्थचिकीर्षवः

त एवं लोकनाथेन परिपृष्टाः सुसत्कृताः । प्रत्यूचुर्हृष्टमनसस्तत्पादेक्षाहतांहसः ॥ २ ॥

कुतोऽशिवस्त्वच्चरणाम्बुजासवं महन्मनस्तो मुखनिःसृतं क्वचित् ।
पिबन्ति ये कर्णपुटैरलं प्रभो देहम्भृतस्तत्कृतमुच्छ्वसन्ति हि ॥ ३ ॥

तं त्वाऽऽत्मधामविबुधात्मगतिं त्र्यवस्थमानन्दसम्प्लवमखण्डविकुण्ठबोधम् ।
कालोपसृष्टनिगमावपनात्तयोगमायाकृतिं परमहंसगतिं नताः स्मः ॥ ४ ॥

इत्युत्तमश्लोकशिखामणिं जनेष्वभिष्टुवत्स्वच्युतकौरवस्त्रियः ।
समेत्य गोविन्दकथां मिथोऽगृणन् नृलोकगीतां शृणु वर्णयामि ते ॥ ५ ॥

### द्रौपद्युवाच

हे वैदर्भ्यच्युतो भद्रे हे जाम्बवति कौसले । हे सत्यभामे कालिन्दि शैब्ये रोहिणि लक्षणे ॥ ६ ॥

हे कृष्णपत्न्य एतन्नो ब्रूत वो भगवान् स्वयम् । उपयेमे यथा लोकमनुकुर्वन् स्वमायया ॥ ७ ॥

### रुग्मिण्युवाच

चैद्याय माऽर्पयितुमुद्यतकार्मुकेषु राजस्वशेषभटशेखरिताङ्घ्रिरेणुः ।
निन्ये मृगेन्द्र इव भागमजावियूथात् तच्छ्रीनिकेतचरणाब्जसमर्चनाय ॥ ८ ॥

### सत्यभामोवाच

यो मे सनाभिवधतप्तहृदा ततेन लिप्ताभिशापमपमार्ष्टुमुपाजहार ।
जित्वर्क्षराजमथ रत्नमदात् स तेन नीतच्छिदादिशत मां प्रभवेऽपि दत्ताम् ॥ ९ ॥

### जाम्बवत्युवाच

आज्ञाय देहविकृतिं निजनाथदैवं सीतापतिं त्रिनवहान्यमुनाऽभियुध्य ।
ज्ञात्वाऽवधीरणमुपाहरदर्हणं मां पादौ प्रगृह्य मणिनाऽहममुष्य दासी ॥ १० ॥

### कालिन्द्युवाच

तपश्चरन्तीमाज्ञाय स्वपादस्पर्शकाम्यया । सख्योपेत्याग्रहीत् पाणिं याऽहं तद्गृहमार्जनी ॥ ११ ॥

### मित्रविन्दोवाच

यो मां स्वयंवर उपेत्य विजित्य भूपान् निन्ये श्वयूथमिव चात्मबलिं द्विपारिः ।
भ्रातॄंश्च मेऽपकुरुतः स्वपुरं श्रियोऽगात् तस्यास्तु मेऽनुभवमङ्घ्र्यवनेजनाभ्भः ॥ १२ ॥

**नीलोवाच**

सप्तोक्षणोऽतिबलवीर्यसुतीक्ष्णशृङ्गान् पित्रा कृतान् क्षितिपवीर्यपरीक्षणाय ।
तान् वीरदुर्मदहनस्तरसा[1] निगृह्य क्रीडन् बबन्ध च[2] यथा शिशवोऽजतोकान् ॥ १३ ॥

य इत्थं वीर्यशुल्कां मां दासीभिश्चतुरङ्गिणीम् । पथि निर्जित्य राजन्यान् निन्ये तद्दास्यमस्तु मे ॥ १४ ॥

**भद्रोवाच**

पिता मे मातुलेयाय स्वयमाहूय दत्तवान् । कृष्णे कृष्णाय तच्चित्तामक्षोहिण्या सखीजनैः ॥ १५ ॥

अस्य मे पादसंस्पर्शो भवेज्जन्मनि जन्मनि । कर्मभिर्भ्राम्यमाणाया येन तच्छ्रेय आत्मनः ॥ १६ ॥

**लक्षणोवाच**

ममापि राज्ञ्यच्युतजन्मकर्म च श्रुत्वा मुहुर्नारदगीतमास ह ।
चित्तं मुकुन्दे किल पद्महस्तया वृतः स्वयं यस्तु विहाय लोकपान् ॥ १७ ॥

ज्ञात्वा मम मतिं[3] साध्वि पिता दुहितृवत्सलः । बृहत्सेन इति ख्यातस्तत्रोपायमचीकरत् ॥ १८ ॥

यथा स्वयंवरे राज्ञि मत्स्यः पार्थेच्छया कृतः । अयं तु बहिराच्छन्नो दृश्यते स जले परम्[4]॥ १९ ॥

श्रुत्वैतत् सर्वतो भूपा आययुर्मत्पितुः पुरम्[5] । सर्वास्त्रशस्त्रतत्त्वज्ञाः सोपाध्यायाः सहस्रशः॥ २० ॥

पित्रा सम्पूजिताः सर्वे यथावीर्यं यथावयः । आददुः सशरं चापं वेद्धुं पार्षति मद्धियः ॥ २१ ॥

आदाय व्यसृजन् केचित् सज्जीकर्तुमनीश्वराः । आकोट्यां ज्यां समाकृष्य पेतुरेकेऽमुना हताः ॥ २२ ॥

सज्यं कृत्वा परे वीराः प्राग्ज्योतिमगधेश्वरौ । भीमो दुर्योधनः कर्णो नाविन्दंस्तदवस्थितिम् ॥ २३ ॥

मत्स्याभासं जले दृष्ट्वा ज्ञात्वा च तदवस्थितिम् । पार्थो यत्तोऽसृजद् बाणान् नाच्छिनत् पस्पृशे परम् ॥

राजन्येषु निवृत्तेषु भग्नमानेषु मानिषु । भगवान् धनुरादाय सज्जं कृत्वाऽथ लीलया ॥ २५ ॥

तस्मिन् सन्धाय विशिखं मत्स्यं वीक्ष्य सकृज्जले । छिन्नेषुणाऽपातयत् तं सूर्ये चाभिजिति स्थिते ॥

दिवि दुन्दुभयो नेदुर्जयशब्दोऽपतद् भुवि । देवाश्च कुसुमासारान् मुमुचुर्हर्षविह्वलाः ॥ २७ ॥

तद्रङ्गमाविशमहं कलनूपुराभ्यां पद्भ्यां दिशो भ्रमयती चलपेशलाभ्याम् ।
वृत्ते पिधाय परिधाय च कौशिकाग्र्ये सव्रीळहासवदना कबरीधृतस्रक् ॥ २८ ॥

उन्नीय वक्त्रमुरुकुण्डलकुन्तळत्विड्गण्डस्थलं शिशिरहासकटाक्षमोक्षम् ।
राज्ञो निरीक्ष्य परितः शनकैर्मुरारेरंसेऽनुरक्तहृदया विदधे स्वमालाम् ॥ २९ ॥

---

१. तान् वीक्ष्य दुर्मदहनस्तरसा ❋ २. ह ३. मतम् ४. जलेचरः ५. आययुर्मद्रकानि मे ❋

तदा मृदङ्गपटहशङ्खभेर्यानकादयः । निनेदुर्नटनर्तक्यो ननृतुर्गायका जगुः ॥ ३० ॥
एवं वृते भगवति मायेशे नृपयूथपाः । न सेहिरे याज्ञसेनि स्पर्धिनो हृच्छयातुराः ॥ ३१ ॥
मां रथं स समारोप्य लसद्धयचतुष्टयम् । शार्ङ्गमुद्यम्य सन्नद्धस्तस्थावीशश्चतुर्भुजः ॥ ३२ ॥
दारुकश्चोदयामास काञ्चनोपस्करं रथम् । मिषतां द्विषतां राज्ञि वृकाणां मृगराडिव ॥ ३३ ॥
ते त्वसज्जन्त राजन्या निषेद्धुं पथि केचन । संयत्ता उद्धृतेष्वासा ग्रामसिंहा यथा हरिम् ॥ ३४ ॥
ते शार्ङ्गच्युतबाणौघैर्नुन्नबाह्वङ्घ्रिकन्धराः । निपेतुः प्रधने केचिदेके सन्त्यज्य दुद्रुवुः ॥ ३५ ॥

ततः पुरीं पतिजयभूत्यलङ्कृतां रविच्छदध्वजपटचित्रतोरणाम् ।
कुशस्थलीं दिवि भुवि चाभिसंस्तुतां समाविशत्[1] तरणिरिव स्वकेतनम् ॥ ३६ ॥

पिता मे पूजयामास सुहृत्सम्बन्धिबान्धवान् । महार्हवासोलङ्कारैः शय्यासनपरिच्छदैः ॥ ३७ ॥
दासीभिः सर्वसम्पद्भिर्भटेभरथवाजिभिः । आयुधानि महार्हाणि ददौ पूर्णस्य भक्तितः ॥ ३८ ॥
आत्मारामस्य तस्येमा वयं वै गृहदासिकाः । सर्वसङ्गनिवृत्त्याऽद्धा तपसा च बभूविम ॥ ३९ ॥

**महिष्य ऊचुः**

भौमं निहत्य सगणं युधि तेन रुद्धा ज्ञात्वा च नः क्षितिजये हृतराजकन्याः ।
निर्मथ्य संसृतिविमोक्षमपि स्मरन्तीः पादाम्बुजं परिनिनाय य आप्तकामः ॥ ४० ॥

न वयं साध्वि साम्राज्यं स्वाराज्यं भौज्यमप्युत । वैराज्यं पारमेष्ठ्यं वा आनन्त्यं वा हरेः पदम् ॥ ४१ ॥
कामयामह एतस्य श्रीमत्पादरजः श्रियः । कुचकुङ्कुमगन्धाढ्यं मूर्ध्नि[2] वोढुं गदाभृतः ॥ ४२ ॥
व्रजस्त्रियो यद् वाञ्छन्ति पुळिन्द्यस्तृणवीरुधः । गावश्चारयतो गोपैः पादस्पर्शं महात्मनः ॥ ४३ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे एकसप्ततितमोऽध्यायः ॥**

---

**श्रीशुक उवाच**

श्रुत्वा पृथा सुबलपुत्र्यथ याज्ञसेनी माधव्य इत्थमनु याः[3] परमप्रतीताः ।
कृष्णेऽखिलात्मनि हरौ प्रणयानुबन्धं सर्वा विसिस्म्युरलमश्रुकळाकुलाक्ष्यः ॥ १ ॥

इति सम्भाष्यमाणासु स्त्रीभिः स्त्रीषु नृभिर्नृषु । आययुर्मुनयस्तत्र कृष्णरामदिदृक्षया ॥ २ ॥

---

१. भुवि विश्रुतां तदा समाविशत् ❋ २. मूर्ध्ना ३. इत्थमबलाः ❋

द्वैपायनो नारदश्च च्यवनो देवलोऽसितः । विश्वामित्रः शतानन्दो भरद्वाजोऽथ[1] गौतमः ॥ ३ ॥
रामः सशिष्यो भगवान् वसिष्ठो गालवो भृगुः । पुलस्त्यः काश्यपोऽत्रिश्च मार्कण्डेयो बृहस्पतिः ॥
द्वितस्त्रितश्चैकतश्च ब्रह्मपुत्रस्तथाऽङ्गिराः । अगस्त्यो याज्ञवल्क्यश्च वामदेवादयोऽपरे ॥ ५ ॥
तान् दृष्ट्वा सहसोत्थाय प्रागासीना नृपादयः । पाण्डवाः कृष्णरामौ च प्रणेमुर्लोकवन्दितान्॥ ६ ॥
तानानर्चुर्यथा सर्वे सहरामोऽच्युतोऽर्चयत् । स्वागतासनपाद्यार्घ्यमाल्यधूपानुलेपनैः ॥ ७ ॥
उवाच सुखमासीनान् भगवान् धर्मगुप्तनुः । सदसस्तस्य महतो यतवाचोऽनुशृण्वतः ॥ ८ ॥

**श्रीभगवानुवाच**

अहो वयं जन्मभृतो लब्धं कार्त्स्न्येन तत्फलम् । देवानामपि दुष्प्राप्यं यद् योगेश्वरदर्शनम् ॥ ९ ॥
किं स्वल्पतपसां नृणामर्चायां देवचक्षुषाम् । दर्शनस्पर्शनप्रश्नप्रह्वपादार्चनादिकम् ॥ १० ॥
न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः । ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥ ११ ॥

नाग्निर्न सूर्यो न च चन्द्रतारकं[2] न भूर्जलं खं श्वसनोऽथ वाङ्मनः[3] ।
उपासिता भेदकृतो हरन्त्यघं विपश्चितो घ्नन्ति मुहूर्तसेवया ॥ १२ ॥
यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कळत्रादिषु भौम इज्यधीः ।
यत्तीर्थबुद्धिश्च जले न कर्हिचित् जनेष्वभिज्ञेषु स एव गोखरः ॥ १३ ॥

**श्रीशुक उवाच**

निशम्येत्थं भगवतः कृष्णस्याकुण्ठमेधसः । वचो दुरन्वयं विप्रास्तूष्णीमासन् भ्रमद्धियः ॥ १४ ॥
चिरं विमृश्य मुनय ईश्वरस्येशितव्यताम् । जनसङ्ग्रह इत्यूचुः स्मयन्तस्तं जगद्गुरुम् ॥ १५ ॥

**ऋषय ऊचुः**

यन्मायया तत्वविदुत्तमा वयं विमोहिता विश्वसृजामधीश्वर ।
यदीशितव्यायति गूढ ईहया अहो विचित्रं भगवद्विचेष्टितम् ॥ १६ ॥
अनीह एतद् बहुधैक आत्मना सृजत्यवत्यत्ति न बध्यते यथा[4] ।
भौमैर्हि भूमिर्बहुनामरूपिणी अहो विभूम्नश्चरितं विडम्बनम् ॥ १७ ॥
अथापि काले स्वजनाभिगुप्त्यै बिभर्षि स त्वं खलनिग्रहाय ।
स्वलीलया वेदपथं सनातनं वर्णाश्रमात्मा पुरुषः परो भवान् ॥ १८ ॥

---

१. भारद्वाजोऽथ २. न तु चन्द्रतारकाः ❋ ३. वा मनः ❋ ४. न सज्जते तथा ❋

ब्रह्म ते हृदयं शुक्लं तपःस्वाध्यायसंयमैः । यत्रोपलब्धं[१] सुव्यक्तमव्यक्तं च ततः परम् ॥ १९ ॥
तस्माद् ब्रह्मकुलं ब्रह्मन् शास्त्रयोनेस्तवात्मनः । सभाजयसि सद्धाम तद्ब्रह्मण्यगुणो भवान्[२] ॥ २० ॥
अद्य नो जन्मसाफल्यं विद्यायास्तपसो दृशः । त्वया सङ्गम्य सङ्गत्या यत् त्वं नः श्रेयसां परः ॥ २१ ॥
नमस्तस्मै भगवते कृष्णायाकुण्ठमेधसे । स्वयोगमायया च्छन्नमहिम्ने परमात्मने ॥ २२ ॥
न यं विदन्त्यमी भूपा एकारामाश्च वृष्णयः । मायाजवनिकाच्छन्नमात्मानं कालमीश्वरम् ॥ २३ ॥

तस्याद्य ते ददृशिमाङ्घ्रिमघौघमर्षतीर्थास्पदं हृदि धृतं सुविपक्वयोगैः ।
उत्सिक्तभक्त्युपहताशयजीवकोशा आपुर्भवद्गतिमथानुगृहाण भक्तान् ॥ २४ ॥

**श्रीशुक उवाच**

इत्यनुज्ञाप्य दाशार्हं धृतराष्ट्रं युधिष्ठिरम् । राजर्षिवर्यांस्तान् गन्तुं मुनयो दधिरे मनः ॥ २५ ॥
तद् वीक्ष्यताननुव्रज्य वसुदेवो महायशाः । प्रणम्य चोपसङ्गृह्य[३] बभाषेदं सुयन्त्रितः ॥ २६ ॥

**वसुदेव उवाच**

नमो वः सर्वदेवेभ्यो ऋषयः श्रोतुमर्हथ । कर्मणा कर्मनिर्हारो यथा स्यान्नस्तदुच्यताम् ॥ २७ ॥

**नारद उवाच**

नातिचित्रमिदं विप्रा वसुदेवो बुभुत्सया । कृष्णं मत्वाऽर्भकं यन्नः पृच्छति श्रेय आत्मनः ॥ २८ ॥
सन्निकर्षो हि मर्त्यानामनादरणकारणम् । गाङ्गं हित्वा यथाऽन्योऽम्भस्तत्रत्यो याति शुद्धये ॥ २९ ॥
यस्यानुभूतिः कालेन लयोत्पत्त्यादिनाऽस्य वै । स्वतोऽन्यस्माच्च गुणतो न कुतश्चन रिष्यति ॥ ३० ॥

तं क्लेशकर्मपरिपाकगुणप्रवाहैरव्याहतानुभवमीश्वरमद्वितीयम् ।
प्राणादिभिः स्वविषयैरुपगूढमज्ञो मेने स सूर्यमिव मेघहिमोपरागैः ॥ ३१ ॥

अथोचुर्मुनयो राजन्नाभाष्यानकदुन्दुभिम् । सर्वेषां शृण्वतां राज्ञां तथैवाच्युतरामयोः ॥ ३२ ॥
कर्मणा कर्मनिर्हार एष साधु निरूपितः । यच्छ्रद्धया यजेद् विष्णुं सर्वयज्ञेश्वरं मखैः ॥ ३३ ॥
चित्तस्योपशमो यो वै कविभिः शास्त्रचक्षुषा । दर्शितः सुगमो योगो धर्मश्चात्ममुदावहः ॥ ३४ ॥
अयं स्वस्त्ययनः पन्था द्विजातेर्गृहमेधिनः । यच्छ्रद्धयाऽऽप्तवित्तेन शुक्लेनेज्येत पूरुषः ॥ ३५ ॥
वित्तैषणां यज्ञदानैर्गृहैर्दारसुतैषणाम् । आत्मलोकैषणामेवं[४] कालेन विसृजेद् बुधः ।
ग्रामे[५] त्यक्तैषणाः सर्वे ययुर्धीरास्तपोवनम् ॥ ३६ ॥

---

१. तत्रोपलब्धम् ❋ २. तद्धाम सद्ब्रह्मण्यगुणो भवान् ❋/तद् ब्रह्मण्य गुणी भवान् ❋
३. चोपसङ्गम्य ❋ ४. आत्मलोकैषणामेकाम् ❋ ५. ग्राम्ये ❋

ऋणैस्त्रिभिर्द्विजो जातो देवर्षिपितॄणां प्रभो । यज्ञाध्ययनपुत्रैस्तानानिस्तीर्य त्यजन् पतेत् ॥ ३७ ॥
ब्रह्मचर्यसुताभ्यां वै ऋषिपित्रोर्महामुने । यज्ञैर्देवर्णमुन्मुच्य निर्ऋणोऽशरणो भवेत् ॥ ३८ ॥
वसुदेव भवान् नूनं भक्त्या परमया हरिम् । जगतामीश्वरं भेजे स यद् वां पुत्रतां गतः ॥ ३९ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे द्विसप्ततितमोऽध्यायः ॥**

---

**श्रीशुक उवाच**

इति तद्वचनं श्रुत्वा वसुदेवो महामनाः । तानृषीन् ऋत्विजो वव्रे मूर्ध्ना नम्योपसृत्य च ॥ १ ॥
त एवमृषयो राजन् वृता धर्मेण धार्मिकम् । तस्मिन्नयाजयन् क्षेत्रे मखैरुत्तमकल्पकैः ॥ २ ॥
तद्दीक्षायां प्रवृत्तायां वृष्णयः पुष्करस्रजः । स्नाताः सुवाससो राजन् राजानः सुष्ठ्वलङ्कृताः ॥ ३ ॥
तन्महिष्यश्च मुदिता निष्ककण्ठ्यः सुवाससः । दीक्षाशालामुपाजग्मुरालिप्ता वस्तुपाणयः ॥ ४ ॥
नेदुर्मृदङ्गपटहशङ्खभेर्यानकादयः । ननृतुर्नटनर्तक्यस्तुष्टुवुः सूतमागधाः ॥ ५ ॥
जगुः सुकण्ठ्यो गन्धर्व्यः सुगीतं सहभर्तृकाः । तमभ्यषिञ्चन् विधिवद् भक्तमव्यग्रमृत्विजः ॥ ६ ॥
पत्नीभिरष्टादशभिः सोमराजमिवोडुभिः । ताभिर्दुकूलवलयहारनूपुरकुण्डलैः ।
स्वलङ्कृताभिर्विभवैर्दीक्षितो जनसंवृतः[1] ॥ ७ ॥
तस्यर्त्विजो महाराज नूत्नकौशेयवाससः । सप्तदश[2] विरेजुस्ते यथा वृत्रहणोऽध्वरे ॥ ८ ॥
तदा रामश्च कृष्णश्च स्वैःस्वैर्बन्धुभिरन्वितौ । रेजतुः स्वसुतैर्दारैर्जीवेशौ स्वविभूतिभिः ॥ ९ ॥
ईजेऽनुयज्ञविधिना अग्निहोत्रादिलक्षणैः । प्राकृतैर्वैकृतैर्यज्ञैर्द्रव्यज्ञानक्रियेश्वरम् ॥ १० ॥
अथर्त्विग्भ्योऽददात् काले यथाम्नातं सुदक्षिणाः । स्वलङ्कृतेभ्योऽलङ्कृत्य गोभूकन्या महाधनाः ॥
पत्नीसंयाजावभृथ्यैश्चरित्वाऽथ महर्षयः । सस्नू रामह्रदे विप्रा यजमानपुरस्सराः ॥ १२ ॥
स्नातोऽलङ्कारवासांसि वन्दिभ्योऽदात् तथा स्त्रियः । ततः स्वलङ्कृतान् वर्णानाश्वभ्योऽन्नेन पूजयत् ॥
बन्धून् सदारान् ससुतान् पारिबर्हेण भूयसा । विदर्भकोसलकुरून् काशिकैकेयसृञ्जयान् ॥ १४ ॥
सदस्यर्त्विक्सुरगणा नृभूतपितृचारणाः । श्रीनिकेतमनुज्ञाप्य शंसन्तः प्रययुः क्रतुम् ॥ १५ ॥
धृतराष्ट्रोऽनुजो द्रोणो भीष्मो द्रौणिः कृपस्तथा । नारदो भगवान् व्यासः सुहृत्सम्बन्धिबान्धवाः ॥

---

१. दीक्षितोऽजिनसंवृतः २. सप्तादश ❀

बन्धून् परिष्वज्य यदून् सौहृदक्लिन्नचेतसः । ययुर्विरहकृच्छ्रेण स्वदेशांश्चापरे जनाः ॥ १७ ॥
नन्दस्तु सह गोपालैर्महत्या पूजयाऽर्चितः । कृष्णरामोग्रसेनाद्यैर्न्यवसद् बन्धुवत्सलः ॥ १८ ॥
वसुदेवोऽञ्जसोत्तीर्य मनोरथमहार्णवम्[१] । सुहृद्वृतः प्रीतमना नन्दमाह करे स्पृशन् ॥ १९ ॥

**वसुदेव उवाच**

भ्रातरीशकृतः पाशो नृणां यः स्नेहसञ्ज्ञितः । तं दुस्त्यजमहं मन्ये सुराणामपि योगिनाम् ॥ २० ॥
अस्मास्वप्रतिकल्पोऽयं यत् कृतं ज्ञानसत्तमैः । मैत्र्यर्पिताऽफला वापि न निवर्तेत कर्हिचित्॥ २१ ॥
प्रागकल्यास्तु[२] कुशलं भ्रातर्वो नाचरेमहि । अधुना श्रीमदान्धाक्षा न पश्यामः पुरः सतः ॥ २२ ॥
मा राज्यश्रीरभूत् पुंसः श्रेयस्कामस्य मानद । स्वजनान् भ्रातृबन्धून् वा न पश्यति ययाऽन्धदृक् ॥
एवं सौहृदशैथिल्यचित्त आनकदुन्दुभिः । रुरोद तत्कृतां मैत्रीं स्मरन्नश्रुविलोचनः ॥ २४ ॥
नन्दस्तु सख्युः प्रियकृत् प्रेम्णा गोविन्दरामयोः । अद्य श्व इति मासांस्त्रीन् यदुभिर्मानितोऽवसत् ॥
ततः कामैः पूर्यमाणः सव्रजः सहबान्धवः । परार्घ्याभरणक्षौमनानानर्घ्यपरिच्छदैः ॥ २६ ॥
वसुदेवोग्रसेनाभ्यां कृष्णार्जुनबलादिभिः । आदाय पारिबर्हं तं यापितो यदुभिर्ययौ ॥ २७ ॥
तदा गोप्यश्च गोपाश्च गोविन्दचरणाम्बुजे । मनः क्षिप्तं पुनर्हर्तुमनीशा मधुरां ययुः ॥ २८ ॥
द्रोणो भीष्मोऽङ्गराजश्च बाह्लीकविदुरादयः । सपुत्रो धृतराष्ट्रश्च जग्मुः स्वंस्वं निकेतनम् ॥ २९ ॥
अन्ये च सर्वराजानो देवयात्रार्थमागताः । गते मासत्रये भूयः स्वानेव विषयान् ययुः ॥ ३० ॥
पाण्डवाश्च महात्मानः पृथा च नृपसत्तम । अनुज्ञाताः केशवेन बाष्पगद्गदभाषिणः ॥ ३१ ॥
शक्रप्रस्थं ययुः सर्वे स्वजनैः परिवारिताः । बन्धुषु प्रतियातेषु वृष्णयः कृष्णदेवताः ।
परिवार्य हृषीकेशं ययुर्द्वारावतीं पुरीम् ॥ ३२ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे त्रिसप्ततितमोऽध्यायः ॥**

---

**श्रीशुक उवाच**

अथैकदात्मजौ प्राप्तौ कृतपादाभिवन्दनौ । वसुदेवोऽभिनन्द्याह प्रीत्या सङ्कर्षणाच्युतौ ॥ १ ॥
मुनीनां वदतां श्रुत्वा पुत्रयोर्धामसूचकम् । तद्वीर्यजातविस्रम्भः परिष्वज्याभ्यभाषत ॥ २ ॥
कृष्णकृष्ण महायोगिन् सङ्कर्षण सनातन । जाने वामस्य यत्साक्षात्[३] प्रधानपुरुषौ परौ ॥ ३ ॥

---

१. अञ्जसोत्तीर्णमनोरथमहार्णवः ❋ २. प्रागकल्पास्तु ३. अस्य वा साक्षात् ❋

यत्र येन यतो यस्य यस्मै यद्यद्यथा[1] यदा । स्यादिदं भगवान् साक्षात् प्रधानपुरुषेश्वरः ॥ ४ ॥
एतन्नानाविधं विश्वमात्मसृष्टमधोक्षज । आत्मनाऽनुप्रविश्यात्मन् प्राणान् जीवो बिभर्ष्यजः ॥ ५ ॥
प्राणादीनां विश्वसृजां शक्तयो याः परस्य ताः । पारतन्त्र्याद् वैसादृश्याद् द्वयोः श्रेष्ठे च चेष्टितम् ॥
कान्तिस्तेजः प्रभा सत्ता चन्द्राग्न्यर्कसविद्युताम् । यत् स्थैर्यं भूभृतां भूमेर्वृत्तिर्गन्धोऽर्थतो भवान् ॥ ७ ॥
तर्पणं प्राणनं चापां द्रवत्वं ताश्च तद्रसः । ओजः सहो बलं चेष्टा गतिर्वायोस्तवेश्वर ॥ ८ ॥
दिशां त्वमवकाशोऽसि शब्दस्त्वं स्फोट आश्रयः । नादो वर्णस्त्वमोङ्कार आकृतीनां पृथक्कृतीः ॥ ९ ॥
इन्द्रियं त्विन्द्रियाणां त्वं देवाश्च तदनुग्रहाः । अवबोधो भवान् बुद्धेर्जीवस्यानुस्मृतिः सती ॥ १० ॥
भूतानामसि भूतादिरिन्द्रियाणां च तैजसम् । वैकारिकं विकल्पानां प्रधानमनुशायिनाम् ॥ ११ ॥
नश्वरेष्विह भावेषु तदसि त्वमनश्वरः । यथा द्रव्यविकारेषु द्रव्यमात्रं निरूपितम् ॥ १२ ॥
सत्वं रजस्तम इति गुणास्तद्वृत्तयश्च याः । त्वय्यद्धा ब्रह्मणि परे कल्पिता योगमायया ॥ १३ ॥
तस्मान्न सन्त्यमी भावा यर्हि त्वय्यविकल्पिताः । त्वं चामीषु विकारेषु सन् सदा व्यावहारिकः ॥
गुणप्रवाह एतस्मिन्नबुद्ध्वा त्वखिलात्मनः । गतिं सूक्ष्मामबोधेन संसरन्तीह कर्मभिः ॥ १५ ॥
यदृच्छया नृतां प्राप्य सुकल्यमिह दुर्लभम् । स्वार्थे प्रमत्तस्य वयो गतं त्वन्माययेश्वर ॥ १६ ॥
असावहं ममैवैते देहे चास्यान्वयादिषु । स्नेहपाशैर्निबध्नाति भवान् सर्वमिदं जगत् ॥ १७ ॥
युवां न नः सुतौ साक्षात् प्रधानपुरुषेश्वरौ । भूभारदैत्यक्षपणे अवतीर्णौ तथा त्विह[2] ॥ १८ ॥

तत् ते गतोऽस्म्यरणमद्य पदारविन्दमापन्नसंसृतिभयापहमार्तबन्धो ।
एतावताऽलमलमिन्द्रियलालसेन मर्त्यात्मदृक् त्वयि परे यदपत्यबुद्धिः ॥ १९ ॥
सूतीगृहे ननु जगाद भवानजो नौ यद् यज्ञ इत्यनुयुगं निजधर्मगुप्त्यै ।
नानातनूर्गगनवद् विदधज्जहासि को वेद भूम्न उरुगाय विभूतिमायाम् ॥ २० ॥

**श्रीशुक उवाच**

आकर्ण्येत्थं पितुर्वाक्यं भगवान् सात्वतर्षभः । प्रत्याह प्रश्रयानम्रः प्रहसन् श्लक्ष्णया गिरा ॥ २१ ॥
वचो वः समवेतार्थं तातैतदुपमन्महे । यन्नः पुत्रान् समुद्दिश्य[3] तत्वग्राम उदाहृतः ॥ २२ ॥
अहं यूयमसावार्य इमे च द्वारकौकसः । सर्वेप्येवं[4] यदुश्रेष्ठ विश्वं च सचराचरम् ॥ २३ ॥

---

१. यस्मै यद्वा यथा यदा ❋ २. तथान्विह ३. समादिश्य ❋ ४. सर्वेप्येव

आत्मा ह्येकः स्वयञ्ज्योतिर्नित्योऽन्यो निर्गुणो गुणैः । आत्मसृष्टैस्तत्कृतेषु भूतेषु बहुधेयते॥ २४ ॥
खं वायुर्ज्योतिरापो भूस्तत्कृतेषु यथाशयम् । आविस्तारोऽल्पभूर्येकनानात्वं[१] यात्यसावपि॥ २५ ॥
एवं भगवता राजन् वसुदेव उदाहृतम् । श्रुत्वा विनष्टनामाधिस्तूष्णीं प्रीतमना अभूत् ॥ २६ ॥
अथ तत्र कुरुश्रेष्ठ देवकी सर्वदेवता । श्रुत्वाऽऽनीतं गुरोः पुत्रमात्मजाभ्यां सुविस्मिता ॥ २७ ॥
कृष्णरामौ समाश्राव्य पुत्रान् कंसविहिंसितान् । स्मरन्ती कृपणा प्राह वैक्लब्यादश्रुलोचना ॥ २८ ॥

देवक्युवाच

रामरामाप्रमेयात्मन् कृष्ण योगेश्वरेश्वर । वेदाहं वां विश्वसृजामीश्वरावादिपूरुषौ ॥ २९ ॥
कालविध्वस्तसेतूनां राज्ञामुच्छास्त्रवर्तिनाम् । भूमेर्भारायमाणानामवतीर्णौ क्षयाय मे ॥ ३० ॥
यस्यांशांशभागेन विश्वस्थित्युदयौ लयः । भवन्ति किल विश्वात्मंस्तं त्वाऽद्याहं गतिं गता[२] ॥ ३१ ॥
चिरान्मृतसुतादाने गुरुणा किल चोदितौ । आनिन्यथुः[३] पितृस्थानाद् गुरवे गुरुदक्षिणाम्॥ ३२ ॥
तथा मे कुरुतां कामं युवां योगेश्वरेश्वरौ । भोजराजहतान् पुत्रान् कामये द्रष्टुमाहृतान् ॥ ३३ ॥

श्रीशुक उवाच

एवं सञ्चोदितौ मात्रा रामकृष्णौ कुरूद्वह । सुतळं संविविशतुर्योगमायामुपाश्रितौ ॥ ३४ ॥

तस्मिन् प्रविष्टावुपलभ्य दैत्यराड् विश्वात्मदैवं सुतरां तथाऽऽत्मनः ।
तद्दर्शनाह्लादपरिप्लुताशयः सद्यः समुत्थाय ननाम सान्वयः ॥ ३५ ॥
तयोः समानीय वरासनं मुदा निविष्टयोस्तत्र महात्मनोस्तयोः ।
दधार पादाववनिज्य तज्जलं सवृन्द आब्रह्म पुनद् यदम्बुभिः ॥ ३६ ॥
समर्हयामास महाविभूतिभिर्महार्हवस्त्राभरणानुलेपनैः ।
स्रग्धूपदीपामृतभक्षणादिभिः स्वगोत्रवित्तात्मसमर्पणेन च ॥ ३७ ॥
स इन्द्रसेनो भगवत्पदाम्बुजं भ्रमन् मुहुः प्रेमविभिन्नया धिया ।
बभाष हानन्दजलाकुलेक्षणः प्रहृष्टरोमा नृप गद्गदाक्षरम् ॥ ३८ ॥

बलिरुवाच

नमोऽनन्ताय महते नमः कृष्णाय वेधसे । साङ्ख्ययोगवितानाय ब्रह्मणे परमात्मने ॥ ३९ ॥
दर्शनं वां हि भूतानां दुष्प्रापमतिदुर्लभम् । रजस्तमःस्वभावानां यन्नः प्राप्तं यदृच्छया ॥ ४० ॥

---

१. अल्पभूर्येका ❋ २. विश्वात्मंस्तवाद्याहं गतिं गता ❋ ३. आनिन्यथः ❋

दैत्यदानवगन्धर्वसिद्धविद्याधरादयः । यक्षरक्षःपिशाचाश्च भूतप्रमथनायकाः ॥ ४१ ॥
विशुद्धसत्वधाम्न्यद्धा त्वयि शास्त्रशरीरिणि । नित्यं निबद्धवैरास्ते वयं चान्ये च तादृशाः ॥ ४२ ॥
केचनोद्बुद्धवैरेण भक्ताः केचन कामतः । न तथा सत्वसंरब्धाः सन्निकृष्टाः सुरादयः ॥ ४३ ॥
इदमित्थमिति प्रायस्तव योगेश्वरेश्वर । न विदन्त्यपि योगेशा योगमायां कुतो वयम् ॥ ४४ ॥

तन्नः प्रसीद निरपेक्षविमृग्ययुष्मत्पादारविन्दधिषणः[१] स्वगृहान्धकूपात् ।
निष्क्रम्य विश्वशरणाङ्घ्र्युपलब्धवृत्तिः शान्तो यथैक उत सत्वसखैश्चरामि[२] ॥ ४५ ॥

शाध्यस्मानीशितव्येश निष्कामान्[३] कुरु नः प्रभो । पुमान् यच्छ्रद्धयाऽऽतिष्ठंश्चोदनाया विमुच्यते ॥

**श्रीभगवानुवाच**

आसन् मरीचेः षट् पुत्रा ऊर्जायां[४] प्रथमेऽन्तरे । देवलं जहसुर्वीक्ष्य सुताञ्छपितुमुद्यतम् ॥ ४७ ॥
तेनासुरीमगुर्योनिममुनाऽवद्यकर्मणा । हिरण्यकशिपोः शापात्[५] पुत्रास्ते योगमायया ॥ ४८ ॥
देवक्या जठरे जाता राजन् कंसविहिंसिताः । सा तान् शोचत्यात्मजान् स्वांस्त इमेऽध्यासतेऽन्तिके ॥
इत एतान् प्रणेष्यामो मातृशोकापनुत्तये । ततः शापविनिर्मुक्ता लोकं यास्यन्ति विज्वराः ॥ ५० ॥
स्मरो गीथः परिष्वङ्गः पतङ्गः क्षुद्रभृत् घृणी । षडिमे मत्प्रसादेन पुनर्यास्यन्ति मद्गतिम् ॥ ५१ ॥
इत्युक्त्वा तान् समादाय इन्द्रसेनेन पूजितौ । पुनर्द्वारावतीमेत्य मातुः पुत्रानयच्छताम् ॥ ५२ ॥
तान् दृष्ट्वा बालकान् देवी पुत्रस्नेहस्नुतस्तनी । परिष्वज्याङ्कमारोप्य मूर्ध्न्यजिघ्रदभीक्ष्णशः ॥ ५३ ॥
अपाययत् स्तनं प्रीता सुतस्पर्शपरिस्नुतम् । मोहिता मायया विष्णोर्यया सृष्टिः प्रवर्तते ॥ ५४ ॥
पीत्वाऽमृतं पयस्तस्या पीतशेषं गदाभृतः । नारायणाङ्गसंस्पर्शप्रतिलब्धात्मदर्शनाः ॥ ५५ ॥
ते नमस्कृत्य गोविन्दं देवकीं पितरं बलम् । मिषतां सर्वभूतानां ययुर्धाम विहायसा ॥ ५६ ॥
तान् दृष्ट्वा देवकी देवी मृतागमननिर्गमम् । मेने सुविस्मिता मायां कृष्णसंसूचितां नृप ॥ ५७ ॥
एवंविधान्यद्भुतानि कृष्णस्य परमात्मनः । वीर्याण्यनन्तवीर्यस्य सन्त्यनन्तानि भारत ॥ ५८ ॥

---

१. निरपेक्षविमृश्ययुष्मत्.... ❋ २. सत्त्वसखैश्चराणि ३. निष्पापान् ❋
४. ऊर्णायाम् ५. हिरण्यकशिपोर्जाताः ❋

**सूत उवाच**

य इदमनुशृणोति श्रावयेद्वा मुरारेश्चरितममृतकीर्तेर्वर्णितं व्यासपुत्रैः ।
जगदघभिदलं तद्भक्तसत्कर्णपूरं भगवति कृतचित्तो याति तत्क्षेमधाम ॥ ५९ ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे चतुःसप्ततितमोऽध्यायः ॥**

---

**राजोवाच**

सर्वासां महिषीणां च गोविन्दासक्तचेतसाम् । मय्येव प्रेमवान् विष्णुरिति निश्चितचेतसाम् ॥ १ ॥
समः सर्वासु वा कृष्ण एकस्यां प्रेमवानुत । तन्मेऽनुशंस तच्छ्रोतुं रतिरस्ति मम प्रभो ॥ २ ॥

**श्रीशुक उवाच**

महिषीणां तु सर्वासां प्रथमा भीष्मनन्दना । प्रेमवानधिकं तस्यामिति प्रख्यातिरूर्जिता ॥ ३ ॥
कदाचित् प्रेमकलहः केशवेन तया सह । कृतस्तच्छृणु कौरव्य कात्स्न्र्येन कथयामि ते ॥ ४ ॥
कर्हिचित् सुखमासीनं सुतल्पस्थं जगद्गुरुम् । पतिं पर्यचरद् भैष्मी व्यजनेन सखीजनैः ॥ ५ ॥
य एतल्लीलया विश्वं सृजत्यत्त्यवतीश्वरः । स हि जातः स्वसेतूनां गोपीथाय यदुष्वजः ॥ ६ ॥
तस्मिन्नन्तर्गृहे भ्राजन्मुक्तादामविळम्बिना । विराजिते वितानेन दीपैर्मणिमयैरपि ॥ ७ ॥
मल्लिकादामभिर्दिव्यैर्द्विरेफकुलनादितैः । जालरन्ध्रप्रविष्टैश्च गोभिश्चन्द्रमसोऽरुणैः[1] ॥ ८ ॥
पारिजातवनामोदवायुनोद्यानशालिना । धूपैरागरवै राजन् जालरन्ध्रविनिर्गतैः ॥ ९ ॥
पयःफेननिभे शुभ्रे पर्यङ्के कशिपूत्तमे । उपतस्थे सुखासीनं जगतामीश्वरं पतिम् ॥ १० ॥
वालव्यजनमादाय रत्नदण्डं सखीकरात् । तेन वीजयती देवी उपासाञ्चक्र ईश्वरम् ॥ ११ ॥

सोपाच्युतं क्वणयती मणिनूपुराभ्यां रेजेऽङ्गुलीयवलयव्यजनाग्रहस्ता ।
वस्त्रान्तगूढकुचकुङ्कुमशोणहारभासा नितम्बधृतया च परार्घ्यकाञ्च्या ॥ १२ ॥
तां रुग्मिणीं श्रियमनन्यगतिं निरीक्ष्य या लीलया धृततनोरनुरूपरूपा ।
प्रीतः स्मयन्नळककुण्डलनिष्ककण्ठवक्त्रोल्लसत्स्मितसुधां हरिराबभाषे ॥ १३ ॥

**श्रीभगवानुवाच**

राजपुत्रीप्सिता भूपैर्लोकपालविभूतिभिः । महानुभावैः श्रीमद्भी रूपौदार्यबलोर्जितैः ॥ १४ ॥

---

१. चन्द्रमसोऽमलैः

तान् प्राप्तानर्थिनो हित्वा चैद्यादीन् स्मरदुर्मदान्। दत्ता भ्रात्रा स्वपित्रा च कस्माद् देववृषोपमान् ॥
राजभ्यो बिभ्यतः सुभ्रु समुद्रं शरणं गतान्। बलवद्भिः कृतद्वेषान् प्रायस्त्यक्तनृपासनान् ॥ १६ ॥
अस्पष्टवर्त्मनां पुंसामलोकपथमीयुषाम्। आस्थिताः पदवीं सुभ्रु प्रायः सीदन्ति योषितः ॥ १७ ॥
निष्किञ्चना वयं शश्वन्निष्किञ्चनजनप्रियाः। तस्मात् प्रायेण नो ह्याढ्या न भजन्ति सुमध्यमे ॥ १८ ॥
ययोरात्मसमं वित्तं जन्मैश्वर्याकृतिर्भवः। तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित् ॥ १९ ॥
वैदर्भ्येतदविज्ञाय त्वयादीर्घसमीक्षया। वृता वयं गुणैर्हीना भिक्षुभिः श्लाघिता मुधा ॥ २० ॥
अथात्मनोऽनुरूपं वै भजस्व क्षत्रियर्षभम्। येन त्वमाशिषः सत्या इहामुत्र च लप्स्यसे ॥ २१ ॥
चैद्यसाल्वजरासन्धदन्तवक्रादयो नृपाः। द्विषन्ति मां वरारोहे रुग्मी चापि तवाग्रजः ॥ २२ ॥
तेषां वीर्यमदान्धानां दृप्तानां स्मयनुत्तये। आनीताऽसि मया ह्यद्धा[1] तेजोऽपहरताऽसताम्॥ २३ ॥
उदासीना वयं नूनं न स्त्र्यपत्यार्थकामुकाः। आत्मलब्ध्याऽऽस्महे पूर्णा नेहात्मसदृशाः क्रियाः ॥
एतावदुक्त्वा भगवानात्मानं वल्लभामिव। मन्यमानामविश्लेषात् तद्दर्पघ्न उपारमत् ॥ २५ ॥

इति त्रिलोकेशपतेस्तदात्मनः प्रियस्य देव्यश्रुतपूर्वमप्रियम्।
आश्रुत्य भीता हृदि जातवेपथुश्चिन्तां दुरन्तां रुदती जगाम ह ॥ २६ ॥
पदा सुजातेन नखारुणश्रिया भुवं लिखन्त्यश्रुभिरञ्जनासितैः।
आसिञ्चती कुङ्कुमरूषितौ स्तनौ तस्थावधोमुख्यतिदुःखरुद्धवाक् ॥ २७ ॥
तस्याः सुदुःखभयशोकविनष्टबुद्धेर्हस्ताच्छ्लथद्वलयतो व्यजनं पपात।
देहश्च विक्लबधियः सहसैव बिभ्यद् रम्भेव वातविहता प्रविकीर्य केशान् ॥ २८ ॥

**श्रीशुक उवाच**

तद् दृष्ट्वा भगवान् कृष्णः प्रियायाः प्रेमबन्धनम्। हास्यप्रौढिमजानन्त्याः करुणः सोऽन्वकम्पत ॥
पर्यङ्कादवरुह्याशु तामुत्थाप्य चतुर्भुजः। केशान् समूह्य तद्वक्त्रं प्रामृजत् पद्मपाणिना ॥ ३० ॥
प्रमृज्याश्रुकळे नेत्रे स्तनौ चोपहतौ शुचा। आश्लिष्य बाहुना राजन्ननन्यविषयां सतीम् ॥ ३१ ॥
सान्त्वयामास सान्त्वज्ञः कृपया कृपणां प्रभुः। हास्यप्रौढेर्भ्रमच्चित्तामतदर्हां सतां गतिः ॥ ३२ ॥

**श्रीभगवानुवाच**

मा मा वैदर्भ्यसूयेथा जाने त्वां मत्परायणाम्। त्वद्वचः श्रोतुकामेन क्ष्वेळाचरितमङ्गने ॥ ३३ ॥

---

१. मयाऽऽश्वद्धा ❋

मुखं च प्रेमसंरम्भस्फुरिताधरमीक्षितुम् । कटाक्षेणारुणापाङ्गसुन्दरभ्रुकुटीतटम् ॥ ३४ ॥

अयं हि परमो लाभो गृहेषु गृहमेधिनाम् । यन्नर्मैर्नीयते यामः प्रियया भीरु भामिनि[१] ॥ ३५ ॥

सैवं भगवता राजन् वैदर्भी परिसान्त्विता । ज्ञात्वा तां परिहासोक्तिं प्रियत्यागभयं जहौ ॥ ३६ ॥

बभाषे ऋषभं पुंसामीक्षती भगवन्मुखम् । सव्रीळहासरुचिरस्निग्धापाङ्गेन भारत ॥ ३७ ॥

**रुग्मिण्युवाच**

नन्वेतदेवमरविन्दविलोचनाह यद् वै भवान् न भवतः सदृशो विभूम्नः ।
क्व स्वे महिम्न्यभिरतो भगवांस्त्र्यधीशः क्वाहं गुणप्रकृतिरन्यगृहीतपादा ॥ ३८ ॥

सत्यं भयादिव गुणेभ्य उरुक्रमान्तः शेते समुद्र उपलम्भनमात्र आत्मा ।
योऽनित्यकेन्द्रियगणैः कृतविग्रहस्त्वं त्वत्सेवया नृपपदं विधुतं तमोऽन्धम् ॥ ३९ ॥

त्वत्पादपद्ममकरन्दजुषां मुनीनां वर्त्म स्फुटं नृपशुभिर्ननु दुर्विभाव्यम् ।
यस्मादलौकिकमिवेहितमीश्वरस्य भूमंस्तवेहितमथो अनु मे भवन्ति ॥ ४० ॥

निष्किञ्चनो ननु भवान् न यतोऽस्ति किञ्चिद् यस्मै बलिं बलिभुजोऽपि हरन्त्यजाद्याः ।
न त्वा विदन्त्यसुतृपोऽन्तिकमाढ्यतान्धाः प्रेष्ठः सतां बलिभुजामपि योऽन्तरास्से ॥ ४१ ॥

त्वं वै समस्तपुरुषार्थमयः फलात्मा यद्वाञ्छया सुमतयो विसृजन्ति कृत्स्नम् ।
तेषां विभो समुदितो भवतः प्रसादस्त्वय्यां च यश्च रतयोः सुखदुःखिनोर्न ॥ ४२ ॥

त्वं न्यस्तदण्डमुनिभिर्गदितानुभाव आत्माऽऽत्मदश्च जगतामिति मे वृतोऽसि ।
मुक्त्वा भवद्भ्रवदुदीरितकालगन्धध्वस्ताशिषोऽब्जभवनाकपतीन् कुतोऽन्यान् ॥ ४३ ॥

सत्यं वचस्तव गदाग्रज यश्च भूपान् विद्राव्य शार्ङ्गनिनदेन जहर्थ मां त्वम् ।
सिंहो यथा स्वबलिमीश पशुं स्वभागं तेभ्यो भयाद् यदुदधिं शरणं प्रपन्नः ॥ ४४ ॥

यद्वाञ्छया नृपशिखामणयोऽङ्गवैन्यजायन्तनाहुषगयादय ऐकपत्यम् ।
राज्यं विसृज्य विविशुर्वनमम्बुजाक्ष सीदन्ति नानुपदवीं त[२] इहास्थिताः किम् ॥ ४५ ॥

का स्त्री वृणीत तव पादसरोजगन्धमाघ्राय सन्मुखरितं जनतापवर्गम् ।
लक्ष्म्यालयं त्वविगणय्य गुणालयाढ्यं मर्त्याशिषोरुभयमर्थविविक्तदृष्टिः ॥ ४६ ॥

---

१. भीरुभाषिणि २. ये ❋

तं त्वाऽनुरूपमभजं जगतामधीशमात्मानमत्र च परत्र च कामपूरम्[1] ।
स्यान्मे तवाङ्घ्रिशरणं श्रुतिभिर्भ्रमन्त्या ये वै भजन्ति त उ[2] यान्त्यनृतापवर्गम् ॥ ४७ ॥
कस्याः[3] स्युरच्युत नृपा भवतोपदिष्टाः स्त्रीणां गृहेषु खरगोश्वबिळालभृत्याः ॥
यत्कर्णमूलमरिकर्शन नोपयायाद् युष्मत्कथा मृडविरिञ्चसभासु गीता ॥ ४८ ॥
त्वक्श्मश्रुरोमनखकेशपिनद्धमन्तर्मांसास्थिरक्तकृमिविड्भरितान्त्रवीतम् ।
जीवच्छवं भजति काममतिर्विमूढा या ते पदाब्जमकरन्दमजिघ्रती स्त्री ॥ ४९ ॥
अस्त्यम्बुजाक्ष मम ते चरणानुराग आत्मन् रतस्य मयि चानतिरिक्तदृष्टेः ।
यर्ह्यस्य वृद्धय उपात्तरजोऽतिमात्रो मामीक्षसे तदु ह नः परमानुकम्पा ॥ ५० ॥
नैवाळीकं भरत्येव[4] वचस्ते मधुसूदन । अम्बाया इव हि प्रायः कन्यावादरतिः क्वचित् ॥ ५१ ॥
मुग्धायाश्चापि[5] पुंश्चल्या मनोऽभ्येति नवन्नवम् । बुधोऽसतीं न बिभृयात् तां बिभ्रदुभयच्युतः ॥ ५२ ॥

**श्रीभगवानुवाच**

साध्व्येतच्छ्रोतुकामैस्त्वं[6] राजपुत्रि प्रलोभिता । मयोदितं यदन्वर्थं सर्वं तत् सत्यमेव हि ॥ ५३ ॥
यं यं कामयसे कामं मयि कामय कामिनि । सन्ति ह्येकान्तभक्तायास्तव कल्याणि नित्यदा ॥ ५४ ॥
उपलब्धं पतिप्रेम पातिव्रत्यं च तेऽनघे । यद् वाक्यैश्चाल्यमानाया[7] न धीर्मय्यपकर्षिता ॥ ५५ ॥
ये मां भजन्ति दाम्पत्ये तपसा व्रतचर्यया । कामात्मानोऽपवर्गेशं मोहिता मम मायया ॥ ५६ ॥
मां प्राप्य मानिन्यपवर्गसम्पदं वाञ्छन्ति ये सम्पद एव सत्पतिम् ।
ते मन्दभाग्या निरयेऽपि ये स्युर्मात्रात्मकत्वान्निरये सुसङ्गमः ॥ ५७ ॥
दिष्ट्या गृहेश्वर्ययुते मयि त्वया कृताऽनुवृत्तिर्भवमोचनी खलैः ।
सुदुष्कराऽसौ सुतरां दुराशिषो ह्यसुम्भराया विकृतिञ्जुषः[8] स्त्रियः ॥ ५८ ॥
न त्वादृशीं प्रणयिनीं गृहिणीं गृहेषु पश्यामि मानिनि यया स्वविवाहकाले ।
प्राप्तान् नृपानविगणय्य रहोरहो मे प्रस्थापितो द्विज उपस्थितसत्कथस्य ॥ ५९ ॥

---

१. कामरूपम्　२. भजन्त उत　३. तस्याः ❋　४. भवत्येव ❋
५. मूढाया अपि ❋　६. श्रोतुकामेन ❋　७. चोद्यमानायाः ❋　८. निकृतञ्जुषः ❋

भ्रातुर्विरूपकरणं युधि निर्जितस्य प्रौद्वाहपर्वणि च तद्वधमक्षगोष्ठ्याम् ।
दुःखं समुत्थमसहोऽस्मदयोगभीत्या नैवाब्रवीः किमपि तेन वयं जितास्ते ॥ ६० ॥
दूतस्त्वयाऽऽत्मलभने सुविविक्तमन्त्रः प्रस्थापितो मयि चिरायति शून्यमेतत् ।
मत्वा जिहासुरिदमङ्गमनन्ययोग्यं तिष्ठेस्ततस्त्वयि वयं प्रतिनन्दयामः ॥ ६१ ॥

**श्रीशुकउवाच**

एवं सौरतसँल्लापैर्भगवान् देवकीसुतः । स्वरतो रमया रेमे नरलोकं विडम्बयन् ॥ ६२ ॥
तथाऽन्यासामपि स्त्रीणां गृहेषु गृहवानिव । आस्थितो गृहमेधीयान् धर्माल्लोकगुरुर्जुषन् ॥ ६३ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे पञ्चसप्ततितमोऽध्यायः ॥

---

**श्रीशुक उवाच**

एकैकशस्ताः कृष्णस्य पुत्रान् दशदशाबलाः । अजीजनन्ननवमान् पितुः सर्वात्मसम्पदा ॥ १ ॥
गृहादनपगं वीक्ष्य राजपुत्र्योऽच्युतं स्थितम् । आत्मनोऽमंसत प्रेष्ठं नतत्तत्त्वविदः स्त्रियः ॥ २ ॥
चार्वब्जकोशवदनायतचारुनेत्रसप्रेमहासरसवीक्षितवल्गुजल्पैः ।
सम्मोहिता भगवतो न मनो विजेतुं स्वैर्विभ्रमैः समशकन् वनिता विभूम्नः ॥ ३ ॥
स्मायावलोकलवदर्शितभावहारिभ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः ।
पत्न्यस्तु षोडशसहस्रमनङ्गबाणैर्यस्येन्द्रियं विमथितुं करणैर्न शेकुः ॥ ४ ॥
याः स्वीप्सितं स्वभवनेष्वधिरूढमुच्चैर्लक्ष्म्यैकधामसरसप्लुतवीक्षणेन ।
ऐक्षन् सतामपि पतिं च सतीः कटाक्षैः स्थूणान्तरेण नवसङ्गमलज्जयैव ॥ ५ ॥
रामा गृहे विहरतः पुरतः कराभ्यां बद्धेक्षणाः स्वदयितस्य मुदा हसन्त्यः ।
गात्रान्तराण्यपिदधुर्निजपूरुषस्य क्लेशावहान्यपि तदङ्गजभङ्गभीताः ॥ ६ ॥
तासां या दशपुत्राणां कृष्णस्त्रीणां पुरोदिताः । अष्टौ महिष्यस्तत्पुत्रान् प्रद्युम्नादीन् गृणन्ति तान् ॥
चारुदेष्णः सुदेष्णश्च चारुदेहश्च वीर्यवान् । सुचारुश्चारुगुप्तश्च भद्रचारुस्तथाऽपरः ॥ ८ ॥
चारुचन्द्रोऽतिचारुश्च चारुमान् दशमो हरेः । प्रद्युम्नप्रमुखा जाता रुग्मिण्याऽनवमाः पितुः ॥
भानुः सुभानुः स्वर्भानुः प्रभानुर्भानुमांस्तथा । चन्द्रभानुर्बृहद्भानुरभिभानुस्तथाऽष्टमः[1] ॥ १० ॥

---

१. अतिभानुस्तथाऽष्टमः

श्रीभानुः प्रतिभानुश्च सत्यभामात्मजा दश । साम्बः सुमित्रः पुरुजिच्छतजिच्च सहस्रजित् ॥ ११ ॥
विजयश्चित्रकेतुश्च वसुमान् द्रविणः क्रतुः । जाम्बवत्याः सुता ह्येते साम्बाद्याः पितृसम्मिताः ॥
भानुश्चन्द्रोऽश्वसेनश्च चित्रगुर्वेगवान् वृषः । आमः शङ्कुर्वसुः श्रीमान् कुन्तिर्नाग्नजितेः सुताः ॥ १३ ॥
श्रुतः कविर्वृषो वीरः सुबाहुर्भद्र एकलः । शान्तिर्दर्शः पूर्णमास्यः कालिन्द्याः[1] सोमकोऽपरः ॥ १४ ॥
प्रघोषो गात्रवान् सिंहो बलः प्रबल ऊर्ध्वगः । माद्र्याः पुत्रा महाशक्तिः सह ओजोऽपराजितः ॥
वृकोऽर्हकोऽनिलो नीलो बह्वन्नोऽन्नाद एव च । महाशः पवनो वह्निर्मित्रविन्दात्मजाः कृतिः ॥ १६ ॥
सङ्ग्रामजिद् बृहत्सेनः शूरः प्रहरणोऽरिजित् । जयः सुभद्रो भद्राश्वो वाम आयुश्च सत्यकः ।
दीप्तिमांस्ताम्रपत्राद्या रोहिण्यास्तनया हरेः ॥ १७ ॥
प्रद्युम्नाच्चानिरुद्धोऽभूद् रुग्मवत्यां महाबलः । पुत्र्यां च रुग्मिणो राजन् नाम्ना भोजकटे पुरे ॥ १८ ॥
एतेषां पुत्रपौत्राश्च बभूवुः कोटिशो नृप । मातरः कृष्णभार्याणां[2] सहस्राणि च षोडश ॥ १९ ॥

**राजोवाच**

कथं रुग्म्यरिपुत्राय प्रादाद् दुहितरं युधि । कृष्णेन परिभूतस्तं हन्तुं रन्ध्रं प्रतीक्षते ॥ २० ॥
एतदाख्याहि मे ब्रह्मन् द्विषोर्वैवाहिकीं क्रियाम् । अनागतमतीतं च वर्तमानमतीन्द्रियम् ।
विप्रकृष्टं व्यवहितं सम्यक् पश्यन्ति योगिनः ॥ २१ ॥

**श्रीशुक उवाच**

यद्यप्यनुस्मरन् वैरं रुग्मी कृष्णावमानितः । व्यतरद् भागिनेयाय सुतां कुर्वन् स्वसुः प्रियम् ॥ २२ ॥
तदेवानुस्मरन् वैरं रुग्मी कृष्णावमानितः । तोषयामास तपसा श्रीशैलनिलयं हरम् ॥ २३ ॥
तपसाऽऽराधितो रुद्रो रुग्मिणा वरदर्षभः[3] । वरेण च्छन्दयामास स च वव्रे दृढं धनुः ॥ २४ ॥
अजेयं शत्रुसङ्घानामभेद्यं त्रिदशैरपि । तथेति कार्मुकं दत्त्वा वाक्यं चोवाच शङ्करः ॥ २५ ॥
यदा विरुध्यसे विष्णौ तदेतत् कार्मुकं नृप । हित्वा तदा त्वा मामेव प्रतिपत्स्यति नान्यथा ॥ २६ ॥
इत्युक्त्वा कार्मुकं दत्त्वा शङ्करो न व्यदृश्यत । सोऽपि लब्धवरो राजा प्राप्य भोजकटं पुरम् ॥ २७ ॥
तेन चापेन सकलान् नृपान् प्रख्यातपौरुषान् । वशीचकार सङ्ग्रामे रुग्मी कृष्णमृते नृप ॥ २८ ॥
विरोद्धुं वासुदेवेन रुग्मी नैवाकरोन्मनः । धनुर्लोभान्महाराज न मैत्रीमप्यकल्मषाम् ॥ २९ ॥
यद्यप्यनुस्मरन् वैरं गिरिशस्य स्मरन् वचः । वृतः स्वयंवरे साक्षादनङ्गोऽङ्गयुतस्तया ॥ ३० ॥

---

१. कालिन्द्याम् ❋ २. कृष्णजातानाम् ३. रुद्रो तृतीये वत्सरे नृप ❋

राज्ञः समेतान् निर्जित्य जहारैकरथो युधि । अनिरुद्धो रुग्मवत्यां तस्यां जज्ञे महारथः ॥ ३१ ॥
जहार यं चित्रलेखा बाणपुत्र्या प्रचोदिता । सहस्रबाहुर्बाणश्च यत्कृते द्विभुजोऽभवत् ॥ ३२ ॥
रुग्मिण्यास्तनयां राजन् कृतवर्मसुतो बली । उपयेमे विशालाक्षः कन्यां चारुमतीं किल ॥ ३३ ॥
दौहित्रायानिरुद्धाय पौत्रीं रुग्म्यददाद् हरेः । तस्मिन्नभ्युदये राजन् रुग्मिणी रामकेशवौ ॥ ३४ ॥
पुरं भोजकटं जग्मुः साम्बप्रद्युम्नकादयः[१] । तस्मिन् प्रवृत्त उद्वाहे कळिङ्गप्रमुखा नृपाः ॥ ३५ ॥
दृप्तास्ते रुग्मिणं प्रोचुर्बलमक्षैर्विनिर्जय । अनक्षज्ञो बलो राजन्नपि तद्व्यसनी महान् ॥ ३६ ॥
इत्युक्तो बलमाहूय तेनाक्षै रुग्म्यदीव्यत । शतं सहस्रमयुतं रामस्तत्राददे पणम् ॥ ३७ ॥
तं तु रुग्म्यजयत् तत्र कळिङ्गः प्राहसद् बलम् । दन्तान् सन्दर्शयन्नुच्चैर्नामृष्यत् तद् हलायुधः ॥ ३८ ॥
ततो लक्षं रुग्म्यगृह्णाद् ग्लहं तदजयद् बलः । जितवानहमित्याह रुग्मी कैतवमाश्रितः ॥ ३९ ॥
मन्युना क्षुभितः श्रीमान् समुद्र इव पर्वणि । जात्याऽरुणाक्षोऽतिरुषा[२] न्यर्बुदं ग्लहमाददे ॥ ४० ॥
तं चापि जितवान् रामो धर्मेण च्छलतोऽब्रवीत् । रुग्मी जितं मयाऽत्रेमे वदन्तु प्राश्निका इति॥ ४१ ॥
तथेत्याह कळिङ्गोऽपि दन्तान् सन्दर्श्य सीरिणः[३] । ततः कोपपरीतात्मा तूष्णीमासीद् हलायुधः ॥
तदाऽब्रवीन्नभोवाणी बलेनैव जितो ग्लहः । धर्मतो वचनेनैव रुग्मी वदति वै मृषा ॥ ४३ ॥
तामनादृत्य वैदर्भो दुष्टराजन्यचोदितः । सङ्कर्षणं परिहसन् बभाषे कालचोदितः ॥ ४४ ॥
नैवाक्षकोविदा यूयं गोपाला वनगोचराः । अक्षैर्दीव्यन्ति राजानो बाणैश्च न भवादृशाः ॥ ४५ ॥
रुग्मिणैवमधिक्षिप्तो राजभिश्चोपहासितः । क्रुद्धस्त्वष्टपदेनैनं[४] जघानोद्वाहपर्वणि[५] ॥ ४६ ॥
कळिङ्गराजं तरसा गृहीत्वा दशमे पदे । दन्तानपातयत् क्रुद्धो योऽहसद् विवृतैर्द्विजैः ॥ ४७ ॥
अन्ये निर्भिण्णबाहूरुशिरसो रुधिरोक्षिताः । राजानो दुद्रुवुर्भीता बलेन परिघार्दिताः ॥ ४८ ॥
निहते रुग्मिणि स्याले नाब्रवीत् साध्वसाधुवा । रुग्मिणीबलयो राजन् स्नेहभङ्गभयाद् हरिः ॥ ४९ ॥

अथोऽनिरुद्धं सह भार्यया वरं रथं समारोप्य ययुः कुशस्थलीम् ।
रामादयो भोजकटाद् दशार्हकाः सिद्धाखिलार्था मधुसूदनाश्रयाः ॥ ५० ॥

**॥ इति श्रीमद्भागवते दशमस्कन्धे षट्सप्ततितमोऽध्यायः ॥**

---

१. जग्मुः प्रद्युम्नाद्यास्तथा परे ❋ २. अरुणाक्षो भगवान् ❋
३. चक्रिणः ❋ ४. अष्टापदेनैनम् ५. उद्वाहसम्पदि ❋

श्रीशुक उवाच

तथा ताभिर्वरस्त्रीभी रममाणो जनार्दनः । दिनानि हतसापत्नः सुबहून्यत्यवासयत् ॥ १ ॥

राजोवाच

तासां षोडशसाहस्रमहिषीणां जनार्दनः । तृप्तिं कथं चकारैको मानुषं देहमाश्रितः ॥ २ ॥

श्रीशुक उवाच

हन्त ते कथयिष्यामि श्रोतॄणां विस्मयावहम् । यथा चकार बह्वीनामेकस्तृप्तिं जनार्दनः ॥ ३ ॥

नरकं निहतं श्रुत्वा तथोद्वाहं च योषिताम् । कृष्णेनैकेन बह्वीनां तद्दिदृक्षुः स्म नारदः ॥ ४ ॥

चित्रं बतैतदेकेन वपुषा युगपत् पृथक् । गृहेषु द्व्यष्टसाहस्रस्त्रिय एक उदावहत् ॥ ५ ॥

इत्युत्सुको द्वारवतीं देवर्षिर्द्रष्टुमागमत् । पुष्पितोपवनारामां द्विजाळिकुलनादिताम् ॥ ६ ॥

उत्फुल्लेन्दीवरम्भोजकल्हारकुमुदोत्पलैः । छुरितेषु सरस्सूच्चैः कूजितां हंससारसैः ॥ ७ ॥

प्रासादलक्षैर्नवभिर्जुष्टां स्फाटिकराजतैः । महामरतकप्रख्यैः स्वर्णरत्नपरिच्छदैः ॥ ८ ॥

विभक्तरथ्यापथचत्वरापणैः शालासभाभी रुचिरां सुरालयैः ।
संसिक्तमार्गाङ्गणवीथिगेहिनीं पतत्पताकध्वजवारितातपाम् ॥ ९ ॥

तस्यामन्तः पुरं श्रीमदर्चितं सर्वधिष्ण्यपैः । हरेः स्वकौशलं यत्र त्वष्ट्रा कात्स्न्येन दर्शितम् ॥ १० ॥

तत्र षोडशभिः सद्मसहस्रैः समलङ्कृतम् । विवेशैकतमं शौरेः पत्नीनां भवनं महत् ॥ ११ ॥

विष्टब्धं विद्रुमस्तम्भैर्वैडूर्यफलकोत्तमैः । इन्द्रनीलमयैः कुड्यैर्जालैर्मरतकोत्तमैः ॥ १२ ॥

वितानैर्निर्मितैस्त्वष्ट्रा मुक्तादामविळम्बिभिः । दान्तैरासनपर्यङ्कैर्मण्युत्तमपरिष्कृतैः ॥ १३ ॥

दासीभिर्निष्ककण्ठीभिः सुवासोभिरलङ्कृतम् । पुम्भिः सकञ्चुकोष्णीषसुवस्त्रमणिकुण्डलैः ॥ १४ ॥

रत्नप्रदीपनिकरद्युतिभिर्निरस्तध्वान्तं विचित्रवळभीषु शिखण्डिनोऽङ्ग ।
नृत्यन्ति यत्र विहितागरुधूपमक्षैर्नियातमीक्ष्य घनबुद्धय उन्नदन्तः ॥ १५ ॥

तस्मिन् समानगुणरूपवयःसुवेषदासीसहस्रयुतयाऽनुसवं गृहिण्या ।
विप्रो ददर्श चमरव्यजनेन रुग्मदण्डेन सात्वतपतिं परिवीजयन्त्या ॥ १६ ॥

तं सन्निरीक्ष्य भगवान् सहसोत्थितः श्रीपर्यङ्कतः सकलधर्मभृतां वरिष्ठः ।
आनम्य पादयुगळं शिरसा किरीटजुष्टेन साञ्जलिरवीविशदासने स्वे ॥ १७ ॥

तस्यावनिज्य चरणौ तदपः स्वमूर्ध्ना बिभ्रज्जगद्गुरुतरोऽपि सतां पतिर्हि ।
ब्रह्मण्यदेव इति यद् गुणनाम युक्तं तस्यैव यच्चरणशौचमशेषतीर्थम् ॥ १८ ॥

सम्पूज्य देवऋषिमादिऋषिः पुराणो नारायणो नरसखो विधिनोदितेन ।
वाण्याऽभिभाष्य मितयाऽमृतकल्पया च प्राह प्रभो भगवतः करवाम किं ते[१] ॥ १९ ॥

**नारद उवाच**

नैवाद्भुतं त्वयि विभोऽखिललोकनाथे मैत्रीं जनेषु दधतश्च दमं खलानाम् ।
निश्रेयसाय जगतः स्थितिरक्षणाभ्यां स्वैरावतार उरुगाय विदाम सुष्ठु ॥ २० ॥
दृष्टं तवाङ्घ्रियुगळं जनतापवर्गं ब्रह्मादिभिर्हृदि विचिन्त्यमगाधबोधैः ।
संसारकूपपतितोत्तरणावलम्बं ध्यायंश्चराम्यनुगृहाण यथा स्मृतिः स्यात् ॥ २१ ॥

ततोऽन्यमाविशद् गेहं कृष्णपत्न्याः स्म नारदः । योगेश्वरेश्वरस्याङ्ग योगमायाविवित्सया ॥ २२ ॥
दीव्यन्तमक्षभिस्तत्र प्रियया चोद्धवेन च । पूजितः परया भक्त्या प्रत्युत्थानासनादिभिः ॥ २३ ॥
पृष्टश्चाविदुषेवासौ कदाऽऽयातो भवानिति । क्रियते किन्नु पूर्णानामपूर्णैरस्मदादिभिः ॥ २४ ॥
अथापि ब्रूहि नो ब्रह्मन् जन्मैतच्छोभनं कुरु । स तु विस्मित उत्थाय तूष्णीमन्यदगाद्[२] गृहम्॥ २५ ॥
तत्राप्यचष्ट गोविन्दं लाळयन्तं शिशून् सुतान् । ततोऽन्यस्मिन् गृहेऽपश्यन्मज्जनाय कृतोद्यमम् ॥
जुह्वन्तं च वितानाग्नीन् यजन्तं पञ्चभिर्मखैः । भोजयन्तं द्विजान् क्वापि भुञ्जानमवशेषितम् ॥ २७ ॥
क्वापि सन्ध्यामुपासीनं जपन्तं ब्रह्म वाग्यतम्[३] । एकत्र चासिचर्मभ्यां चरन्तं शिष्यवर्त्मसु ॥ २८ ॥
अश्वैर्गजै रथैः क्वापि विचरन्तं गदाग्रजम् । क्वचिच्छयानं पर्यङ्के स्तूयमानं च वन्दिभिः ॥ २९ ॥
मन्त्रयन्तं च कस्मिंश्चिन्मन्त्रिभिश्चोद्धवादिभिः । जलक्रीडारतं क्वापि वारमुख्याबलावृतम् ॥ ३० ॥
कुत्रचिद् द्विजमुख्येभ्यो ददतं[४] गाः स्वलङ्कृताः । इतिहासपुराणानि शृण्वन्तं मङ्गळानि च ॥ ३१ ॥
हसन्तं हास्यकथया कदाचित् प्रियया गृहे । क्वापि धर्मं सेवमानमर्थकामौ च कुत्रचित् ॥ ३२ ॥
ध्यायन्तमेकमात्मानं पुरुषं प्रकृतेः परम् । शिश्रूषन्तं गुरून् क्वापि कामैर्भोगैः सपर्यया ॥ ३३ ॥
कुर्वन्तं विग्रहं कैश्चित् सन्धिं चान्यत्र केशवम् । कुत्रापि सह रामेण चिन्तयन्तं सतां शिवम्॥ ३४ ॥
पुत्राणां दुहितॄणां च काले विध्युपनायनम् । दारैर्वरैस्तत्सदृशैः कल्पयन्तं विभूतिभिः ॥ ३५ ॥
प्रस्थापनोपनयनैरपत्यानां महोत्सवान् । वीक्ष्य योगेश्वरेशस्य येषां लोका विसिस्मिरे ॥ ३६ ॥
यजन्तं सकलान् देवान् क्वचित् क्रतुभिरूर्जितैः । पूर्तयन्तं[५] क्वचिद् धर्मं कूपारामालयादिभिः ॥ ३७ ॥

---

१. करवामहे किम् ❋ २. तूर्णमन्यदगाद् ३. वाग्यतः ❋ ४. ददन्तम् ❋ ५. पूरयन्तम् ❋

समृद्धकामो हीनो वा नारायणपरो मुनिः । नोत्सर्पेत न शुष्येत सरिद्भिरिव सागरः ॥ ६ ॥

दृष्ट्वा स्त्रियं देवमायां तद्भावैरजितेन्द्रियः । प्रलोभितः पतन्त्यन्धे तमस्यग्नौ पतङ्गवत् ॥ ७ ॥

योषित्सु तल्पशरणाभरणाम्बरादिद्रव्येषु[1] मायारचितेषु मूढः ।

प्रलोभितात्मा ह्युपभोगबुद्ध्या पतङ्गवन्नश्यति नष्टदृष्टिः ॥ ८ ॥

स्तोकं स्तोकं ग्रसन् ग्रासं देहो वर्तेत यावता । गृहान् व्रजेत् समातिष्ठन् वृत्तिं माधुकरीं मुनिः ॥ ९ ॥

अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः । सर्वतः सारमादद्यात् पुष्पेभ्य इव षट्पदः ॥ १० ॥

सायन्तनं श्वस्तनं वा न सङ्गृह्णीत भिक्षितम् । पाणिपात्रोदरामत्रो[2] मक्षिकेव न सङ्ग्रही ।

मक्षिका इव सङ्गृह्णन् सह तेन विनश्यति ॥ ११ ॥

पदाऽपि युवतीं भिक्षुर्न स्पृशेद्[3] दारवीमपि । स्पृशन् करीव बध्येत करिण्या अङ्गसङ्गतः ॥ १२ ॥

नाधिगच्छेत् स्त्रियं प्राज्ञः कर्हिचिन्मृत्युमात्मनः । बलाधिकैर्विहन्येत गजैरन्यैर्गजो यथा ॥ १३ ॥

न देयं नोपभोग्यं च लुब्धैर्यद् दुःखसञ्चितम् । भुङ्क्ते स्वमपि तच्चान्यो मधुहेवार्थविन्मधु ॥ १४ ॥

सुदुःखोपार्जितैर्वित्तैराशासानां गृहाशिषः । मधुहेवाग्रतो भुङ्क्ते यतिर्वै गृहमेधिनाम् ॥ १५ ॥

ग्राम्यगीतं न शृणुयाद् यतिर्वनचरः क्वचित् । शिक्षेऽहं हरिणाद् बद्धान्मृगयोर्गीतमोहितात् ॥ १६ ॥

नृत्यवादित्रगीतानि[4] जुषन् ग्राम्याणि योषिताम् । आसां क्रीडनकान्धः स्याद् ऋष्यशृङ्गो मुनिर्यथा ॥

जिह्वयाऽतिप्रमाथिन्या जनो रसविमोहितः । मृत्युमृच्छत्यसद्बुद्धिर्मत्स्यस्तु बळिशैर्यथा[5] ॥ १८ ॥

इन्द्रियाणि जयन्त्याशु निराहारा मनीषिणः । वर्जयित्वा तु रसनमसौ रस्ये च वर्धते[6] ॥ १९ ॥

तावज्जितेन्द्रियो न स्याद् विजितान्येन्द्रियः पुमान् । न जयेद् रसनं[7] यावज्जितं सर्वं जिते रसे ॥ २० ॥

पिङ्गळा नाम वेश्याऽऽसीद् विदेहनगरे पुरा । तस्याः संशिक्षितं किञ्चिन्निबोध नृपसत्तम ॥ २१ ॥

सा स्वैरिण्येकदा कान्तं सङ्केत उपनेष्यती । अभूत् काले गृहद्वारि बिभ्रती रूपमुत्तमम् ॥ २२ ॥

मार्ग आगच्छतो वीक्ष्य पुरुषान् पुरुषर्षभ । तान् शुल्कदान् वित्तवतः कान्तान् मेनेऽर्थकामुका ॥ २३ ॥

आगतेष्वपयातेषु सा सङ्केतोपजीवना[8] । अप्यन्यो वित्तवान् कोपि मामुपेष्यति भूरिदः ॥ २४ ॥

---

१. तल्पाभरणाम्बरादि.... ❋ /तल्पे शारणाम्बरादिद्रव्येषु/योषिद्धिरण्याभरणा...

२. पाणिपात्रोदरपात्रो वा ❋ ३. यदापि युवतीं भिक्षुः संस्पृशेत्❋ ४. नृत्तवादित्र.... ❋ एवमग्रेऽपि

५. बडिशैर्यथा ६. रस्ये विवर्धते ❋ ७. रसनाम् ❋ ८. सङ्केतोपजीविनी

एवं दुराशयाध्वस्तनिद्रा द्वार्यवलम्बती[१] । निर्गच्छन्ती प्रविशती निशीथं समपद्यत ॥ २५ ॥
तस्या वित्ताशया शुष्यद्वक्त्राया दीनचेतसः । निर्वेदः प्रथमो[२] जज्ञे चिन्ताहेतिः सुखावहः ॥ २६ ॥
तथा निर्विण्णचित्ताया गीतं शृणु यथा मम ॥ २७ ॥
निर्वेद आशापाशानां पुरुषस्य यथा ह्यसिः । नह्यङ्गाजातनिर्वेदो देहबन्धं जिहासति ॥ २८ ॥

**पिङ्गलोवाच**

अहो मे मोहविततिं पश्यताविजितात्मनः । या कान्ताद् व्रजतः[३] कामं कामये येन बालिशा ॥ २९ ॥
सन्तं समीपे रमणं रतिप्रदं वित्तप्रदं नित्यमिमं विहाय ।
अकामदं दुःखभयाधिशोकमोहप्रदं तुच्छमहं वृणेऽज्ञा[४] ॥ ३० ॥
अहो मयाऽऽत्मा परितापितो वृथा साङ्केत्यवृत्त्याऽतिविगर्ह्यवार्तया ।
स्त्रैणान् नरांश्चार्थतृषाऽनुशोच्यान् क्रीत्वा हि वित्तं रतिमात्मनेच्छती ॥३१ ॥
यदस्थिभिर्निर्मितवंशवंश्यस्थूणं त्वचारोमनखैः पिनद्धम् ।
क्षरन्नवद्वारमगारमेतद् विण्मूत्रपूर्णं मदुपैति काऽन्या ॥ ३२ ॥
विदेहानां पुरे ह्यस्मिन् अहमैकैव मूढधीः । याऽन्यमिच्छन्त्यतः स्वस्मादन्यस्मात् कान्तमच्युतात्[५] ॥
सुहृत् प्रेष्ठतमो नाथ आत्मा चायं शरीरिणाम् । तं विक्रीयात्मनैवाहं रमेऽनेन यथा रमा ॥ ३४ ॥
कियत् प्रियं ते व्यभजन् कामान्[६] मे कामदा नराः । आद्यान्तवन्तो भार्याया देवा वा कालविद्रुताः ॥
नूनं मे भगवान् प्रीतो विष्णुः केनापि कर्मणा । निर्वेदोऽयं दुराशाया यन्मे जातः सुखावहः ॥ ३६ ॥
मैवं स्युर्मन्दभाग्यायाः क्लेशा निर्वेदहेतवः । येनानुबन्धं निर्हृत्य पुरुषः शममृच्छति ॥ ३७ ॥
तेनोपकृतमादाय शिरसा ग्राम्यसङ्गताः । त्यक्त्वा दुराशाः शरणं व्रजामि तमधीश्वरम् ॥ ३८ ॥
सन्तुष्टा श्रद्दधत्येतद्[७] यथालाभेन जीवती । विहराम्यमुनैवाहमात्मना रमणेन वै ॥ ३९ ॥
संसारकूपे पतितं विषयैर्मुषितेक्षणम् । ग्रस्तं कालाहिनाऽऽत्मानं कोऽन्योऽस्मात् त्रातुमीश्वरः ॥ ४० ॥
आत्मैव ह्यात्मनो गोप्ता निर्विद्येत यदाऽखिलात् । अप्रमत्त इदं पश्येद् ग्रस्तं कालाहिना जगत् ॥ ४१ ॥

**ब्राह्मण उवाच**

एवं व्यवसितमतिर्दुराशाः कान्ततर्षजाः । छित्त्वोपशममास्थाय शय्यामुपविवेश ह[८] ॥ ४२ ॥

---

१. द्वार्यवलम्बिनी   २. परमः   ३. कान्तादसतः   ४. भजेऽज्ञा
५. स्वस्मादात्मदात् काममच्युतात् ❋   ६. कान्ता मे   ७. श्रद्धयाऽत्यन्तम् ❋   ८. सा

आशा हि परमं दुःखं नैराश्यं परमं सुखम् । यथा सञ्छिद्य कान्ताशां सुखं सुष्वाप पिङ्गळा ॥ ४३ ॥

॥ इति श्रीमद्भागवते एकादशस्कन्धे अष्टमोऽध्यायः ॥

### ब्राह्मण उवाच

परिग्रहो हि दुःखाय यद्यत् प्रियतमं नृणाम् । अनन्तसुखमाप्नोति तद् विद्वान् यस्त्वकिञ्चनः ॥ १ ॥

सामिषं कुररं जघ्नुर्बलिनो ये निरामिषाः । तदामिषं परित्यज्य स सुखं समविन्दत ॥ २ ॥

न मे मानावमानौ स्तो न चिन्ता येह पुत्रिणाम् । आत्मक्रीड आत्मरतो विचरामीह बालवत् ॥ ३ ॥

द्वावेव चिन्तया मुक्तौ परमानन्द आप्लुतौ । यो विमूढो जडो बालो यो गुणेभ्यः परं गतः ॥ ४ ॥

क्वचित् कुमारी त्वात्मानं वृण्वानान्[१] गृहमागतान् । स्वयं तानर्हयामास क्वापि यातेषु बन्धुषु ॥ ५ ॥

तेषामभ्यवहारार्थं शालीन् दृषदि पार्थिव । अवघ्नन्त्याः प्रकोष्ठस्थाः शङ्खाश्चक्रुः स्वनं महत् ॥ ६ ॥

सा तं जुगुप्सितं मत्वा महती व्रीळिता ततः । बभञ्जैकैकशः शङ्खान् द्वौ द्वौ पाण्योरशेषयत् ॥ ७ ॥

उभयोरप्यभूद् घोषो अवघ्नन्त्याः स्म शङ्खयोः । तत्राप्येकं निरभिनदेकस्मान्नाभवद्[२] ध्वनिः ॥ ८ ॥

अनुशिक्ष इमं[३] तस्या उपदेशमरिन्दम । लोकाननुचरन्नेताँल्लोकतत्वविवित्सया ॥ ९ ॥

वासो[४] बहूनां कलहो भवेद् वार्ता द्वयोरपि । एक एव चरेत् तस्मात् कुमार्या इव कङ्कणः ॥ १० ॥

मन एकत्र संयुञ्ज्याज्जितश्वासो जितासनः । वैराग्याभ्यासयोगेन ह्रियमाणमतन्द्रितः ॥ ११ ॥

यस्मिन् मनो लब्धपदं यदेतच्छनैःशनैर्मुञ्चति कर्मरेणून् ।
सत्वेन वृद्धेन रजस्तमश्च विधूय निर्वाणमुपैत्यनिन्धनम् ॥ १२ ॥

तदेवमात्मन्यवरुद्धचित्तो न वेद किञ्चिद् बहिरन्तरं वा ।
यथेषुकारो नृपतिं व्रजन्तमिषौ गतात्मा न ददर्श पार्श्वे ॥ १३ ॥

एकचार्यनिकेतः स्यादप्रमत्तो गुहाशयः । अलक्ष्यमाण आचारैर्मुनिरेकोऽल्पतोषणः ॥ १४ ॥

गृहारम्भो हि दुःखाय विफलश्चाध्रुवात्मनः । सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥ १५ ॥

एको नारायणो देवः पूर्वसृष्टं स्वमायया । संहृत्य कालकलया कल्पान्त इदमीश्वरः ॥ १६ ॥

एक एवाद्वितीयोऽभूदात्माधारोऽखिलाश्रयः । कालेनात्मानुभावेन साम्यं नीतासु शक्तिषु॥ १७ ॥

सत्वादिष्वादिपुरुषः प्रधानपुरुषेश्वरः । परावराणां परम आस्ते कैवल्यसञ्ज्ञितः । ॥ १८ ॥

केवलानुभवानन्दसन्दोहो निरुपाधिकः । कालेनात्मानुभावेन स्वमायां त्रिगुणात्मिकाम् ॥ १९ ॥

---

१. वृणानान् ❋ २. एकस्यां नाभवत् ❋ ३. अन्वशिक्षमिमम् ४. वासे ❋

संक्षोभयन् सृजत्यादौ तया सूत्रमरिन्दम । तामाहुस्त्रिगुणां व्यक्तिं सृजतीं[1] विश्वतोमुखम् ।
यस्मिन् प्रोतमिदं विश्वं येन संसरते पुमान् ॥ २० ॥
यथोर्णनाभिर्हृदयादूर्णां सन्तत्य वक्त्रतः । तया विहृत्य भूयस्तां ग्रसत्येवं महेश्वरः ॥ २१ ॥
यत्रयत्र मनो देही धारयेत् सकलं धिया । स्नेहाद् द्वेषाद् भयाद वापि याति तत्तत्सरूपताम् ॥२२॥
कीटः पेशस्करं[2] ध्यायन् कुड्यां[3] तेन प्रवेशितः । याति तत्समतां राजन् पूर्वरूपमसन्त्यजन् ॥२३॥
एवं गुरुभ्य एतेभ्य एषा मे शिक्षिता मतिः । स्वात्मोपशिक्षितां बुद्धिं शृणु मे वदतः प्रभो ॥ २४ ॥
देहो गुरुर्मम विरक्तिविवेकहेतुर्बिभ्रत् स्म सत्वनिधनं सततात्युदर्कम् ।
तत्वान्यनेन विमृशामि यथा तथापि पारक्यमित्यवसितो विचराम्यसङ्गः ॥ २५ ॥
जायात्मजार्थपशुभृत्यगृहाप्तवर्गान् पुष्णाति यः प्रियचिकीर्षया वितन्वन् ।
सोऽन्ते सुकृच्छ्रमवरुद्धमनाः स्वदेहं सृष्ट्वा स्वबीजमिव सीदति वृक्षधर्मा ॥ २६ ॥
जिह्वैकतोऽमुमपकर्षति[4] कर्हि तर्षा शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् ।
घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्तिर्बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति ॥ २७ ॥
सृष्ट्वा पुराणि विविधान्यजयाऽऽत्मशक्त्या[5] वृक्षान् सरीसृपपशून् खगदंशमत्स्यान् ।
तैस्तैरतृप्तहृदयः[6] पुरुषं विधाय ब्रह्मावबोधधिषणं मुदमाप देवः ॥ २८ ॥
लब्ध्वा सुदुर्लभमिदं बहुसम्भवान्ते मानुष्यमर्थदमनित्यमपीह धीरः ।
तूर्णं यतेत न पतेदनुमृत्यु यावन्निश्रेयसाय विषयः खलु सर्वतः स्यात् ॥ २९ ॥
एवं सञ्जातवैराग्यो विज्ञानालोक आत्मनि । विचरामि महीमेतां मुक्तसङ्गोऽनहङ्कृतिः ॥ ३० ॥
नह्येकस्माद् गुरोर्ज्ञानं सुस्थितं[7] स्यात् सुपुष्कळम् । ब्रह्मैतदद्वितीयं वै गीयते बहुधर्षिभिः ॥ ३१ ॥

**श्रीभगवानुवाच**

इत्युक्त्वा स यदुं विप्रस्तमामन्त्र्याङ्ग धीरधीः । वन्दितोऽभ्यर्चितो राज्ञा ययौ प्रीतो यथागतम् ॥ ३२ ॥
अवधूतवचः श्रुत्वा सर्वेषां नः प्रपूर्वजः[8] । सर्वसङ्गविनिर्मुक्तः समचित्तो बभूव ह ॥ ३३ ॥

**॥ इति श्रीमद्भागवते एकादशस्कन्धे नवमोऽध्यायः ॥**

---

१. सृजन्तीम् ❋ २. पेशस्कृतम् ❋ ३. कुड्यम् ❋ ४. अनुकर्षति ❋
५. अजया स्वशक्त्या ❋ ६. अतुष्टहृदयः ७. सुस्थिरम् ८. स पूर्वजः

**श्रीभगवानुवाच**

मयोदितेष्ववहितः स्वधर्मेषु मदाश्रयः । वर्णाश्रमकुलाचारमकामात्मा समाचरेत् ॥ १ ॥

अन्वीक्षेत विशुद्धात्मा देहिनां विषयात्मनाम् ।गुणेषु तत्वज्ञानेन[१] सर्वारम्भविपर्ययम् ॥ २ ॥

सुप्तस्य विषयालोको ध्यायतो वा मनोरथः । नानात्मकत्वाद् विफलस्तथाऽभेदोऽन्यधीगुणैः[२] ॥ ३ ॥

निवृत्तं कर्म सेवेत प्रवृत्तं मत्परस्त्यजेत् । जिज्ञासायां सम्प्रवृत्तो नाद्रियेत् कर्मचोदनाम् ॥ ४ ॥

यमानभीक्ष्णं सेवेत नियमान् मत्परः क्वचित् । मदभिज्ञं गुरुं शान्तमुपासीत मदात्मकम् ॥ ५ ॥

अमान्यमत्सरो दक्षो निगमे दृढसौहृदः । असत्वरोऽर्थजिज्ञासुरनसूयुरमोघवाक् ॥ ६ ॥

जायापत्यगृहक्षेत्रस्वजनद्रविणादिषु । उदासीनः समं पश्येत् सर्वेष्वर्थमिवात्मनः ॥ ७ ॥

विलक्षणः स्थूलसूक्ष्माद् देहादात्मेक्षिता[३] स्वदृक् । यथाग्निर्दारुणो दाह्याद्[४] दाहकोऽन्यः प्रकाशकः ॥

निरोधोत्पत्त्यणुबृहन्नानात्वं तत्कृतान् गुणान् । अनुप्रविष्ट आधत्ते एवं देहगुणान् परः ॥ ९ ॥

योऽसौ गुणैर्विरचितो देहोऽयं पुरुषस्य हि । संसारस्तन्निबन्धोऽयं पुंसोऽविद्यास्थितात्मनः[५] ॥ १० ॥

तस्माज्जिज्ञासया[६]ऽऽत्मानमात्मस्थं केवलं परम् । सङ्गम्य निरसेदस्य वस्तुबुद्धिं[७] यथाक्रमम् ॥ ११ ॥

आचार्योऽरणिराद्या स्यादन्तेवास्युत्तरारणिः । तत्सन्धानं प्रवचनं विद्यावह्निः सुखावहः ॥ १२ ॥

वैशारदी [८]साऽतिविशुद्धबुद्धिर्धुनोति मायां गुणसम्प्रसूतिम् ।
गुणांश्च सन्दह्य यदात्म्यमेतत् स्वयं च शाम्यत्यसमिद् यथाग्निः ॥ १३ ॥

अथैषां कर्मकर्तॄणां भोक्तॄणां सुखदुःखयोः । नानात्वमथ नित्यत्वं लोककालागमात्मनाम्॥ १४ ॥

मन्यसे सर्वभावानां संस्था ह्यौत्पत्तिकी तथा । तत्तदाकृतिभेदेन जायते भिद्यते च धीः ॥ १५ ॥

एवमप्यत्र[९] सर्वेषां देहिनां देहयोगतः । कालावयवतः सन्ति भावा जन्मादयोऽसकृत् ॥ १६ ॥

तत्रापि कर्मणां कर्तुरस्वातन्त्र्यं च लक्ष्यते । भोक्तुश्च सुखदुःखानां कोन्वर्थो विवशं भजेत्॥ १७ ॥

न देहिनां सुखं किञ्चिद् विद्यते विदुषामपि । तथा च दुःखमूढानां तथाऽहङ्कारिणां परम् ॥ १८ ॥

यदि प्राप्तिं विघातं च जानन्ति सुखदुःखयोः । तेऽप्यद्धा न विदुर्योगं मृत्युर्न प्रभवेद् यथा ॥ १९ ॥

---

१. तत्वध्यानेन ❋ २. तथाऽभेदः स्वधीगुणैः ❋ /तथाऽभेदः स धीगुणैः ❋ ३. आत्मेहिता ❋
४. दह्यात् ❋ ५. अविद्यास्थिरात्मनः ❋ ६. तस्माज्जिहासया ❋ ७. निरसेदेतद्वस्तुबुद्धिम् ❋
८. सा तु विशुद्धबुद्धिः ❋ ९. एवमुद्धव ❋

कोन्वर्थः सुखयत्येनं कामो वा मृत्युमन्तिके । आघातं नीयमानस्य वध्यस्येव पदेपदे ॥ २० ॥
श्रुतं च दृष्टवन्नङ्क्ष्येत्[1] स्पर्धासूयात्ययाप्ययैः । बह्वन्तरायैर्विहतं कृषिवच्चापि निष्फलम् ॥ २१ ॥
अन्तरायैरविहतो यदि धर्मः स्वनुष्ठितः । तेनापि निर्जितं स्थानं यथा गच्छति तच्छृणु ॥ २२ ॥
इष्ट्वेव देवता यज्ञैः स्वर्लोकं याति याज्ञिकः । भुञ्जीत देववत् तत्र भोगान् दिव्यान् निजार्जितान् ॥
स्वपुण्योपचिते तत्र[2] विमान उपगीयते । गन्धर्वैर्विहरन् मध्ये देवीनां हृद्यवेषधृक् ॥ २४ ॥
स्त्रीभिः कामगयानेन किङ्किणीजालमालिना । क्रीडन् न वेदात्मपातं सुराक्रीडेषु निर्वृतः ॥ २५ ॥
तावत् प्रमोदते स्वर्गे यावत् पुण्यं समाप्यते । क्षीणपुण्यः पतत्यर्वागनिच्छन् कालचालितः ॥ २६ ॥
यद्यधर्मरतः सङ्गादसतामजितेन्द्रियः । कामात्मा कृपणो लुब्धः स्त्रैणो भूतविहिंसकः ॥ २७ ॥
पशूनविधिनाऽऽलभ्य प्रेतभूतगणान् यजन् । नरकानवशो जन्तुर्गत्वा यात्युल्बणं तमः ॥ २८ ॥
कर्माणि दुःखोदर्काणि कुर्वन् देहेन तैः पुनः । देहमाभजते तत्र किं सुखं मर्त्यधर्मिणः ॥ २९ ॥
लोकानां लोकपालानां मद्भयं कल्पजीविनाम् । ब्रह्मणोपि भयं मत्तो द्विपरार्धपरायुषः ॥ ३० ॥
गुणाः सृजन्ति कर्माणि कालो नु सृजते गुणान् । जीवस्तु गुणसंयुक्तो भुङ्क्ते कर्मफलान्यसौ ॥
यावत् स्याद् गुणवैषम्यं तावन्नानात्वमात्मनः । नानात्वमात्मनो यावत् पारतन्त्र्यं तदैव हि॥ ३२ ॥
यावदस्यास्वतन्त्रत्वं तावदीश्वरतो भयम् । य एतत् समुपासीरंस्ते मुह्यन्ति शुचार्पिताः ॥ ३३ ॥
काल आत्माऽऽगमो लोकः स्वभावो धर्म एव च । इति मां बहुधा प्राहुर्गुणव्यतिकरेऽसति ॥ ३४ ॥

**उद्धव उवाच**

गुणेषु वर्तमानोऽपि देहजेष्वनपावृतः । गुणैर्न बध्यतेऽदेही बध्यते वा कथं विभो ॥ ३५ ॥
कथं वर्तेत विहरेत् कैर्वा ज्ञायेत लक्षणैः । किं भुञ्जीतोत विसृजेच्छयीतासीत याति वा ॥ ३६ ॥
एतदच्युत मे ब्रूहि प्रश्नं प्रश्नविदां वर । नित्यमुक्तो नित्यबद्ध एक एवेति मे मतिः ॥ ३७ ॥

**॥ इति श्रीमद्भागवते एकादशस्कन्धे दशमोऽध्यायः ॥**

---

**श्रीभगवानुवाच**

बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः । गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनम्॥ १ ॥

---

१. नश्येत् ❋ २. शुभ्रे

शोकमोहौ सुखं दुःखं देहोत्पत्तिश्च[1] मायया। स्वप्ने यथाऽऽत्मनः ख्यातिः संसृतिर्नतु वास्तवी ॥ २ ॥
विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम्। मोक्षबन्धकरी[2] आद्ये मायया मे विनिर्मिते ॥ ३ ॥
एकस्यैव ममांशस्य जीवस्यैवं महामते। बन्धोऽस्याविद्ययाऽनादिर्विद्यया च तथेतरत् ॥ ४ ॥
अथ बद्धस्य मुक्तस्य वैलक्षण्यं वदामि ते। विरुद्धधर्मिणोस्तात स्थितयोरेकधर्मिणि ॥ ५ ॥
सुपर्णावितौ सदृशौ[3] सखायौ यदृच्छया कृतनीडौ च वृक्षे।
एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान् ॥ ६ ॥
आत्मानमन्यं च स वेद विद्वानपिप्पलादो न तु पिप्पलादः।
योऽविद्ययाऽन्धः स तु नित्यबद्धो विद्यामयो यः स तु नित्यमुक्तः ॥ ७ ॥
देहस्थोऽपि न देहस्थो विद्वान् स्वप्नाद् यथोत्थितः। अदेहस्थोपि देहस्थः कुमतिः स्वप्नदृग् यथा ॥
इन्द्रियैरिन्द्रियार्थेषु गुणैरपि गुणेषु च। गृह्यमाणेष्वहङ्कुर्यान्न विद्वान् यस्त्वविक्रियः ॥ ९ ॥
दैवाधीने शरीरेऽस्मिन् गुणभाव्येन कर्मणा। वर्तमानोऽबुधस्तत्र कर्तास्मीति निबध्यते ॥ १० ॥
एवं विरक्तः शयन आसनाटनमज्जने। दर्शनस्पर्शनघ्राणभोजनश्रवणादिषु ॥ ११ ॥
न तथा बध्यते विद्वान् तत्रतत्राददन्[4] गुणान्। प्रकृतिस्थोऽप्यसंसक्तो यथा खं सविताऽनिलः॥ १२ ॥
वैशारद्येक्षयाऽसङ्गशितया च्छिन्नसंशयः। प्रतिबुद्ध इव स्वप्नान्नानात्वाद् विनिवर्तते ॥ १३ ॥
यस्य स्युर्वीतसङ्कल्पाः प्राणेन्द्रियमनोधियाम्। वृत्तयः स विनिर्मुक्तो देहस्थोऽपि हि तद्गुणैः ॥ १४ ॥
यस्यात्मा हिंस्यते हिंस्रैर्येन किञ्चिद् यदृच्छया। अर्च्यते वा क्वचित् तत्र न तु विक्रियते बुधः ॥ १५ ॥
न स्तुवीत न निन्देत कुर्वतः साध्वसाधु वा। वदतो गुणदोषाभ्यां वर्जितः समदृङ् मुनिः ॥ १६ ॥
न कुर्यान्न वदेत् किञ्चिन्न ध्यायेत् साध्वसाधु वा। आत्मारामोऽनया वृत्त्या विचरेज्जडवन्मुनिः[5] ॥
शब्दब्रह्मणि निष्णातो न निष्णायात् परे यदि। श्रमस्तत्र श्रमफलो ह्यधेनुमिव रक्षतः ॥ १८ ॥
गां दुग्धदोहामसतीं च भार्यां देहं पराधीनमसत्प्रजां च।
वित्तं त्वतीर्थीकृतमङ्ग वाचं हीनां मया रक्षति दुःखदुःखी ॥ १९ ॥
यस्यां न मे पावनमङ्ग कर्म स्थित्युद्भवत्राणनिरोधमस्य।
लीलावतारेधितकर्म वा स्याद् वन्ध्यां गिरं तां बिभृयान्न धीरः ॥ २० ॥

---

१. देहापत्तिश्च २. बन्धमोक्षकृती * ३. सयुजौ ४. आददत् * ५. जडवत् स्थितः *

एवं जिज्ञासयाऽपोह्य नानात्वभ्रममात्मनि । उपारमेत विरजं मनो मय्यर्प्य सर्वगे ॥ २१ ॥

यद्यनीशो धारयितुं मनो ब्रह्मणि निश्चलम् । मयि सर्वाणि कर्माणि निरपेक्षः समाचर ॥ २२ ॥

श्रद्धालुर्मे कथाः[1] शृण्वन् सुभद्रा लोकपावनीः । गायन्ननुस्मरन् कर्म जन्म वाऽभिनवं मुहुः[2] ॥ २३ ॥

मदर्थे धर्मकामार्थानाचरन् मदुपाश्रयः । लभते निश्चलां भक्तिं मय्युद्धव सनातने ॥ २४ ॥

सत्सङ्गलब्धया भक्त्या मयि मां य उपासते । स वै मे दर्शितं सद्भिरञ्जसा विन्दते पदम् ॥ २५ ॥

**उद्धव उवाच**

साधुत्व उत्तमश्लोक मनः कीदृग्विधं प्रभो । भक्तिस्त्वय्युपयुज्यीत कीदृशी सद्भिरादृता ॥ २६ ॥

एतन्मे पुरुषाध्यक्ष प्रपन्नाय च कथ्यताम् ॥ २७ ॥

त्वं ब्रह्म परमं व्योम पुरुषः प्रकृतेः परः । अवतीर्णोऽसि भगवान्[3] स्वेच्छोपात्तपृथग्वपुः ॥ २८ ॥

**श्रीभगवानुवाच**

कृपालुरकृतद्रोहस्तितिक्षुः सर्वदेहिनाम् । सत्यसारोऽनवद्यात्मा समः सर्वोपकारकः ॥ २९ ॥

कामैरहतधीर्दान्तो मृदुः शुचिरकिञ्चनः । अनीहो मितभुक् शान्तः स्थिरो मच्छरणो मुनिः ॥ ३० ॥

अप्रमत्तो गभीरात्मा धृतिमान् जितषड्गुणः । अमानी मानदः कल्यो मैत्रः कारुणिकः कविः ॥ ३१ ॥

आज्ञायैव गुणान् दोषान् मया दिष्टानपि स्वकान् । धर्मान् सन्त्यज्य यः सर्वान् मां भजेत् स च सत्तमः॥

ज्ञात्वा ज्ञात्वाऽथ ये वै मां यावान् यश्चास्मि यादृशः । भजन्त्यनन्यभावेन ते मे भक्ततमा मताः ॥

मल्लिङ्गमद्भक्तजनदर्शनस्पर्शनार्चनम् । परिचर्या स्तुतिप्रह्वगुणकर्मानुकीर्तनम् ॥ ३४ ॥

मत्कथाश्रवणे श्रद्धा मदनुध्यानमुद्धव । सर्वलाभोपहरणं दास्येनात्मनिवेदनम् ॥ ३५ ॥

मज्जन्मकर्मकथनं मम पर्वानुमोदनम् । गीतताण्डववादित्रगोष्ठीभिर्मद्गृहोत्सवः ॥ ३६ ॥

यात्रा बलिविधानं च सर्ववार्षिकपर्वसु । वैदिकी तान्त्रिकी दीक्षा मदीयव्रतधारणा ॥ ३७ ॥

ममार्चास्थापने श्रद्धा मम सद्मनि चोद्यमः । उद्यानोपवनाक्रीडपुरमन्दिरकर्मणि ॥ ३८ ॥

सम्मार्जनोपलेपाभ्यां सैकमण्डनवर्तनैः[4] । गृहे शिश्रूषणं मह्यं दासवद् यदमायया ॥ ३९ ॥

अमानित्वमडम्भित्वं कृतस्यापरिकीर्तनम् । अपि दीपावलोकं मे नोपयुञ्ज्यान्निवेदितम् ॥ ४० ॥

यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः । तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते ॥ ४१ ॥

सूर्योऽग्निर्ब्राह्मणा गावो वैष्णवः खं मरुज्जलम् । भूरात्मा सर्वभूतानि भद्र पूजापदानि मे ॥ ४२ ॥

---

१. मत्कथाः ❋ २. वा चिन्तयन् मुहुः ❋/वाऽभिनयन् मुहुः ३. भगवन् ४. सेकमण्डलवर्तनैः

सूर्ये तु विद्यया त्रय्या हविषाऽग्नौ यजेत माम् । आतिथ्येन तु विप्राग्र्ये गोष्ठे गा यवसादिना॥ ४३ ॥
वैष्णवे बन्धुसत्कृत्या हृदि खे ध्याननिष्ठया । वायौ मुख्यधिया तोये द्रव्यैस्तोयपुरस्कृतैः ॥ ४४ ॥
स्थण्डिले मन्त्रहृदयैर्भोगैरात्मानमात्मनि । क्षेत्रज्ञं सर्वभूतेषु समत्वेन यजेत माम् ॥ ४५ ॥
धिष्ण्येष्वेतेषु मद्रूपं[१] शङ्खचक्रगदाम्बुजैः । युक्तं चतुर्भुजं शान्तं ध्यायन्नर्चेत् समाहितः ॥ ४६ ॥
इष्टापूर्तेन मामेवं यो यजेत समाहितः । लभते मयि सद्भक्तिं मत्स्मृतिं साधुसेवया ॥ ४७ ॥
प्रायेण भक्तियोगेन साङ्ख्येन च विनोद्धव । नोपायो विद्यते सध्र्यक् प्रायणं हि सतामहम् ॥ ४८ ॥
अथैतत् परमं गुह्यं शृण्वते यदुनन्दन । सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत् सखा ॥ ४९ ॥

**॥ इति श्रीमद्भागवते एकादशस्कन्धे एकादशोऽध्यायः ॥**

---

**श्रीभगवानुवाच**

न रोधयति मां योगो न साङ्ख्यं धर्म उद्धव । न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणाः ॥ १ ॥
व्रतानि यज्ञाश्छन्दांसि तीर्थानि नियमा यमाः । यथाऽवरुन्धेन्मत्सङ्गः[२] सर्वदुःखापहो हि माम् ॥ २ ॥
मत्सङ्गेन तु दैतेया यातुधाना मृगाः खगाः । गन्धर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ॥ ३ ॥
विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः । रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन् युगेऽनघ ॥ ४ ॥
बहवो मत्पदं प्राप्ता त्वाष्ट्रकावन्तिकादयः[३] । वृषपर्वा बलिर्बाणो मयश्चाथ विभीषणः ॥ ५ ॥
सुग्रीवो हनुमान् ऋक्षो गजो गृध्रो वणिक्पथः । व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथाऽपरे ॥ ६ ॥
ते नाधीतश्रुतिगणा नोपासितमहत्तमाः । अव्रताऽतप्ततपसो मत्सङ्गान्मामुपागताः ॥ ७ ॥
केवलेन हि भावेन गोप्यो गावो नगा मृगाः । येऽन्ये मूढधियो नागाः सिद्धा मामापुरञ्जसा[४] ॥ ८ ॥
यं न योगेन साङ्ख्येन दानव्रततपोऽध्वरैः । व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद् यत्नवानपि ॥ ९ ॥

रामेण सार्धं मधुरां प्रणीते श्वाफल्किना मय्यनुरक्तचित्ताः ।
विगाढभावेन न मे वियोगतीव्राधयोऽन्यद् ददृशुः सुखाय ताः[५] ॥ १० ॥
यासां क्षपाः प्रेष्ठतमेन नीता मयैव वृन्दावनगोचरेण ।
क्षणार्धवत् ताः पुनरङ्ग तासां हीना मया कल्पसमा बभूवुः ॥ ११ ॥

---

१. धिष्ण्येषु स्थितमद्रूपम् ❋ २. यथाऽवरुन्धे मत्सङ्गः ❋ ३. त्वाष्ट्रकावन्त्यकादयः ❋
४. मामीयुरञ्जसा ❋ ५. ददृशुः सुखाय । ❋

ता नाविदन् मय्यनुषङ्गबद्धधियस्तदाऽऽत्मानमदस्तथेदम् ।
यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नामरूपे ॥ १२ ॥
मत्कामा रमणं जारमस्वरूपविदोऽबलाः । ब्रह्म मां परमं प्रापुः शतशोऽथ सहस्रशः ॥ १३ ॥
तस्मात् त्वमुद्धवोत्सृज्य चोदितां प्रतिचोदनाम्[1] । प्रवृत्तं च निवृत्तं च श्रोतव्यं श्रुतमेव च ॥ १४ ॥
मामेकमेव शरणमात्मानं सर्वदेहिनाम् । याहि सर्वात्मभावेन यस्मिन्नस्त्यकुतोभयम् ॥ १५ ॥

**उद्धव उवाच**

संशयः शृण्वतो वाचं तव योगेश्वरेश्वर । न निवर्तत आत्मस्थो येन भ्राम्यति मे मनः ॥ १६ ॥

**श्रीभगवानुवाच**

य एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः ।
मनोमयं सूक्ष्ममुपैति रूपं मात्रा स्वरो वर्ण इति स्थविष्ठम् ॥ १७ ॥
यथाऽनलः खेऽनिलबन्धुरूष्मा बलेन दारुण्यधिमथ्यमानः[2] ।
अणुः प्रजातो हविषा समिद्ध्यते तथैव मे व्यक्तिरियं हि वाणी ॥ १८ ॥
एवं गतिः कर्म रतिर्विसर्गो घ्राणो रसो दृक् स्पर्शः श्रुतिश्च ।
सङ्कल्पविज्ञानमथाभिमानः सूत्रं रजः सत्वतमो विकारः ॥ १९ ॥
अयं हि जीवस्त्रिवृदब्जयोनिरव्यक्त एको जगतामथाऽद्यः ।
विश्लिष्टशक्तिर्बहुधेव भाति बीजानि योनिं प्रतिपद्य यद्वत् ॥ २० ॥
यस्मिन्निदं प्रोतमशेषमोतं पटे यथा तन्तुवितानसंस्था ।
य एष संसारतरुः पुराणः कर्मात्मकः पुष्पफले प्रसूते ॥ २१ ॥
द्वे अस्य बीजे शतमूलस्त्रिनाळः पञ्चस्कन्धः पञ्चरसप्रसूतिः ।
दशैकशाखो द्विसुपर्णनीडस्त्रिवल्कलो द्विफलः खं प्रविष्टः ॥ २२ ॥
अदन्ति चैकं फलमस्य गृध्रा ग्रामेचरा एकमरण्यवासाः ।
हंसा य एवं बहुरूपमिष्टं मायामयं वेद स वेद वेदम् ॥ २३ ॥
एवं गुरूपासनयैकभक्त्या विद्याकुठारेण शितेन धीरः ।
विवृश्च्य जीवाशयमप्रमत्तः सम्पद्य चात्मानमथ त्यजास्त्रम् ॥ २४ ॥

**॥ इति श्रीमद्भागवते एकादशस्कन्धे द्वादशोऽध्यायः ॥**

---

१. चोदनां प्रतिचोदनाम् ❋ २. दारुण्यपि मथ्यमानः

श्रीभगवानुवाच

सत्वं रजस्तम इति गुणा बुद्धेर्न चात्मनः। सत्वेनान्यतमौ हन्यात् सत्वं सत्वेन चैव हि ॥ १ ॥

सत्वाद् धर्मो भवेच्छुद्धात् पुंसो मद्भक्तिलक्षणः। सात्विकोपात्तया ज्ञानं ततो धर्मः[१] प्रवर्तते ॥ २ ॥

धर्मो रजस्तमो हन्यात् सत्ववृत्तिरनुत्तमा। आशु नश्यति तन्मूलो ह्यधर्म उभये हते ॥ ३ ॥

आगमो यजनं देशः कालः कर्म च जन्म च। ध्यानं मन्त्रोऽथ संस्कारो नवैते गुणहेतवः ॥ ४ ॥

तत्तत् सात्विकमेवैषां यद्यद् वृद्धाः प्रचक्षते। निन्दन्ति तामसं तत्तद् राजसं तदुपेक्षितम् ॥ ५ ॥

सात्विकान्येव सेवेत पुमान् सत्वविवृद्धये। ततो धर्मस्ततो ज्ञानं वाचः स्मृतिरपोहनम् ॥ ६ ॥

वेणुसङ्घर्षजो वह्निर्दग्ध्वा शाम्यति तद्वनम्। एवं गुणव्यत्ययजो वेदः शाम्यति तद् यथा ॥ ७ ॥

उद्धव उवाच

विदन्ति मर्त्याः प्रायेण विषयान् पदमापदाम्। अथापि भुञ्जते कृष्ण तत् कथं श्वखराजवत् ॥ ८ ॥

श्रीभगवानुवाच

अहमित्यन्यथाबुद्धिः प्रमत्तस्य यदा हृदि। उत्सर्पति रजो घोरं ततो वैकारिकं मनः ॥ ९ ॥

रजोयुक्तस्य मनसः सङ्कल्पः सविकल्पकः। ततः कामो गुणध्यानाद् दुःसहः स्याद् हि दुर्मतेः ॥

करोति कामवशगः कर्माण्यविजितेन्द्रियः। दुःखोदर्काणि संपश्यन् रजोवेगविमोहितः ॥ ११ ॥

रजस्तमोभ्यां यदपि विद्वान् विक्षिप्तधीः पुनः। अतन्द्रितो मनो युञ्जन् दोषदृष्टिर्न सज्जते ॥ १२ ॥

अप्रमत्तो हि युञ्जीत मनो मय्यर्पयन् शनैः। अनिर्विण्णो यथाकालं जितश्वासो जितासनः॥ १३ ॥

एतावान् योग आदिष्टो मच्छिष्यैः सनकादिभिः। सर्वतो मन आकृष्य मय्यद्धाऽऽवेश्यते यथा ॥

उद्धव उवाच

यदा त्वं सनकादिभ्यो येन रूपेण केशव। योगमादिष्टवानेतद् रूपमिच्छामि वेदितुम् ॥ १५ ॥

श्रीभगवानुवाच

पुत्रा हिरण्यगर्भस्य मानसाः सनकादयः। पप्रच्छुः पितरं सूक्ष्मां योगस्यैकान्तिकीं गतिम् ॥ १६ ॥

सनकादय ऊचुः

गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रभो। कथमन्योन्यसन्त्यागो मुमुक्षोः संतितीर्षोः[२] ॥ १७ ॥

---

१. धर्मात् ❋ २. सन्तितीर्षतः/मुमुक्षोरतितीर्षोः ❋/मुमुक्षोरतितितीर्षोः

## श्रीभगवानुवाच

एवं पृष्टो महान् देवः स्वयम्भूर्भूतभावनः । ध्यायमानः प्रश्नबीजं नाभ्यपद्यत कर्मधीः ॥ १८ ॥

स मामचिन्तयद् देवः प्रश्नपारविनिश्चयम् । तस्याहं हंसरूपेण समीपमगमं तदा ॥ १९ ॥

दृष्ट्वा मां त उपाव्रज्य कृत्वा पादाभिवन्दनम् । ब्रह्माणमग्रतः कृत्वा पप्रच्छुः को भवानिति ॥ २० ॥

इत्यहं मुनिभिः पृष्टस्तत्वजिज्ञासुभिस्तदा । यदवोचमहं तेभ्यस्तदुद्धव निबोध मे ॥ २१ ॥

वस्तुनो यद्यनानात्व[1] आत्मनः प्रश्न ईदृशः । कथं घटेत वो विप्रा वक्तुं वाऽनेक आश्रयः ॥ २२ ॥

पञ्चात्मकेषु भूतेषु समानेषु च वस्तुतः । को भवानिति वः प्रश्नो वाचारम्भो[2] निरर्थकः ॥ २३ ॥

मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः । अहमेव न मत्तोऽन्यदिति बुद्ध्यध्वमञ्जसा ॥ २४ ॥

गुणेष्वाविशते चेतो गुणाश्चेतसि वः प्रजाः । जीवस्य देह उभयं गुणाश्चेतो मदात्मनः ॥ २५ ॥

गुणेषु चाऽविशेच्चित्तमभीक्ष्णं गुणसेवया । गुणाश्च चित्तप्रभवा मद्रूप उभयं त्यजेत् ॥ २६ ॥

जाग्रत् स्वप्नः सुषुप्तिश्च गुणतो बुद्धिवृत्तयः । तासां विलक्षणो जीवः साक्षित्वेन विनिश्चितः॥ २७ ॥

यर्हि संसृतिबन्धोऽयमात्मनो गुणवृत्तितः । मयि तुर्ये स्थितो जह्यात् त्यागस्तु गुणचेतसाम्॥ २८ ॥

अहङ्कारकृतं बन्धमात्मनोऽर्थविपर्ययम् । विद्वान् निर्विद्य संसारचिन्तां तुर्ये स्थितस्त्यजेत् ॥ २९ ॥

यावन्नानार्थधीः पुंसो न निवर्तेत युक्तिभिः । जागर्त्यपि स्वपन्नज्ञः स्वप्ने जागरणं यथा ॥ ३० ॥

असत्त्वादात्मनोऽन्येषां भावानां किंकृताऽभिदा । गतयो हेतवश्चास्य मृषा स्वप्नदृशो यथा ॥ ३१ ॥

यो जागरे बहुविधान् क्षणधर्मिणोऽर्थान् भुङ्क्ते समस्तकरणो हृदि तत्सदृक्षान् ।
स्वप्नेऽथ सुप्त उपसंहरते स एकः स्मृत्यन्वयात् त्रिगुणवृत्तिदृगिन्द्रियेशः ॥ ३२ ॥

एवं विमृश्य गुणतो मनसस्त्र्यवस्था मन्मायया मयि कृता इति निश्चितार्थाः ।
सञ्छिद्य हार्दमनुमानसदुक्तितीक्ष्णज्ञानासिना भजत माऽखिलसंशयाधिम् ॥ ३३ ॥

वीक्षेत विभ्रममिमं मनसो विलासं दृष्टं विनष्टमतिलोलमलातचक्रम् ।
विज्ञानमेकमुरुधेव विभाति माया स्वप्ने यथा त्रिगुणसर्गकृतो विकल्पः ॥ ३४ ॥

दृष्टिं ततः प्रतिनिवर्त्य निवृत्ततर्षस्तूष्णीं भवेन्निजसुखानुभवो निरीहः ।
सन्दृश्यते क्व च यदीदमवस्तुबुद्ध्या त्यक्तं भ्रमाय न भवेत् स्मृतिरानिपातात् ॥ ३५ ॥

---

१. यद्यनानात्वम्  २. वाचारब्धः ❋

देहं च नश्वरमवस्थितमुज्झितं वा सिद्धो न पश्यति यतोऽध्यगमत् स्वरूपम् ।
दैवादुपेतमथ दैववशादपेतं वासो यथा परिवृतं[१] मदिरामदान्धः ॥ ३६ ॥
देहोऽपि दैववशगः खलु कर्म यावत् स्वारम्भकं प्रति समीक्षत एव सासुः ।
तं सप्रपञ्चमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवत् सः ॥ ३७ ॥
मयैतदुक्तं वो विप्रा गुह्यं यत् साङ्ख्ययोगयोः । जानीत माऽऽगतं यज्ञं युष्मद्धर्मविवक्षया ॥ ३८ ॥
अहं योगस्य साङ्ख्यस्य सत्यस्यर्तस्य तेजसः । परायणं द्विजश्रेष्ठाः श्रियः कीर्तेर्दमस्य च ॥ ३९ ॥
मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम् । सुहृदं प्रियमात्मानं साम्यासङ्गादयो गुणाः ॥ ४० ॥
इति ते च्छिन्नसन्देहा मुनयः सनकादयः । सभाजयित्वा परया भक्त्याऽगृणत संस्तवैः ॥ ४१ ॥
तैरहं पूजितः सम्यक् संस्तुतः परमर्षिभिः । प्रत्येयाय[२] स्वकं धाम पश्यतः परमेष्ठिनः ॥ ४२ ॥

**॥ इति श्रीमद्भागवते एकादशस्कन्धे त्रयोदशोऽध्यायः ॥**

---

**उद्धव उवाच**

वदन्ति कृष्ण श्रेयांसि बहूनि ब्रह्मवादिनः । तेषां विकल्पः प्राधान्यमुताहो एकमुख्यता ॥ १ ॥
भवतोदाहृतः स्वामिन् भक्तियोगोऽनपेक्षितः । निरस्य सर्वतः सङ्गं येन त्वय्याविशेन्मनः ॥ २ ॥

**श्रीभगवानुवाच**

कालेन नष्टा प्रलये वाणीयं वेदसञ्ज्ञिता । मयाऽऽदौ ब्रह्मणे प्रोक्ता धर्मो यस्यां[३] मदात्मकः ॥ ३ ॥
तेन प्रोक्ता च पुत्राय मनवे पूर्वजाय सा । ततो भृग्वादयोऽगृह्णन् सप्त ब्रह्ममहर्षयः ॥ ४ ॥
तेभ्यो मुनिभ्यस्तत्पुत्रा देवदानवगुह्यकाः । मनुष्याः सिद्धगन्धर्वाः सविद्याधरचारणाः ॥ ५ ॥
किन्देवाः किन्नरा नागा रक्षःकिम्पुरुषादयः । बह्व्यस्तेषां प्रकृतयो रजःसत्वतमोभुवः ॥ ६ ॥
याभिर्भूतानि भिद्यन्ते भूतानां मतयस्तथा । यथाप्रकृति सर्वेषां चित्रा वाचः स्रवन्ति हि ॥ ७ ॥
एवं प्रकृतिवैचित्र्याद् भिद्यन्ते मतयो नृणाम् । पारम्पर्येण केषाञ्चित् पाषण्डमतयोऽपरे[४] ॥ ८ ॥
मन्मायामोहितधियः पुरुषाः पुरुषर्षभ । श्रेयो वदन्त्यनेकान्तं यथाकर्म यथारुचि ॥ ९ ॥

---

१. परिकृतम् ❋ २. प्रतीयाय ३. यश्च ४. पाषण्डमतयोऽपि हि ❋

धर्ममेके यशश्चान्ये कामं सत्यं दमं शमम् । अन्ये वदन्ति चार्थं वा ऐश्वर्यं त्यागभोजनम्[१] ।

केचिद् यज्ञं तपो दानं व्रतानि नियमान् यमान् ॥ १० ॥

आद्यन्तवन्त एवैषां लोकाः कर्मविनिर्मिताः । दुःखोदर्कास्तमोनिष्ठाः क्षुद्रानन्दाः शुचार्पिताः ॥ ११ ॥

मय्यर्पितात्मनः सत्ये निरपेक्षस्य सर्वतः । मदात्मकं सुखं यत् तत् कुतः स्याद् विषयात्मनाम् ॥ १२ ॥

अकिञ्चनस्य दान्तस्य शान्तस्य समचेतसः । मया सन्तुष्टमनसः सर्वाः सुखमया दिशः[२] ॥ १३ ॥

न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यम् ।

न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मद् विनाऽन्यत् ॥ १४ ॥

न तथा मे प्रियतम आत्मयोनिर्न शङ्करः । न च सङ्कर्षणो न श्रीर्नैवात्मा च यथा भवान् ॥ १५ ॥

निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम् । अनुव्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभिः ॥ १६ ॥

निष्किञ्चना मय्यनुरक्तचेतसः शान्ता महान्तोऽखिलजीववत्सलाः ।

कामैरनालब्धधियोऽजुषो ये[३] ते नैरपेक्ष्यं हि विदुः सुखं मम ॥ १७ ॥

बाध्यमानोऽपि मद्भक्तो विषयैरजितेन्द्रियः । प्रशस्तया हि मद्भक्त्या विषयैर्नाभिभूयते ॥ १८ ॥

यथाग्निः सुसमिद्धार्चिः करोत्येधांसि भस्मसात् । तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः ॥ १९ ॥

न साधयति मां योगो न साङ्ख्यं धर्म उद्धव । न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता ॥ २० ॥

भक्त्याऽहमेकया ग्राह्यः श्रद्धयाऽऽत्मा प्रियः सताम् । भक्तिः पुनाति मन्निष्ठा सकामानपि सम्भवात् ॥

धर्मः सत्यदयोपेतो विद्या वा तपसाऽन्विता । मद्भक्त्यपेतमात्मानं न सम्यक् प्रपुनाति हि ॥ २२ ॥

कथं विना रोमहर्षं द्रवता चेतसा विना । विनाऽऽनन्दाश्रुकलया तुष्येद् भक्त्याऽखिलेश्वरः[४] ॥

वाग् गद्गदा द्रवते यस्य चित्तं रुदत्यभीक्ष्णं हसति क्वचिच्च ।

विलज्ज उद्गायति नृत्यते च मद्भक्तियुक्तो भुवनं पुनाति ॥ २४ ॥

यथाऽग्निना हेम मलं जहाति ध्मातं पुनः स्वं भजते च रूपम् ।

आत्मा च कर्मानुशयं विधूय मद्भक्तियोगेन भजत्यथो माम् ॥ २५ ॥

यथायथाऽऽत्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः[५] ।

तथातथा पश्यति सूक्ष्मतत्वं चक्षुर्यथैवाञ्जनसम्प्रयुक्तम् ॥ २६ ॥

---

१. त्यागभोजने ❋ २. सर्वे सुखमया देशाः सर्वाः सुखमया दिशः ❋ ३. अजुषश्च

४. तुष्येद् भक्त्या विनेश्वरः ❋/शुद्ध्येद् भक्त्या विनाऽऽशयः ५. मत्पुण्यगाथाश्रवणाभिधानैः

विषयान् ध्यायतश्चित्तं विषयेषु विषज्जते । मामनुस्मरतश्चित्तं मय्येव प्रविलीयते ॥ २७ ॥
तस्मादसदभिध्यानं यथा स्वप्नमनोरथम् । हित्वा मयि समाधत्स्व मनो मद्भावभावितम् ॥ २८ ॥
स्त्रीसङ्गसङ्गिनां सङ्गं त्यक्त्वा दूरत आत्मवान् । क्षेमे विविक्त आसीनश्चिन्तयेन्मामतन्द्रितः ॥ २९ ॥
न तथाऽस्य भवेत् क्लेशो बन्धश्चान्यप्रसङ्गतः । योषित्सङ्गाद् यथा पुंसो यथा तत्सङ्गिसङ्गतः ॥ ३० ॥

**उद्धव उवाच**

यथा त्वामरविन्दाक्ष यादृशं वा यदात्मकम् । ध्यायेन्मुमुक्षुरेतन्मे ध्यानं त्वं वक्तुमर्हसि ॥ ३१ ॥

**श्रीभगवानुवाच**

सम आसन आसीनः समकायो यथासुखम् । हस्तावुत्सङ्ग आधाय स्वनासाग्रकृतेक्षणः ॥ ३२ ॥
प्राणस्य शोधयेन्मार्गं पूरकुम्भकरेचकैः । विपर्ययेणापि शनैरभ्यसेन्निर्जितेन्द्रियः ॥ ३३ ॥
हृद्यविच्छिन्नमोङ्कारं घण्टानादं बिसोर्णवत् । प्राणेनोदीर्य तत्राथ पुनः संवेशयेत् स्वरम् ॥ ३४ ॥
एवं प्रणवसंयुक्तं प्राणसंयममभ्यसेत् । दशकृत्वस्त्रिषवणं मासादर्वाग् जितोऽनिलः ॥ ३५ ॥
हृत्पुण्डरीकमन्तःस्थमूर्ध्वनाळमधोमुखम् । ध्यात्वोर्ध्वमुखमुन्निद्रमष्टपत्रं सकर्णिकम् ॥ ३६ ॥
कर्णिकायां न्यसेत् सूर्यसोमाग्नीनुत्तरोत्तरम् । वह्निमध्ये स्मरेद् रूपं ममैतद् ध्यानमङ्गलम् ॥ ३७ ॥
समं प्रशान्तं सुमुखं दीर्घचारुचतुर्भुजम् । सुचारुसुन्दरग्रीवं सुकपोलं शुचिस्मितम् ॥ ३८ ॥
समानकर्णविन्यस्तस्फुरन्मकरकुण्डलम् । हेमाम्बरं घनश्यामं श्रीवत्सं श्रीनिकेतनम् ॥ ३९ ॥
शङ्खचक्रगदापद्मवनमालाविभूषितम् । नूपुरैर्विलसत्पादं कौस्तुभप्रभया युतम् ॥ ४० ॥
द्युमत्किरीटकटककटिसूत्राङ्गदैर्युतम् । सर्वाङ्गसुन्दरं हृद्यं प्रसादसुमुखेक्षणम् ।
सुकुमारमभिध्यायेत् सर्वाङ्गेषु मनो दधत् ॥ ४१ ॥
इन्द्रियाणीन्द्रियार्थेभ्यो मनसाऽऽकृष्य तन्मनाः । बुद्ध्या सारथिना धीरः प्रणयेन्मयि सर्वतः ॥ ४२ ॥
तत् सर्वव्यापकं चित्तमाकृष्यैकत्र धारयेत् । नान्यानि चिन्तयेद् भूयः सुस्मितं भावयेन्मुखम् ॥४३॥
तत्र लब्धपदं चित्तमाकृष्य व्योम्नि धारयेत् । तच्च त्यक्त्वा मदारोहो न किञ्चिदपि चिन्तयेत् ॥ ४४ ॥
एवं समाहितमतिर्मामेवात्मानमात्मनि । विचष्टे मयि सर्वात्मन् ज्योतिर्ज्योतिषि संयुतम् ॥ ४५ ॥
ध्यानेनेत्थं सुतीव्रेण युञ्जतो योगिनो मनः । संयास्यत्याशु निर्वाणं द्रव्यज्ञानक्रियाभ्रमम्[१] ॥ ४६ ॥

**॥ इति श्रीमद्भागवते एकादशस्कन्धे चतुर्दशोऽध्यायः ॥**

---

१. भ्रमः

**श्रीभगवानुवाच**

जितेन्द्रियस्य युक्तस्य जितश्वासस्य योगिनः । मयि धारयतश्चेत उपतिष्ठन्ति सिद्धयः ॥ १ ॥

**उद्धव उवाच**

कया धारणया का स्वित् कथं वा सिद्धिरच्युत । कति वा सिद्धयो ब्रूहि योगिनां सिद्धिदो भवान् ॥ २ ॥

**श्रीभगवानुवाच**

सिद्धयोऽष्टादश प्रोक्ता धारणायोगपारगैः । तासामष्टौ मत्प्रधाना ता एव[१] गुणहेतवः ॥ ३ ॥

अणिमा महिमा मूर्तेर्लघिमा प्राप्तिरिन्द्रियैः । प्राकाश्यं श्रुतदृष्टेषु शक्तिप्रेरणमीशिता ॥ ४ ॥

गुणेष्वसङ्गो वशिता यत्कामस्तदवाप्स्यति । एता मे सिद्धयः सौम्य अष्टावौत्पत्तिका मताः ॥ ५ ॥

अनूर्मिमत्त्वं देहेऽस्मिन् दूरश्रवणदर्शनम् । मनोजवः कामरूपं परकायप्रवेशनम् ॥ ६ ॥

स्वच्छन्दमृत्युर्देवानां सहक्रीडानुदर्शनम्[२] । यथासङ्कल्पसंसिद्धिराज्ञाऽप्रतिहतागतिः ॥ ७ ॥

त्रिकालज्ञत्वमद्वन्द्वं परचित्ताद्यभिज्ञता । अग्न्यर्काम्बुविषादीनां प्रतिस्तम्भोऽपराजयः ॥ ८ ॥

एताश्चाष्टादश प्रोक्ता योगधारणसिद्धयः । यया धारणयाऽद्धा[३] स्याद् यथा वा स्यान्निबोध मे ॥ ९ ॥

भूतसूक्ष्मात्मनि मयि तन्मात्रं धारयन् मनः । अणिमानमवाप्नोति तन्मात्रोपासको मम ॥ १० ॥

महत्यात्मन् मयि परे यथासंस्थं मनो दधत् । महिमानमवाप्नोति भूतानां च पृथक्पृथक् ॥ ११ ॥

परमाणुमये चित्तं भूतानां मयि रञ्जयन् । कालसूक्ष्मात्मके योगी लघिमानमवाप्नुयात् ॥ १२ ॥

धारयन् मय्यहन्तत्वे मनो वैकारिकेऽखिलम् । सर्वेन्द्रियाणामात्मत्वं प्राप्तिं प्राप्नोति मन्मनाः ॥ १३ ॥

महत्यात्मनि यः सूत्रे धारयन्[४] मयि मानसम् । प्राकाश्यं पारमेष्ठ्यं मे विन्दतेऽव्यक्तजन्मनः ॥ १४ ॥

विष्णौ चाधीश्वरे चित्तं धारयन् कालविग्रहे । स ईशित्वमवाप्नोति क्षेत्रक्षेत्रज्ञचोदनम् ॥ १५ ॥

नारायणे तुरीयाख्ये भगवच्छब्दशब्दिते । मनो मय्यादधद्योगी मद्धर्मो वशितामियात् ॥ १६ ॥

निर्गुणे ब्रह्मणि मयि धारयन् विशदं मनः । परमानन्दमाप्नोति यत्र कामोऽवसीयते ॥ १७ ॥

श्वेतद्वीपपतौ चित्तं शुद्धे धर्ममये मयि । धारयन् श्वेततां याति षडूर्मिरहितोऽमरः ॥ १८ ॥

मय्याकाशात्मनि प्राणे मनसा घोषमुद्वहन् । तत्रोपलब्धा भूतानां हंसो वाचः शृणोत्यसौ ॥ १९ ॥

चक्षुस्त्वष्टरि संयोज्य त्वष्टारमपि चक्षुषि । मां तत्र मनसा ध्यायन् विश्वं पश्यति सूक्ष्मदृक् ॥ २० ॥

मनो मनसि संयोज्य देहं तदनु वायुना । मद्धारणानुभावेन तत्रात्मा यत्र वै मनः ॥ २१ ॥

---

१. अष्टैव ❋ २. सहक्रीडासु दर्शनम् ❋ ३. धारणया या ४. धारयेत् ❋

यदा मन उपादाय यद्यद् रूपं बुभूषति । तत्तद् भजेन्मनोरूपं मद्योगबलमाश्रितः ॥ २२ ॥
परकायं विशन् सिद्ध आत्मानं तत्र भावयेत् । पिण्डं हित्वा विशेत् प्राणो वायुभूतः षडङ्घ्रिवत् ॥ २३ ॥
पार्ष्ण्याऽऽपीड्य गुदं प्राणं हृदुरःकण्ठमूर्धसु । आरोप्य ब्रह्मरन्ध्रेण ब्रह्म नीत्वोत्सृजेत् तनुम् ॥ २४ ॥
विहरिष्यन् सुराक्रीडे मत्स्थं सत्वं विभावयेत् । विमानेनोपतिष्ठन्ति सत्ववृत्तिं सुरस्त्रियः ॥ २५ ॥
यथा सङ्कल्पयेद् बुद्ध्या यथा वा मत्परः पुमान् । मयि सत्ये मनो युञ्जन् तथा तत् समवाप्नुते[1] ॥ २६ ॥
यो वै मद्भावमापन्न ईशितुर्वशितुः पुमान् । न कुतश्चिन हन्येत तस्य चाज्ञा यथा मम ॥ २७ ॥
मद्भक्त्या शुद्धसत्वस्य[2] योगिनो धारणाविदः । तस्य त्रैकालिकी बुद्धिर्जन्ममृत्यूपबृंहिता ॥ २८ ॥
अग्न्यादिभिर्न हन्येत मुनेर्योगमयं वपुः । मद्योगश्रान्तचित्तस्य यादसामुदकैर्यथा ॥ २९ ॥
मद्विभूतीरभिध्यायन् श्रीवत्सास्त्रविभूषिताः । ध्वजातपत्रव्यजनैः स भवेदपराजितः ॥ ३० ॥
उपासकस्य मामेवं योगधारणया पुनः । सिद्धयः पूर्वकथिता उपतिष्ठन्त्यशेषतः ॥ ३१ ॥
जितेन्द्रियस्य दान्तस्य[3] जितश्वासात्मनो मुनेः । मद्धारणां धारयतः का नु सिद्धिः सुदुर्लभा ॥ ३२ ॥
अन्तरायान् वदन्त्येतान् युञ्जतो योगमुत्तमम् । मया सम्पद्यमानस्य कालक्षेपणहेतवः ॥ ३३ ॥
जन्मौषधितपोमन्त्रैर्यावतीरिह सिद्धयः । योगेनाप्नोति ताः सर्वा यैर्यैर्योगगतिं व्रजेत् ॥ ३४ ॥
सर्वासामपि सिद्धीनां हेतुः पतिरहं प्रभुः । अहं योगस्य साङ्ख्यस्य धर्मस्य ब्रह्मवादिनाम् ॥ ३५ ॥
अहमात्माऽन्तरो बाह्योऽनावृतः सर्वदेहिनाम् । यथा भूतानि भूतेषु बहिरन्तस्त्वहं तथा ॥ ३६ ॥

**॥ इति श्रीमद्भागवते एकादशस्कन्धे पञ्चदशोऽध्यायः ॥**

---

### उद्धव उवाच

त्वं ब्रह्म परमं साक्षादनाद्यन्तमपावृतम् । सर्वेषामपि भावानां प्राणः स्थित्यप्ययोद्भवः ॥ १ ॥
उच्चावचेषु भूतेषु दुर्ज्ञेयमकृतात्मभिः । उपासते त्वां भगवन् याथातथ्येन ब्राह्मणाः ॥ २ ॥
येषु येषु च भावेषु यथा त्वां परमर्षयः । उपासीनाः प्रपद्यन्ते संसिद्धिं तद् वदस्व मे ॥ ३ ॥
गूढश्चरसि भूतेषु भूतात्मा भूतभावनः । न त्वां पश्यन्ति भूतानि पश्यन्तं मोहितानि ते ॥ ४ ॥

याः काश्च भूमौ दिवि वै रसायां विभूतयो दिक्षु महाविभूतेः ।
ता मह्यमाख्याह्यनुभावितास्ते नमामि ते तीर्थपदाङ्घ्रिपद्मम् ॥ ५ ॥

---

१. समुपाश्नुते २. सत्वशुद्धस्य ❋ ३. शान्तस्य ❋

**श्रीभगवानुवाच**

एवमेतदहं पृष्टः प्रश्नं प्रश्नविदां वर। युयुत्सुना विशसने सपत्नैरर्जुनेन वै ॥ ६ ॥

ज्ञात्वा ज्ञातिवधं गर्ह्यमस्वर्ग्यं[1] राज्यहेतुकम्। ततो निवृत्तो हन्ताऽहं हतोऽयमिति लौकिकः॥ ७ ॥

स तदा पुरुषव्याघ्रो युक्त्या मे प्रतिबोधितः। अभ्यभाषत मामेवं यथा त्वं रणमूर्धनि ॥ ८ ॥

अहमात्मोद्धवामीषां भूतानां सुहृदीश्वरः। अहं सर्वाणि भूतानि तेषां स्थित्युद्भवाप्ययः ॥ ९ ॥

अहं गतिर्गतिमतां कालः कलयतामहम्। गुणानामप्यहं सौम्यं गुणिन्यौत्पत्तिको गुणः ॥ १० ॥

गुणिनामप्यहं सूत्रं महतां च महानहम्। सूक्ष्माणामप्यहं जीवो दुर्जयानामहं मनः ॥ ११ ॥

हिरण्यगर्भो देवानां मन्त्राणां प्रणवस्त्रिवृत्। अक्षराणामकारोऽस्मि पदानि च्छन्दसामहम्॥ १२ ॥

इन्द्रोऽहं सर्वदेवानां वसूनामस्मि हव्यवाट्। आदित्यानामहं विष्णू रुद्राणां नीललोहितः ॥ १३ ॥

ब्रह्मर्षीणां भृगुरहं राजर्षीणामहं मनुः। देवर्षीणां नारदोऽहं हविर्धान्यस्मि धेनुषु ॥ १४ ॥

सिद्धेश्वराणां कपिलः सुपर्णोऽहं पतत्रिणाम्। प्रजापतीनां दक्षोऽहं पितॄणामहमर्यमा ॥ १५ ॥

विद्ध्युद्धव त्वं दैत्यानां प्रह्लादमसुरर्षभम्[2]। सोमं नक्षत्रौषधीनां धनेशं यक्षरक्षसाम् ॥ १६ ॥

ऐरावतं गजेन्द्राणां यादसां वरुणं प्रभुम्। तपतां द्युमतां सूर्यं मनुष्याणां च भूपतिम् ॥ १७ ॥

उच्चैःश्रवास्तुरङ्गाणां धातूनामस्मि काञ्चनम्। यमः संयमतां चाहं सर्पाणामस्मि वासुकिः ॥ १८ ॥

नागेन्द्राणामनन्तोऽहं मृगेन्द्रः शृङ्गिदंष्ट्रिणाम्। आश्रमाणामहं तुर्यो वर्णानां प्रथमोऽनघ ॥ १९ ॥

तीर्थानां स्रोतसां गङ्गा समुद्रः सरसामहम्। आयुधानां धनुरहं त्रिपुरघ्नो धनुष्मताम् ॥ २० ॥

गिरीणामस्म्यहं मेरुर्गहनानां हिमालयः। वनस्पतीनामश्वत्थ ओषधीनामहं यवाः ॥ २१ ॥

पुरोधसां वसिष्ठोऽहं ब्रह्मिष्ठानां बृहस्पतिः। स्कन्दोऽहं सर्वसेनान्यामग्रण्यां भगवानजः ॥ २२ ॥

यज्ञानां ब्रह्मयज्ञोऽहं व्रतानामविहिंसनम्। वाय्वग्न्यर्काम्बुवागात्मा शुचीनामप्यहं शुचिः ॥ २३ ॥

योगानामात्मसंरोधो मन्त्रोऽस्मि विजिगीषताम्।
आन्वीक्षिकी कौशलानां विकल्पः ख्यातिवादिनाम् ॥ २४ ॥

स्त्रीणां तु शतरूपाऽहं पुंसां स्वायम्भुवो मनुः। नारायणो मुनीनां च कुमारो ब्रह्मचारिणाम्॥ २५ ॥

धर्माणामस्मि सन्त्यागः[3] क्षेमाणामबहिर्मतिः। गुह्यानां सततं मौनं मिथुनानां पुमानहम् ॥ २६ ॥

---

१. गर्ह्यमधर्म्यम्  २. मां विद्ध्युद्धव दैत्यानां प्रह्लादमसुरेश्वरम् ❋  ३. सन्न्यासः ❋

संवत्सरोऽस्म्यनिमिषामृतूनां मधुमाधवौ । मासानां मार्गशीर्षोऽहं नक्षत्राणां तथाऽभिजित् ।। २७ ।।
अहं युगानां च कृतं धीराणां देवलोऽसितः । द्वैपायनोऽस्मि व्यासानां कवीनां काव्य आत्मवान् ।।
वासुदेवो भगवतां त्वं तु भागवतेष्वहम् । किम्पुरुषाणां च हनुमान् विद्याध्राणां सुदर्शनः ।। २९ ।।
रत्नानां पद्मरागोऽस्मि पद्मकोशस्तु पेशसाम् । कुशोऽस्मि दर्भजातीनां गव्यमाज्यं[1] हविष्ष्वहम् ।।
व्यवसायिनामहं लक्ष्मीः कितवानां च्छलग्रहः । तितिक्षाऽस्मि तितिक्षूणां सत्वं सत्ववतामहम् ।। ३१ ।।
ओजः सहोबलवतां कर्माहं विद्धि सात्वताम् । सात्वतां नवमूर्तीनामादिमूर्तिरहं पुरा ।। ३२ ।।
विश्वावसुः पूर्वचित्तिर्गन्धर्वाप्सरसामहम् । भूधराणामहं स्थैर्यं गन्धमात्रमहं भुवः ।। ३३ ।।
अपां रसश्च परमस्तेजिष्ठानां विभावसुः । प्रभा सूर्येन्दुताराणां शब्दोऽहं नभसः परः ।। ३४ ।।
ब्रह्मण्यानां बलिरहं वीराणामहमर्जुनः । भूतानां स्थितिरुत्पत्तिरहं वै प्रतिसङ्क्रमः ।। ३५ ।।
गत्युक्त्युत्सर्गोपादानमानन्दस्पर्शलक्षणः । आस्वादश्रुत्यवघ्राणमहं सर्वेन्द्रियेन्द्रियः ।। ३६ ।।
पृथिवी वायुराकाश आपो ज्योतिरहं महान् । विकारः पुरुषोऽव्यक्तं रजः सत्वं तमः परः ।
अहमेतत्प्रसङ्ख्यानं ज्ञानं तत्वविनिश्चयः ।। ३७ ।।
मयेश्वरेण जीवेन गुणेन गुणिना विना । सर्वात्मनाऽपि सर्वेण न भावो विद्यते क्वचित् ।। ३८ ।।
सङ्ख्यानं परमाणूनां कालेन क्रियते मया । न तथा मे विभूतीनां सृजतोऽण्डानि कोटिशः ।। ३९ ।।
तेजः श्रीः कीर्तिरैश्वर्यं[2] ह्रीस्त्यागः सौभगं भगः । वीर्यं तितिक्षा विज्ञानं यत्रयत्र स मेंऽशकः ।। ४० ।।
एतास्ते कीर्तिताः सर्वाः संक्षेपेण विभूतयः । मनोविकारा एते वै[3] यथा वाचाऽभिधीयते ।। ४१ ।।
वाचं यच्छ मनो यच्छ प्राणं यच्छेन्द्रियाणि च । आत्मानमात्मना यच्छ न भूयः कल्प्यसेऽध्वने[4] ।।
यो वै वाङ्मनसी सम्यङ् न संयच्छेद् धिया यतिः । तस्य व्रतं तपो ज्ञानं स्रवत्यामघटाम्बुवत् ।। ४३ ।।
तस्माद् वचोमनःप्राणान् नियच्छेन्मत्परायणः । मद्भक्तियुक्तया बुद्ध्या ततः परिसमाप्यते ।। ४४ ।।

**।। इति श्रीमद्भागवते एकादशस्कन्धे षोडशोऽध्यायः ।।**

---

**उद्धव उवाच**

यस्त्वयाऽभिहितः पूर्वं धर्मस्त्वद्भक्तिलक्षणः । वर्णाश्रमाचारवतां सर्वेषां द्विपदामपि ।। १ ।।

---

१. गवामाज्यम् * २. कान्तिरैश्वर्यम् ३. एवैते ४. कल्पसेऽध्वने *

यथाऽनुष्ठीयमानेन त्वयि भक्तिर्नृणां भवेत् । स्वधर्मेणारविन्दाक्ष तन्ममाख्यातुमर्हसि ॥ २ ॥
पुरा किल महाबाहो धर्मं परमकं भवान् । यमाह त्वयि भक्तेभ्यो ब्राह्मणेभ्यश्च माधव ॥ ३ ॥
स इदानीं सुमहता कालेनामित्रकर्शन । प्रायोऽन्तर्भविता मर्त्यलोके प्रागनुशासितः ॥ ४ ॥
वक्ता कर्ताऽविता नान्यो धर्मस्याच्युत ते प्रभो[1] । सभायामपि वैरिञ्च्यां यत्र मूर्तिधराः कलाः ॥ ५ ॥
कर्त्राऽवित्रा प्रवक्त्रा च भवता मधुसूदन । त्यक्ते महीतळे देव विनष्टं कः प्रवक्ष्यति ॥ ६ ॥
त्वमतः सर्वधर्मज्ञ धर्मस्त्वद्भक्तिलक्षणः । यथा यस्य विधीयेत तथा वर्णय मेऽच्युत[2] ॥ ७ ॥

**श्रीभगवानुवाच**

धर्म्य एष तव प्रश्नो नैश्रेयसकरो नृणाम् । वर्णाश्रमाचारवतां तमुद्धव निबोध मे ॥ ८ ॥
आदौ कृतयुगे वर्णो नृणां हंस इति स्मृतः । कृतकृत्याः प्रजा जात्या तस्मात् कृतयुगं विदुः ॥ ९ ॥
वेदः प्रणव एवाग्रे धर्मोऽहं वृषरूपधृक् । उपासते तपोनिष्ठा हंसा मां मुक्तकिल्बिषाः ॥ १० ॥
त्रेतामुखे महाभाग प्राणान्मे हृदयात् त्रयी । विद्या प्रादुरभूत् तस्या अहमासं त्रिवृन्मुखः ॥ ११ ॥
विप्रक्षत्रियविट्शूद्रा मुखबाहूरुपादजाः । वैराजात् पुरुषाज्जाता य आत्माचारलक्षणाः ॥ १२ ॥
गृहाश्रमो जघनतो ब्रह्मचर्यं हृदो मम । वक्षःस्थलाद् वनेवासो न्यासः शीर्षण्यवस्थितः[3] ॥ १३ ॥
वर्णानामाश्रमाणां च जन्मभूम्यनुसारतः । आसन् प्रकृतयो नॄणां नीचैर्नीचोत्तमोत्तमाः ॥ १४ ॥
शमो दमस्तपः शौचं सन्तोषः क्षान्तिरार्जवम् । मद्भक्तिश्च दया सत्यं ब्रह्मप्रकृतयस्त्विमाः ॥ १५ ॥
तेजो बलं धृतिः शौर्यं तितिक्षौदार्यमुद्यमः । स्थैर्यं ब्रह्मण्यमैश्वर्यं क्षत्रप्रकृतयस्त्विमाः ॥ १६ ॥
आस्तिक्यं दाननिष्ठा च अडम्भो विप्रसेवनम् । अतुष्टिरर्थोपचये वैश्यप्रकृतयस्त्विमाः ॥ १७ ॥
शिश्रूषणं द्विजगवां देवानां चाप्यमायया । तत्र लब्धेन सन्तोषः शूद्रप्रकृतयस्त्विमाः ॥ १८ ॥
अशौचमनृतं स्तेयं नास्तिक्यं शुष्कविग्रहः । कामः क्रोधश्च तर्षश्च स्वभावोऽन्तेवसायिनाम् ॥ १९ ॥
अहिंसा सत्यमस्तेयमकामक्रोधलोभता । भूतप्रियहितेहा च धर्मोऽयं सार्ववर्णिकः ॥ २० ॥
द्वितीयं प्राप्यानुपूर्व्याज्जन्मोपनयनं द्विजः । वसन् गुरुकुले दान्तो ब्रह्माधीयीत वाग्यतः ॥ २१ ॥
मेखलाजिनदण्डाक्षब्रह्मसूत्रकमण्डलून् । जटिलोऽधौतदन्तश्च वासः पीठकुशान् दधत् ॥ २२ ॥
स्नानभोजनहोमेषु जपोच्चारे च वाग्यतः । न छिन्द्यान्नखरोमाणि कक्षोपस्थगतान्यपि ॥ २३ ॥
रेतो नावकिरेज्जातु ब्रह्मव्रतधरः स्वयम् । अवकीर्णोऽवगाह्याप्सु यतासुस्त्रिपदीं जपेत् ॥ २४ ॥

---

१. भुवि २. मे प्रभो ❋ ३. सन्न्यासः शीर्षिणि स्थितः ❋

अग्न्यर्काचार्यगोविप्रगुरुवृद्धसुरान् नमेत् । *समाहित उपासीत सन्ध्ये च यतवाग् जपेत् ॥ २५ ॥
*आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् । न मर्त्यबुद्ध्याऽसूयेत सर्वदेवमयो गुरुः ॥ २६ ॥
*सायं प्रातरुपानीय भैक्ष्यं तस्मै निवेदयेत् । यच्चान्यदप्यनुज्ञात उपभुञ्जीत संयतः ॥ २७ ॥
*शुश्रूषमाण आचार्यं सदोपसीत नीचवत् । यानशय्यासनस्थाने नातिदूरः कृताञ्जलिः ॥ २८ ॥
एवंवृत्तो गुरुकुले वसेद् भोगविवर्जितः । विद्या समाप्यते यावद् चरेद्[१] व्रतमखण्डितम् ॥ २९ ॥
यद्यसौ च्छन्दसां लोकमारोक्ष्यन् ब्रह्मविष्टपम् । गुरवे विन्यसेद् देहं स्वाध्यायार्थं बृहद्व्रतः ॥ ३० ॥
अग्नौ गुरावात्मनि च सर्वभूतेषु मां परम् । अपृथग्धीरुपासीत ब्रह्मवर्चस्व्यकल्मषः ॥ ३१ ॥
स्त्रीणां निरीक्षणस्पर्शसल्लापक्ष्वेळनादिकम् । प्राणिनो मिथुनीभूतानगृहस्थोऽग्रतस्त्यजेत् ॥ ३२ ॥
शौचमाचमनं स्नानं सन्ध्योपासनमार्जवम् । तीर्थसेवा जपोऽस्पृश्याभक्ष्यासंभाष्यवर्जनम् ॥ ३३ ॥
सर्वाश्रमप्रयुक्तोऽयं नियमः कुलनन्दन । मद्भावः सर्वभूतेषु मनोवाक्कायसंयमः ॥ ३४ ॥
एवं ब्रह्मव्रतधरो ब्राह्मणोऽग्निरिव ज्वलन् । मद्भक्तस्तीव्रतपसा दग्धकर्माशयोऽमलः ॥ ३५ ॥
अथानन्तरमावेक्ष्यन् यथाजिज्ञासितागमः । गुरवे दक्षिणां दत्वा स्नायाद् गुर्वनुमोदितः ॥ ३६ ॥
गृहं वनं चोपविशेत् प्रव्रजेद् वा द्विजोत्तमः । आश्रमादाश्रमं गच्छेन्नान्यथा मत्परश्चरेत् ॥ ३७ ॥
गृहार्थी सदृशीं भार्यामुद्वहेदजुगुप्सिताम् । यवीयसीं तु वयसा यां सवर्णामनुक्रमात्[२] ॥ ३८ ॥
इज्याध्ययनदानानि सर्वेषां च द्विजन्मनाम् । प्रतिग्रहोऽध्यापनं च ब्राह्मणस्यैव याजनम् ॥ ३९ ॥
प्रतिग्रहं मन्यमानस्तपस्तेजोयशोनुदम् । अन्याभ्यामेव जीवेत सिलैर्वा दोषदृक् तयोः ॥ ४० ॥
ब्राह्मणस्य हि देहोऽयं क्षुद्रकामाय नेष्यते । कृच्छ्राय महते[३] चेह प्रेत्यानन्तसुखाय च ॥ ४१ ॥

सिलोञ्छवृत्त्या परितुष्टचित्तो धर्मं महान्तं विरजं जुषाणः ।
मय्यर्पितात्मा गृह एव तिष्ठन् नातिप्रसक्तः समुपैति शान्तिम् ॥ ४२ ॥

समुद्धरन्ति ये विप्रं सीदन्तं मत्परायणम् । तानुद्धरिष्ये नचिरादापदो नौरिवार्णवात् ॥ ४३ ॥
सर्वाः समुद्धरेद् राजा पितेव व्यसनात् प्रजाः । आत्मानमात्मना धीरो यथा गजपतिर्गजान् ॥ ४४ ॥
एवंविधो नरपतिर्विमानेनार्कवर्चसा । विधूयेहाशुभं कृत्स्नमिन्द्रेण सह मोदते ॥ ४५ ॥
सीदन् विप्रो वणिग्वृत्त्या पण्यैरेवापदं तरेत् । खड्गेन वाऽऽपदाक्रान्तो न श्ववृत्त्या कथञ्चन ॥ ४६ ॥

---

* इदं सार्धश्लोकत्रयं प्राचीनकोशेषु नास्ति । विजयध्वजतीर्थैर्न व्याख्यातम् । सुधीन्द्रतीर्थैस्तु व्याख्यातम् ।

१. बिभ्रत्  २. या सवर्णा ह्यनुक्रमात् ❋  ३. तपसे

वैश्यवृत्त्या तु राजन्यो जीवेन्मृगयायाऽऽपदि। चरेद् वा विप्ररूपेण न श्ववृत्त्या कथञ्चन ॥ ४७ ॥
शूद्रवृत्तिं भजेद् वैश्यः शूद्रो वै कारुकक्रियाम्। कृच्छ्रान्मुक्तो न गर्ह्येण वृत्तिं लिप्सेत कर्मणा ॥
वेदाध्यायी स्वधास्वाहाबल्यन्नाद्यैर्यथोदयम्। नृदेवपितृभूतानि[1] मद्रूपाण्यन्वहं यजेत् ॥ ४९ ॥
यदृच्छयोपपन्नेन शुक्लेनोपार्जितेन वा। धनेनापीडयन् भृत्यान् मां यजेतान्वहं विभुम् ॥ ५० ॥
कुडुम्बेषु न सज्जेत न प्रमाद्येत् कुडुम्ब्यपि। विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥ ५१ ॥
पुत्रदाराप्तबन्धूनां सङ्गमः पान्थसङ्गमः। अनुदेहं भवन्त्येते स्वप्नो निद्रानुगो यथा[2] ॥ ५२ ॥
इत्थं परिमृशन् युक्तो गृहेष्वतिथिवद् वसन्। न गृहैरनुबध्येत निर्ममो निरहंकृतिः ॥ ५३ ॥
कर्मभिर्गृहमेधीयैरिष्ट्वा मामेव भक्तिमान्। तिष्ठेद् वनं वोपविशेत् प्रजावान् वा परिव्रजेत् ॥ ५४ ॥
यस्त्वासक्तमतिर्गेहे पुत्रवित्तेषणातुरः। स्त्रैणः कृपणधीर्मूढो ममाहमिति बध्यते ॥ ५५ ॥
अहो मे पितरौ वृद्धौ भार्या बालात्मजाऽऽत्मजाः। अनाथा मामृते दीनाः कथं जीवन्ति दुःखिनः॥
एवं गृहाशयाक्षिप्तहृदयो मूढधीरयम्। अतृप्तस्ताननुध्यायन् मृतोऽन्धं विशते तमः ॥ ५७ ॥

**॥ इति श्रीमद्भागवते एकादशस्कन्धे सप्तदशोऽध्यायः ॥**

---

**श्रीभगवानुवाच**

वनं विविक्षुः पुत्रेषु भार्यां न्यस्य सहैव वा। वनमेव वसेच्छान्तस्तृतीयं भागमायुषः ॥ १ ॥
कन्दमूलफलैर्वन्यैर्मेध्यैर्वृत्तिं प्रकल्पयेत्। वसीत वल्कलं वासस्तृणपर्णाजिनानि वा ॥ २ ॥
[3]केशलोमनखश्मश्रुमलानि बिभृयाद् व्रती। न धावेदप्सु मज्जेत त्रिकालं स्थण्डिलेशयः ॥ ३ ॥
ग्रीष्मे तप्येत पञ्चाग्निर्वर्षास्वासारषाड् जले। आकण्ठमग्नः शिशिर एवंवृत्तस्तपश्चरेत् ॥ ४ ॥
अग्निपक्वं समश्नीयात् कालपक्वमथापि वा। उलूखलाश्मकुट्टो वा दन्तोलूखल एव वा ॥ ५ ॥
स्वयं सञ्चिनुयात् सर्वमात्मनो वृत्तिकारणम्। देशकालबलाभिज्ञो नाददीतान्यदाहृतम् ॥ ६ ॥
वन्यैश्चरुपुरोडाशान् निर्वपेत् कालचोदितान्। न तु श्रौतेन पशुना[4] मां यजेत वनाश्रमी ॥ ७ ॥
अग्निहोत्रं च दर्शं च पूर्णमासं च पूर्ववत्। चातुर्मास्यानि च मुनेराम्नातानि[5] च नैगमैः ॥ ८ ॥

---

१. देवर्षिपितृभूतानि २. स्वप्ने निद्रागमो यथा ❋ ३. केशरोम....
४. स तु श्रौतेन विधिना ❋ ५. आख्यातानि

एवं चीर्णेन तपसा मुनिर्धमनिसन्ततः। मां तपोमयमाराध्य ऋषिलोकादुपैति माम् ॥ ९ ॥
यस्त्वेवं कृच्छ्रतश्चीर्णं तपो निःश्रेयसं महत्। कामायाल्पीयसे युञ्ज्याद् बालिशः कोऽपरस्ततः ॥ १० ॥
यदाऽसौ नियमेऽकल्पो जरया जातवेपथुः। आत्मन्यग्निं समारोप्य मच्चित्तोऽग्निं समाविशेत् ॥ ११ ॥
यदा धर्मविपाकेषु लोकेषु निरयात्मसु। विरागो जायते सम्यङ् न्यस्ताग्निः प्रव्रजेत् ततः ॥ १२ ॥
इष्ट्वा यथोपदेशं मां दत्वा सर्वस्वमृत्विजे। अग्नींश्च प्राण आवेश्य निरपेक्षः परिव्रजेत् ॥ १३ ॥
विप्रस्य वै सन्न्यसतो देवा दारादिरूपिणः। विघ्नं कुर्वन्त्ययं ह्यस्मानाक्रम्य समियात् परम् ॥ १४ ॥
बिभृयाच्चेन्मुनिर्वासः कौपीनाच्छादनं परम्। त्यक्तं न दण्डपात्राभ्यामन्यत् किञ्चिदनापदि ॥ १५ ॥
दृष्टिपूतं न्यसेत् पादं वस्त्रपूतं पिबेज्जलम्। सत्यपूतं वदेद् वाचं मनःपूतं समाचरेत् ॥ १६ ॥
मौनानीहानिलायामदण्डो वाग्देहचेतसाम्। न ह्येते यस्य सन्त्यङ्ग वेणुभिर्न भवेद् यतिः ॥ १७ ॥
भिक्षां चतुर्षु वर्णेषु विगर्ह्यान् वर्जयंश्चरेत्। सप्तागारानसंक्लृप्तांस्तुष्येल्लब्धेन तावता ॥ १८ ॥
बहिर्जलाशयं गत्वा तत्रोपस्पृश्य वाग्यतः। विभज्य याचतः शेषं भुञ्जीताशेषमाहृतम् ॥ १९ ॥
एकश्चरेन्महीमेतां निःसङ्गः संयतेन्द्रियः। आत्मक्रीड आत्मरत आत्मवान् समदर्शनः ॥ २० ॥
विविक्तक्षेमशरणो मद्भावविमलाशयः[१]। आत्मानं चिन्तयेदेकमभेदेन मया मुनिः ॥ २१ ॥
अन्वीक्षेतात्मनो बन्धं मोक्षं च ज्ञाननिष्ठया। बन्ध इन्द्रियविक्षेपो मोक्ष एषां च संयमः ॥ २२ ॥
तस्मान्नियम्य षड्वर्गं मद्भावेन चरेन्मुनिः। विरक्तः क्षुल्लकामेभ्यो लब्ध्वाऽऽत्मनि सुखं महत् ॥ २३ ॥
पुरग्रामव्रजान् सर्वान्[२] भिक्षार्थं प्रविशंश्चरेत्। पुण्यदेशसरिच्छैलवनाश्रमवतीं महीम् ॥ २४ ॥
वानप्रस्थाश्रमपदेष्वभीक्ष्णं भैक्ष्यमाचरेत्। संसिद्ध्यत्याश्वसंमोहः शुद्धसत्वः सिलान्धसा ॥ २५ ॥
नैतद् वस्तुतया पश्येद् दृश्यमानं विनश्वरम्। असक्तचित्तो विरमेदिहामुत्र चिकीर्षितात् ॥ २६ ॥
यदेतदात्मनि जगन्मनोवाक्प्राणसम्भृतम्। सर्वं मायेति तर्केण स्वस्थस्त्यक्त्वा न तत् स्मरेत् ॥२७॥
ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वाऽनपेक्षकः। सलिङ्गानाश्रमान् मुक्त्वा[३] चरेदविधिगोचरः ॥ २८ ॥
बुधो बालकवत् क्रीडेत् कुशलो जडवच्चरेत्। वदेदुन्मत्तवद् विद्वान् गोचर्यां नैगमश्चरेत् ॥ २९ ॥
वेदवादरतो न स्यान्न पाषण्डी न हैतुकी। शुष्कवादविवादेन कञ्चित्पक्षं न संश्रयेत् ॥ ३० ॥
नोद्विजेत जनाद् धीरो[४] जनं चोद्वेजयेन्न तु। अतिवादांस्तितिक्षेत नावमन्येत कञ्चन ॥ ३१ ॥

१. मत्कामो विमलाशयः ❋ २. सार्थान् ३. सलिङ्गानाश्रमांस्त्यक्त्वा ❋ / आश्रमान् हित्वा
४. नोद्विजेन्न शपेद् धीरः ❋

देहमुद्दिश्य पशुवद् वैरं कुर्यान्न केनचित् ॥ ३२ ॥
एक एव परो ह्यात्मा भूतेष्वात्मन्यवस्थितः। खं यद्वदुदपात्रेषु भूतान्येकात्मकानि च ॥ ३३ ॥
अलब्ध्वा न विषीदेत कालेकालेऽशनं क्वचित्। लब्ध्वा न हृष्येद् धृतिमानुभयं दैवतन्त्रितम् ॥ ३४ ॥
आहारार्थं समीहेत युक्तं तत्प्राणधारणम्। तत्वं विमृश्यते तेन तद् विज्ञाय विमुच्यते ॥ ३५ ॥
यदृच्छयोपपन्नान्नमद्याच्छ्रेष्ठमुतापरम्। तथा वासस्तथा शय्यां प्राप्तं प्राप्तं भजेन्मुनिः ॥ ३६ ॥
शौचमाचमनं स्नानं न तु चोदनया चरेत्। अन्यांश्च नियमान् ज्ञानी यथाऽहं लीलयेश्वरः ॥ ३७ ॥
नहि तस्य विकल्पाख्या क्रिया मद्वीक्षया हता। आदेहान्तं क्वचित् ख्यातिस्ततः सम्पद्यते मया ॥ ३८ ॥
दुःखोदर्केषु कामेषु जातनिर्वेद आत्मवान्। अजिज्ञासितमद्धर्मो गुरुं मुनिमुपाव्रजेत् ॥ ३९ ॥
तावत् परिचरेद् भक्तः श्रद्धावाननसूयकः। यावद् ब्रह्म विजानीयान्मामेव गुरुमादृतः ॥ ४० ॥
यस्त्वसंयतषड्वर्गः प्रचण्डेन्द्रियसारथिः। ज्ञानवैराग्यरहितस्त्रिदण्डमुपजीवति ॥ ४१ ॥
सुरानात्मानमात्मस्थं निह्नुते मां च धर्महा। अविपक्वकषायोऽस्मादमुष्माच्च विहीयते ॥ ४२ ॥
भिक्षोर्धर्मः शमोऽहिंसा तप ईक्षा वनौकसाम्। गृहिणो भूतरक्षेज्या द्विजस्याचार्यसेवनम् ॥ ४३ ॥
ब्रह्मचर्यं तपः शौचं सन्तोषो भूतसौहृदम्। गृहस्थस्याग्रतो गन्तुः सर्वेषां मदुपासनम्। ॥ ४४ ॥
इति मां यः स्वधर्मेण भजेन्नित्यमनन्यभाक्। सर्वभूतेषु मद्भावो मद्भक्तिं विन्दते चिरात् ॥ ४५ ॥
भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरम्। सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति सः ॥ ४६ ॥
इति स्वधर्मनिर्णिक्तसत्वो निर्ज्ञातमद्गतिः। ज्ञानविज्ञानसम्पन्नो विरक्तः समुपैति माम् ॥ ४७ ॥
वर्णाश्रमवतां धर्म एष आचारलक्षणः। स एव मद्भक्तियुतो निश्रेयसकरः परः ॥ ४८ ॥
एतत् तेऽभिहितं साधो भवान् पृच्छति यच्च माम्। यथा स्वधर्मसंयुक्तो भक्तो मां समियात् परम् ॥

**॥ इति श्रीमद्भागवते एकादशस्कन्धे अष्टादशोऽध्यायः ॥**

---

### श्रीभगवानुवाच

यो विद्याश्रुतसम्पन्न आत्मवानानुमानिकः। मायामात्रमिदं ज्ञात्वा ज्ञानं च मयि सन्न्यसेत् ॥ १ ॥
ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च सम्मतः। स्वर्गश्चैवापवर्गश्च नान्योऽर्थो मदृते प्रियः ॥ २ ॥
ज्ञानविज्ञानसम्बद्धाः[1] पदं श्रेष्ठं विदुर्मम। ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति माम् ॥ ३ ॥

---

१. ज्ञानविज्ञानसम्बन्धात् ❋/ज्ञानविज्ञानसंसिद्धाः

तपस्तीर्थं जपो दानं पवित्राणीतराणि च । नालं कुर्वन्ति तां शुद्धिं या ज्ञानकलया कृता ॥ ४ ॥
ज्ञानविज्ञानसहितं ज्ञात्वा स्वात्मानमुद्धव । ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावितः ॥ ५ ॥
ज्ञानविज्ञानयज्ञेन मामिष्ट्वाऽऽत्मानमात्मनि । सर्वयज्ञपतिं मां वै संसिद्धिं मुनयोऽन्वगुः ॥ ६ ॥
त्वय्युद्धवाश्रयति यस्त्रिविधो विकारो मायाऽन्तराऽऽपतति नाद्यपवर्गयोर्यः ।
जन्मादयोऽस्य वद मां तव तस्य किं स्युराद्यन्तयोर्यदसतोऽस्ति तदेव मध्ये ॥ ७ ॥

**उद्धव उवाच**

ज्ञानं विशुद्धं विपुलं यदेतद् वैराग्यविज्ञानयुतं पुराणम् ।
आख्याहि विश्वेश्वर विश्वमूर्ते त्वद्भक्तियोगं च महद्भिमृग्यम् ॥ ८ ॥

**श्रीभगवानुवाच**

इत्थमेतत् पुरा राजा भीष्मं धर्मभृतां वरम् । अजातशत्रुः पप्रच्छ सर्वेषामनुशृण्वताम् ॥ ९ ॥
निवृत्ते भारते युद्धे सुहृन्निधनविह्वलः । श्रुत्वा धर्मान् बहून् भीष्मं मोक्षधर्मानपृच्छत ॥ १० ॥
तानहं तेऽभिधास्यामि देवव्रतमुखाच्छ्रुतान् । ज्ञानविज्ञानवैराग्यश्रद्धाभक्त्युपबृंहितान् ॥ ११ ॥
नवैकादश पञ्च त्रीन् भावान् भूतेषु येन वै । ईक्षेतान्वेकमप्येषु[१] तज्ज्ञानं मम निश्चितम् ॥ १२ ॥
एतदेव हि विज्ञानं न तथैकेन येन यत् । स्थित्युत्पत्त्यप्यया नः स्युर्भावानां त्रिगुणात्मनाम्॥ १३ ॥
आदावन्ते च मध्ये च यज्ज्ञं सृज्यं यदन्वियात् । पुनस्तत्प्रतिसङ्क्रामे यच्छिष्येत तदेव सत् ॥ १४ ॥
श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम् । प्रमाणेष्वनवस्थानाद् विकल्पात् स विरज्यते ॥ १५ ॥
कर्मणां फलरूपत्वादाविरिञ्चादमङ्गळम् । विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥ १६ ॥
भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघ । पुनश्च कथयिष्यामि मद्भक्तेः कारणं परम् ॥ १७ ॥
श्रद्धाऽमृतकथायां मे शश्वन्मदनुकीर्तनम् । परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम ॥ १८ ॥
आदरः परिचर्यायां सर्वाङ्गैरभिवन्दनम् । मद्भक्तपूजाऽभ्यधिका सर्वभूतेषु मन्मतिः ॥ १९ ॥
मदर्थेष्वङ्गचेष्टा च वचसा मद्गुणेरणम् । मय्यर्पणं च मनसः सर्वकामविसर्जनम्[२] ॥ २० ॥
मदर्थे च परित्यागो भोगस्य च सुखस्य च । इष्टं दत्तं हुतं भुक्तं मदर्थं यद् व्रतं तपः ॥ २१ ॥
एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् । मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते॥ २२ ॥
यदा मय्यर्पितं चित्तं शान्तं सत्वोपबृंहितम् । धर्मं ज्ञानं सवैराग्यमैश्वर्यं चाभिपद्यते ॥ २३ ॥
यद्यर्पितं तद् विकल्प इन्द्रियैः परिधावति । रजस्वलमसन्निष्ठं चित्तं विद्धि विपर्ययम् ॥ २४ ॥

---

१. ईक्षतेऽन्वेकमप्येषु */ईक्षेताथैकमप्येषु २. सर्वकामविवर्जनम्

पतत्पताकैः रथकुञ्जरार्वभिः खरोष्ट्रगोभिर्महिषैर्नरैरपि ।
मिथः समेत्याश्वतरैः सुदुर्मदा[1] न्यहञ्छरैर्दद्भिरिव द्विपा वने ॥ १५ ॥
प्रद्युम्नसाम्बौ युधि रूढमत्सरावक्रूरभोजावनिरुद्धसात्यकी ।
सुभद्रसङ्ग्रामजितौ सुचारुगदौ सुमित्रासुरथौ समीयतुः ॥ १६ ॥
अन्ये च ये वै निशठोल्मुकादयः सहस्रजिच्छतजिद्भानुमुख्याः ।
अन्योन्यमासाद्य मदान्धकारिता जघ्नुर्मुकुन्देन विमोहिता भृशम् ॥ १७ ॥
दाशार्हवृष्ण्यन्धकभोजसात्वता अध्वर्युदा[2] माधुरशूरसेनाः ।
विसर्जनाः कुकुराः कुन्तयश्च मिथश्च[3] जघ्नुः सुविसृज्य सौहृदम् ॥ १८ ॥
पुत्रास्त्वयुध्यन् पितृभिर्भ्रातृभिश्च स्वस्रीयदौहित्रपितृव्यमातुलैः ।
मित्राणि मित्रैः सुहृदः सुहृद्भिर्ज्ञातींस्त्वहन् ज्ञातय एव मूढाः ॥ १९ ॥
शरेषु हीयमानेषु भज्यमानेषु धन्वसु । शस्त्रेषु क्षीयमाणेषु मुष्टिभिर्जह्रुरेरकाः ॥ २० ॥
ता वज्रकल्पा अभवन् परिघा मुष्टिना हृताः । जघ्नुर्द्विषस्ते कृष्णेन वार्यमाणास्तु तं च ते[4] ॥ २१ ॥
प्रत्यनीकं मन्यमाना बलभद्रं च मोहिताः । हन्तुं कृतधियो राजन्नापन्ना आततायिनः ॥ २२ ॥
अथ तावपि संक्रुद्धावुद्यम्य कुरुनन्दन । एरकामुष्टिपरिघैश्चरन्तौ जघ्नतुर्युधि ॥ २३ ॥
ब्रह्मशापोपसृष्टानां कृष्णमायावृतात्मनाम् । स्पर्द्धाक्रोधः क्षयं निन्ये वैणवोऽग्निर्यथा वनम् ॥ २४ ॥
एवं सर्वेषु नष्टेषु कुलेषु स्वेषु केशवः । उत्तारितो भुवो भार इति मेनेऽवशेषितः ॥ २५ ॥
रामः समुद्रवेलायां योगमास्थाय पौरुषम् । तत्यजे योगमाविश्य संयोज्यात्मानमात्मनि ॥ २६ ॥
रामनिर्याणमालोक्य भगवान् देवकीसुतः । निषसाद धरोपस्थे तूष्णीमासाद्य पिप्पलम् ॥ २७ ॥
बिभ्रच्चतुर्भुजं रूपं भ्राजिष्णु प्रभया स्वया । दिशो वितिमिराः कुर्वन् विधूम इव पावकः ॥ २८ ॥
श्रीवत्साङ्कं घनश्यामं तप्तहाटकवर्चसम्[5] । कौशेयाम्बरयुग्मेन परिवीतं सुमङ्गळम् ॥ २९ ॥
सुन्दरस्मितवक्त्राब्जं नीलकुन्तळमण्डितम् । पुण्डरीकाभिरामाक्षं स्फुरन्मकरकुण्डलम् ॥ ३० ॥
कटिसूत्रब्रह्मसूत्रकिरीटकटकाङ्गदैः । हारनूपुरमुद्राभिः कौस्तुभेन विराजितम् ॥ ३१ ॥
वनमालापरीताङ्गं मूर्तिमद्भिर्निजायुधैः । कृत्वोरौ दक्षिणं पादमासीनं पङ्कजारुणम् ॥ ३२ ॥

---

१. अश्वतरैश्च दुर्मदाः❋ २. मध्वर्युदाः ❋ ३. मिथस्तु ४. वार्यमाणास्तु तन्तवे ५. तप्तहाटकवर्चसा ❋

मुसलावशेषायःखण्डकृतेषुर्लुब्धको जरः । मृगाकारं तच्चरणं[१] विव्याध मृगशङ्कया ॥ ३३ ॥

चतुर्भुजं तं पुरुषं दृष्ट्वा स कृतकिल्बिषः । भीतः पपात शिरसा पादयोरसुरद्विषः ॥ ३४ ॥

**व्याध उवाच**

अजानता कृतमिदं पापेन मधुसूदन । क्षन्तुमर्हसि पापस्य उत्तमश्लोक मेऽनघ ॥ ३५ ॥

यस्यानुस्मरणं नृणामज्ञानध्वान्तनाशनम् । वदन्ति तस्य ते विष्णो मयाऽसाधु कृतं प्रभो ॥ ३६ ॥

तमाशु जहि वैकुण्ठ पाप्मानं मृगलुब्धकम् । यथा पुनरहं त्वेवं न कुर्यां सदतिक्रमम् ॥ ३७ ॥

यस्यात्मयोगरचितं[२] न विदुर्विरिञ्चिरुद्रादयोऽस्य तनयाः[३] पतयो गिरां ये ।

त्वन्मायया विहतदृष्टय एतदञ्जः किं तस्य ते वयमसद्गतयो गृणीमः[४] ॥ ३८ ॥

**श्रीभगवानुवाच**

मा भैर्जर त्वमुत्तिष्ठ काम एष कृतो हि मे । याहि त्वं मदनुज्ञातः स्वर्गं सुकृतिनां पदम् ॥ ३९ ॥

**श्रीशुक उवाच**

इत्यादिष्टो भगवता कृष्णेनेच्छाशरीरिणा । त्रिः परिक्रम्य तं नत्वा विमानेन दिवं ययौ ॥ ४० ॥

दारुकः कृष्णपदवीमन्विच्छन् नाधिगम्य तम् । वायुं तुळसिकामोदमाघ्रायाभिमुखं ययौ ॥ ४१ ॥

तं तत्र तिग्मद्युतिमायुधैर्वृतं ह्यश्वत्थमूले कृतकेतनं पतिम् ।

स्नेहप्लुतात्मा निपपात पादयो रथादवप्लुत्य सबाष्पलोचनः ॥ ४२ ॥

अदृश्यतस्ते चरणाम्बुजं प्रभो दृष्टिः प्रनष्टा तमसि प्रविष्टा ।

दिशो न जाने न लभे च शान्तिं यथा निशायामुडुपे प्रनष्टे ॥ ४३ ॥

इति ब्रुवति सूते वै रथो गरुडलाञ्छनः । खमुत्पपात राजेन्द्र साश्वध्वज उदीक्षितः ॥ ४४ ॥

तमन्वगच्छन् दिव्यानि विष्णुप्रहरणानि वै । तेनातिविस्मितात्मानं सूतमाह जनार्दनः ॥ ४५ ॥

**श्रीभगवानुवाच**

गच्छ द्वारवतीं सूत ज्ञातीनां निधनं मिथः । सङ्कर्षणस्य निर्याणं बन्धुभ्यो ब्रूहि मद्दशाम् ॥ ४६ ॥

द्वारकायां न च स्थेयं भवद्भिश्च स्वबन्धुभिः । मया त्यक्तां यदुपुरीं समुद्रः प्लावयिष्यति ॥ ४७ ॥

स्वं स्वं परिग्रहं सर्वे आदाय पितरौ च नः । अर्जुनेनान्विताः सर्वे इन्द्रप्रस्थं गमिष्यथ ॥ ४८ ॥

त्वं तु मद्धर्ममास्थाय ज्ञाननिष्ठ उपेक्षकः । मन्मायारचनामेतां विज्ञायोपशमं व्रज ॥ ४९ ॥

---

१. मृगास्याकारं चरणम् ❋ २. यस्यात्मयोगचरितम् ❋ ३. .....रुद्रादयः सुमतयः ❋ ४. गृणीम ❋

**श्रीशुक उवाच**

इत्युक्तस्तं परिक्रम्य नमस्कृत्य पुनः पुनः । तत्पादौ शीर्ष्ण्युपाधाय दुर्मना: प्रययौ पुरीम् ॥ ५० ॥

**॥ इति श्रीमद्भागवते एकादशस्कन्धे त्रिंशोऽध्यायः ॥**

---

**श्रीशुक उवाच**

अथ तत्रागमद् ब्रह्मा भवान्या च समं भवः । महेन्द्रप्रमुखा देवा मुनयः सप्रजेश्वराः ॥ १ ॥

पितरः सिद्धगन्धर्वा विद्याधरमहोरगाः । चारणा यक्षरक्षांसि किन्नराप्सरसो द्विजाः ॥ २ ॥

द्रष्टुकामा भगवतो निर्याणं परमोत्सुकाः । गायन्तश्च गृणन्तश्च शौरेः कर्माणि जन्म च ॥ ३ ॥

ववृषुः पुष्पवर्षाणि विमानावळिभिर्नभः । कुर्वन्तः सङ्कुलं राजन् भक्त्या परमया युताः ॥ ४ ॥

भवं पितामहं वीक्ष्य विभूतीरात्मनो विभुः । संयुज्यात्मनि चात्मानं पद्मनेत्रे न्यमीलयत् ॥ ५ ॥

लोकाभिरामां स्वतनुं धारणाध्यानमङ्गलाम् । योगधारणयाऽऽग्नेय्याऽदग्ध्वा धामाविशत् स्वकम् ॥

दिवि दुन्दुभयो नेदुः पेतुः सुमनसश्च खात् । सत्यं धर्मो धृतिर्भूतिः कीर्तिः श्रीश्चानु तं ययुः ॥ ७ ॥

देवादयो ब्रह्ममुखा आविशन्तं स्वधामनि । अविज्ञातगतिं कृष्णं ददृशुश्चातिविस्मिताः ॥ ८ ॥

सौदामिन्या यथाऽऽकाशे यान्त्या भित्त्वाऽभ्रमण्डलम् । गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैवतैः ॥

ब्रह्मरुद्रादयस्ते तु दृष्ट्वा योगगतिं हरेः । विस्मितास्तां प्रशंसन्तः स्वंस्वं धामागमन् नृप[१] ॥ १० ॥

राजन् परस्य तनुभृज्जननाप्ययेहा मायाविडम्बनमवैहि यथा नटस्य ।
सृष्ट्वाऽऽत्मनेदमनुविश्य विहृत्य चान्ते संहृत्य चात्ममहिमोपरतः स आस्ते ॥ ११ ॥

मर्त्येन यो गुरुसुतं यमनीतलोकं त्वां चानयच्छरणदः परमास्त्रदग्धम् ।
जिग्ये पुरेऽन्तकमपीशतनावनीशः[२] किं स्यादनीश्वर अथो मृगयोः स देहे[३] ॥ १२ ॥

तथाप्यशेषस्थितिसम्भवाप्ययेष्वनन्यहेतुर्यदशेषशक्तिधृक् ।
नैच्छत् प्रणेतुं वपुरत्र शेषितं मर्त्येन किं स्वस्य गतिं प्रदर्शयन् ॥ १३ ॥

य एतां प्रातरुत्थाय कृष्णस्य पदवीं पराम् । प्रयतः कीर्तयेद् भक्त्या तामेवाप्नोत्यनुत्तमाम् ॥ १४ ॥

दारुको द्वारकामेत्य वसुदेवोग्रसेनयोः । पतित्वा चरणावास्रैर्न्यषिञ्चत् कृष्णविच्युतः ॥ १५ ॥

---

१. लोकं ययुस्तदा ❋ २. जिग्येऽन्तकान्तकमपीशतनावनीशः ❋ ३. मृगयोः स्वदेहे ❋

कथयामास निधनं वृष्णीनां कृत्स्नशो नृप। तच्छ्रुत्वोद्विग्नहृदया जनाः शोकविमूर्च्छिताः ॥ १६ ॥
तत्र वै त्वरिता जग्मुः कृष्णविश्लेषविह्वलाः। व्यसवः शेरते यत्र ज्ञातयो घ्नन्त आयुधैः ॥ १७ ॥
देवकी रोहिणी चैव वसुदेवस्तथा सुतौ। कृष्णरामावपश्यन्तः शोकार्ता विजहुः स्मृतिम् ॥ १८ ॥
प्राणांश्च विजहुस्तत्र भगवद्विरहातुराः। उपगुह्य पतींस्तात चितामारुरुहुः स्त्रियः ॥ १९ ॥
रामपत्न्यश्च तं [१]देहमुपगुह्याग्निमाविशन्। वसुदेवपत्न्यस्तद्गात्रं प्रद्युम्नादीन् हरेः स्नुषाः।
कृष्णपत्न्योऽविशन्नग्निं रुग्मिण्याद्यास्तदात्मिकाः[२] ॥ २० ॥
अर्जुनः प्रेयसः सख्युः कृष्णस्य विरहातुरः। आत्मानं सान्त्वयामास कृष्णगीतैः सदुक्तिभिः ॥ २१ ॥
बन्धूनां नष्टगोत्राणामर्जुनः साम्परायिकम्। हतानां कारयामास यथावदनुपूर्वशः ॥ २२ ॥
द्वारकां हरिणा त्यक्तां समुद्रोऽप्लावयत्[३] क्षणात्। वर्जयित्वा महाभाग श्रीमद्भगवदालयम् ॥ २३ ॥
नित्यं सन्निहितस्तत्र भगवान् मधुसूदनः। स्मृत्याऽशेषाशुभहरः सर्वमङ्गळमङ्गळः ॥ २४ ॥
स्त्रीबालवृद्धानादाय हतशेषान् धनञ्जयः। इन्द्रप्रस्थं समावेश्य वज्रं तत्राभ्यषेचयत् ॥ २५ ॥
श्रुत्वा सुहृद्वधं राजन्नर्जुनात् ते पितामहाः। त्वां तु वंशधरं कृत्वा जग्मुः सर्वे महापथम् ॥ २६ ॥
य एतद् देवदेवस्य विष्णोः कर्माणि जन्म च। कीर्तयेच्छ्रद्धया मर्त्यः सर्वपापैः प्रमुच्यते ॥ २७ ॥
इत्थं हरेर्भगवतो रुचिरावतारं वीर्याणि चास्य चरितानि च मङ्गळानि[५]।
अन्यत्र चेह च श्रुतानि गृणन् मनुष्यो भक्तिं परां परमहंसगतौ लभेत ॥ २८ ॥

**॥ इति श्रीमद्भागवते महापुराणे वैयासक्यामष्टादशसाहस्र्यां पारमहंस्यां संहितायां एकादशस्कन्धे एकत्रिंशोऽध्यायः ॥**

## ॥ समाप्तश्चैकादशस्कन्धः ॥

---

१. तदेहम् ❋ २. रुग्मिण्याद्यास्तदात्मकाः ❋ ३. समुद्रः प्लावयत् ❋
५. चरितानि च सत्तमानि ❋

# ॥ अथ द्वादशस्कन्धः ॥

### श्री शुक उवाच

योऽन्त्यो रिपुञ्जयो[१] नाम भविष्योऽथ बार्हद्रथः । तस्यामात्यस्तु मुनिको[२] हत्वा स्वामिनमात्मजम् ॥
प्रद्योतसञ्ज्ञं राजानं कर्ता यत् पालकः सुतः । विशाखयूपस्तत्पुत्रो भविता चाजकस्ततः ॥ २ ॥
नन्दिवर्धस्तु तत्पुत्रः पञ्च प्रद्योतना इमे । अष्टत्रिंशोत्तरशतं भोक्ष्यन्ति पृथिवीमिमाम्[३] ॥ ३ ॥
शिशुनागस्ततो भाव्यः काकवर्णस्तु तत्सुतः । क्षेमधर्मा तस्य सुतः क्षेत्रज्ञः[४] क्षेमधर्मजः ॥ ४ ॥
विधिसारः सुतस्तस्याजातशत्रुर्भविष्यति । दर्भकस्तत्सुतो भावी दर्भकस्याजयः स्मृतः ॥ ५ ॥
नन्दिवर्धन आजेयो महानन्दी च[५] तत्सुतः । शैशुनागा दशैते वै षष्ट्युत्तरशतत्रयम् ॥ ६ ॥
समा भोक्ष्यन्ति पृथिवीं कुरुश्रेष्ठ कलौ नृपाः । महानन्दिसुतो राजन् शूद्रागर्भोद्भवो बली ॥ ७ ॥
महापद्मापतिः कश्चिन् कुलक्षत्रविनाशकृत्[६] । ततो नृपा भविष्यन्ति शूद्रप्राया अधार्मिकाः ॥ ८ ॥
स एकच्छत्रां पृथिवीमनुल्लङ्घितशासनः । शासिष्यति महापद्मो द्वितीय इव भार्गवः ॥ ९ ॥
तस्य चाष्टौ भविष्यन्ति सुमालिप्रमुखाः सुताः । य इमां पृथिवीं राजन् भोक्ष्यन्ति स्म शतं समाः ॥
नव नन्दान् द्विजः कश्चित् प्रपन्नानुद्धरिष्यति । तेषामभावे जगतीं मौर्या भोक्ष्यन्ति वै कलौ ॥ ११ ॥
स एव चन्द्रगुप्तं[७] वै द्विजो राज्येऽभिषेक्ष्यति । तत्सुतो वारिनाभस्तु[८] ततश्चाशोकवर्धनः ॥ १२ ॥
सुयशा भविता यस्य सङ्गतः सुयशःसुतः । शालिशूकस्ततस्तस्य सोमशर्मा भविष्यति ॥ १३ ॥
शतधन्वा ततस्तस्य भविता तु बृहद्रथः । मौर्या ह्येते नव नृपाः सप्तत्रिंशच्छतोत्तरम् ॥ १४ ॥
समा भोक्ष्यन्ति पृथिवीं कलौ कुरुकुलोद्वह । हत्वा बृहद्रथं मौर्यं तस्य सेनापतिः कलौ ॥ १५ ॥
पुष्यमित्रस्तु शुङ्गाह्वः स्वयं राज्यं करिष्यति । अग्निमित्रस्ततस्तस्मात् सुज्येष्ठो[९] भविता ततः ॥
परिमित्रो[१०] भद्रकश्च पुळिन्दो भविता सुतः । ततो घोषः सुतस्तस्माद् वज्रमित्रो भविष्यति ॥ १७ ॥
ततो भागवतस्तस्माद् देवभूतिः कुरूद्वह । शुङ्गा दशैते भोक्ष्यन्ति भूमिं वर्षशताधिकम् ॥ १८ ॥

---

१. पुरञ्जयः ❋ २. शुनकः ❋ ३. पृथिवीं नृपाः ❋ ४. क्षेत्रौजाः ❋ ५. महानन्दिश्च
६. कश्चिन्नन्दः क्षत्रविनाशकृत् ❋ ७. इन्द्रगुप्तम् ८. वारिराजस्तु ९. सुधेष्टः १०. वसुमित्रः

ततः कण्वानियं भूमिर्यास्यत्यल्पगुणा नृपान् । शुङ्गं हत्वा देवहूतिं[1] कण्वोऽमात्यस्तु कामिनम् ॥
स्वयं करिष्यते राज्यं वसुदेवो महामतिः । तस्य पुत्रस्तु भूमित्रस्ततो नारायणः सुतः ॥ २० ॥
सुशर्माख्योऽस्य नृपतिः कण्वानां भविता ततः । काण्वायना इमे भूमिं चत्वारिंशच्च पञ्च च ॥ २१ ॥
शतानि त्रीणि भोक्ष्यन्ति वर्षाणां च कलौ युगे । हत्वा कण्वं सुशर्माणं तद्भृत्यो वृषलो बली[2] ॥
गां भोक्ष्यत्यन्ध्रजातीयः कञ्चित्कालमसत्तमः । कृष्णनामाऽथ तद्भ्राता भविता पृथिवीपतिः ॥ २३ ॥
श्रीशातकर्णस्तत्पुत्रः[3] पूर्णमासस्तु तत्सुतः । लम्बोदरस्तु तत्पुत्रस्तस्माच्छिविलको नृप ॥ २४ ॥
मेघस्वनः शिबिलकादटमानस्तु तस्य च । अनिष्टकर्मा हालेयस्तलकस्तस्य चात्मजः ॥ २५ ॥
पुरीषसेरुस्तत्पुत्रस्ततो राजा सुनन्दनः । चकोरोऽपटको[4] यस्य शिवस्वातिररिन्दमः[5] ॥ २६ ॥
तस्यापि गोमतिः पुत्रः पुरीमान् भविता ततः । शातकर्णः शिवस्कन्दो यज्ञश्रीस्तत्सुतस्ततः[6] ॥ २७ ॥
विजयस्तत्सुतो भाव्यश्चन्द्रबीजः सुलोमधीः । [7]एते त्रिंशन्नृपतयश्चत्वार्यष्टशतानि च ॥ २८ ॥
षट्पञ्चाशच्च पृथिवीं भोक्ष्यन्ति कुरुनन्दन । सप्ताभीरा आन्ध्रभृत्या दश गर्दभिनो नृपाः[8] ।
कङ्काः[9] षोडशभूपाला भविष्यन्त्यतिलोलुपाः ॥ २९ ॥
ततोऽष्टौ यवना भाव्याश्चतुर्दश च तुर्वराः[10] । त्रयोदश तुरुण्डाश्च[11] मौना एकादशैव तु ॥ ३० ॥
एते भोक्ष्यन्ति पृथिवीं दशवर्शशतानि च । नवाधिकां च नवतिं[12] मौना एकादश क्षितिम् ॥ ३१ ॥
भोक्ष्यन्त्यब्दशतान्यङ्ग त्रीणि वै संस्थिते कुले[13] । किलिकिलायां नृपतयो भूतवंशोपवङ्गैः[14] ॥
शिशुनन्दिश्च तद्भ्राता यशोनन्दिः प्रवीरकः । युक्ता एवं वर्षशतं भविष्यन्त्यधिकानि षट् ॥ ३३ ॥
तेषां त्रयोदश सुता भवितारोऽथ बाह्लिकाः । पुष्पमित्रोऽथ राजन्यो दशमित्रस्तथैव च ॥ ३४ ॥
एककाला इमे भूपाः सप्तान्ध्राः सप्त कोसलाः । वैदूरपतयो[15] भाव्या नैषधास्तत एव हि ॥ ३५ ॥

---

१. देवभूतिम् ❋ २. तद्भृत्यो जम्बुको बलात् ❋ ३. श्रीशान्तकर्णस्तत्पुत्रः ❋ ४. दृढकः
५. शिवख्यातिररिन्दमः ६. यज्ञश्रीतस्तु तत्सुतः ❋ ७. अत्र त्रिंशत्सङ्ख्या नास्ति । पाठव्यत्यासः स्यात् ।
८. सप्ताभीरास्तत्प्रभृतीर्दश गार्दभिनो नृपाः ❋ ९. काण्वाः ❋ १०. तुरुष्कराः
११. भूयो दश तुरुण्डाश्च ❋ १२. नवाधिकाश्च नवतिः ❋ १३. ततः ❋
१४. भूतवंशोर्ध्ववद्भुरैः ❋ १५. वैसारपतयः ❋

नैषधानां[1] तु भविता विश्वस्फूर्जिः पुरञ्जयः । करिष्यत्यवरान् वर्णान् पुळिन्दयदुमद्रकान् ।। ३६ ।।
प्रजाश्च ब्रह्मभूयिष्ठाः स्थापयिष्यति दुर्मतिः । वीर्यवान् क्षत्रमुत्साद्य पद्मवत्यां स वै पुरि[2] ।। ३७ ।।
अनुगङ्गमाप्रयागं गुप्तां भोक्ष्यति मेदिनीम् । सौराष्ट्रावन्त्याभीराश्च शूद्राश्चार्बुदमाळवाः ।। ३८ ।।
व्रात्या द्विजा भविष्यन्ति शूद्रप्राया जनाधिपाः । सिन्धोस्तटं चन्द्रभागां कार्न्ती काश्मीरमण्डलम्[3] ।।
भोक्ष्यन्ति शूद्रा व्रात्याश्च म्लेञ्छा[4] अब्रह्मवर्चसः । तुल्यकाला इमे राजन् म्लेञ्छप्रायाश्च[5] भूभृतः ।।
एतेऽधर्मानृतपराः फल्गुदास्तीव्रमन्यवः । स्त्रीबालगोद्विजघ्नाश्च परदारधनादृताः ।। ४१ ।।
उदितास्तमितप्राया अल्पसत्वाल्पकायुषः । असंस्कृताः क्रियाहीना रजसा तमसा वृताः ।। ४२ ।।
प्रजास्ते भक्षयिष्यन्ति म्लेच्छा[6] राजन्यरूपिणः । तन्नाथास्ते जनपदास्तच्छीलाचारवादिनः।। ४३ ।।
अन्योन्यतो राजभिश्च क्षयं यास्यन्ति पीडिताः ।। ४४ ।।

**।। इति श्रीमद्भागवते द्वादशस्कन्धे प्रथमोऽध्यायः ।।**

---

**श्रीशुक उवाच**

ततश्चानुदिनं धर्मः सत्यं शौचं क्षमा दया[7] । कालेन बलिना राजन् नङ्क्ष्यन्त्यायुर्बलं स्मृतिः ।। १ ।।
वित्तमेव कलौ नृणां जन्माचारगुणादयः[8] । धर्मन्यायव्यवस्थायां कारणं बलमेव हि ।। २ ।।
दाम्पत्येऽभिरुचिर्हेतुर्मायैव व्यावहारिके । स्त्रीत्वे पुंस्त्वे चातिरतिर्विप्रत्वे सूत्रमेव च ।। ३ ।।
लिङ्गमेवाश्रमख्यातावन्योन्यापत्तिकारणम् । अवृत्त्यन्यायदौर्बल्ये[9] पाण्डित्येऽचापलं वचः[10] ।। ४ ।।
अनाढ्यतैवासाधुत्वे साधुत्वे डम्भ एव च । स्वीकार एव चोद्वाहे स्नानमेव प्रसाधनम् ।। ५ ।।
दूरेवार्यटनं[11] तीर्थं लावण्ये केशधारणम् । उदरम्भरता स्वार्थः सत्यत्वे धाष्टर्यमेव हि ।। ६ ।।
दाक्ष्यं कुडुम्बभरणे यशोर्थे धर्मसेवनम् । एवं प्रजाभिर्दुष्टाभिराकीर्णे क्षितिमण्डले ।। ७ ।।
ब्रह्मविट्क्षत्रशूद्राणां यो बली भविता नृपः । प्रजा हि लुब्धै राजन्यैर्निर्घृणैर्दस्युधर्मभिः ।। ८ ।।

---

१. मागधानाम् ❋ २. पुरीम् ❋ ३. कौन्तिकाश्मीरमण्डलम् ❋ ४. व्रात्याद्या म्लेच्छा ❋
५. म्लेच्छप्रायाश्च ❋ ६. म्लेच्छाः ❋ ७. सत्यशौचक्षमादयः ❋ ८. जन्माचारकुलादयः / जन्माचारगुणोदयः ९. अवृत्तिर्न्यायदौर्बल्ये ❋ १०. चापलं वचः ❋ ११. दूरवार्ययनम् ❋

आच्छिन्नदारद्रविणा यास्यन्ति गिरिकाननम् । शाकमूलामिषक्षौद्रफलपुष्पादिभोजना:[१] ॥ ९ ॥
अनावृष्ट्या विनङ्क्ष्यन्ति[२] दुर्भिक्षकरपीडिता: । [३]शीतवातातपप्रावृड्हिमैरन्योन्यत: प्रजा: ॥ १० ॥
क्षुत्तृषा[४] व्याधिभिश्चैव सन्तप्स्यन्ते च चिन्तया । त्रिंशद्विंशतिवर्षाणि परमायु: कलौ नृणाम् ॥ ११ ॥
क्षीयमाणेषु देहेषु देहिनां कलिदोषत: । वर्णाश्रमवतां धर्मे नष्टे वेदपथे नृणाम् ॥ १२ ॥
पाषण्डप्रचुरे धर्मे दस्युप्रायेषु राजसु । चौर्यानृतवृथाहिंसानानावृत्तिषु वै नृषु[५] ॥ १३ ॥
शूद्रप्रायेषु वर्णेषु छागप्रायासु धेनुषु । गृहप्रायेष्वाश्रमेषु योनिप्रायेषु बन्धुषु ॥ १४ ॥
अणुप्रायेष्वौषधीषु शमीप्रायेषु स्थास्नुषु । विद्युत्प्रायेषु मेघेषु शून्यप्रायेषु सद्मसु ॥ १५ ॥
इत्थं कलौ गतप्राये जनेषु खलधर्मसु । धर्मत्राणाय सत्वेन भगवानवतरिष्यति ॥ १६ ॥
चराचरगुरोर्विष्णोरीश्वरस्याखिलात्मन: । धर्मत्राणाय साधूनां जन्म कर्मापनुत्तये ॥ १७ ॥
शम्बळग्राममुख्यस्य ब्राह्मणस्य महात्मन: । भवने विष्णुयशस: कल्कि: प्रादुर्भविष्यति ॥ १८ ॥
अश्वमाशुगमारुह्य देवदेवो जगत्पति: । [६]असिं चासाधुदमनमष्टैश्वर्यगुणान्वित: ॥ १९ ॥
विचरन्नसिमान्[७] क्षोण्यां हयेनाप्रतिमद्युति: । नृपलिङ्गच्छदो दस्यून् कोटिशो निहनिष्यति॥ २० ॥
अथ तेषां भविष्यन्ति मनांसि विशदानि वै । वासुदेवाङ्गरागातिपुण्यगन्धानिलस्पृशाम् ॥ २१ ॥
पौरजानपदानां वै हतेष्वखिलदस्युषु । तेषां प्रजाविसर्गश्च स्थविष्ठ: सम्भविष्यति ॥ २२ ॥
वासुदेवे भगवति सत्वमूर्तौ हृदि स्थिते । यदाऽवतीर्णो भगवान् कल्किर्धर्मपतिर्हरि: ।
कृतं भविष्यति तदा प्रजासूतिश्च सात्विकी ॥ २३ ॥
यदा चन्द्रश्च सूर्यश्च तथा तिष्ये बृहस्पति: । एकराशौ समेष्यन्ति तदा भवति तत् कृतम् ॥ २४ ॥
येऽतीता वर्तमाना ये ये भविष्यन्ति पार्थिवा: । ते त उद्देशत: प्रोक्ता वंशजा: सूर्यसोमयो: ॥ २५ ॥
आरभ्य भवतो जन्म यावन्नन्दाभिषेचनम् । एतद् वर्षसहस्रं तु शतं पञ्च दशोत्तरम् ॥ २६ ॥
सप्तर्षीणां तु यौ पूर्वौ दृश्येते उदितौ[८] दिवि । तयोस्तु मध्ये नक्षत्रं दृश्यते यत् समं निशि ॥ २७ ॥
तेनैते ऋषयो युक्तास्तिष्ठन्त्यब्दशतं नृणाम् । ते त्वदीये द्विजा: काले अधुना चाश्रिता मखाम्[९] ॥

---

१. ...पुष्पर्षिभोजना: ❋ २. च नङ्क्ष्यन्ति ❋ ३. शीतवातातपग्रीष्महिमै: ❋
४. तृषया/क्षुत्तृड्भ्याम् ❋ ५. तृषा ❋ ६. असिनाऽसाधुदमनम् ७. विचरन्नसिना ❋
८. उदिते ❋ ९. मघाम् ❋

विष्णोर्भगवतो भागः कृष्णाख्योऽसौ दिवं गतः । तदाऽविशत् कलिर्लोकं पापे यद् रमते जनः ॥

यावत् स पादपद्माभ्यां स्पृशन्नास्ते रमापतिः । तावत् कलिर्वै पृथिवीं पराक्रान्तुं न चाशकत् ॥ ३० ॥

यदा देवर्षयः सप्त मखासु[१] विचरन्ति हि । तदा प्रवृत्तस्तु कलिर्द्वादशाब्दशतात्मकः ॥ ३१ ॥

यदा मखाभ्यो यास्यन्ति पूर्वाषाढां महर्षयः । तदा नन्दात् प्रभृत्येषः कलिर्वृद्धिं गमिष्यति ॥ ३२ ॥

यस्मिन् कृष्णो दिवं यातस्तस्मिन्नेव तदाऽहनि । प्रतिपन्नं कलियुगमिति प्राहुः पुराविदः ॥ ३३ ॥

दिव्याब्दानां सहस्रे तु प्रतियाते पुनः कृतम् । भविष्यति यदा नृणां मन आत्मप्रकाशकम् ॥ ३४ ॥

इत्येवं मानवो वंशो यथा सङ्ख्यायते भुवि । तथा विट्शूद्रविप्राणां वंशा ज्ञेया युगेयुगे ॥ ३५ ॥

एतेषां नामलिङ्गानां पुरुषाणां महात्मनाम् । कथामात्रावशिष्टानां कीर्तिरिव स्थिता भुवि ॥ ३६ ॥

देवापिः शन्तनोर्भ्राता मरुश्चेक्ष्वाकुवंशजः[२] । कलापग्राम आसाते महायोगबलान्वितौ ॥ ३७ ॥

ताविहैत्य कलेरन्ते वासुदेवानुशिक्षितौ । वर्णाश्रमयुतं धर्मं पूर्ववत् प्रथयिष्यतः ॥ ३८ ॥

कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् । अनेन क्रमयोगेन भुवि प्राणिषु वर्तते ॥ ३९ ॥

राजन्नेते मया प्रोक्ता नरदेवास्तथा परे । भूमौ ममत्वं कृत्वाऽन्ते हित्वेमां निधनं गताः ॥ ४० ॥

कृमिविड्भस्मसञ्ज्ञान्ते राजनाम्नोऽपि यस्य च । भूतध्रुङ् मनुते स्वार्थं किं वेद निरयो यतः॥ ४१ ॥

कथं सेयमखण्डा भूः पूर्वैर्मत्पुरुषैर्धृता । मत्पुत्रस्य च पौत्रस्य मत्पूर्वा वंशजस्य च ॥ ४२ ॥

तेजोऽबन्नात्मकं[३] कायं गृहीत्वाऽऽत्मतया मुधा । महीं ममतया चोभौ[४] हित्वाऽन्तेऽदर्शनं गताः ॥

येये भूपतयो राजन् भुञ्जते भुवमोजसा । कालेन ते कृताः सर्वे कथामात्राः कथासु च ॥ ४४ ॥

**॥ इति श्रीमद्भागवते द्वादशस्कन्धे द्वितीयोऽध्यायः ॥**

---

**श्रीशुक उवाच**

दृष्ट्वाऽऽत्मनिजयव्यग्रान्[५] नृपान् हसति भूरियम् । अहो मां विजिगीषन्ति मृत्योः क्रीडनका नृपाः ॥

काम एष नरेन्द्राणां मोघः स्याद् विदुषामपि । जलफेनोपमे पिण्डे येन विस्रम्भिता नृपाः ॥ २ ॥

पूर्वं निर्जित्य षड्वर्गं जेष्यामो राजमन्त्रिणः । ततः सचिवपौराप्तकरीन्द्रानथ कण्टकान्[६] ॥ ३ ॥

---

१. मघासु  २. मरुश्चेक्ष्वाकुवंशजः  ३. तेजोऽबन्नमिदम्/तेजोऽबन्नमयम् ❋

४. चामी ❋  ५. आत्मनिर्जयव्यग्रान् ❋  ६. ...करीन्द्रानश्वकण्टकान् ❋

एवं क्रमेण जेष्यामः पृथ्वीं सागरमेखलाम् । इत्याशाबद्धहृदया न पश्यन्त्यन्तिकेऽन्तकम्[१] ॥ ४ ॥
समुद्रावरणां जित्वा मां विशन्त्यब्धिमोजसा । कियदात्मजयस्यैतन्मुक्तिरात्मजये फलम् ॥ ५ ॥
यां विसृज्यैव मनवस्तत्सुताश्च कुरूद्वह । गता यथागतं युद्धे तां मां जेष्यन्त्यबुद्धयः ॥ ६ ॥
मत्कृते पितृपुत्राणां भ्रातॄणां चापि विग्रहः । जायते ह्यसतां राज्ये ममताबद्धचेतसाम् ॥ ७ ॥
ममैवेयं मही कृत्स्ना न ते मूढेति वादिनः । स्पर्धमाना मिथो घ्नन्ति म्रियन्ते मत्कृते नृपाः ॥ ८ ॥
पृथुः पुरूरवा गाधिर्भरतो नहुषोऽर्जुनः । मान्धाता सगरो रामः खट्वाङ्गो धुन्धुहा रघुः ॥ ९ ॥
तृणबिन्दुर्ययातिश्च शर्यातिः शन्तनुर्गयः । भगीरथः कुवलयाश्वः ककुत्स्थो नैषधो नृपः ॥ १० ॥
हिरण्यकशिपुर्वृत्रो रावणो लोकरावणः । नमुचिः शम्बरो भौमो हिरण्याक्षोऽथ तारकः ॥ ११ ॥
अन्ये च बहवो दैत्या राजानो ये प्रजेश्वराः[२] । सर्वे सर्वविदः शूराः सर्वे सर्वजितोऽजिताः ॥ १२ ॥
ममतां मय्यमर्त्यायां कृत्वा वै मत्यधर्मिणः[३] । कथावशेषाः कालेन ह्यकृतार्थाः कृता अहो ॥ १३ ॥

कथा इमास्ते कथिता महीयसां विताय लोकेषु यशः परेयुषाम् ।
विज्ञानवैराग्यविवक्षया विभो वचोविभूतीर्नतु[४] पारमार्थ्यम् ॥ १४ ॥
यत्रोत्तमश्लोकगुणानुवादः सङ्गीयतेऽभीक्ष्णममङ्गळघ्नः ।
तमेव नित्यं शृणुतादभीक्ष्णं[५] कृष्णेऽमलां भक्तिमभीप्समानः ॥ १५ ॥

**राजोवाच**

केनोपायेन भगवन् कलेर्दोषान् कलौ जनाः । विधमिष्यन्त्युपचितांस्तन्मे[६] ब्रूहि यथा मुने ॥ १६ ॥
युगानि युगधर्मांश्च[७] मानं प्रळयकल्पयोः । कालस्येश्वररूपस्य गतिं विष्णोर्महात्मनः ॥ १७ ॥

**श्रीशुक उवाच**

कृते प्रवर्तते धर्मश्चतुष्पात् तज्जनैर्धृतः । सत्यं दया तपो दानमिति पादा विभोर्नृप ॥ १८ ॥
सन्तुष्टाः करुणा मैत्राः शान्ता दान्तास्तितिक्षवः । आत्मारामाः समदृशः प्राय[८] आश्रमिणो जनाः ॥
त्रेतायां धर्मपादानां तुर्यांशो हीयते शनैः । अधर्मपादैरनृतहिंसाऽसन्तोषविग्रहैः ॥ २० ॥
तदा क्रियातपोनिष्ठा नातिहिंस्रा न लम्पटाः । त्रैवर्गिकास्त्रयीवृद्धा वर्णा ब्रह्मोत्तरा नृप ॥ २१ ॥

---

१. न पश्यन्ति हितान्तकम् ❋ २. जनेश्वराः ३. कृत्वोच्चैर्मत्यधर्मिणः ४. वाचा विभूतीः ❋
५. शृणुतामभीक्ष्णम् ❋ ६. उपचितास्तन्मे ❋ ७. युगमानं च ❋ ८. सर्वे ❋

तपःसत्यदयादानेष्वर्धं ह्रसति द्वापरे । हिंसाऽतुष्ट्यनृतद्वेषैर्धर्मस्याधर्मलक्षणैः ॥ २२ ॥
यशस्विनो महाशालाः स्वाध्यायाध्ययने रताः । आढ्याः कुटुम्बिनो हृष्टा वर्णाः क्षत्रद्विजोत्तमाः ॥
कलौ तु धर्महेतूनां पर्यासोऽधर्महेतुभिः । एधमानैः क्षीयमाणो ह्यन्ते सोपि विनङ्क्ष्यति ॥ २४ ॥
तस्मिन् लुब्धा दुराचारा निर्दयाः शुष्कवैरिणः । दुर्भगा भूरितर्षाश्च[1] शूद्रदासोत्तराः प्रजाः ॥ २५ ॥
सत्वं रजस्तम इति दृश्यन्ते पुरुषे गुणाः । कालसञ्चोदितास्ते वै परिवर्तन्त आत्मनि ॥ २६ ॥
प्रसीदति यदा सत्वं मनोबुद्धीन्द्रियाणि च । तदा कृतयुगं विद्याज्ज्ञाने तपसि यद् रुचिः ॥ २७ ॥
यदा कर्मसु कामेषु[2] भक्तिर्यशसि देहिनाम् । तदा त्रेता रजोवृत्तिरिति जानीत बुद्धिमान् ॥ २८ ॥
यदा लोभस्त्वसन्तोषो मनोऽडम्भोऽथ मत्सरः । कर्माणि चापि काम्यानि द्वापरं तद् रजस्तमः ॥ २९ ॥
यदा मायाऽनृतं तन्द्रा[3] निद्रा हिंसा विषादनम् । शोकमोहौ भयं दैन्यं स कलिस्तामसः स्मृतः ॥
यस्मात् क्षुद्रदृशो मर्त्याः क्षुद्रभाग्या महाशनाः । कामिनो वृत्तिहीनाश्च स्वैरिण्यश्च स्त्रियोऽसतीः ॥
दस्यूत्कृष्टा जनपदा वेदाः पाषण्डदूषिताः । राजानश्च प्रजाभक्षाः शिश्नोदरपरा द्विजाः ॥ ३२ ॥
अव्रता वटवोऽशौचा भिक्षवश्च कुटुम्बिनः । तपस्विनो ग्रामवासा न्यासिनोऽप्यर्थलोलुपाः ॥ ३३ ॥
ह्रस्वकाया महाहारा भूर्यपत्या गतह्रियः । शश्वत्कटुकभाषिण्यश्चौर्यमायोरुसाहसाः ॥ ३४ ॥
पणयिष्यन्ति वै क्षुद्राः किराटान् कूटकारिणः । अनापद्यपि मंस्यन्ते वार्तां साधुजुगुप्सिताम् ॥ ३५ ॥
पतिं त्यक्ष्यन्ति निर्द्रव्यं भृत्या अप्यखिलोत्तमम् । भृत्यं विपन्नं पतयः कौलं गाश्चापयस्विनीः ॥ ३६ ॥
पितॄन् भ्रातॄन् स्वसृूर्ज्ञातीन् हत्वा सौरतसौहृदाः । श्वशुरस्यालसंवादा दीनाः स्त्रैणाः कलौ नराः ॥
शूद्राः प्रतिग्रहीष्यन्ति तपोवेषोपजीविनः । धर्मं वक्ष्यन्त्यधर्मज्ञा अधिरुह्योत्तमासनम् ॥ ३८ ॥
नित्यमुद्विग्नमनसो दुर्भिक्षकरकर्शिताः । निरन्ने भूतळे राजन्ननावृष्टिभयातुराः ॥ ३९ ॥
वासोऽन्नपानशयनव्यवायस्नानभूषणैः । हीनाः पिशाचसन्दर्शा भविष्यन्ति कलौ प्रजाः ॥ ४० ॥
कलौ काकिणिकेऽप्यर्थे विगृह्य त्यक्तसौहृदाः । त्यक्ष्यन्ति हि प्रियान् प्राणान् हनिष्यन्ति स्वकानपि ॥
न रक्षिष्यन्ति मनुजाः स्थविरौ पितरावपि । पुत्रीं भार्यां च कुलजां[4] क्षुद्राः शिश्नोदरम्भराः ॥ ४२ ॥

कलौ न राजन् जगतां परं गुरुं त्रिलोकनाथानतपादपङ्कजम् ।
प्रायेण मर्त्या भगवन्तमच्युतं यक्ष्यन्ति पाषण्डविभिन्नचेतसः ॥ ४३ ॥

---

१. भूरिदर्पाश्च २. काम्येषु ❋ ३. तन्द्री ❋ ४. पुत्रान् भार्याश्च कुलजाः ❋

यन्नामधेयं म्रियमाण आतुरः पतन् स्खलन् वा विवशो गृणन् पुमान्[१] ।
विमुक्तकर्मार्गळ उत्तमां गतिं प्राप्नोति यक्ष्यन्ति न तं कलौ जनाः ॥ ४४ ॥
पुंसां कलिकृतान् दोषान् द्रव्यदेशात्मसम्भवान् । सर्वं हरति चित्तस्थो भगवान् पुरुषोत्तमः ॥ ४५ ॥
श्रुतः सङ्कीर्तितो ध्यातः पूजितश्चादृतोऽपि वा । नृणां धुनोति भगवान् हृत्स्थो जन्मायुताशुभम् ॥
यथा हेम्नि स्थितो वह्निर्दुर्वर्णं हन्ति धातुजम् । एवमात्मगतो विष्णुर्योगिनामशुभाशयम् ॥ ४७ ॥
विद्यातपःप्राणनिरोधमैत्रीतीर्थाभिषेकव्रतदानजप्यैः ।
नात्यन्तशुद्धिं लभतेऽन्तरात्मा यथा हृदिस्थे भगवत्यनन्ते ॥ ४८ ॥
तस्मात् सर्वात्मना राजन् हृदिस्थं कुरु केशवम् । म्रियमाणो ह्यवहितस्ततो यासि[२] परां गतिम् ॥ ४९ ॥
म्रियमाणैरभिध्यातो भगवान् परमेश्वरः । आत्मभावं नयत्यङ्ग सर्वात्मा सर्वसम्भवः ॥ ५० ॥
कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः[३] । कीर्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् ॥ ५१ ॥
कृते यद् ध्यायतो विष्णुं त्रेतायां यजतो मखैः । द्वापरे परिचर्यायां कलौ तद् हरिकीर्तनात् ॥ ५२ ॥

**॥ इति श्रीमद्भागवते द्वादशस्कन्धे तृतीयोऽध्यायः ॥**

---

**श्रीशुक उवाच**

कालस्ते परमाण्वादिर्द्विपरार्धावधिर्नृप । कथितो युगमानं च शृणु कल्पलयावथ ॥ १ ॥
चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते । स कल्पो यत्र मनवश्चतुर्दश विशां पते ॥ २ ॥
यदन्ते[४] प्रळयस्तावान् ब्राह्मी रात्रिरुदाहृता । त्रयो लोका इमे यत्र कल्प्यन्ते प्रळयाय हि ॥ ३ ॥
एष नैमित्तिकः प्रोक्तः प्रळयो यत्र विश्वसृक् । शेतेऽनन्तासनो विश्वमात्मसात् कृत्य चात्मभूः ॥ ४ ॥
द्विपरार्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः । तदा प्रकृतयः सप्त कल्प्यन्ते प्रळयाय वै ॥ ५ ॥
एष प्राकृतिको राजन् प्रळयो यत्र लीयते । आण्डकोशस्तु सङ्घातो विघात उपसादिते ॥ ६ ॥
पर्जन्यः शतवर्षाणि भूमौ राजन् न वर्षति । तदा निरन्ने ह्यन्योन्यं भक्ष्यमाणाः क्षुधार्दिताः ॥ ७ ॥
क्षयं यास्यन्ति शनकैः कालेनोपद्रुताः प्रजाः* । सामुद्रं दैहिकं भौमं रसं सांवर्तको[५] रविः ॥ ८ ॥

---

१. नरः ❋ २. याति ❋ ३. महागुणः ❋ ४. तदन्ते ❋
५. संवर्तकः ❋ एवं सर्वत्रान्यत्रापि । * श्लोकार्धमिदं प्राचीनकोशेष्वेव दृश्यते ।

रश्मिभिः पिबते घोरैः सर्वं नैव विमुञ्चति । ततः सांवर्तको वह्निः सङ्कर्षणमुखोत्थितः । ॥ ९ ॥
दहत्यनिलवेगोत्थः शून्यान् भूविवरानथ । उपर्यधः समन्ताच्च शिखाभिर्वह्निसूर्ययोः ॥ १० ॥
दह्यमानं विभात्यण्डं दग्धगोमयपिण्डवत् । ततः प्रचण्डपवनो वर्षाणामधिकं शतम् ॥ ११ ॥
परः सांवर्तको वाति धूम्रं खं रजसा वृतम् । ततो मेघकुलान्यङ्ग चित्रवर्णान्यनेकशः ॥ १२ ॥
शतवर्षाणि वर्षन्ति नदन्ति रभसस्वरैः । तत एकोदकं विश्वं ब्रह्माण्डविवरान्तरम् ॥ १३ ॥
तदा भूमेर्गन्धगुणं ग्रसन्त्याप उपप्लवे । ग्रस्तगन्धा तु पृथिवी प्रळयत्वाय कल्प्यते[१] ॥ १४ ॥
अपां रसमथो तेजो विलीयन्तेऽथ नीरसाः[२] । ग्रसते तेजसो रूपं वायुस्तद्रहितं तदा ॥ १५ ॥
लीयते चानिले तेजो वायोः खं ग्रसते गुणम् । स वै विशति खं राजन् ततश्च नभसो गुणम्॥ १६ ॥
शब्दं ग्रसति भूतादिर्नभस्तमनु लीयते । तैजसानीन्द्रियाण्यङ्ग देवा वैकारिका गुणैः ॥ १७ ॥
महान् ग्रसत्यहङ्कारं गुणाः सत्वादयश्च तम् । ग्रसतेऽव्याकृतं बीजं गुणान् कालेन चोदितम्॥ १८ ॥
न तस्य कालावयवैः परिणामादयो गुणाः । अनाद्यनन्तमव्यक्तं नित्यं कारणमव्ययम् ॥ १९ ॥

न यत्र वाचो न मनो न सत्वं तमो रजो वा महदादयोऽमी ।
न प्राणबुद्धीन्द्रियदेवता वा न सन्निवेशः खलु लोककल्पः ॥ २० ॥
न स्वप्नजाग्रन्न च तत् सुषुप्तं न खं जलं भूरनिलोऽग्निरर्कः ।
सुषुप्तवच्छून्यवदप्रतर्क्यं तन्मूलभूतं पदमामनन्ति ॥ २१ ॥

लयः प्राकृतिको ह्येष पुरुषाव्यक्तयोर्यदा । शक्तयः सम्प्रलीयन्ते विवशाः कालविद्रुताः ॥ २२ ॥
बुद्धीन्द्रियार्थरूपेण ज्ञानं भाति तदाश्रयम् । अन्वयव्यतिरेकाभ्यामाद्यन्तवदवस्तु यत् ॥ २३ ॥
दीपश्चक्षुस्तथा रूपं ज्योतिषो न पृथग् भवेत् । एवं धीः खानि मात्राश्च न स्युरप्युत मारुतात्॥ २४ ॥
बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति चोच्यते । मायामात्रमिदं राजन् नानात्वं प्रत्यगात्मनि ॥ २५ ॥
यथा जलधरा व्योम्नि भवन्ति न भवन्ति च । ब्रह्मणीदं तथा विश्वमुपयात्युदयाप्ययम् ॥ २६ ॥
एते ह्यवयवाः प्रोक्ताः सर्वावयविनामिह । विनाऽर्थेन प्रतीयेरन् पटस्येवाङ्ग तन्तवः ॥ २७ ॥
यत् सामान्यविशेषाभ्यामुपलभ्येत स भ्रमः । अन्योन्यापाश्रयात् सर्वमाद्यन्तवदवस्तु च ॥ २८ ॥
विकारः ख्यायमानोऽपि प्रत्यगात्मानमन्तरा । न निरूप्योऽस्त्यणुरपि स्याच्चेत् स भ्रम आत्मनः ॥
न हि सत्यस्य नानात्वमविद्वान् यदि मन्यते । नानात्वं छिद्रयोर्यद्वज्ज्योतिषोर्वा तयोरपि ॥ ३० ॥

---

१. कल्पते इत्यर्वाचीनकोशेषु सर्वत्र । एवं कल्पन्त इति च । २. ता लीयन्तेऽथ नीरसाः ❋

यथा हिरण्यं बहुधा समीयते नृभिः क्रियाभिर्व्यवहारवर्त्मसु ।
एवं वचोभिर्भगवानधोक्षजो व्याख्यायते वैदिकलौकिकैर्जनैः ॥ ३१ ॥
यथा घनोऽर्कप्रभवोऽर्कदर्शितो ह्यर्कांशभूतस्य च चक्षुषस्तमः ।
एवं त्वहं ब्रह्मगुणस्तदीक्षितो ब्रह्मांशकस्यात्मन आत्मबन्धनः[1] ॥३२ ॥
घनो यदाऽर्कप्रभया विदीर्यते चक्षुःस्वरूपं रविमीक्षते तदा ।
यदा ह्यहङ्कार उपाधिरात्मनो जिज्ञासया नश्यति तर्ह्यनुस्मरेत् ॥ ३३ ॥
यदैवमेतेन विवेकहेतिना मायामयाहङ्करणात्मबन्धनम् ।
छित्वाऽच्युतात्मानुभवोऽवतिष्ठते तमाहुरात्यन्तिकमङ्ग सम्प्लवम् ॥ ३४ ॥
नित्यदा सर्वभूतानां ब्रह्मादीनां परन्तप । उत्पत्तिप्रळयावेके सूक्ष्मज्ञाः सम्प्रचक्षते ॥ ३५ ॥
कालस्रोतोजवेनाशु ह्रियमाणस्य नित्यदा । परिमाणाद्यवस्थास्ता जन्मप्रळयहेतवः ॥ ३६ ॥
अनाद्यन्तवताऽनेन कालेनेश्वरमूर्तिना । अवस्था नैव दृश्यन्ते वियति ज्योतिषामिव ॥ ३७ ॥
नित्यो नैमित्तिकश्चैव तथा प्राकृतिको लयः । आत्यन्तिकश्च कथितः कालस्य गतिरीदृशी ॥ ३८ ॥
एताः कुरुश्रेष्ठ जगद्विधातुर्नारायणस्याखिलसत्वधाम्नः ।
लीलाकथास्ते कथिताः समासतः कात्स्न्र्येन नाजोऽप्यभिधातुमीशः ॥ ३९ ॥
संसारसिन्धुमतिदुस्तरमुत्तितीर्षोर्नान्यः प्लवो भगवतः पुरुषोत्तमस्य ।
लीलाकथारसनिषेवणमन्तरेण पुंसो भवेद् विविधदुःखसमर्दितस्य[2] ॥ ४० ॥
पुराणसंहितामेतां ऋषिर्नारायणोऽव्ययः । नारदाय पुरा प्राह कृष्णद्वैपायनाय सः ॥ ४१ ॥
स वै मह्यं महाराज भगवान् बादरायणः । इमां भागवतीं प्रीतः संहितां वेदसम्मिताम् ॥ ४२ ॥
एतां वक्ष्यत्यसौ सूत ऋषिभ्यो निमिशालये । दीर्घसत्रे कुरुश्रेष्ठ सम्पृष्टः शौनकादिभिः ॥ ४३ ॥
अत्रानुवर्ण्यतेऽभीक्ष्णं विश्वात्मा भगवान् हरिः । यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसम्भवः ॥ ४४ ॥
त्वं च राजन् मरिष्येति पशुबुध्दिमिमां जहि । न जातः प्रागभूतोऽद्य देहवत् त्वं न नङ्क्ष्यसि ॥ ४५ ॥
न भविष्यसि भूत्वा त्वं पुत्रपौत्रादिरूपवान् । बीजाङ्कुरवद् देहादेर्व्यतिरिक्तो यथाऽनलः ॥ ४६ ॥
स्वप्ने यथा शिरश्छेदः पञ्चत्वाद्यात्मनस्तथा । यस्मात् पश्यसि[3] देहस्य तत आत्मा ह्यजोऽमरः ॥

१. आत्मबन्धः ❋ २. ...दुःखदवार्दितस्य ३. पश्यति ❋

घटे भिन्ने यथाऽकाश आकाशः स्याद् यथा पुरा । एवं देहे मृते जीवो ब्रह्म सम्पद्यते पुनः ।। ४८ ।।

मनः सृजति वै देहान् गुणान् कर्माणि चात्मनः । तन्मनः सृजते माया[१] ततो जीवस्य संसृतिः ।।

स्नेहाधिष्ठानवर्त्यग्निसंयोगो यावदीयते । तावद् दीपस्य दीपत्वमेवं देहकृतो[२] भवः ।। ५० ।।

रजःसत्त्वतमोवृत्त्या जायेतैधेत नश्यति । न तत्रात्मा स्वयञ्ज्योतिर्यो व्यक्ताव्यक्तयोः परः।। ५१ ।।

आकाशवद् ध्रुवाधारो ध्रुवो नानामितस्ततः[३] । एवमात्मानमात्मस्थमात्मनैवामृश प्रभो ।। ५२ ।।

बुद्ध्याऽनुमानगर्भिण्या वासुदेवानुचिन्तया । चोदितो विप्रवाक्येन न त्वां धक्ष्यति तक्षकः ।। ५३ ।।

मृत्यवो नोपसर्पन्ति मृत्यूनां मृत्युमीश्वरम् । अहं ब्रह्म परं धाम ब्रह्माहं परमं पदम् ।। ५४ ।।

एवं समीक्षन्नात्मानमात्मन्याधाय निष्कळे ।। ५५ ।।

दशन्तं[४] तक्षकं पादे लेलिहानं विषाननैः । न द्रक्ष्यसि शरीरं च विश्वं च पृथगात्मनः ।। ५६ ।।

एतत् ते कथितं तात यथा त्वं पृष्टवान् नृप । हरेर्विश्वात्मनश्चेष्टां[५] किं भूयः श्रोतुमिच्छसि।। ५७ ।।

**।। इति श्रीमद्भागवते द्वादशस्कन्धे चतुर्थोऽध्यायः ।।**

---

**सूत उवाच**

एतन्निशम्य मुनिनाऽभिहितं परीक्षिद् व्यासात्मजेन निखिलात्मदृशा समेन ।

तत्पादमूलमुपसृत्य नतेन मूर्ध्ना बध्दाञ्जलिस्तमिदमाह स विष्णुरातः ।। १ ।।

**परीक्षिदुवाच**

सिद्धोऽस्म्यनुगृहीतोऽस्मि भवता करुणात्मना । श्रावितो यच्च मे साक्षादनादिनिधनो हरिः ।। २ ।।

नात्यद्भुतमिदं मन्ये महतामच्युतात्मनाम् । दीनेषु[६] तापतप्तेषु भूतेषु यदनुग्रहः ।। ३ ।।

पुराणसंहितामेतामश्रौषं भवतो ह्यहम् । यस्यां खलूत्तमश्लोको भगवाननुवर्ण्यते ।। ४ ।।

भगवंस्तक्षकादिभ्यो मृत्युभ्यो न बिभेम्यहम् । प्रविष्टो ब्रह्म निर्वाणमभयं दर्शितं त्वया ।। ५ ।।

अनुजानीहि मां ब्रह्मन् वाचं यच्छाम्यधोक्षजे । मुक्तकामाशयं चेतः प्रवेश्य विसृजाम्यसून् ।। ६ ।।

अज्ञानं च निरस्तं मे ज्ञानविज्ञाननिष्ठया । भवता दर्शितं क्षेमं परं भगवतः पदम् ।। ७ ।।

---

१. मायाम् ❋ २. देहभृतः ❋ ३. नानायितस्ततः ❋ ४. दंशन्तम् ❋ ५. चेष्टा/चेष्टाः ❋
६. अज्ञेषु ❋

## सूत उवाच

इत्युक्तस्तमनुज्ञाय भगवान् बादरायणिः । जगाम भिक्षुभिः साकं नरदेवेन पूजितः ॥ ८ ॥
परीक्षिदपि राजर्षिरात्मन्यात्मानमात्मना । समाधाय परं दध्यावस्पन्दासुर्यथा तरुः ॥ ९ ॥
प्राक्कूले बर्हिष्यासीनो गङ्गाकूल उदङ्मुखः । ब्रह्मभूतो महायोगी निःसङ्गश्छिन्नसंशयः ॥ १० ॥
तक्षकः प्रहितो विप्राः क्रुद्धेन द्विजसूनुना । हन्तुकामो नृपं गच्छन् ददर्श पथि काश्यपम् ॥ ११ ॥
तं तर्पयित्वा द्रविणैर्निवर्त्य विषहारिणम् । द्विजरूपप्रतिच्छन्नः कामरूप्यदशन्नृपम्[१] ॥ १२ ॥
ब्रह्मभूतस्य राजर्षेर्देहोऽहिगरळाग्निना । बभूव भस्मसात् सद्यः पश्यतां सर्वदेहिनाम् ॥ १३ ॥
हाहाकारो महानासीद् भुवि खे दिक्षु सर्वतः । विस्मिता अभवन् सर्वे देवासुरनरादयः ॥ १४ ॥
देवदुन्दुभयो नेदुर्गन्धर्वाप्सरसो जगुः । ववृषुः[२] पुष्पवर्षाणि विबुधाः साधुवादिनः ॥ १५ ॥
जनमेजयः स्वपितरं श्रुत्वा तक्षकभक्षितम् । तदाऽऽजुहाव सङ्क्रुद्धः सर्पान् सत्रे महाविषान् ॥ १६ ॥
सर्पसत्रे समिद्धेऽग्नौ दह्यमानान् महोरगान् । दृष्ट्वेन्द्रं सर्प उद्विग्नस्तक्षकः शरणं ययौ ॥ १७ ॥
अपश्यंस्तक्षकं तत्र राजा पारीक्षितो द्विजान्[३] । उवाच तक्षकः कस्मान्न दह्येतोरगाधमः ॥ १८ ॥
तं गोपायति राजेन्द्र शक्रः शरणमागतम् । तेन संस्तम्भितः सर्पस्तस्मान्नाग्नौ पतत्यसौ ॥ १९ ॥
पारीक्षित इति श्रुत्वा प्राहर्त्विज उदारधीः । सहेन्द्रस्तक्षको विप्रा नाग्नौ किमिति पात्यते[४] ॥ २० ॥
तच्छ्रुत्वा जुहुवुर्विप्राः सहेन्द्रं तक्षकं मखे । तक्षकाशु पतस्वेह सहेन्द्रेण मरुत्वता ॥ २१ ॥
इति ब्रह्मोदिताक्षेपैः स्थानादिन्द्रः प्रचालितः । बभूव सम्भ्रान्तमतिः सविमानः सतक्षकः ॥ २२ ॥
तं पतन्तं विमानेन सहतक्षकमम्बरात् । विलोक्याङ्गिरसः प्राह राजानं तं बृहस्पतिः ॥ २३ ॥
नैष त्वया मनुष्येन्द्र वधमर्हति सर्पराट् । अनेन पीतममृतमथायमजरामरः ॥ २४ ॥
जीवितं मरणं जन्तोर्गतिः स्वेनैव कर्मणा । राजंस्तेन विना नान्यः प्रदाता सुखदुःखयोः ॥ २५ ॥
सर्पचोराग्निविद्युद्भ्यः क्षुत्तृड्व्याध्यादिभिर्नृप । पञ्चत्वमृच्छते जन्तुर्भुङ्क्त आरब्धकर्म च ॥ २६ ॥
तस्मात् सत्रमिदं राजन् संस्थीयेताभिचारिकम्[५] । सर्पा अनागसो दग्धा जनैर्दिष्टं हि भुज्यते ॥ २७ ॥
इत्युक्तः स तथेत्याह महर्षेर्मानयन् वचः । सर्पसत्रादुपरतः पूजयामास वाक्पतिम् ॥ २८ ॥

---

१. कामरूपोऽदशन्नृपम् ❋ २. ववर्षुः ❋ ३. द्विजाः ❋ ४. पात्यताम् ❋
५. आभिचारकम् ❋

सैषा विष्णोर्महामाया बाध्यबाधकलक्षणा । यया मुह्यत्यसावात्मा भूतेषु गुणवृत्तिभिः ॥ २९ ॥

न यत्र दुर्भाव्यतया विराजते मायात्मवादेऽसकृदात्मवादिभिः ।
न यद्विवादो विविधस्तदाश्रयो मनश्च सङ्कल्पविकल्पवृत्ति यत् ॥ ३० ॥
न यत्र सृज्यं सृजतोभयोः परं श्रेयश्च जीवस्त्रिभिरन्वितः स्वयम् ।
तदेतदुत्सादितबाध्यबाधकं निषिध्य चोर्मीन् विरमेत तन्मुनिः ॥ ३१ ॥
परं पदं वैष्णवमामनन्ति यन्नेतिनेतीत्यतदुत्सिसृक्षवः ।
विसृज्य दौरात्म्यमनन्यसौहृदा हृदोपगुह्यावसितं समाहितैः ॥ ३२ ॥

तदेतदधिगच्छति विष्णोर्यत् परमं पदम् । अहं ममेति दौर्जन्यं न येषां देहगेहजम् ॥ ३३ ॥
अतिवादांस्तितिक्षेत नावमन्येत कश्चन । नचेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥ ३४ ॥
नमो भगवते तस्मै कृष्णायाकुण्ठमेधसे । यत्पादाम्बुरुहध्यानान्संहितामध्यगामिमाम् ॥ ३५ ॥

**॥ इति श्रीमद्भागवते महापुराणे वैयासक्यामष्टादशसाहस्र्यां संहितायां द्वादशस्कन्धे पञ्चमोऽध्यायः ॥**

---

**शौनक उवाच**

पैलादिभिर्व्यासशिष्यैर्वेदाचार्यैर्महात्मभिः । वेदा वै कतिधा व्यस्ता एतत् सौम्याभिधेहि नः ॥ १ ॥

**सूत उवाच**

समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः । हृदाकाशादभून्नादो[1] वृत्तिरोधाद् विभाव्यते ॥ २ ॥
यदुपासनया ब्रह्मन् योगिनो मलमात्मनः । द्रव्यक्रियाकारकाख्यं धूत्वा यान्त्यपुनर्भवम् ॥ ३ ॥
ततोऽभूत् त्रिवृदोङ्कारो यो व्यक्तप्रभवः स्वराट् । यत्तल्लिङ्गं भगवतो ब्रह्मणः परमात्मनः ॥ ४ ॥
शृणोति य इमं स्फोटं सुप्तःश्रोतेव शून्यदृक् । येन वाग् व्यज्यते यस्य व्यक्तिराकाश आत्मनः ॥ ५ ॥
स्वधाम्नो ब्रह्मणः साक्षाद् वाचकःपरमात्मनः । स सर्वमन्त्रोपनिषद्वेदबीजं सनातनम् ॥ ६ ॥
तस्य ह्यासंस्त्रयो वर्णा अकाराद्या भृगूद्वह । धार्यन्ते यैस्त्रयो भावा गुणानामर्थवृत्तयः ॥ ७ ॥
ततोऽक्षरसमाम्नायमसृजद् भगवानजः । अन्तःस्थोष्मस्वरस्पर्शह्रस्वदीर्घादिलक्षणम् ॥ ८ ॥
तेनासौ चतुरो वेदांश्चतुर्भिर्वदनैर्विभुः । सव्याहृतिकान्[2] सोङ्कारांश्चातुर्होत्रविवक्षया ॥ ९ ॥

---

१. हृद्याकाशादभून्नादः ❋ २. सव्याहृतींश्च ❋

पुत्रानध्यापयमास महर्षीन् ब्रह्मकोविदान् । ते तु धर्मोपदेष्टारः स्वपुत्रेभ्यः समादिशन् ॥ १० ॥
ते परम्परया प्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः । चतुर्युगेष्वथ व्यस्ता द्वापरादौ महर्षिभिः ॥ ११ ॥
क्षीणायुषः क्षीणसत्वान् दुर्मेधान् वीक्ष्य कालतः । वेदान् ब्रह्मर्षयो व्यंस्यन् हृदिस्थाच्युतनोदिताः[1] ॥
अस्मिन्नप्यन्तरे ब्रह्मन् भगवान् लोकभावनः । ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये ॥ १३ ॥
पराशरात् सत्यवत्यामंशांशकलया विभुः । अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम् ॥ १४ ॥
ऋगथर्वयजुःसाम्नां राशीनुद्धृत्य वर्गशः । चतस्रः संहिताश्चक्रे सूत्रैर्मणिगणानिव ॥ १५ ॥
तासां स चतुरः शिष्यानुपहूय महामतिः । एकैकां संहितां ब्रह्मन्नेकैकस्मै ददौ प्रभुः ॥ १६ ॥
पैलाय संहितामाद्यां बह्वृचाख्यामुवाच ह । वैशम्पायनसंज्ञाय निगदाख्यं यजुर्गणम् ॥ १७ ॥
साम्नां जैमिनये प्राह तथा च्छन्दोगसंहिताम् । अथर्वाङ्गिरसां नाम स्वशिष्याय सुमन्तवे ॥ १८ ॥
पैलः स्वसंहितामूचे इन्द्रप्रमतये[2] मुनिः । बाष्कळाय च सोऽप्याह शिष्येभ्यः संहितां स्वकाम् ॥
चतुर्धा व्यस्य बोध्याय याज्ञवल्क्याय भार्गव । पराशरायाग्निमित्रे[3] इन्द्रप्रमतिरात्मवान् ॥ २० ॥
अध्यापयत् संहितां स्वां माण्डूकेयमृषिं कविम् । तस्य शिष्यो वेदमित्र सौभर्यादिभ्य ऊचिवान् ॥
शाकल्यस्तत्सुतः स्वां तु पञ्चधा व्यस्य संहिताम् । वात्स्यमौद्गल्यशालीयगोसत्यशिशिरेष्वधात् ॥
जातूकर्ण्यश्च[4] तच्छिष्यः सनिरुक्तां स्वसंहिताम् । व्यलीकपैङ्गिपैलालविरजेभ्यो[5] ददौ मुनिः ॥
बाष्कळिः प्रतिशाखाभ्यो वालखिल्याख्यसंहिताम् । चक्रे बालायनिगार्ग्यकासाराश्चैव तां दधुः[6] ॥
बह्वृचाः संहिता ह्येता एभिर्ब्रह्मर्षिभिर्धृताः । श्रुत्वैतच्छन्दसां व्यासं सर्वपापैः प्रमुच्यते ॥ २५ ॥
वैशम्पायनशिष्या वै चरकाध्वर्यवोऽभवन् । यच्चेरुर्ब्रह्महत्यांहःक्षपणाय गुरोर्व्रतम् ॥ २६ ॥
याज्ञवल्क्यस्तु तच्छिष्य आहांहो[7] भगवन् कियत् । चरितेनाल्पसाराणां चरिष्येऽहं सुदुश्चरम् ॥
इत्युक्तो गुरुरप्याह कुपितो याह्यलं त्वया । विप्रावमन्त्रा शिष्येण मदधीतं त्यजाश्विति ॥ २८ ॥
देवरातसुतः सोऽथ च्छर्दित्वा यजुषां गणम् । ततो गतोऽथ मुनयो ददृशुस्तान् यजुर्गणान् ॥२९ ॥
भूत्वा तित्तिरयो ब्रह्मन् तल्लोलुपतयाऽऽददुः । तैत्तिरीया इति यजुःशाखा आसन् सुपेशलाः ॥ ३० ॥
याज्ञवल्क्यस्ततो ब्रह्मन् छन्दांस्यधिगवेषयन् । गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम् ॥ ३१ ॥

---

१. ....चोदिताः ❋ २. इन्द्रप्रमितये ३. अग्निमात्रे ❋ ४. जातूकर्णश्च ❋
५. बालाकपैङ्गिवेताळविरजेभ्यः ❋ /व्यलीकयोगपैलालविरजेभ्यः ६. ता दधुः ❋ ७. आहाहो ❋

**याज्ञवल्क्य उवाच**

ॐ नमो भगवते आदित्यायाखिलजगदात्मस्वरूपेण कालरूपेण च चतुर्विधभूतनिकायानां ब्रह्मादिस्तम्बपर्यन्तानामन्तर्हृदयेषु बहिरप्याकाश इवोपाधिना व्यवधीयमानो भगवानेक एव क्षणलवनिमेषाद्यवयवोपचितसंवत्सरगणेन तोयादानविसर्गाभ्यामिमां लोकयात्रामनुवहति ॥ ३२ ॥

यदिह वाव[१] विबुधर्षभ सवितरदस्तपत्यनुसवनमहरहराम्नायविधिनोपतिष्ठमानानामखिलदुरित-व्रजिनबीजावभर्जनं भगवतः समभिधीमहि तपनमण्डलम् ॥ ३३ ॥

य इह वाव स्थिरचरनिकराणां स्वनिकेतनानां[२] मनइन्द्रियासुगणाननात्मनस्तत्वं स्वयमात्माऽन्तर्यामी प्रचोदयति ॥३४ ॥

य एवेमं लोकमतिकराळवदनान्धकारसञ्ज्ञाजगरगृहीतं मृतकमिवाचेतनमवलोक्यानुकम्पया परमकारुणिक ईक्षयैवोत्थाप्याहरहरनुसवनं श्रेयसि स्वधर्माख्य आत्मावस्थाने प्रवर्तयत्यनिमिषाधि-पतिरसाधूनां भयमुदीरयन्नटति परित आशापालैस्तत्र तत्र कमलकोशाञ्जलिभिरुपहृतार्हणः[३]॥ ३५ ॥

अथ ह भगवंस्तव चरणनळिनयुगळं त्रिभुवनगुरुभिरभिवन्दितमयातयामयजुःकाम उपसरामीति ॥ ३६ ॥

**सूत उवाच**

एवं स्तुतः स भगवान् वाजिरूपधरो रविः[४]। यजूंष्ययातयामानि मुनयेऽदात् प्रसादितः ॥३७ ॥
यजुर्भिरकरोच्छाखा दशपञ्च च तैर्विभुः। जगृहुर्वाजसन्यस्ताः काण्वमाध्यन्दिनादयः ॥ ३८ ॥
जैमिनेः सामगस्यासीत् सुमन्तुस्तनयो मुने। सुमन्वांस्तत्सुतस्ताभ्यामेकैकां प्राह संहिताम् ॥ ३९ ॥
सुकर्मा चापि तच्छिष्यः सामवेदतरोर्महान्। सहस्रं संहिताभेदं[५] चक्रे साम्नां ततो द्विज ॥ ४० ॥
हिरण्यनाभः कौसल्यः पौष्यञ्जिश्च[६] सुकर्मणः। शिष्यौ जगृहतुश्चान्य आवन्त्यो ब्रह्मवित्तमः ॥
उदीच्याः सामगाः शिष्या आसन् पञ्चशतानि वै। पौष्यञ्ज्यावन्त्ययोश्चापि तांश्चोदीच्यान् प्रचक्षते ॥
[७]लौगाक्षिर्लाङ्गलिः कुल्यः कुसीदः कुक्षिरेव च। पौष्यञ्जिशिष्या जगृहुः संहितास्ते शतं शतम्[८] ॥
कृतो हिरण्यनाभस्य चतुर्विंशतिसंहिताः। शिष्य ऊचे स्वशिष्येभ्यः शेषा आवन्त्य आत्मवान् ॥

---

१. यदुत वाव * २. निजनिकेतनानाम् * ३. उपाकृतार्हणः * ४. हरिः *
५. सहस्रसंहिताभेदम् * ६. पौष्पिञ्जिश्च * एवमग्रेऽपि ७. लोकाक्षिः * ८. संहितां वै शतंशतम् *

अथर्ववित् सुमन्तुश्च शिष्यमध्यापयत् स्वकाम्। संहितां सोऽपि पथ्याय वेददर्शाय चोक्तवान् ॥ ४५ ॥
शौक्लायनिर्ब्रह्मवालिर्मोदोषः[1] पिप्पलायनिः। वेददर्शस्य शिष्यास्ते पथ्यशिष्यानथो शृणु
कुमुदः शौनको[2] ब्रह्मन् जाजलिश्चाप्यथर्ववित् ॥ ४६ ॥
बभ्रुः शिष्योऽथाङ्गिरसः सैन्धवायन एव च। अधीयेतां संहिते द्वे सावर्ण्याद्यास्तथा परे ॥ ४७ ॥
नक्षत्रकल्पः शान्तिश्च[3] काश्यपाङ्गिरसादयः। एते आथर्वणाचार्याः शृणु पौराणिकान् मुने ॥ ४८ ॥
त्रय्यारुणिः काश्यपश्च सावर्णिरकृतव्रणः। शिंशपायनहारीतौ षड् वै पौराणिका इमे ॥ ४९ ॥
अधीयन्त व्यासशिष्यात् संहितां मत्पितुर्मुखात्। एकैकामहमेतेषां शिष्यः सर्वाः समध्यगाम् ॥ ५० ॥
काश्यपोऽहं च सावर्णी रामशिष्योऽकृतव्रणः। अधीमहि व्यासपुत्राच्चतस्रो मूलसंहिताः ॥ ५१ ॥
पुराणलक्षणं ब्रह्मन् ब्रह्मर्षिभिर्निरूपितम्। शृणुष्व बुद्धिमाश्रित्य वेदशास्त्रानुसारतः ॥ ५२ ॥
सर्गश्चैव विसर्गश्च वृत्तिरक्षान्तराणि च। वंशस्तथाऽनुचरितं[4] संस्था हेतुरपाश्रयः ॥ ५३ ॥
दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः। क्वचित् पञ्चविधं ब्रह्मन् महदल्पव्यवस्थया ॥ ५४ ॥
अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः। भूतसूक्ष्मेन्द्रियार्थानां सम्भवः सर्ग उच्यते ॥ ५५ ॥
पुरुषानुगृहीतानामेतेषां वासनामयः। विसर्गो यः समाहारो जीवोऽजीवश्चराचरः ॥ ५६ ॥
वृत्तिर्भूतानि भूतानां चराणामचराणि च। कृतेशेन नृणां तत्र कामाच्चोदनयाऽपि वा ॥ ५७ ॥
रक्षाऽच्युतावतारेहा विश्वस्यानु युगेयुगे। तिर्यङ्मर्त्यर्षिदेवेषु हन्यन्ते यैस्त्रयीद्विषः ॥ ५८ ॥
मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वराः। ऋषयोंऽशावताराश्च ह्येतत् षड्विधमुच्यते ॥ ५९ ॥
राज्ञां मनुप्रसूतानां वंशस्त्रैकालिकोऽन्वयः। वंशानुचरितं तेषां वृत्तं वंशधराश्च ये ॥ ६० ॥
नैमित्तिकः प्राकृतिको नित्य आत्यन्तिको लयः। संस्थेति कविभिः प्रोक्ता चतुर्धाऽस्य स्वभावतः ॥
हेतुर्जीवोऽस्य सर्गादेरविद्याकर्मकारकः। यं वाऽनुशायिनं[5] प्राहुरव्याकृतमुतापरे ॥ ६२ ॥
व्यतिरेकान्वयौ यस्य जाग्रत्स्वप्नसुषुप्तिषु। मायामयासु तद् ब्रह्म जीववृत्तिष्वपाश्रयः ॥ ६३ ॥
पदार्थेषु च यद् द्रव्यं तन्मात्रं रूपनामसु। बीजादिपञ्चतान्तासु ह्यवस्थासु युतायुतम् ॥ ६४ ॥
विरमेत यदा चित्तं हित्वा वृत्तित्रयाश्रयम्। योगेन वा तदाऽऽत्मानं वेद नात्मा निवर्तते ॥ ६५ ॥

---

१. शौलायिनिर्ब्रह्मबलिर्मोदोषः ❋/...ब्रह्मबर्हिर्मोदोषः ❋ २. शुनकः ❋ ३. शान्तश्च ❋
४. वंशो वंशानुचरितम् ❋ ५. अनुशायिनम् ❋

एवंलक्षणलक्ष्याणि पुराणानि पुराविदः । मुनयोऽष्टादश प्राहुः क्षुल्लकानि महान्ति च ॥ ६६ ॥
ब्राह्मं पाद्मं वैष्णवं च शैवं लैङ्गं च गारुडम् । नारदीयं भागवतमाग्नेयं स्कान्दसञ्ज्ञितम् ॥ ६७ ॥
भविष्यं ब्रह्मवैवर्तं मार्कण्डेयं सवामनम् । वाराहं मात्स्यं कौर्म्यं च ब्रह्माण्डाख्यमिति त्रिषट् ॥ ६८ ॥
ब्रह्मणैतत् समाख्यातं शाखाप्रणयनं मुने । शिष्याणां च प्रशिष्याणां ब्रह्मतेजोविदीपनम् ॥ ६९ ॥

**॥ इति श्रीमद्भागवते द्वादशस्कन्धे सौते षष्ठोऽध्यायः ॥**

---

### शौनक उवाच

सूत जीव चिरं साधो वद नो वदतां वर । तमस्यपारे भ्रमतां नृणां त्वं पारदर्शनः ॥ १ ॥
आहुश्चिरायुषमृषिं मृकण्डुतनयं जनाः । यः कल्पान्तेऽप्युर्वरितो येन ग्रस्तमिदं जगत् ॥ २ ॥
स वा अस्मत्कुलोत्पन्नः कल्पेऽस्मिन् भार्गवर्षभः । नैवाधुनापि भूतानां सम्प्लवः कोऽपि जायते ॥ ३ ॥
एक एवार्णवे भ्राम्यन् ददर्श पुरुषं किल । वटपत्रपुटे तोकं शयानं त्वेकमद्भुतम् ॥ ४ ॥
एष नः संशयो भूयान् महाकौतूहलं यतः[१] । तन्नश्छिन्धि महायोगिन् पुराणेष्वपि सम्मतः ॥ ५ ॥

### सूत उवाच

प्रश्नस्त्वया महर्षेऽयं कृतो लोकभ्रमापहः । नारायणकथा यत्र गीता कलिमलापहा ॥ ६ ॥
प्राप्तद्विजातिसंस्कारो मार्कण्डेयः पितुः क्रमात् । छन्दांस्यधीत्य धर्मेण तपः स्वाध्यायसंयुतः ॥ ७ ॥
बृहद्व्रतधरः शान्तो जटिलो वल्कलाम्बरः । बिभ्रत् कमण्डलुं दण्डमुपवीतं समेखलम् ॥ ८ ॥
कृष्णाजिनं चाक्षसूत्रं कुशांश्च नियमैर्युतः । अग्न्यर्कगुरुविप्रांश्च स्वर्चयन् सन्ध्ययोर्हरिम् ॥ ९ ॥
सायम्प्रातः स गुरवे भैक्ष्यमाहृत्य वाग्यतः । बुभुजे गुर्वनुज्ञातः सकृन्नो चेदुपोषितः ॥ १० ॥
एवं तपःस्वाध्यायपरो वर्षाणामयुतायुतम् । आराधयन् हृषीकेशं जिग्ये मृत्युं सुदुर्जयम् ॥ ११ ॥
ब्रह्मा भृगुर्भवो दक्षो ब्रह्मपुत्राश्च येऽपरे । नृदेवपितृभूतानि तेनासन्नतिविस्मिताः ॥ १२ ॥
[२]इत्थं बृहद्व्रतधरस्तपःस्वाध्यायसंयमैः । दध्यावधोक्षजं योगाद् ध्वस्तक्लेशोऽन्तरात्मना ॥ १३ ॥
तस्यैवं युञ्जतश्चित्तं महायोगेन योगिनः । व्यतीयाय महान् कालो मन्वन्तरषडात्मकः ॥ १४ ॥
एतत् पुरन्दरो ज्ञात्वा सप्तमेऽस्मिन् किलान्तरे । तपोविशङ्कितो ब्रह्मन्नारेभे तद्विघातनम् ॥ १५ ॥

---

१. मनःकौतूहलं यतः ❋ २. इत्थं ब्रह्मव्रतधरः ❋

गन्धर्वाप्सरसः कामं वसन्तं मलयानिलम् । मुनये प्रेषयामास रजःस्तोभमदौ तदा ॥ १६ ॥
ते वै तदाश्रमं जग्मुर्हिमाद्रेः पार्श्व उत्तरे । पुष्यभद्रा नदी यत्र चित्राख्या च शिला विभो ॥ १७ ॥
गत्वाऽऽश्रमपदं पुण्यं नानाद्रुमलतावृतम् । पुण्यद्विजकुलाकीर्णं पुण्यामलजलाशयम् ॥ १८ ॥
मत्तभ्रमरसङ्गीतं मत्तकोकिलकूजितम् । मत्तबर्हिनटाटोपं मत्तद्विजकुलाकुलम् ॥ १९ ॥
वायुः प्रविष्ट आदाय हिमनिर्झरशीकरान् । सुमनोभिः परिष्वक्तो ववावुत्तम्भयन् स्मरम् ॥ २० ॥
उद्यच्चन्द्रनिशावक्त्रः प्रवाळस्तबकाळिभिः । गायन् द्रुमलताजालैस्तत्रासीत् कुसुमाकरः ॥२१ ॥
अन्वीयमानो गन्धर्वैर्गीतवादित्रयूथकैः । अदृश्यतात्तचापेषुः स्वःस्त्रीयूथपतिः स्मरः ॥ २२ ॥
हुत्वाऽग्निं समुपासीनं ददृशुः शक्रकिङ्कराः । मीलिताक्षं दुराधर्षं मूर्तिमन्तमिवानलम् ॥ २३ ॥
ननृतुस्तस्य पुरतः स्त्रियोऽथो गायका जगुः । मृदङ्गवीणापणवैर्वाद्यं चक्रुर्मनोरमम् ॥ २४ ॥
सन्दधेऽस्त्रं स्वधनुषि कामः पञ्चमुखं तदा । मधुर्मदो रजःस्तोभ इन्द्रभृत्या अकम्पयन्[1] ॥ २५ ॥
क्रीडन्त्याः पुञ्जिकस्थल्याः कन्दुकैः स्तनगौरवात् । भृशमुद्विग्नमध्यायाः केशविभ्रंशितस्रजः ॥ २६ ॥
इतस्ततो भ्रमद्दृष्टेश्चलन्त्या अनुकन्दुकम् । वायुर्जहार तद्वासः सूक्ष्मं त्रुटितमेखलम् ॥ २७ ॥
विससर्ज ततो बाणं मत्वा तं स्वजितं स्मरः । सर्वं तत्राभवन्मोघमनीशस्य यथोद्यमः ॥ २८ ॥
त इत्थमपकुर्वन्तो मुनेस्तत्तेजसा मुने । दह्यमाना निववृतुः प्रबोध्याहिमिवार्भकाः ॥ २९ ॥
इतीन्द्रानुचरैर्ब्रह्मन् धर्षितोऽपि महामुनिः । यन्नागादहमो भावं न तच्चित्रं महत्सु हि ॥ ३० ॥
दृष्ट्वा निस्तेजसं कामं सगणं भगवान् स्वराट् । श्रुत्वाऽनुभावं ब्रह्मर्षेर्विस्मयं समगात् परम् ॥३१ ॥
तस्यैवं युञ्जतश्चित्तं तपःस्वाध्यायसंयमैः । अनुग्रहायाविरासीन्नरनारायणो हरिः ॥ ३२ ॥

तौ शुक्लकृष्णौ नवकञ्जलोचनौ चतुर्भुजौ रौरववल्कलाम्बरौ ।
पवित्रपाणी उपवीतकं त्रिवृत् कमण्डलुं दण्डमृजुं च वैणवम् ॥ ३३ ॥
पद्माक्षमालामुत जन्तुमार्जनं वेदं च साक्षात्तपएकरूपिणौ[2] ।
तपत्तडिद्वर्णपिशङ्गरोचिषा प्रांशू दधानौ विबुधर्षभार्चितौ ॥ ३४ ॥

ते वै भगवतो रूपे नरनारायणावृषी । वीक्ष्योत्थायादरेणोच्चैर्ननामाङ्गेन दण्डवत् ॥ ३५ ॥
एतत्सन्दर्शनानन्दनियतात्मेन्द्रियाशयः[3] । हृष्टरोमाऽश्रुपूर्णाक्षो न सेहे तावुदीक्षितुम् ॥ ३६ ॥
उत्थाय प्राञ्जलिः पूर्ण[4] औत्सुक्यादाश्लिषन्निव । नमोनम इति शनैर्बभाषे गद्गदाक्षरम् ॥ ३७ ॥

---

१. व्यकम्पयन् ❋ २. तप एव रूपिणौ ❋ ३. निर्भृतास्विन्द्रियाशयः ❋ ४. प्रह्वः

तयोरासनमाधाय पादयोरवनिज्य च । अर्हणेनानुलेपेन धूपमाल्यैरपूजयत् ॥ ३८ ॥
सुखमासन आसीनौ प्रसादाभिमुखौ मुनिः । पुनरानम्य पादाभ्यां गरिष्ठाविदमब्रवीत् ॥ ३९ ॥

**मार्कण्डेय उवाच**

किं वर्णये तव विभो यदुदीरितासुः संस्पन्दते तमनु वाङ् मन इन्द्रियाणि ।
स्पन्दन्ति वै तनुभृतामजशर्वयोश्च स्वस्याप्यथापि भजतामसि भावबन्धुः ॥ ४० ॥
मूर्ती इमे भगवतो भगवंस्त्रिलोक्याः क्षेमाय तापविरमाय च मृत्युजित्यै ।
नाना बिभर्ष्यनुपमान्यतनूर्यथेदं सृष्ट्वा पुनर्ग्रससि सर्वमिवोर्णनाभिः ॥ ४१ ॥
तस्यावितुः स्थिरचरेशितुरङ्घ्रिमूलं यत्स्थं न कर्मगुणकालरजः स्पृशन्ति ।
यद् वै स्तुवन्ति निनमन्ति यजन्त्यभीक्ष्णं ध्यायन्ति वेदहृदया मुनयस्तदाप्त्यै ॥ ४२ ॥
नान्यत्[1] तवाङ्घ्र्युपनयादपवर्गमूर्तेः[2] क्षेमं जनस्य परितोऽभय[3] ईश विद्मः ।
ब्रह्मा बिभेत्यलमतो द्विपरार्धधिष्ण्यः कालस्य ते किमुत तत्कृतभौतिकानाम् ॥ ४३ ॥
तद् वै भजाम्यृतधियस्तव पादमूलं हित्वेतदात्मच्छिदमात्मगुरोः परस्य ।
देहाद्यपार्थमसदित्यनभिज्ञमात्रं विन्देय ते तर्हि सर्वमनीषितार्थम् ॥ ४४ ॥
सत्वं रजस्तम इतीश तवात्मबन्धो मायामयाः स्थितिलयोदयहेतवोऽस्य ।
लीलाधृता यदपि सत्वमयः प्रशान्त्यै नान्ये नृणां व्यसनमोहभियश्च याभ्याम् ॥ ४५ ॥
तस्मात् तवेह भगवन्नथ तावकानां शुक्लां तनुं स्वदयितां कुशला भजन्ति ।
यत् सात्वताः पुरुषरूपमुशन्ति सत्वं लोको[4] यतोऽभयमुतात्मसुखं च नान्यत् ॥ ४६ ॥
तस्मै नमो भगवते पुरुषाय भूम्ने विश्वाय विश्वगुरवे परदेवतायै ।
नारायणाय ऋषये च नरोत्तमाय हंसाय संयतगिरे निगमेश्वराय ॥ ४७ ॥
यं वै[5] न वेद वितताक्षपथैर्भ्रमद्धीः सन्तं स्वखेष्वसुषु हृद्यपि दृक्पथेषु ।
त्वन्मायया‌ऽवृतमतिः स उ एव साक्षादद्यस्तवाखिलगुरोरुपपद्य[6] वेदम् ॥ ४८ ॥

---

१. नान्यम् ❋ २. ....मूर्तेः ❋ ३. परितोभियः ❋ ४. लोकाः ❋
५. यो वै ❋ ६. उपपाद्य ❋

यद्दर्शनं निगम आत्मरह:प्रकाशं मुह्यन्ति यत्र कवयोऽजपरा यतन्त:[१] ।
तं सर्ववादविषयप्रतिरूपशीलं वन्दामहे पुरुषमात्मनि गूढबोधम् ॥ ४९ ॥

**॥ इति श्रीमद्भागवते द्वादशस्कन्धे सौते सप्तमोऽध्याय: ॥**

---

**सूत उवाच**

संस्तुतो भगवानित्थं मार्कण्डेयेन धीमता । नारायणो नरसख: प्रीत आह भृगूद्वहम् ॥ १ ॥

**श्रीभगवानुवाच**

भो भो ब्रह्मर्षिवर्योऽसि[२] सिद्ध आत्मसमाधिना । मयि भक्त्याऽनपायिन्या तप:स्वाध्यायसंयमै:॥ २ ॥
वयं ते परितुष्टा: स्म त्वद्बृहद्व्रतचर्यया । वरं प्रतीच्छ भद्रं ते वरदेशादभीप्सितम् ॥ ३ ॥

**ऋषिरुवाच**

जितं ते देवदेवेश प्रपन्नार्तिहराच्युत । वरेणैतावताऽलं नो यद् भवान् समदृश्यत ॥ ४ ॥
वाञ्छन्त्यजादयो यस्य श्रीमत्पादाब्जदर्शनम् । मनसा योगपक्वेन स भवान् नोऽक्षगोचर: ॥ ५ ॥
अथाप्यम्बुजपत्राक्ष पुण्यश्लोकशिखामणे । ईक्षे मायां यया लोक: सपालो वेद सद्भिदाम् ॥ ६ ॥

**सूत उवाच**

इतीरितोऽर्चित:[३] काममृषिणा भगवान् मुने । तथेति सस्मयं प्रागाद् बदर्याश्रममीश्वर: ॥ ७ ॥
तमेव चिन्तयन्नर्थमृषि: स्वाश्रम एव स: । वसन्नग्न्यर्कसोमाम्बुभूवायुवियदात्मसु ॥ ८ ॥
ध्यायन् सर्वत्र च हरिं भावद्रव्यैरपूजयत् । क्वचित् पूजां विसस्मार भक्तिप्रसरसम्प्लुत: ॥ ९ ॥
तस्यैकदा भृगुश्रेष्ठ पुष्पभद्रातटे मुने । उपासीनस्य सन्ध्यायां ब्रह्मन् वायुरभून्महान् ॥ १० ॥

तं चण्डशब्दं समुदीरयन्तं बलाहका अन्वभवन् कराळा: ।
अक्षस्थविष्ठा मुमुचुस्तडिद्भि: स्वनन्त उच्चैरभिवर्षधारा: ॥ ११ ॥
ततो व्यदृश्यन्त चतु:समुद्रा: समन्तत: क्ष्मातळमाग्रसन्त: ।
समीरवेगोर्मिभिरुग्रनक्रभयानकावर्तगभीरघोषा: ॥ १२ ॥
अन्तर्बहिश्चाद्भिरभिद्युभिर्घनै:[४] शतह्रदाभीरुपतापितं जगत् ।
चतुर्विधं वीक्ष्य महामना मुनिर्जलप्लुतां क्ष्मां विमना: समत्रसत् ॥ १३ ॥

---

१. यजन्त: ❋ २. ब्रह्मर्षिवर्य त्वम् ❋/ब्रह्मर्षिवर्यासि ३. इतीडितोऽर्चित: ❋ ४. ....द्युभि: खरै: ❋

तस्यैवमुद्वीक्षत ऊर्मिभीषणः प्रभञ्जनाघूर्णितवार्महार्णवः ।
आपूर्यमाणो वर्षद्भिरम्बुदैः क्ष्मामप्यधाद् द्वीपवर्षादिभिः समम् ॥ १४ ॥
सक्ष्मान्तरिक्षं सदिवं सभागणं त्रैलोक्यमासीत् सहसाऽद्भिराप्लुतम् ।
स एक एवोर्वरितो महामुनिर्बभ्राम विक्षिप्तजटो जडान्धवत् ॥ १५ ॥
क्षुत्तृट्परीतो मकरैस्तिमिङ्गिलैरुपद्रुतो वीचिनभस्वता हतः[1] ।
तमस्यपारे पतितो भ्रमद्दिशो न वेद खं गां च परिश्रमोषितः ॥ १६ ॥
क्वचिन्मग्नो महावर्ते तरळैस्ताडितः क्वचित् । यादोभिर्भक्षितः क्वापि स्वयमन्योन्यघातिभिः ॥ १७ ॥
क्वचिच्छोकं क्वचिन्मोहं क्वचिद् दुःखं सुखं भयम् । क्वचिन्मृत्युमवाप्नोति व्याध्यादिभिरुपद्रुतः[2] ॥
अयुतायुतवर्षाणां सहस्राणि शतानि च । व्यतीयुर्भ्रमतस्तस्मिन् विष्णुमायाहृतात्मनः[3] ॥ १९ ॥
स कदाचिद् भ्रमंस्तस्मिन् पृथिव्याः ककुदि द्विजः । न्यग्रोधपोतं ददृशे फलपल्लवशोभितम् ॥ २० ॥
प्रागुत्तरस्यां शाखायां तस्यापि ददृशे शिशुम् । शयानं पर्णपुटके ग्रसन्तं प्रभया तमः ॥ २१ ॥
महामरतकश्यामं श्रीमद्वदनपङ्कजम् । कम्बुग्रीवं महोरस्कं सुनासं सुन्दरभ्रुवम् ॥ २२ ॥
श्वासैजदळकव्रातमिश्रश्रीकर्णदाडिमम् । विद्रुमाधरभासेषच्छोणायितसुधास्मितम् ॥ २३ ॥
पद्मगर्भारुणापाङ्गं हृद्यहासावलोकनम् । श्वासैजद्वळिसंविग्ननिम्ननाभिचलोदरम् ॥२४ ॥
चार्वङ्गुलिभ्यां पाणिभ्यामुन्नीय चरणाम्बुजम् । मुखे निधाय विप्रेन्द्र धयन्तं वीक्ष्य विस्मितः ॥ २५ ॥
तद्दर्शनाद् वीतपरिश्रमो मुदा प्रोत्फुल्लहृत्पद्मविलोचनाम्बुजः ।
प्रहृष्टरोमाऽद्भुतभावशङ्कितः प्रष्टुं पुरस्तं प्रससार बालकम् ॥ २६ ॥
तावच्छिशोर्वै श्वसितेन भार्गवः सोऽन्तःशरीरं मशको यथाऽविशत् ।
तत्राप्यदो न्यस्तमचष्ट कृत्स्नशो यथा पुराऽमुह्यदतीव विस्मितः ॥ २७ ॥
खं रोदसी भगणानद्रिसागरान् द्वीपान् सवर्षान् ककुभः सुरासुरान् ।
वनानि देशान् सरितः पुराकरान् खेटान् व्रजानाश्रमवर्णवृत्तयः ॥ २८ ॥
महान्ति भूतान्यथ भौतिकान्यसौ कालं च नानायुगकल्पकल्पनम् ।
यत् किञ्चिदन्यद् व्यवहारकारणं ददर्श विश्वं सदिवावभासितम् ॥ २९ ॥

---

१. हतः ❋ २. उतार्दितः ❋ ३. ....मायावृतात्मनः

हिमालयं पुष्पवहां च तां नदीं निजाश्रमं यत्र ऋषीनपश्यत् ।
विश्वं विपश्यन् श्रसतः शिशोर्वै बहिर्निरस्तो न्यपतल्लयाब्धौ ॥ ३० ॥
पश्यन्[१] पृथिव्याः ककुदि प्ररूढं वटं च तत्पत्रपुटे शयानम् ।
तोकं च तत्प्रेमसुधास्मितेन निरीक्षितोऽपाङ्गनिरीक्षणेन ॥ ३१ ॥
अथ तं बालकं वीक्ष्य नेत्राभ्यां धिष्टितं हृदि । अभ्यगादतिसंहृष्टः परिष्वक्तुमधोक्षजम् ॥ ३२ ॥
तावत् स भगवान् साक्षाद् योगाधीशो गुहाशयः । अन्तर्दधे ऋषेः सद्यो यथेहानीशनिर्मिता ॥ ३३ ॥
तमन्वथ वटो ब्रह्मन् सलिलं लोकसम्प्लवम् । तिरोधायि क्षणादस्य स्वाश्रमे पूर्ववत् स्थितः ॥ ३४ ॥

**॥ इति श्रीमद्भागवते द्वादशस्कन्धे सौते अष्टमोऽध्यायः ॥**

---

सूत उवाच

स एवमनुभूयेदं[२] नारायणविनिर्मितम् । वैभवं योगमायायास्तमेव शरणं ययौ ॥ १ ॥

ऋषिरुवाच

प्रपन्नोऽस्म्यङ्घ्रिमूलं तत् प्रपन्नाभयदं हरेः । यन्मायायाऽपि विबुधा मुह्यन्त्यज्ञानकातराः ॥ २ ॥

सूत उवाच

तमित्थं निभृतात्मानं वृषेण दिवि पर्यटन् । रुद्राण्या भगवान् रुद्रो ददर्श स्वगणैर्वृतः ॥ ३ ॥
अथोमा तमृषिं वीक्ष्य गिरिशं समभाषत । पश्येमं भगवन् विप्रं निर्भृतास्विन्द्रियाशयम्[३] ॥ ४ ॥
निभृतो नन्वृषिव्रातस्तपापाये यथाऽर्णवः । कुर्वस्य तपसः साक्षात् संसिद्धिं सिद्धिदो भवान् ॥ ५ ॥

श्रीमहादेव उवाच

नैवेच्छत्याशिषः क्वापि ब्रह्मर्षिर्मोक्षमप्युत । भक्तिं परां भगवति लब्धवान् पुरुषेऽव्यये ॥ ६ ॥
अथापि संवदिष्यामो भवान्येतेन साधुना । अयं हि परमो लाभो नृणां साधुसमागमः ॥ ७ ॥
इत्युक्त्वा समुपेयाय भगवान् स सतां गतिः । ईशानः सर्वविद्यानामीश्वरः सर्वदेहिनाम् ॥ ८ ॥
तयोरागमनं साक्षादीशयोर्जगदात्मनोः । न वेद रुध्दधीवृत्तिरात्मानं विश्वमेव च ॥ ९ ॥
भगवांस्तदभिज्ञाय गिरिशो योगमायया । आविशत् तद्गुहाकाशं वायुश्छिद्रमिवेश्वरः ॥ १० ॥

---

१. तस्मिन्  २. अनुभूत्वेदम्  ३. निर्भृतात्मेन्द्रियाशयम्

